॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥



श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

संपुटम् ५ जिज्ञासाधिकरणम्

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

## परिमळाद्युपेता

संपुटम् – ५

## जिज्ञासाधिकरणम्

(कार्यतावादविषयतः जिज्ञासाधिकरणान्तम्)

पुटसंख्या १९८३ तः २५०८

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



| | |
|---|---|
| **श्रीमन्न्यायसुधा** | **Śrīman-Nyāyasudhā** |
| परिमळाद्युपेता | Parimaḷādyupetā |
| **संपुटम् – ५** | **Volume - 5** |
| प्रथमं मुद्रणम् - ई.सन् २००३ | First Edition -2003 A.D. |

स्वभानु संवत्सर, शके १९२५, ज्येष्ठ कृष्ण त्रयोदशी, शुक्रवासरः

**श्रीविजयीन्द्रतीर्थश्रीपादानाम् आराधनामहोत्सवः**

*Published by :*

**Śrī Gurusārvabhauma Saṁskṛt Vidyāpīṭham**

**Śrī Rāghavendra Swāmy Mutt**

Mantrālayam - 518 345

India.

✻ मुद्रकः ✻

वरखेडकरोपाह्वप्रद्युम्ननरसिंहयोः ।
पौत्रो धनंजयो न्यायसुधां मुद्रापयत्यसौ ॥

| | |
|---|---|
| **सुधा मुद्रणम्** | **SUDHA MUDRANA** |
| शंकरपुरम्, बेंगळूर - ५६० ००४ | Shankarpuram, Bangalore - 560 004 |
| दूरवाणी– ६६७ ६९४२ | Phone : 667 6942 |



# समर्पणपत्रिका

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यमन्दबिरुदवृन्दविभूषित-
सर्वतन्त्रस्वतन्त्र-श्रीमद्वैष्णवसिद्धान्तस्थापनाचार्य-
षड्दर्शनाचार्यवर्य-नास्तिकदर्शननिराकरणधुरन्धर-
आस्तिकदर्शनमहाचार्य-

**श्रीमन्मध्वाचार्यसमलंकृत-**

श्रीमद्द्वैतसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वराणां
परमपूज्यानां कामधेनुकल्पवृक्षसदृशानां

**श्रीश्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानां**

हृत्कमलनिवासि-

**श्रीरामकृष्णवेदव्यासाभिन्न-**

**श्रीमूलरघुपतिपादकमलयोः**

समर्पितोऽयं ग्रन्थः ॥

सुजयीन्द्रकृपापूर्णसुशमीन्द्रयतीश्वरैः ।
श्रीमन्न्यायसुधाग्रन्थ अर्पितोऽयं मुदा हरेः ॥





॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्धंसनामकपरमात्मसमारब्धपरम्परागत-श्रीमत्परमहंसेत्यादिबिरुदभूषित-
श्रीमदानन्दतीर्थभगवत्पादाचार्य-मूलमहासंस्थानाधीश्वर-

**श्रीमद्राघवेन्द्रगुरुसार्वभौम-**

वेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वर-

**श्रीमत्सुयमीन्द्रतीर्थश्रीपादकरकमलसञ्जात-**

**श्रीमत्सुजयीन्द्रतीर्थश्रीपादवरकुमारक-**

## श्री श्रीमत्सुशमीन्द्रतीर्थश्रीपादानाम्

# अनुग्रहवचनम्

अस्मत्प्रियशिष्यान् तथैव अस्मन्मठीयान् नैकान् आस्थानविद्वज्जनान् वयं अस्मद्गुरुवराणां श्रीमत्सुजयीन्द्रतीर्थश्रीमच्चरणानामाज्ञामनुरुद्ध्य परिमलादि-बहुटिप्पणीभिर्युक्तां श्रीमन्न्यायसुधां संशोध्य प्रकाशयितुमादिष्टवन्तः स्मः ।

अस्मदादेशमनुरुध्य ग्रन्थमिमं संशोध्य मुद्रणप्रतिमपि संशोधितवद्भ्यः प्रधानसंपादकेभ्यः वैकुण्ठवासिभ्यः श्री साणूरु भीमभट्टेभ्यः तथा ग्रन्थमिमं प्रकाशितवद्भ्यः श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयेभ्यः एवं ग्रन्थसंशोधने तथा मुद्रणप्रतिसंशोधने सहायमाचरितवद्भ्यः अस्मद्विद्यापीठा-ध्यापकेभ्यः, तथाऽन्येभ्यो विद्वद्भ्यः, एवमल्पकाले सुष्ठु मुद्रणं कृतवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः श्री धनंजयाचार्येभ्यः तथा सर्वेभ्यः एतद्ग्रन्थाध्ययन-अध्यापनादिकर्तृभ्यः अस्मदुपास्यः श्री श्रीमद्राघवेन्द्र-तीर्थगुर्वन्तर्गत-श्रीभारतीरमण-मुख्यप्राणान्तर्गतः श्रीसीतापतिः श्रीमूलरामचन्द्रदेवः इतोऽप्यतिशयिता-युरारोग्यैश्वर्यादीनि, ज्ञानभक्तिवैराग्यादीनि च दत्वा अनुगृह्णातु इत्याशास्महे ।

*इति नारायणस्मृतिः ।*

मन्त्रालयक्षेत्रम्,
स्वभानु संवत्सर
ज्येष्ठ कृष्ण त्रयोदशी



श्रीराघवेन्द्रस्वामिमठाधीशानां श्री श्री सुशमीन्द्रतीर्थश्रीपादानां वरकुमारकाणां

## श्री श्री सुविद्येन्द्रतीर्थश्रीपादानां

परमानुग्रहपूर्वक मार्गदर्शने संपादितोऽयं ग्रन्थः ।

* * *

श्री श्रीपादानां आज्ञानुसारेण ग्रन्थस्यास्य संशोधनादिकार्यं
तत्कालीन श्रीगुरुसार्वभौमसंस्कृतविद्यापीठाध्यक्षैः
**श्री राजा एस्. गिरिआचार्यैः** तथा तत्पुत्रैः **श्री राजा एस्. पवमानाचार्यैः**
कृतमिति विशेषरूपेण स्मर्यते ।

* * *

# संपादकविद्वन्मंडली

**प्रधानसंपादकाः**

## श्री आचार्य साणूरु भीमभट्टाः

आस्थानविद्वांसः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

**संपादकाः**

विद्वान् श्री कु. सुशीलेन्द्राचार्याः, *प्रांशुपालाः श्री गु.सं.वि., मन्त्रालयः*

विद्वान् श्री कडपा राघवेन्द्राचार्याः

विद्वान् श्री पुराणिक सुब्रह्मण्याचार्याः

विद्वान् श्री एन्. वादिराजाचार्याः

विद्वान् श्री वरखेडकर भीमसेनाचार्याः

विद्वान् श्री डॉ. पुरोहित नरसिंहाचार्याः

**निर्वाहकाः**

## श्रीपादपुत्राः राजा एस्. राजगोपालाचार्याः

श्री श्री सुशमीन्द्रतीर्थश्रीपादानां आप्तकार्यदर्शिनः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



# श्रीमन्न्यायसुधा

## परिमळाद्युपेता

### टिप्पणीनां क्रमः तथा संक्षिप्तनामानि

| क्र.सं. | कर्तृनाम | टिप्पणीनाम | संक्षिप्तनाम |
|---|---|---|---|
| १ | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः | बिन्दुः— |
| २ | श्री राघवेन्द्रतीर्थाः | परिमळः | परि०— |
| ३ | श्री श्रीपादराजतीर्थाः | वाग्वज्रः | वाग्वज्रः— |
| ४ | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका | गु०दी०— |
| ५ | श्री यदुपत्याचार्याः | टिप्पणी | यादु०— |
| ६ | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः | वं०प०— |
| ७ | श्री गलगली नरसिंहाचार्याः | आनन्दः | आनन्दः— |
| ८ | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः | कं०रा०— |
| ९ | श्री श्रीनिधितीर्थाः | टिप्पणी | श्रीनिधि०— |
| १० | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका | वा०चं०— |
| ११ | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका | शे०चं०— |
| १२ | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला | वा०र०— |
| १३ | श्री सत्यव्रततीर्थाः | सुधाविवृतिः | स०व्र०— |
| १४ | श्री कुण्डलगिरिआचार्याः | रसकूलङ्कषः | कुण्डल०— |
| १५ | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः | स०ना०— |
| १६ | श्री विट्ठलभट्टाः | टिप्पणी | विट्ठ०— |
| १७ | श्री विष्णुतीर्थाः | रसरञ्जनी | रस०— |
| १८ | श्री अडवी कृष्णाचार्याः | लघुरसरञ्जनी | ल०र०— |
| १९ | श्री मन्नारी कृष्णाचार्याः | चषकः | चषकः— |
| २० | श्री एरी बाळाचार्याः | उपस्पर्शः | ए०बा०— |
| २१ | श्री काशी आचार्याः | काशी टिप्पणी | काशी०— |
| २२ | श्री गूढकर्तृकाचार्याः | गूढकर्तृका | गूढ०— |
| २३ | श्री प्रदीपकाराः | प्रदीपः | प्रदीपः— |
| २४ | श्री पांघ्री श्रीनिवासाचार्याः | टिप्पणी | पांघ्री०— |
| २५ | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि | हुग्गि०— |



# श्रीमन्न्यायसुधा

## परिमळाद्युपेता

### संपुटम् – ५

## विषयानुक्रमणिका



| विषयः | परि.संख्या | पुटसंख्या |
|---|---|---|
| ॥ परव्युत्पादितायाः विधौ व्युत्पत्तेः अभावः ॥ | ५४३ | २०३३ |
| ॥ तत्र प्राथमिकव्युत्पत्त्यभावः ॥ | ५४३ | २०३३ |
| ॥ आकाङ्क्षाद्युपेते एव प्राथमिकव्युत्पत्तिदर्शनम् ॥ | ५४३ | २०३३ |
| ॥ वर्तमानादिक्रमेण कालत्रयसंबन्धिवस्तुनः (सिद्धार्थस्य) एव आकाङ्क्षादिमत्वम् ॥ | ५४३ | २०३३ |
| आनयेत्यादिवाक्यतः प्राथमिकव्युत्पत्त्यभावः— | ५४३ | २०३३ |
| ॥ सिद्धार्थे व्युत्पत्तिसंभवः ॥ | ५४४ | २०३४ |
| अन्यथा प्रयत्नगौरवः— | ५४४ | २०३४ |
| आनयेत्यादिवाक्यतः लिङादीनां स्वार्थे भविष्यत्क्रियादौ व्युत्पत्तेः पश्चात्तनीयत्वम्— | ५४५ | २०३६ |
| वर्तमानादिक्रमेण व्युत्पत्तेः पौर्वापर्योपपत्तिः— | ५४९ | २०४३ |
| ॥ वेदस्य प्रवृत्तिनिवृत्तिमात्रप्रयोजनकत्वाभावः ॥ | ५५० | २०४५ |
| तयोः सर्वपुरुषापेक्षाभावात् मुख्यप्रयोजनत्वाभावः— | ५५० | २०४५ |
| ॥ प्रवृत्तिनिवृत्त्योः इष्टावाप्तिसाधनत्वाभावात् अवान्तरप्रयोजनत्वस्याप्यभावः ॥ | ५५१ | २०४६ |
| अपरोक्षस्य परोक्षस्य वाऽपि ज्ञानस्यैव तत्साधनम्— | ५५१ | २०४६ |
| चर्वणादेः रससाक्षात्कारार्थत्ववत् क्रियायाः (चेष्टायाः) ज्ञानार्थत्वात्— | ५५२ | २०४७ |
| अभिमतरसादिसाक्षात्कारमात्रस्यैव इष्टसाधनत्वं इत्यस्यासिद्धिः— | ५५३ | २०४८ |
| ॥ वेदस्य कार्यपरत्वेऽपि वेदोक्तोपासनाकार्ये कर्मकारकतया ब्रह्मणः प्रतीतत्वम् ॥ | ५५६ | २०५४ |
| वेदस्य कार्यान्वितत्वेन स्रुक्स्रुववह्न्यादौ अतात्पर्याभावेन सादृश्यम्— | ५५६ | २०५४ |
| ॥ आत्मेत्येवोपासीत इत्यादिश्रुतीनां आत्मादिस्वरूपे तात्पर्यसद्भावः ॥ | ५५९ | २०६३ |
| ॥ तत्र इतिशब्दस्य विपक्षे बाधकाभावात् प्रकारवाचित्वम् ॥ | ५५९ | २०६३ |
| ॥ वैपरीत्यार्थक इतिशब्दाध्याहारस्य अयुक्तत्वम् ॥ | ५५९ | २०६३ |
| अग्नौ जुहोतीत्यादावपि तथाकरणे स्मृतिमात्रस्य होमान्वितताप्रसङ्गः— | ५५९ | २०६३ |
| इतिशब्दादर्शनस्य उभयपक्षेऽपि साम्येन बाधकाभावः— | ५६० | २०७२ |
| अध्याहृत इतिशब्दयोजनायाश्चापि उभयत्र साम्येन बाधकाभावः— | ५६१ | २०७४ |
| उपासनावाक्येषु अध्याहारः नान्यत्र इतिकल्पनायाः अयुक्तत्वम्— | ५६२ | २०७४ |
| एकवाक्यत्वयोगे अशेषतोऽपि वेदस्य वाक्यभेदकल्पनायाः अयुक्तत्वम्— | ५६३ | २०७५ |
| महाफलसाधने ब्रह्मण्येव अशेषतोऽपि वेदस्य संबन्धसत्त्वम्— | ५६४ | २०७७ |





॥ शङ्कानिवारणार्थं सर्वथा ब्रह्मणि सर्ववेदपर्यवसानसमर्थनम् ॥

॥ अकार्यशेषतया स्वप्रधाने ब्रह्मणि वेदस्य प्रामाण्यसंभवः ॥

॥ सिद्धविशेषस्य भगवतः एव आकाङ्क्षादिमत्वरूपवाक्यार्थरूपकार्यत्वम् ॥

॥ भगवतः आकाङ्क्षावत्त्वम् ॥

**इष्टेष्टसाधनस्यैव आकाङ्क्ष्यस्वरूपकार्यत्वम्—**

**५२२ सु०— अत्रोच्यते । स्यादेतदेवम् । यदि वेदो ब्रह्मनिष्ठो न भवेत् । न त्वेवम् । तन्निष्ठत्वे प्रमाणस्योदितत्वाद् बाधकाभावाच्च ॥ ननूक्तमत्र कार्यताबोध एव वाक्यस्य पर्यवसानं न सिद्धार्थबोध इत्यतः कार्यमेव वाक्यार्थो न सिद्धस्वरूपं ब्रह्मेति । सत्यमुक्तम् । सा चेद्वाक्यार्थपर्यवसानोपयोगिनी कार्यता सिद्धविशेषस्य स्यात्तदा तस्यापि वाक्यार्थत्वे कीदृशो दोषः स्यादित्याशयवान् कार्यतां तावन्निर्धारयति कार्यता चेति ।**

## अनु०— कार्यता च न काचित्स्यादिष्टसाधनतां विना ॥

चशब्दो व्याख्यानान्तरसमुच्चयार्थः । गवानयनादौ या **कार्यता** वाक्यपर्यवसानहेतुः सा तावत् **इष्टसाधनतातिरिक्ता नास्तीति** प्रतिज्ञा ।

**परि०— प्रमाणस्येति** । 'स एव भर्गशब्दार्थ' इत्यादौ पूर्वत्र ॐमिति ब्रह्मेत्यादिश्रुत्या विष्णुवाचितया प्रसिद्धोङ्कारस्य स्रवतीत्यादिश्रुतिसिद्धसूत्रादिमस्य ब्रह्मणि मानत्वोक्त्या व्याहृतिगायत्री-पुरुषसूक्तद्वारा तद्व्याख्यानरूपसर्ववेदानां ब्रह्मनिष्ठत्वेन पुरुषसूक्तादिव्याख्यानरूपप्रमाणस्योक्तत्वादि-त्यर्थः । **बाधकेति** । पूर्ववाद्युक्तबाधकत्रयस्याप्यभावाच्चेत्यर्थः । तत्कथमित्यत आद्यं बाधकमाशङ्क्य तन्निरासकतया मूलं योजयति **नन्वित्यादिना** । अन्ये तु बाधके 'इष्टे' इत्यत्र 'इष्टमि'त्यत्र च निरसिष्येते इति भावः । **सिद्धविशेषस्येति** । इष्टसाधनादिरूपसिद्धविशेषस्येत्यर्थः । **कीदृश इति** । न कोऽपि दोष इत्यर्थः । **व्याख्यानान्तरेति** । अतःशब्दस्य प्रयोजनसमर्थनाय कृताज्ज्ञानादिद्वारा मोक्षफलक-त्वार्थकत्वव्याख्यानाद्बन्धस्य सत्यत्वपरत्वव्याख्यानाच्च विषयसमर्थनायापेक्षितं वेदान्तानां यत्सिद्धार्थ-प्रमापकत्वं तत्परत्वरूपव्याख्यानान्तरसमुच्चयार्थ इत्यर्थः । कार्यता इष्टसाधनतेत्येका व्याख्या । इष्टतेत्यपरा । तथा चेष्टसाधनतां विनेतिवत् इष्टतां विनेत्यपि समुच्चयार्थ इत्यर्थ इत्येके ।





**गु०दी०**— अगृहीतकार्यताबोधकलिङादिपदसङ्गतेर्बालस्य मध्यमवृद्धस्य च शब्दैकसमधिगम्यत्वादभिलषितकार्यताबोधासंभवात् अनुमानादिनेष्टसाधनतामनुमायैव स्तनपानादौ जलपानादौ च प्रवृत्तिरिति त्वयाऽपि वक्तव्यम् । अपूर्वापरपर्यायकार्यत्वस्य मानान्तरबोध्यत्वे अपूर्वत्वस्यैव भङ्गप्रसङ्गात् । एवं च द्वितीयानुमाने दृष्टान्ते साध्यवैकल्यम् । प्रतिज्ञायामर्थान्तरता च । त्वद्रीत्या गृहीतलिङादिपदसङ्गतेः पुरुषस्य विषसंपृक्तान्ने शतशः भुंक्ष्वेति प्रयोगेऽपि प्रवृत्त्यदर्शनेनेष्टसाधनताबोधस्यैव प्रवृत्तिहेतुत्वात् । अस्माकं त्वनिष्टसाधनतया अवगते तस्मिन्निष्टसाधनताबोधकपदस्यायोग्यतापराहतत्वेनाबोधकता वा स्यात् । विपरीतबोधकता वा स्यात् । नोभयथाऽपि प्रवृत्तिरिति परिहारसंभवात् । कार्यताबोधादेव प्रवृत्तिरिति वदतस्तव तु कार्यताबोधकपदे सति कुतो न प्रवृत्तिः । ममापि कार्यताबोधे इष्टसाधनताबोधस्य हेतुत्वात्तदभावे कार्यताबोधो न भवतीति चेत्तर्हि आवश्यकत्वादिष्टसाधनत्वमेव लिङाद्यर्थोऽस्तु किमनेन बकबन्धनेन । किञ्च "ज्योतिष्टोमेन स्वर्गकामो यजेत" "वसन्ते वसन्ते ज्योतिषा यजेत" "अहरहरग्निहोत्रं जुहुयात्" इत्यादौ यागादेः स्वर्गादिरूपेष्टसाधनतायाः मानान्तरागम्यत्वेन इष्टसाधनताबोधकाभावान्न कार्यताबोधोऽपि स्यात् । अथेष्टसाधनताबोधकपदान्तराभावेऽपि एतेनैव लिङ्पदेन स्वर्गरूपेष्टसाधनत्वस्यापि बोधने न पुनः कार्यताबोधस्यावसरः शब्दस्य विरम्यव्यापारप्रसङ्गादित्यपि द्रष्टव्यम्।

**यादु०**— **प्रमाणस्योदितत्वादिति** । तद्व्याख्येयोङ्कारवाचित्वरूपप्रमाणस्योदितत्वादित्यर्थः । **सिद्धविशेषस्येति** । केषाञ्चिदिष्टरूपस्य केषाञ्चिदिष्टसाधनरूपस्य भगवत इत्यर्थः । **व्याख्यानान्तरेति** । सौत्रातःशब्दस्येति शेषः ।

**वं०प०**— **बाधकाभावाच्चेति** । ब्रह्मनिष्ठत्वाङ्गीकारेण बाधकाभावाच्चेत्यर्थः ।

**आनन्दः**— ननु कार्यता चेत्युत्तरकारिकायां कार्यतानिराकरणं क्रियते तदयुक्तम् । एवं सति कार्यनिष्ठत्वासंभवेऽपि ब्रह्मनिष्ठत्वासमर्थनात् । किञ्च ब्रह्मनिष्ठत्वे प्रमाणानुपन्यासाच्च तथाच कथमेतदित्यत आह **स्यादेतदेवमिति** । एतत् ब्रह्ममीमांसाया अनारंभणीयत्वमित्यर्थः । **प्रमाणस्योदितत्वादिति** । स एव सर्ववेदार्थ इत्यत्रेति शेषः । ननु साधकसद्भावेऽपि बाधकस्यापि सत्त्वान्न ब्रह्मनिष्ठतेत्यत आह **बाधकेति** । कार्यतापि किमिष्टसाधनतातिरिक्तोतेष्टसाधनतैव वा नाद्यो निराकरिष्यमाणत्वात् । द्वितीय एव स्वीकार्य इत्याह **सा चेदिति** । **तस्यापीति** । सिद्धविशेषस्यापीत्यर्थः । **कीदृश इति** । किंशब्द आक्षेपे । **व्याख्यानान्तरेति** । अतःशब्दस्येति शेषः । नन्विष्टसाधनतातिरिक्तापि कार्यता गवानयनादौ प्रत्यक्षसिद्धेत्यत आह **गवानयनादाविति** ।

**कं०रा०**— **व्याख्यानान्तरेति** । अतःशब्दस्येति शेषः ।

**श्रीनिधि०**— **प्रमाणस्योदितत्वादिति** । ओतत्ववाचीत्यादिना उदितत्वादिति भावः । सर्वस्यापि सिद्धस्य तदभावात्सिद्धविशेषस्येत्युक्तम् । **व्याख्यानान्तरसमुच्चयार्थ इति** । अतःशब्दस्येति शेषः ।

**वा०चं०**— ननु कार्यता चेत्यादिग्रन्थः प्रकृतासङ्गतः । न चोक्तबाधकपरिहाराय स इति वाच्यम् । वेदस्य सिद्धार्थनिष्ठत्वे प्रमाणानुपन्यासेन न्यूनतापत्तेः । कार्यताया इष्टसाधनतातिरेकाभावोक्तिमात्रेणोक्तबाधकत्रितये कस्याप्यपरिहाराच्चेत्यत उत्तरग्रन्थाभिप्रायमाह **अत्रोच्यत इत्यादिना** । उदितत्वादित्युक्त्येदानीमनुक्तिर्न न्यूनतापादिकेत्युक्तं भवति । वाक्यपर्यवसानोपयोगिनीतिसिद्धविशेषस्येति चोक्त्याऽऽद्यबाधकपरिहारोऽयमिति सूचयति । चशब्दस्य प्रकृतनिषेध्यसमुच्चायकत्वासंभवादतःशब्दव्याख्यानान्तरत्वस्य भाष्यारूढतासंपादनाय च तं व्याख्याति **चशब्द इति** । भगवन्निष्ठकार्यतेष्टसाधनतातिरिक्ता नास्तीत्यर्थपरत्वे वक्ष्यमाणनिषिद्धस्य समत्वत इत्यादिदूषणस्यासङ्गतेस्तदिष्टं साधनमिति सामान्योपसंहारमुखेन साधनमिष्टस्य भगवानिति भगवत इष्टसाधनत्वाद्युक्त्यसङ्गतेश्च भगवदतिरिक्तविषयताया व्याख्याति **गवानयनादाविति** । यद्वा घटादिनिष्ठजन्यतादिरूपकार्यताया लिङाद्यर्थतया परेणाप्यनुक्तत्वाद्गवानयनादिधात्वर्थनिष्ठकार्यताया एव वाक्यपर्यवसानोपयोगितयोक्तत्वात्तस्या एवेष्टसाधनातिरिक्तत्वाभावप्रतिज्ञानायाह **गवानयनादाविति** । आद्यबाधकपरिहारस्य भाष्यारूढतां दर्शयितुमाह **वाक्येति**।

**वा०र०**— **उक्तबाधकेति**। वाक्यतात्पर्यविषयश्च स एव। यत्प्रतिपादनेनेत्यादिनोक्तबाधकेति बाधकत्रयस्याप्युपादानम्। वक्ष्यति च **उक्तबाधकत्रितय इति**। **प्रमाणस्योदितत्वादिति** मूलम्। व्याहृतीनां चेत्यादिनोङ्कारार्थत्वादिपरम्परया सर्ववेदार्थत्वस्य प्रागुक्तत्वादिति भावः । **आद्यबाधकेति** । यत्प्रतिपादनेन वाक्यपर्यवसानं इत्यादिनोक्तबाधकेत्यर्थः ।

**स०व्र०**— **प्रमाणस्योदितत्वादिति** । स एव सर्ववेदार्थ इत्यादिनेति शेषः । **सिद्धविशेषस्येति** । इष्टेष्टसाधनानिष्टोदासीनभेदेन सिद्धस्यानेकविधत्वेन तत्र चानिष्टोदासीनयोरभिप्रेतकार्यत्वासंभवेऽपि इष्टत्वेष्टसाधनत्वावच्छिन्नेष्टेष्टसाधनरूपसिद्धविशेषस्य कार्यत्वसंभवाद्ब्रह्मणश्च तद्रूपत्वांत्तत्र वाक्यपर्यवसानोपपत्तिरिति भावः । **चशब्द इति** । सूत्रस्थातःशब्दस्य व्याख्यानान्तरसमुच्चयार्थ इत्यर्थः । ननु कथं सिद्धस्य कार्यरूपत्वमित्यत आह **गवानयनादाविति** ।

**वि०ठ०**— **उदितत्वादिति** । स एव सर्ववेदार्थ इत्यत्रेति शेषः । कथं बाधकाभाव इत्यतस्तदुपपादयितुं बाधकमाशङ्क्य तत्परिहारकतयोत्तरश्लोकं सङ्गमयति **नन्विति** । **सिद्धविशेषस्येति** । इष्टसाधनरूपस्येत्यर्थः । **व्याख्यानान्तरेति**। प्रयोजनसमर्थनार्थत्वेन कृतातःशब्दव्याख्यानद्वयापेक्षया व्याख्यानान्तरेत्यर्थः।

**चषकः**— समाधत्ते **अत्रोच्यत इति** । **उदितत्वादिति** । ब्रह्मधर्मिकसर्ववेदप्रतिपाद्यत्वसाध्यकतद्व्याख्येयोङ्कारवाच्यत्वहेतुकानुमानरूपप्रमाणस्योक्तत्वादित्यर्थः । सिद्धविशेषस्य अधिकारिभेदेनेष्टरूपस्येष्टसाधनरूपस्य चेत्यर्थः। **व्याख्यानान्तरेति**। सूत्रघटकातःशब्दस्येति पूरणीयम्।

**प्रदीपः**— **सा चेदिति** । भवतु कार्यमेव वेदार्थः कार्यरूपश्च । भगवानिति वेदार्थत्वं तस्यैवेत्यर्थः । ननु कथं सिद्धस्य कार्यत्वं युक्तिमदित्यत आह **गवानयनादाविति** ।





कार्यतायाः क्रियाव्याप्यत्वस्वरूपाभावः—

५२३ **सु०—** कुत इत्यतोऽन्यस्या अनुपपत्तेरित्यभिप्रेत्य प्रसक्तान्पक्षान्निराचष्टे **कार्यमिति**।

**अनु०— कार्यं न हि क्रियाव्याप्यं निषिद्धस्य समत्वतः ॥**

**कार्यमिति** हि कृत्यप्रत्ययान्तः शब्दः । कृत्याश्च कर्मणि स्मर्यन्ते । 'तयोरेव कृत्यक्तखलर्थाः' इति । कर्म च तदुच्यते यत्कर्तुः क्रिययाऽऽसुमिष्टतमम् । तथा च **क्रियया विशेषेणाप्यं** कार्यं, तद्भावः कार्यतेति प्राप्नोति । न च तत्संभवति; **निषिद्धस्यापि** ब्राह्मणहननादेः क्रिययाऽऽसुमिष्टतमत्वसाम्यात् । तदपि कार्यमस्त्विति चेन्न; तत्रापि कार्यताबुद्धिप्रसङ्गात् । अस्त्येव निषिद्धताबोधात्प्रागिति चेत्, परतोऽपि किं न स्यात् । न हि निषिद्धताबोधे ब्राह्मणहननादेः क्रियया व्याप्यताऽपगता । तन्मात्रं च कार्यतेति कथं निषेधज्ञानादपि परतो न स्यात्कार्यताबोधः । सति च तस्मिन्प्रवर्तेत; तस्यैव प्रवर्तकत्वाभ्युपगमात् ।

**परि०— कृत्यप्रत्ययेति** । ण्यत्प्रत्ययान्त इत्यर्थः । डुकृञ्करण इत्यस्य 'ऋहलोर्ण्यदि'-त्युक्तण्यत्प्रत्यये अचोञ्णितीतिवृद्धौ कार्यमिति निष्पत्तेः । ण्यत्प्रत्ययस्य च 'कृत्याः प्राङ्ण्वुल' इति सूत्रेण कृत्यसंज्ञकत्वात् । **कृत्याश्चेति** । कृत्यसंज्ञकाः प्रत्यया इत्यर्थः । **तयोरेवेति** । 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति पूर्वसूत्रप्रकृतभावकर्मणोरेव कृत्यसंज्ञकप्रत्ययः क्तप्रत्ययः खलर्थप्रत्ययश्च भवतीति पाणिनिसूत्रेण च स्मर्यन्त इत्यर्थः । **कर्तुः क्रिययेति** । 'कर्तुरीप्सिततमं कर्मे'ति पाणिनिस्मरणादिति भावः ।

**गु०दी०— तयोरेव हि** इति सौत्रपदस्य भावकर्मणोरेवेत्यर्थः । **कृत्यक्तखलर्थाः** इत्यस्य कृत्यसंज्ञास्तव्यादिप्रत्ययाः क्तप्रत्ययाः खलर्थकाश्च प्रत्यया इत्यर्थः । **निषिद्धस्यापि ब्रह्महननादेः** इत्यतः परं तस्करस्येति (अकार्यस्येति) योग्यपदमध्याहार्यम् ।

**यादु०— प्रसक्तानिति** । कार्यशब्दार्थतयेति शेषः । **कृत्यप्रत्ययान्त इति** । ण्यन्तत्वादिति भावः । **तयोरेवेति** । कृत्यक्तखलर्थाश्च भावकर्मणोरेव स्युरिति सूत्रार्थः ।





**वं०प०— कृत्यप्रत्यय इति** । कृत्याः प्राङ्ण्वुल इति सूत्रेण ण्वुल्तृचावित्यतःपूर्वं विहितानां प्रत्ययानां कृत्यप्रत्ययोक्तेर्ण्यत्प्रत्ययस्यापि तथात्वेन कृत्यप्रत्ययत्वात्तदन्तोऽयं शब्द इत्यर्थः । तथा च कृञ् करणे ञकारोऽनुबन्धार्थः । अस्मात् ण्यत्प्रत्यये णकारतकारलोपे णित्वादादिवृद्धौ कार्येति रूपम् । **व्याप्यता** प्राप्तुमिष्टता ।

**आनन्दः— अत्र** हि कार्यशब्दः किं योगिको वा रूढो वा तत्र यौगिकत्वे कार्यशब्देन क्रियाव्याप्यत्वरूपार्थलाभमाह **कार्यमिति हीति** । तथाच क्रियते तत्कार्यमिति कर्मणि ण्यत् । **तस्यैवेति** । न च कार्यताबोधमात्रं न प्रवर्तकं किन्त्विष्टसाधनतालिङ्गकं तथाच न दोष इति वाच्यम् । तथा सति नित्यनैमित्तिकादिषु प्रवृत्तिर्न स्यात् प्रवर्तकाभावात् । न च सविशेषणवता प्रतिसन्धानजन्यं कार्यताज्ञानं प्रवर्तकमिति वाच्यम् । लाघवेष्टसाधनताज्ञानस्यैव प्रवर्तकत्वात् । यथा चात्र न दोषस्तथा वक्ष्यते ।

**कं०रा०— कार्यं न हि क्रियाव्याप्यमिति** । क्रियाव्याप्यत्वं कार्यत्वं न भवतीति प्रतिषिद्ध्यते । तदनुपपन्नम् । कार्यशब्दार्थत्वेन संभावितस्यैव प्रतिषेधव्याप्यत्वात् । क्रियाव्याप्यत्वस्य च कार्यशब्दार्थत्वाभावादित्यतस्तस्य तच्छब्दार्थत्वेन प्रसक्तिं दर्शयन्व्याचष्टे **कार्यमिति हीति** । **कृत्येति** । ऋहलोर्ण्यदिति करोतेर्ण्यत्प्रत्ययेऽचोञ्णितीति वृद्धौ उरण्रपर इति रपरत्वे सति निष्पन्नः कार्यशब्दः कृत्याः प्राङ्ण्वुल इति कृत्यसंज्ञण्यत्प्रत्ययान्तत्वात्कृत्यप्रत्ययान्त इति भावः । **कृत्याश्चेति** । यद्यपि तयोरेव कृत्यक्तखलर्था इति सूत्रे तयोरित्यनेन भावकर्मणोर्ग्रहणात्तयोरुभयोः कृत्याः स्मर्यन्ते । तथाऽपि लः कर्मणि च भावे चाकर्मकेभ्य इत्यस्मात्सूत्रात् भावे चाकर्मकेभ्य इत्यनुवृत्तेः सकर्मकेभ्यः कृत्यादयो भावे न भवन्तीति वृत्तिकारेणोक्तत्वेन सकर्मकेभ्यः कृत्यानां कर्मण्येव विधानात्तदभिप्रायेण कृत्याश्च कर्मणि स्मर्यन्त इत्युक्तमिति द्रष्टव्यम् । **कर्म चेति** । कर्तुरीप्सिततमं कर्मेति स्मरणादिति भावः ।

**श्रीनिधि०— कृत्यप्रत्ययान्त इति** । डुकृञ्करण इत्यस्मात् ऋहलोर्ण्यदिति सूत्रेण कृत्यसंज्ञके ण्यत्प्रत्यये कृते अचोऽञ्णितीति वृद्धौ सत्यां कार्यमिति निष्पत्तिरिति । तयोरेव भावकर्मणोरेवेति सूत्रखण्डार्थः । न हि निषिद्धताबोधात् ब्राह्मणहननादेः क्रियाव्याप्यतावगतेति ।

**वा०चं०—** कार्यशब्दात्क्रियाव्याप्यत्वपक्षस्य योगतः प्रसक्तिं दर्शयति **कार्यमितीति** । क्रिययाऽऽप्तुमिष्टतमं क्रियया प्राप्यम् । इष्टापत्तिपरिहाराय समत्वतः कार्यताबुद्धिविषयतया साम्यप्रसङ्गादित्यर्थमभिप्रेत्य मूलं योजयति **तत्रापीति** । तत्रापीष्टापत्तिपरिहाराय निषिद्धस्य निषिद्धत्वेन बुद्धस्य क्रियाव्याप्यतासाम्यादित्याशयेनापि तदेव मूलं योजयति **न हीति** । तत्रापीष्टापादनत्वपरिहारायाह प्रवृत्तिसाम्यप्रसङ्गादिति तन्मूलं योजयति **सति चेति** । यद्वा निषिद्धस्य समत्वत इत्युक्तिलब्धाभिप्रायकथनेनेष्टापादनपरिहारोऽयमिति द्रष्टव्यम् ।





**वा०र०— प्रसक्तानिति** । कार्यपदार्थतयेति शेषः । **कृत्यप्रत्ययान्त इति** । ऋहलोर्ण्यदिति विहितण्यद्रूपकृत्येत्यर्थः । समत्वत इत्यस्येति पाठः स्वरसः । समत्वतः कार्यतेति पाठेऽपि समत्वत इत्यनूद्य कार्यतेत्यादि व्याख्यानमिति बोध्यम् ।

**स०व्र०— प्रसक्तान्** कार्यपदार्थत्वेनेति शेषः । **तयोरेव कृत्यक्तखलर्था इति** । निषिद्धत्वचोदनानन्तरं क्रियाव्याप्यत्वाभावान्न कार्यत्वधीरित्यत आह **न हीति** ।

**वि०—** क्रियाव्याप्यस्य कार्यशब्दवाच्यताप्रसक्तौ सत्यां तस्य कार्यत्वनिवारणं कार्यम् । अतः तद्भक्तिप्रदर्शनपूर्वकं तस्य वाक्यपर्यवसानहेतुभूतकार्यत्वनिवारणपरतया व्याचष्टे **कार्यमिति हीत्यादिना** । न भविष्यत्क्रियाकार्यं नैव चाकर्तुमशक्यं कार्यमित्यत्राप्येवमेव व्याख्यानबीजं द्रष्टव्यम् । कृत्यप्रत्ययान्त इति कृत्यसंज्ञिकण्यत्प्रत्ययान्त इत्यर्थः । कृत्याश्चेत्यस्य कृत्यसंज्ञिकप्रत्ययाश्चेत्यर्थः । **तयोरेवेति** सूत्रस्यायमर्थः लः कर्मणि च भावे चेति पूर्वसूत्रप्रस्तुतयोर्भावकर्मणोरेव कृत्यसंज्ञिकप्रत्ययाः खलर्थप्रत्ययाश्च भवन्तीति । यत्कर्तुः क्रियेति कर्तुरीप्सिततमं कर्मेति स्मरणादिति भावः । **क्रियया आप्तुमिष्टत्वं** नाम क्रियासाध्यत्वमिति ज्ञेयम् । उपपादितं कार्यशब्दार्थं मूलारूढं करोति **तथा चेति** । **न च तत्संभवतीति** । तदुक्तरूपं कार्यविधिवाक्यं तात्पर्यविषयः न संभवतीत्यर्थः । तत्कुत इत्यत आह **निषिद्धस्येति** । तथा च यागादेरिव ब्राह्मणहननादेरपि क्रियासाध्यतया कार्यताप्रसक्तेरिति भावः ।

**चषकः— प्रसक्तानिति** । कार्यपदप्रतिपाद्यतयेत्युपस्कर्तव्यम् । **कृत्यप्रत्ययान्त इति** । प्राङ्ण्वुलः कृत्य इत्यस्याधिकृततया ऋहलोर्ण्यदित्यनुशिष्टण्यतोऽपि कृत्यत्वादिति भावः । **तयोरेवेति** । सूत्रघटकसर्वनाम्नो भावकर्मणोरिति प्रकृततदुभयपरामर्शकत्वादिति भावः । कर्तुरीप्सिततमं कर्मेति सूत्रार्थमनुवदति **यत्कर्तुरिति** ।

**प्रदीपः— तयोरेवेति** । भावकर्मणोरेवेत्यर्थः । ननु निषिद्धत्वचोदनानन्तरं क्रियाव्याप्यत्वाभावान्न कार्यत्वधीरित्यत आह **न हीति** । यस्य निषेधज्ञानेऽपि हननेऽभिरतिः तस्य कार्यताधीः स्यादेव ।

कार्यतायाः भविष्यत्क्रियात्वस्वरूपाभावः—

## ५२४ सु०— न भविष्यत्क्रियेति ।

# अनु०— न भविष्यत्क्रिया कार्यं

'देवदत्त कृतः किं त्वया कटः, क्रियते वे'ति पृष्टः प्रत्याह 'न मया कृतो, नापि क्रियते, किन्तु कार्य' इति । तेन प्राप्नोति भविष्यत्क्रिया कार्यं, भविष्यत्त्वावच्छिन्नं







**क्रियात्वं, क्रियागतं भविष्यत्त्वं वा कार्यतेति । तदपि नोपपद्यते । कुत इत्यत आह स्रक्ष्यतीति ।**

**अनु०— स्रक्ष्यतीश इति ह्यपि ॥**
**कार्यं स्यात्**

**हिशब्दो हेतौ । 'तथा सती'ति शेषः । भविष्यत्क्रिया कार्यमित्यङ्गीकारे हि यस्मात् 'ईशो विश्वं स्रक्ष्यति', 'देवदत्तो गामानेष्यती'ति वाक्यात्प्रतिपन्नं भविष्यत्सर्जनादिकम् अपि कार्यं प्रसज्येत तस्मान्नेति । न च तदपि कार्यं लिङादिवाच्यताऽङ्गीकारात् । किञ्च परसंबन्धिन्यां वाक्यादितोऽवगतायां भविष्यत्क्रियायां परस्य 'ममेदं कार्य'मिति प्रत्ययोऽपि किं न स्यात् । न हि परं प्रति सा न क्रिया नापि न भविष्यन्तीति । तन्मात्रशरीरा च कार्यता, प्रवृत्तिरपि तत्र परस्य प्रसज्येत ।**

**परि०— देवदत्तेति** संबुद्ध्यन्तम् ।

**यादु०— किन्तु कार्य इतीति** । तथाच भविष्यत्त्वावच्छिन्नक्रियायां कार्यशब्दो रूढ इति रूढचैतत्पक्षप्रसक्तिरिति भावः । **लिङादीति** । कार्यताया इति शेषः ।

**वं०प०— अङ्गीकारादिति** । स्रक्ष्यतीत्यादौ लिङादेरभावादिति भावः । **परसंबन्धिन्यामिति** । वस्तुगत्या देवदत्तेन कटः कार्योऽस्ति । तत्र परसंबन्धिन्यां देवदत्तसंबन्धिन्यां भविष्यत्क्रियारूपकार्यतायां मया कटः कार्योऽस्तीत्येवं देवदत्तवाक्याद्यज्ञदत्तेनावगतायां सत्यां परस्य यज्ञदत्तस्य ममेदं कार्यमिति प्रत्ययः स्यादित्यर्थः । ननु यज्ञदत्तं प्रति सा न भवतीति चेत्तत्राह **न हीति** । ननु भवत्येव तत्रापि कार्यताबोध इति चेत्तत्राह **प्रवृत्तिरपीति** । प्रवर्तकस्य कार्यताज्ञानस्य सत्त्वादित्यर्थः ।

**आनन्दः—** अस्तु तर्हि कार्यशब्दो रूढ इत्ययं पक्ष इत्याशयेन तमुपपादयति **देवदत्तेति** । तथाच प्रयोगबाहुल्यसद्भावाद्भविष्यत्वावच्छिन्नक्रियात्वस्य वा क्रियागतभविष्यत्वस्य वा शक्यतावच्छेदकस्य च सत्त्वादिति भावः । हिशब्दस्य प्रसिद्ध्यर्थत्वं निवारयन् शेषपूरणेन व्याख्याति **हिशब्द इति** । **लिङादीति** । कार्यस्येति शेषः । भविष्यत्सर्जनादेश्च नृसाध्यतया प्रसक्तत्वादिति भावः । **प्रवृत्तिरपीति** । न च स्वीयवृत्तिसाध्यविशेषितं भविष्यत्क्रियाज्ञानं प्रवर्तकमिति वाच्यम् । लाघवेन स्वीयकृतिसाध्यताज्ञानस्यैव प्रवर्तकत्वोपपत्तेरिति ।





**कं०रा०— तेनेति**। कार्यशब्दस्य भविष्यतिप्रयोगेणेत्यर्थः। ननु परसंबन्धिन्यां भविष्यत्क्रियायां परस्य ममेदं कार्यमिति बुद्धिर्न भवति। परं प्रति तस्याः कार्यत्वाभावादित्यत आह **न हीति**। सा परसंबन्धिनी क्रिया क्रिया न भविष्यति नेत्यपि न किन्तु भविष्यत्वे सति क्रियात्वं परं प्रति तत्रास्त्येव। तन्मात्रशरीरं च कार्यत्वमिति तत्र परस्य कार्यत्वसिद्धिः स्यादेवेत्यर्थः। परसंबन्धिन्यां भविष्यत्क्रियायां परस्य ममेदं कार्यमिति प्रत्ययोऽस्तु को दोष इत्यत आह **प्रवृत्तिरपीति**।

**श्रीनिधि०—** ननु क्रियया आप्तुमिष्टतमं तदुच्यते। यत्क्रिययाप्तुमत्यन्तमिच्छाविषयीभूतम्। निषिद्धबोधे च इच्छापगमेन क्रियाव्याप्यता अपगतेति चेन्न। क्रियया आप्तुमिष्टतमत्वन्नाम क्रियाजन्यप्राप्तियोग्यत्वम्। नत्विच्छागर्भम्। अन्यथा विष्टिगृहीतादिगमनविषयस्य ग्रामादेः क्रियां प्रति कर्मत्वाभावप्रसङ्गात्। तन्मात्रं च क्रियाव्याप्यत्वं निषिद्धताबोधानन्तरमपि नापगतमेवेति। कार्यतेत्यत आह **भविष्यत्वावच्छिन्नमित्यादि**। न भविष्यत्क्रियाकार्यमित्यादेरर्थान्तरमाह **किञ्चेति**। तथाच कार्यं स्यात्कार्यमिति प्रतीतिः स्यादित्यर्थः। अस्तु कार्यमिति प्रतीतिः इत्यत आह **प्रवृत्तिरपीति**। श्रुतशास्त्रस्यापि कार्यताबुद्धिः स्यादितीष्टमेव।

**वा०चं०—** भविष्यत्क्रियायाः कार्यशब्दादूढ्या प्रसक्तिं दर्शयितुं प्रयोगं दर्शयति **देवदत्तेति**। **लिङादीति**। धात्वर्थनिष्ठं कार्यं लिङादिबोध्यमिति परोक्तेरिति भावः।

**वा०र०— लिङादीति**। कामनाया इति शेषः। **इति परोक्तेरिति भाव इति**। ......... । भाव इत्यनन्तरमस्य च तद्वाच्यत्वाभावादिति शेष इति पाठः।

**स०व्र०— लिङादिवाच्यत्वाङ्गीकारादिति**। कार्यत्वस्येति शेषः। तथा च कार्यत्वस्य लिङ्लोट्तव्य-प्रत्ययवाच्यत्वेन स्रक्ष्यतीत्यस्य लृट्त्वेन कार्यत्ववाचकत्वमित्यर्थः।

**विठ्ठ०— देवदत्तेति**। हे देवदत्त त्वया पूर्वं कटः कृतः किं इदानीं क्रियते वेति योजना। **किन्तु कार्य इति**। तथा च रूढ्यैतत्पक्षप्रसक्तिरिति भावः। अध्याहृतस्य तथा सतीत्यस्यार्थकथनपूर्वकं योजयति **भविष्यत्क्रियाकार्यमित्यङ्गीकार इति**। अपिशब्दोऽनुक्तसमुच्चयार्थ इत्यभिप्रेत्याह **देवदत्त इति**। **न च तदपि कार्यमिति**। भविष्यत्सर्जनादेर्लिङादिवाच्यतानङ्गीकारात्कार्यस्य च लिङादिवाच्यत्वान्न भविष्यत्सर्जनादिकं कार्यमिति भावः। अपिपदस्यार्थान्तरमभिप्रेत्याह अनेन सूत्रेणावश्यकेत्यादि पूर्वसूत्रात्प्रकृतावश्यकेऽर्थे कृत्यप्रत्ययविधानादिति भावः।

**चषकः— देवदत्त** इति संबुद्ध्यन्तम्। **कृतेति**। निष्ठात्वं भूताधिकारीयत्वं चेति निष्ठायां धर्मद्वयम्। तत्र प्रथमरूपावच्छिन्नोपस्थापितकर्मतारूपनिष्ठार्थतावच्छेदके निरूपितत्वप्रत्यासत्त्या प्रकृत्युपस्थाप्याद्वितीय-





रूपावच्छिन्नोपस्थापितसांप्रतिकध्वंसप्रतियोगित्वात्मकातीतत्वरूपविशेषणविशेषिता कृतिरन्वेति **क्रियते वेति**। लट्त्वं कर्माख्यातत्वं चेति रूपद्वयमाख्याते। तत्र प्रथमरूपावच्छिन्नप्रत्यायितवर्तमानत्वरूपविशेषणाविशेषिता प्रकृतिप्रत्यायितकृतिर्द्वितीयरूपावच्छिन्नप्रत्यायितकर्मलकारार्थतावच्छेदकीभूतकर्मतायां स्वनिरूपितत्वप्रत्यासत्त्या विशेषणतयाऽन्वेति। **किन्तु कार्य इतीति**। कट इति पदमनुषञ्जनीयम्। सांप्रतिकप्रागभावप्रतियोगित्वरूपभविष्यत्वे कृत्यप्रत्ययस्य शक्तिग्राहकपाणिनीयाद्यनुशासनवैधुर्येऽपि तत्तुल्यकक्षापन्नदर्शितव्यवहारावधृततन्निरूपितशक्तिकतया तद्विशेषितकृतिकर्मीभूतः कट इति बोधः। कृञः शचेति सूत्रानुशिष्टचकारात् क्तिन्प्रत्ययान्तौ क्रियावृत्तिशब्दौ तत्र कृतिशब्दः क्वचित्कर्मसाधनः समधिगतस्तत्तुल्यकक्षापन्नः क्रियाशब्दोऽपि क्वचित्कर्मसाधनो भवत्येव भावादावित्येव व्याख्यानात्। तथाच मौलक्रियाशब्दस्य कर्मसाधनप्रत्यायकतां ध्वनयितुं किन्तु कार्य इति निरदिक्षत्। निर्देक्ष्यति च कर्तव्यमितिशब्दादेष्यत्कालीनताप्रतीतेरुक्तत्वादिति। एकपदोपस्थापितयोरपि परस्परं विशेषणविशेष्यभावेन व्युत्पत्तिवैचित्र्येणान्वयदर्शनात्। ण्यदुपस्थाप्यैकतरभविष्यत्वस्यापरतादृशकृतिकर्मणि विशेषणतयाऽन्वयमभिप्रेत्य परिष्कुरुते **भविष्यत्वावच्छिन्नमिति**। एवं भविष्यत्सर्जनादिकमपि कार्यं प्रसज्येतेत्यपि समञ्जसमेवेति विभावनीयम्। भविष्यत्क्रियायाः कार्यशब्दाद्रूढ्या प्रसक्तिं दर्शयितुं प्रयोगं दर्शयति देवदत्तेतीत्यप्यवतारितम् किन्तु कार्य इतीति प्रतीकमुपादाय। तथा च भविष्यत्वावच्छिन्नक्रियायां कार्यशब्दो रूढ इति रूढ्यैतत्पक्षप्रसक्तिरिति भाव इत्यपि स्थितम्। **लिङादीति**। कार्यताया इत्यादिः।

कार्यतायाः अकर्तुमशक्यत्वस्वरूपाभावः—

५२५ सु०— **नैव चेति**।

**अनु०— नैव चाकर्तुमशक्यं कार्यमिष्यते।**
**साम्यादेव निषिद्धस्य**

'कृत्याश्चे'त्यावश्यकार्थे कृत्याः स्मर्यन्ते। आवश्यकत्वं चाकर्तुमशक्यत्वम्। तथा **चाकर्तुमशक्यं कार्यं** तद्भावश्च कार्यतेति प्रसक्तम्। तच्च प्रामाणिकैः **नैवेष्यते**। कुतः। **निषिद्धस्य** परनारीगमनादेरपि अकर्तुमशक्यत्व**साम्यादेव**। भवति हि कस्यचिदतिकामाद्याक्रान्तचेतसो 'न पराङ्गनागमनेन ब्राह्मणस्य वा हननेन विना स्थातुं शक्नोमी'ति बुद्धिः। न च तत्कार्यमेव; तस्यैव श्रुतशास्त्रस्यापि कार्यताबुद्धिप्रसङ्गात्। आस्तिककामुको 'ह्यकार्यमेवेदमकृत्वा स्थातुं नोत्सह' इति मन्यते।





**परि०— कृत्याश्चेति ।** तृतीये 'आवश्यकाधमर्ण्ययोर्णिनिरि'ति पूर्वसूत्रात्प्रकृतावावश्यकेऽर्थे कृत्याश्चेति सूत्रेण कृत्यविधानादिति भावः ।

**यादु०— कृत्याश्चेत्यावश्यकेति ।** 'आवश्यकाधमर्ण्ययोर्णिनिरि'ति पूर्वसूत्रादावश्यकाधमर्ण्ययो-रित्येवेत्यनुवृत्तेः काशिकायामुक्तत्वादिति भावः । ननु श्रुतशास्त्रस्यास्तिककामुकस्य तत्र कार्यताबुद्धिरिष्टैवेत्यत आह **आस्तिककामुको हीति ।**

**वं०प०—** अत्रापीष्टापत्तिं परिहरति **आस्तिककामुको हीति ।** तस्मान्न तस्य कार्यताबुद्धिरिति भावः ।

**कं०रा०— आवश्यकार्थे इति ।** कृत्याश्चेत्यत्रावश्यकाधमर्ण्ययोर्णिनिरिति पूर्वसूत्रादावश्यकाध-मर्ण्ययोरित्यस्यानुवृत्तेरिति भावः । **भवति हीति ।** अतिशयितकामक्रोधाक्रान्तचेतसः कस्यचित्पराङ्गनागमनेन ब्राह्मणहननेन वा विना स्थातुं न शक्नोमीति बुद्धिर्भवति हीत्यर्थः ।

**श्रीनिधि०—** अन्यथा आस्तिककामुकस्य तत्र प्रवृत्तिर्न स्यादित्यत आह **आस्तिककामुको हीति ।**

**वा०चं०—** अत्रापि योगेन प्रसक्तिं दर्शयति **कृत्याश्चेति ।**

**चषकः— कृत्याश्चेत्यावश्यकेति ।** आवश्यकाधमर्ण्ययोर्णिनिरित्यतः आवश्यकाधमर्ण्ययोरित्यंश-स्यानुवृत्तिं कृत्याश्चेत्युत्तरसूत्रे वामनः काशिकायामभ्यधादिति भावः ।

**॥ इष्टेष्टसाधनत्वस्य कार्यत्वोपसंहारः ॥**

**५२६ सु०— यत एवं न पक्षान्तरसंभवः । तस्मात् 'इष्टत्वमिष्टसाधनत्वं वा कार्यता' इत्युपसंहरति तदिति ।**

**अनु०— तदिष्टं साधनं तथा ॥**

**कार्यम्**

**अत्रेष्टग्रहणादुपक्रमेऽपि तद् ग्राह्यम् ।**

**परि०— उपक्रमे इति ।** इष्टसाधनतां विनेत्यत्रेष्टतां विनेत्यपि ग्राह्यमित्यर्थः । मूले तदित्यस्य तस्मादिति, इष्टमेवेत्यस्येष्टत्वमिति, साधनं तथेत्यस्येष्टसाधनत्वमिति, कार्यमित्यस्य कार्यत्वमित्यर्थस्य अवतारिकायामेवोक्तत्वान्न व्याख्यातं मूलमिति ध्येयम् ।





**वं०प०— उपक्रमेऽपीति** । कार्यता च न काचित्स्यादिष्टसाधनतां विनेत्यत्रापीष्टेष्टसाधनतां विनेति ग्राह्यमित्यर्थः ।

**आनन्दः—** ननूपक्रमे इष्टसाधनत्वमेव कार्यमिति प्रतिज्ञायोपसंहारेऽपि इष्टत्वेष्टसाधनत्वयोरुभयोरपि कार्यतारूपत्वमुच्यते । एवं चोपक्रमविरोध इत्यत आह **अत्रेष्टेति** । तथाचोपसंहारानुसारेणोपक्रमो व्याख्येय इति भावः ।

**कं०रा०— अत्रेति** । तदिष्टं साधनं तथा कार्यमित्युपसंहारे तस्मात्पक्षान्तराणामसंभवाद्वाक्यपर्यवसानहेतूभूतं कार्यमिष्टसाधनं वेत्यर्थके इष्टस्यापि कार्यत्वेन ग्रहणात्कार्यता च न काचित्स्यादिष्टसाधनतां विनेत्युपक्रमेऽपीष्टत्वमिष्टसाधनतां विना न काचित्कार्यता स्यादितीष्टत्वमपि ग्राह्यम् । अन्यथोपक्रमोपसंहारयोर्वैरूप्यप्रसङ्गादिति भावः ।

**श्रीनिधि०— उपक्रमेऽपि तद्ग्राह्यमिति** । इष्टसाधनतां विनेत्यत्र इष्टत्वं चेति ग्राह्यमित्यर्थः ।

**वा०चं०—** अस्योपसंहारत्वं घटयितुमाह **अत्रेति** ।

**विठ्ठ०— उपक्रमेऽपीति** । इष्टसाधनतामित्यत्रापीष्टतां विनेति च ग्राह्यमित्यर्थः ।

**चषकः—** अस्य निगमनवाक्यतां घटयति **अत्रेति** ।

प्राभाकराभिहितकार्यतालक्षणप्रत्याख्यानम्—

**५२७ सु०— ननु 'कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयत' इति परोदीरितं कार्यलक्षणं कुतो न शङ्कितमिति चेन्न । अनेनैव गतार्थत्वात् । तथा हि । किमिदं प्रत्येकं लक्षणमुत मिलितम् ॥ आद्ये कृतिसाध्यत्वस्योक्तो दोषः, 'कार्यं न हि क्रियाव्याप्यमि'ति । कृतिप्राधान्यं च किमुच्यते । प्रयत्नोद्देश्यत्वमिति चेत् । तत्किं मुख्यमुतामुख्यम् । आद्यं त्विष्टत्वमेव । द्वितीयं त्विष्टसाधनत्वमेवेत्यङ्गीकृतमेव ॥ न द्वितीयः कृतिसाध्यताविशेषणस्य व्यर्थत्वात् ।**

**परि०— अनेनैवेति** । मूलकृदुक्तविकल्पेनैवेत्यर्थः । **उक्त इति** । 'कार्यं न हि क्रिये'ति कल्पस्य 'निषिद्धस्य समत्वत' इति यो दोष उक्तस्स एवेत्यर्थः । **व्यर्थत्वादिति** । अत्र कर्मनिर्णयतत्त्वनिर्णयटीकाभ्यां विरोधनिरासस्तर्कताण्डवे कृतिसाध्यत्वविशिष्टेष्टसाधनत्वस्य विधित्वभङ्गे ध्येयः ।

**यादु०— उक्तो दोष इति** । एतेन यद्यपि कृतिसाध्यत्वमात्रस्य स्वकृत्यसाध्ये परकृतिसाध्ये सत्त्वेन स्वनिष्ठकृतिसाध्यत्वस्य च जीवनादृष्टजन्यस्वकृतिसाध्ये प्राणपञ्चकसञ्चारेऽपि सत्त्वेनेच्छाधीनस्वनिष्ठकृतिसाध्य-







त्वस्य च फलरूपे सुखे दुःखाभावे च परम्परया सत्त्वेन तत्र प्रवृत्तिप्रसङ्गात् । साक्षात्तादृशकृतिसाध्यत्वस्य च शरीरचेष्टादिद्वारा कृतिसाध्ये लौकिके पाकादौ वैदिके यागादौ चाभावेन तत्राप्रवृत्तिप्रसङ्गान्न कार्यतारूपत्वम्। तथाऽपि स्वविषयकचिकीर्षाधीनकृतिसाध्यत्वं कार्यत्वम् । सुखादौ चेच्छामात्रमुद्देश्यत्वात् । न तु चिकीर्षा, अतो न तत्र प्रवृत्तिप्रसङ्गः । भोजनचिकीर्षाधीनकृतिजन्यश्रमे प्रवृत्तिप्रसङ्गवारणाय स्वविषयकेति चिकीर्षाविशेषणम् । श्रमस्तु भोजनविषयकेच्छाधीनकृतिसाध्य एवातो न तत्र प्रवृत्तिप्रसङ्ग इति यत्तैरुच्यते तदपि निरस्तं वेदितव्यम् । कलञ्जभक्षणादावपि स्वविषयकचिकीर्षाधीनकृतिसाध्यत्वस्य सत्त्वेनास्यापि 'निषिद्धस्य समत्वत' इत्युक्तदूषण-लङ्घनाजङ्घालत्वात् । **प्रयत्नोद्देश्यत्वमिति** । यदिच्छया प्रयत्नस्तदुद्देश्यं तच्चानन्यार्थतयेष्यमाणं मुख्यमिष्टं सुखादिरूपम् । अन्यार्थतयेष्यमाणं त्वमुख्यमिष्टसाधनरूपमित्यर्थः । **अङ्गीकृतमेवेति** । एतेन कृतिसाध्यतार्हत्वमेव कार्यत्वं तच्च निषिद्धे कलञ्जभक्षणादौ तु संभवति । निषेधे ज्ञाते तत्र कृतिसाध्यतार्हत्वस्याननुभवात् । तथा च कथमुक्तपरिशेषः संभवतीति । तदपि निराकृतं वेदितव्यम् । प्रवृत्त्यविषयाद्विषभक्षणादितः साक्षादिष्टात्सुखादितश्च व्यावृत्तस्य सुखाद्यर्थमिष्टेषु प्रवृत्तिविषयेषु लौकिकवैदिकभोजनयागादिष्वनुवृत्तस्य चेष्टसाधनत्वादन्यस्यार्हत्व-स्याभावेनास्याप्यस्माभिरङ्गीकृतत्वात् । न च यदकरणे इष्टानुत्पत्तिप्रसङ्गस्तत्त्वमेवार्हत्वमिति वाच्यम् । एवं हीष्टानुत्पत्तिप्रसञ्जकीभूताभावस्य प्रतियोगिभूता या कृतिस्तद्विषयताप्रयोजकरूपवत्वमर्हत्वमित्युक्तं स्यात् । तच्च रूपं भोजनाद्यनुगतमन्यन्न संभवतीतीष्टसाधनत्वात्मकमेव । इष्टसाधनाकरणस्यैव कारणाभावत्वेनेष्टानुत्पत्ति-प्रसञ्जकत्वात् । तदेव च परिशिष्यमाणमङ्गीकृतमिति कथं परिशेषासिद्धिरिति ।

**आनन्दः— प्रत्येकमिति** । कृतिसाध्यं कार्यं कृतिप्रधानं कार्यमिति प्रत्येकं इत्यर्थः । **मिलितमिति** । कृतिसाध्यत्वे सति कृतिप्रधानत्वमित्यर्थः । **आद्यं त्विष्टत्वमेवेति** । मुख्यं प्रयत्नोद्देश्यत्वं इष्टमेव इष्टत्वमेव कार्यत्वमिति ह्यमुख्यं प्रयत्नोद्देश्यत्वं हि इष्टत्वमेव इष्टमुद्दिश्यैव मुख्यतः प्रयत्नकरणात्तथा चास्मदिष्टसिद्धिरिति भावः । **द्वितीयं त्विति** । अमुख्यप्रयत्नोद्देश्यत्वमित्यर्थः ।

**कं०रा०— कृतिसाध्यत्वस्येति** । 'कार्यं न हि क्रियाव्याप्यं निषिद्धस्य समत्वत' इति क्रियाव्याप्यत्वस्य निषिद्धब्रह्महननादिसाधारण्यरूपदोषस्तदनतिभिन्नस्य कृतिसाध्यत्वस्यापि तत्साधारण्यलक्षणदोष उक्तप्राय इति भावः ।

**श्रीनिधि०— प्रधानमिति** । प्रकृतिप्रधानमित्यर्थः । **उक्तदोष इति** । कृतिसाध्यम् । क्रियाजन्य-प्राप्तियोग्यमित्येकार्थत्वादिति भावः । **प्रयत्नोद्देश्यत्वमिति** । उद्देश्यस्य प्रधानत्वादेवमुक्तम् । **मुख्यम्** निरुपाधिकम् । **अमुख्यम्** इष्टसाधनत्वाद्यौपाधिकम् ।

**वा०चं०—** ननु परेण कण्ठोक्तं कार्यलक्षणमनिरस्यौत्प्रेक्षिकलक्षणनिरसनं भाष्यकारस्य न चातुरी-मावहतीति शङ्कते **नन्विति** । कृतिसाध्यमित्युक्ते भावार्थे प्रसक्तिरित्यतः प्रधानमित्युक्तम् । तावत्युक्ते फलेऽतः





कृतिसाध्यमिति । कार्यं न हि क्रियाव्याप्यमिति तदिष्टं साधनं तथेति च निरासाङ्गीकाराभ्यां तदभिमतलक्षणदूषणादेरप्युक्तप्रायत्वान्न पृथगवचनमनौचित्यावहमित्याशयेनाह **अनेनैवेति** । विशिष्टलक्षणत्वस्य पराभिमतत्वेऽपि साधारणात्कृतिसाध्यं प्रधानमिति परवाक्यात्पराभिप्रायविशेषस्य निश्चेतुमशक्यत्वाद्विकल्प्य तस्योक्तभाष्येण गतार्थतामुपपादयति **तथा हीति** । कृतिसाध्यत्वमात्रस्य कार्यत्वे स्वकृत्यसाध्येऽपि तस्य सत्त्वेन तत्राप्रवृत्तये स्वकृतिसाध्यत्वस्य तथात्वे वा जीवनादृष्टजन्यस्वकृतिसाध्यप्राणपञ्चकसञ्चारेऽपि तस्य सत्त्वेन तत्राप्रवृत्तये इच्छाधीनस्वकृतिसाध्यत्वस्य तथात्वे वा सुखदुःखाभावरूपफलस्यापि परम्परया कृतिसाध्यत्वात् तत्राप्रवृत्तये साक्षात्कृतिसाध्यत्वस्य च शरीरचेष्टादिद्वारा कृतिसाध्ये लौकिके पाकादौ वैदिके यागादौ यागादिद्वारा कृतिसाध्ये नियोगे चाभावेन तत्र प्रवृत्तये च चिकीर्षाधीनस्वकृतिसाध्यत्वस्य तथात्वे वा भोजनचिकीर्षा-जन्यश्रमेऽप्रवृत्तये स्वविषयकचिकीर्षाजन्यकृतिसाध्यत्वस्य तथात्वे वा कलञ्जभक्षणपरनारीगमनादिरूपनिषिद्धेऽपि स्वविषयचिकीर्षाजन्यकृतिसाध्यत्वस्यापि सत्त्वेन तस्यापि कार्यत्वापातेन तत्रापि प्रवृत्त्यापत्तिदोषो दुष्परिहर एव । एवञ्चान्तिमपक्षातिरिक्तपक्षेषु दोषान्तरसंभवेऽप्यन्तिमपक्षो अदोषत्वस्य सर्वत्र संभवात्तेनैव सर्वनिरासोपपत्तौ किं दोषान्तरगवेषणयेत्याशयेनाह **आद्य इति** । अविशेषितस्योक्तरीत्या विशेषितस्य वा कृतिसाध्यत्वस्य मूलोक्ते निषिद्धे प्रवृत्तिप्रसङ्गदोषो वज्रप्रहार एवेत्यर्थः । यद्यपि कृतिसाध्यतार्हत्वं कार्यत्वमित्यपि परेण वक्तुं शक्यम् । तथाऽपि प्रवृत्त्यविषयाद्व्यावृत्तस्य प्रवृत्तिविषयानुगतस्य चेष्टसाधनत्वातिरिक्तस्यार्हत्वस्याभावादिष्टानुत्पत्तिप्रसञ्जकाभूता-भावप्रतियोगिभूता या कृतिस्तद्विषयताप्रयोजकरूपवत्त्वलक्षणस्यार्हत्वस्य चेष्टासाधनाकरणे इष्टानुत्पत्तेरभावेनेष्ट-साधनसाधारणस्य तादृशरूपस्यासंभवात् इष्टसाधनासाधारणस्यापि अननुगमेन भोजनत्वयागत्वादिरूपस्या-संभवात् इष्टसाधनाकरणस्यैवेष्टानुत्पत्तिप्रसञ्जकत्वेन भोजनाद्यनुगतस्येष्टसाधनत्वस्यैव तादृशरूपस्य वक्तव्यत्वा-दिष्टसाधनत्वं कृतिसाध्यत्वमित्युक्तं स्यात् । तथा च कृत्युद्देश्यत्वस्येष्टसाधनत्वे पर्यवसानेन भाष्यकारीय-तदङ्गीकारस्य वक्ष्यमाणतया तन्न्यायेनैतादृषकृतिसाध्यत्वाङ्गीकारोऽपि सूचित इति द्रष्टव्यम् । एतादृशकृति-साध्यत्वस्य कृत्युद्देश्यतानतिरिक्ततया प्रत्येकलक्षणत्वस्य मिलितलक्षणत्वस्याप्ययोग इति द्रष्टव्यम् । उद्देश्यत्वं हि फलत्वम् । तथा च प्रयत्नोद्देश्यत्वेष्टत्वेष्टसाधनत्वयोश्च घटकीभूतेच्छाप्रयत्नयोः पुरुषनिष्ठयोर्भेदेऽपि सुख-निष्ठस्य प्रयत्नोद्देश्यत्वस्य मुख्यस्येष्टत्वातिरिक्तस्य यागादिनिष्ठस्यामुख्योद्देश्यत्वस्येष्टसाधनातिरिक्तस्याभावात्तयोश्च भाष्यकृता तदिष्टं साधनमित्यङ्गीकृतत्वान्न तदनुक्तिरित्याह **तत्किमित्यादिना** । इष्टसाधनतामात्रस्य कार्यत्व-रूपत्वं लिङर्थत्वं चेत्यङ्गीकारे दोषाभावेन कृतिसाध्यत्वस्य कार्यत्वरूपत्वे दोषोक्तेश्च कृतिसाध्यत्वविशेषणस्य वैयर्थ्यमित्याह **कृतीति** ।

**वा०र०— सत्त्वेने**त्यादेस्तथापि कार्यत्वापातेनेति वक्ष्यमाणेनान्वयः । तत्राप्रवृत्तये साक्षात्कृति-साध्यत्वस्येत्यनन्तरं तथात्वे वा शरीरेत्येवं पाठे यथाश्रुत एवार्थः । तर्कताण्डवस्थसाक्षात्कृतिसाध्यत्वस्य चेति वाक्यानुकरणाभिप्रायेण साक्षात्कृतिसाध्यत्वस्य चेति पाठे चशब्दस्तथात्वे वेत्यस्यानुकर्षणार्थः। तेनान्वयोपपत्तिः । अभावेनेत्यत्र तस्येति शेषः । प्रकृतषष्ठ्यन्तानुवृत्तिर्वेति बोध्यम् । अन्ये तु साक्षात्कृतीत्यतःपूर्वं स्वीकर्तव्यस्येति





शेषस्याभिमतत्वात् तदन्वयोपपत्तिरित्याहुः । **श्रमेऽप्रवृत्तय इति** । यद्यपि ननु श्रम इत्यादिना तर्कताण्डवे श्रमे प्रवृत्तिमाशङ्क्य प्रकारान्तरेण परिहृत्य पश्चान्नापि स्वविषयकेत्याद्याशङ्क्य निराकृतम् । तथापि तस्य शिष्यैरेवोह्यत्वाभिप्रायेण त्यागः । तद्दूषणपरिहारायैवास्यापि तत्र प्रवर्तितत्वादुपादानं युक्तमिति ध्येयम् । **अन्तिमपक्षेति** । स्वविषयकचिकीर्षेत्युक्तपक्षेत्यर्थः । **दोषान्तरेति** । स्वकृत्यसाध्येऽपीत्यादि प्रागुक्तदोषेत्यर्थः । **अन्तिमपक्षदोषस्येति** । निषिद्धेऽपि साम्यरूपेत्यर्थः । विशेषस्तर्कताण्डवे बोध्य इत्याशयः । नापि कृतिसाध्यतार्हत्वमित्यादि तर्कताण्डवानुसारेणाह **यद्यपि कृतीति** । **तथापीति** । प्रवृत्त्यविषयाद्विषभक्षणादितो व्यावृत्तस्य लौकिकवैदिकभोजनयागादिरूपसकलप्रवृत्तिविषयानुगतस्येष्टसाधनत्वातिरिक्तस्यार्हत्वस्याभावादित्यर्थः । इष्टसाधनत्व एव पर्यवसन्नतया ........?........मतत्वादित्याशयः । **इष्टसाधनेति** । तथा च इष्टानुत्पत्तीत्याद्युक्तं कृतिविषयताया एव तत्रासंभावितत्वेन साधारणरूपस्य तद्विषयताप्रयोजकत्वं न संभवतीत्युक्तं भवति । सर्वं चेदं तर्कताण्डवानुसारेण व्याकर्तव्यमस्ति । कृतिसाध्यतार्हत्वमित्युक्तं स्यादिति पाठः । अर्हपदाभावो लेखकप्रयुक्तः । इत्युक्तं स्यादित्यनन्तरं तच्च कृत्युद्देश्यत्वस्येति पाठः । तथा एतादृशकृतिसाध्यतार्हत्वाङ्गीकारोऽपीति पाठः । अङ्गीकारोऽपि सूचित इति न पृथगाशङ्क्य तन्निरासकतया भाष्यं योजितम् । एतादृशकृतिसाध्यतार्हत्वस्येत्यादिलक्षणस्याप्ययोगाच्चेति द्रष्टव्यमिति पाठः । कृतिसाध्यत्वपदोपेतपाठेति तदर्हत्वमेवार्थः । **सूचित** इतीत्यनन्तरं द्रष्टव्यमिति लेखकप्रयुक्तम् । तच्चेत्यत्र तथा चेति पाठोऽपि लेखकप्रयुक्तः । अयोगाच्चेत्यत्रायोग इति पाठोऽपि लेखकप्रयुक्तः । न पृथगाशङ्क्चेत्याद्यभावोऽपि लेखकप्रयुक्तः । **घटकीभूतेच्छाप्रयत्नयोरिति** । प्रयत्नोद्देश्यत्वे घटकीभूतः प्रयत्नः इष्टत्वेष्टसाधनत्वयोरिच्छाघटकेति यथायोग्यं विवेकः । अल्पाच्तरत्वात्पूर्वनिपातः । न तदनुक्तिरित्येतच्छेषपूरणादिना योज्यमस्ति । कृतिप्रधानत्वस्योक्तरीत्या इष्टसाधनत्वपर्यवसानमाश्रित्य तदाश्रयणेनैव विशेषणवैयर्थ्यमाह **इष्टसाधनतामात्रस्येति** । यद्वा इष्टसाधनतामात्रस्येत्यनन्तरं कृतिप्रधानत्वशब्दार्थस्येति शेष इति बोध्यम् । **दोषोक्तेश्चेति** । कृतिसाध्यत्वमात्रस्य कार्यत्वे स्वकृत्यसाध्येऽपि तस्य सत्त्वेनेत्यनेनातिप्रसङ्गरूपदोषोक्तिरित्यर्थः ।

**स०व्र०— प्रयत्नोद्देश्यत्वमिति** । यदिच्छया प्रयत्नः तदुद्देश्यत्वमित्यर्थः । आद्यं त्विष्टमेवेत्यादेरयं भावः । अनन्यार्थतयेच्छाविषयस्यैव मुख्यतः प्रयत्नोद्देश्यत्वात् फलस्यैव तादृशत्वात् । तद्विवक्षया इष्टत्वमेव लभ्यते । अन्यार्थतया प्रयत्नोद्देश्यत्वविवक्षायां इष्टसाधनस्येष्टार्थमिच्छाविषयीभूतस्यामुख्यतः प्रयत्नोद्देश्यत्वस्य सत्त्वात् । तद्विवक्षायां इष्टसाधनत्वमेव लभ्यत इति । **कृतिसाध्यताविशेषणस्य व्यर्थत्वादिति** । इष्टसाधनत्वमेव लिङर्थः । न तु कृतिसाध्यत्वमपीत्येवाभिप्रेतम् । तत्त्वनिर्णयादौ तु तस्य लिङर्थत्वाभावेऽपि तज्ज्ञानस्यापि कारणत्वस्यावश्यकत्वेन तदुक्तिः । न तु तस्यापि लिङर्थत्वाभिप्रायेणेति न तद्विरोध इति ध्येयम् ।

**विट्ठ०— उक्तो दोष इति** । 'कार्यं न हि क्रियाव्याप्यं निषिद्धस्य समत्वत' इत्यत्रोक्तो ब्राह्मणहननादेरपि कार्यत्वं स्यादिति दोष इत्यर्थः ।





**चषकः**— अथ प्राभाकराभिहितकार्यतालक्षणमप्रत्याख्यायौत्प्रेक्षिकतल्लक्षणानि प्रतिविदधानानां भाष्यकृतामनदीष्णुतापद्यत इत्याशङ्कां प्रतिविधित्सयाऽनुवदति **नन्विति** । **मुख्यमिति** । फलान्तरानुद्देश्यककृतिनिरूपितोद्देश्यताख्यविषयतापन्नमित्यर्थः । **अमुख्यमिति** । तदुद्देश्यकतन्निरूपिततादृशविषयतापन्नमित्यर्थः । **इष्टमेव** सुखमेव । **इष्टसाधनमेव** सुखसाधनीभूतस्रगादिकमेव ।

शालिकानाथोक्तकार्यतास्वरूपनिरासः—

**५२८ सु०— एतेनैतदपि निरस्तम् । यदुक्तं 'फलसाधनता नाम या सा नैव हि कार्यता । कार्यता कृतिसाध्यत्वं फलसाधनता पुनः । कारणत्वं फलोत्पादे ते भिद्येते परस्परमि'ति ॥ ननु सत्यपि चन्द्रमण्डलादाविष्टसाधनत्वे न कार्यताबुद्धिरिति चेत् । केयं कार्यताबुद्धिः । इष्टसाधनताबुद्धिस्तदतिरिक्ता वा । आद्ये कथं सा नास्ति । द्वितीयो न, अनिरूपणात् ।**

**ननु कार्यज्ञानं प्रवर्तकं नेष्टसाधनज्ञानमिति चेन्न असिद्धेः । अतीतादौ प्रवृत्तिप्रसङ्ग इति चेन्न तस्येदानीमिष्टसाधनत्वाभावात् । अन्यथाऽतीतकार्येऽप्ययं प्रसङ्गस्तुल्यः ।**

**परि०— एतेनेति** । कृतिसाध्यत्वस्य निषिद्धेऽपि समत्वादितिकथनेनेत्यर्थः । न कार्यताबुद्धिरिति पदच्छेदः ।

**यादु०— एतेनेति** । कृतिसाध्यत्वस्य कार्यतारूपत्वनिराकरणेनेत्यर्थः । तथा च कृतिसाध्यत्वस्योक्तरीत्या कार्यतारूपत्वा(भावेनात्र तस्य फलसाधनताभेदकथनं प्रकृतानुपयुक्तमिति भावः । यद्यपि यागादिरूपमेकमेव वस्तु कृतिसाध्यं फलसाधनं च । तथाऽपि तन्निष्ठयोः कृतिजन्यत्वफलजनकत्वात्मकयोः कृतिसाध्यत्वफलसाधनत्वयोर्धर्मयोर्भेद एवेति श्लोकार्थः । तस्मिन्सत्यप्यस्यासत्त्वाद्भेद एव तयोरित्याशयेन शङ्कते **नन्विति** । यद्यपि न कार्यतेत्येव वक्तव्यम् । तथाऽपि तदुपपादनाय बुद्धिप्रतिषेध इति ज्ञातव्यम् । प्रवर्तकज्ञानविषयत्वतदभावरूपविरुद्धधर्माधिकरणत्वात्तयोर्भेद आवश्यक इत्याशयेन शङ्कते **ननु कार्यज्ञानमिति** । **असिद्धेरिति** । इष्टसाधनज्ञानस्यापि प्रवर्तकत्वेनोक्तहेतोरसिद्धिरित्यर्थः ।

**वं०प०**— फलसाधनत्वं नाम किमित्याशङ्कायां फलोत्पादे कारणत्वमेवेत्याह **कारणत्वमिति** । **ते भिद्येते इति** । फलसाधनत्वं कार्यतारूपं कृतिसाध्यत्वं च भिन्नमेवेत्यर्थः । **एतेनेति** । कृतिसाध्यत्वरूपकार्यत्वस्य निषिद्धत्वस्य समत्वतः इत्यनेन निराकरणेनेत्यर्थः । इष्टसाधनत्वं न कार्यतेत्याशङ्कते **ननु सत्यपीति** । **ननु कार्यज्ञानमिति** । तथा च नेष्टसाधनत्वं कार्यत्वमित्यर्थः । **असिद्धेरिति** । कार्यताज्ञानस्य प्रवर्तकत्वासिद्धेरित्यर्थः । इष्टसाधनताज्ञानस्य प्रवर्तकत्वे बाधकमाशङ्कते **अतीतादाविति** । अतीतभोजनादावित्यर्थः । **इदानीमिति** । विशेषणं





तवाप्यावश्यकमित्याह **अन्यथेति** । **कार्ये** भोजने । **अयं प्रसङ्गः** प्रवृत्तिप्रसङ्गः । तथा चेदानीं कृतिसाध्यत्वं नास्तीति प्रवृत्तिप्रसङ्गः परिहर्तव्यः सोऽस्माकमपि तुल्य इत्यर्थः ।

**आनन्दः—** **एतेनेति** । कृतिसाध्यत्वस्य वैय्यर्थ्यात् । कार्यत्वाप्रवेशेनेत्यर्थः । **ते** कार्यकारणत्वे । **अनिरूपणादिति** । अनिर्वचनादित्यर्थः । तथापि कार्यताबोधस्य लोके प्रवर्तकताया दृष्टत्वात्तदेव प्रवर्तकमिति शङ्कते **नन्विति** । असिद्धेरिति कार्यताबोधप्रवर्तकताया इति शेषः । **अन्यथेति** । यदाकदाचिदिष्टसाधनत्वमादाय प्रवृत्तिप्रसङ्गापादन इत्यर्थः ।

**कं०रा०—** **एतेनेति** । फलसाधनता नाम या सा कार्यता नैव हि यस्मात्कार्यता कृतिसाध्यत्वं फलसाधनता तु फलोत्पत्तौ कारणत्वमित्येवं ते कार्यताफलसाधनते परस्परं भिद्येते तस्मादिति कार्यतायाः कृतिसाध्यतारूपत्वं यदुक्तमेतदप्येतेन निषिद्धब्राह्मणहननादिसाधारण्यरूपदोषेण निरस्तमित्यर्थः । **सत्यपीति** । तथा च नेष्टसाधनत्वं कार्यत्वमिति भावः । **अनिरूपणादिति** । इष्टसाधनताबुद्ध्यतिरिक्तायाः कार्यताबुद्धेरनिरूपणादिति भावः । यद्वा । इष्टसाधनत्वातिरिक्तायाः कार्यताया अनिरूपणादित्यर्थः । **नन्विति** । तथा च कार्यताज्ञानेष्टसाधनताज्ञानयोः प्रवर्तकत्वाप्रवर्तकत्वे तज्ज्ञानविषययोः कार्यत्वेष्टसाधनत्वयोर्भेदं विना नोपपद्येते इति तद्भेदावश्यंभावादिष्ट-साधनत्वं कार्यत्वमित्येतन्न संभवतीति भावः । **असिद्धेरिति** । इष्टसाधनताज्ञानं प्रवर्तकं नेत्यस्यासिद्धेरित्यर्थः । इष्टसाधनताज्ञानस्य प्रवर्तकत्वेऽतिप्रसङ्गं शङ्कते **अतीतादाविति** । इष्टसाधन इति शेषः । **इदानीमिति** । तथा च प्रवर्तकस्येदानीमिष्टसाधनमिति ज्ञानस्यातीतादावभावान्न प्रवृत्तिप्रसङ्ग इति भावः ।

**श्रीनिधि०—** **एतेनेति** । फलसाधनत्वकृतिसाध्यत्वयोर्भेदेऽपि प्रवृत्तिहेतुभूतकार्यता फलसाधनतैव । न तु कृतिसाध्यतेत्युक्तत्वेनेत्यर्थः । **ननु कार्यज्ञानं प्रवर्तकमिति** । तथा च कार्यत्वमिष्टसाधनत्वातिरिक्तमिति भावः । **असिद्धेरिति** । इष्टसाधनतातिरिक्तकार्यताया असिद्धेः इत्यर्थः ।

**वा०चं०—** कार्यताफलसाधनतयोरेकार्थनिष्ठत्वेऽपि कार्यतायाः कृतिसाध्यतारूपत्वात्फलसाधनतायाश्च फलोत्पादकारणतारूपत्वात्तयोर्भेद एवेति शालिकानाथोक्तमपि कार्यतायाः कृतिसाध्यत्वरूपत्वाभावस्येष्टसाधनता-रूपत्वस्य च व्युत्पादनेन निरस्तमित्याह **एतेनेति** । ननु चन्द्रमण्डलादौ सत्यपीष्टसाधनत्वे कार्यताबुद्धे-रभावेनेष्टसाधनतामात्रस्य कार्यतारूपत्वाभावे सिद्धे चन्द्रमण्डलादिरूपेष्टसाधनव्यावृत्त्यर्थत्वेनैव कृतिसाध्यता-विशेषणस्य सार्थक्यमित्याशयेन शङ्कते **नन्विति** । तत्र कार्यताबुद्ध्यभावोऽसिद्ध इत्याह **केयमिति** । ननु प्रवर्तकज्ञानविषयस्यैव कार्यत्वात्कृतिसाध्येष्टसाधनताज्ञानस्यैव प्रवर्तकत्वेनेष्टसाधनताज्ञानमात्रस्यातिप्रसञ्जकतया अप्रवर्तकत्वात्कथं विशेषणवैयर्थ्यमित्याशयेन गूढाभिसन्धिः शङ्कते **नन्विति** । अतिप्रसङ्गस्य कृतिसाध्यत्वा-विशेषणेऽपि सुपरिहरत्वादिष्टसाधनत्वज्ञानमात्रस्याप्रवर्तकत्वासिद्धेरिति गूढाभिसन्धिरेव परिहरति **असिद्धेरिति** ।





उभौ स्वाभिसन्धिमुद्घाटयतः **अतीतादावित्यादिना** । ननु चन्द्रमण्डलादौ कार्यताबुद्धिप्रसङ्गमतिरिक्तकार्यताया अनिरूपेणेष्टसाधनताबुद्धेश्चेष्टतयेष्टापादनतया निरस्यातीतादौ प्रवृत्तिप्रसङ्गं चेदानीमिति विशेषणेन निरस्य कृतिसाध्यत्वरूपविशेषणस्य वैयर्थ्यव्युत्पादने कृतिसाध्यत्वविशिष्टेष्टसाधनताया कार्यतारूपत्वोक्त्या तदतिप्रसङ्गद्वयपरिहारकतत्त्वनिर्णयकर्मनिर्णयटीकाभ्यां विरोध इति चेन्न । कृतिसाध्येष्टसाधनतायाः कार्यपदार्थत्वप्रवर्तकत्वाभ्युपगमेऽपि न क्षतिः । इष्टसाधनतातिरिक्तकृत्युद्देश्यतारूपायाः कालत्रयानवमृष्टविधिरूपाया वा पराभिमतकार्यतायाः कार्यपदार्थत्वप्रवर्तकत्वयोरनभ्युपगमादित्यभ्युपगमवादेन निर्णयटीकयोः प्रवृत्तत्वात् । इह तु कार्यता च न काचित्स्यादित्यनुव्याख्यानानुसारेण कृतिसाध्यत्वविशेषणवैयर्थ्यं प्रतिज्ञाय तदुपपादनाय वस्तुस्थितिमनुरुद्ध्य प्रकारान्तरेणातिप्रसङ्गयोः परिहृतत्वात् । कर्मनिर्णयटीकायां कृतिसाध्यत्वैकार्थसमवायमात्रमिष्टसाधनतायास्तज्ज्ञानमात्रस्यैव प्रवर्तकत्वमित्येवंपरत्वसंभवाच्च । नचैवमिदानीमिति विशेषणेन भूताद्यतिप्रसङ्गनिरासेऽपि चन्द्रमण्डलादाविदानीमिष्टसाधनत्वसद्भावात्प्रवृत्तिप्रसङ्गो दुर्वार इति वाच्यम् । कृत्यसाध्यताज्ञानाभावदशायामिष्टापत्तेः । तज्ज्ञानदशायां तु तस्यैव प्रतिबन्धकत्वात् । न चैवं कृतिसाध्यताज्ञानस्यावश्यकत्वमिति वाच्यम् । कृत्यसाध्यताज्ञानाभावे कृतिसाध्यत्वज्ञानाभावेऽपीष्टसाधनताज्ञानमात्रेण प्रवृत्त्या व्यभिचारेण तस्यानावश्यकत्वात् । न च साक्षादविरोधिनो ज्ञानस्य जनकीभूतज्ञानविघटकत्वेनैव प्रतिबन्धकतया कृत्यसाध्यत्वज्ञानस्य प्रतिबन्धकत्वे कृतिसाध्यत्वज्ञानस्य हेतुत्वमनिवार्यमिति वाच्यम् । फलेच्छाया अभावे फलं दैवादन्यकृतितो वा भवत्वितीच्छायां वा कृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञाने सत्यपि कृत्या फलं साध्ययिष्यामीति कृतिसाध्यत्वप्रकारकफलेच्छाया अभावेन प्रवृत्त्यभावेन तादृशेच्छाया आवश्यकत्वात्प्रवृत्तिजनकीभूतफलेच्छाविघटकत्वेन वाऽत्यन्तान्योन्याभावगर्भव्याप्तिज्ञानेऽन्योन्यात्यन्ताभावगर्भव्यभिचारज्ञानस्येव वा मणिमन्त्रादिवत्स्वरूपेण वा प्रतिबन्धकत्वोपपत्त्या जनकीभूतज्ञानविघटकत्वनियमाभावेन कृतिसाध्यत्वज्ञानहेतुतानापत्तेः । अन्यथा बलवदनिष्टानुबन्धित्वज्ञानस्य प्रतिबन्धकतया तादृशानिष्टाननुबन्धित्वज्ञानस्यापि प्रवृत्तिहेतुता स्यात् । न चेष्टापत्तिः । तादृशज्ञानाभावेऽपि बलवदनिष्टानुबन्धित्वज्ञानाभावमात्रेणेष्टसाधनताज्ञानादेव प्रवृत्तेरनुभवसिद्धत्वात् । बलवदनिष्टानुबन्धित्वज्ञानस्य चोक्तावश्यकफलेच्छाविघटकत्वेन प्रतिबन्धकत्वम् । तादृशफलेच्छाभावेनैव च विषसम्पृक्तभोजनादावप्रवृत्तिश्च । एवञ्च कृतिसाध्यताज्ञानस्याहेतुत्वाद्युक्तमुक्तं कृतिसाध्यत्वविशेषणस्य वैयर्थ्यादिति दिक् । **अन्यथेति** । कार्यताज्ञानस्य प्रवर्तकत्वं वदताऽप्यतीतकार्ये प्रवृत्तिप्रसङ्गस्येदानीमिति विशेषणविवक्षां विना प्रकारान्तरेण परिहर्तुमशक्यत्वादिति भावः ।

**वा०र०**— ननु सत्यपीति पूर्वग्रन्थेन भिन्नार्थतया ननु कार्यज्ञानमिति ग्रन्थं योजयति **ननु प्रवर्तकेति** । चन्द्रमण्डलादावतिप्रसङ्गस्य निराकरणादतीतादावतिप्रसङ्गं वक्ष्यमाणमभिप्रेत्योक्तं **गूढाभिसन्धिरिति** । न चैवं सुधायाः कृतिसाध्यकार्येत्यादि तर्कताण्डवानुसारेण विरोधमाशङ्क्य तदुक्तप्रकारेण परिहारे सत्येव प्रकारान्तरेण स्वयं तद्ग्रन्थानां विरोधं परिहरति **ननु चन्द्रमण्डलादावित्यादिना दिगित्यन्तेन** । कालत्रयानवमृष्टेत्येतत्किञ्च कालत्रयानवमर्शो विधेरित्युत्तरमूले स्पष्टम् । **स्वरूपेणेति** । सिद्धेरनुमितिं प्रतीवेत्यपि ज्ञेयम् । आदिपदेन सिद्धिपरिग्रह





इति वा । न चैवं जनकीभूतं ज्ञानं विघटयत एवेत्यादितर्कताण्डवमनुसृत्य समानन्यायत्वाशयेनाशङ्कते **न च साक्षादिति**। दृश्यते हि फलं दैवादीत्याद्युक्तग्रन्थानुसारेण परिहरति **फलेच्छाया इति**। **कृत्या फलमित्यादि**। साधने कृत्यसाध्यत्वेन ज्ञाते फले कृतसाध्यत्वं न ज्ञातुं शक्यम्। न च फलस्य कृतिसाध्यत्वाज्ञाने फले तत्प्रकारिका इच्छा युक्तेति भावः । एवं जनकीभूतज्ञानविघटकत्वेन प्रतिबन्धकत्वाभावेऽपि प्रवृत्तिजनकीभूतफलेच्छाविघटकत्वेन कृत्यसाध्यत्वाज्ञानस्य प्रतिबन्धकत्वोपपत्तेर्न कृतिसाध्यत्वज्ञानस्य हेतुत्वप्राप्तिरिति समाधिमुक्त्वा जनकीभूत-ज्ञानविघटकत्वाभावेऽपि स्वरूपेणैव प्रतिबन्धताया अप्यन्यत्र दृष्टत्वात् प्रकृतेऽपि कृत्यसाध्यताज्ञानस्य स्वरूपेणैव प्रतिबन्धकत्वपक्षेन कृतिसाध्यताज्ञानस्योक्तरीत्या हेतुत्वप्राप्तिरित्याह **अत्यन्तान्योन्येति** । व्यभिचारज्ञानस्येव इत्यत्र मणिमन्त्रादिवदिति संबध्यते । तथाच मणिमन्त्रादिवदुक्तव्यभिचारज्ञानस्य स्वरूपेणैव प्रतिबन्धकत्वमिव कृत्यसाध्यताज्ञानस्यापि स्वरूपेणैव प्रतिबन्धकत्वोपपत्त्येति योजना । मणिमन्त्रादिवदित्यादिपदेन अनुमिति-प्रतिबन्धकीभूतसिद्धिग्रहणम् । इति प्रकारान्तरेणेति पाठः । तत्त्वप्रदीपिकाटीकानुसारेण किन्त्वित्यादिकारिकां फलसाधनता नामेत्येतत्कारिकासङ्गतत्वेन योजयति फलसाधनतेत्यादिना शालिकानाथ इति । एतत्कारिकायाः शालिकानाथवाक्यत्वेन उक्तटीकायामुक्तत्वादिति भावः । वाक्यार्थमातृकाग्रन्थ इति पूरणीयम् । वाक्यार्थ-मातृकागतं तद्वचनमिति तत्त्वप्रदीपिकाटीकोक्तेः । अधिकं तत्त्वप्रदीपिकान्यायमकरन्दसमन्वयाधिकरणीयशाङ्कर-भाष्यभामतीषु तट्टीकासु चोक्तप्रकारेण ज्ञेयम् । कृत्यसाध्यताज्ञानं प्रतिबन्धकमित्यत्र कृत्यसाध्येत्यस्य कृति-साध्यं न भवतीति वा कृतिसाध्यभिन्नमिति वा कृतिसाध्यत्वानधिकरणमिति वेत्यादिरूपेणार्थाङ्गीकारे अनेकेषां प्रतिबन्धकत्वकल्पनापत्त्या लाघवेन कृतिसाध्यत्वज्ञानमेव कारणमित्येतत्तु चतुर्थस्य द्वितीये वर्तमानाप्यचिरमनु-भूयत इत्येतन्मूलविचारावसरे निराकरिष्यामः ।

**स०व्र०— एतेनेति**। कार्यं न हि क्रियाव्याप्यमित्यादिना कृतिसाध्यत्वस्य कार्यत्वनिराकरणेनेत्यर्थः । तथा च यत्कार्यतारूपं कृत्युद्देश्यत्वं न तत्फलसाधनत्वात् भिन्नं यत्तु भिन्नं कृतिसाध्यत्वं न तत्कार्यत्वमिति तस्य फलसाधनत्वतो भेदकथनं व्यधिकरणमिति भावः। यद्यपि यागादिरूपमेकमेव वस्तु कृतिसाध्यं फलसाधनं च। तथापि तन्निष्ठयोः कृतिजन्यत्वफलजनकत्वात्मकयोः कृतिसाध्यत्वफलसाधनत्वयोर्धर्मयोर्भेद एवेति श्लोकार्थः। **नन्विति**। ततश्च नेष्टसाधनत्वं कार्यत्वमिति तयोर्भेद इत्यर्थः । नन्वतीतादौ प्रवृत्तिप्रसङ्गेनेष्टसाधनताज्ञानस्याप्रवर्तव त्वात् कार्यताज्ञानस्य च प्रवर्तकत्वात् इष्टसाधनतातिरिक्तं कार्यत्वमवश्यमङ्गीकार्यमित्यभिप्रायेण गूढाभिसन्धिः शङ्कते **ननु कार्यताज्ञानमिति** । कृतिसाध्यतादिरूपकार्यताज्ञानस्यापि प्रवर्तकत्वे अतीतादौ प्रवृत्तिप्रसङ्गेन तत्परिहारा-येदानीं कृतिसाध्यताज्ञानस्यैव तथात्वस्य परेणाङ्गीकार्यत्वात्तन्न्यायेनेदानीमिष्टसाधनताज्ञानस्यातीतादावभावेन प्रवृत्त्यभावोपपत्त्या तस्यापि प्रवर्तकत्वान्नेष्टसाधनत्वकार्यत्वयोर्भेद इत्यभिसन्धाय गूढाभिसन्धिरेव परिहरति **असिद्धेरिति** । इष्टसाधनताज्ञानस्याप्रवर्तकत्वासिद्धेरित्यर्थः । पूर्वपक्षी स्वाशयमुद्घाटयति **अतीतादाविति** । सिद्धान्त्यपि स्वाशयमुद्घाटयति **तस्येति** । **अन्यथेति** । नन्वतीतस्येदानीं कृतिसाध्यत्वाभावेन तद्विवक्षयातीते प्रवृत्तिप्रसङ्गनिराकरणेन कृतिसाध्यताज्ञानस्य संभवेऽपि इदानीमिष्टसाधनताज्ञानस्य चन्द्रमण्डलादावपि सत्त्वेन तत्र





प्रवृत्तिप्रसङ्गेन इष्टसाधनताज्ञानस्य प्रवर्तकत्वमनुपपन्नमिति चेन्न । कृत्यसाध्यताज्ञानस्य प्रतिबन्धकत्वेन तदभावे इदानीमिष्टसाधनताज्ञानस्य प्रवर्तकत्वोपपत्तेः ।

**विठ्ठ०— एतेनेति** । कृतिसाध्यत्वस्य निषिद्धेऽपि समत्वकथनेनेत्यर्थः । **फलसाधनता नामेति** । इष्टसाधनता नामेत्यर्थः । फलसाधनता यदि न कार्यता तर्हि फलसाधनतास्वरूपं किमित्यत उक्तं **फलसाधनता पुनरिति** । सा कारणतैव ननु कार्यतेति भावः । यद्यपि यागादिरूपमेकमेव वस्तु कृतिसाध्यं फलसाधनं च तथापि तन्निष्ठयोर्धर्मयोर्भेद एवेति श्लोकाभिप्रायः । यदुक्तमिष्टसाधनत्वं कार्यत्वमिति तत्र कृतिसाध्यताविशेषणस्य सार्थक्यमाशङ्कते **नन्विति** । न कार्या बुद्धिरिति पदच्छेदः प्रवर्तकज्ञानविषयतैव कार्यतेति निरूपयामीत्याशयेन शङ्कते **नन्विति** । **असिद्धेरिति** । इष्टसाधनताज्ञानातिरिक्तकार्यताज्ञानस्यैवासिद्धेरित्यर्थः । इष्टसाधनताज्ञानस्याप्रवर्तकत्वासिद्धेरिति वा ।

**चषकः**— कार्यताफलसाधनतयोः सामानाधिकरण्येऽपि कार्यतायाः कृतिसाध्यतारूपत्वात्फलसाधनतायाश्च तदुत्पादकारणतारूपत्वान्न तयोरन्योन्यतादात्म्यमिति प्राभाकरैकदेशयुक्तमपि कृतिसाध्यत्वस्य कार्यतारूपत्वनिराकरणेनैव प्रतिविहितमित्याह **एतेनेति** । उक्तदिशा कृतिसाध्यतायाः कार्यतानात्मकतया तत्र फलसाधनताभेदप्रतिपादनं मन्दप्रयोजनमिति भावः । परस्परसमानाधिकरणयोस्तयोरन्योन्यं भेद एवेति कारिकार्थोऽवसेयः । **कार्यता** नेष्टसाधनतारूपा । तत्समानाधिकरणाभावप्रतियोगित्वादित्याशङ्कते **नन्विति** । कार्यताराहित्यस्य सप्रमाणतां ध्वनयितुं बुद्धिपर्यन्तानुधावनम् । कार्यतेष्टसाधनते अन्योन्यप्रतियोगिकभेदवत्यौ प्रवृत्तिहेतुभूतज्ञानविषयत्वतदविषयत्वरूपविरुद्धधर्माधिकरणत्वाद्दहनतुहिनवदित्याशङ्कते **नन्विति** । **असिद्धेरिति** । इष्टसाधनताज्ञानस्यापि प्रवृत्त्यौपयिकत्वादिति भावः ।

**प्रदीपः**— न च तत्कार्यमकार्यं च भवतीति नियुज्यते इत्यर्थसाधनस्यैव कार्यत्वात् फलसाधनत्वकार्यतयोर्भेदवर्णनं अयुक्तमित्याह **एतेनेति** । यद्यप्येकवस्तुनिवेशिता द्वयोस्तथापि स्वरूपभेदोऽस्त्येव । तदेव हि वस्तुफलं प्रत्युपायाभावात्फलसाधनमुच्यते कृत्यधीनात्मलाभतया कार्यमिति श्लोकार्थः ।

**५२९ सु०— किञ्च कृतिसाध्यत्वं कृत्युद्देश्यत्वमिष्टसाधनत्वं चेत्येकार्थसमवायिनस्त्रयो धर्माः । तत्र कृतिसाध्यतावच्छिन्नं कृत्युद्देश्यत्वं कार्यत्वम्; तदवगमस्त्विष्टसाधनतावगमनिबन्धन इति परस्य मतम् । यथाऽऽह 'किन्तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत् । फलसाधनता तत्र कारणं तेन कार्यते'ति । तथा चेष्टसाधनताज्ञानात्प्रवृत्ताविव कार्यताऽवगमेऽपि कथं नातीतादावतिप्रसङ्गः ।**





**बिन्दुः**— .........याः नित्येव शुचितत्कालजीवित्वरूपस्य चाधिकारिविशेषणस्य प्रतिसन्धीयमानस्य संभवादिति। तथाच पराभिप्रेतनिःप्रकृष्टमतमवमत्य शाखा चंक्रमणे ......मानि तपः-...क्षनिरामासमात्रेण कृतकृत्यतां मन्यमानानामनुक्तोपालम्भस्थलप्रसङ्गश्चापद्यत इति चेत्। भ्रान्तोऽसि। एतेनेत्याद्यग्रिमग्रन्थे **यथाऽऽह किन्तु स्वयं क्लेशरूपं कर्मे**त्यादिग्रन्थे च एतस्योट्टङ्कितत्वात्। अतिफल्गुत्वात्तद्दूषणं शिष्यैरेव सुनिरूपमिति सूचितत्वाच्च। तथाहि एतावदनुगमफलकं स्वरूपं स्वविशेषणवत्तेत्यादि तत्तु स्वस्य विशेषणत्वस्यैकत्वाभावात् अयुक्तं किन्तु स्वर्गकामस्य मम यागविषयं कार्यमिति विशिष्य लिङ्वाच्यकार्यता सर्वं प्रवर्तकं वाच्यम्। एवं च कामी कामानुपायं कार्यतया नावगच्छति उपायश्च स एव यः साक्षादव्यवधानेन फलमुत्पादयति यागादिस्तु धात्वर्थः क्षणिकत्वात्कार्यान्वयायोग्य इति स्थायिकार्यमादायैवान्विताभिधानपर्यवसानमिति वदता परेण साक्षात्फलसाधनत्वं कार्यत्वाभिमते प्रतिसन्धायैवान्विताभिधानमङ्गीकृतमित्यावश्यककार्यताबोधार्थमवश्यप्रतिसन्धेय-साक्षात्साधनताशरीरं प्रविष्टसाधनताज्ञानमेव तथाविधं प्रवर्तकमस्तु। तद्धेतोरेवेति न्यायात्। कृतं प्रथमोपस्थितमर्थं परित्यज्य तत्प्रतिसन्धानजन्याप्रामाणिकज्ञानस्वीकाररूपबकबन्धप्रयासानुसरणेनेति दिक्। नित्ये तु पण्डापूर्वसद्भावे प्रमाणाभावेन लिङस्त्विष्टसाधनत्वबोधनेनैव पर्यवसितत्वान्न द्वैरूप्यं युक्तम्। सर्वत्र फलसाधनताया एव ज्ञानं प्रवर्तकमित्युक्तत्वाभावे सुस्थम्।

**परि०**— परमुखेनैवातीतादावप्रसङ्गादि वाचयति **किञ्चेत्यादिना। परस्येति**। प्राभाकरस्येत्यर्थः।

**यादु०**— ते भिद्येते परस्परमिति पूर्वश्लोके कृतिसाध्यत्वस्यैव कार्यतारूपत्वोक्तौ कथं तर्हि यागादेः क्लेशरूपस्य कृतिसाध्यत्वं ज्ञातव्यमित्यभिप्रेत्य शङ्कते **किं त्विति**। उत्तरमाह **फलसाधनतेति। तत्र** कृतिसाध्यताज्ञाने। एतदेव विवृणोति **तेन कार्यतेति**। ज्ञातव्येति शेषः। यद्वा यतः फलसाधनता तत्र कारणं प्रयोजकमतस्तेन प्रयोज्यभूता कार्यतानुमेयेत्यर्थः।

**वं०प०**— **तेन कार्यतेति**। इष्टसाधनत्वेनोक्तरूपा कार्यतानुमेयेति शेषः। **प्रवृत्ताविवेति**। इष्टसाधनताज्ञानस्य प्रवर्तकत्वाङ्गीकारे यथाऽतीतादौ प्रवृत्तिप्रसङ्गरूपोऽतिप्रसङ्गः समायाति एवं तेन कार्यतानुमेयेति पक्षेऽप्यतीतभोजनादावपीष्टसाधनतासद्भावेन कार्यतानुमानापत्तिरित्यर्थः।

**आनन्दः**— किञ्चायं प्रसङ्गः कार्यताबोधस्य प्रवर्तकत्वेऽपि तुल्य इत्याह **किञ्चेति। यथाहेति**। कर्मणां क्लेशरूपत्वोन्मूलसाधनताभावे कार्यतानुपपत्तेः कार्यत्वनिष्पादार्थं फलसाधनताज्ञापकत्वे न श्रूयेते न च ज्ञाप्यज्ञापकयोर्भेद इत्यर्थः।





**कं०रा०— एकार्थेति** । एकार्थनिष्ठा इत्यर्थः ।

**श्रीनिधि०— एकार्थसमवायिनः** । एकस्मिन् अर्थे विद्यमानाः । स्वयं क्लेशरूपं कर्म कार्यतां व्रजेदिति यत् तत्र फलसाधनता कारणम् । तेन कार्यतेत्युपसंहारः । कार्यतावगमेऽपीत्यत्रापि इष्टसाधनताज्ञानादित्यनुवर्तते । **नातीतादावतिप्रसङ्ग इति** । अतीतादावपि कार्यतावगमः स्यादित्यर्थः । **तत्र** अतीतादौ । गमकं न कार्यताया इति शेषः ।

**वा०चं०—** एवमिष्टसाधनताज्ञानस्य प्रवर्तकत्वेऽतिप्रसङ्गस्य कार्यज्ञानस्य प्रवर्तकत्वेऽप्यतिप्रसङ्गस्तुल्य इति प्रतिबन्द्येदानीमिति विशेषणस्यावश्यकतोपपादनेन परिहार उक्तः । अधुनेष्टसाधनताज्ञानस्य कार्यताज्ञान-प्रयोजकत्वं वदता त्वयाऽप्यतीतादौ कार्यताज्ञानप्रसङ्गपरिहारायेदानीमितीष्टसाधनताज्ञानस्यावश्यविवक्षणीयतया तुल्यन्यायतया तज्ज्ञानस्य प्रवर्तकत्वेऽप्यतिप्रसङ्गपरिहारः सुशक इति प्रकारान्तरेण प्रतिबन्द्या तदावश्यकतामाह **किं चेति** । **यथाऽऽहेति** । फलसाधनता नामेत्यादिना फलसाधनताकार्यतयोर्भेद उक्तः । तत्र फलसाधनता-कार्यतयोर्भेदे फलसाधनेष्वेव कथं कार्यतामतिनियम इत्याशयेन शङ्कते **किन्त्विति** । तयोर्भेदेऽपि फलसाधनेष्वेव कार्यतामतिनियम उपपद्यते यतो यत्कर्म कार्यतां व्रजेत्तत्स्वयं क्लेशरूपमेव । न हि दुःखाकरस्य कार्यतोपपद्यतेऽतः फलसाधनताकार्यतायां ज्ञप्तिकारणमित्याश्रीयतेऽतो नियमोपपत्तिः । तदेव विवृणोति **तेनेति** । अथवा फलसाधनता कथं तत्र कारणं प्रवृत्तिकारणत्वेन केषाञ्चित्तदभ्युपगमादित्यतस्तेनेति । तेन कार्यताऽस्य भवति न प्रवृत्तिरिति शालिकानाथ इष्टसाधनताज्ञानस्य कार्यताज्ञानहेतुतामाहेत्यर्थः ।

**स०व्र०—** यत्रेष्टसाधनत्वेन प्रवृत्तिप्रसङ्गः आपादितो भवता । तत्रेष्टसाधनं भवन्मतेन कार्यत्वाविना-भूतमिति प्रवृत्तिप्रसङ्गः तदवस्थ इत्याशयेनाह **किं चेति** । **यथाहेति** । कर्मणां क्लेशरूपत्वात् । फलसाधनत्वाभावे कार्यतानुपपत्तेः । कार्यत्वनिष्पादनार्थं फलसाधनताज्ञापकत्वेनाश्रीयते । न च ज्ञाप्यज्ञापकयोरभेद इत्यर्थः । **तेन कार्यतेति** । अनुमेयेति शेषः । **तथा चेति** । इष्टसाधनत्वज्ञाप्यं कार्यत्वं इष्टसाधनेऽतीतादौ स्यादेवेति भावः ।

**विठ्ठ०—** इष्टसाधनताज्ञानस्याप्रवर्तकत्वेनातीतादौ प्रवृत्तिप्रसङ्गस्तस्येदानीमिष्टसाधनत्वाभावादित्युक्तं तत्परमुखेनैव वाचयितुं प्रतिबन्दी विवादयति **किञ्चेत्यादिना** । **एकार्थेति** । यागाद्यपूर्वरूपे एकार्थे समवायिन इत्यर्थः । किन्त्वित्यस्य तत्पूर्वग्रन्थेन सङ्गतिः । बहुतरदेहायासादिसाध्या तया क्लेशरूपं यागादिकं कर्म कार्यतां व्रजेदिति यत्तत्रेष्टसाधनताकारणम् । निष्कर्षमाह **तेनेति** । तेन फलसाधनतारूपकारणेन कार्यतामनुमायेति शेषः । अस्त्विष्टसाधनताज्ञानजन्यं कृत्युद्देश्यत्वं कार्यमिति परस्य मतं ततः किं तस्य दूषणमित्यत आह **तथा चेति** । इष्टसाधनतावगममात्रस्य प्रवर्तकत्वे यथातीतादावतिप्रसङ्गः तथेष्टसाधनतावगमनिबन्धनकार्यतावगमस्य प्रवर्तकत्वेऽप्यतीतादौ प्रवृत्तिप्रसङ्गः स्यादेव प्रवृत्तिहेतोरिष्टसाधनावगमनिबन्धनकृतिसाध्यतावच्छिन्नकृत्युद्देश्यत्वस्य अतीतादौ भावेन तत्कार्यस्यावश्यकत्वादिति भावः ।





**चषकः**— इदानींतनकृतिसाध्यताज्ञानस्य यथा त्वया प्रवर्तकतावश्योपेयाः, तद्वदिदानींतनेष्टसाधनताज्ञानस्य या सा ममापि सुवचेति समाधाय संप्रति ज्ञाप्यज्ञापकभावमुपगच्छतेदानीमिति यथा विशेषणं पूर्यते तद्वन्मयापि तत्पूरणं सुकरमित्याशयेनाह **किञ्चेत्यादि**।

**प्रदीपः**— मा भूद्वातीतकार्येति प्रसङ्गो यत्रेष्टसाधनत्वेन प्रवृत्तिप्रसङ्ग आपादितो भवता तत्रेष्टसाधनत्वं भवन्मतेन कार्यत्वाविनाभूतमिति प्रवृत्तिप्रसङ्गस्तदवस्थ एवेत्याशयेनाह **किञ्चेति** । **यथाहेति** । कर्मणां क्लेशरूपत्वात्फलसाधनत्वाभावे कार्यत्वानुपपत्तेः कार्यत्वसिद्ध्यर्थं फलसाधनताज्ञापकत्वेनाश्रीयेत न चाप्यज्ञापकयोरभेद इत्यर्थः । **तथा चेति** । इष्टसाधनं ज्ञाप्यं कार्यत्वमिष्टसाधनेऽतीतादौ स्यादेवेति भावः ।

**५३० सु०— न तत्रेष्टसाधनतामात्रं गमकं किन्तु कृतिसाध्यतावच्छिन्नम्; गम्यं तु कृत्युद्देश्यत्वमात्रमिति चेत् । तथाऽपि भूताद्यतिप्रसङ्गानिवारणात् । न हि भूतादिकं न कृतिसाध्यम् । तथा सति कथं तत्ततो जातम् । तथाऽपि नेदानीं कृतिसाध्यमिति चेत् । इष्टसाधनत्वमपि तथेति व्यर्थं विशेषणम् ॥ गम्यगमकयोः कथं न भेद इति चेन्न । तद्भावस्यैवानभ्युपगमात् ॥ ननु तथा सति लोकविरोधः स्यात् । तथा हि । लौकिका 'हीदं मे कार्यमि'त्युक्त्वा 'कुत' इति पृष्टा 'इष्टसाधनत्वादि'ति हेतुमाचक्षत इति चेन्न । द्विविधं खलु कार्यमिष्टमिष्टसाधनं च । तत्रेष्टसाधनत्वादिति विवक्षितकार्यव्याख्यानं लौकिकानाम् ।**

**परि०— व्यर्थं विशेषणमिति** । कृतिसाध्यत्वावच्छिन्नत्वविशेषणमित्यर्थः । विवृतमेतत्सर्वं निपुणतरं कार्यताज्ञानस्य प्रवर्तकत्वभङ्गे तर्कताण्डवे द्वितीयपरिच्छेदे ।

**गु०दी०— इदं मे कार्यमित्युक्त्वा** इत्यत्र लौकिकैः कार्यपदेन प्रवृत्तिरूपक्रियाविषयो ग्रामादिरेवोच्यते न तु तदतिरिक्ता कार्यता । प्रवृत्तौ च इष्टसाधनताज्ञानं ममापि कारणम् । अतः परस्यैवेदमननुकूलं न ममेति च दूषणमवगन्तव्यम् ।

**यादु०**— मतान्तरमाशङ्कते **न तत्रेष्टसाधनतामात्रेति** । **व्यर्थमिति** । आवश्यकेनेदानीमिति विशेषणेनैव भूतादावतिप्रसङ्गभङ्गे सति तन्निवृत्त्यर्थं कृतिसाध्यताविशेषणं व्यर्थमित्यर्थः। न तु प्रवर्तकज्ञानेऽपीदं विशेषणं व्यर्थमित्यर्थः । इदानीमिष्टसाधने चन्द्रमण्डलादावतिप्रसङ्गभङ्गाय कृतिसाध्यत्वविशेषणस्यापि प्रवृत्त्यर्थमावश्यकताया अन्यत्रोक्तत्वात् । अत एवास्य वाक्यस्य कृतिसाध्यतैकार्थसमवेतेष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्तेरिति कर्मनिर्णयटीकया कृतिसाध्येष्टसाधनतायाः कार्यतापरपर्यायत्वादिति विष्णुतत्त्वनिर्णयटीकया च न विरोधः । अत्रापि प्रवर्तकज्ञाने कृतिसाध्यत्वविशेषणस्य चन्द्रमण्डलादावनतिप्रसङ्गायावश्यकत्वस्याभिप्रेतत्वात् ।





वैयर्थ्योक्तेश्च भूताद्यतिप्रसङ्गवारणमात्राभिप्रायकत्वात् । अन्ये तु निर्णयटीकयोः प्रवर्तकज्ञाने कृतिसाध्यत्व-विशेषणमावश्यकमित्यभिप्रायः । सुधायास्तु कृतिसाध्यत्वस्य लिङाद्यर्थतायामेव वैयर्थ्यं न प्रवर्तकज्ञाने-ऽपीत्यभिप्रायः । अत एव लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति कर्मनिर्णये भगवत्पादीयवचनमित्याहुः । यद्वा इष्टसाधनताज्ञानमेव प्रवर्तकं न कृतिसाध्यत्वमपि प्रवर्तकज्ञाने विवक्षितं व्यर्थत्वात् । न चैवं तक्षकचूडामण्याहरणादौ प्रवृत्तिप्रसङ्गः । तत्कृतिसाध्यताज्ञानदशायां प्रवृत्त्यापादने इष्टापत्तेः । तदसाध्यत्वज्ञानदशायां त्वावश्यक्याः कृत्या फलं साधयिष्यामीति कृतिसाध्यत्वप्रकारिकायाः फलेच्छाया अभावादेवाप्रवृत्तेः । न हि साधने कृत्यसाध्यत्वेन ज्ञाते फले कृतिसाध्यत्वं ज्ञातुं शक्यम् । न च फलस्य कृतिसाध्यत्वाज्ञाने फले तत्प्रकारिकेच्छा युक्ता । न च कृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञानस्य प्रवर्तकत्वाङ्गीकारेणैव सामञ्जस्ये नोक्तफलेच्छाया आवश्यकत्वमिति वाच्यम् । उक्तविशिष्टज्ञाने सत्यप्युक्तफलेच्छारहितस्य चेतनस्याप्रवृत्तेः । दृश्यते हि फलं दैवादन्यकृतितो वा मम सिध्यत्वितीच्छायामुक्तविशिष्टज्ञाने सत्यप्युक्तफलेच्छाभावेन प्रवृत्त्यभावः । एवं च यागादेः कृतिसाध्यताज्ञानं फलं कृत्या साधयिष्यामीति कृतिसाध्यत्वप्रकारिका या आवश्यकी फलेच्छा तदुत्पादनोपक्षीणं न तु प्रवर्तकम् । तथा च कृतिसाध्यत्वज्ञानस्य साक्षात्प्रवृत्त्युपयोगनिषेधकोऽयं ग्रन्थः । निर्णयटीके तु परम्परया तदुपयोगपरे इति न विरोधः । नन्वेवमपि क्रियायाः कृतिसाध्यत्वज्ञानं प्रवृत्त्यर्थमावश्यकम् । अन्यथोक्तफलेच्छाया एवासंभवादिति चेत् । सत्यम् । न तु द्विविधप्रत्ययजन्यम् । क्रियायाः कृतिसाध्यत्वस्य कृत्यन्वयव्यतिरेकगम्यत्वेन तत्र लिङादिशक्तेरकल्पनात् । न हि यजेतेत्यादिशब्दः स्वर्गादिकामस्य यागादिः कृतिसाध्य इत्याह । किं त्विष्टसाधनमित्येव । तत्र शक्तः प्रवर्ततेऽशक्तस्तु नेत्येवानुभवसिद्धम् । किञ्च कृतिसाध्यत्वे सतीष्टसाधनत्वं न लिङाद्यर्थः । साध्यत्वसाधनत्वयोः प्रतियोगिभेदेन कालभेदेन चाविरोधेऽपि सकृत्प्रयुक्तेन लिङादिना वृत्तिं विनोपस्थित्यसंभवात् । नन्वेवमपि सविषान्नभोजनादौ निषिद्धेऽगम्यगमनादौ च प्रवृत्तिप्रसङ्ग इति चेन्न । विकल्पासहत्वात् । तथाहि । किमगम्यगमनादिजन्ये सुखे रागौत्कट्येन तज्जन्ये दुःखे यस्य द्वेषो नास्ति तस्य प्रवृत्तिरापाद्यते, यस्य तज्जन्ये दुःखे द्वेषौत्कट्येन तज्जन्ये सुखे नेच्छा तस्य वा । नाद्यः रागान्धस्य प्रवृत्तिदर्शनेनेष्टत्वात् । न द्वितीयः तत्रेष्टसाधनत्वस्यैवाभावात् । इष्टसाधनत्वं हीच्छाविषयसाधन-त्वम् । तत्कथं तज्जन्ये सुखे इच्छाविरहे भवेत् । न चैवमिच्छाज्ञानस्यापि प्रवर्तकत्वापत्तिः । न हि इच्छाविषयसाधनमेतदिति ज्ञानं प्रवर्तकं येनोक्तदोषः । किं नाम स्वरूपसती यत्रेच्छा तत्साधनताज्ञानमेव । इदं चाचार्याभिप्रेतमेव । कथमन्यथा 'कार्यं न हि क्रियाव्याप्यं निषिद्धस्य समत्वत' इत्यादिना क्रियाव्याप्य-त्वादेर्निषिद्धसाम्येन कार्यतारूपत्वं निराकृत्य 'तदिष्टं साधनं तथा । कार्यमि'तीष्टेष्टसाधनत्वयोः कार्यतारूपत्व-मुक्तमुपपन्नं स्यात् । एतेनेष्टसाधनताज्ञानं न प्रवर्तकम् । परेष्टसाधनमिति ज्ञानेऽपि प्रवृत्त्यभावात् । नापि स्वेष्ट-साधनमिति ज्ञानम् । इष्टसामान्यत्वज्ञानेनेष्टविशेषस्वर्गादिसाधनयागादावप्रवृत्तेः । किन्तु स्वर्गो मेऽस्त्वित्या-दीच्छाप्रकारीभूतस्वर्गादिविशिष्टं प्रति साधनत्वेन ज्ञानम् । एवंच प्रवर्तकज्ञानानामननुगम इति निरस्तम् । स्वरूपसदिच्छाविषयसाधनत्वज्ञानत्वेन तेषामनुगमात् । एतेन निषिद्धादौ प्रवृत्तिप्रसङ्गपरिहाराय चिन्तामणिकारेणोक्तं बलवदनिष्टाननुबन्धित्वेन वेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वेन वेष्टोत्पत्त्यनान्तरीयकदुःखाजनकत्वेन वा विशिष्टमेवेष्टसाधनत्वं विधिप्रत्ययगम्यं प्रवर्तकम् । अत्र यद्यप्याद्ये बलवत्त्वमनुगतमेकं नास्तीति द्वितीयेऽप्यन्ने शरूषे

रामस्मरणादौ तत्साध्येष्टोत्पत्तिनान्तरीयकं दुःखमप्रसिद्धमिति शङ्का । तथाऽपि तृतीये **न** काऽपि शङ्केति । तदपि तुच्छम् । उक्तरीत्या प्रवृत्ताववश्यापेक्षितायाः फलेच्छाया एव तत्राभावेन स्वरूपसदिच्छाविषयसाधनत्वज्ञानस्यैवाभावेनाप्रवृत्त्युपपत्तौ उक्तविशेषणत्रयस्यानपेक्षितत्वात् । तस्माल्लिङादिना यागादाविष्टसाधनतयाऽवगते यागादिर्मत्कृतिसाध्यो मत्कृतिं विनाऽसत्त्वादिति मानान्तरेणात्र कृतिसाध्यतावगमे स्वर्गादिफलं कृत्या साधयिष्यामीति फलेच्छायां च सत्यां यागादौ प्रवृत्तिर्भवतीत्यनुभवादनन्यलभ्यमिष्टसाधनत्वमेव विधिप्रत्ययबोध्यं साक्षादेव प्रवर्तकम् । कृतिसाध्यत्वं तु मानान्तरगम्यं तस्य न साक्षात्प्रवर्तकत्वं किं तूक्तफलेच्छाजनकतयाऽन्यथासिद्धमिति साधूक्तं कृतिसाध्यताविशेषणस्य व्यर्थत्वादिति । केचित्तु तक्षकचूडामण्याहरणादौ कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति कृतिसाध्यत्वज्ञानं प्रतिबन्धकनिरासोपक्षीणमतो न तत्साक्षात्प्रवृत्तिजनकं किं त्विष्टसाधनत्वज्ञानमेवेत्यस्य वाक्यस्य भावमाहुः । तच्चिन्त्यम् । इष्टसाधनताऽज्ञानस्यापि प्रवृत्तिप्रतिबन्धकत्वेनेष्टसाधनताज्ञानमपि प्रतिबन्धकनिरासोपक्षीणमिति वक्तुं शक्यत्वात् ।

**वं०प०**— अतिप्रसङ्गपरिहारमाशङ्कते **न तत्रेति** । गमकं कार्यतानुमापकम् । येनातीतादावपि तेन कार्यतावगमापत्तिरित्यर्थः । **भूतादीति** । अतीतादीत्यर्थः । कृतिसाध्यत्वविशेषणमपि तत्रास्तीत्याह **न हीति** । ततो जातं कृतितो जातम् । **व्यर्थमिति** । इदानीमिति विशेषणेनैव भूताद्यतिप्रसङ्गपरिहारस्य जातत्वात्कृतिसाध्यत्वविशेषणम् व्यर्थमित्यर्थः । अस्मन्मते इष्टसाधनत्वस्यैव कार्यत्वे चन्द्रमण्डलादावपि प्रवृत्तिप्रसङ्ग इति न वाच्यम् । प्रवर्तकाभावात् । कृतिसाध्यत्वे सति कृत्युद्देश्यत्वरूपकार्यतायाः प्रवर्तकत्वाङ्गीकारात् । तस्याश्च तत्राभावात् । तथा च लिङ्वाच्यं कार्यत्वमिष्टसाधनत्वं प्रवर्तककार्यत्वाद्भिन्नम् । प्रवर्तककार्यत्वं च ततो भिन्नमित्येवं कार्यद्वयमङ्गीकृतमिति कश्चिद्दोषः । 'कार्यता च न काचित्स्यादिष्टसाधनतां विने'त्येतदयुक्तमिति शङ्कते **गम्यगमकयोरिति** । कार्यत्वं गम्यम् । इष्टसाधनत्वं गमकम् । तथा च कथं तयोरैक्यमित्यर्थः । **तद्भावस्यैवेति** । गम्यगमकभावस्यैवेत्यर्थः । व्याख्याने बीजमाह **द्विविधमिति** । योऽतिशयः कार्यताख्यः ।

**आनन्दः**— **तत इति** । कृतित इत्यर्थः । **गम्यगमकयोरिति** । कार्यत्वेष्टसाधनत्वयोरित्यर्थः । शङ्कते **तथा सतीति** ।

**कं०रा०**— **भूतादीति** । अतीतादौ गमकस्य कृतिसाध्यत्वावच्छिन्नेष्टसाधनत्वस्य सत्त्वाद्गम्यस्य कार्यत्वस्याप्यवगमः स्यादित्यतिप्रसङ्गस्यानिवारणादित्यतीतादेः कथं कृतिसाध्यत्वमित्यत आह **न हीति** । **तथा सतीति** । अतीतादेः कृत्यसाध्यत्वे तत्कथं कृतितो जातमतः कृतिसाध्यमेवेत्यर्थः । नन्विदानीं कृतिसाध्यत्वविशेषितमिष्टसाधनत्वं कार्यत्वगमकं तस्य चातीतादेरिदानीं कृतिसाध्यत्वाभावेन तत्राभावान्न कार्यत्वावगमप्रसङ्ग इति शङ्कते **तथाऽपीति** । नेदानीं कृतिसाध्यं भूतादिकमिति संबन्धः । **इष्टसाधनत्वमिति** । अतीतादेरिष्टसाधनत्वमपीदानीं नेतीदानीमिष्टसाधनत्वस्यैवातीतादिव्यावृत्तस्य गमकत्वोपपत्तौ कृतिसाध्यत्वविशेषणं व्यर्थमित्यर्थः । न च वाच्यमिदानीमिष्टसाधनत्वमेव कार्यत्वस्य गमकमिति ब्रूम इति । इष्टसाधनत्वातिरिक्तस्य



कार्यत्वस्याभावेन तस्य तद्गमकत्वानुपपत्तेः । न च कृत्युद्देश्यत्वरूपं कार्यत्वमिष्टसाधनत्वातिरिक्तमस्तीति वाच्यम् । मुख्यस्य कृत्युद्देश्यत्वस्य विवक्षायां त्वमुख्यस्य कृत्युद्देश्यत्वस्येष्टसाधनत्वानतिरेकेण तस्य तद्गमकत्वानुपपत्ते-स्तादवस्थ्यात् । नन्वमुख्यं कृत्युद्देश्यत्वं न चिकीर्षाधीनकृतिसाध्यत्वम् । तच्चेष्टसाधनातिरिक्तमेवेति नोक्तदोष इति चेन्न । फलेऽपि तत्प्रसङ्गात् । तत्रेच्छामात्रं न चिकीर्षेति चेन्न । सुखं कृत्या साधयिष्यामीतीच्छाया अनुभवेन चिकीर्षायास्तत्रापि सत्त्वात् । तथाऽपि फलेन साक्षाच्चिकीर्षाधीनकृतिसाध्यत्वं तस्य साधनद्वारा कृतिसाध्यत्वादिति चेन्न । शरीरचेष्टाद्वारा कृतिसाध्ये होमादौ तदभावप्रसङ्गात् । भोजनचिकीर्षाधीनकृतिसाध्यश्रमे तत्प्रसङ्गाच्च । ननु श्रमः कृतिसाध्यशरीरावयवस्पन्दरूपभोजनक्रियासाध्यो न तु साक्षात्कृतिसाध्यः । कृते स्वध्वंसस्वसाक्षात्कारातिरिक्ते स्वभोजने चिकीर्षाविषय एव जनकत्वनियमात् । श्रमस्य च स्वजनकचिकीर्षाविषयत्वाभावादत एव श्रमो नान्तरीयक इत्युच्यते । अतो न श्रमप्रसङ्ग इति चेन्न । नित्यगम्यनिश्चलदेहश्रमत्वादिजडीकृतदेहस्य चलनादिक्रियाऽनुत्पादेऽपि श्रमानुभवेन कृतेरेव साक्षात्तं प्रति हेतुत्वात् । न च क्रियानुत्पादे कृतौ मानाभावः । अहं प्रयत इत्यनुभवात् । ननु चिकीर्षाधीनकृतित्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वं तद्विवक्षितं श्रमनिष्ठकार्यतानिरूपितकारणतावच्छेदकं न चिकीर्षाधीनकृतित्वं किन्तु द्वेषयोनियत्नादपि श्रमोत्पत्तेर्जीवनयोनिकृत्युत्पत्तिकृतित्वमेव । अतश्चिकीर्षाधीन-कृतित्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य श्रमेऽभावान्नातिप्रसङ्ग इति चेन्न । द्वेषयोनियत्नपदेन निवृत्ति-लक्षणस्य यत्नस्य विवक्षायां ततः श्रमानुभवेन द्वेषयोनियत्नादपि श्रमोत्पत्तेरित्यस्यायोगात् । शत्रुवधादिगोचर-प्रवृत्तिलक्षणस्य विवक्षायां तु तस्य भिन्नविषयकशत्रुगोचरद्वेषाजन्यतया प्रत्युत समानविषयकशत्रुवधगोचर-चिकीर्षाजन्यत्वेन तादृशयत्नसाध्यश्रमे चिकीर्षाधीनकृतित्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य वज्रलेपा-यितत्वात् । द्वेषसिद्धिस्तु शत्रुं द्वेष्मीत्यनुभवात् । ननु स्वविषयकचिकीर्षाधीनकृतिसाध्यत्वं तद्विवक्षितम् । श्रमश्च भोजनादिविषयकचिकीर्षाधीनकृतिसाध्यो न स्वविषयकचिकीर्षाधीनकृतिसाध्यः । अतो न तत्रातिप्रसङ्ग इति चेन्न । एतादृशकार्यत्वस्य निषिद्धे कलञ्जभक्षणादावपि सत्त्वेन निषेधानुपपत्तेः । फले स्वविषयकचिकीर्षाया उपपादितत्वेन तत्रातिप्रसङ्गस्यानिवारणाच्च । साक्षादिति विशेषणप्रक्षेपे तूक्तम् । नन्विष्टसाधनत्वं कार्यत्वमिति भवत्पक्षेऽपि निषिद्धसाधारण्यं तुल्यम् । तस्यापि तात्कालिकेष्टसाधनत्वादिति चेत् । इष्टसाधनत्वस्य निषिद्धसाधारण्यं वदता किमभिप्रेयते । तज्ज्ञानेन तत्र प्रवृत्त्यापत्तिरुत निषेधानुपपत्तिः । आद्येऽपि तस्यानिष्टसाधनत्वाप्रतिसन्धानदशायां तदापत्तिरुत तत्प्रतिसन्धानदशायाम् । नाद्यः । इष्टत्वात् । न द्वितीयः । कलञ्जभक्षणादेरनिष्टसाधनत्वप्रतिसन्धान-दशायां तज्जन्यतात्कालिकतृप्तिरूपफले इच्छाया एवाभावेनेष्टसाधनताज्ञानस्याभावात् । न द्वितीयः । न कलञ्जं भक्षयेदित्यादिनिषेधवाक्यगतनञोऽसुरा इत्यादाविवेष्टसाधनत्वविरुद्धानिष्टसाधनत्वार्थकत्वेन निषेधोपपत्तेः । तत एवास्तिककामुकस्याकार्यमेव । एतत्कलञ्जभक्षणादिकमकृत्वा स्थातुं नोत्सह इति बुद्धिरुत्पद्यते । अकार्यशब्दार्थस्य निषेधवाक्यावगतस्यानिष्टसाधनत्वस्य तत्र सत्त्वात् । न च वाच्यं क्रियायोगस्थले नञः प्रसज्यप्रतिषेधार्थकत्व-मेवेति । यजतिषु ये यजामहं करोति नानुयाजेष्वित्यादौ नञः पर्युदासार्थत्वेन तन्नियमाभावादिति दिक् । **गम्येति** । कार्यताया गम्यत्वेनेष्टसाधनत्वस्य गमकत्वेन तयोर्भेदावश्यंभावादिष्टसाधनत्वमेव कार्यत्वमित्येतदनुपपन्नमिति भावः । **तदिति** । कार्यत्वेष्टसाधनत्वयोर्गम्यगमकभावस्यैवानभ्युपगमादित्यर्थः ।





**श्रीनिधि०— किन्तु कृतिसाध्यतावच्छिन्नमिति** । इष्टसाधनत्वं गमकमिति शेषः । **गम्यन्त्विति** । ज्ञेयमित्यर्थः । **भूतादावतिप्रसङ्गानिवारणादिति** । कृत्युद्देश्यत्वरूपं कार्यत्वं ज्ञायेतेत्यर्थः । तत्र विशिष्टस्य ज्ञापकस्याभावात् न तज्ज्ञानमित्यत आह **न हि भूतादिकमिति** । तथा जातं भूतं जातं अतीतादिकालसंबन्धीत्यर्थः । **व्यर्थं विशेषणमिति** । इष्टसाधनत्वमात्रं कार्यता गमकमस्तु न तु कृतिसाध्यत्वमपि तत्र विशेषणं देयम् इत्यर्थः । अस्तु तथापीदानीमिष्टसाधनत्वाभावान्न कार्यतावगम इति चेत्तर्हि तत एव नेदानीं प्रवृत्तिरित्यपि तुल्यम् । **विवक्षितकार्यव्याख्यानमिति** । इष्टेष्टसाधनरूपद्विविधकार्ययोर्मध्ये विवक्षितं कार्यमिदमित्येवं व्याख्यानरूपमित्यर्थः । एवं च कुत इति प्रश्नस्यापि केन रूपेण कार्यमित्येवार्थ इति भावः । एवमिष्टसाधनतातिरिक्तकार्यताभावान्न तया तदनुमितिरित्युक्तमिदानीं तस्या निर्वचनेऽपि तस्य अखण्डा कार्यता भविष्यति ।

**वा०चं०—** इदानीमित्यविवक्षायामपि प्रकारान्तरेणातिप्रसङ्गपरिहारसंभवान्न प्रतिबन्दीग्रहणं युक्तमित्याशङ्कते **न तत्रेति** । प्रकारान्तरासंभवमाह **तथाऽपीति** । कृतिसाध्यत्वरूपविशेषणं विवक्षित्वाऽपीदानीमिति विवक्षाया आवश्यकत्वे इष्टसाधनत्व एव तद्विवक्षयाऽतिप्रसङ्गपरिहारसंभवे कृतिसाध्यत्वविशेषणं गमके व्यर्थमित्याह **इष्टेति** । ननु माऽस्तु कृतिसाध्यत्वमिति विशेषणमिदानीमिष्टसाधनत्वमेवास्तु कार्यतागमकम् । तथाऽपि गम्यगमकभावादेव भेदसिद्धेरिष्टसाधनतैव कार्यतेत्युक्तहानिरेवेत्याशयेन शङ्कते **गम्येति** । कार्यत्वेष्टसाधनत्वयोर्गम्यगमकभावं वदता त्वयाऽपीष्टसाधनत्वे इदानीमिति विशेषणं विवक्षणीयमिति प्रवर्तकत्वेऽपि तद्विवक्षया नातिप्रसङ्ग इत्यत्रैव तात्पर्यं न तु तयोर्गम्यगमकभावेऽपीत्याशयेनाह **तद्भावस्येति** ।

**वा०र०— गमके व्यर्थमित्याहेति** । यत्त्वन्यथाख्यातौ व्यर्थमितीति प्रतीकमुपादाय आवश्यकेनेत्यादिना प्रवर्तकपुरस्कारेण विचारकरणं तत्त्वनिर्णयटीकादिविरोधपरिहारादियत्नश्च तत्सर्वं पूर्वोत्तरापरामर्शमूलकमिति स्पष्टम् । पूर्वमिष्टसाधनताज्ञानस्य प्रवर्तकत्वविचारः कृतः । किञ्च कृतिसाध्यत्वं कृत्युद्देश्यत्वमिष्टसाधनत्वं चेत्यारभ्य तु तस्य कार्यताज्ञानप्रयोजकत्वं परेणोक्तमस्ति । तत्राप्यतिप्रसङ्गस्तुल्यस्तत्परिहारायेदानीमिति विशेषणदाने समं प्रकृतमित्येवं गम्यगमकत्वरूपेणेष्टसाधनत्वकार्यत्वयोः प्रसक्तिमाश्रित्य विचारो मूले सिद्ध इति व्यर्थं विशेषणमित्यत्रापि गमके विशेषणवैयर्थ्यस्यैव व्याख्येयतया प्राप्तत्वेन प्रवर्तकज्ञानपुरस्कारेण विचारस्यासङ्गतत्वात् कृतिसाध्यताविशेषणस्य व्यर्थत्वादिति पूर्वमूल एव प्रवर्तकज्ञानशरीरे विशेषणवैयर्थ्यस्य स्पष्टमुक्त तया अत्र क्रियमाणचर्चायाः तद्व्याख्यावसर एव कथञ्चित्सङ्गतत्वाच्चेत्यलम् । गम्यगमकभावमाश्रित्य विशेषणवैयर्थ्यं प्रागभिधायैवेदानीं गम्यगमकभावस्यैवानङ्गीकारे पूर्वविरोध इत्यतो यथा न विरोधस्तथा आशयं दर्शयन्नवतारयति **कार्यत्वेष्टेति** ।

**स०व्र०—** ननु कृतिसाध्यत्वे सति कृत्युद्देश्यत्वस्य इष्टसाधनत्वं गमकमिति न ब्रूमः । येनातीतादौ गमकवति गम्यत्वापत्तेरतिप्रसङ्गः स्यात् । किन्तु कृत्युद्देश्यत्वमात्रस्य कृतिसाध्यत्वे सतीष्टसाधनत्वं गमकम् । तथा चातीतादौ कृतिसाध्यत्वाभावात् विशिष्टज्ञापकाभावात् गम्यं कृत्युद्देश्यत्वमपि नास्तीति शङ्कते **नेति** ।





विशिष्टज्ञापकाभावः अतीतादावसिद्ध इत्याह **न हीति** । **व्यर्थविशेषणमिति** । कृतिसाध्यत्वरूपमित्यर्थः । ननु कार्यत्वे इष्टसाधनत्वस्य हेतुत्वस्य लोकसिद्धत्वात् कथं तयोरभेद इति गूढाभिसन्धिः शङ्कते **गम्यगमकयोरिति** । तथैव परिहरति **तद्भावस्येति** । पूर्ववादी स्वाशयमुद्घाटयति **तथा सतीति** । तथैव सिद्धान्त्यप्याह **नेति** । वर्तमानेऽप्यर्थेऽयमर्थ इष्टसाधनमित्यादिज्ञानम् ।

**विठ्ठ०**— ननु स्यादेवेष्टसाधनतामात्रस्य कार्यतावगमकत्वेऽतीतादावपीष्टसाधनतासद्भावेन कार्यतावगमस्याप्यावश्यकत्वात्प्रवृत्तिरपि भवेदित्यापादनम् । न चैवं कृतिसाध्येष्टसाधनत्वस्यैव कार्यतावगमकत्वाङ्गीकारादतीतादौ कृतिसाध्यताया अभावादिति शङ्कते **न तत्रेति** । अतीतादौ तदा कृतिसाध्यत्वस्यापि भावेन अतिप्रसङ्गस्तदवस्थ इति समाधत्ते **तथापीति** । ननु पूर्वोत्तरकाले विद्यमानं कृतिसाध्यत्वं वर्तमानकाले प्रवृत्तिप्रयोजकं न किन्त्विदानीं कृतिसाध्यत्वमेव, न चैतदस्ति इदानीं तस्यावस्थानस्यैवाभावादित्याशङ्क्येष्टसाधनताज्ञानमात्रस्य प्रवर्तकत्वेनातीतादौ न प्रसङ्गः तस्येदानीमिष्टसाधनत्वाभावादिति समः समाधिरित्याशयेनाह **तथापि नेदानीमिति** । **व्यर्थविशेषणमिति** । परेणाप्यवश्यवक्तव्येनेदानीमिति साधनताविशेषणेनैवंभूतौ तावतिप्रसङ्गभङ्गे केवलं प्रयोजकौ । तन्निवृत्तिप्रयोजकं कृतिसाध्यताविशेषणं व्यर्थमित्येवास्यार्थो न तु प्रवर्तकज्ञानेऽपीदं विशेषणं व्यर्थमिति अन्यथेदानीमिष्टसाधने चन्द्रमण्डलादौ प्रवृत्तिः स्यादित्याद्यतिप्रसङ्गापातात् । कृतिसाध्यताविशेषणस्यापि प्रवृत्त्यर्थमावश्यकताया अन्यत्रोक्तत्वाच्च । एतेन कृतिसाध्येष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्तेरिति कर्मनिर्णयटीकया कृतिसाध्येष्टसाधनतायाः कार्यतापरपर्यायत्वादिति विष्णुतत्त्वनिर्णयटीकया चास्य वाक्यस्य विरोधः परिहृतो वेदितव्यः । ननु तथापि कार्यता च न काचिदितीष्टसाधनताया एव कार्यत्वोक्तिरनुपपन्ना । इष्टसाधनत्वस्य कार्यतावगमकत्वेन गम्यगमकयोरभेदायोगादित्याशङ्कां परिहरति **गम्यगमकयोरिति** । **तत्र** इत्यस्य एवं कार्यशब्दस्य अर्थद्वये प्रसक्ते सतीत्यर्थः ।

**चषकः**— **व्यर्थं विशेषणमिति** । आवश्यकेनेदानीमिति विशेषणेनैव भूताद्यतिप्रसङ्गवारणात्तत्फलककृतिसाध्यत्वविशेषणमनर्थकमिति भावः । प्रवृत्तिहेतुभूतज्ञानं तु कृतिसाध्यत्वावच्छिन्नेष्टसाधनताविषयकमेव । कर्मनिर्णयटीकायां तत्त्वनिर्णयटीकायां च तथैव समर्थितत्वात् । कृतिसाध्यत्वस्य लिङाद्यर्थतायामेव वैयर्थ्यमिति व्याकर्तॄणामेकः पन्थाः । अन्यस्तु वैयर्थ्योक्तेश्च भूताद्यतिप्रसङ्गवारणमात्राभिप्रायकत्वादिति ।

**प्रदीपः**— ननु कृतिसाध्यत्वे सति कृत्युद्देश्यत्वस्यैव इष्टसाधनत्वं गमकमिति न ब्रूमः । येनातीतादौ गमकवति गम्यापत्तेरतिप्रसङ्गः स्यात् किन्तु कृत्युद्देश्यत्वमात्रस्य कृतिसाध्यत्वे सतीष्टसाधनत्वं गमकं तथा च अतीतादौ कृतिसाध्यत्वाभावात् विशिष्टज्ञापकगम्यकृत्युद्देश्यत्वमपि नास्तीति शङ्कतेति विशिष्टज्ञापकाभावोऽतीतादावसिद्ध इत्याह **नेति** ।





**५३१ सु०— किञ्च प्रथममिष्टसाधनताज्ञानं ततश्चेच्छा ततः प्रयत्नस्ततः परिस्पन्द इत्यात्मन्येवैकार्थविषया धर्मा जायन्ते । न त्वर्थे कश्चिदतिशयोऽनुभूयते योऽभिमत-साधनतयाऽनुमीयत इति ।**

**बिन्दुः**— तदेतत्सर्वमभिप्रेत्य उपसंहरन् इष्टसाधनत्वानुमेयकार्यताधानं प्रमाणमित्याह **किञ्च प्रथममिष्टसाधनताज्ञानमित्यादिना** ।

**वं०प०— अभिमतसाधनतयेति** । इष्टसाधनत्वेन हेतुनाऽनुमीयेतेत्यर्थः ।

**श्रीनिधि०**— तस्याश्चेष्टसाधनत्वेनानुमानेऽन्यलिङ्गे नानुमानं भविष्यतीति पक्षे दूषणमाह **किञ्चेति** । **अतिशयः** । अखण्डकार्यतालक्षण इत्यर्थः । **अभिमतसाधनतया** । इष्टसाधनत्वेन । लिङ्गेनेति शेषः ।

**वा०चं०**— एवं गम्यगमकभावानभ्युपगमे बाधकमुद्धृतम् । अधुनेष्टसाधनताज्ञानेच्छाप्रयत्न-परिस्पन्दानामेकार्थविषयाणां क्रमिकाणामात्मन्येव जायमानतया तत्तद्विषयत्वस्य तत्तत्सामग्रीजन्यस्य तत्सिद्धि-निबन्धनसिद्धिकस्येष्टसाधनतासाध्यविषयनिष्ठातिशयरूपत्वाभावाद्विषयनिष्ठस्य कृतिसाध्यत्वस्य च कार्यता-गमककोटौ त्वया निवेशस्याभ्युपगमादिष्टसाधनतागम्यत्वासंभवाच्च कृत्युद्देश्यत्वस्य चेष्टयागादिनिष्ठस्येष्टसाधन-त्वातिरिक्तस्याभावेन त्वदभिमतकालत्रयानवमृष्टकार्यस्य चासत्कल्पनाया वक्ष्यमाणत्वाच्च गम्यस्यैवाभावात्कयो-र्गम्यगमकभाव इति तदभ्युपगमे बाधकमाह **किञ्चेति** ।

**वा०र०**— पूर्वोत्तरग्रन्थयोर्भेदं दर्शयन् ...................अनुसारेणापेक्षितपूरणेन व्याख्यानं कुर्वन्नवतारयति **एवं गम्यगमकेति** । **वक्ष्यमाणत्वाच्चेति** । वर्तमानमतीतं चेत्येतद्व्याख्यावसरे कार्यं च कालत्रयासंबद्धं परेणेष्यत इत्यादिग्रन्थे आद्ये शशविषाणादिवत्तस्य सत्त्वमेवासंभावितमित्यनेन वक्ष्यमाणत्वादित्यर्थः ।

**स०व्र०**— नत्वर्थे कश्चिदतिशय इत्याह **किं चेति** । साधनेच्छाप्रयत्नरूपप्रवृत्तिप्रयोजको यागादाविष्टसाधनत्वातिरिक्तकृत्युद्देश्यत्वरूपो धर्मो नास्त्येव फलस्यैवोद्देश्यत्वेन तत्साधने स्वत एवोद्देश्यताया अभावात् । तदुद्देश्यताया उद्देश्यसाधनतापर्यवसायित्वात् यागादाविष्टसाधनत्वेन कृत्युद्देश्यत्वानुमानं न संभवति साध्यहेत्वोरभेदेन सन्दिग्धासिद्धेरिति भावः । एतदेवाभिप्रेत्य कर्मनिर्णयटीकायां केवलमिच्छाप्रयत्नोपाधी भिद्येते न त्वर्थे कश्चिदतिशयोऽनुभूयत इत्युक्तम् ।

**विठ्ठ०**— इष्टसाधनताज्ञानस्यात्मगतेच्छादिधर्मजनकत्वस्यैवानुभवसिद्धत्वेन कार्यतानुमितिहेतुत्वमसिद्धं चेत्याह **किञ्चेति** ।

**प्रदीपः**— वर्तमानेऽप्यर्थेऽयमर्थ इष्टसाधनमिति ज्ञानं नत्वेतत्कश्चिदिष्टसाधनत्वादिधर्मोऽस्तीत्यतः अतीतादावित्याशयेनाह **किञ्चेति** ।





॥ भगवतः एव इष्टेष्टसाधनत्वम् ॥

॥ भगवतः एव मुख्येष्टत्वम् ॥

तस्यैव तथा संभावितत्वम्—

५३२ **सु०— अस्तु वा वाक्यपर्यवसानस्य कारणं कार्यमिष्टमिष्टसाधनं वा; ततः किमित्यत आह साधनमिति ।**

**अनु०— साधनमिष्टस्य भगवानिष्टदेवता ॥**
**मुख्येष्टं वा सुमनसाम्**

**मीमांसाविषयस्य ब्रह्मणो वक्तव्यत्वे किमुच्यते 'भगवानि'ति । तत्रोक्तम् इष्टदेवतेति । मीमांसाविषयत्वेन इष्टदेवता ब्रह्मैव भगवानित्यर्थः ।**

श्रीनिधि०— **ततः किमिति** । ब्रह्मणो जिज्ञास्यत्वे किं साधकमुक्तं भवतीत्यर्थः । साधनमिष्टस्येत्यनेनेष्टसाधनस्योक्तत्वादिष्टदेवता मुख्येष्टमित्यनयोः पुनरुक्तिरित्यतो वाक्यं योजयति **मीमांसाविषयस्येत्यादिना** ।

५३३ **सु०— इष्टसाधनमपीष्टं भवति अतो मुख्येत्युक्तम् । निरुपाधिकमित्यर्थः ॥ नन्विष्टस्य सुखादेः साधनं भवतु भगवान्निरुपाधिकेष्टस्तु कथमित्यत आह सुमनसामिति । पुरुषार्थान्तराभिलाषाऽकलुषितमनसामित्यर्थः ।**

**यथाप्रकृतमिष्टसाधनमिष्टं चानूद्य 'भगवानि'ति विधानान्न लिङ्गव्यत्यासदोषः । यथा 'यदिदं दृष्टं स स्थाणुरि'ति ॥ एवं यदिष्टमिष्टसाधनं वा वाक्यपर्यवसानकारणं स भगवानिति ।**

बिन्दुः— **निरुपाधिकमित्यर्थ इति** । जन्येच्छाऽजन्यजन्येच्छाविषय इत्यर्थः । अत एव उक्तम् **पुरुषान्तराभिलाषाऽकलुषितमनसामित्यर्थ इति** ।

यादु०— ननु भगवानित्यनूद्येष्टेष्टसाधनत्वयोर्विधेयत्वे नपुंसकलिङ्गानुपपत्तिः । अनियतलिङ्गस्य विधेयस्योद्देश्यसमानलिङ्गत्वनियमादित्यत आह **इष्टमिष्टसाधनं वाऽनूद्येति** । भगवच्छब्दस्य च नियतलिङ्गत्वान्नोद्देश्यसमानलिङ्गत्वमिति भावः । यद्यपि यौगिकस्य तस्याप्यनियतलिङ्गत्वमेव । भगवान्कुबेरो भगवती राजमहिषी भगवद्राजकुलमित्यादिप्रयोगदर्शनात् । तथाऽपि हरौ रूढस्य तस्य नियतलिङ्गत्वमभिप्रेत्यैतदुक्त-





मित्यवधेयम् । नन्विष्टेष्टसाधनशब्दयोरनियतलिङ्गत्वादिष्टेष्टसाधन इत्येव कस्मान्नोक्तमित्यत उक्तम् । **यथाप्रकृतमिति**। पूर्वं कार्यविशेषणतया नपुंसकलिङ्गेनैव तयोः प्रकृतत्वात्तथैवानुवाद इति भावः । नियतलिङ्गस्य विधेयस्य नोद्देश्यसमानलिङ्गत्वनियम इत्यत्र दृष्टान्तमाह **यदिदमिति**।

**आनन्दः**— ननु भगवानिष्टमिति पुन्नपुंसकयोः कथं सामानाधिकरण्यमत्राह **यथाप्रकृतमिति** । येन प्रकारेण प्रकृतमित्यर्थः।

**कं०रा०**— **निरुपाधिकेति**। अन्येच्छाऽनधीनेच्छाविषय इत्यर्थः।

**श्रीनिधि०**— **निरुपाधिकमिति** । अनन्योद्देश्यमित्यर्थः । **यथाप्रकृतमिति** । प्रकृतमनतिक्रम्येत्यर्थः । **न लिङ्गव्यत्यासदोष इति** । अन्यथा उद्देश्यस्य पुल्लिङ्गत्वे विधेयस्यापि पुल्लिङ्गत्वमेव स्यान्न नपुंसकलिङ्गत्वमिति भावः। अत्र विनिगमकं उत्तरत्र द्रष्टव्यम्।

**वा०चं०**— फलवत्साधनेऽपीच्छाया जातत्वेन तद्विषयत्वस्योभयत्र साम्यान्मुख्यग्रहणेन कथं तद्व्यावृत्तिरित्यतोऽभिप्रेतार्थमाह **निरुपाधिकमित्यर्थ इति** । सुखदुःखाभावेतरस्य भगवतो निरुपाधिकेष्टत्वमयुक्तमित्याशङ्क्ते **नन्विति**। सुखाद्यभिलाषिणां सुखादेर्निरुपाधिकेष्टत्वेऽपि तदभिलाषदोषशून्यानां भगवदभिलाषिणां भगवतो निरुपाधिकेष्टत्वं युक्तमित्याह **पुरुषार्थेति** । नन्वत्र भगवतो विशेष्यत्वाद्विशेषणानां च विशेष्यनिघ्नत्वाद्भगवानिष्टसाधनो मुख्येष्टश्चेति वक्तव्ये साधनमिति मुख्येष्टमिति चानुपपन्नमित्यत इष्टेष्टसाधनयोरनुवाद्यत्वेन भगवत्त्वस्य विधेयत्वेन तस्य विशेष्यत्वाभावान्न लिङ्गव्यत्यासदोष इत्याशयेनाह **यथाप्रकृतमिति** । इष्टेष्टसाधनयोरनुवाद्यत्वेऽपीष्ट इष्टसाधन इत्येवानुवादसंभवे किमित्यन्यथाऽनुवादो विशेष्यान्तराभावेन भगवत एव विशेष्यत्वेनोक्तदोषपरिहारादित्यतो वाक्यपर्यवसानकारणं यत्कार्यं प्रकृतं तद्विशेषणत्वेन भगवद्विशेषणत्वाभावात् प्रकृतानुसारेण चानुवादाद्युक्तो नपुंसकेनानुवाद इत्याशयेन यथाप्रकृतमिति विशेषणं तदाशयमजानानं पति दृष्टान्तपूर्वमाशयं स्पष्टयति **यथेति** । अत एव वाक्यपर्यवसानकरणं कार्यमिष्टमिष्टसाधनं वेत्यवतारिकादशायामुक्तमत्रापि दार्ष्टान्तिके वाक्यपर्यवसानकारणमित्युक्तमिति द्रष्टव्यम्।

**वा०र०**— **फलवदिति**। यथा फले तथा साधनेऽपीत्यर्थः । **तदभिलाषदोषेति** । अभिलाषाभावमात्रे वाच्येऽभिलाषदोषत्वकीर्तनं न कर्तव्यश्चायमभिलाष इत्यधिकं वक्तुमिति ज्ञेयम्। यद्यपि साधनशब्दस्यानान्तत्वेन नपुंसकतया वेदाः प्रमाणमित्यादिवदुद्देश्यविधेयभावव्यत्ययानादरेऽप्युपपत्तिः । मूले उभयोपपादनं तु वस्तुत उभयस्य प्रकृतत्वादिष्टपदमात्राभिप्रायं वक्तुं वाक्यम्। तथापि नारायणशब्दे व्युत्पादयिष्यमाणन्यायेन त्रिलिङ्गतया भूवादय इति सूत्रीय कोऽसावनुमान इति महाभाष्यकारप्रयोगेण बहवः कर्म कारणा इति गीताभाष्यप्रयोगाच्च पुल्लिङ्गत्वस्यापि संभवे कुतस्तत्परित्याग इत्याशयेनोभयत्रापि लिङ्गानुपपत्तिराशङ्किता । संमतं चैतन्मूलकारस्यापि ।





उपक्रम इवोपसंहारेऽपि यदिष्टमिष्टसाधनं वेत्युक्त्वा वाक्यपर्यवसानकारणमित्युभयत्रापि नपुंसकत्वमाश्रित्योपपादनात् । अन्यथोक्तरीत्या पुंस्त्वाभिप्रायकल्पनानङ्गीकारे मूलकारस्य गौरवप्रसङ्गादिति भावः ।

**स०व्र०— न लिङ्गव्यत्यासदोष इति** । अन्यथाऽनियतलिङ्गस्य विधेयस्योद्देश्यसमानलिङ्गत्वेन भगवानिष्ट इति पुल्लिङ्गं स्यादिति भावः ।

**विठ्ठ०**— नन्विष्टसाधनमित्यनुसारेण भगवद्राजकुलमितिवत् भगवच्छब्देन नपुंसकलिङ्गेन भाव्यम् । न च वाच्यं हरौ निरूढत्वादस्य शब्दस्य नियतपुल्लिङ्गत्वमिति तर्हीष्टसाधन इति कस्मान्नोक्तमित्यत आह **यथाप्रकृतमिति** । कार्यविशेषणतया नपुंसकलिङ्गेन तयोः प्रकृतत्वात्तथानुवाद इति भावः । नियतलिङ्गस्य विधेयस्य नोद्देश्यसमानलिङ्गत्वमित्येतत् दृष्टान्तेनाह **यथेति** ।

**चषकः**— भगवच्छब्दस्योद्देश्योपस्थापकतायां विधेयवाचकपदयोः क्लीबतानुपपत्तिः प्रसज्यते । अनियतलिङ्गविधेयपदस्योद्देश्यपदसमानलिङ्गकतानियमादिष्टेष्टसाधनपदयोरुद्देश्यपरत्वोपगमे तु परमात्मवाचकभगवच्छब्दस्य नियतलिङ्गत्वादर्थान्तरे पुल्लिङ्गत्रयसाधारण्येऽपि क्षत्यभावेन विधेयवाचकता पुंसो भगवच्छब्दस्य सङ्गच्छत इत्याह **न लिङ्गव्यत्यासदोष इति** । नियतलिङ्गस्य विधेयपदस्य नोद्देश्यपदसमानलिङ्गकतानियम इत्यत्र निदर्शनमाह **यदिदमिति** ।

**तस्यैव तथा श्रुतिसिद्धत्वम्**—

**५३४ सु०— मुख्येष्टत्वं भगवतोऽस्तीत्यत्र संभावनैवोक्ता, कुतः प्रमाणात्तन्निश्चय इत्यत आह प्रेय इति ।**

**अनु०— प्रेयस्तदिति च श्रुतिः ।**

**न केवलं संभावना; श्रुतिश्चात्रास्तीति चशब्दः । प्रेयोऽतिशयेन प्रियम् । अतिशयश्च निरुपाधिकत्वम् ।**

**बिन्दुः— अतिशयेन प्रियमिति** । आतिशायिके इयसुनि प्रियस्थिरेति प्रादेशः ।

**परि०— संभावनैवेति** । सुमनसामित्यनेनेति भावः ।





**गु०दी०— संभावनैवोक्ता** इत्यत्र सुमनःपदेनोक्तेत्यर्थः ।

**यादु०— संभावनैवेति** । सुमनसामित्यनेनेत्यर्थः । तेन पुरुषार्थान्तराभिलाषाऽकलुषितमनसां भगवान्निरुपाधिकेष्टो भवितुमर्हतीत्युक्तत्वादिति भावः । **अतिशयेन प्रियमिति** । प्रियशब्दाद् द्विवचनविभज्योपपदे तरबीयसुनावित्यतिशयार्थे पुत्रादित्यादिरूपे विभज्ये उपपदे ईयसुन्प्रत्यये प्रियस्थिरेत्यादिना प्रियशब्दस्य प्रादेशे च सति प्रेय इति रूपमिति भावः ।

**कं०रा०— संभावनेति** । सुमनसामित्यनेन भगवतो मुख्येष्टत्वमस्तीत्यत्र संभावकमेव उक्तं न तु प्रमाणमित्यर्थः । **अतिशयेनेति** । प्रियशब्दात् द्विवचनविभज्योपपदे तरबीयसुनावित्यतिशयार्थे ईयसुन्-प्रत्यये प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दा इति प्रियशब्दस्य प्रादेशे तस्य प्रकृत्यैकाजिति टिलोपाभावेन गुणे च सति प्रेयशब्दस्य निष्पन्नत्वादिति भावः ।

**श्रीनिधि०— संभावनैवोक्तेति** । सुमनसामितिपदेनेत्यर्थः ।

**वा०चं०—** सुमनसामित्यनेनैव प्रमाणोक्तेः प्रेयस्तदित्यादेर्वैयर्थ्यमित्यतस्तदभिप्रायमाह **मुख्येष्टत्वमिति** । निरुपाधिकप्रियत्वं श्रुत्यारूढं कर्तुं प्रेयःशब्दं तदनुगुणतया तावद्व्याख्याति **प्रेय इति** । यद्वा प्रियशब्दाद्विभज्योपपदे ईयसुनि प्रियस्थिरेत्यादिना प्रियशब्दस्य प्रादेशे प्रेय इति सम्पद्यत इत्याशयेन तदर्थकथनपूर्वकं श्रुतिं प्रकृते सङ्गमयति **प्रेय इत्यादिना** । ( द्विवचनविभज्योपपदे तरबीयसुनौ । द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । येन पदेन द्वावर्थावुच्येते तद् द्विवचनं ततः करणे ल्युट् । द्वयोरर्थयोर्वचनं द्विवचनम् । कर्मणि षष्ठ्याः समासः । विभक्तव्यं विभज्यम् । द्विवचनं च विभज्यं चेति द्वन्द्वः । तस्योपपदेन कर्मधारयः । तेन द्व्यर्थवाचके विभजनीयवाचके चोपपदे सतीत्यक्षरार्थः । तच्च विग्रहवाक्य एव युज्यते । वृत्तौ गतार्थत्वान्नावश्यकम् । एवं स्थिते उपपदग्रहणं स्पष्टार्थम् । द्विवचनोपपदोदाहरणमयमनयोरतिशयेन लघुर्लघुतरो लघीयान् । विभज्योपपदोदाहरणमुदीच्याः प्राच्येभ्यः पटुतराः पटीयांस इति । प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः । प्रियादीनां क्रमात्प्रादयः स्युरिष्ठादिष्वित्यर्थः ।)

**स०व्र०— संभावनैवोक्तेति** । सुमनसामित्यनेनेत्यर्थः । पुरुषार्थान्तराभिलाषाऽकलुषितमनसां भगवान्निरुपाधिकेष्टो भवितुमर्हतीत्युक्तत्वादित्यर्थः ।

**विठ्ठ०— संभावनैवोक्तेति** । सुमनसामित्यनेन निर्दुष्टमनसां भगवान्निरुपाधिकेष्टो भवितुमर्हतीति संभावनाया उक्तत्वादिति भावः । **अतिशयेनेति** । प्रियशब्दात्परा । ईयसुन्प्रत्ययार्थकथनमेतदिति ज्ञेयम् । इत्यादिवाक्यैरिति मूलस्य मुख्येष्टत्वं प्रतिपत्तव्यमिति संबन्धः । ''श्रद्धया ये प्रकुर्वन्ति कुशलाः स्वार्थदर्शिनः । अहैतुक्यव्यवहिता भक्तिमात्मप्रिये यथा । प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रिय'' इत्यादिकमिति





सन्न्यायरत्नावलीनयचन्द्रिकोदाहृतवचनमादिशब्दगृहीतम्। 'स एव सर्ववेदार्थ' इत्यनेनेति कार्यनिष्ठ एव सर्वो वेदो न तु वस्तुतत्त्वनिष्ठ एव इति प्राप्ताक्षेपसमाधानार्थमेवास्य ग्रन्थस्य प्रसक्तत्वादिति भावः।

**चषकः**— **संभावनैवेति** । सुमनसामित्यनेनेत्यादिः । औत्कट्यानौत्कट्याङ्कितकोटिद्वियावगाहिनी संभावनेत्यर्थः । **अतिशयेन प्रियमिति** । द्विवचनविभज्योपपदे तरबीयसुनावित्यतिशयार्थे पञ्चम्यन्ते पुत्रपदादि-रूपविभज्ये उपपदे प्रियशब्दप्रकृतिकेयसुनि प्रियस्थिरेति प्रियशब्दस्य प्रादेशो प्रेय इति रूपं निष्पद्यत इति भावः।

**तस्यैव तथा पुराणादिवाक्यैः विस्पष्टत्वं च—**

**५३५ सु०—** 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्माच्च सर्वस्मादन्तरतरं यदय-मात्मे'त्युदाहृतश्रुतावात्मनो जीवस्य प्रियतमत्वमुच्यत इति प्रतिभाति; ततो विस्पष्टैः पुराणादिवाक्यैर्भगवतो मुख्येष्टत्वं प्रतिपत्तव्यमित्याह **प्राणेति** ।

**अनु०—** **प्राणबुद्धिमनःखात्मदेहापत्यधनादयः ॥**
**यत्संपर्कात्प्रिया आसंस्ततः को न्वपरः प्रियः ॥**
**इत्यादिवाक्यैः**

**प्राणः** शारीरो वायुः । **बुद्धिर्मनश्च** अन्तःकरणवृत्ती । **खानि** इतरेन्द्रियाणि । आत्मा जीवः।

**बिन्दुः**— आध्यात्मिकपदार्थप्रक्रमानुरोधेन व्याचष्टे **प्राणः शारीरो वायुरिति**।

**परि०**— **श्रुताविति**। वाजसनेयश्रुतौ। मूले इत्यादिवाक्यैरित्यस्य 'मुख्येष्टं वे'त्यनेनान्वयः।

**गु०दी०**— **जीवस्य प्रियतमत्वमुच्यत इति प्रतिभाति** इत्यङ्गीकारवादोऽयम् । वस्तुतस्तु ''गौणश्चेन्नात्मशब्दात्'' ''द्युभ्वाद्यायतनं स्वशब्दात्'' इत्यात्मशब्दस्य जीवव्यावर्तकतया प्रयुक्तत्वान्न तस्य जीवपरताशङ्का । अतः स्मृत्युच्चारणम् अभ्युच्चयादेव । न पूर्वास्वरसादिति ज्ञेयम् ।

**वं०प०**— मूले कोऽन्वपरः प्रिय इत्यत्र प्रिय इष्ट इत्यर्थो द्रष्टव्यः।





**आनन्दः**— प्राणशब्देनेन्द्रियग्रहणे स्वात्मेत्यनेन पौनरुक्त्यादाह **प्राण इति** । शब्दस्यार्थज्ञानजनने जिज्ञासादिसापेक्षत्वमुपपादयति ।

**कं०रा०**— **बुद्धिरिति** । निश्चयरूपान्तःकरणवृत्तिर्बुद्धिः सङ्कल्पविकल्परूपान्तःकरणवृत्तिर्मन इत्यर्थः । **व्युत्पत्तेः** प्राथमिकव्युत्पत्तेः ।

**श्रीनिधि०**— **अन्तरतरम्** । अन्तरङ्गतरम् । प्रतिभातीत्यङ्गीकारवादोऽयम् । वस्तुतस्तु । गौणश्चे-न्नात्मशब्दादित्यात्मशब्दस्य जीवव्यावर्तकतया प्रयुक्तत्वात् न तस्य जीवपरत्वा शङ्का अतः विभवादेव स्मृतिपठनं न तु पूर्वास्वरसादिति ज्ञेयमित्याहुः ।

**वा०चं०**— प्राणखशब्दयोर्मुख्यवाय्वाकाशपरत्वे प्रिया आसन्नित्यस्यानुपपत्तेरिच्छादिपरित्यागेन ज्ञानस्यैव विशिष्य ग्रहणानुपपत्त्या बुद्धिशब्देन मनोग्रहणे पुनरुक्तेरात्मशब्देन च देहमनोग्रहणस्य च तत एवासंभवादीश्वरग्रहणे च यत्सम्पर्कादित्यस्यानुपपत्तेः प्राणादिशब्दान्व्याख्याति **प्राण इत्यादिना** ।

**वा०र०**— **आसन्नित्यस्येति** । तयोर्जीवप्रियकोटिगतत्वाभावादिति भावः । **ज्ञानस्यैवेति** । बुद्धिशब्देनेति वक्ष्यमाणमत्रापि संबध्यत इति ज्ञेयम् ।

**तस्मिन् आकाङ्क्षादिमत्वाद् बाधकप्रमाणाभावात् च योग्यता—**

**५३६ सु०— किमतो यद्येवमीश्वर इष्ट इष्टसाधनीभूतश्चेत्यत आह आकाङ्क्षेति ।**

## अनु०— आकाङ्क्षासन्निधिर्योग्यता यतः ॥ तस्मिन्नेव समस्तस्येति

**इतिशब्दस्तस्मादित्यर्थे, 'स एव सर्ववेदार्थ' इत्यनेन संबन्धः ।**

**परि०**— **तस्मादित्यर्थ इति** । इतिशब्दस्य हेत्वर्थत्वात् । पूर्वत्र यत इति श्रवणात्तस्मादित्यर्थ इत्युक्तम् । **इत्यनेन संबन्ध इति** । सोऽयं पुरुष इत्यपि । स एव सर्ववेदार्थ इति पूर्वेण संबन्ध इत्यर्थः । तस्यैवाक्षेपसमाध्योरिह प्रस्तुतत्वादिति भावः ।

**वा०चं०**— उक्तं प्रति फलप्रतिपादकत्वमस्य वाक्यस्य दर्शयितुमितिशब्दं व्याख्याय तत्संबन्धं च दर्शयति **इतिशब्द इति**।

**५३७ सु०— यत्खलु येन जिज्ञासितं यच्च सन्निहितं यच्च प्रतीतान्वययोग्यं तत्तं प्रति प्रतिपादनीयं शब्देन। अजिज्ञासितत्वाद्धि नापिपासुं प्रति जलाशयोपदेशः क्रियते। सत्यामपि जिज्ञासायां दाक्षिणात्यस्य पिपासोरसन्निहितत्वात् 'अस्ति गीर्वाणतरङ्गिण्यां शीतलं जलम्' इति नोपदिश्यते। सतोरपि जिज्ञासासन्निधानयोरयोग्यत्वान्नाकाशपानं विधीयते।**

**बिन्दुः**— **यच्च सन्निहितमिति**। यद्यप्यसन्निहितमपि स्वर्गापवर्गादिकमुपदिश्यते तथापि सन्निहिततत्तत्पदार्थत्वाभावात्। यत्र तूपदिदिक्षितः पदार्थः सन्निहितोऽसन्निहितश्च भवति तत्र सन्निहितमेवोपदेष्टव्यमिति। अत एव तादृशमेवोदाहरति **दाक्षिणात्यस्येति**।

**परि०**— आकाङ्क्षादिस(म)त्त्वमात्रेण कथं सर्ववेदार्थत्वमित्यतो व्यनक्ति **यत्खल्विति**। विशेषणत्रयस्य क्रमेण कृत्यमाह **अजिज्ञासितत्वाद्धीत्यादिना**।

**आनन्दः**— **अजिज्ञासितत्वादित्यादि**। तस्य जलपानादिकार्ये जिज्ञासादिराहित्यमित्यर्थः।

**वा०चं०**— आकाङ्क्षितत्वादेः सर्ववेदार्थत्वेन व्याप्तेर्विशिष्य दर्शयितुमशक्यतया सामान्यमुखेन तामाह **यत्खल्विति**। अत्र पदप्रयोज्यजिज्ञासाविषयत्वयोग्यज्ञानजनकतावच्छेदकरूपवत्त्वरूपपूर्वपदजनिताकाङ्क्षापूरकत्वरूपाकाङ्क्षायाः पदोपस्थित्यनुकूलवक्तृव्यापारे निष्फलान्वयबोधविरोधिव्यवधानाभावरूपाविलम्बितोच्चारितत्वरूपासत्तेश्च कार्येऽपि परेण कथञ्चिदुपपादनीयत्वात्तस्मिन्नेवेति मूलोक्तावधारणानुपपत्तेस्तदुपपत्तये जिज्ञासितार्थप्रतिपादकत्वरूपाकाङ्क्षायाः सन्निहितार्थप्रतिपादकत्वरूपासत्तेश्चात्र विवक्षितत्वाद्विरक्तं प्रति वाणिज्योपदेशादिव्यावर्तकतया तयोरपि वाक्यप्रामाण्योपयोगितया तयोश्च विष्णावेव भावान्नानुपपत्तिरित्याशयेन तादृशाकाङ्क्षादेः सामान्यतः प्रमाणवाक्यप्रतिपाद्यत्वेन व्याप्तिमुपपादति **अजिज्ञासितत्वादित्यादिना**।

**वा०र०**— अत्र पदप्रयोज्ये क्वचिद्व्यक्तिरित्यारभ्य ज्ञेयमित्यन्तो ग्रन्थः वक्ष्यमाणाकृतिविशिष्टेति ग्रन्थस्य विवरणरूपः।

**विठ्ठ०**— आकाङ्क्षादिमत्वमात्रेण कथं सर्ववेदार्थत्वं कथं च भगवति आकाङ्क्षादियुतत्वमित्यत आह **यत्खल्वित्यादिना**।





**५३८ सु०— तथा च परमेश्वरस्येष्टेष्टसाधनत्वात्समस्तस्यापि वेदाधिकारिणोऽस्ति तस्मिन् आकाङ्क्षा जिज्ञासा। अस्ति च सन्निधिः; सर्वगतत्वात्; योग्यता च बाधकप्रमाणाभावात्। यत, एवं, तस्मात्स एव सर्ववेदार्थो भवितुं युक्तः॥ कार्ये जिज्ञासाद्यभावं दर्शयितुम् एवशब्दः। तच्चोपपादयिष्यते। तेन स 'एव सर्ववेदार्थ' इत्यवधारणमुपपद्यते।**

**परि०— इष्टेष्टसाधनत्वादिति**। इष्टत्वादिष्टसाधनत्वाच्चेत्यर्थः। अधिकारिभेदेनेति भावः। आकाङ्क्षेत्यनुवादः। जिज्ञासेति व्याख्या। **उपपादयिष्यत इति**। 'वर्तमानमतीतं चे'त्यादाविति भावः।

**यादु०—** ननु वचनमात्रेण कथं जिज्ञासाद्यभावदर्शनमित्यत आह **तच्चोपपादयिष्यत इति**। जिज्ञासाद्यभावदर्शनमित्यर्थः। वर्तमानमतीतं चेत्यनुपदमेवेति शेषः।

**आनन्दः— उपपादयिष्यते** नानयेत्यत्रेति शेषः। नन्वग्रे कार्ये जिज्ञासादिदूषणं क्रियते तदनुपयुक्तमित्यत्राह **येनेति**। एवं च कार्यार्थत्वनिराकरणे सिद्धरूपार्थस्यैव वेदार्थः सिध्यतीति भावः।

**श्रीनिधि०— परमेश्वरस्येति**। तस्येति शेषः। **अस्ति च सन्निधिः सर्वगतत्वादिति**। यद्यपि सन्निहितस्यानुपदेश्यत्वसामर्थ्यं इति।

**वा०चं०—** एवमाकाङ्क्षितत्वादेर्व्याप्तिमुपपाद्योक्तेष्टसाधनत्वस्याकाङ्क्षितत्वमात्रे हेतुत्वमासत्तियोग्यताहेत्वोः प्रसिद्धत्वाद्भाष्येऽकथनमित्यभिप्रेत्य स्वयं तद्धेतुप्रदर्शनपूर्वं हेतुहेतुमद्भावं प्रदर्शयति **तथा चेति**। कार्ये जिज्ञासाभावे गामानयेत्यादौ लिङादिव्युत्पत्तिर्न स्यादित्यतोऽस्मदभिमतकार्ये तस्याः पश्चाद्भावित्वस्य सिद्धे व्युत्पत्त्यनुसारित्वेन गौणतायाः परोक्तकार्ये व्युत्पत्त्यभावस्य च दृष्ट्या ज्ञातपदार्थस्येत्यादिना वक्ष्यमाणत्वात्प्राथमिकजिज्ञासायाः कार्येऽसंभवाभिप्रायेण वा परोक्तकार्ये सर्वथा जिज्ञासाभावेन वैवकारोपपत्तेर्न विरोध इत्याशयेनाह **उपपादयिष्यते चेति**। अवधारणफलमाह **तेनेति**।

**वा०र०—** तच्चोपपादयिष्यत इत्येतद्व्यावर्त्यशङ्काप्रदर्शनपूर्वकं तदभिप्रायं कथयंस्तद्वाक्यमवतारयति **कार्ये जिज्ञासेति**। **अस्मदभिमतेति**। प्रथमतोऽस्मदभिमते भविष्यदर्थरूपे कार्ये जिज्ञासाया अभावेऽपि सिद्धे व्युत्पत्त्यनन्तरं कार्येऽपि जिज्ञासायाः संभवेन तदधीनायाः कार्ये लिङादिव्युत्पत्तेः संभवरूपगौणतायाः दृष्ट्या ज्ञातपदार्थस्य स्यादाकाङ्क्षा भविष्यतीत्यादिनोपपादयिष्यमाणत्वादिति वक्ष्यमाणेन संबन्धः। कालत्रयानवमृष्टरूपपरोक्तकार्ये व्युत्पत्त्यसंभवस्य चादिपदोपात्तवर्तमानमतीतं चेत्यादिना वक्ष्यमाणत्वादिति योज्यम्। कार्येऽपि व्युत्पत्त्यङ्गीकारे तस्मिन्नेवेत्यवधारणस्य कार्ये जिज्ञासाभावार्थकस्यायोग इत्यत एवकारविषयमाह **प्राथमिकेति**। **परोक्तकार्ये** कालत्रयावमृष्टरूपे। **न विरोधः** नैवकारविरोधः। तच्चोपपादयिष्यत इतीति प्रतीकोपादानपाठः। उपपादयिष्यते चैतदितीतिपाठे अर्थानुवाद इत्याहुः।





**स०व्र०— तच्चोपपादयिष्यत इति** । 'वर्तमानमतीतं च भविष्यदिति च क्रमात् । आकाङ्क्षादियुतं यस्मादि'त्यत्र 'कार्यकालत्रयासंबद्धत्वस्य परेणाभ्युपगतत्वात् न तत्र जिज्ञासे'त्यादिनोपपादयिष्याम इत्यर्थः ।

**विठ्ठ०— उपपादयिष्यत इति** । वर्तमानमतीतं चेत्यादावित्यर्थः ।

**चषकः— तच्चोपपादयिष्यत इति** । कार्ये जिज्ञासाद्यभावदर्शनमित्यर्थः ।

**॥ इष्टे सिद्धविशेषे अर्थे वेदस्य प्राथमिकव्युत्पत्तिसद्भावः ॥**

**तस्य प्रामाणिकैरङ्गीकारः—**

**५३९ सु०— ननु तथाऽपि नेश्वरे वेदस्य प्रामाण्यं संभवति । केवलसिद्धार्थे व्युत्पत्त्यभावात् । कार्य एव लोके व्युत्पत्तिदर्शनात् । 'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक' इति नियमात् । कार्यान्वितत्वेन व्युत्पत्त्यङ्गीकारे चेश्वरस्याप्राधान्यप्रसङ्गेन 'स एवे'त्यवधारणानुपपत्तेः । यद्यपीष्टत्वमिष्टसाधनत्वं च कार्यत्वम्, तच्चास्तीश्वरस्येत्युपपादितम्; तथाऽपि नैतावता व्युत्पत्तिसंभवः, वृद्धचेष्टैकलिङ्गत्वाद् व्युत्पत्तेः । वृद्धचेष्टायाश्च कृतिसाध्यार्थे नियतत्वात् । न हि चन्द्रादावकृतिसाध्येष्टसाधने प्रवृत्तिरस्ति । न चेश्वरस्य कृतिसाध्यताऽस्ति येन तत्र प्रवृत्तिं दृष्ट्वा व्युत्पद्येतेत्यत आह इष्ट इति ।**

## अनु०— इष्टे व्युत्पत्तिरिष्यते ॥

**केवलसिद्धमात्रे व्युत्पत्त्यभावेऽपि इष्टे सिद्धविशेषे व्युत्पत्तिरिष्यत** एव । 'प्रामाणिकैः' इति शेषः ।

**परि०—** द्वितीयमपि बाधकमाशङ्क्य निराह **नन्वित्यादिना** । **लोके व्युत्पत्तिदर्शनादिति** । तत्प्रकारश्च कार्यता चेत्येतदवतारिकायामेव प्रपञ्चित इति भावः । **चेष्टेति** । देहस्पन्दादिरूपप्रवृत्तिः ।

**यादु०— लोकावगतसामर्थ्य इति** । प्रथमाध्यायस्य तृतीयपादे चिन्तितम् । वैदिकौ पदपदार्थौ लौकिकाभ्यां पदपदार्थाभ्यामन्यौ उत नेति संशयेऽन्यावेव । कुतः रूपभेदात् । पदे तावद्रूपभेदो दृश्यते । आत्मशब्द आकारादित्वेन लोके नियतः वेदे तु क्वचिदाकाररहितः पठ्यते । प्रयतन्तु पुरुत्मनेति । ब्राह्मणा इति लोके वेदे त्वन्यथा पठ्यते ब्राह्मणासः पितर इति । अर्थभेदोऽपि स्फुटः । उत्ताना वै देवगवा वहन्तीति श्रूयते । मनुष्यगावस्त्वर्वाञ्चो





वहन्ति । वेदे वनस्पतिर्हिरण्यवर्णः । तथा च श्रूयते देवेभ्यो वनस्पते हवींषि हिरण्यवर्णः प्रति वस्तेऽर्थमिति । तस्माल्लोकवेदयोः पदपदार्थावन्याविति पूर्वपक्षे च सति सिद्धान्तितम् । य एव लौकिकाः पदपदार्थास्त एव वैदिकाः । तथा हि । वर्णास्तावन्नित्यास्तेषां यथा प्रयोक्तृपुरुषभेदेऽप्येकैकपुरुषस्य बहुकृत्व उच्चारणभेदेऽपि त एवामी वर्णा इति प्रत्यभिज्ञानादैक्यं तथा यानि लोके गवाश्व्यादिपदानि तान्येव वेदेऽधीयमानानीत्यबाधितप्रत्यभिज्ञया पदैकत्वमभ्युपेयम् । त्मना देवास इत्यादिपदभेदस्तु क्वाचित्कः । नैतावता बहुतरप्रत्यभिज्ञागतं पदैक्यमपोढुं शक्यम् । अन्यथा सोऽयं देवदत्त इत्यादिप्रत्यभिज्ञातं देवदत्तैक्यमपि देशादिभेदमात्रेणापोद्येत । पदैक्येन चार्थैक्यमवश्यंभावि । अन्यथा वेदे पृथग्व्युत्पत्त्यभावेनाबोधकत्वं प्रसज्येत । यूपावहनादिशब्दानां तदर्थानां वाऽलौकिकत्वेऽपि प्रसिद्धपदसमभिव्याहारात् व्युत्पत्तिः सिध्यति । उत्तानवहनादिकं त्वर्थवादः । अस्तु वा तथा वहनम् । तथाऽपि उत्तानादिशब्दास्तदर्थाश्च लोकसिद्धा एव । तस्माद्य एव लौकिकाः पदपदार्थास्त एव वैदिका इति । एतदभिप्रायकं वार्तिकम् । 'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक' इति । अत एवाह **नियमादिति** । एतदधिकरणन्यायादित्यर्थः । सिद्धमात्र इत्यत्र मात्रशब्दः कात्स्न्यार्थः ।

**वं०प०— सामर्थ्यम्** वाचकत्वम् । ननु केवलसिद्धेऽर्थे व्युत्पत्त्यभावेऽपि कार्यान्विते व्युत्पत्तिरङ्गीक्रियत इति चेत्तत्राह **कार्यान्वितत्वेनेति** । प्रधानं यत्तदन्वितव्युत्पत्तिरित्यङ्गीकार्या । तथाच कार्यान्विते व्युत्पत्तिरित्यङ्गीकारे कार्यस्यैव प्राधान्यं प्राप्तं नेश्वरस्येत्यर्थः ।

**आनन्दः— वृद्धचेष्टा** इत्यत्र चेष्टाशब्देन प्रवृत्तिग्रहः । अकृतिसाध्येऽप्यस्तु प्रवृत्तिरित्यत आह **न हीति** ।

**कं०रा०— येनेति** । विकसितवदनत्वेन लिङ्गेनेत्यर्थः ।

**श्रीनिधि०**— लोके अवगतं लोकावगतम् । लोकावगतं सामर्थ्यं यस्मिन् सः लोकावगतसामर्थ्यः । लोके यस्मिन्नर्थे शक्तिरवगता तच्छक्तियुक्त एव वेदेऽपि तदर्थप्रत्यायक इत्यर्थः । **न्यायात्** नियमात् । **वृद्धचेष्टैकलिङ्गत्वादिति** । केवलवृद्धचेष्टालिङ्गत्वादित्यर्थः । **केवलसिद्धमात्र इति** । कार्यान्वितव्युदासाय केवलग्रहणम् । अत्र सिद्धशब्देन कार्यभिन्नत्वस्य विवक्षितत्वादिति ज्ञेयम् ।

**वा०चं०**— ननूत्तरवाक्ये सिद्धे व्युत्पत्त्युपपादनमनुपपन्नम् । उक्तरीत्या वेदस्य सिद्धार्थपरत्वव्युत्पादने तत्र व्युत्पत्तेरपि सिद्धत्वात् । न च लोके कार्य एव व्युत्पत्तेर्वेदेऽपि तथात्वमिति वाच्यम् । लोकवेदयोः सत्यापि वर्णभेदे केनचित्स्वरच्छान्दसवर्णागमलोपविकारविपर्ययाध्यायानध्यायादिधर्मभेदेन जराराजपदयोरिव क्रमभेदेन व्यपदेशभेदात्स्पष्टभेदस्रुग्यूपादिशब्दसाहचर्याच्च लोकवेदयोः पदानामन्यत्वादुत्ताना वै देवगवा वहन्तीति दर्शनाच्चार्थान्यत्वमिति लोके कार्ये व्युत्पत्तावपि वेदस्य सिद्धे व्युत्पत्तिसंभवात्कार्य एव व्युत्पत्तावपि कार्यान्विततया सिद्धे प्रामाण्यसंभवाच्च । इष्टेष्टसाधनतातिरिक्तकार्याभावस्याधुनैव व्युत्पादितत्वाच्च । तस्मान्नोत्तरभाष्यं सङ्गतमित्यतस्तत्सङ्गमयति **नन्विति** । यत्रार्थप्रतीत्यौपयिकधर्मभेदो यथा पूर्वपदप्रकृतिस्वरत्वे बहुव्रीह्यर्थत्वमन्तोदात्तत्वे





स्वार्थवृत्तित्वं स्मृतितो ब्रह्मब्राह्मणादिषु न्यूनातिरिक्तवशाज्जराराजादिषु क्रमान्यत्वादर्थान्यत्वावसायः तत्र पदभेदोऽभ्युपगम्यत एव। नैवं लोकवेदयोरर्थौपयिकधर्मभेदोऽस्ति। अनियतस्वराणां नियतस्वराणां चार्थान्यत्वस्य स्मृतितो लोकतो वाऽनवगमात्। एवं देवासः त्मनेत्यादिषु लौकिकेभ्यो न्यूनातिरेककृतस्वरूपभेदे सत्यपि तद्रूपस्यार्थान्तरानवगमात्किञ्चिद्रूपभेदेऽपि लौकिकप्रत्यभिज्ञानात्सत्यपि केषाञ्चिद्भेदे सर्वेषां भेदस्याप्रामाणिकत्वात्पदैक्ये च तदर्थावगमादुत्तानादिवचनस्य देवगवीरनूद्योत्तानवहनादिविधानपरत्वाल्लोकवेदयोः पदपदार्थानामैक्यस्य प्रयोगवचनाभावादर्थैकत्वमविभागादित्यधिकरणे सिद्धत्वाल्लोके कार्यपरत्वे वेदेऽपि तत्परत्वमपरिहार्यमित्याशयेन तत्सूत्रवार्तिकमुदाहरति **लोकेति**। सिद्धे व्युत्पत्त्यभावे चोदिते किमसङ्गतमुच्यते इष्ट इतीत्यतः सिद्धविशेषाभिप्रायेणोपात्तेष्टपदतात्पर्यमाह **केवलेति**।

**वा०र०— उत्तरवाक्य इति**। उत्तरभाष्य इत्यर्थः। वक्ष्यति चोत्तरं भाष्यमिति। **अनुपपन्नमिति**। असङ्गतमित्यर्थः। वक्ष्यति च **न सङ्गतमिति**। सिद्धे व्युत्पत्तिसिद्धिरूपप्रयोजनसद्भावात्तद्भाष्यं सङ्गतमेवेत्याशङ्कायामाह **उक्तरीत्येति**। कार्यता च न काचिदित्याद्युक्तरीत्येत्यर्थः। **तथात्वमिति**। कार्य एव व्युत्पत्तिरित्यर्थः। तथा च लोकादृष्टप्रकारेण सिद्धार्थे व्युत्पत्त्यसंभवशङ्कायां तत्परिहाराय तत्र व्युत्पत्तिप्रतिपादकोत्तरभाष्यं सङ्गतमिति भावः। कृतिरिति विकल्पप्रमुखानां सङ्गृहीताष्टपक्ष्यन्तर्गतानां वैतेषामेव तत्तदेकदेशव्यत्यासादीनामाप्तानां चतुःषट्शताधिकसप्तविंशतिसहस्रपक्षाणां वा कृतिविशिष्टव्यक्तिपक्षेणैव सङ्ग्रहेण पार्थक्याभावात्। तदुक्तं वार्तिके। 'गौरित्युच्चारिते सत्यवस्तुनि प्रतिभान्ति नः। जातिर्व्यक्तिश्च संबन्धः' इत्यादि। 'उपन्यासेन चैतेषामित्यादि चे'ति ज्ञेयम्। प्रयोगचोदनाभावादर्थैकत्वमविभागादित्येतदधिकरणे सिद्धत्वादिति वक्ष्यति। तदधिकरणस्यैवं स्थितिः। प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यादिति पूर्वाधिकरणं व्याकरणाधिकरणम्। तत्र च प्रमाणं व्याकरणानुगता गवादिशब्दा एव वाचका न गाव्यादिशब्दा इति निर्णीतिवाचकप्रसङ्गाद्व्यक्तिर्वाच्या। आकृतिर्वा आकृतिविशिष्टव्यक्तिर्वेति विचारायाकृत्यधिकरणं प्रकृतम्। एवं व्याकरणाधिकरणेनाकृत्यधिकरणस्य प्रासङ्गिकी सङ्गतिः। आकृत्यधिकरणारम्भोपपादकतया च मध्ये तदधिकरणोपोद्घातरूपं लोकवेदाधिकरणम्। आकृत्यधिकरणस्य लौकिकशब्दविचारपरत्वे धर्मप्रमित्युपयोगाभावेनानर्थक्यापत्त्या वैदिकशब्दविषयत्वे वाच्ये तेषां च शब्दानां लौकिकेभ्यो भेदे वृद्धव्यवहारादिरूपव्युत्पत्त्युपायस्य लौकिकशब्देषु भावेऽपि वैदिकेष्वभावेन व्युत्पत्त्ययोगप्रसङ्गात्तेषामभेदे वा च व्यवहारादिव्युत्पत्त्युपायेन प्रतिपादितशब्दार्थलोके निर्णयस्य उपयोगाभावेन वेद एव फलतः पर्यवसानोपपत्तेर्लोकवेदगतपदानां तदर्थानां चावश्यं भेदाभावः प्रतिपादनीयः। यद्यपि पदाभेदस्यैव समर्थनं प्रकृतोपयोगि। तथापि सत्यपि शब्दाभेदे त्रिवृच्चर्वाश्वबालादिशब्दानामर्थभेदो लोकवेदयोरस्तीति तद्वदेव सर्वशब्दानामर्थभेदश्चेदाकृत्यधिकरणारम्भानुपपादनमेवेत्यतस्तदर्थानामप्यभेदप्रतिपादनमावश्यकम्। त्रिवृदादिशब्दानां च तेष्वदर्शनात्समेति सूत्रीयवार्तिकोक्तवर्णकान्तरे अर्थभेदनिरूपणं ज्ञेयम्। तथा चाकृत्यधिकरणारम्भोपयोगिपदार्थभेदाभावसमर्थनाय प्रवृत्तस्य लोकवेदाधिकरणस्य तदुपोद्घातताया: प्राप्तिः। एतदधिकरणे च प्रयोगेति सूत्रं सिद्धान्तसूत्रम्। पूर्वपक्षस्तूत्सूत्र एव। तदपि सूत्रमेतदधिकरणीयमेवाकृत्यधिकरणेऽपि पूर्वपक्ष-





समर्पकतया आवृत्या योजयन्तीति आकृत्यधिकरणोपन्यासायैतदेव सूत्रं नयनप्रसादिन्यादौ व्यवहृतम् । केचित्तु प्रयोगेति सूत्रमाकृत्यधिकरणीयपूर्वपक्षसमर्पकं तच्छेष एव । किन्त्वेतदधिकरणसिद्धान्तसमर्पकतयाऽप्याकृष्य योजितमिति वदन्तीति । तदेतल्लोकवेदाधिकरणपूर्वपक्षरीत्या लौकिकवैदिकपदानामन्यत्वान्न लोके कार्य एव व्युत्पत्तावपि वेदे तथात्वप्राप्तिरित्याह **लोकवेदयोरित्यदिना सिद्धे व्युत्पत्तिसंभवादित्यन्तेन । सत्यपि वर्णभेद इति** । अनेन वर्णभेदप्रयुक्तो लोकवेदयोः वर्णात्मकपदभेदो यद्यपि न संभवतीत्युक्तं भवति । केनचिद्धर्मभेदेनेति संबन्धः । अत्र छान्दसत्वं छन्दोऽधिकारविहितत्वं विपर्ययान्तानां विशेषणम् । तथाच वैदिकेषु नियतः उदात्तादिस्वरः लोके चानियतः स्वर इति स्वररूपधर्मभेदेन । ब्राह्मणा इत्यादिरूपेण लोके प्रयोगः । वेदे तु आज्जसेरसुगित्यनेना-वर्णान्तात्परस्य जसोऽसुगागमविधानाद्ब्राह्मणास इत्यत्र छान्दसो वर्णागमः । आत्मशब्दाकारस्य मन्त्रेष्वाङ्यादेरात्मन इति सूत्रेण लोपे त्मन इत्यादिस्थले च्छान्दसो वर्णलोपः । गृभ्णामि ते सौभगत्वायेत्यादौ हृग्रहोर्भश्छन्दसि प्रायेणेति हकारस्य भकारो वर्णविकारः । सुपांसुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजाल इत्युक्तो वा । एवमेषां वर्णसंबन्धिना-मागमलोपविकाराणां भेदेन । व्यत्ययो बहुलमित्याद्युक्तसुप्तिङुपग्रहलिङ्गनराणां काल हलच्स्वरेति सङ्ग्रहश्लोकोक्त सुबादिव्यत्ययो विपर्ययः । स चार्थात्प्रागुक्तस्वरादिव्यतिरिक्तविषय एव पर्यवस्यतीति तद्भेदेन । यत्र स्वरभेदाभावः । गाथाग्रन्थे छान्दोग्यादिषु च । यत्र च गवादिशब्देषु वर्णागमाद्यभावस्तदुभयसङ्ग्रहाय सर्वसाधारणोऽध्यायादिभेद उक्तः । अधीयते अस्यामिति तिथिविशेषो अध्यायपदेनोच्यत । तथा च द्वितीयाद्यध्ययनतिथिरष्टम्यादिका चानध्ययनतिथिरिति तिथिभेदेन । आदिपदेन शिक्षाप्रातिशाख्योक्तोच्चारणधर्माणां तच्चोपनीतानुपनीतत्रैवर्णिक-चातुर्वर्ण्यप्रयोज्यत्वाप्रयोज्यत्वशुश्रूषाराधितगुरुसंप्रदाययदृच्छाप्रयुक्तत्वादीनां च ग्रहणम् । लोकवेदयोरेव तद्भेदेनेति योजना । अत्र दृष्टान्तो **जराराजेत्यादि** । जराराजपदयोः क्रमभेदेनेवेति योज्यम् । तथा च जराराजपदयोर्यथा-क्रमभेदेनान्यत्वं तथा स्वरादिधर्मभेदेन लोकवेदपदानामन्यत्वमित्युत्तरेण संबन्धः । हेत्वन्तरमाह **व्यपदेशेति** । अथशब्दानुशासनमित्युक्त्वा केषां शब्दानामित्याकाङ्क्षामुत्थाप्य लौकिकानां वैदिकानां चेति परिहारस्य शब्दविद्भिरभियुक्तैः कृततया तेषां व्यपदेशभेदादित्यर्थः । हेत्वन्तरं चाह **स्पष्टभेदेति** । लोकप्रसिद्धशब्देभ्यः स्पष्टो भेदो येषामेवंविधा ये स्वरुयूपादिशब्दास्तत्साहचर्यादित्यर्थः । स्वरुयूपादिशब्दानां कदापि लोके प्रयोगाभावेन लोकप्रयुक्तेभ्यः स्पष्टभेदत्वम् । एवं लोकवेदगतपदानामन्यत्वमुपपाद्य तदर्थानामपि भेदमुपपादयति **उत्ताना वै देवगवा इति** । अत्र चशब्देनार्थान्यत्वसाधकं पदान्यत्वं समुच्चीयते । न केवलं पदान्यत्वादिति योज्यम् । उत्ताना वै देवगवा वहन्तीति वाक्ये देवगवोद्देशेनोत्तानवहनविधिर्वा उत्तानवहनोद्देशेन देवगोत्वविधिर्वा न संभवति उत्तानवहनस्य देवगवीनां चाप्रसिद्धत्वेन क्रमेणोद्देश्यत्वायोगात् । वाक्यभेदप्रसङ्गेनोभयोरपि विधानमित्यस्यायोगश्च । नापि लोक-प्रसिद्धगोशब्दार्थानुवादेनोत्तानवहनविधानविधिः । अनुपलम्भबाधात् । लोकप्रसिद्धगोशब्दार्थे देवसंबन्धस्य विधातु-मनुवदितुं वा शक्यत्वाभावाच्च । नापि चोत्तानवहनानुवादेन गोशब्दार्थत्वविधिः । अप्रसिद्ध्या अनुवादायोगादेव । गोशब्दार्थत्वं च लोकप्रयुक्तगोशब्दार्थत्वं न संभवति । ये उत्ताना वहन्ति तेषां लोकप्रयुक्तगोशब्दार्थरूपत्वाभावात् । इतो देवसंबन्धानुवादोपपत्तये वेदप्रयुक्तगोशब्दार्थत्वमेव वाच्यम् । वेदप्रयुक्ततच्छब्दार्थे तु यागसंबन्धेन देव-संबन्धानुवादोपपत्तिः । तथा च ये उत्ताना वहन्ति ते देवानां गोशब्दवाच्या इत्येवं लोकविलक्षणवस्त्वन्तरस्यैव





वेदप्रयुक्तगोशब्दार्थसिद्धिरिति लोकवेदप्रयुक्तपदयोरर्थान्यत्वमिति भावः । एवं सर्वेषां पदानां कार्य एव व्युत्पत्तिरिति मतेऽपि लोकवेदगतपदभेदमाश्रित्य वेदे सिद्धेऽपि प्रामाण्यसंभवो अभिहितः । अधुना अस्तु नाम लोक इव वेदेऽपि कार्य एव व्युत्पत्तिरिति तन्मतनिष्कर्षस्तथापि तन्मते यूपाहवनीयादिशब्दानां सिद्धार्थेऽपि रूपादौ कार्यान्विततया प्रामाण्याभ्युपगमेन तद्वदेव प्रकृतेऽपि सिद्धे ब्रह्मणि कार्यान्विततया प्रामाण्यं संभवत्येवेत्याह **कार्य एवेति** । वेदेऽपीति योज्यम् । एवं सिद्धस्य ब्रह्मणः कार्यत्वासंभवमङ्गीकृत्य प्रकारान्तरेण प्रामाण्यमुपपादितम् । इदानीं कार्यमपि न पराभिमतं कृतिसाध्यत्वे सति कृत्युद्देश्यत्वादिरूपम् । किन्तु तदतिरिक्तमिष्टेष्टसाधनयोरन्यतरदेव । तथाच ब्रह्मणः पराभिमतकार्यरूपत्वाभावेऽपीष्टादिरूपत्वात्तत्र प्रामाण्यमुपपन्नमेवेत्याह **इष्टेति** । लोकवेदाधिकरण-सिद्धान्तसूत्रस्य ह्ययमर्थः । अर्थैकत्वमित्यत्रार्थपदं शब्दोपलक्षणम् । आकृत्यधिकरणारम्भोपपादनाय स्यादभेदस्य मुखतो वाच्यत्वेऽपि प्रागुक्तरीत्या अर्थभेदस्याप्यश्वबालादिशब्दसाम्यपरिहाराय वक्तव्यतयाऽर्थस्य च प्राधान्य-मभिप्रेत्य मुखतस्तदुपपादनं सूत्रे । तथा च लोकवेदयोः शब्दानां तदर्थानां चैकत्वं विज्ञेयम् । कुतः अविभागात् । लोके यानि गवादीनि पदानि तान्येव वेदे अधीयमानानीत्यबाधितप्रत्यभिज्ञानात् । त एव इमे गकारादिवर्णा इति प्रत्यभिज्ञानाद्वर्णानामेकत्वमिव । एवमेकत्वे सत्येव प्रयोगचोदनानां वैदिकानां लोकव्यवहारगृहीतसङ्गतिकपद-सङ्घातरूपाणां भावाद्वाक्यार्थबोधकत्वेन कार्यक्षमत्वादेकत्वाभावे च वैदिकपदानामगृहीतसङ्गतिकतया बाधक-त्वायोगेन वैदिकचोदनानामभावादसत्समत्वप्रसङ्गादिति । तथा च पदानामभेदो वर्णाभेदेनोक्तो भवति । न चैतावता पूर्वपक्षनिराससंभवः । तेन वाक्यानधिकरणोक्तरीत्या स्वरादिधर्मभेदेन पदभेदशङ्कनात् । धर्मभेदस्य च पदभेद-कत्वमन्यत्र संभवदपि लोकवेदगतगवादिपदेषु न संभवतीत्यस्योपपादनसापेक्षस्यावगन्तुमशक्यत्वादित्यतः सत्यं योऽर्थे प्रतीत्यौपयिको धर्म इत्यादि शास्त्रदीपिकानुसारेण स्वरादिभेदस्य व्यवस्थया पदभेदकतायाधिकमुपपादयति **यत्रार्थप्रतीतीति** । अर्थप्रतीत्युपयोगिधर्माणां भेद इत्यर्थः । अर्थविशेषप्रतीतिजनकतावच्छेदकधर्माणां भेद इति यावत् । अनेन धर्मभेदमात्रं न भेदकम् । नानापुरुषोच्चारितादौ सत्यपि धर्मभेदे पदभेदाभावादिति सूचयति । व्याकरणस्मृतितो धर्मभेदस्थलमुदाहरति **पूर्वपदेति** । स्थूलपृषतीमनड्वाहीमालभेतेत्यादाविति शेषः । समस्यमान-पदयोर्यत्पूर्वपदं तस्य यः स्वरस्तस्य प्रकृत्या स्वभावेनावस्थाने सतीत्यर्थः । बहुव्रीहौ प्रकृत्या पूर्वपदमिति सूत्रेण समासस्येत्यन्तोदात्तस्वररूपसमासस्वरापवादेन पूर्वपदप्रकृतिस्वरविधानात्तत्स्वरूपत्वे बहुव्रीह्यर्थत्वमन्यपदार्थपरत्वं ज्ञायते । स्थूलानि पृषन्ति यस्यामिति । यदा तु स्थूला चासौ पृषती चेति कर्मधारयो विवक्षितस्तदा अन्तोदात्तत्वे समासस्यान्तोदात्तताविधायकं समासस्येति सूत्रेणान्तोदात्तत्वे सति द्वयोरपि समस्यमानपदयोः स्वार्थवृत्तित्वं ज्ञायते । **स्मृतित इति** । व्याकरणस्मृतित इत्यर्थः । अवगम्यत इति शेषः । अधिकमुपपादनमानन्दमयनयटीका तद्व्याख्यानयोरवगन्तव्यम् । लोकतो धर्मभेदस्थलमुदाहरति **ब्रह्मेत्यादिना** । न्यूनातिरिक्तयोर्यथाक्रमं संबन्धः । वशादर्थान्यत्वावसाय इत्युत्तरेणान्वयः । उक्तस्थलेष्वर्थप्रतीत्यौपयिकधर्मभेदोपपादनस्य फलमाह **तत्रेति** । यत्रेति पूर्वेण संबन्धः । **नैवमिति** । स्थूलपृषत्यादिशब्देष्विवार्थविशेषप्रतीतिजनकतावच्छेदकं धर्मभेदो लोकवेदप्रयुक्त-पदयोर्नास्तीत्यर्थः । **स्मृतित इति** । व्याकरणस्मृतित इत्यर्थः । पद्यते गम्यते अनेनेति हि पदम् । अतो गमकस्वरूपस्य कियतापि गमकस्वरूपान्तर्गतरूपेण भेदे सति पदभेदः । गमकस्वरूपानन्तर्गतस्वरादिसद्भावमात्रेण तु न तद्भेद इति





भावः । अस्तु तर्हि ब्रह्मब्राह्मणादिषु भेदकत्वेन क्लृप्तन्यूनातिरेकाभ्यामेव पदभेद इत्यत आह **एवमिति** । न्यूनेति भावप्रधानो निर्देशः । देवास इत्यत्रातिरेककृतेति यथायोग्यसंबन्धः । **लौकिकेभ्यः** देवाः आत्मनेत्यादिशब्देभ्य इत्यर्थः । **तद्रूपस्येति** तृतीयार्थे षष्ठी । तद्रूपेणेत्यर्थः । तद्रूपस्य यथार्थान्तरं तदनवगमादिति वा योज्यम् । भेद-प्रमाणाभावमभिधायाभेदे स्वाभिप्रेते प्रमाणमाह **किञ्चिदिति** । लोकवेदयोः किञ्चिद्रूपभेदेऽपि लौकिकमेवेदं वैदिकं पदमिति लौकिकपदैक्यप्रत्यभिज्ञानादित्यर्थः । पदाभेद इति शेषः । देशवस्त्वादिभेदे विद्यमानेऽपि सोऽयं देवदत्त इति प्रत्यभिज्ञया देवदत्तैक्यसिद्धिदर्शनादिति भावः । स्पष्टभेदस्वरूपं यूपादीत्युक्तं निरस्यति **सत्यपि चेति** । न हि क्वचिद्भेदो दृष्ट इति भेदकाभावस्थलेऽपि तदभ्युपगमो न्याय्य इति भावः । **तदर्थेति** । लोकावगतपदार्थस्यैव वैदिकावस्थायामप्यवगमो युक्तः । अन्याय्यं चानेकार्थत्वमिति न्यायादिति भावः । एवं पदान्यत्वसाधकान्यया कृत्यार्थत्वान्यत्वसाधकतयोत्ताना वै देवगवा वहन्तीति दर्शनाच्चेत्यनेनोक्तलोकप्रयुक्तपदार्थापेक्षया वेदप्रयुक्तपदार्थस्य वैलक्षण्यं नास्तीत्याह **उत्तानादिवचनस्येति** । **देवगवीरिति** । न च देवगवीनामुत्तानवहनस्य चाप्रसिद्धेः अनुवादा-द्यनुपपत्तिरित्युक्तमिति वाच्यम् । मनुष्यगोष्वेव देवसंबन्धानुवादाभिप्रायेण याः गावो यागद्रव्यत्वेन दक्षिणात्वेन च देवसंबन्धिन्य इत्यर्थो हि देवगवा इत्यस्येत्यदोषात् । विधानपदं प्रतिपादनपरम् । उत्तानवहनादिप्रतिपादनपरत्वं तु स्तुतित्वेन । अयमाशयः । दानादिनिमित्तेन देवसंबन्धिगोषूत्तानवहनमप्रसिद्धमपि स्तुत्यर्थमनुकीर्त्यते । न चालम्बनाभावः । पृथिवीगोलकत्रैलोक्यभ्रमणादिना देवा अपि कदाचिदिमं लोकमुपरि पश्यन्तीत्यतः उपरिस्थितासु चलत्सूत्ताना इव तां दृश्यन्त इति देवान्प्रत्युत्तानवद्दृष्टेरालम्बनत्वादिति । तमेतमभिप्रायं सूचयितुमेव गुरुपादै-र्देवगवीरनूद्योत्तानवहनादिविधानपरत्वादित्येतत्स्थाने विध्यन्तरशेषत्वेन प्रशंसापरत्वादित्युपरि टीका कारिता । तथैव पाठो वाच्य इत्यभिप्रायेऽपि तत्पाठस्योक्त एवाशय इति ज्ञेयम् । यथा जलेनावादिकमुत्तानं सन्नरान् तारयति । तद्वत् गोमेधकारिणं पुरुषं गावो नरकात्तारयन्तीति तारणासाधारणकारणत्वादुत्तानत्वमिति नयनप्रसादिन्यां टीका । गुरुपादलिखितविविक्तपर्णगताः शास्त्रदीपिकाटीकाद्युक्ताः प्रकारा अप्यत्रानुकूलतया **योज्याः** । परत्वादित्यनन्तर-मुक्तरीत्या साधकबाधकभावाभावाभिप्रायेणेति पूरणीयम् । **तत्सूत्रेति** । प्रयोगचोदनेति सूत्रेत्यर्थः । कार्ये व्युत्पत्तावपि कार्यान्विततया सिद्धेऽपि वेदस्य प्रामाण्यं किं न स्यादित्यत आह **कार्यान्वितत्वेनेति** मूलम् । **उपपादितमिति** । इष्टेष्टसाधनतातिरिक्तकार्याभावस्याधुनैवोपपादितत्वादिति भावः । **सिद्धविशेषेति** । अनेनेष्टपदस्य सिद्धविशेष एवार्थो अभिमतः । तथैव व्याख्यानमुपर्येव शिष्यैर्ज्ञेयम् । केवलेत्यादिकं तु तात्पर्यकथनमिति सूचितम् ।

**स०व्र०— केवलसिद्धार्थ इति** । अकृतिसाध्येष्टसाधन इत्यर्थः । **कार्य एवेति** । कृतिसाध्येष्टसाधन एवेत्यर्थः । कार्य एव व्युत्पत्तिदर्शनादित्यस्य पराभिप्रेतमर्थमज्ञात्वोक्तरीत्येष्टसाधनत्वरूपकार्यत्वस्य सत्त्वेन तत्र व्युत्पत्तिरिति भावेन शङ्कते **यद्यपीति** । **तथापीति** । तथा च न तावन्मात्रं कार्यत्वमित्यर्थः ।

**विठ०— लोकावगतसामर्थ्य इति** । लोके गृहीतसङ्गतिक इत्यर्थः । ननु लिङाद्यतिरिक्तपदानां कार्यान्वितार्थे व्युत्पत्त्यङ्गीकारादीश्वरेऽपि कार्यान्विततया व्युत्पत्तिरुपपद्यत इत्याह **कार्येति** । नन्वस्तु कार्य एवं





सङ्गतिग्रहणं तथापीश्वरस्याप्युक्तरीत्या कार्यत्वाद्वेदानां तत्परत्वमुपपद्यत इत्याशङ्क्य निराकरोति **यद्यपीति** । **सिद्धमात्र इति** । इष्टातिरिक्ते उदासीने सिद्ध इत्यर्थः । मात्रशब्दः कात्स्न्यार्थे इति वा ।

**चषकः— लोकावगतसामर्थ्य इति** । प्रमाणलक्षणे स्मृतिचरणे । प्रयोगचोदनाभावादर्थैकत्वमिति भागादिति दशमाधिकरणे । वाचकप्रसङ्गाद्वाच्यविशेषोऽत्र चिन्त्यत इति प्रासङ्गिकी सङ्गतिः । लौकिकेभ्यः शब्देभ्योऽर्थेभ्यश्च वैदिकाः शब्दा अर्थाश्च भिन्ना उत त एवेति सन्देहे एते लौकिका एते वैदिका इति व्यपदेशभेदात् ब्राह्मणासः पितरः सौम्यास इति ब्राह्मणाः सौम्या इति लौकिकेभ्यो रूपभेदादुत्ताना वै देवगवा वहन्तीति देवगवानामुत्तानवाहित्वोक्त्याऽधोवाहिलौकिकबलीवर्देभ्यो अर्थान्यत्वस्य स्फुटत्वादन्य एवेति पूर्वपक्षे प्राप्ते वर्णानामैक्यप्रत्यभिज्ञानात्तदात्मकपदानामप्यैक्यमेव लोकवेदयोः पदैक्यादेव चार्थैक्यम् । व्यपदेशभेदस्त्व-प्रयोजकः अर्थभेदोपाधिकभेदस्यैव शब्दभेदकल्पकत्वेनात्र तदभावात् । क्वाचित्कव्यपदेशादिभेदमात्रेण बहुस्थलेषु प्रत्यभिज्ञावगतशब्दैक्यबाधायोगात् । उत्ताना इत्यादेस्तु यज्ञद्रव्यार्थत्वेन देवसंबन्धिनो ये मनुष्याणां गावस्तत्स्तुत्यर्थत्वेन नार्थभेदोऽपीति सिद्धान्तितम् । सूत्रार्थस्तु व्रीहिभिर्यजेतेत्यादिप्रयोगचोदनानां भावात्तासां च शब्दार्थैक्यपक्ष एवार्थप्रत्यायकतोपपत्तेः अर्थैकत्वमिति शब्दैकत्वस्याप्युपलक्षणमेतदिति । एतत्सूत्रीयमेव लोकावगतेति वार्तिकमुदाजहारेत्यवसेयम् । **सिद्धमात्रे** सिद्धसामान्ये ।

तस्य संभावितत्वम्—

**५४० सु०— तत्कथमित्यत आह अत्तीति ।**

**अनु०— अत्यपूपांस्तव भ्रातेत्यादावावापतोऽपि च ॥**
**उद्वापाद्वर्तमानत्वादाकाङ्क्षादिबलादपि ॥**
**बालो व्युत्पत्तिमप्येति**

**इत्यादौ** वाक्ये प्रयुक्ते सति, **व्युत्पत्तिम् एतीति** संबन्धः । **अपि**शब्दचशब्दावावापो-द्वापयोरितरेतरयोगे वर्तेते । **आदि**ग्रहणेनाङ्गुलिप्रसारणभ्रूविक्षेपच्छोटिकावादनादिकमुच्यते ।

**गु०दी०— अपि च शब्दौ** इत्युपलक्षणम् । अप्येतीत्यत्र विद्यमानोऽपिशब्दः बाल इत्यनेन संबध्यते इत्यपि द्रष्टव्यम् । छोटिकावादनपदेनाङ्गुष्ठमध्याङ्गुल्योरन्योन्यघातजो ध्वनिरुच्यते । आदिपदेन करसंस्फोटनमुच्यते ।

**आनन्दः— तत्कथमिति** । सिद्धेऽप्युत्पत्तिप्रकारः कथमित्यर्थः । इत्यादौ वाक्य इत्यत्र वाक्यस्य शक्तिग्रहादिकरणत्वं प्रतीयते । तन्न तस्य पुरुषाधिकरणत्वादित्यत्राह **इत्यादाविति** ।





**श्रीनिधि०— आदिग्रहणेनेति**। आकाङ्क्षादिबलादपीत्यत्रत्येनेति भावः। छोटिकावादनपदेन शब्दविशेष-जनक अङ्गुष्ठमध्याङ्गुल्योः संयोग उच्यते।

**वा०चं०—** इत्यादिवाक्यस्य व्युत्पत्त्यनधिकरणत्वेऽपि तत्प्रयोगस्य व्युत्पत्तिहेतुत्वमस्तीत्याशयेन प्रयुक्तपदाध्याहारं सतिसप्तमीत्वं च प्रदर्शयन्नेव व्यवहितत्वादन्वयं च दर्शयति **इत्यादाविति**। परस्परनिरपेक्ष-पदार्थानामेकस्मिन्प्रतिसंबन्धिन्यन्वये हि समुच्चयः। न चात्रावापोद्वापयोः परस्परनिरपेक्षयोर्व्युत्पत्तिप्रयोजकत्वमपि तु सापेक्षयोरेवेति समुच्चयासंभवादितरेतरयोगोऽत्र द्रष्टव्यः। स हि परस्परापेक्षाणामवयवभेदानामपगमेन समुच्चयरूपता-मापन्नानामेकस्मिन्नर्थेऽन्वये भवति यथा देवदत्तयज्ञदत्ताभ्यामिदं कार्यमिति। न ह्येकापाये तद्भवति। उद्भूतावयव-भेदत्वाच्च द्विवचनादिकमिति। तथा चात्रापिचशब्दयोः समुच्चयार्थत्वानुपपत्तावपीतरेतरयोगार्थत्वोपपत्तिरित्याशयेनाह **अपिचशब्दाविति**। आकाङ्क्षादीत्यत्रादिपदेन योग्यतासत्त्योर्ग्रहणे तयोः शाब्दबोधोपयोगित्वेन व्युत्पत्त्युपयोगा-भावात्पूर्वपदप्रसञ्जिताकाङ्क्षापूरकत्वरूपाकाङ्क्षायाश्चान्वयबोधोपयोगित्वेऽपि जिज्ञासाया एवात्राकाङ्क्षापदेन ग्रहणेन तस्या अग्रहणाद् व्युत्पत्त्युपयोगिनस्तत्त्वनिर्णयो स्वशब्देनोपात्तस्याङ्गुलिप्रसारणादेरेवादिशब्देनोपादानं युक्तमित्या-शयेनादिपदसङ्ग्राह्यं दर्शयति **आदीति**। यद्वा वर्तमानत्वोक्त्यैव प्रतिसंबन्धिनां प्रत्यक्षत्वोपपत्त्या सन्निधेरर्थाद्योग्य-तायाश्च सिद्धत्वेनादिपदस्य तदर्थकत्वासंभवात्प्रकृतोपयुक्ततत्सङ्ग्राह्यकथनमेतत्। अत एवात्र तत्सङ्ग्राह्यमन्यदुक्त्वा वर्तमानमतीतं चेति वाक्ये आकाङ्क्षादीत्यादिपदेन योग्यतासन्निधिग्रहणं वक्ष्यतीति ध्येयम्। यद्वा न केवलं योग्यतासत्त्योः सजातीययोरेवादिपदसङ्ग्राह्यत्वं किन्तु व्युत्पत्त्युपयोग्यङ्गुलिप्रसारणादेर्विजातीयस्यापि दर्शयितु-मिदमिति द्रष्टव्यम्। अत्र छोटिकावादनादेर्वर्तमानत्वस्य च नोपयोगो दृश्यते।

**वा०र०— अनधिकरणत्वेऽपीति**। तथा चाधिकरणसप्तम्यसंभवेऽपीत्युक्तं भवति। सति सप्तमीत्वं प्रदर्शयन्नित्युत्तरेण संबन्धः। सतिसप्तम्या हेतुत्वं प्रतिपादनीयं चेद्वाक्यस्य हेतुत्वाभाव इत्यतस्तदुपपादकमुक्तं तत्प्रयोगेऽस्येत्यादि। समुच्चितेतरेतरयोगशब्दयोरर्थभेदं चार्थे द्वन्द्व इत्येतत्सूत्रविचारानुसारेण दर्शयन् प्रवृत्ते इतरेतरयोगाङ्गीकारे निमित्तं च दर्शयति **परस्परनिरपेक्षेति**। **आकाङ्क्षादीत्यत्रादिपदेनेति**। व्युत्पत्तावपि असन्निहितत्वायोग्यत्वयोः प्रतिबन्धकतया सन्निधियोग्यतयोरावश्यकत्वेऽपि न शब्दबोध इवोपयोग इत्याशये-नेदम्। एतदस्वरसादेव पक्षान्तरमाह **यद्वेति**। आदिपदेन तदुभयस्यापि ग्रहणेऽपि स्पष्टत्वादत्राकीर्तनम्। अस्पष्टाङ्गुलिप्रसरणादेरेव च ग्रहणमित्युपपत्तावनुक्तिर्न स्वरसेत्यपरितोषात्पक्षान्तरमाह **यद्वा न केवलमिति**। आकाङ्क्षाशब्दवाच्यजिज्ञासाया इव योग्यतासन्निध्योर्व्युत्पत्त्युपयोगो वर्तमानमतीतं चेत्येतदनुव्याख्यानव्याख्या-नानुसारेण निरूपणीयोऽस्ति।

**स०व्र०— इतरेतरसमुच्चयो वर्तेत इति**। यत्र परस्परापेक्षयैकक्रियान्वयः तत्रेतरेतरसमुच्चयः यथा देवदत्तयज्ञदत्ताभ्यां कृतमित्यादाविति भावः।

**विठ्ठ०— आदिग्रहणेनेति**। आकाङ्क्षादीत्यादिपदग्रहणेनेत्यर्थः।





**५४१ सु०— अयमर्थः । छोटिकावादनादिना अव्युत्पन्नमभिमुखीकृत्य अपूपानदन्तं तद्भ्रातरमङ्गुलीप्रसारणादिना प्रदर्श्य 'देवदत्त तव भ्राताऽयमपूपानत्ती'ति वाक्ये प्रयुक्ते अपूपादिपदार्थानां वर्तमानत्वेन प्रतिसंबन्धिनां प्रत्यक्षत्वोपपत्तेः । इष्टत्वेनाकाङ्क्षाया जिज्ञासायाः संभवात् । पदसमुदायस्यार्थसमुदाये तावत्सामान्यतः शक्तिमवधार्य पुनः तव भ्राता पयः पिबती'ति प्रयोगान्तरे यदर्थप्रक्षेपे यच्छब्दप्रक्षेपो यदर्थोद्धारे च यच्छब्दोद्धारः स तस्य वाचक इति विशेषतोऽप्यवधारयतीति किमनुपपन्नम् । तथा 'इयं तव माता' 'अयं तव पिते'त्यादिवाक्ये प्रयुक्तेऽपि पूर्ववद्व्युत्पत्तिः संभवति ॥ किञ्च 'देवदत्त पुत्रस्ते जात' इति वाक्यश्रवणसमनन्तरं विकसितवदनं देवदत्तमवलोक्य पार्श्वस्थो व्युत्पित्सुस्तेन लिङ्गेन देवदत्तस्य हर्षोदयमनुमाय तस्य चात्मदृष्टान्तेन प्रियार्थज्ञानं हेतुमवगम्य तस्य च शब्दश्रवणे सत्येव भावाच्छब्दस्य सामान्यतस्तत्र शक्तिं विदित्वा प्रियार्थं स्वदृष्टं पुत्रजन्म परित्यज्य अन्यस्य कल्पनाऽयोगात्तदेवेति ज्ञात्वा पुनरावापोद्धाराभ्यां विशेषतोऽप्यवगच्छति ॥**

**बिन्दुः— छोटिकावादनादिनेति** । नन्वितःपूर्वमव्युत्पन्नस्य कथमस्माद्वाक्यात् व्युत्पत्तिरिति चेत् । किमिह कथम् । न हि जिघृक्षितशक्तिकस्यापि शब्दस्य पूर्वमर्थः संभवदुपस्थितिकः । तथात्वे चाप्तवाक्यात् । क्वापि शक्तिग्रहो न स्यात् । अयं गौः । वृद्धिरादैच् इत्यादीनि ह्याप्तवाक्यानि शक्तिग्राहकाणि । न चैतद्वाक्यार्थावगमकाले वृद्ध्यादिपदार्थोपस्थितिः संभवति संभवे वोपदेशवैयर्थ्यात् । यदि चैतादृशस्थले उद्देश्यसमर्पकपदार्थोपस्थितौ सत्यां श्रावणप्रत्यक्षोपस्थितः शब्दः प्रकारीभूय भासते । वाच्यवाचकभावस्तु संसर्गविधयेति मतं तर्हि समं प्रकृतेऽपि । तदेतदाह देवदत्त तव भ्रातेत्युद्देश्यपदार्थम्, **अपूपानत्तीति** वाक्यस्य पदस्थानाभिषिक्तत्वात् । अत एवाह **पदसमुदायस्यार्थसमुदाये तावदिति** । इयमेव च उद्भिदा यजेतेत्यादौ संज्ञासंज्ञिभावावगमे गतिः । उक्तं च तन्त्रवार्तिके— ''पदमज्ञातसन्दिग्धप्रसिद्धैरपृथक्श्रुति । निर्णीयते निरूढं तु न स्वार्थादपनीयते'' इति । ननु प्राथमिकव्युत्पत्तौ भ्रान्तादिपदेष्वप्यव्युत्पन्नस्य कथमुद्देशपदार्थावगतिरपि चेत् । मास्तु अत्रैव संपूर्णशक्यस्य परिदृश्यमानार्थसमुदाये शक्तिग्रहसंभवादित्याशयेनोक्तमङ्गुलिप्रसारणादिना प्रदर्श्येति । नन्वेवं कथमाप्तवाक्यमत्र मानं स्यात् । सर्वपदानामव्युत्पन्नत्वेन पदार्थोपस्थितेरभावादिति चेन्न । परमते पदजन्यपदार्थोपस्थितेरतन्त्रत्वात् प्रत्यक्षोपस्थितान्कलापानुद्दिश्य पचतीति प्रयुक्ते तन्मते शाब्दबोधस्येष्टत्वात् । अत एव चाहुः ''पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः । खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीरि''ति । अत एव तेषां मते इषेत्वेत्यादौ भाट्टानामिव न छिनद्मीत्यादिपदानामध्याहारः किन्तु अर्थस्यैवेति स्थितिः ।





स्वमते तु इयं ते माता पुत्रस्ते जात इत्यादिना व्युत्पादनमुपपादयिष्यति । यस्त्वत्यन्तबालोऽङ्गुलिप्रसारणेनापि प्रदर्श्यमानानर्थान्नाकलयितुमीष्टे, सोऽत्र व्युत्पादने नाधिक्रियते किन्तु परकीयचेष्टास्वबोधोद्देश्यकेति प्रतिसन्धान एव । तदेतदाह **छोटिकावादनादिना अभिमुखीकृत्येति** । तद्वादनेऽप्याभिमुख्यमनापन्नो नाधिकारीति भावः । यद्वा प्रत्यक्षोपस्थितार्थसमुदाये मनसा पदसमुदायसंसर्गावगतिरस्तु योग्यत्वात् । अभेदादिसंसर्गस्य च श्रावणत्वचाक्षुषत्वादिविरुद्धधर्माधिकरणयोः पदार्थसमुदाययोर्बाधेनैवासिद्धेः । नन्वङ्गुलिप्रसारणादिना प्रदर्शितपदार्थेषु कटककुण्डलादयो भ्रातृशरीरनिष्ठा अपि संभवन्तीति तत्रापि शक्तिग्रहापातः यदि च भूयो दर्शनमप्यपेक्षितं तर्हि किमपराद्धं वृद्धव्यवहारेण । ततोऽपि गुरुतरोपायस्य त्वया समाश्रयणादिति चेत् । सत्यम् । अस्त्यत्र महान् विशेषः । सन्निकृष्टविप्रकृष्टार्थविषयत्वेनोक्तोपायद्वयस्य वैलक्षण्यात् । भूयोदर्शनादस्तु व्यवहार एव शक्तिग्राहक इति मन्यमानस्य तवाप्यावश्यकः । अन्यथा देवदत्त गामभ्याजेति प्रयोजकवृद्धोदीरितवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्योष्णीशधारणोपानत्सन्नहनदण्डादानप्रभृतयो भूयांसो व्यापारा दृश्यन्त इति तत्रैव शक्तिग्रहापात इत्यनुपदमेव वक्ष्यतीत्यलम् ।

**परि०— छोटिकावादनेति** । अङ्गुलीद्वयाग्रमेलनेन क्रियमाणः शब्दः । इत्यादावित्युक्तादिपदार्थं व्यनक्ति **तथेयन्तवेत्यादिना** । तथेति मूलपदानुकारित्वात् 'तेमयावेकवचनस्ये'ति न शङ्क्यम् । 'वा ल्यपी'त्युक्तेः अवगम्येति साधु ।

**आनन्दः—** नन्वङ्गुलिप्रसारणादीनां शक्तिग्रहहेतुत्वं प्रत्येकं वा मिलितानां वा । नाद्यः एकैकस्मात् । तदुत्पादात् न द्वितीयः । तर्हि तेषां केन प्रकारेण हेतुत्वमिति न ज्ञायत इत्यत आह **अयमर्थ इति** । आकाङ्क्षायामिष्टत्वं हेतुः ज्ञानाभावे इच्छाया असंभवात् । प्रतिसंबन्धिज्ञानं केनेत्यत आह **प्रतिसंबन्धिनां पदार्थानां प्रत्यक्षत्वोपपत्तेरिति** । तत्र हेतुः **वर्तमानत्वेनेति** । सन्निहितत्वेनेत्यर्थः । सिद्धे व्युत्पत्तेरुदाहरणान्तरमाह **किञ्चेति** ।

**कं०रा०— प्रियार्थश्चेति** । प्रियार्थश्च तदेव पुत्रजन्म वेति ज्ञात्वेति संबन्धः । तत्र हेतुः स्वदृष्टं पुत्रजन्म परित्यज्यान्यस्य प्रियार्थस्य कल्पनायोगादिति । **प्रियार्थं स्वदृष्टमिति** । प्रियार्थरूपं स्वदृष्टपुत्रजन्मपरित्यज्यान्यस्य कल्पनायोगात्तदेव पुत्रजन्मैव प्रियार्थ इति ज्ञात्वेति योजनीयम् ।

**श्रीनिधि०— प्रतिसंबन्धिनामिति** । शब्दस्येति शेषः । प्रतिसंबन्धिनां पदार्थानामित्यन्वयः । **इष्टत्वेनाकाङ्क्षाया जिज्ञासाया इति** । प्रतिसंबन्धिनां पदार्थानां प्रत्यक्षत्वेन कथं जिज्ञासेति चेन्न । सामान्यतो ज्ञानेऽपि विशेषतो ज्ञानेच्छयोः पुरोवर्तित्वेनैव हि तेषां ज्ञानम् । नन्वपूपादिपदार्थानां न स्वरूपेणेष्टत्वम् । सुखदुःखाभावेतरत्वात् । किन्नामेष्टसाधनत्वेन । न चेष्टसाधनत्वं तेषामनुभूतं बालेनेति चेन्न । अपूपादीनां बुद्धिपूर्वकमद्यमानत्वेन





भ्रात्रादीनां तु स्वेष्टसाधनाङ्गादिमात्रत्वेन स्वानिष्टमशकादिवारकत्वेन चेष्टसाधनतानुमानसंभवात् । एवमपि विशेषतो ज्ञानं कथमिष्टमिति चेन्न । इष्टसाधनव्यवहारादिहेतुत्वेन तस्यापीष्टत्वादिति सिद्धार्थस्थलेऽपि वाक्यप्रयोगे सिद्धाथ व्युत्पत्तिरिति न नियम इत्याशयेनाद्यादिपदगृहीतम् । क्रियापदसमभिव्यवहार एव व्युत्पत्तिरिति न नियम इत्याह **तथेयं तव मातेति** । सर्वत्र छोटिकावादादिनैवाभिमुखीकृत्य तं वाक्यान्तरं दर्शयति **किञ्चेति** ।

**वा०चं०**— आकाङ्क्षाया आवापोद्वापयोश्चैकप्रकारेण शक्तिबोधोपायत्वं च प्रतीयतेऽतस्तदर्थविशेषे तेषामुपयोगं दर्शयति **अयमर्थ इति** । इत्यादावित्यादिपदसङ्गृहीतं समानन्यायं प्रयोगान्तरं तत्त्वनिर्णये कण्ठतः उपात्तं दर्शयति **तथेति** । विजातीयप्रवृत्तिप्रकारं सिद्धविषयं प्रयोगान्तरमप्यादिपदसङ्गृहीतमित्याशयेनाह **किञ्चेति** ।

**विठ्ठ०**— एवं मूलयोजना 'तव भ्राता अपूपानत्ति' 'तव भ्राता पयः पिबति' 'इयं ते माता' इत्यादौ वाक्ये प्रयुक्ते तत्र च प्रयोगान्तरे केषाञ्चित्पदानामावापात्प्रक्षेपादपि केषाञ्चिदुद्वापात् उद्धाराच्च तत्पदप्रतिसंबन्धिनामपूपादिपदार्थानां वर्तमानत्वात्प्रत्यक्षतया सन्निहितत्वोपपत्तेरिष्टत्वेनाकाङ्क्षायाः विद्यमानत्वात्तत्राङ्गुल्यग्रनिर्देशादिबलाच्च बालोऽपि व्युत्पत्तिमेतीति । जिज्ञासाया संभवादित्यतः परं सन्निहितापूपादिविषयाङ्गुल्यग्रनिर्देशादिसद्भावाच्चेति ग्राह्यम् । इत्यादावित्युक्तादिपदार्थं व्यनक्ति **तथा इयं तव मातेति** । अत्र विना छोटिकावादनादीनित्यभिप्रेत्य केवलोपदेशमात्रेणैव व्युत्पत्तिरिति भावः । एवमनुमानेनापि व्युत्पत्तिं दर्शयन् परेण स्वग्रन्थे 'देवदत्त पुत्रस्ते जात' इत्यादिवाक्यप्रयोगादनुमानादिसिद्धविषयेऽपि व्युत्पत्तिरिति न नियम इत्याशङ्क्य दूषणमुक्तं तदनुपपन्नमिति । वक्तुं तस्मिन्नेव वाक्ये व्युत्पत्तिप्रकारं स्वयमाह **किञ्चेति** । पुनरावापोद्धाराभ्यामिति 'देवदत्त पुत्रस्ते आगतः' 'कन्या ते जाता' इत्यादिप्रयोगान्तरे आगत इत्यादिपदानामावापोद्वापाभ्यामित्यर्थः ।

**५४२ सु०— यदत्रोक्तम् 'अतीतानागतवर्तमानानामनेकेषां प्रियाणां संभवाद्विशेषावधारणानुपपत्तिः' इति । तदयुक्तम् । सन्निहितस्वदृष्टपरित्यागेनान्यकल्पनानुपपत्तेरुक्तत्वात् । तत्रैव प्रियासुखप्रसवादीनां संभवेऽपि प्रयोगान्तरेष्वावापोद्धाराभ्यां विशेषावधारणं युज्यते । अन्यथा 'गामानये'ति प्रयुक्तो दण्डादिकमप्याददानो दृश्यत इति कथं तवापि विशेषावधारणम् । यदुक्तं 'यावती सिद्धार्थपरादपि वाक्याद् व्युत्पत्तिः सा सर्वा प्रथमभाविकार्यव्युत्पत्त्यनन्तरभावित्वात्कार्यव्युत्पत्तिरेवे'ति । तन्निरासायोक्तं बालोऽपीति । यद्यपि 'इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबती'त्यादिवाक्ये व्युत्पन्नेतरपदार्थो ज्ञातविभक्त्यर्थश्च अविदितमधुकरप्रातिपदिकार्थो यं मधुपानकर्तारं पश्यति तं मधुकरशब्दार्थं जानाति, तथा 'पिकः कोकिल' इत्युपदेशाद्व्युत्पद्यते, तथा 'सास्नादिमान् गौरि'ति वाक्याद् व्याप्तिमवधार्य सास्नादिमति पिण्डे गोशब्दवाच्यतामनुमिनोतीत्येवमादिरानन्तरिकी व्युत्पत्तिः; तथाऽपि**





**व्युत्पादिता बालस्याप्युक्तविधया संभवत्येव । किञ्चास्या व्युत्पत्तेरनन्तरभावित्वेऽपि कार्य-व्युत्पत्त्यधीनत्वं कुतः । कमलादिपदानामुक्तरीत्या योग्यान्वितस्वार्थ एव व्युत्पत्त्युपपत्तेरिति ।**

**परि०— यदत्रोक्तमिति** । प्राभाकरैः स्वग्रन्थे उक्तमित्यर्थः । **उक्तत्वात्** । पूर्ववाक्य इति भावः । **प्रियासुखेति** । प्रियायाः सुखप्रसवेत्यर्थः । **यदुक्तमिति** । स्वग्रन्थ इति ज्ञेयम् । न तु पूर्वपक्ष्यनुवादप्रस्ताव इति भ्रमितव्यम् । अप्येतीत्यत्रस्थापिपदं संयोज्याह **बालोऽपीति** । ननु 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धा' इत्युपायान्तरमपि व्युत्पत्तावुक्तम् । तच्च प्राथमिककार्यव्युत्पत्त्यधीनम् । अन्यथोपायान्तराद् व्युत्पत्तिग्रहो न स्यादित्यतस्तदनूद्य समाधत्ते **यद्यपीत्यादिना** । **आनन्तरिकीति** । तथाच व्यवहारतो जायमानव्युत्पत्तेः प्राथमिकत्वात्सैव प्रदर्शिता मूलकारैरिति भावः । **व्युत्पादितेति** । व्युत्पत्तिरित्यनुकर्षः । ननूक्तं प्रथमं कार्ये व्युत्पत्त्यभावे उपायान्तरादपि व्युत्पत्तिर्न स्यादिति तत्राह **किञ्चास्या इति** । **योग्यान्वित इति** । तत्प्रकारश्चाग्रे 'शक्तिश्चैवान्विते स्वार्थे' इत्यादौ वक्ष्यत इति भावः ।

**गु०दी०— पिकः कोकिल** इत्यत्र ज्ञातपिकपदार्थ अज्ञातकोकिलपदार्थश्चेत्यध्याहार्यम् ।

**यादु०— यद्यपीह प्रभिन्नेत्यादि** । अनेन बालोऽपीत्यपिशब्दो यद्यपि तथाऽपीत्यर्थतया योजित इति द्रष्टव्यम् । अत्र प्रभिन्नेत्यादिना प्रत्यक्षेण तथा पिक इत्यनेनागमेन तथा सास्नादीत्यनेनानुमानेन च क्रमादानन्तरिकी व्युत्पत्तिर्दर्शितेति ज्ञेयम् । **आनन्तिरिकी** कार्यव्युत्पत्त्यनन्तरभाविनी । **बालस्यापीति** । प्रथममपीति शेषः ।

**वं०प०— संभवादिति** । तथा चान्यस्य कल्पनायोगादित्ययुक्तमिति भावः । **विशेषावधारणेति** । पुत्रजन्मरूपविशेषावधारणेत्यर्थः । **प्रयोगान्तरेष्विति** । यद्यपि हर्षहेतूनामानन्त्यात्प्रियासुखप्रसवादीनामपि हेतुत्वं संभवतीति न पुत्रजन्मन एव निमित्तत्वं कल्पयितुं शक्यते । तथाऽपि यदा तव प्रिया सुखेन प्रसूतेति प्रयोगान्तरे प्रियादिपदानामावापः पुत्रादिपदानामुद्वापस्ततस्तदैव प्रियासुखप्रसवादीनां हेतुत्वमवगच्छति नान्यदा । अतः पुत्रस्ते जात इति वाक्यश्रवणानन्तरभाविनि हर्षे पुत्रजन्मैव निमित्तमिति विशेषावधारणं युक्तमित्यर्थः । प्रयुक्तः प्रयोजकवृद्धोदीरितः । विशेषावधारणमानयनादिरूपकार्यपरत्वावधारणम् । तथाच सन्निहितगवानयनं विनाऽन्यस्य कल्पनाऽनुपपत्तेर्युक्तं विशेषावधारणमिति वक्तव्यम् । तन्ममापि सममिति भावः । **बालोऽपीतीति** । तथाच सिद्धार्थपरतद्वाक्यात् व्युत्पत्तिरेव बालस्य प्राथमिकीत्याशयः । **आनन्तरिकी व्युत्पत्तिरिति** । कार्यव्युत्पत्त्यनन्तरभाविनी कार्यव्युत्पत्त्यधीना कार्यान्वितसिद्धव्युत्पत्तिः । **पश्चाद्भवति** बालस्य प्रथममित्यर्थः । **व्युत्पादितेति** । अत्यपूपांस्तव भ्रातेत्यादिना व्युत्पादितेत्यर्थः । **उक्तविधयेति** । छोटिकावादनादिनेत्याद्युक्त-विधयेत्यर्थः । किं चास्या व्युत्पत्तेः कार्यव्युत्पत्त्यधीनत्वमेव नास्तीत्याह **किञ्चेति** । ननु कार्यव्युत्पत्त्यधीनत्वाभावे





कमलादिपदानां कार्यान्विते व्युत्पत्त्यभावप्रसङ्गेनाबोधकत्वं स्यादित्यत आह **कमलादिपदानामिति** । **योग्यान्वितस्वार्थ एवेति** । सामान्यतो योग्येतरान्विते स्वार्थे व्युत्पत्तिमङ्गीकृत्य पदान्तरसमभिव्याहारेण विशेषान्विते व्युत्पत्त्युपपत्तेरित्यर्थः ।

**आनन्दः**— ननु प्रियासुखप्रसवादेरपि हर्षहेतुत्वसंभवात्तत्रैव पुत्रस्ते जात इत्यस्य व्युत्पत्तिः किन्न स्यादित्यत्राह **तत्रैवेति** । **अन्यथेति** । आवयोराभ्यां विशेषावधारणाभाव इत्यर्थः । तथाच गामानयेत्यस्य दण्डादानेऽपि शक्तिग्रहः स्यादिति भावः । ननु तरुणानामपि सिद्धे व्युत्पत्तिसंभवाद्बालग्रहण-मयुक्तमत्राह **यदुक्तमिति** । ननु व्युत्पत्तित्वेनास्या अपि आनन्तरिकत्वमेव साध्यत इत्यत आह **यद्यपीति** । **तथापीति** । तथाचोक्तव्युत्पत्तेः प्रथममपि संभवादप्रयोजको हेतुरिति भावः । **अस्या व्युत्पत्तेरिति** । अस्मदुक्तसिद्धे व्युत्पत्तेरित्यर्थः । तर्हि कमलादिषड्व्युत्पत्तेः कार्यव्युत्पत्त्यधीनत्वादयमपि तथेत्यत आह **कमलादीति** ।

**कं०रा०**— **तन्निरासायेति** । अत्यपूपांस्तव भ्रातेत्यादौ सिद्धार्थपरेऽपि पूर्वं कस्यापि पदस्य सङ्गतिग्रहण-रहितबालोऽपि व्युत्पत्तिमेतीत्यनेन सिद्धपरवाक्यस्थलीयव्युत्पत्तौ कार्यव्युत्पत्त्यनन्तरभावित्वासिद्धिकथनात्तन्निरासः कृतो भवतीत्यर्थः । **पिक इति** । पिकः कोकिल इति प्रसिद्धार्थककोकिलशब्दसमानाधिकरणपिकशब्दप्रयोगा-त्कोकिलस्य पिकशब्दवाच्यत्वं जानातीत्यर्थः । यद्वा । पिकशब्दसमानाधिकरणप्रसिद्धार्थककोकिलशब्दप्रयोगा-त्कोकिलस्य पिकशब्दवाच्यत्वं प्रत्येतीत्यर्थः । **व्याप्तिमिति** । यः सास्नादिमान्स गोशब्दवाच्य इति व्याप्तिमवधार्ये-त्यर्थः । **आनन्तरिकीति** । पदान्तरव्युत्पत्त्यनन्तरभाविनीत्यर्थः । **अस्या इति** । मधुकरादिशब्दव्युत्पत्तेः कमलादि-शब्दव्युत्पत्त्यनन्तरभावित्वेऽपीत्यर्थः । **कमलादिपदानामिति** । छोटिकावादनादिनाऽव्युत्पन्नमभिमुखीकृत्य कमलं जिघ्रन्तं भ्रातरमङ्गुलीप्रसारणादिना प्रदर्श्य देवदत्त तव भ्राताऽयं कमलं जिघ्रतीति वाक्ये प्रयुक्ते कमलादिपदार्थानां वर्तमानत्वेन प्रतिसंबन्धिनां प्रत्यक्षत्वोपपत्तेरिष्टत्वेन जिज्ञासायाः संभवात् । पदसमुदायस्यार्थसमुदाये सामान्यतः शक्तिमवधार्य पश्चादावापोद्धाराभ्यां तत्तत्पदस्य तत्तदर्थे शक्तिमवधारयतीत्याद्युक्तरीत्या कमलादिपदानां योग्यान्वित-स्वार्थ एव व्युत्पत्तेरित्यर्थः ।

**श्रीनिधि०**— **पिकः कोकिल इति** । अनयोरन्यतरशब्दस्य कोकिलवाचकत्वं ज्ञात्वा अन्यतरशब्दस्य तन्न जानाति स इति भावः । **आनन्तरिकी** । अनन्तरभाविनी बालस्याप्युक्तविधया संभवत्येवेति । प्रथमत इति शेषः । तथा च सिद्धाद्वाक्याद्व्युत्पत्तिः प्रथमभाविकार्यव्युत्पत्त्यनन्तरभावित्वात् कार्यव्युत्पत्तिरेवेत्ययुक्तमिति भावः । अङ्गीकृत्याप्याह **किञ्चेति** । **अनन्तरभावित्वेऽपीति** । कार्यव्युत्पत्त्यनन्तरभावित्वेऽपीत्यर्थः ।





**वा०चं०**— अपिशब्दस्य बाल इत्यनेनान्वयमभिप्रेत्य तत्सूचितेन सिद्धे व्युत्पत्तेः प्राथमिकत्वेन व्यावर्त्यं दर्शयति **यदुक्तमिति** । इत्यादौ सिद्धे व्युत्पत्तेः प्राथमिकत्वमिति विशेषोक्त्याऽन्यत्र कार्यव्युत्पत्तेरपि प्राथमिकत्वमनुमतम् । तथाऽपि नास्माकं क्षतिः । क्वचित्सिद्धे व्युत्पत्तेः प्राथमिकत्वसिद्ध्या कार्यव्युत्पत्तित्वमेव सर्वस्या इति पराभिमतासिद्धेरित्याशयेन तदुदाहरणं दर्शयति **यद्यपीति** । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु तत्रापि न कार्यव्युत्पत्तेः प्राथमिकत्वमपि तु सिद्धे व्युत्पत्तेरेव प्राथमिकत्वं भाष्ये इत्यादीत्युदाहरणप्रदर्शनमात्रं न तु विशेषोक्तौ तात्पर्यं कल्प्यमित्याशयेनाह **किञ्चेति** ।

**स०व्र०**— **यद्यपीह प्रभिन्नेत्यादि** । अनेन बालोऽपीत्यपिशब्दो यद्यपि तथाऽपीत्यर्थतया योजित इति द्रष्टव्यम् । वस्तुतस्तु कार्यव्युत्पत्तिशून्योऽपीति तदर्थः । यद्यपीत्यादिकं तु तत्सूचितमिति ज्ञेयम् । अत्र प्रभिन्नेत्यादिना प्रत्यक्षेण, तथा पिक इत्यनेनागमेन, तथा सास्नादीत्यनेनानुमानेन च क्रमादानन्त-रिकीव्युत्पत्तिर्दर्शितेति ज्ञेयम् । **आनन्तरिकी** कार्यव्युत्पत्त्यनन्तरभाविनी । **बालस्याप्युक्तविधयेति** । उक्तविधया प्रथममपि संभवतीति भावः ।

**वि०ठ०**— **यदत्रोक्तमिति** । परेण स्वग्रन्थ इति ज्ञेयम् । एवं यदुक्तमिति । **स्वदृष्टपरित्यागेन** स्वदृष्टपुत्रजन्मपरित्यागेन । ननु देवदत्तभार्या सुखप्रसवस्यापि स्वदृष्टत्वात् हर्षोदयहेतुत्वाच्च 'देवदत्त पुत्रस्ते जात' इति वाक्यस्य तत्र व्युत्पत्तिः किं न स्यात् । तथा च पुत्रजन्मरूपविशेषावधारणं न युज्यत इत्यत आह **तत्रैवेति** । **प्रयोगान्तरेष्विति** । देवदत्त पुत्रस्ते आगत इत्यादिष्वित्यर्थः । ननु सिद्धविषयाया व्युत्पत्तेः प्रभिन्नकमलोदर इत्यादिष्वानन्तरिकत्वेनैव दर्शनात्कथं बालोऽपीति सिद्धविषयव्युत्पत्तेः प्राथमिकत्वकथन-मित्याशङ्क्य निषेधति **यद्यपीत्यादिना** । **प्रभिन्नेत्यादि** । प्रत्यक्षेण पिकः कोकिल इत्यागमेन अयं सास्नादिमानित्यनुमानेन च जायमाना व्युत्पत्तिर्यद्यपि सास्नादिमानित्यादीतरव्युत्पत्त्यनन्तरभाविनी तथाप्यत्य-पूपानित्याद्युक्तविधया व्युत्पादिता सिद्धविषया व्युत्पत्तिर्बालस्यापि प्रथमं संभवत्येवेत्यर्थः । किञ्च प्रभिन्नेत्यादिव्युत्पत्तेरानन्तरिकत्वेनापि न कार्यव्युत्पत्त्यधीनत्वं लभ्यते अत आनन्तरिकत्ववर्णनं न कार्ये व्युत्पत्तिसाधकमित्याह **किञ्चेति** । तर्हि कमलादिपदव्युत्पत्तिः कथमित्यत अत्यपूपादीनित्युक्तरीत्या सिद्धे एव संभवतीत्याह **कमलादिपदानामिति** ।

**चषकः**— **यद्यपीह प्रभिन्नकमलोदर इति** । विकसितेत्यर्थः । मौलोऽपिशब्दो यद्यपितथापीत्यर्थतया योजित इति ध्येयम् । क्रमेण प्रत्यक्षागमानुमानैरानन्तरिकी व्युत्पत्तिः समर्थितेत्यवसेयम् ।





॥ परव्युत्पादितायाः विधौ व्युत्पत्तेः अभावः ॥

॥ तत्र प्राथमिकव्युत्पत्त्यभावः ॥

॥ आकाङ्क्षाद्युपेते एव प्राथमिकव्युत्पत्तिदर्शनम् ॥

॥ वर्तमानादिक्रमेण कालत्रयसंबन्धिवस्तुनः (सिद्धार्थस्य) एव आकाङ्क्षादिमत्वम् ॥

आनयेत्यादिवाक्यतः प्राथमिकव्युत्पत्त्यभावः—

**५४३ सु०— एवं सिद्धार्थे व्युत्पत्तिसंभवमभिधायेदानीं परव्युत्पादितं व्युत्पत्तिप्रकारं निराकर्तुमाह नानयेति ।**

## अनु०— नानयेत्यादिवाक्यतः ॥

**'देवदत्त गामानये'त्याद्युत्तमवृद्धवाक्यश्रवणात्प्रवृत्तं मध्यमवृद्धमुपलभ्य प्रवृत्तिलिङ्गेन तस्य प्रवर्तकबोधमनुमाय तस्य स्वात्मदृष्टान्तेन कार्यताविषयत्वमवधार्य ततः शब्दानन्तर-भावित्वेन शब्दजत्वं ज्ञात्वा पुनरावापोद्धाराभ्यां लिङादेः साक्षात्कार्यवाचित्वमन्येषां शब्दानां तदन्वितस्वार्थवाचित्वमवगच्छतीति यदुक्तं तत् न इत्यर्थः ।**

**परि०—** पूर्वपक्षदशायामुक्तं सर्वं संग्रहेणानुवदति **देवदत्तेत्यादिना** । **यदुक्तमिति** । कार्यता चेत्येतदवतारिकायाम् ।

**वं०प०— उत्तमवृद्धः** प्रयोजकवृद्धः । **मध्यमवृद्धः** प्रयोज्यवृद्धः । **तस्य** बोधस्य । **यदुक्तमिति** 'कार्यता च न' इत्येतदवतारिकायाम् ।

**आनन्दः—** ननु वाक्यतः शक्तिग्रहोत्पत्तेः परेणानङ्गीकारात्कथं तं निषेध इत्यत आह **देवदत्तेति** ।

**वा०चं०—** नानयेत्याद्युत्तरग्रन्थेनापि स्वपक्षव्युत्पादनं क्रियत इति भ्रान्तिं निवारयितुं तत्प्रतिपाद्यमाह **एवमिति** । यद्वाऽस्मदुदाहृतादत्त्यपूपांस्तव भ्रातेत्यादेरेव सिद्धे व्युत्पत्तिर्न तु गामानयेत्यादिवाक्यतः सिद्धे व्युत्पत्तिरित्यर्थप्रतिपादकत्वमुत्तरवाक्यस्य भाति । तदयुक्तम् । अप्रसक्तप्रतिषेधानुपपत्तेरुत्तरव्युत्पादनानानुगुण्याच्चेत्यतस्तदभिप्रायं दर्शयति **एवमिति** । गामानयेत्यादिवाक्यमात्रस्यागमविधया परेण व्युत्पत्तिसाधक-त्वानभ्युपगमादसंभवाच्च पराभिमततद्वाक्यमूलकमध्यमवृद्धादिव्यवहारस्यैवात्र विवक्षा । सा च पुनर्दृष्टत्वै शब्दश्रुदित्युत्तरवाक्ये पराभिमतप्रक्रियैकदेशोत्कीर्तनेन समग्रप्रक्रियोपलक्षणाज्ज्ञायत इत्याशयेन पराभिमत-व्युत्पत्तिप्रकारं दर्शयति **देवदत्तेति** ।



**वा०र०**— इत्यादेरेवेति । **वाक्यत इति** । वक्ष्यमाणमाकृष्यते इत्यादेर्वाक्यत इत्यर्थः । व्युत्पादनानानुगुण्याच्चेति नाकारद्वययुक्तः पाठः । **वाक्यमात्रस्यागमविधयेति** । प्रयोजकोदीरितत्वप्रयोज्यश्रुतत्वव्यवच्छेदाय मात्रपदम् । न केवलमनभ्युपगमो अपि तु तन्मात्रस्य व्युत्पत्तिसाधकत्वासंभवश्चेत्याह **असंभवाच्चेति** । ज्ञायत इत्यत इति पाठः ।

॥ सिद्धार्थे व्युत्पत्तिसंभवः ॥

अन्यथा प्रयत्नगौरवम्—

**५४४ सु०— कुत एतदिति चेत्कल्पकाभावात् । तथा हि । प्रौढमतीनामपि दुरधिगमयाऽनया प्रक्रियया बालो व्युत्पद्यत इति किं सिद्धार्थे व्युत्पत्त्यनुपपत्त्या कल्प्यते, किंवा संभवन्त्यामपि सिद्धार्थव्युत्पत्तौ तदनादरेण व्युत्पित्सुरेवैतां गरीयसीं प्रक्रियामाश्रयतीति । नाद्यः । सिद्धार्थे प्राथमिकव्युत्पत्तिसंभवस्योक्तत्वात् । द्वितीयं दूषयति आनीयमानेति ।**

**अनु०— आनीयमानदृष्ट्यैव व्युत्पत्तेः संभवे सति ।**
**एष्यदानयनायायं कुत एव प्रतीक्षते ॥**

**प्रयोजनार्थिनो हि प्रयोजन एव निर्बन्धो न तूपायविशेषे । तत्रोपायानेकत्वे च गुरुं परित्यज्य लघुमाश्रयते, न तु लघुं परित्यज्य गुरुमिति स्वात्मन्येव तावत्सिद्धम् । व्युत्पित्समानेऽप्येवं कल्पयितुं युक्तम् । तत्र 'देवदत्तो गामानयति', 'तव भ्राताऽपूपानत्ती'ति पदानामानीयमानाद्यमानगवादिदर्शनेनैवोक्तरीत्या व्युत्पत्तिर्लघीयसी; वर्तमानत्वेन कालान्तरभाव्यर्थप्रतीक्षाभावात्, तावत्पर्यन्तं शब्दानुसन्धानप्रयासाभावाच्च । 'देवदत्त गामानय' इत्यादिपदानामेष्यदानयनादौ व्युत्पत्तिस्तु गरीयसी; वाक्यश्रवणानन्तरं तावत्तदनुसन्धानस्य आगामिकार्यप्रतीक्षणस्य च प्रयाससाध्यत्वात् । तत्र गवादिशब्दव्युत्पत्त्यर्थं लघीयांसमुपायमनादृत्य एष्यदानयनप्रतीक्षादिकं गरीयांसमुपायं व्युत्पित्सुः अनुतिष्ठतीति कल्पना निर्मूलैवेति ।**

**यादु०**— व्युत्पित्सुरेव एतां गरीयसीं प्रक्रियामाश्रयतीति हि स्वात्मदृष्टान्तेन कल्पनीयं वादिना । स्वात्मनि च प्रयोजनेच्छायां तत्र यद्यनेके तुल्या उपायास्तदा येन केनापि उपायेन प्रयोजनसंपादन एव निर्बन्ध आग्रहः । न तूपायविशेषे विनिगमकाभावात् । यदि च लघुगुरुभूतानेकोपायास्तदा गुरुं परित्यज्य लघूपाय एवाग्रहो न तु





वैपरीत्येनेति सिद्धम् । अतो व्युत्पित्सावप्येवमेव कल्पनीयमितोऽन्यथाकल्पना तु निर्मूलैवेति मूलाशयं वक्तुमाह **प्रयोजनार्थिनो हीत्यादिना । उपायविशेष इति** । तुल्येष्वनेकेषूपायेषु सत्स्विति शेषः । **उपायानेकत्व इति** । लघुगुरुभूतोपायानेकत्व इत्यर्थः ।

**आनन्दः**— ननु गत्यन्तराभावात्कार्ये व्युत्पत्तिः स्वीक्रियत इत्यतो विकल्पेन दूषयति **कल्पकेति** । **वर्तमानत्वेनेति** । सन्निहितत्वेनेत्यर्थः ।

**कं०रा०— तावत्** आगामिकार्यपर्यन्तम् । **तदनुसन्धानस्य** वाक्यानुसन्धानस्य ।

**श्रीनिधि०— निर्बन्धः** । आदरः । **व्युत्पित्समाने** । पुरुषे । एवमेव व्युत्पत्तिलक्षणप्रयोजने गुरुमुपायं परित्यज्य लघुमाश्रयत इत्येव । एवं च **एष्यदानयनायेति** तादार्थ्यचतुर्थी । एष्यदानयनार्थं प्रतीक्षणं कुतः स्यान्न कुतोऽपीति बुद्ध्या विविक्तप्रकृत्यर्थेनैव अन्वय इति द्रष्टव्यम् । **लघीयसीति** । लघूपायेत्यर्थः । **निर्मूला** । नियामकशून्या ।

**वा०चं०**— नन्वानीयमानदृष्ट्यैवेत्यनेन परोक्ते व्युत्पत्तिप्रकारे कीदृग्बाधकमुच्यत इति न स्पष्टं ज्ञायत इत्यतः कल्पकाभावोऽनेनोच्यते । एतादृशव्युत्पत्तिप्रकारकल्पकं हि भवत्सिद्धे व्युत्पत्त्यनुपपत्तिर्वा व्युत्पित्सो-रेतादृशप्रकारादरणं स्वेच्छयैवेति तदिच्छा वा संभाविता नान्यत्किञ्चित् । तत्र च संभवे सतीत्यनुवादमुखेन सूचितेन सिद्धे व्युत्पत्तिसंभवहेतुनाऽऽद्यपक्षनिवृत्तिः समग्रेण च द्वितीयपक्षनिवृत्तिरित्याशयेनोत्तरमूलं प्रश्नपूर्वं तल्लब्धहेतुकथनतदुपपादनादिपूर्वकमवतारयति **कुत एतदिति चेदिति** । ननु भवदुक्तप्रकारानादरेण व्युत्पित्सुरेव गुरुभूतमप्यस्मदुक्तं कार्यव्युत्पत्तिप्रकारमेवाश्रयतीत्याशङ्किते स्वपरोक्तप्रकारयोर्लाघवगौरवव्युत्पादकं मूलमिदं न सङ्गतमित्यत एतत्प्रकारस्य व्युत्पत्तिरूपप्रयोजनोपायत्वेनोपायानां च स्वत एवोपादेयत्वाभावेन प्रयोजनस्येव स्वाभाविकाग्रहविषयत्वाभावादनेकोपायसाध्यप्रयोजनोपायेषु समेषु कस्यचिदेव स्वेच्छयोपादानेऽपि लघुगुरूपायेषु गुरुपरित्यागेन लघूपादानस्य स्वानुभवसिद्धत्वात्स्वानुभवसिद्धस्यैव च प्रकारस्य व्युत्पित्सावपि कल्पनीयत्वा-त्स्वानुभवविरुद्धस्यापि कल्पने कार्यज्ञानस्य स्वप्रवृत्तिप्रयोजकत्वेऽपि परप्रवृत्तावन्यस्यापि प्रयोजकत्वसंभवेन कार्यव्युत्पत्तेरेवासिद्धेर्लघूपायपरित्यागेन गुरूपायाश्रयणस्य च स्वानुभवविरुद्धत्वेनाकल्पनीयतया तादृशेच्छा न कल्पनार्हेत्याशयेन स्वपरोक्तप्रकारयोर्लाघवगौरवकथनं भाष्यकारीयं सङ्गततरमित्याशयेन प्रथमवक्तव्यं कथयन्नेव तत्सङ्गततया भाष्यं योजयति **प्रयोजनार्थिन इत्यादिना** । आनीयमानदृष्ट्येत्येष्यदानयनायेति चैकवाक्यस्थ-पदविषयकमिति भ्रान्तिवारणाय देवदत्तो गामानयतीत्यादौ देवदत्त गामानयेत्युत्तरत्र वाक्यविशेषोपादानम् । संभवे सतीत्यनेन सूचितं हेतुमाह **उक्तरीत्येति** । नन्वानीयमानदृष्ट्या व्युत्पत्तिर्न पूर्वमुक्तेत्यतः सा स्वसमान-न्यायतया सिद्धा तथा चानीयमानादिशब्द उपलक्षणपर इत्याशयेन तव भ्राताऽपूपानत्तीत्यद्यमानेति चोक्तम् । आनीयमानेति वर्तमानार्थकशानच्प्रयोगलब्धं वर्तमानत्वं (पुनर्दृष्ट्यैवेत्येवकारसूचितयोर्गुरुत्वे हेतुकथनेन) कुत एव





प्रतीक्षत इत्यनेन लब्धयोः कालान्तरभाव्यर्थप्रतीक्षा तावत्पर्यन्तशब्दानुसन्धानप्रयासाभावयोर्लाघवहेत्वोर्हेतुरित्याशयेनाह **वर्तमानत्वेनेत्यादि** । एवमेष्यत्पदसूचितं गौरवे हेतुद्वयमाह **वाक्येति** ।

**वा०र०— अनेकोपायसाध्यप्रयोजनेति** । अनेकोपायसाध्यं यत्प्रयोजनं तस्य ये उपायास्तेष्विति संबन्धः । **कार्यव्युत्पत्तेरेवासिद्धेरिति** । असिध्यापातादित्यर्थः । **न तूपायविशेष इति** मूलम् । तस्य व्युत्पत्तिरूपप्रयोजनोपायतयोपादेयत्वेन स्वत एवोपादेयत्वाभावात्प्रयोजनस्येव स्वाभाविकाग्रहविषयत्वायोगादिति भावः । **उपायानेकत्व इति** मूलम् । यद्यप्यनेकोपायत्वेऽप्युपायानां साम्ये कस्यचिदेव स्वेच्छयोपादानं युज्यते तथापि लघुगुरुभूतोपायानेकत्वे नैकस्य स्वेच्छयोपादानमिति भावेनेदमुक्तम् । अत एव वक्ष्यति । गुरुं परित्यज्येतीति भावः । **युक्तमिति** मूलम् । स्वानुभवविरुद्धस्यापि व्युत्पित्समाने कल्पने कार्यज्ञानस्य स्वप्रवृत्तौ प्रयोजकत्वेनावधारितत्वेऽपि परप्रवृत्तावन्यस्यापि प्रयोजकत्वसंभवेन वृद्धप्रवृत्तेः । कार्यबोधपूर्वकत्वस्य बालेनाकल्पनीयत्वापत्त्या कार्ये व्युत्पत्तेरेवासंभवप्रसङ्गादिति भावः । **गामानयतीत्यादाविति** । प्रथममित्यर्थः । वर्तमानादिपदमर्थपरतयेति आदिपदयुक्तः पाठः । मूलकोशानुसारादादिपदाभावो लेखकप्रयुक्तः ।

**विठ्ठ०—** नन्वेष्यदानयनाय कुतः प्रतीक्षत इत्ययुक्तं तत्प्रतीक्षाया व्युत्पत्त्युपायत्वेनावश्यकत्वात् । न चोपायान्तरेणोपपद्यत इति वाच्यम् । यस्यकस्यचिदुपायस्यावश्यकत्वेनैतत्त्यागे नियामकाभावादित्याशङ्कां परिहरन् व्याचष्टे **प्रयोजनार्थिनो हीत्यादिना** । **उपायविशेष इति** । तुल्येष्वनेकेषूपायेषु सत्स्विति शेषः । **निर्मूलैवेति** । स्वात्मदृष्टान्तस्य विरुद्धत्वेन तदमूलत्वान्मूलान्तरादर्शनाचेति भावः ।

**आनयेत्यादिवाक्यतः लिङादीनां स्वार्थे भविष्यत्क्रियादौ व्युत्पत्तेः पश्चात्तनीयत्वम्—**

**५४५ सु०—** तत्किं प्रयत्नगौरवाद्भविष्यत्क्रियायां तदन्वितेषु च व्युत्पत्तिर्नास्त्येव । तथा सति तच्छब्दव्यवहारोऽपि कथमित्यत आह **व्युत्पन्न इति** ।

**अनु०— व्युत्पन्नो वर्तमाने तु क्रियाशब्दे भविष्यति ।**
**पुनर्दृष्ट्यैव शब्दश्रुत्पश्चाद्व्युत्पत्तिमेष्यति ॥**

**वर्तमाने** वर्तमानार्थे, **क्रियाशब्दे** आनयतीत्यादौ, **व्युत्पन्नः** अर्थसंबन्धज्ञानवान्, **भविष्यति** भविष्यदर्थे क्रियाशब्दे, 'देवदत्त गामानये'त्यादिशब्दश्रुत्, **पुनर्दृष्ट्या** गवानयनस्य ।

**परि०—** पदानि योजयन्नेवार्थमाह **वर्तमान इत्यादिना** ।





**वं०प०— तच्छब्दव्यवहार इति** । भविष्यदानयनक्रियार्थकानयेत्यादिशब्दव्यवहार इत्यर्थः ।

**आनन्दः**— तदनुसन्धानस्य तद्वाक्यानुसन्धानस्य शब्दस्योभयथापि वर्तमानत्वाविशेषादत आह **वर्तमान इति** ।

**कं०रा०— अर्थेति** । अर्थेन शब्दस्य यः संबन्धो वाचकत्वरूपस्तज्ज्ञानवानित्यर्थः ।

**श्रीनिधि०— तच्छब्दव्यवहारोऽपीति** । अर्थं बुद्ध्वा खलु वाक्यरचना । अर्थबोधश्च व्युत्पत्तिमूल इति भावः अथवा तच्छब्दश्रवणानन्तरमेव प्रयोज्यवृद्धस्य प्रवृत्तिरित्यर्थः । **पुनर्दृष्ट्या** पुनर्ज्ञानेन । शब्दप्रयोगानन्तरं प्रवृत्तिदर्शनेन सामान्यतः किञ्चिद्विषयककार्यज्ञानम्, अनन्तरं गवानयनदर्शनमिति पुनर्दृष्टिः ।

**वा०चं०**— नन्वेष्यदानयनादेर्गरीयस्त्वेनानादरणमुक्त्वोत्तरवाक्ये तदभ्युपगमोऽनुपपन्न इत्यतस्तदभ्युपगमे कारणं दर्शयन्नुत्तरवाक्यमवतारयति **तत्किमिति** । आनयतीत्यादिवदानयेत्यादिक्रियाशब्दस्यापि वर्तमानत्वेन भविष्यत्त्वानुपपत्तेः शब्दयोर्वर्तमानत्वादिकथनस्य प्रकृतानुपयोगाच्च वर्तमानादिपदमर्थपरतया व्याख्याति **वर्तमान इत्यादिना** । व्युत्पत्तिशब्दस्य वाच्यवाचकोभयज्ञानपरत्वाच्छब्दे वाचकत्वज्ञानवानित्येतावतैव पूर्तेस्तावन्मात्रार्थतया व्युत्पन्नपदं व्याख्याति **व्युत्पन्न इति** ।

**वा०र०— वाचकोभयेति** । वाच्यत्ववाचकोभयेत्यर्थः ।

**विठ्ठ०— तत्किम्** इत्यत्र तदित्यस्य तर्हीत्यर्थः । **नास्त्येव** किं अस्त्येवेत्यर्थः । नास्तीति वक्तुं न शक्यत इति यावत् । कुतो न शक्यत इत्यत उक्तं **तथा सतीति** । भविष्यत्क्रियायां व्युत्पत्त्यनङ्गीकार इत्यर्थः ।

**५४६ सु०— अयमर्थः । वर्तमानायां क्रियायां तदन्वितेषु चार्थेषु 'गामानयती'त्यादिपदानां संबन्धं प्रथमतः अवगच्छति । भविष्यत्क्रियायां तु 'पश्चादानये'त्यादिपदानां संबन्धं जानाति त्वदुक्तरीत्येत्येव ब्रूमः । न तु सर्वथा तत्र व्युत्पत्त्यभावम् । अतो न काचिदनुपपत्तिरिति । 'शब्दश्रुत्, पुनर्दृष्ट्ये'ति परोक्तप्रक्रियानुवादः ।**

**परि०**— तात्पर्यार्थमाह **अयमर्थ इति** ।

**आनन्दः**— नन्वेवमपि भविष्यन्त्यां व्युत्पत्तिसमर्थनं कथमित्यत आह **अयमर्थ इति** । ननु भविष्यति पश्चात् व्युत्पत्तिमेष्यतीति एतावतैव सामञ्जस्ये शब्दश्रुत्यश्चादित्यादि व्यर्थमित्यत आह **शब्दश्रुतित्यादि** ।

**श्रीनिधि०— त्वदुक्तरीत्येत्येवेति** । देवदत्त गामानयेत्युत्तमवृद्धवाक्यश्रवणानन्तरं प्रवृत्तं मध्यमवृद्धं दृष्ट्वा प्रवृत्तिलिङ्गेनेत्यादि त्वदुक्तरीत्यैवेत्यर्थः । न तु प्रथम व्युत्पत्तिरपि तत्र तद्रीत्याभ्युपगतेति भावः । **परोक्तप्रक्रियानुवाद इति** । तथा च पश्चाद्व्युत्पत्त्युपपादकत्वाद्यभावान्न वैयर्थ्यमिति भावः ।

**वा०चं०—** ननु परोक्तप्रकारेण कार्यव्युत्पत्तिस्वीकारे उक्तगौरवात्तदनुपपत्तिरतिरिक्तप्रकारेण तत्स्वीकारे तु पुनर्दृष्टचैवेत्यादिपरोक्तप्रकारानुवादानुपपत्तिरित्यत आह **अयमर्थ इति** । **त्वदुक्तरीत्यैवेति** । परोक्तप्रक्रियानुवाद-फलकथनम् ।

**विठ्ठ०—** नन्वेतेनापि गामानयेत्यादिपदानामेष्यदानयनादौ व्युत्पत्तिरङ्गीकृता न वा । आद्ये नानये-त्यादिवाक्यत इत्युपक्रमोऽनुपपन्नः स्यात् । द्वितीये तद्विषयव्यवहारानुपपत्तिस्तदवस्थेत्याशङ्कापरिहारार्थमाह **अयमर्थ इति** । **प्रक्रियानुवाद इति** । यद्यप्यनयोः पदयोः परशङ्कितशब्दव्यवहारानुपपत्तिपरिहारेन साक्षादुपयोगः तथापि प्रथमतः प्रयोज्य वृद्धस्य गामानयेति वाक्यश्रवणानन्तरमुक्तरीत्या विमर्शपरंपरा ततः पुनर्गवानयनदर्शन-मित्यादिपरप्रक्रियानुवादपरत्वान्न वैयर्थ्यमिति भावः । तत्प्रक्रियानुवादस्य प्रस्तुतोपयोगस्तदुक्तरीत्यैवेति ब्रूम इति प्रदर्शित इति ज्ञातव्यम् । मूलयोजनानुवर्तमानार्थे क्रियाशब्दे प्रथमं व्युत्पन्नः पुरुषः पश्चाद्भविष्यति क्रियाशब्दे शब्दसूचितगामानयेति प्रयोजकशब्दश्रोता सन् पुनर्दृष्ट्या पुनः प्रयोज्य वृद्धकर्तृकानयनदर्शनेन व्युत्पत्तिमेष्यतीति ।

**५४७ सु०— एवं लिङादीनां स्वार्थे व्युत्पत्तिः पश्चात्तनीत्युक्तम् । पराभ्युपगते तु कार्ये न कदाचिदपीत्याह वर्तमानमिति ।**

**अनु०— वर्तमानमतीतं च भविष्यदिति च क्रमात् ॥**
**आकाङ्क्षादियुतं यस्माद्विधेर्व्युत्पादनं कुतः ॥**

**यस्मात्** । वर्तमानादिक्रमेण कालत्रयसंबन्ध्येव वस्त्वाकाङ्क्षासन्निधियोग्यतायुक्तं च भवति । आकाङ्क्षाद्युपेत एव च व्युत्पत्तिः । न ह्यजिज्ञासितेऽर्थे प्रवृत्तिसहस्रदर्शनेऽपि व्युत्पद्यन्ते । कार्यं च कालत्रयासंबद्धं परेणेष्यते । तस्मात् । आकाङ्क्षादिविरहात् **विधेः** कार्यापरनाम्नो **व्युत्पादनं** व्युत्पत्तिर्लिङादिवाच्यताज्ञानं **कुतः** संभवतीति ॥ अथवा लिङादिशब्दो **विधिः** तस्य **व्युत्पादनं** कार्ये व्युत्पत्तिः **कुत** इति योज्यम् ॥ अत्र कालसंबन्ध्येवेति वक्तव्ये क्रमप्रदर्शनमुत्तरार्थम् ।





**बिन्दुः— स्वार्थे व्युत्पत्तिः पश्चात्तनीति** । यद्यप्यत्र सायं चिरं प्राह्णे प्रगेऽव्ययेभ्यष्ट्यु-ट्युलौ तुट् चेति प्राप्तयोष्ट्युट्युलोः दक्षिणापश्चात्पुरसस्त्यगिति त्यकाबाधात्पाश्चात्येति युक्तं तथापि क्वचिदपवादविषयेऽप्युत्सर्गो निविशत इति परिभाषाबलात् पश्चात्तनीत्यपि युज्यत एव । अत एव, ''नृपः पुरस्थैः प्रतिरुद्धवर्त्मा पश्चात्तनैः कैश्चनमुच्यमानः । यन्त्रस्थसिद्धार्थपदाभिषेकं लब्ध्वाऽप्यसिद्धार्थममन्यत स्वमि''ति महाकवेः श्रीहर्षस्यापि प्रयोगः सङ्गच्छत इति ।

**परि०— उत्तरार्थमिति** । दृष्ट्येत्युत्तरवाक्ये पूर्वं वर्तमाने पश्चादनागतादावाकाङ्क्षाक्रमेण व्युत्पत्तिक्रमस्य वक्ष्यमाणत्वात्तदुपयोगित्वार्थमित्यर्थः ।

**गु०दी०— कालत्रयासंबद्धम्** इत्यत्र वर्तमानार्थको लट् । अतीतार्थकाः लङ्-लुङ्-लिटः । अनागतार्थकाः लुट्-लृट्-लृङः । लोट्-लिङोस्तु काले अशिक्षितत्वात् कालत्रयासंबन्धित्वमिति परस्याशयः । विध्यर्थकतां वदतः पाणिनेस्तु तयोरप्युत्तरकालसंबन्धित्वमप्यस्तीति हृदयम् । मीमांसकस्तु पाणिनिहृदयानभिज्ञः कालत्रयासंबन्ध्यर्थता-मेवाहेति ज्ञेयम् ।

**यादु०— कार्यं च कालत्रयासंबद्धमिति** । अभूद्भवति भविष्यतीत्यादिवत्कार्यपराणां लिङादीनां वर्तमानादिकालविशेषबोधकत्वानङ्गीकारादिति भावः । **क्रमप्रदर्शनमिति** । क्रमादित्यनेन वर्तमानमादावाकाङ्क्षादि-युतं पश्चादतीतादिरूपमवर्तमानमिति यत्क्रमप्रदर्शनं तद्दृष्ट्या ज्ञातपदार्थस्येत्युत्तरवाक्ये वर्तमानावर्तमानार्थक-शब्दव्युत्पित्सोर्यः पौर्वापर्यनियामकः कार्यकारणभावः प्रतिपाद्यते तदुपपादनार्थमित्यर्थः ।

**वं०प०— पराभ्युपगते तु कार्य इति** । इष्टसाधनतातिरिक्ते कार्य इत्यर्थः । **वक्तव्य इति** । कालसंबन्ध्येवाकाङ्क्षादियुक्तमिति वक्तव्य इत्यर्थः ।

**कं०रा०— कालसंबन्धीति** । कालत्रयासंबन्धिनि पराभिमतकार्ये व्युत्पत्त्यसंभवप्रतिपादनार्थं कालसंबन्ध्येवाकाङ्क्षादियुतमिति वक्तव्ये 'वर्तमानमतीतं च भविष्यदिति च क्रमात् । आकाङ्क्षादियुतं यस्मादि'ति क्रमप्रदर्शनं दृष्ट्या ज्ञातपदार्थस्येत्युक्ते वाक्ये वर्तमानार्थभविष्यदर्थव्युत्पत्त्योर्यत्पौर्वापर्यमपेक्ष्यते तदर्थीमत्यर्थः ।

**श्रीनिधि०— कालसंबन्ध्येव वस्त्विति** । न हि कालत्रयासंबन्धिनी शशविषाणादावाकाङ्क्षाद्यस्तीति भावः । **उत्तरार्थमिति** । दृष्ट्या ज्ञातपदार्थस्येत्येतदर्थमिति भावः ।

**वा०चं०—** नन्वधुनैव लिङादीनां कार्ये व्युत्पत्तिं स्वीकृत्योत्तरवाक्ये तन्निरासे पूर्वोत्तरविरोध इत्यत उत्तरवाक्याभिप्रायमाह **एवमिति** । वर्तमानादिकालसंबन्धित्वस्य व्युत्पत्तिव्याप्याकाङ्क्षादिव्याप्यत्वस्य मूलतः





प्रतिभासात्कालसंबन्धित्वव्यतिरेकेण कथमाकाङ्क्षादिव्यतिरेकोक्तिः । आकाङ्क्षादेर्व्युत्पत्तिव्याप्यतया मूलेऽनुक्ते-र्निर्मूलत्वाच्च न तदभावेन व्युत्पत्त्यभावः । कालत्रयासंबद्धत्वं च कार्यस्यासिद्धमित्यतस्तदुपपादयति **यस्मादिति** । तथा च कालसंबन्धित्वस्याकाङ्क्षादिव्यापकत्वं मूलाभिप्रेतमाकाङ्क्षाद्युपेत एव च व्युत्पत्तिरित्यस्यार्थाल्लाभस्तदुप-पादकं च प्रसिद्धं कालत्रयासंबन्धित्वं च पराङ्गीकारसिद्धमित्युक्तं भवति । व्युत्पत्तिघटकशक्तिरूपसंबन्धस्य पदधर्मत्वेन षष्ठीस्वारस्याय पदपरत्वेन विधिशब्दं व्याख्यातुं पक्षान्तरमाह **अथवेति । उत्तरार्थमिति** । वर्तमानार्थभविष्यदर्थयो-राकाङ्क्षादिक्रमे उक्ते तद्व्युत्पत्त्योर्वक्ष्यमाणः पूर्वापरीभावः सुबोध इति भावः ।

**वा०र०**— वर्तमानादिक्रमोक्तावपि वर्तमानभविष्यदर्थयोरेव क्रमविवक्षयोत्तरार्थमित्युक्तिरित्याशयं स्पष्टयति **वर्तमानार्थेति** ।

**स०व्र०— कार्यं च कालत्रयासंबद्धं परेणेष्यत इति** । कार्यपराणां लिङादीनां वर्तमानादिकाल-विशेषाबोधकत्वादिति भावः । **क्रमप्रदर्शनमिति** । वर्तमानमादावाकाङ्क्षादियुतं पश्चादतीतादिरूपमेव वर्तमानमिति क्रमप्रदर्शनमित्यर्थः । **उत्तरार्थमिति** । दृष्ट्या ज्ञातपदार्थस्येत्यादौ कथ्यमानो यः वर्तमानव्युत्पत्तिकार्यव्युत्पत्त्योः पूर्वापरभावप्रयोजककार्यकारणभावः तं सूचयितुं क्रमादित्युक्तमित्यर्थः । क्रमोऽपि वर्तमानव्युत्पत्तेः प्राथमिक-त्वाभिप्रायेणैव । न त्वतीतानागतव्युत्पत्त्योरपि पूर्वापरभावाभिप्रायेणेति ध्येयम् ।

**विठ्ठ०**— अस्तु कालत्रयसंबन्ध्येवाकाङ्क्षादियुतं तथापि विधेः व्युत्पादनायोगः । कुतस्तदुपपादयन् तस्मादित्यादि वाक्यशेषं योजयति **आकाङ्क्षाद्युपेत एव चेति** । आकाङ्क्षाद्युपेत एव इत्यत व्युत्पत्तिः संभवति आकाङ्क्षादिश्च कालत्रयसंबन्धिन्येव भवेत् । कार्यं चाभूद्भवति भविष्यतीतिवत्कार्यपराणां लिङादीनां कालविशेष-संबन्धबोधकत्वाभावेन कालत्रयासंबन्धमिति परो मन्यते अतो आकाङ्क्षाद्यभावाद्विधेः कार्यस्य व्युत्पादनं नेत्यर्थः । **क्रमप्रदर्शनमिति** । वर्तमानमादावाकाङ्क्षादियुतं पश्चादवर्तमानमिति क्रमप्रदर्शनं दृष्ट्येत्युत्तरवाक्ये पूर्ववर्तमाने पश्चादनागतादावाकाङ्क्षातत्क्रमेण व्युत्पत्तिक्रम इति वक्ष्यमाणतया तदुपयोगित्वार्थमित्यर्थः । किमर्थतः किं वा शब्दत इति लिङादिप्रत्ययबोध्यः कार्यापरनामा यो विधिरूपोऽर्थः स कालत्रयासंबन्ध इत्यर्थो विवक्षितः । किं वार्थस्य वस्तुतः कालत्रयसंबन्धित्वेऽपि तद्वाचकशब्दो देवदत्तः पचतीत्यादेरिव वर्तमानकालाद्यवच्छिन्न-वस्तुवाची न भवतीत्यर्थो विवक्षित इत्यर्थः ।

**चषकः— कार्यं च कालत्रयासंबद्धमिति** । लुङ्लट्लृडादीनामिव लिङ्लोट्कृत्यप्रत्ययपञ्चमलकाराणा-मतीतादिकालविशेषान्यतमाभिधायकत्वानुपगतेरिति । **(भाव)क्रमप्रदर्शनमिति** । दृष्ट्या ज्ञातपदार्थस्येत्युत्तरवाक्ये पौर्वापर्यनियामकः कार्यकारणभावः प्रतिपाद्यते तदुपपादनायेत्यर्थः ।





**५४८ सु०— किञ्च कालत्रयानवमर्शो विधेः किम् अर्थतः किंवा शब्दतः । आद्ये शशविषाणादिवत्तस्य सत्त्वमेवासंभावितम्, व्युत्पत्तिस्तु तद्विषये लिङादीनां कुतः । द्वितीये घटादितुल्यत्वात्कालत्रयानवमृष्टो विधिरिति विशेषाभिधानं व्यर्थम् । अनुभवविरुद्धं चैतत् । कर्तव्यमितिशब्दादेष्यत्कालीनताप्रतीतेरुक्तत्वात् ।**

**बिन्दुः— कर्तव्यमितिशब्दादेष्यत्कालीनताप्रतीतेरिति** । यद्यपि विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङिति लिङ्विधायकसूत्रे कालविशेषो न पुरस्कृतः । तथापि विधिः कर्तव्यार्थोपदेश इत्यभियुक्तव्याख्यानेन भविष्यदर्थस्यैव कर्तव्यशब्दार्थत्वात् भविष्यत्ताऽवगम्यत एव । तदेव कुत इति चेत् । प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति प्रेषितव्यप्रत्ययानुशासनात् । अत एव ह्यप्रवृत्तप्रवृत्तना विधिरिति मीमांसकानां प्रवादः । अप्रवृत्तप्रवर्तनायाः सम्भविष्यत्वमिति चानर्थान्तरमेवेति भावः ।

**परि०— किंवा शब्दत इति** । शब्देन प्रतिपाद्यत इति वेत्यर्थः । **उक्तत्वादिति** । 'न भविष्यत्क्रिया कार्यम्' इत्येतद्व्याख्यावसरे उक्तत्वादित्यर्थः ॥

**गु०दी०— किं वा शब्दतः** इत्यत्र **शब्दतः कालत्रयानवमर्शो** नाम कालत्रयावाचकशब्दवाच्यत्वमित्यर्थः ।

**यादु०—** अत्र वर्तमानार्थकशब्दव्युत्पत्तेरवर्तमानार्थकशब्दव्युत्पत्त्यपेक्षया प्राथमिकत्वरूपक्रम एव तात्पर्यम् । न त्वतीतभविष्यदर्थकशब्दव्युत्पत्त्योरप्यवान्तरक्रमे इत्यवधेयम् । 'विधेर्व्युत्पादनं कुत' इत्यंशस्य प्रकारान्तरेणाभिप्रायमाह **किञ्चेति** । **किमर्थत इत्यादि** । कालत्रयानवमृष्टो विधिरिति तद्वाक्यस्य किं लिङादिप्रत्ययार्थो यः कार्यापरनामा विधिः स कालत्रयासंबद्ध इत्यर्थो विवक्षितः, किं वा लिङादिप्रत्यय एव विधिः स पचतीत्यादाविव वर्तमानादिकालान्यतमकालावच्छिन्नवस्तुवाची नेत्यर्थ इति विकल्पार्थः । **घटादितुल्यत्वादिति** । घटादेरपि शब्दतः कालत्रयानवमर्शस्य सत्त्वादित्यर्थः । तथा च घटादिशब्दोऽपि न वर्तमानकालाद्यन्यतमकालावच्छिन्नवस्तुवाची किन्तु घटादिमात्रवाचीति लिङादेर्घटादिशब्दतुल्यतापत्तिरिति भावः । **उक्तत्वादिति** । 'न भविष्यत्क्रिया कार्यमि'त्येतद्वाक्यव्याख्यानावसरे 'देवदत्त कृतः किं त्वया कटः क्रियते वे'ति पृष्टः प्रत्याह 'न मया कृतो नापि क्रियते किन्तु कार्य इति । तेन प्राप्नोति भविष्यत्क्रियाकार्यमिती'त्यादिनेत्यर्थः ।

**वं०प०— आद्य इति** । लिङादिप्रत्ययार्थभूतो यो विधिः कार्यापरनामा तस्य कालत्रयासंबद्धत्वपक्ष इत्यर्थः । **द्वितीय इति** । लिङादिप्रत्यय एव विधिः । स पचतीत्यादौ यथा वर्तमानकालावच्छिन्नवस्तुवाची तथा न भवतीति द्वितीयपक्ष इत्यर्थः । **घटादीति** । यथा घटशब्दो वर्तमानकालाद्यवच्छिन्नवस्तुवाची न भवति ।





पचतीत्यादाविव घट इत्यत्र कालभासकपदाभावात्तथा लिङादिशब्दोऽपीत्येवं तस्य घटादिशब्दतुल्यताप्राप्त्या तद्वत्प्रवर्तकत्वं न स्यादिति भावः। **विशेषाभिधानमिति**। घटादिशब्दानामपि तथात्वेन विधिरेव कालत्रयानवमृष्ट इति विशेषाभिधानं व्यर्थमित्यर्थः।

**कं०रा०— कर्तव्यमिति**। शब्दादिति देवदत्तकृतः किं त्वया कटः क्रियते वेति पृष्टे न मया कृतो नापि क्रियते किन्तु कार्य इति भविष्यत्कालीने कार्यशब्दप्रयोगदर्शनेन कार्यवाचकशब्दादेष्यत्कालीनत्वप्रतीतेरुक्तत्वादित्यर्थः।

**श्रीनिधि०— अर्थत इति**। स्वरूपेणेत्यर्थः। **किं वा शब्दत इति**। शब्दतः कालत्रयानवमर्शो नाम कालसंबन्धितया अप्रतिपाद्यत्वं द्रष्टव्यम्। **घटादितुल्यत्वादिति**। घट इत्युक्ते घटयति।

**वा०चं०—** किञ्च भाष्यकारीयमाकाङ्क्षादिमुखेन व्युत्पत्त्यभावोपपादनमभ्युपगमवादेन। वस्तुतस्तु कालत्रयासंबन्धित्वमात्रेण व्युत्पत्त्यभावोपपादनं सुशकम्। तथा हि। कार्यस्य कालत्रयासत्त्वरूपमर्थतः कालत्रयासंबन्धित्वं वा कालत्रयसंबन्धानुपस्थापकशब्दबोध्यत्वरूपं शब्दतः कालत्रयासंबन्धित्वं वा। तत्राद्यं शशविषाणादिवदसत्त्वापादकतया व्युत्पत्तिविरोधि। द्वितीयं तु घटादिशब्दात्त्रिषु कालेष्वेकसंबद्धस्याप्रतीतेर्घटादिसाधारण्यान्न विशिष्य वक्तव्यमनुभवविरुद्धं चेत्याशयेनाह **किञ्चेति**। इष्टेष्टसाधनत्वरूपकार्यत्वस्यैव लिङादिवाच्यत्वेन तस्यैव तव्यप्रत्ययबोध्यत्वेन क्रियागतैष्यत्कालीनत्वस्य च लिङादिवाच्यकार्यरूपत्वाभावेन तस्य कार्यत्वेन तव्यप्रत्ययाबोध्यत्वेऽपि रूढ्या विशिष्टकर्तव्यशब्दस्यैष्यत्कालीनत्वबोधकत्वेन बाधकमित्याशयेन प्रयोगप्रदर्शनेन रूढेः न भविष्यत्क्रिया कार्यमिति भाष्यव्याख्यावसरे उक्तत्वादित्याह **कर्तव्यमितीति**।

**वा०र०— आकाङ्क्षादिमुखेनेति**। आकाङ्क्षितादावेव व्युत्पत्तिर्न त्वनाकाङ्क्षितादाविति आकाङ्क्षादिसत्त्वस्य व्युत्पत्त्यर्थत्वनिरूपणमुखेनेत्यर्थः। प्रतिपादनादित्यन्तेन व्युत्पत्तिरिति यदुक्तमित्येतद्व्यावर्त्यशङ्काप्रदर्शनं व्युत्पत्तिसंभव इत्यादेः प्राथमिकत्व इत्यादिकं व्यावर्त्यमिति ज्ञेयम्।

**स०व्र०— किमर्थत इति**। किं कार्यं कालत्रयासंबन्धीति यावत्। **किंवा शब्दत इति**। तद्वाचकशब्दः कालत्रयासंबद्धमर्थं प्रतिपादयतीति वा विवक्षितमित्यर्थः। **घटादितुल्यत्वादिति**। घटादिशब्दोऽपि न कालत्रयमध्येऽन्यतमकालावच्छिन्नवस्तुवाचीत्यर्थः।

**विठ्ठ०— घटादितुल्यत्वादिति**। यथा घटादिशब्दो न वर्तमानाद्यवच्छिन्नवस्तुवाची किन्तु व्यक्तिमात्रवाची। तथा लिङादेस्तत्तुल्यत्वादिति यथा घटादिशब्दो न वर्तमानाद्यवच्छिन्नवस्तुवाची किन्तु व्यक्तिमात्रवाची। तथा लिङादेस्तत्तुल्यतापत्तिः। ततश्च लिङाद्यर्थस्य घटादितुल्यतया विशेषाभावाद्विशेष्यविधेः कालत्रया-





संबन्धत्वव्युत्पादनं त्वदीयशास्त्रे क्रियमाणं व्यर्थमिति भावः। एतेन विधेर्व्युत्पादनं कुत इति प्रकारान्तरेण व्याख्यानं किञ्चेत्यादिनेति ध्येयम्। **उक्तत्वादिति**। न भविष्यत्क्रियेति व्याख्यानावसर इति ज्ञेयम्।

**चषकः**— विधेर्व्युत्पादनं कुत इत्यंशस्य विधान्तरेणाशयं प्रकाशयति **किञ्चेति**। कालत्रयानवमृष्टो विधिरिति वाक्यस्य लिङादिप्रत्याय्यमानः कालत्रयसंबन्धविनिर्मुक्त इति लिङाद्यन्यतमस्तत्त्रिकानभिधायक इति वाऽभिप्रेतार्थ इति कल्पद्वयमनुसन्दधानः क्रमेणापहस्तयते **कालेति**। **घटादितुल्यत्वादिति**। घटादिशब्द-तुल्यत्वादित्यर्थः।

**वर्तमानादिक्रमेण व्युत्पत्तेः पौर्वापर्योपपत्तिः—**

**५४९ सु०—** यदप्युक्तं 'वर्तमानार्थक्रियादिशब्दव्युत्पत्त्यनन्तरभाविनी भविष्यदर्थक्रिया शब्दव्युत्पत्तिरि'ति। तदयुक्तम्। व्युत्पत्तिसंभवे प्राथमिकत्वस्यैवोपपत्तावानन्तरिकत्व-कल्पनायां नियामकाभावादित्यत आह **दृष्ट्येति**।

**अनु०— दृष्ट्या ज्ञातपदार्थस्य स्यादाकाङ्क्षा भविष्यति॥**
**व्युत्पत्तिः प्रथमा तस्माद्वर्तमाने(ऽ)गते ततः॥**

'प्रथमत एवानागतार्थे जिज्ञासाप्रतीक्षयोरसंभवान्न व्युत्पत्तिरि'त्युक्तम्। वर्तमानार्थस्य तु दृष्टिसंभवेन जिज्ञासोपपत्तौ प्रतीक्षाऽऽयासासंभवाच्च प्रथमं व्युत्पत्तिस्ततो **ज्ञातः पदस्यार्थो येन तस्य** वर्तमानक्रियायां तदन्वितेषु चार्थेषु व्युत्पन्नस्य पश्चाद् **भविष्यति** अतीते **चाकाङ्क्षा स्यात्**। 'देवदत्तो गामानयती'त्यादिपदानां वर्तमानक्रियायां तदन्वितेषु व्युत्पत्तौ जातायां 'देवदत्त गामानये'त्युक्ते गवादिपदानामानयतेश्च ज्ञातार्थत्वेनोर्वरितप्रत्ययार्थमात्रे जिज्ञासाप्रतीक्षा च स्यात्। तस्माद्वर्तमानार्थव्युत्पत्तेराकाङ्क्षादिजननद्वारेण कारणत्वेन भविष्यदाद्यर्थव्युत्पत्तेश्च कार्यत्वात्पौर्वापर्योपपत्तिरिति॥ **अगते** अनागत इत्यर्थः।

**परि०**— अगते गत इति च द्वेधा पदविभागमुपेत्यार्थमाह **भविष्यत्यतीते चेति**। नन्वत्र भविष्यतीत्येतस्य कथं लाभ इत्यत आह **अगते अनागत इति**।

**गु०दी०— अगते अनागते** इत्यत्र आवृत्त्या गते अतीते इत्यपि द्रष्टव्यम्। परोपदेशं विना स्वोत्प्रेक्षयैव व्युत्पित्सोः प्रौढस्य प्राकृतभाषारहितानां देवलोकस्थानां च व्युत्पत्तेः ''अत्यपूपान्'' इत्यादिना क्रम उक्तः। अनयैव





दिशा मातृस्वस्रादीनामसकृदुच्चारणेनाङ्गुलिनिर्देशादिना चापूपादिविषयकप्राकृतभाषायां प्राक् व्युत्पन्नेन बालेन गृहीतप्राकृतसंज्ञासङ्गतिकेष्वेव पदार्थेषु पश्चात्पित्रादीनामुपदेशेनापि त्वंपदं अपरसंबन्धिभूतस्य तव वाचकम् । भ्रातृपदं च तवैवापरसंबन्धिभूतत्वात्सहोदरवाचकम् । अपूपपदं च तेन खाद्यमानभक्ष्यविशेषवाचकम् । अत्तिपदं चादनाख्यक्रियाकर्तृत्वविशिष्टस्य तस्यैव वाचकमिति संस्कृतशब्दस्य व्युत्पत्तेर्वृद्धव्यवहारं विनैव संभवान्न कार्यान्वित एव व्युत्पत्तिनियम इति लोकसिद्धार्थोऽप्यनेनैव सूचितः । अत एव गामानयति तव भ्रातेत्यादिवाक्यमनुक्त्वा बालस्यैवावश्यकं अत्यपूपानिति वाक्यमुदाहृतम् । एवमेव बालरामायणादिश्लोकेष्वपि व्युत्पत्तिः सूचिता द्रष्टव्या ।

**आनन्दः**— ननु वर्तमाने व्युत्पत्तिसमर्थनमात्रेणैव सर्वस्यापि वेदस्य ब्रह्मपरत्वोपपद्य तत्प्राथमिकत्वसमर्थनमनुपपन्नमित्यत्राह **यदुक्तमिति** । कार्यव्युत्पत्तेः प्राथमिकत्वात्तदुत्तरभाविनी सर्वापि व्युत्पत्तिः कार्यव्युत्पत्त्यनुसारेणैवेति परेणोक्तत्वादस्याह । प्राथमिकत्वसमर्थनमिति भावः । एवमपि । पौर्वापर्यं कथमुपपादितमत्राह **तस्मादितिं** । अत्र कार्यकारणशब्दौ प्रयोज्यप्रयोजकपरौ । ननु ततः अगते व्युत्पत्तिरित्यनेनापि वर्तमाने व्युत्पत्तिरुच्यते तथाच वर्तमान इत्यनेन पुनरुक्तिरित्यत्राह **अगते अनागते इत्यर्थ इति** ।

**श्रीनिधि०— वर्तमानक्रियायामित्यादिना** । भविष्यति अतीते च आकाङ्क्षा स्यादित्युक्तं तत्कथमित्यतस्तदुपपादयति **देवदत्तगामानयेत्युक्तमित्यादिना** ।

**वा०चं०**— ननूत्तरवाक्ये आन्तरिकत्वं कार्यव्युत्पत्तेर्न व्युत्पादनीयम् अधुनैव कार्ये व्युत्पत्त्यभावप्रतिपादनात् । प्राथमिकत्वे नियामकाभावे आनन्तरिकत्वस्यैव सिद्धेश्चेत्यतस्तद्व्यावर्त्यशङ्कामुत्थापयति **यदुक्तमिति** । आनन्तरिकत्वं व्युत्पादयताऽनन्तरं कार्यजिज्ञासादि भवतीतिवत्प्रथमं न भवतीत्यपि वक्तव्यतया तदनुक्त्या भाष्ये न्यूनतेत्यत एष्यदानयनायायं कुत एव प्रतीक्षत इत्युक्त्या तत्सिद्धेर्न न्यूनतेत्याशयेन पूर्वसिद्धमनुवदति **प्रथमत एवेति** । दृष्ट्वेत्यनेन सूचितं वर्तमानार्थे व्युत्पत्तेः प्राथमिकत्वे हेतुं दर्शयति **जिज्ञासेति** । पदार्थज्ञानस्य कार्यव्युत्पत्तौ हेतुत्वलाभेऽपि किमागतं वर्तमानार्थव्युत्पत्तेरित्यत आह **ततो ज्ञात इति** । भाष्योक्तं हेतुहेतुमद्भावं विशदयति **देवदत्त इति** । नन्वस्तु तर्ह्याकाङ्क्षायां तस्याः कारणत्वं कार्यव्युत्पत्तौ किमायातमित्यत आह **तस्मादिति** । वर्तमानार्थव्युत्पत्तेरित्यर्थः । अगतशब्दस्यातीतव्यावर्तकत्वभान्तिं निराकरोति **अगत इति** ।

**वा०र०— इत्युक्त्या तत्सिद्धेरिति** । अनेनेत्युक्तमिति मूलमेष्यदानयनायेत्यादिभाष्ये उक्तमिति व्याख्यातं भवति । मूले भविष्यतीत्यनुसारेण भविष्यत्यर्थ इत्येव पाठः । अतीतेऽपि व्युत्पत्तिश्चेत्यधिकं तथा भविष्यदर्थव्युत्पत्तेश्चेति पाठः । आदिपदमधिकम् । तथा पाठपक्षे तु न केवलं परोक्ता कार्ये व्युत्पत्तिरानन्तरिकी किन्त्वतीतेऽपि व्युत्पत्तिरप्यानन्तरिकीति वस्तुस्थितिकथनायातीतेत्यादि ग्रहणम् । तथा चोपलक्षणयाऽतीतग्रहणं ज्ञेयम् । ततो ज्ञात इत्यत्र तत इत्यस्य वर्तमानार्थव्युत्पत्तित इति व्युत्पत्तेः पदार्थज्ञानं प्रति हेतुत्ववचनस्य फलं दर्शयन्नवतारयति **पदार्थज्ञानस्येति** । मूले आकाङ्क्षा स्यादित्यनन्तरं ततोऽगते व्युत्पत्तिरपि स्यादिति योज्यम् । तस्मादिति भाष्यपदस्य योजना तस्मादित्येतन्मूले कृतेऽपि प्रतीयते शोध्यम् ।





**स०व्र०**— उत्तरार्थमित्युक्तं दर्शयितुमाह **यदुक्तं वर्तमानेत्यादि**। तथा चोत्तरत्र वक्ष्यमाणव्युत्पत्तिक्रमोपपादनार्थमिति तद्वाक्यार्थ इत्युक्तमेव।

**विठ्ठ०**— अगते गते इति द्वेधा पदविभागमभिप्रेत्याह **भविष्यत्यतीते चेति**। अगत इत्यस्य भविष्यतीत्यर्थं व्यञ्जयन्ति **अगतेऽनागत इति**।

॥ वेदस्य प्रवृत्तिनिवृत्तिमात्रप्रयोजनकत्वाभावः ॥

तयोः सर्वपुरुषापेक्षाभावात् मुख्यप्रयोजनत्वाभावः—

**९९० सु०— यदप्युक्तं 'प्रवृत्तिनिवृत्त्यौपयिकार्थशासनाच्छास्त्रत्वम्। न च सिद्धार्थबोधस्तथा। अतः कार्यबोधस्यैव तद्भावात्कार्यपरत्वं वेदस्ये'ति॥ तत्र वक्तव्यम्। किं प्रवृत्त्यादिकमेव वेदस्य मुख्यं प्रयोजनम् उत अवान्तरप्रयोजनम्। नाद्य इत्याह इष्टमिति।**

## अनु०— इष्टमाकाङ्क्षते सर्वो न प्रवृत्तिमपेक्षते॥

**पुरुषापेक्षितं हि प्रयोजनं भवति; अन्यस्यानिरूपणात्। पुरुषश्च इष्टावाप्तिमनिष्टनिवृत्तिं चापेक्षते, न प्रवृत्तिनिवृत्ती; क्लेशरूपत्वात्। अतो न तयोर्मुख्यप्रयोजनतेति।**

**परि०**— तृतीयमपि बाधकमनूद्य निराह **यदप्युक्तमिति**। कार्यता चेत्येतदवतारिकायामुक्तमित्यर्थः।

**वं०प०— न प्रवृत्त्यादिकमिति**। तथा चेष्टानिष्टप्राप्तिप्रहाणसाधनत्वाभावेन प्रवृत्तिनिवृत्त्योरवान्तरप्रयोजनत्वं न संभवतीत्यर्थः।

**कं०रा०— न चेति**। सिद्धार्थबोधः प्रवृत्तिनिवृत्त्योपयिकार्थविषयो नेत्यर्थः।

**श्रीनिधि०— किं प्रवृत्तिनिवृत्त्यादिकमेवेति**। प्रयोजनवदर्थपर्यवसानमेव वेदस्य वक्तव्यमन्यथा अनुपादेयत्वलक्षणमप्रामाण्यं स्यादिति भावः।





**वा०चं०**— उत्तरग्रन्थस्याव्यवहितपूर्वेणासङ्गतेः पूर्वपक्ष्युक्ततृतीयदूषणनिरासकत्वेन तं व्याख्यातुं तत्स्मारयति **यदपीति** । प्रवृत्त्यादेः प्रयोजनत्वस्य पराभिमतत्वेऽपरोक्षमित्यादीष्टसाधनान्तरप्रतिपादनमुखेन प्रवृत्त्यादेरिष्टसाधनत्वाभावप्रतिपादकोत्तरग्रन्थासङ्गतेः प्रयोजनसाधनत्वस्य तथात्वे त्विष्टमाकाङ्क्षत इति पूर्वग्रन्था-सङ्गतेस्तदुभयानुसारेण प्रवृत्त्यौपयिकत्वोक्तेः साधारण्यात्तां विकल्प्य तत्तत्कल्पदूषणपरतया भाष्यं योजयति **तत्रेति** । इष्टादेः प्रयोजनत्वादौ वक्तव्ये किमसङ्गतमाकाङ्क्षितत्वाद्युच्यत इत्यतो लाघवाय हेतुकथनमुखेन तदेवोच्यत इत्याह **पुरुषेति** ।

**स०व्र०**— सिद्धविशेषेष्टार्थशासनादेव शास्त्रत्वं न प्रवृत्तिनिवृत्त्यौपयिकार्थशासनात् ।

**वि०**— प्रवृत्त्यादेरनाकाङ्क्षितत्वे कुतः प्रयोजनत्वाभाव इत्यतस्तदुपपादयति **पुरुषापेक्षितमिति** ।

**॥ प्रवृत्तिनिवृत्त्योः इष्टावाप्तिसाधनत्वाभावात् अवान्तरप्रयोजनत्वस्याप्यभावः ॥**

**अपरोक्षस्य परोक्षस्य वाऽपि ज्ञानस्यैव तत्साधनम्**—

**५५१ सु०— अस्तु प्रयोजनत्वमिष्टानिष्टप्राप्तिप्रहाणयोः, तत्साधनं प्रवृत्तिनिवृत्ती इति अवान्तरप्रयोजनमिति द्वितीयं दूषयति अपरोक्षमिति ।**

## अनु०— अपरोक्षं परोक्षं वा ज्ञानमिष्टस्य साधनम् ॥

**ज्ञानमेवेष्टावाप्तिसाधनं न प्रवृत्त्यादिकमित्यर्थः ॥**

**यादु०**— **ज्ञानमेवेष्टावाप्तिसाधनमिति** । न च लोके ज्ञानेनेच्छा तया प्रयत्नस्तेन चेष्टावाप्तिर्दृश्यत इत्यवधारणानुपपत्तिरिति वाच्यम् । प्रयत्नानन्तरं विषयभोगं विनेष्टावाप्त्यसंभवादित्याशयात् ।

**वा०चं०**— विशिष्योक्तिलब्धावधारणेन प्रकृतसिद्धिरित्याह **ज्ञानमेवेति** ।

**चषकः**— **ज्ञानमेवेष्टावाप्तिसाधनमिति** । शास्त्रैकवेद्यतात्पर्यकमिदम् । चक्षुरादिवेद्यस्थले तु जानाती-च्छति यतत इति दर्शनादवधारणानुपपत्तेरिति ध्येयम् । मौलोक्तिरिति तिपा धातुनिर्देशस्तेन च वर्णादिरूपा क्रिया लक्ष्यत इति हृदयम् । तेनादोजग्धिर्ल्यप्तिकितीति न जग्ध्यादेशप्रसङ्गः ।





चर्वणादेः रससाक्षात्कारार्थत्ववत् क्रियायाः (चेष्टायाः) ज्ञानार्थत्वात्—

५५२ **सु०**— तत्किं नोपदेष्टव्यैव क्रिया। न। क्वचिज्ज्ञानार्थत्वादित्याह **क्वापीति**।

**अनु०— क्वापि चेष्टा तदर्था स्यात्**

तत्कथमित्यत आह **अत्तिर्हीति**।

**अनु०— अत्तिर्हि रसवित्तये॥**

**अत्तिः चर्वणादिरूपा क्रिया। रससाक्षात्काराय भवति।**

**परि०**— नोपदेष्टव्या क्रिया किमितिप्रश्नं निराह **नेति**। तत्र हेतुमाह **क्वचिदित्यादि**।

**यादु०**— **तत्कथमिति**। क्वचिद्वेदोपदिष्टक्रियाया ज्ञानार्थत्वं कथं, लोके क्रियाया ज्ञानार्थत्वस्य क्वाप्यदर्शनादित्याशयः। **अत्तिर्हीति**। धातुनिर्देशोऽयम्। तेन चर्वणक्रिया लक्षणीयेत्याशयः। अन्यथा अदो-जग्धीति जग्ध्यादेशप्रसङ्ग इति ध्येयम्।

**वं०प०**— **क्रियेति**। क्रियापरपर्याया प्रवृत्तिरित्यर्थः। **ज्ञानार्थत्वादिति**। इष्टावास्यादिसाधनीभूत-ज्ञानसाधनत्वमेव न साक्षादिष्टावास्यादिसाधनत्वमित्यर्थः। **भवतीति**। अत्रादनरूपक्रियाद्वारा रससाक्षात्कारहेतुत्वं रसनेन्द्रियस्यैव न साक्षात्क्रियायाः। तथात्वे तस्याः प्रमितिकरणत्वेन प्रमाणत्वापत्तेरिति द्रष्टव्यम्। हेतुत्वे तात्पर्यं न कारणत्वे इति ज्ञेयम्। तथा च तद्वन्निवृत्तकर्मादिरूपा प्रवृत्तिरप्यपरोक्षज्ञानसाधनमिति भावः।

**आनन्दः**— **तत्किमिति**। ज्ञानस्यैवेष्टसाधनत्वं यदि तर्हीत्यर्थः। **तत्कथमिति**। क्रियाया ज्ञानार्थत्वं कथमित्यर्थः।

**वा०चं०**— ननूत्तरवाक्ये ज्ञानार्थतया क्रियाङ्गीकारो व्यर्थ इत्यतः क्रियोपदेशान्यथाऽनुपपत्त्या स इत्याशयेनाह **तत्किमिति**। **अत्तिश्चर्वणादिक्रियेति**। एतच्चात्तिर्हीति मूलेऽत्तिरिति धातुनिर्देशस्तेन च तदर्थक्रिया लक्ष्यत इत्यभिप्रायेण व्याख्यानं न त्वयं धात्वर्थनिर्देशः। तथा सति क्तिनि अदो जग्धिर्ल्यप्तिकितीति जग्ध्यादेशप्रसङ्गादत एवात्तिमङ्गगनेतृतामित्येतद्व्याख्यावसरेऽत्तिमदनकर्तृत्वं धातुनिर्देशोऽयं तेन तदर्थस्य कर्ता लक्ष्यत इति टीकाकारै ऋग्भाष्यटीकायामभिहितमिति ध्येयम्। उभयविधज्ञानप्रस्तावाददनप्रस्तावाददनादि-क्रियायाश्चोभयार्थत्वाभावादाह **रसेति**।





**विठ्ठ०**— प्रवृत्त्यादेरिष्टसाधनत्वाभावे तदुपदेशो न स्यादिति भावेन पृच्छति **तत्किमिति** । नोपदेष्टव्यैवेत्युत्तरमाह **नेति** । क्वचित्क्रियोपदेशदर्शनात्कथं नोपदेष्टव्यत्वमित्यत इष्टसाधनं यज्ज्ञानं तत्साधनत्वेनेत्याशयेनाह **क्वचिदिति** । वर्णादीत्यादिशब्देन निगरणादिकं गृह्यते । यथा च वर्यानिगरणादिव्यापारो रसवेदनार्थ इति सन्न्यायरत्नावल्युक्तेः ।

**अभिमतरसादिसाक्षात्कारमात्रस्यैव इष्टसाधनत्वं इत्यस्यासिद्धिः**—

**५५३ सु०— नन्वभिमतरसादिसाक्षात्कारस्यैवेष्टसाधनत्वं दृष्टम् । तत्कथं 'परोक्षं वा ज्ञानमिष्टस्य साधनम्' उक्तमित्यत आह वाक्यार्थेति ।**

## अनु०— वाक्यार्थज्ञानमात्रेण क्वचिदिष्टं भवेदपि ॥

**अपिशब्दो वाक्यार्थज्ञानमात्रेणापीति संबध्यते । क्वचिदिति 'पुत्रस्ते जातः', 'पिता ते राजा वर्तत' इत्यादौ ।**

**यद्यप्यभिमतार्थानुमितिज्ञानमपीष्टसाधनम् । तथाऽपि प्रकृतानुपयोगात्तन्नोक्तम् ।**

**परि०**— **प्रकृतानुपयोगादिति** । वेदादिशब्दजन्यस्य साक्षात्काररूपस्य वा ब्रह्मज्ञानस्येह प्रकृतत्वात्तदनुपयोगादित्यर्थः ।

**वं०प०**— **इष्टसाधनत्वं** सुखसाधनत्वम् । **दृष्टमिति** । तथा च तद्वदपरोक्षज्ञानमेव मोक्षरूपेष्टसाधनमिति वक्तव्यमित्याशयः । **इत्युक्तमिति** । परोक्षज्ञानस्येष्टसाधनताया अदृष्टत्वादिति भावः । **वाक्यार्थज्ञानमात्रेणेति** । शब्दजन्यवाक्यार्थविषयकपरोक्षज्ञानमात्रेणेत्यर्थः । **अनुमितिज्ञानमपीति** । लिङ्गजन्याभिमतार्थानुमितिरूपपरोक्षज्ञानस्यापीष्टसाधनत्वेन तदपि वक्तव्यम् । शब्दजन्यपरोक्षज्ञानमात्रग्रहणं किमर्थमित्यर्थः । **प्रकृतेति** । लिङादिशब्दप्रसङ्गे तस्यानुपयुक्तत्वादिति भावः ।

**आनन्दः**— **भवेदपीति** । यथाश्रुतापिशब्देनानिष्टं भवेदित्यर्थः । प्रतीयते तच्च शङ्काननुगुणमित्यत आह **अपिशब्द इति** । नन्वनुमितिरूपज्ञानस्यापीष्टसाधनत्वाद्वाक्यपदमनर्थकं किन्त्वर्थज्ञानमात्रेणेत्येतावदेव वक्तव्यमित्यत आह **यद्यपीति** ।





**श्रीनिधि०— प्रकृतानुपयोगादिति** । एतन्मात्रेणैव प्रकृतोपयोगपर्यवसानादिति भावः । तर्हि अनुमित्येत्यनुक्त्वा वाक्यार्थज्ञानमात्रेणेति किमर्थमुक्तमिति चेन्न । वाक्यस्य प्रयोजनपर्यवसाय्यर्थबोधकत्वमिह प्रकृतमतः तदेवात्रोक्तमिति भावात् ।

**वा०चं०— परोक्षं** वेत्युक्त्यैव लब्धत्वाद्वाक्यार्थज्ञानमात्रेणेत्युत्तरवाक्यवैयर्थ्यमित्यत आह **नन्विति** । अत्तिरितिक्रियाविशेषोपादानलब्धार्थकथनमभिमतेत्यपिशब्देन समुच्चेयक्रियान्तराभावान्न भवेदित्यस्य च विरुद्धतया असमुच्चेयत्वात्क्वचिन्न भवेदित्यस्याविरुद्धत्वेऽपि क्वचिदित्यनेनैव सिद्धतयाऽवक्तव्यत्वादपिशब्दो भिन्नक्रम इत्याह **अपिशब्द इति** । क्वचिदित्युक्तमनुभवारोहायाभिनयेन दर्शयति **क्वचिदितीति** । क्रमेणेष्टावाप्त्यनिष्टनिवृत्तिसाधनबोधजनकवाक्योदाहरणे वाक्यार्थज्ञानस्य विशिष्योपादानेन पूर्वं परोक्षपदमपि तन्मात्रपरमित्यनुमितेर्व्यावृत्तिरभिमतेति भ्रान्तिं निवारयति **यद्यपीति** । वाक्यार्थज्ञानस्यैव विशिष्योपादानप्रयोजनमाह **तथापीति** । **प्रकृतेति** । अभिप्रेतवाक्ययोजनांश इत्यर्थः ।

अत्र च प्रवृत्तिनिवृत्त्योर्मुख्यप्रयोजनत्वं वाऽवान्तरप्रयोजनत्वं वा नास्तीत्येव वक्तव्ये यदिष्टानिष्टप्राप्तिपरिहारयोर्मुख्यप्रयोजनत्वस्य परोक्षापरोक्षज्ञानयोस्तत्साधनत्वस्य क्रियाया ज्ञानार्थत्वस्य च कथनं तेनोक्तरीत्या वाक्यपर्यवसानोपयोगिकार्यताया आकाङ्क्षादेश्च ब्रह्मण्येव सत्त्वेन तस्य वाक्यार्थताया उपपादितत्वात्तत्परोक्षापरोक्षज्ञानयोरेवेष्टावाप्त्यनिष्टपरिहारसाधनत्वादुपासनादिविधीनां तदापरोक्ष्यार्थत्वाच्च ब्रह्मण्येव सर्ववेदतात्पर्यसिद्धिरिति सूचितम् । तेन च लिङादेः कार्यवाचकत्वे पदान्तरस्य तदन्वितस्वार्थाभिधायित्वं वाक्यान्तरस्य च तदेकवाक्यत्वं मन्त्रार्थवादादीनामपि तदन्वितार्थाभिधायित्वमित्युक्तरीत्या सर्ववेदस्य कार्यपरत्वलाभेऽपि ब्रह्मण एव वाक्यपर्यवसानोपयोगीष्टसाधनत्वरूपकार्यताया आकाङ्क्षादिमत्त्वेन वाक्यार्थत्वस्य च प्रतिपादनेऽपि तत्र विध्यादिरूपवेदयोजनाप्रकारप्रतिपादनात्कथं प्रवृत्त्याद्यौपयिकार्थपरस्य सर्ववेदस्य तत्परत्वसिद्धिरित्याशङ्का परिहृता भवतीति ध्येयम् ।

**वा०र०— भ्रान्तिमिति** । गतमतीतं तन्न भवतीत्युक्तेऽतीतातिरिक्तत्वेनानागतोपस्थापकताप्राप्त्या वर्तमानेऽपीति भ्रान्तिः स्यादिति भावः । इदं च भविष्यतीत्यनुसारेण पदार्थकथनम् । उपलक्षणयाऽतीतं चेत्यपि ज्ञेयम् । **तृतीयदूषणेति** । अपि च यद्यपि बोधकत्वेनैवेत्यादिना परोक्ततृतीयसाधकदूषणेत्यर्थः । **शासनादिति** मूलस्य बोधकत्वादित्यर्थः । तत्र बोधं बुध्या विविच्य तथेत्यनेन तादृशादेवेत्युच्यते । प्रयोजनेति प्रवृत्यादेरिति वर्तते । **तथात्वे** पराभिमतत्वे । **विशिष्येति** । असाधारण्येन व्यपदेशा भवन्तीति न्यायादिति भावः । **ऋग्भाष्येति** । एतच्च तट्टीकाविवरणे विवृतं गुरुपादैः । अत्राप्यानन्दमयनये विवरणं भविष्यति ।

**विठ्ठ०— प्रकृतानुपयोगादिति** । वेदादिशब्दजन्यस्य साक्षात्काररूपस्य वा ब्रह्मज्ञानस्येहेष्टसाधनतया प्रकृतत्वात्तदनुपयोगादित्यर्थः ।

**५५४ सु०— अयमत्राशयः । यो हि सात्त्विकप्रकृतिर्लोकप्रवादात्कार्यत्वादिलिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुत्कण्ठितमानसस्तत्संस्कारवशाच्चान्यदगणयन्वर्तते तं प्रत्याप्तो बन्धुरिवायं समस्तो वेदस्तत्स्वरूपं स्वप्रधानमेव प्रतिपादयति । ततो वाक्यार्थज्ञानादवाप्तपरमानन्दस्तत्साक्षात्कारं कामयते । तं प्रति तदुपासना विधीयते । सा च प्रक्षीणान्तःकरणमलस्यैव संभवतीति तदर्थं कर्मविधयः ॥ अथवा यः सांसारिकविविधदुःखं जिहासुः परमानन्दं च प्रेप्सुस्तत्साधनं जिज्ञासते; तं प्रति परमेश्वर एव प्रसन्नः परमेष्टसाधनतयोपदिश्यते । ततः कथमसौ प्रसीदतीत्यपेक्षायां तत्साक्षात्कारस्तदङ्गतया कर्माणीत्युभयथा स्वप्रधान एव परमेश्वरो वेदार्थ इति ।**

**परि०—** ननु परेण सर्वस्य वेदादेः कार्य एव तात्पर्यस्य वर्णितत्वाद्वृद्धैः सिद्धे व्युत्पत्त्युपपादनेन समस्तवेदराशेः कथं ब्रह्मण्येव तात्पर्यमुपपादितं भवतीत्यत आह **अयमत्राशय इति** । केषाञ्चिदिष्टं केषाञ्चिदिष्टसाधनं भगवानित्युक्तम् । तत्राद्यानुरोधेन वाक्यान्वयप्रकारमाह **यो हीत्यादिना** । द्वितीयानुरोधेनाह **अथवेति** । **य इति** । सात्त्विकप्रकृतिरित्यनुकर्षः ।

**यादु०—** ननु सत्यम् इष्टमाकाङ्क्षते सर्व इति, तथाऽपि न वेदरूपशास्त्रस्य भगवत्परत्वं युक्तम् । तस्य सर्वान्प्रतीष्टत्वाभावादतत्साधनत्वाच्च, कर्मप्रतिपादकवेदभागस्य भगवत्परत्वाप्रतीतेश्चेति शङ्कामपाकुर्वन् 'क्वापि चेष्टा तदर्था स्यादि'ति श्लोकेन सूचितां स्वमते वेदयोजनामाह **अयमत्राशय इत्यादिना** । अनेन तत्रैव सर्ववेदपर्यवसा-नादिति यत्पूर्वपक्षिणोक्तं तदपि निरस्तमिति ज्ञातव्यम् । यो हि सात्विकप्रकृतिरित्याद्यधिकारिविशेषणैः भगवतः सर्वेष्टत्वाभावेऽपि अधिकारिविशेषान्प्रति इष्टत्वमस्तीत्युपपादितमिति ज्ञातव्यम् । धर्मिज्ञानाभावे तत्र स्नेहस्यैवासंभवादाह **लोकप्रवादादित्यादिना** । स्नेहमाहात्म्यज्ञानाभ्यामित्यनेन भक्तिरूपं तद्विशेषज्ञानार्थमुत्कण्ठितमानस इत्यनेन शमरूपं सात्त्विकप्रकृतिरित्यनेनैव दमरूपमन्यदगणयन्नित्यनेन इहामुत्र फलभोगविरागरूपमधिकारिविशेषणमुक्तमिति ज्ञातव्यम् । इयं च योजनोत्तमभक्ताभिप्रायेणातो न मुमुक्षुत्वरूपमधिकारिविशेषणमत्रोक्तम् । अत एव तदितरभक्ताभिप्रायेण योजनान्तरमाह **अथवेति** । अत्र विशेषणद्वयेन मुमुक्षुत्वरूपमधिकारिविशेषणमुक्तम् । इदमुपलक्षणम् । शमदमादिकमपि ग्राह्यम् । तेन भगवतः सर्वान् प्रति इष्टसाधनत्वाभावेऽपि चेतनविशेषान् प्रति इष्टसाधनत्वमस्ति अतः तत्तद्बोधनाच्छास्त्रस्यार्थवत्त्वमुपपादितं भवतीति ज्ञातव्यम् ।

**वं०प०— स्वप्रधानेति** । अनन्यशेषत्वेनेत्यर्थः ।





**आनन्दः**— नन्वेवमस्तु ब्रह्मप्रतिपादकवाक्यानां ब्रह्मपरत्वं तथापि क्रियापरवाक्यानां क्रियापरत्वात्कथं कृत्स्नस्यापि वेदस्य ब्रह्मपरत्वं किञ्चन वेदे न ब्रह्म प्रतिपादयितुं शक्यं आकाङ्क्षायाः अभावात्तस्याः ज्ञानपूर्वत्वात् । ब्रह्मणश्चाज्ञातत्वात् तथाच वेदेनैन तज्ज्ञाने सत्याकाङ्क्षा सत्यां तस्यां वेदेन तज्ज्ञानमितीतरेतराश्रयत्वात् । प्रायेण लोकानां वैषयिकत्वाच्चेत्यत आह **अयमत्राशय इति** । द्विविधा ह्यधिकारिणः । एकान्ता अनेकान्ताश्च तत्रानेकान्तानां वेदेन बोधनप्रकारमुक्त्वा एकान्तानां प्रकारमाह **अथवेति** ।

**कं०रा०**— **स्वप्रधानमेवेति** । न तु कार्यशेषतयेत्यर्थः । **तदर्थमिति** । साक्षात्कारसाधनोपासना-हेत्वन्तःकरणमलक्षयार्थमित्यर्थः । यद्वा । अन्तःकरणनैर्मल्योपासनाद्वारा तत्साक्षात्कारार्थमित्यर्थः । **तदङ्गतयेति** । कर्मणामीश्वरसाक्षात्काराङ्गत्वं चोक्तप्रनाड्या द्रष्टव्यम् ।

**श्रीनिधि०**— ननु सिद्धार्थे उक्तरीत्या प्रवृत्तिसंभवात् परोक्तप्रकारस्यासंभवात् प्रवृत्यादेः प्रयोजन-त्वासंभवाच्च स एव सर्ववेदार्थ इति भवतु । तथापि तस्य इष्टत्वेन वा इष्टसाधनत्वेन वा प्रतिपाद्यत्वम् ? अधिकारि-भेदेन उभयथा अपीति ब्रूमः । तर्ह्याकाङ्क्षादियुतस्यैव प्रतिपाद्यत्वं आकाङ्क्षा च ज्ञाते धर्मिणि तद्विशेषे । न च तस्य सर्ववेदादिवेद्यत्वमङ्गीक्रियते । ततश्चाकाङ्क्षाद्युदयः कथं विशेषजिज्ञासायां च किं कारणम् । कमधिकारिणं च प्रति भगवत इष्टत्वं किञ्च सिद्धार्थवाक्यस्य भगवत्परत्वेऽपि उपासनावाक्यस्य कर्मविधिवाक्यस्य च कथं तत्परत्वं कस्य चाधिकारिणः भगवानिष्टसाधनतया बोध्यते तत्राप्युपासनावाक्यस्य कथमुपयोग इत्याशङ्क्य समाधत्ते **अयमाशय इत्यादिना** ।

**वा०चं०**— ननु कथमेतत् । स्वरूपमात्रपरवाक्याभावात्सामान्यतो ब्रह्मस्वरूपे सिद्धे विशेषजिज्ञासायां ब्रह्मस्वरूपं विशिष्टं वाक्येन बोधनीयम् । तच्चाशक्यम् । सामान्यज्ञानोपायाभावात् । ब्रह्मज्ञानादेरिष्टादिसाधनत्वे ज्ञाते कथञ्चिद्ब्रह्मविशेषजिज्ञासोदयेऽपि स्वत एव जिज्ञासाऽनुदयाच्च न च ब्रह्मण एवेष्टसाधनत्वात्तज्जिज्ञासोदय इति वाच्यम् । तदापरोक्ष्यस्येष्टादिसाधनत्वोक्तिव्याघातात् । न च तदापरोक्ष्यस्येष्टसाधनतयैव तज्जिज्ञासेति वाच्यम् । तर्हीष्टसाधनज्ञानविषयत्वमात्रापत्तौ मुख्येष्टत्वाभावेन वाक्यार्थज्ञानमात्रेणेत्युक्त्यनुपपत्तेः । कथं च वाक्यार्थ-भूतब्रह्मज्ञानमात्रेणेष्टोत्पत्तिरननुभवात्कथं च वाक्यार्थभूतब्रह्मज्ञानमात्रेणावाप्तपरमानन्दं प्रत्युपासनादिविधीनां प्रवृत्तिः । साक्षात्कारादेरेवेष्टसाधनत्वे तदर्थतया ब्रह्मणः प्रतिपादने चेष्टसाधनस्यैव मुख्यप्रतिपाद्यत्वात्साक्षात्कारस्यैव मुख्यतो वेदबोध्यत्वं ब्रह्मणस्तु तच्छेषतयेत्यापत्तेः । तस्मात्कथं ब्रह्मणो वेदमुख्यार्थत्वमित्यतोऽत्रेष्टतयेष्टसाधनतया चाधिकारिभेदेन द्वेधा ब्रह्मणो वेदमुख्यार्थत्वमभिमतम् । तत्र ब्रह्मणो यं प्रतीष्टत्वं तस्य सामान्यज्ञानविशेषजिज्ञासयोः प्रयोजनाननुसन्धानेऽपि ब्रह्मणि सूपपादत्वात्तं प्रति स्वप्राधान्येनेव ब्रह्मबोधनं वेदेनोपपद्यते । वाक्यार्थज्ञानमात्रेण परानन्दप्राप्तिश्च तस्यैव । तत्साक्षात्कारमात्रेच्छुं तं प्रति तदर्थतयोपासनादिविधीनामप्युपपत्तिः । यं प्रतीष्टसाधनत्वं सुखदुःखप्राप्तिप्रहाणेच्छुं तत एव तत्साधनजिज्ञासुं च तं प्रति सुप्रसन्नो भगवानेव तत्साधनतया वेदेन बोध्यते । तत्र च प्रसादरूपतद्व्यापारसाधनतया साक्षात्कारस्तदर्थतया चोपासनादिविधिप्रवृत्तिरिति तं प्रत्यपि स्वप्राधान्येनैव ब्रह्म





बोध्यते न तु प्रतिपाद्यान्तरशेषतया । अस्यैवेष्टसाधनत्वेन मुख्यप्रतिपाद्यत्वात् । एवं चोभयविधाधिकारिणं प्रति स्वप्राधान्येन ब्रह्मबोधनमुपपद्यत एवेति वेदवाक्यानां योजना द्वेधा विवक्षितेत्याशयेनाह **अयमत्राशय इति** । अन्यत्राविद्यमानं लोकप्रवादादिना कर्तृसामान्यज्ञानं कथमस्येत्यतो मूलकारणमाह **सात्त्विकेति** । प्रयोजनाभावे सामान्यज्ञानमात्रेण न विशेषजिज्ञासादीत्यतः प्रयोजनवशात्स्नेहमाहात्म्यज्ञानयोरपि विशेषजिज्ञासाप्रयोजकत्वामति वक्तुं स्नेहादिकारणोत्कीर्तनं स्वतनुभवनादेः कर्तारमिति । अत्रादिशब्दोक्तसकलकर्तृत्वस्य माहात्म्यज्ञानकारणत्वमिति द्रष्टव्यम् । प्रयोजनाननुसन्धाने स्नेहादिमात्रेण कथं जिज्ञासेत्यतः पुरुषार्थान्तरकलुषितमानसानां तथा न तु शुद्धमनसामित्याशयेन सुमनसामित्युक्तसंभावकस्य सनिमित्तस्य कथनं तत्संस्कारवशादन्यदप्यविगणयन्वर्तत इति । पूर्वेण जिज्ञासाप्रतिपादनम् । अनेन सन्निधेश्च प्रतिपादनमिति द्रष्टव्यम् । अनेनैव वैराग्यातिशयः पूर्वेण ज्ञानभक्ती चाधिकारिविशेषणानि सूचितानि । अनेन वाक्यार्थज्ञानमात्रेण प्राप्तपरानन्दावाप्तिश्च समाहिता । दृश्यन्ते हि प्रयोजनमननुसन्दधाना अपि स्नेहविशेषमात्रेण प्रियादिकुशलजिज्ञासवः तत्सुखवार्ताश्रवणमात्रेण प्राप्तपरमानन्दा लोकेऽपि । दृश्यते चान्यसुखाद्यजनकं स्वपुत्रदर्शनं स्वसुखदमिति ।

**वा०र०— उभयविधेति** । परोक्षापरोक्षभेदेनेत्यर्थः । आहेति पदमपरोक्षतया व्याचष्ट इत्यर्थः । **कथमेतदिति** । एतत्परोक्षापरोक्षज्ञानादिस्वीकारेण ब्रह्मणो वेदमुख्यार्थत्वकथनमित्यर्थः । विशिष्टं वाक्येन बोधनीय-मित्यत्र हेतुः स्वरूपमात्रपरवाक्याभावादिति । अद्वैतिमत इवेति शेषः । विशिष्टबोधनक्रमनिरूपणं सामान्यत इत्यादि । **इष्टादिसाधनत्व इति** । अत्रेष्टसाधनत्वादाविति पाठः । एवमुत्तरत्रापि । प्रतिपत्तेरेव प्रमाणफलत्वादिति नञ्घटितमौलपाठस्तु प्रकारान्तरेण व्याख्येय इत्याशयेन तदघटितपाठस्यैव व्याख्यानं कृतं प्रमाणस्य **साक्षादित्यादि**। तद्घटितपाठव्याख्यानं त्वेवम् । न प्रमितिरेव प्रमाणफलं किन्तु तत्साध्यप्रसादविशिष्टतया परमेश्वर एव । उत्पाद्य यागादिरूपसाधनस्येव सव्यापारीकरणीयकुठारादिसाधनस्यापि पुरुषप्रवृत्तिविषयत्वदर्शनेन प्रसादरूपव्यापारविषय-त्वेनेश्वरस्यापि प्रमाणफलत्वोपपत्तेः । तथा च प्रमितिविशेषत्वेऽपि तत्प्रमितौ जननीयायां न परार्थत्वम् । तत्प्रमितेरपि भगवत्प्रसादार्थत्वेऽपि अन्यार्थत्वाभावात् । प्रमितिशेषत्वमात्रेण तु न प्राधान्यविघातः । मुख्यप्रयोजनशेषत्वस्यैव तद्विघातकत्वादित्याशयः । उपासनाकार्य इति मूलम् । उपासनाख्यकार्य इत्यर्थः । अत्र उपासनां प्रति कर्मकारकत्वेऽपि तस्या यद्यपि परोक्तं विशिष्टं न कार्यत्वम् । तथापि कृतिसाध्यत्वमात्रं कार्यत्वं आनन्तरिक-व्युत्पत्तिविषयलिङादिवाच्यभविष्यत्क्रियारूपकार्यत्वं वा तस्यामपीति तथोक्तिः । एवमुत्तरत्राप्युपासनीयकार्ये-त्यादिकं मूलटीकागतं योज्यम् ।

**स०व्र०—** क्वापि प्रवृत्तिनिवृत्तिविषयक्रियोपदेशस्तु साक्षात्कारायैवेत्युक्त्या सूचितां स्वमते वेदयोजनां तत्रैव सर्ववेदपर्यवसानात् 'अनुग्राह्यप्रमाणाभावात् न ब्रह्ममीमासारम्भः संभवती'ति पूर्वपक्ष्युक्तनिरासायाह **अयमत्राशय इति** । इयं च योजना एकान्तभक्ताभिप्रायेण । तदितरभक्ताभिप्रायेणाह **अथवेति** ।





**विठ्ठ०—** ननूक्तरीत्येष्टादिरूपसिद्धार्थे व्युत्पत्तिसंभवेऽपि परमेश्वरस्य सर्वानुप्रतीष्टत्वेष्टसाधनत्वयोरभावेऽन्यत्र सर्ववेदपर्यवसानासंभवात्परेण तु सर्ववेदराशेः कार्य एव तात्पर्यस्य वर्णितत्वेन तत्रैव सर्वपर्यवसानप्राप्त्या ब्रह्मणो वेदान्तागोचरत्वेनानुग्राह्यप्रमाणाभावान्न ब्रह्ममीमांसारंभः संभवतीत्याशङ्कां निराकर्तुमपरोक्षं परोक्षं वा ज्ञानमिष्टस्य साधनं क्वापि चेष्टा तदर्था स्यादित्युक्त्यभिप्रेतां सर्ववेदानां हरौ योजनां स्वमतेन दर्शयितुमाह **अयमत्राशय इति** । कर्मपरवेदभागोऽपि ज्योतिरुपक्रमादित्यधिकरणोक्तनामसमन्वयन्यायेन ब्रह्मपर एवेत्याशयेन समस्तोऽपि वेदस्तत्स्वरूपमित्याद्युक्तं वाक्यान्वयपक्षेऽपि योजयति **तं प्रतीति** । उत्तमाधिकार्यपेक्षयैवेयं योजना । तदन्येषां तु भगवत इष्टसाधनत्वात्तदनुरोधेन योजयति **अथवेति** ।

**चषकः—** **अयमाशय इति** । आद्ययोजनायां मुमुक्षुत्वं नाधिकारिविशेषणम् । तेषां मुमुक्षुत्वस्याभावात् । **अथवेति** योजनायां तु उप्रत्ययान्तद्वयेन तस्य तद्विशेषणत्वं प्रत्याप्यत इति ध्येयम् ।

**५५५ सु०— न च प्रयोजनशेषतयेश्वरस्याप्राधान्यं प्रतिपत्तावपरार्थत्वात् । प्रतिपत्तेरेव प्रमाणफलत्वात् ।**

**परि०—** अन्त्यपक्षे दोषमाशङ्क्य निराह **न च प्रयोजनशेषतयेति** । प्रयोजनार्थतयेत्यर्थः । **प्रतिपत्ताविति** । यथा ज्योतिष्टोमादिकं प्रतिपाद्यमानं स्वर्गादिफलशेषत्वेनैव 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादिना अवगम्यते तथा 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादौ प्रतिपत्तिवेलायां परार्थत्वेनाप्रतीत्या प्रतिपत्तौ वेदेन जनितव्यायां ब्रह्मणोऽपरार्थत्वादित्यर्थः । **प्रमाणेति** । वेदरूपप्रमाणेत्यर्थः ।

**वं०प०— न च प्रयोजनशेषतयेति** । अधमाधिकारिणः प्रति परमेश्वरो मोक्षरूपप्रयोजनशेषतयोपदिश्यत इत्यङ्गीकारे मोक्षरूपप्रयोजनस्यैव प्राधान्यप्राप्त्या तच्छेषत्वेनेश्वरस्याप्राधान्यं प्राप्तमित्यर्थः । **प्रतिपत्तावपरार्थत्वादित्यादि** । आत्मा वा अरे द्रष्टव्य इत्यादि वेदः ईश्वरस्वरूपप्रतिपत्तिं तावत्स्वप्राधान्येनैव जनयति नान्यशेषत्वेनाप्राधान्येनेश्वरप्रतिपत्तिरेव च प्रमाणमूलम् । एवं च वेदेन स्वप्राधान्येनेश्वरप्रतिपत्तौ जातायां सत्यां पश्चात्स ईश्वर उत्तमाधिकारिणः प्रतीष्टत्वेनाधिकारिणः प्रतीष्टसाधनत्वेन प्रतिपाद्यत इति व्याख्यातृभिरेव वेदाभिप्रायो विचार्यत इति नोक्तदोष इति भावः । **प्रतिपत्तेरेवेति** । अपरार्थप्रतिपत्तेरेवेत्यर्थः ।

**आनन्दः— प्रतिपत्ताविति** । स्वातन्त्र्यादिगुणवत्तया ज्ञान इत्यर्थः ।

**कं०रा०— प्रतिपत्ताविति** । सत्यज्ञानादिवाक्यैर्जायमानब्रह्मप्रतिपत्तेः पारार्थ्येन तत्स्वरूपविषयत्वाभावात्प्रतिपत्तेरेव च प्रमाणफलत्वात्स्वप्रधाने ब्रह्मणि वेदस्य प्रामाण्यं संभवतीति भावः ।





**वा०चं०**— यथाकथञ्चित्प्रयोजनशेषतया प्रतिपादनेऽप्राधान्यमेवेत्याशङ्क्य निषेधति **न चेति** । प्रमाणस्य साक्षात्फलं प्रमितिरेव । तत्र प्राधान्यं च तत्फलभूतप्रमित्यनन्तरशेषत्वाभावमात्रेणैवेति तदफलशेषत्वं न तत्फलप्राधान्यविघातकमिति भावः ।

**विठ्ठ०**— नन्वेवं योजनायां वेदादिमूलभूतमोक्षरूपप्रयोजनशेषतया ब्रह्मणोऽप्राधान्यं प्रसक्तमित्यत आह **न चेति** । कुत इत्यत आह **प्रतिपत्ताविति** । न मोक्षलाभार्थं ज्ञेयत्वमात्रेणाप्राधान्यमीश्वरस्य प्रमाणेन भवन्मोक्षरूपफले ब्रह्मज्ञानस्य सहकारित्वात्तदर्थं वेदे ब्रह्मस्वरूपनिरूपणमित्युक्ते ब्रह्मणः प्रमाणफलशेषतया परार्थत्वात्प्राधान्यं न भवेत् । न चैवं किन्तु मुमुक्षोर्मोक्षसाधनाकाङ्क्षायां प्रसन्नः परमेश्वर एव मोक्षसाधनतयोपदिश्यते ततश्च तत्प्रसादस्य साधनमेव साधनमिति भगवत्प्रसादसाधनतया तत्प्रतिपत्तेरावश्यकत्वात्तस्याः प्रतिपत्तेरेव प्रमाणफलत्वात्प्रमाणफलभूतेश्वर-प्रतिपत्तावीश्वरस्य परार्थत्वाभावान्नाप्राधान्यमिति भावः ।

**॥ वेदस्य कार्यपरत्वेऽपि वेदोक्तोपासनाकार्ये कर्मकारकतया ब्रह्मणः प्रतीतत्वम् ॥**

**वेदस्य कार्यान्वितत्वेन स्रुक्स्रुववह्न्यादौ अतात्पर्यभावेन सादृश्यम्—**

**५५६ सु०— एवमकार्यशेषतया स्वप्रधाने ब्रह्मणि वेदस्य प्रामाण्यसंभवाद्युक्ता ब्रह्म-जिज्ञासेत्युक्तम् । इदानीमस्तु वा कार्यपरत्वं वेदस्य, तथाऽप्यात्मानमुपासीतेत्युपासनाकार्ये कर्मकारकतया प्रतीतस्य ब्रह्मणः स्वरूपं प्रतिपादयतां 'सत्यं ज्ञानमि'त्यादिवाक्यानां तत्र प्रामाण्यसंभवाद्युक्ता ब्रह्मजिज्ञासेति पक्षान्तरं समर्थयमानः अविधिपरेभ्योऽपि वाक्येभ्यो वस्तुतत्त्वसिद्धिर्भवतीत्यत्र परसंप्रतिपन्नं निदर्शनमाह न चेति ।**

## अनु०— न च स्रुक्स्रुववह्न्यादावतात्पर्यं श्रुतेर्भवेत् ॥

**आदिग्रहणाद्यूपादयः । सर्वस्याम्नायस्य कार्यपरतां मन्यमानस्यापि मते यूपाहव-नीयादिस्वरूपे श्रुतेरप्रामाण्यं तावन्न भवेत्; किन्तु 'यूपे पशुं बध्नाती'ति बन्धनाय यूपे विनियुक्ते तस्यालौकिकत्वात्कोऽसौ यूप इत्यपेक्षायां 'खादिरो यूपो भवति । यूपं तक्षति । यूप-मष्टाश्रीकरोती'ति वाक्यैस्तक्षणादिविधिपरैरपि संस्काराविष्टं विशिष्टसंस्थानं दारु यूप इति गम्यत एव । एवं स्रुक्स्रुवादयोऽपि द्रष्टव्याः ॥ अप्रामाण्यमिति वक्तव्ये अतात्पर्यमिति वचनं यत्परेण प्रत्यक्षादिवैधर्म्यं शास्त्रस्योक्तं तन्निरासार्थम् ।**





**बिन्दुः— अतात्पर्यमिति वचनमिति** । शब्दार्थे प्रमितेऽपि तत्र तात्पर्याभावात्क्वचिद्वाच्यांशो न प्रामाण्यं, तथा विषं भुंक्ष्वेत्यादि पितृवाक्ये विषभक्षणं कर्तव्यमित्यस्मिन्नर्थे, किन्तु यत्परः शब्दः स शब्दार्थ इति न्यायात्। शत्रुगृहे न भोक्तव्यमित्यस्मिन्नेवार्थे प्रामाण्यम्। तथा अष्टाश्रीकरणेन यूपं भावयेदिति व्याख्यानेन यूपमष्टाश्रीकरोतीति वाक्यं यूपस्वरूप एव तात्पर्योपेतमिति भावः। आदिशब्देन स्वर्गादिस्वरूपबोधकानां 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदमि'त्यादीनां सङ्ग्रहः। एवं च यथा केवलमापाततः प्रत्यक्षेण विषयीकृतोऽर्थो यः दूरस्थपरिमाणादिः स वास्तव इति नाभ्युपगम्यते। किन्तु चतुष्टयसन्निकर्षवता तथोपक्रमादिलिङ्गनिर्णीततात्पर्यके एवशब्देन योऽर्थो निश्चीयते सोऽपि तद्वदेवेति युक्तं शास्त्रस्य प्रत्यक्षवदेव प्रामाण्यमिति तादृशे सिद्धस्वरूपे यूपाहवनीयस्वर्गादाविव ब्रह्मस्वरूपेऽप्यक्षतं प्रामाण्यमिति युक्तम्।

**परि०— तस्य (यूपस्य) अलौकित्वादिति** । संस्कारविशेषविशिष्टकाष्ठविशेषरूपत्वेन तक्षणाऽष्टाश्रीकरणादेर्लोकतोऽनवगतत्वादिति भावः। **एवं स्रुक्स्रुवादयोऽपीति** । चतुर्जुह्वां गृह्णाति स्रुवेण अभिघारयति यदाहवनीये जुहोतीत्यादिवाक्यैश्चतुर्ग्रहणाद्यर्थं जुह्वादौ विनियुक्तेऽलौकिकत्वात्किं जुह्वादीत्याकाङ्क्षायां पर्णमयी जुहूर्भवति खादिरः स्रुवो भवत्यर्धोदिते प्रातरादधातीत्यादिवाक्यैः पर्णमयीत्यादिविधिपरैरपि स्रुक्स्रुवादिस्वरूपं गम्यत एवेति भावः। **प्रत्यक्षादिवैधर्म्यमिति** । प्रत्यक्षादेः सिद्धार्थबोधकत्वेन प्रामाण्यसंभवेऽपि शास्त्रस्यासिद्धरूपकार्यपरत्वेनैव प्रामाण्यमिति यद्वैधर्म्यमित्यर्थः। **तन्निरासार्थमिति** । तथात्वे यूपस्रुवादिपदार्थानामसिद्धिप्रसङ्गादतः प्रत्यक्षादिनेव शास्त्रेणापि सिद्धरूपोऽप्यर्थः सिद्ध्यति। तात्पर्यविषयश्च तादृशोऽप्यर्थ इति वाच्यमिति भावः।

**गु०दी०— अस्तु वा कार्यपरत्वम्** इत्यत्र कार्यत्वं नाम लिङ् लोट् तव्यप्रत्ययार्थभूतमिष्टसाधनत्वादिकमुच्यते। **अष्टाश्रीकरोति** इत्यस्य अष्टधारावन्तं करोतीत्यर्थः। **प्रत्यक्षादिवैधर्म्यम्** इत्यत्र प्रत्यक्षादिवैधर्म्यपदेन प्रामाण्यातिरिक्ततात्पर्याख्यविलक्षणधर्मवत्त्वमुच्यते। **तन्निरासार्थं** प्रामाण्यातिरिक्ततात्पर्यनिरासार्थं, प्रमाणबोध्यार्थे तस्य प्रमाणस्यावान्तरतात्पर्यस्याप्यभावे तत्सिद्धेरेवायोगादिति भावः।

**यादु०— यूपादय इति** । अत्रादिपदेनापूर्वदेवतास्वर्गादिकं ग्राह्यम्। यतस्तदपि विधिपरेणैव शास्त्रेण समर्थ्यते। **आहवनीयादिस्वरूप इति** । अत्रादिपदेन गार्हपत्यदक्षिणाग्न्योर्ग्रहणम्। अनेन मूलस्थं वह्निपदमाहवनीयादिपरमित्युक्तं भवति। **एवं स्रुक्स्रुवादयोऽपीति** । चतुर्जुह्वां गृह्णाति स्रुवेणाभिघारयति यदाहवनीये जुहोतीत्यादिवाक्यैश्चतुर्ग्रहणाद्यर्थं जुह्वादौ विनियुक्तेऽलौकिकत्वात्किं तज्जुह्वादीत्याकाङ्क्षायां पर्णमयी जुहुर्भवति खादिरः स्रुवो भवति। अर्धोदिते प्रातरादधातीत्यादिवाक्यैः पर्णमयीत्यादिविधिपरैरपि स्रुक्स्रुवादिस्वरूपं गम्यत एवेति





भावः । **यत्परेण प्रत्यक्षादिवैधर्म्यमिति** । यद्यपि प्रत्यक्षादौ बोधकत्वेनैव प्रामाण्यम् । तथाऽपि वाक्यप्रयोगस्य परार्थत्वात्परप्रवृत्तिनिवृत्त्यौपयिक एवार्थो वाक्यबोध्योऽङ्गीकार्य इति ग्रन्थेन शास्त्रस्य प्रत्यक्षादिवैधर्म्यं परेणोक्तम् तन्निरासार्थमित्यर्थः । अतात्पर्यं नेत्युक्त्या ह्ययमर्थोऽवगम्यते । सत्यम् । प्रत्यक्षादाविव वाक्येऽपि बोधकत्वेनैव प्रामाण्यम् । अतस्तद्वैधर्म्यं शास्त्रस्येति, किन्तु तत्तात्पर्यविषयीभूतार्थबोधकत्वेनैव । तात्पर्यविषयीभूतश्चार्थो न प्रवृत्तिनिवृत्त्युपयुक्तः कार्यात्मैव सर्वत्र किन्तु स्रुक्स्रुवादिरूपः सिद्धोऽपि । अन्यथा तदसिद्धिप्रसङ्गात् । अतः शास्त्रस्य स्रुक्स्रुवादिरूपसिद्धेऽपि तात्पर्यसमर्थनेन तद्बोधकत्वेनापि प्रमाणात्प्रत्यक्षादिवैधर्म्यसंभवे यत्प्रवृत्तिनिवृत्त्योपयिकार्थबोधकत्वेनैव तस्य प्रत्यक्षादिवैधर्म्यं परेणोक्तं तन्निरस्तं भवति ।

**वं०प०— अष्टास्रीकरोतीति** । अष्टभिरस्रैर्धाराभिर्युक्तं करोतीत्यर्थः । **वक्तव्य इति** । स्रुक्स्रुवादेः सिद्धार्थत्वेन तद्बोधकवाक्यानामनधिगतार्थबोधकत्वाभावेनाप्रामाण्यं मीमांसकेनोच्यते । तन्न भवेदिति वक्तव्यमित्यर्थः । **यत्परेणेत्यादि** । स्रुक्स्रुवादावतात्पर्यं श्रुतेर्न भवेदित्युक्त्या परेण स्रुक्स्रुवादौ सिद्धार्थे श्रुतेस्तात्पर्यं नास्तीत्युक्तं भवति तथा च तात्पर्यविषयीभूतप्रवृत्तिनिवृत्त्युपयुक्तकार्यस्वरूपप्रतिपादकत्वं शास्त्रस्यास्ति न प्रत्यक्षस्य । तस्य तात्पर्यविषयीभूतार्थप्रतिपादकत्वाभावादित्येवं शास्त्रस्य प्रत्यक्षादिवैधर्म्यप्रतिपादनप्रसङ्गे यजेतेत्यादिविधिपरशास्त्रस्य प्रवृत्त्याद्युपयुक्तकार्यस्वरूपप्रतिपादकत्वेन तत्रैव तात्पर्यम् । स्रुक्स्रुवयूपाहवनीयादिप्रतिपादकशास्त्रस्य च प्रवृत्त्याद्युपयुक्तकार्यस्वरूपप्रतिपादकत्वाभावान्न स्रुक्स्रुवादौ तात्पर्यमित्येवं स्रुक्स्रुवादौ श्रुतेरतात्पर्यमुक्तं तन्निरासार्थमतात्पर्यं नेत्युक्तमित्याशयः ।

**आनन्दः—** मुख्यसिद्धान्तमुक्त्वाभ्युच्चयवादेनाह **इदानीमिति** । अत एवोक्तम् **अस्तु वेति** । **अप्रामाण्यमिति** । प्रत्यक्षादीनां सिद्धार्थबोधकत्वेऽपि न शास्त्रस्य तथात्वं प्रवृत्तिनिवृत्त्युपयोग्याप्यबोधकत्वाच्छास्त्रस्येति यत्प्राभाकरेणोक्तं तन्निरस्तं शास्त्रस्यापि सिद्धार्थबोधकत्वाभावे पूषादिपदार्थाभावप्रसङ्गादिति । प्रामाण्येऽपि वाचं धेनुमुपासीतेत्यादिवदत्र न तात्पर्यमिति शङ्कानिरासार्थमतात्पर्यतेत्युक्तमिति भावः । मूले यत्किञ्चित् सृगाद्यतिरिक्तं करणं यस्या एवंभूतस्यापि कृतस्य यागस्य यज्ञता स्यादित्यर्थः । यद्वा यत्किञ्चित्करणस्य सृगाद्यतिरिक्तस्य यज्ञता यागसाधनता स्यादित्यर्थः ।

**कं०रा०— विशिष्टेति** । विशिष्टमष्टाश्रित्वादिरूपं संस्थानं यस्य तदित्यर्थः ।

**श्रीनिधि०— इदानीमस्तु वा कार्यपरत्वमिति** । अयं चाङ्गीकारवाद इति ज्ञेयम् । **कर्मकारकतया प्रतीतस्येति** । न चैवमन्यान्वितत्वेनाप्राधान्यं स्वरूपप्राधान्यस्य तदन्यत्वेनाप्रयोजकत्वादिति ।

**वा०चं०—** ननु न च स्रुक्स्रुवेत्याद्युत्तरवाक्ये स्रुगादावप्रकृते श्रुतेस्तात्पर्यप्रतिपादनमसङ्गतम् । न च तस्मादुपासनार्थं चेत्यादितोपासनाकार्यशेषतया ब्रह्मणि वेदप्रामाण्यस्योपपादनात्तदुपयोगान्नासङ्गतिरिति वाच्यम् ।





स्वप्रधाने ब्रह्मणि वेदतात्पर्यकथनावसरे तद्विरुद्धार्थप्रतिपादनायोगादित्यतस्तत्सङ्गमयति **एवमिति** । अत्रादिपद-सङ्ग्राह्यं लौकिकप्रमाणासिद्धं केवलवैदिकपदार्थजातमेवेत्याशयेनाह **आदीति**। परसंप्रतिपत्तिं दर्शयितुमाह **सर्वस्येति**। तावच्छब्दो नेदं दार्ष्टान्तिकाभिधानमपि तु दृष्टान्तोपपादनमिति नासङ्गतिरित्याशयस्य मूलारूढतासंपादनाय । ननु विधिपराणां वाक्यानां यूपादिस्वरूपे तात्पर्याङ्गीकारः परकीयः केन प्रकारेणेत्यतस्तं दर्शयति **किन्त्विति** । चतुर्जुहूं गृह्णाति स्रुवेणाभिघारयति यदाहवनीये जुहोतीत्यादौ चतुर्ग्रहणाद्यर्थं जुह्वादौ विनियुक्तेऽलौकिकत्वात्किं तज्जुह्वादीत्याकाङ्क्षायां पर्णमयी जुहूर्भवति खादिरः स्रुवो भवत्यर्धोदिते सूर्ये प्रातरादधातीत्यादिभिः पर्णमयी-त्वादिविधिपरैरपि जुह्वादिस्वरूपविशेषसिद्धिरपि द्रष्टव्येत्याह **एवमिति** । प्रामाण्यस्यैव प्रस्तुतत्वात्कार्यशेषतया तदुपपादनायाप्रामाण्यं नेति वक्तव्येऽतात्पर्यमिति वचनं यत्परेणोक्तं 'न प्रत्यक्षादिवदर्थबोधकत्वमात्रेण वाक्यस्य प्रामाण्यं किन्तु तात्पर्यविषयीभूतार्थप्रतिपादकत्वेनैव । तात्पर्यविषयीभूतश्चार्थो यः प्रवृत्तिनिवृत्यौपयिककार्यात्मा स एव न तु सिद्धरूप' इति तदयुक्तम् । सिद्धस्यापि यूपाहवनीयादेस्तात्पर्यविषयकत्वेन कार्यस्यैव तात्पर्यविषयत्वा-भावादित्यर्थसूचनायेत्याह **आप्रामाण्यमितीति** ।

**वा०र०**— यूपादय इत्यादिपदसङ्ग्राह्यतावच्छेदकं धर्ममाह **लौकिकप्रमाणेत्यादि** । **परसंप्रतीति** । निदर्शनस्येति शेषः । **इत्याशयस्य मूलारूढतेति** । अप्रकृतस्रुक्स्रुवादौ तात्पर्यप्रतिपादनायोगशङ्कानिरासार्थमिति पूरणीयम् । यूपे पशुं बध्नातीत्यादिभामतीग्रन्थानुसारिमूलं तट्टीकानुसारेण व्याख्येयम् । आहवनीयशब्दे क आहवनीय इति विवक्षायां वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादिविधिभिः संस्कारविशिष्टोऽग्निराहवनीयो गम्यत इति कल्पतरुः । आग्नेयानां षण्णां यागानामित्यादिपूर्वग्रन्थव्याख्यावसरे आहवनीयादिस्वरूपनिरूपणं प्रागेवास्माभिः कृतं ज्ञेयम् । अत्र मूले मुखतउपात्तस्रुक्स्रुवादित्यागेनादिपदोक्तयूपादौ यूपांशे विधिपरवाक्यादपि स्वरूपसिद्धिं मुखत उपपाद्य स्रुक्स्रुवादावतिदेशो उत्तरत्रापि यूपाहवनीयादीति व्यवहारे च निमित्तं तु परेण कार्यान्वितत्वेन यूपाहवनीयादि-शब्दानामेव व्युत्पत्तेरुपपादिततया परप्रसिद्धशब्दानामप्यत्रोपादानसिध्यभिप्रायेणेति द्रष्टव्यम् । **यत्परेणोक्तमिति** । अनेन मूलस्थमुक्तमितिपदं विवृतं भवति । निरासप्रकारप्रदर्शनं **सिद्धस्यापीत्यादि** ।

**स०व्र०**— ननु कार्यनिराकरणमध्ये न च स्रुक्स्रुववह्न्यादावित्यादेरसङ्गतिरित्यत आह **एवमकार्य-शेषेत्यादिना** । कार्यपरत्वे वेदप्राधान्यं ब्रह्मण्यापन्नमित्यत उक्तम् **कर्मकारकतया प्रतीतस्येति** । उद्देश्यत्वा-त्प्राधान्यमित्यर्थः । **अप्रामाण्यमिति वक्तव्य इति** । शब्दस्य तात्पर्यविषयीभूतार्थप्रतिपादकत्वेनैव प्रामाण्यं वक्तव्यम् । तात्पर्यविषयीभूतार्थस्तु कार्यमेव । प्रत्यक्षादेस्तु बोधकत्वेनैव प्रामाण्यमिति । यद्वैधर्म्यं तन्निरासार्थ-मित्यर्थः । स्रुक्स्रुवादीनां सिद्धरूपाणामपि तात्पर्यविषयत्वस्य सूचितत्वादिति भावः । केचित्तु । प्रत्यक्षादिवैधर्म्य-पदेन प्रामाण्यातिरिक्ततात्पर्याख्यविलक्षणधर्मत्वमुच्यते तन्निरासार्थः प्रमाणबोध्यार्थे तस्य प्रमाणस्याभेदः अवान्तरतात्पर्याभावे तेन सिद्धेरेवायोगादिति भाव इत्याहुः । अपरे तु प्रत्यक्षादीनां सिद्धार्थबोधकत्वेऽपि न शास्त्रस्य तथात्वम् । प्रवृत्तिनिवृत्त्युपयोग्यर्थबोधकत्वाच्छास्त्रस्येति यत्प्राभाकरेणोक्तं तन्निरस्तम् । शास्त्रस्यापि





सिद्धार्थबोधकत्वाभावे यूपादिपदार्थाभावप्रसङ्गादित्याहुः । अन्ये तु यद्यपि प्रत्यक्षादौ बोधकत्वेनैव प्रामाण्यं तथापि वाक्यप्रयोगस्य परार्थत्वात्परप्रवृत्तिनिवृत्त्यौपयिक एवार्थो वाक्यबोध्योऽङ्गीकार्य इति शास्त्रस्य प्रत्यक्षादि-वैधर्म्यं यत्परोणोक्तं तन्निरासार्थमित्यर्थः । स्रुक्स्रुववह्न्यादिरूपेऽर्थे परप्रवृत्त्याद्यनुपयुक्ते वाक्यस्य तात्पर्याभावे तत्राप्रामाण्यमेव । तात्पर्यविषय एव वाक्यस्य प्रामाण्यात् । प्रत्यक्षादौ तु नैवमिति परोक्तं दूषयितुं स्रुक्स्रुवादौ प्रामाण्यसमर्थनाय तात्पर्यमेव साधयतीति भाव इत्याहुः ।

**विठ्ठ०—— आदिग्रहणादिति** । यूपादयोऽप्यत्र ग्राह्याः वह्न्यादावित्यादिपदग्रहणादित्यर्थः । **अलौकिक-त्वादिति** । यूपस्वरूपमात्रे प्रत्यक्षेऽपि संस्कारादिविशिष्टस्यालौकिकत्वादित्यर्थः । एवं स्रुक्स्रुवादयोऽपीति शमीमयो वा हिरण्मयो वा स्रुवो भवतीत्यादि द्रष्टव्या इत्यर्थः । अत्र स्रुक्स्रुवादेरेव मूले स्ववचनेन गृहीतत्वेऽपि यूपविषये श्रुतौ बहुवाक्यसद्भावात्तदादितयोपपादनं कृतमिति ज्ञेयम् । **यत्परेणेति** । यत्परेणोक्तं न प्रत्यक्षादिवदर्थबोधकत्वमात्रेण वाक्यस्य प्रामाण्यं किन्तु तात्पर्यविषयभूतार्थत्वेनैव तात्पर्यविषयभूतोऽर्थश्च न सिद्धरूपः किन्तु प्रवृत्त्याद्यौपयिकः कार्यात्मैवेति वैधर्म्यं तन्निरासार्थं तथाहि सिद्धस्यापि स्रुक्स्रुवादेस्तात्पर्यविषयकत्वस्य साधितत्वेन कार्यमेव तात्पर्यविषयीभूतं न सिद्धमित्यनुपपन्नमिति ।

**चषकः—— यूपादय** इत्यादिशब्दः स्वर्गापूर्वदेवतादिसंग्राहकः । आहवनीयादीत्यादिशब्दः गार्हपत्य-दक्षिणाग्निपरिग्राहकः । **यत्परेण प्रत्यक्षादिवैधर्म्यमिति** । वाक्यप्रामाण्यं न प्रत्यक्षादेरिवार्थबोधकतामात्रनियन्त्रितं किन्तु तात्पर्यविषयीभूतप्रवृत्तिनिवृत्त्यौपयिककार्यप्रतिकार्यजनकतानिबन्धनमेवेति वाक्यस्य प्रत्यक्षाद्वैलक्षण्य-प्रतिपादनं प्राभाकरीयं न सङ्गच्छते कार्यानात्मनोऽपि यूपाहवनीयादेस्तात्पर्यविषयतया कार्यस्यैव तत्तेतिनियमस्य निर्बीजत्वादिति भावः ।

**प्रदीपः——** ननु कार्यनिराकरणमध्ये न च स्रुक्स्रुववह्न्यादावित्यादेरसङ्गतिमाशङ्क्याह **एवमकार्यशेष-तयेत्यादिना** । कार्यपरत्वे वेदस्याप्रामाण्यं ब्रह्मण आपतदित्यत उक्तं **कर्मकारकतयापीति** । तस्येत्युद्देश्यत्वात् प्राधान्यमित्यर्थः । **अप्रामाण्यमितीति** । प्रतीत्यादीनां सिद्धार्थबोधकत्वेऽपि न शास्त्रस्य तथात्वं प्रवृत्तिनिवृत्त्युप-योग्यर्थबोधकत्वाच्छास्त्रस्येति यत्प्राभाकरेणोक्तं तन्निरस्तं शास्त्रस्यापि सिद्धार्थबोधकत्वाभावे यूपादिपदार्थे भावप्रसङ्गादिति । अथेति बन्धविधिना दारु चात्राक्षेपेऽपि विशिष्टस्यैव पूर्वसाधनत्वादपूर्वं च येन केनापि बन्धनेन भवतीत्यर्थः । नः श्रुतेरिति सत्यां वादिस्वरूपसिद्धावपूर्वसाधनत्वं सर्वशब्दानां कार्यपरत्वे स्वरूपस्यैवासिद्धेः कुतस्तेनापूर्वनिष्पत्तिरित्यर्थः । अङ्गीकृत्याप्यपूर्वसिद्ध्यर्थत्वं प्रकृतेऽपि तथास्त्वित्याह विद्यमानैकविशिष्टफलावास्त्यर्थं सत्यज्ञानादिगुणवत्यनारोपिते ब्रह्मस्वरूपेऽपि सत्यज्ञानादिपदानां तात्पर्यं यूपादिन्यायेन भवेदेवेत्यर्थः । यथेति न वेति शब्दयोर्निषेधविकल्पार्थयोः स्वं रूपं शब्दस्याशब्दसंज्ञेति शब्दस्वरूपग्रहणे प्राप्ते स्वाभाविकमेवार्थपरत्वमितिशब्दो द्योतयतीत्यर्थः । दृष्टो हि तस्यार्थः । कर्मावबोधनमित्यस्यायमर्थः ।





५५७ सु०— कुतो न भवेदित्यत आह **यत्किञ्चिदिति** ।

**अनु०— यत्किञ्चित्करणस्यापि यज्ञतैवान्यथा भवेत् ॥**

**अन्यथा यूपाहवनीयादिवाक्यानां यूपादिस्वरूपे तात्पर्याभावे । यत इति शेषः ।**

**वा०चं०**— ननु यद्येवं परसंप्रतिपत्तिस्तर्हि यत्किञ्चिदित्युत्तरवाक्ये विपक्षे बाधकोक्तिरश्लिष्टेत्यतो वैयात्यादिदमनङ्गीकुर्वाणं प्रति बाधकप्रदर्शनं नानुपपन्नमित्याशयेनाह **कुत इति** । यत्किञ्चित्करणस्यापि यज्ञतैवान्यथा भवेदि'ति यत्किञ्चित्करणस्य यज्ञतैवान्यथा विपरीता भवेदिति यत्किञ्चित्करणस्य यज्ञताया वैपरीत्यमापद्यत इति भाति, अतोऽन्यथापदार्थं कथयन्नेवास्य बाधकपरत्वप्रदर्शनायाध्याहारेण पूर्वसंबन्धं सूचयति **अन्यथेति** । स्रुगादौ तेषां वाक्यानां तात्पर्यस्य ब्रह्मणि सत्यज्ञानादिवाक्यतात्पर्ये हेतुत्वासंभवात्समानन्यायेनेत्युक्तम् । कार्यशेषतामानेतुं कार्यपदम् । ननु स्वरूपमात्रसिद्धावपि न गुणादिसिद्धिरित्यतः सकलगुणाद्युपेतस्यैव स्वार्थत्वादित्याशयेन सकलेत्याद्युक्तम् ।

**वा०र०**— यत्किञ्चित्करणस्येत्यनुव्याख्यानं यत्किञ्चिद्भस्महोमकरणस्याहवनीयादिरहितस्य यज्ञता भवेदिति सन्न्यायरत्नावल्यां व्याख्यातम् । तत्सिद्धवत्कृत्य मूलं प्रवृत्तमित्याशयेन स्वयमपि सिद्धवत्कृत्यैवान्यथापदव्याख्याननिमित्ततयाऽन्यथा भानमेवोपदर्शयति **यत्किञ्चित्करणस्येति** ।

**वि०ठ०**— यत्किञ्चित्करणस्यापीत्यनुभाष्यस्य यत्किञ्चित्करणस्य भस्महोमादिलक्षणस्याहवनीयादिरहितस्यापि यज्ञता स्यादिति सन्न्यायरत्नावल्यामर्थस्य स्पष्टत्वादन्यथेत्यस्यार्थमाह **अन्यथेति** ।

५५८ सु०— किमतो यद्येवं स्रुक्स्रुववह्न्याद्यावपि श्रुतेस्तात्पर्यमस्तीत्यत आह **तस्मादिति** ।

**अनु०— तस्मादुपासनार्थं च स्वार्थे तात्पर्यवद् भवेत् ॥**

**यस्मात्कार्यान्वितत्वेन यूपाहवनीयादिशब्दानां स्वार्थे तात्पर्यमस्ति । तस्मात्तत्समानन्यायेनोपासनाकार्यार्थत्वेन 'सत्यं ज्ञानमि'त्यादिवेदवाक्यं च स्वार्थे सकलगुणक्रियाद्युपेते ब्रह्मणि तात्पर्ययुक्तं भवेत् ।**

**ननु विषमोऽयमुपन्यासः । यूपादिस्वरूपाभावे पशुबन्धादिकार्यमेव न निष्पद्यत इति तत्स्वरूपेऽपि तात्पर्यमवश्याश्रयणीयम् । न चैवमुपासनं विना कर्मकारकसत्तया**





**नोपपद्यते, आरोपिताकारेणापि संभवादिति । मैवम् । पार्थिवद्रव्यमात्रे बन्धनसंभवेन खादिरत्वादावतात्पर्योपपत्तेः । तदप्यपूर्वत्वादविरुद्धत्वाच्च गृह्यत इति चेत् समं प्रकृतेऽपि । अथ खादिरत्वाद्यभावे नापूर्वोत्पत्तिरिति चेन्न । श्रुतेस्तत्र प्रामाण्यस्याद्याप्यनिश्चयात् । अविद्यमानार्थोपासनेऽपि फलाभावस्य साधयिष्यमाणत्वात् ।**

**परि०— अपूर्वत्वादिति** । मानान्तराप्राप्तत्वादपूर्वजनकत्वाद्वेत्यर्थः । **प्रकृतेऽपीति** । गुणकर्मादिविषयेऽपीत्यर्थः । **साधयिष्यमाणत्वादिति** । चतुर्थाद्यपादे 'न प्रतीके न हि स' इत्यत्रेति भावः ।

**यादु०— श्रुतेस्तत्रेति** । तत्र खादिरत्वादेरपूर्वजनकत्व इत्यर्थः । सर्वशब्दानां कार्यमात्रपरत्वे खादिरादिस्वरूपबोधकाभावेनासिद्धेः कथं तेनापूर्वनिष्पत्तिर्बोधनीया । तथा च खादिरो यूपो भवतीत्यादिवाक्यानां विशिष्टयूपस्वरूपपरत्वेन तैर्यूपस्वरूपे सिद्धे तस्यापूर्वनिष्पादकत्वसिद्धिः । तत्सिद्धौ च तदन्यथाऽनुपपत्त्योदाहृतवाक्यानां खादिरत्वादिविशिष्टद्रव्यपरत्वसिद्ध्या यूपादिस्वरूपसिद्धिरित्यन्योन्याश्रय इति भावः । खादिरत्वादीनामपूर्वार्थत्वमङ्गीकृत्य प्रकृतेऽपि तथाऽस्त्वित्यत आह **अविद्यमानेति** । खादिरत्वाद्यभावेऽपूर्वलक्षणफलाभाववत्प्रकृतेऽप्यात्मस्वरूपकर्मकारकाभावेऽविद्यमानार्थोपासनया फलाभावादुपासनायाः फलजनकत्वायात्मादिस्वरूपेऽपि तात्पर्यमङ्गीकार्यमेवेति भावः ।

**वं०प०**— कर्मकारकसत्तया विनोपासनं कथमुपपद्यत इत्यत आह **आरोपिताकारेणापीति** । **तदपीति** । खादिरत्वाद्यपीत्यर्थः । **अपूर्वत्वात्** प्रमाणान्तरेणाप्राप्तत्वात् । **गृह्यत इति** । तथा च तत्र तात्पर्यमस्तीत्याशयः । **सममिति** । तथाच सत्यज्ञानादिवाक्यस्यापि सकलगुणक्रियाद्युपेते स्वार्थे उपासनाविषयतया कर्मकारकभूते ब्रह्मण्यपि तात्पर्यमङ्गीकार्यमपूर्वत्वादविरुद्धत्वाच्चेत्यर्थः । **तत्रेति** । खादिरत्वादेरपूर्वजनकत्व इत्यर्थः । सर्वशब्दानां कार्यपरत्वेन खादिरादिस्वरूपबोधकाभावेनासिद्धतया पूर्वजनकत्वबोधकत्वायोगादिति भावः । **फलाभावस्येति** । उपलक्षणमेतत् । विपरीतफलस्य चेत्यादि द्रष्टव्यम् । उक्तं चैतज्जैमिनिनाऽपि । अचेतनासत्यायोग्यान्यनुपास्यानि अफलत्वविपर्ययाभ्यामिति । अचेतनं नोपास्यं फलाभावात् । असत्यमयोग्यं च नोपास्यमुक्तफलाभावाद्विपरीतफलसद्भावाच्चेति जैमिनिसूत्रार्थो द्रष्टव्यः ।

**आनन्दः— समं प्रकृतेऽपीति** । गुणक्रियाद्युपेतस्य ब्रह्मणोऽप्यपूर्वत्वादविरोधाच्च तद्ग्रहणमिति साम्यमित्यर्थः । **श्रुतेरिति** । खादिरो यूपो भवतीत्यस्या इत्यर्थः । तत्र खादिरत्वे यदपि आरोपिताकारेणाप्युपासनसंभवात् न कर्मकारकसत्तया प्रयोजनमिति । यदपि नेत्याह **अविद्यमानेति** ।

**कं०रा०— तदपीति** । मानान्तराप्राप्तत्वात्तदविरुद्धत्वाच्च खादिरो यूपो भवतीत्यादिवाक्यतात्पर्यविषयतया खादिरत्वादिकमपि गृह्यत इत्यर्थः । **सममिति** । मानान्तराप्राप्तत्वादविरुद्धत्वाच्चोपासनाकर्मभूतं सकलगुणक्रियाद्युपेतं





ब्रह्मापि सत्यज्ञानादिवाक्यतात्पर्यविषयतया गृह्यत इति सममित्यर्थः। **श्रुतेरितीति**। खादिरो यूपो भवतीत्यादिश्रुतेः खादिरत्वादौ प्रामाण्यनिश्चये सति हि विहितस्य खादिरत्वस्याभावेऽपूर्वनिष्पत्तिर्नेति वक्तुं शक्यम्। पार्थिवद्रव्यमात्रे बन्धनसंभवेन खादिरत्वादावतात्पर्योपपत्तेः। स्वत एव तु नास्तीति भावः। **अविद्यमानेति**। तथा चाविद्यमानार्थोपासनेन फलाभावात्फलनिष्पत्त्यर्थमुपासनाकर्मकारके सकलगुणक्रियाद्युपेते ब्रह्मणि श्रुतेस्तात्पर्यमवश्यमङ्गीकर्तव्यमिति भावः।

**श्रीनिधि०— तत्र खादिरत्वादौ प्रामाण्यस्याद्याप्यनिश्चयादिति**। सत्यज्ञानादिवाक्यवत्सिद्धार्थत्वन्यायसाम्यादिति भावः।

**वा०चं०—** भाष्यकारेण साम्योक्त्या सूचितं पराभिमतवैषम्यनिरासप्रकारं दर्शयति **ननु चेत्यादिना**। यद्वेतिशब्दोन्नयेऽग्नावितीत्याद्युत्तरग्रन्थस्य वैषम्यपरिहाराय प्रवृत्तत्वात्तत्सूचितवैषम्यान्तरपरिहारप्रकारव्युत्पादनार्थत्वात्तत्प्रसञ्जकत्वाद्वा ननु चेत्यादिग्रन्थ उत्तरवाक्यशेषो द्रष्टव्यः। अधिकरणस्वरूपे सर्वथा तात्पर्यानभ्युपगमे बन्धनादिकार्यस्वरूपानिष्पत्त्या कार्यतात्पर्यमेव न निष्पद्यत इत्यन्यथाऽनुपपत्तिरूपबाधकसद्भाववदुपासनाकर्मस्वरूपे तदनभ्युपगमे न बाधकमित्याशयः। तथाऽपि खादिरत्वादावतात्पर्ये बाधकाभावात्तदसिद्धिप्रसङ्ग इत्याह **पार्थिवेति**। ननु माऽस्तु कार्यस्वरूपानिष्पत्तिरूपान्यथाऽनुपपत्तिः खादिरत्वादितात्पर्ये मानम्। तथाऽप्यन्येन प्राप्तेः प्रमाणान्तरविरोधस्य वाऽतात्पर्यप्रयोजकत्वात्तदभावात्प्रतीतिविषये खादिरत्वादावपि तात्पर्यमित्याशङ्क्ते **तदपीति**। ननु खादिरत्वादावतात्पर्ये कार्यस्वरूपनिष्पत्तेरभावेऽतात्पर्यप्रयोजकशून्यत्वे सति प्रतीतिविषयत्वस्य च प्रकृतसाम्येऽपि बन्धनाद्यनुपपत्त्या कस्यचित्प्राप्तावपि खादिरत्वाद्यभावेऽपूर्वानुत्पत्तेरपूर्वानुत्पत्तिरेव तत्रातात्पर्ये बाधिकेत्याशङ्क्ते **अथेति**। खादिरादौ तात्पर्यसिध्यधीनत्वात्तस्यापूर्वसाधनताया अन्योन्याश्रयापत्तिरित्याह **श्रुतेरिति**। अस्तु वा अपूर्वानुत्पत्तिः तत्र अपूर्वानुत्पत्तिवत् तत्फलानुत्पत्तेः अत्रापि तात्पर्यसाधकत्वमित्याह **अविद्यमानेति**।

**वा०र०—** ननु विधिपराणां वाक्यानां यूपादिस्वरूपेऽपि तात्पर्याङ्गीकारः केन प्रकारेणेत्याशङ्कापरिहाराय प्रवृत्ते सर्वस्येत्यादिमूले यूपे पशुं बध्नातीति वाक्यस्य विधिपरत्वेऽपि तस्य यूपे तात्पर्यमित्यनुक्त्वा खादिरत्वादिविधानवाक्यस्य विधिपरस्यापि यूपादिस्वरूपे तात्पर्यमित्युक्त्वा ननु च विषमोऽमित्याद्युत्तरग्रन्थे यूपादिस्वरूपाभावे पशुबन्धादिकार्यमेव न निष्पद्यत इत्यदिना यूपे पशुमित्यादिवाक्यस्यैव यूपादौ तात्पर्यमित्युक्तं कल्पनागौरवादेव पदार्था न स्युरित्युत्तरभाष्यमूलेऽपि एवं तर्हि यूपाहवनीयादीत्यादिकं कार्यपरवाक्यमाश्रित्यैवोच्यते। तत्कथम्। तथा सति पूर्वमपि खादिरत्वादिविधानवाक्यस्य यूपादिस्वरूपे तात्पर्याभिधानायोग इति चेन्न। पूर्वमपि वाक्यद्वयस्य विधिपरस्यापि यूपादिस्वरूपेऽपि तात्पर्यमित्यभिधानमभिप्रेतमेव। खादिरादिवाक्यस्यैव लक्षणकथनपरस्य मुखतः तात्पर्याभिधानं तु यूपादिस्वरूपविशेषसिद्ध्यभिप्रायेण। अत एवोत्तरत्र स्वरूपमात्र-

तात्पर्यपरेणान्यथानुपपत्त्या शङ्किते खादिरत्वादिविशेषतात्पर्याभावः पृथगभिहितः इत्यादि शोध्यमस्ति । **ननु श्रुतिरेवात्मादिस्वरूप** इत्यादिकं मूलं च प्रागुक्ताविरोधेन योज्यमस्ति । **अन्येन प्राप्तेरिति** । अपूर्वत्वे प्रमाणान्तराप्राप्तार्थत्वमिति व्याख्यानं सूचयितुमेवमुक्तम् । कस्यचिदिति पार्थिवेत्युक्तोद्धारोऽयम् । तस्य **खादिरत्वादौ तात्पर्येति** । अनेन तत्र प्रामाण्यस्येत्येतद्विवृतं भवति । अपूर्वानुत्पत्तिरित्यतःपरं तथापीति शेषः । अनुत्पत्तिवदिति षष्ठ्यर्थे वतिः । तत्रापूर्वानुत्पत्तेस्तात्पर्यसाधकत्ववदत्रापि फलानुत्पत्तेरिति योजना । **अत्रापि साधकत्वमिति** । अपिशब्दः साधकसद्भावमात्रसमुच्चयार्थे न तु विशेषसमुच्चयार्थ इति नानुपपत्तिरिति ज्ञेयम् ।

**स०व्र०— अथेति** । बन्धनविधिना दारुमात्राक्षेपेऽपि विशिष्टस्यैव काष्ठस्यापूर्वसाधनत्वादपूर्वं च येन केनापि बन्धने न भवतीत्यर्थः । **श्रुतेस्तत्रेति** । खादिरो यूपो भवतीत्यादिवाक्यानां खादिरत्वादौ तात्पर्ये सिद्धे खादिरत्वाभावेऽपूर्वाभावसिद्धिः तत्सिद्धौ च खादिरादिवाक्यस्य तत्र तात्पर्यसिद्धिरितीतरेतराश्रयादित्यर्थः । अन्ये तु । तत्र खादिरत्वादेरपूर्वजनकत्वे इत्यर्थः । शब्दानां कार्यपरत्वे खादिरो यूपो भवतीत्यादिवाक्यानां विशिष्टयूपस्वरूप-परत्वेन यूपस्वरूपे सिद्धे तस्यापूर्वनिष्पादकत्वसिद्धिः । अपूर्वनिष्पादकत्वसिद्धौ तदन्यथाऽनुपपत्त्योदाहृतवाक्यानां खादिरत्वादिविशिष्टद्रव्यपरत्वसिद्ध्या यूपादिस्वरूपसिद्धिरित्यन्योन्याश्रय इति भाव इत्याहुः । अपूर्वार्थत्वमङ्गीकृत्य प्रकृतेऽपि तथास्त्वित्याह **अविद्यमानेति** । विशिष्टफलावाप्त्यर्थं सत्यज्ञानादिगुणवत्यनारोपिते ब्रह्मस्वरूपेऽपि सत्यज्ञानादिपदानां तात्पर्यं यूपादिन्यायेन भवेदेवेत्यर्थः ।

**विठ्ठ०— आरोपिताकारेणेति** । उपासनाविषयस्याभावेऽपि योषितमग्निं ध्यायीतेत्यादाविवाविद्यमानो-पासनोपपत्तेरिति भावः । **अपूर्वत्वादित्यस्य** अपूर्वजनकत्वादित्यर्थः । **सममिति** । सत्यज्ञानादिवाक्येऽप्यपूर्व-जनकत्वसाम्यादित्यर्थः । ननु ब्रह्मणि गुणाद्यभावेऽपि केवलं तथा भावनया भवत्यपूर्वोत्पत्तिः न त्वेवं यूपादौ तस्य खादिरादित्व एवापूर्वजनकतायाः प्रमितत्वात् अतस्तत्सत्त्वमङ्गीकार्यमित्याशयेन शङ्कते **अथेति** । परिहरति **नेति** । तथा सति खादिरो यूपो भवतीत्यादिवाक्यानां खादिरत्वाष्टाश्रिकरणत्वादिप्रकारकयूपादिस्वरूपपरत्वेन तैर्यूपादि-स्वरूपे सिद्धे तस्य यूपादेरपूर्वजनकत्वसिद्धिः । अपूर्वजनकत्वसिद्धावेव तदन्यथानुपपत्त्योदाहृतवाक्यानां खादिर-त्वादिविशिष्टद्रव्यपरत्वसिद्ध्या यूपादिस्वरूपसिद्धिरित्यन्योन्याश्रय इति भावः । तत्रेत्यस्य खादिरत्वादेरपूर्वजनकत्व इत्यर्थः । किञ्च आरोपिताकारेण ब्रह्मोपासनासंभवेन सत्यज्ञानादिवाक्यानामपि स्वार्थे तात्पर्यमावश्यकमिति भावेनाह **अविद्यमानेति** । "न प्रतीके न हि सः" इत्यर्थकरणे साधयिष्यमाणत्वादित्यर्थः ।

**चषकः— तत्र प्रामाण्यस्य** खादिरत्वादौ प्रामाण्यस्य ।



॥ आत्मेत्येवोपासीत इत्यादिश्रुतीनां आत्मादिस्वरूपे तात्पर्यसद्भावः ॥

॥ तत्र इतिशब्दस्य विपक्षे बाधकाभावात् प्रकारवाचित्वम् ॥

॥ वैपरीत्यार्थक-इतिशब्दाध्याहारस्य अयुक्तत्वम् ॥

अग्नौ जुहोतीत्यादावपि तथाकरणे स्मृतिमात्रस्य होमान्विततताप्रसङ्गः—

**५५९ सु०— ननु श्रुतिरेवात्मादिस्वरूपे तात्पर्याभावं गमयति ॥ 'आत्मेत्येवोपासीते'त्यादावितिशब्दसंबन्धात् । इतिशब्दो हि वैपरीत्ये वर्तते । 'न वेति विभाषे'ति यथा शब्दप्रकरणे 'न वा' इति शब्दयोर्विभाषासंज्ञायां वैपरीत्यवाचिनेतिशब्देन तावर्थपरौ व्यवस्थाप्येते; तथेहाप्यर्थप्रकरणे श्रुतेनेतिशब्देनात्मनः स्वरूपेणोपासनासंबन्धं निवार्य स्मृतिमात्रेण संबन्धो ज्ञाप्यते । तत्कथमात्मसिद्धिर्वेदादिति चेन्न । अत्रेतिशब्दस्य प्रकारवाचित्वात्। विपक्षे बाधकमाह इतिशब्दोन्नय इति ।**

## अनु०— इतिशब्दोन्नयेऽग्नावित्यप्युन्नीते स्मृतिर्भवेत् ॥

**आत्मादिशब्दैरितिशब्दस्य वैपरीत्यवाचिनो योगे व्याख्यायमाने 'अग्नौ जुहोति' इत्यादावपि वैपरीत्यार्थे इतिशब्दे योजितेऽग्नेरपि स्वरूपेण होमान्वयो न स्यात् । किन्तु स्मृतिमात्रेणेति ।**

**बिन्दुः— न वेति विभाषेति यथेति** । इतिशब्दः काकाक्षिगोलकन्यायेनोभाभ्यां संबध्यते । स च पदार्थविपर्यासकृत् । तेनार्थ एवेह संज्ञी संज्ञा च । एतेन अन्यतरस्यां वा इत्यादेरपि संग्रहः । अन्यथा विभाषाशब्दमात्र एव एतत्सूत्रप्रवृत्तिः स्यात् । अर्थपरनिर्देशे तु तत्तच्छब्दोपस्थितार्थमादाय सर्वत्र प्रवृत्तिरिति ध्येयम् । निषेधविकल्पयोर्विकल्पः संज्ञा (विभाषा) स्यात् इति सूत्रार्थः । तथा च तेनेति निषेधेन समीकृते विषये वेति विकल्प्य ऐकरूप्येणैव प्रवर्तनम् । उभयत्र विभाषार्थं चेदं सूत्रम् । प्राप्तविभाषायामप्राप्तविभाषायां चोपयोगाभावात् । स्वरितञित इत्यादिना प्राप्तात्मनेपदं विभाषोपपदेन प्रतीयमान इत्यनेन विकल्प्यते, तत्र पक्षे निषेधमात्रेणैवोपयोगः । विभाषोर्णोरिति इडादेर्ङित्वविकल्पार्थं प्रवृत्तायामप्राप्तविभाषायां च पक्षे विधिमात्रेणोपयोगात् । विभाषा श्वेरित्युभयत्र विभाषायां तु यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव विकल्पः स्यात् । कित्सु यजादित्वान्नित्यमेव संप्रसारणं स्यात् ।





अथ प्रतिषेधमुखेन तर्हि कित्स्वेव विकल्पः स्यात्। न तु पित्स्वित्यतो निषेधविकल्पयोर्विकल्पः संज्ञेति स्थितम्। तथा प्रकृतेऽपि इति शब्दस्य पदार्थविपर्यासकृत्वमिति भावः।

**परि०— वैपरीत्य इति**। यस्माच्छब्दात्परत इति शब्दः श्रुतः तस्य शब्दस्य प्रकरणप्राप्तार्थं प्रच्याव्य तद्विपरीतार्थपरत्वं संपादयतीत्यर्थः। क्वोपलब्धमेतदित्यत आह **न वेति विभाषेति यथेति**। व्याकरणे प्रथमस्याद्यपादे न वेत्यादिसूत्रे न वा शब्दात्परत्र श्रुतेतिशब्दे दृष्टमेतदित्यर्थः। तत्कथमित्यतो महाभाष्योक्तप्रकारेण तदनुवदति **शब्देति**। 'क्तक्तवतू निष्ठे'त्यादिरूपेण शब्दस्वरूपं गृहीत्वा तस्य संज्ञाविधानप्रकरणे न वा विभाषेत्युक्तौ नेति वेति यौ शब्दौ तयोर्विभाषेति संज्ञा प्राप्नोति प्रकरणबलात्। तथा च विभाषेत्यादिकार्यस्थले विभाषा भवतीत्युक्ते न वा शब्दौ भव(तः)तीत्यर्थस्यापत्त्येष्टसिद्धिर्न स्यादतः प्राकरणिकार्थवैपरीत्यवाचिनेतिशब्देन निषेधविकल्पार्थपरौ व्यवस्थाप्येते इत्यर्थः। **प्रकारेति**। 'इति हेतुप्रकरणप्रकारादिसमाप्तिष्वि'त्यभिधानादिति भावः। आहवनीये जुहोतीत्यस्यार्थानुवादोऽयमग्नौ जुहोतीत्यादावपीति। यदग्नौ जुहोतीत्यपि समिधमित्यस्य वाऽयमनुवादः।

**गु०दी०— अर्थपरौ व्यवस्थाप्येते** इत्यत्र "बहुलमन्यतरस्याम्" इत्यादीनामपि विभाषासंज्ञात्वप्राप्त्यर्थं तौ न वेति शब्दौ अर्थपरौ न वेति पदयोर्योऽर्थः तत्परावित्यर्थः। **तथेहापि** इत्यत्र अर्थप्रकरणे वैपरीत्यवाचिना इतिशब्देनात्मशब्दलाभेऽप्यात्मस्वरूपस्मृतेर्लभः कथमिति चिन्त्यम्।

**यादु०— न वेति शब्दयोरिति**। नवाशब्दयोर्निषेधविकल्पार्थयोः स्वं रूपं शब्दस्याशब्दसंज्ञेति-शब्दस्वरूपग्रहणे प्राप्ते स्वाभाविकमेवार्थपरत्वमितिशब्दो द्योतयतीत्यर्थः। इतिशब्दः काकाक्षिन्यायेनोभाभ्यां संबध्यते। स च पदार्थविपर्यासकृत्तेनार्थ एवेह संज्ञी संज्ञा चेति भाष्ये तस्य व्याख्यातत्वादिति भावः। सूत्रार्थस्त्वित्थम्। नेति निषेधो वेति विकल्पार्थो निषेधेन समीकृतेऽर्थे विकल्पः प्रवर्तते। विकल्पो हि द्विविधः। नित्यतया प्राप्तस्य सर्वथाऽप्राप्तस्य चेति। द्विविधोऽप्ययं निषेधपूर्वक एव। नित्यप्राप्तिस्थले चेद्विकल्पः प्रवर्तते तदा सर्वथेदं नित्यप्राप्तं न किन्तु पक्ष एवेति। यत्र च सर्वथाऽप्राप्तौ विकल्पस्तत्रापीदं सर्वथाऽप्राप्तं न किन्तु पक्ष एवेति। इतिशब्दोऽत्रार्थपर एव स्वीकार्यः। अन्यथा स्वं रूपमिति परिभाषया नवाशब्दयोरेव विभाषासंज्ञायां विभाषा जसीत्यादौ नवाशब्दयोरेव ग्रहणप्रसङ्गात्। तथा चार्थपरत्वस्यावश्यकत्वान्निषेधपूर्वको यो विकल्पस्तस्य विभाषासंज्ञा स्यादिति वैपरीत्यमात्रेऽयं दृष्टान्त इत्यवगन्तव्यमतो नासङ्गतिः।

**वं०प०—** उन्नय इत्यस्यार्थमाह **योग इति**। योजन इत्यर्थः।

**श्रीनिधि०— न वेति शब्दयोः** न वा इति शब्दयोः। **स्मृतिमात्रेण संबन्ध इति**। उपासनं नाम सन्ततं स्मृतिः। तथा च स्वरूपेणोपासनासंबन्धे निरस्ते अविद्यमानस्यैव योषितमग्निं ध्यायीतेतिवत् स्मृतिकार्येत्यर्थः।





**वा०चं०**— नन्वितिशब्द एवात्र नास्ति। अस्तु वा स तथाऽपि कथं तस्य परपक्षसाधकत्वं सिद्धान्तिनः प्रत्यनिष्टत्वं च येनोत्तरवाक्ये दृष्टान्ते तत्साम्योपादानं सङ्गच्छेतेत्यत आह **नन्विति**। इतिशब्दस्य पदार्थवैपरीत्यार्थत्वं व्याकरणसंमत्या दर्शयति **न वेतीति**। शब्दप्रकरण इत्यनेन स्वं रूपं शब्दस्येति शब्दपदार्थताप्रापकं सूचयति। न वेतिशब्दयोरित्युक्त्या नायं प्रतिषेधार्थो न वेत्येकनिपातः। (न वेति विभाषा। निषेधविकल्पयोर्विभाषा संज्ञा स्यादिति सूत्रार्थः। स्वं रूपं शब्दस्याशब्दसंज्ञा। शब्दस्य स्वं रूपं संज्ञि शब्दशास्त्रे या संज्ञा तां विनेति सूत्रार्थः।) विभाषा दिक्समास इति प्रकृते न बहुव्रीहाविति प्रतिषेधवैयर्थ्यापत्तेः। प्रदेशेषु न शब्द एवोपादेयश्च स्यात्। सङ्ख्यावाचकनवशब्दस्य वा प्रत्यग्रस्रीवाचकस्य वा नवाशब्दस्योपादाने प्रदेशेष्वनुपपत्तिरेव। अतो निपातसमुदायस्यैवेदं ग्रहणमिति परोक्तयुक्तिं सूचयति **अर्थपराविति**। प्रतिषेधविकल्परूपार्थपरावित्यर्थः। (विभाषा दिक्समासे बहुव्रीहौ। अत्र सर्वनामता वा स्यात्। उत्तरपूर्वस्यै उत्तरपूर्वायै। 'न बहुव्रीहौ' बहुव्रीहे चिकीर्षिते सर्वनामसंज्ञा न स्यात्। त्वकं पिता यस्य त्वत्कपितृकः। अहकं पिता यस्य मत्कपितृकः। कृते बहुव्रीहौ निषेधो व्यर्थः। उपसर्जनीभूता न सर्वादय इति वक्ष्यमाणत्वात्। भाष्यकारस्तु त्वकत्पितृको मकत्पितृकः इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रं प्रत्याचख्यौ)। यद्यपि प्राप्तविभाषास्थले स्वरितञित इत्यादिना नित्यमात्मनेपदे प्राप्ते विभाषोपपदेनेति विभाषा विधीयते। विभाषाशब्दश्च विकल्पार्थतया प्रसिद्धः। तया च भावांशस्य सिद्धत्वादभावमात्रपरम्। अप्राप्तविभाषायामप्यभावांशस्य स्थितत्वाद्भावांशमात्रपरत्वं च निषेधविकल्पयोः संज्ञाऽकरणेऽपि सिध्यतीति तयोः संज्ञाकरणमनर्थकम्। तथाऽपि विभाषा श्वेरित्यत्र विधिमुखेन प्रवृत्तौ पित्स्वेव विभाषया संप्रसारणं स्यात्। कित्सु तु यजादित्वान्नित्यमेव स्यात्। प्रतिषेधमुखेन प्रवृत्तौ कित्स्वेव विकल्पेन तत्स्यान्न पित्सु। एकवाक्यत्वाच्च न पित्सु विधिमुखेन कित्सु निषेधमुखेन प्रवृत्तिर्युक्तेति। प्रतिषेधविकल्पयोः संज्ञायां कृतायां पूर्वं प्रतिषेधे कित्सु प्रवृत्ते किदकिदाख्यो लिट् सर्व एव समीकृतो भवति। ततो विकल्पः सर्वत्र विधिमुखेन पक्षे संप्रसारणं संपादयतीत्यस्त्येव संज्ञाकरणे विभाषा श्वेरित्यादौ प्रयोजनमेतच्चाकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्तत इति पक्षे प्रयोजनं प्रतिलक्ष्यं विभाषा श्वेरित्यस्य व्यापारे तु क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन प्रवृत्तिरिति न संज्ञाकरणप्रयोजनम्। तथा चाकृतिपक्षे प्रतिषेधविकल्पार्थौ नवाशब्दाविति शब्दो व्यवस्थापयति तथेत्यर्थः। (स्वरितञितः कर्त्रभिप्राये क्रियाफले। स्वरितेतो ञितश्च धातोरात्मनेपदं कर्तृगामिनि क्रियाफले। यजते। सुनुते। अपाद्वदः। न्यायमपवदते। कर्त्रभिप्राय इत्येव। णिचश्च। कारयते। समुदाङ्भ्यो यमोऽग्रन्थे। व्रीहीन्संयच्छते। भारमुद्यच्छते। वस्त्रमायच्छते। अग्रन्थे किम्। उद्यच्छति वेदम्। अधिगन्तुमुद्यमं करोतीत्यर्थः। कर्त्रभिप्राय इत्येव। अनुपसर्गात् ज्ञः। गां जानीते। विभाषोपपदेन प्रतीयमाने। स्वरितञित इत्यादिपञ्चसूत्र्यामात्मनेपदं विहितम्। तत्समीपोच्चरितेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते वा स्यात्। स्वं यज्ञं यजति यजते वा। स्वं व्रीहिं संयच्छति संयच्छते वा। स्वां गां जानाति जानीते वा। टुओश्विगतिवृध्योः। श्वयति। विभाषा श्वेः। श्वयतेः संप्रसारणं वा स्याल्लिटि यङि च। शुशाव शुशुवतुः। श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः। तेन लिट्यभ्यासस्येति संप्रसारणं न। शिश्वाय। शिश्वियतुः। यजादित्वादिति। वचिस्वपियजादीनां किति। वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात्कितित्यर्थः। लिट्यभ्यासस्योभयेषाम्। वच्यादीनां ग्राह्यादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि)। शब्दप्रकरण इत्यनेन पदार्थवैपरीत्यमात्रे दृष्टान्तो न तु





तत्रैवात्रापि शब्दपदार्थकत्वनिरासेनार्थपदार्थकत्वमिति सूचयति स्मृतिमात्रेणेत्यनेन नात्रार्थपदार्थकत्वप्रहाणेन शब्दपदार्थकत्वमभिमतमपि तु प्रसिद्धस्वरूपार्थकत्वपरित्यागेन स्मृतिविषयत्वाकारेण ग्रहणमिति सूचयति । नन्वेवमाशङ्का न मूलेन प्रतिबन्दीग्रहणमात्रेण सुपरिहारा । वैपरीत्यार्थकत्वाभावेऽर्थान्तराभावादिति शब्दस्य वैयर्थ्यापत्तेरित्यतोऽत्रेतिशब्दस्यार्थान्तरं मूलाभिप्रेतं बहिरेव द्रष्टव्यम् । मूलं तु विपक्षबाधकोक्तिपरमित्याशयेनाह **अत्रेति**। उक्तमर्थं मूलारूढं कर्तुं मूलं व्याख्याति **आत्मादीति** ।

वा०र०— **अत्र नास्तीति** । आत्मानमुपासीतेत्यादिश्रुतावित्यर्थः । अनेनात्मानमिति प्रकृतवाक्य-परित्यागेन वाक्यान्तरोदाहरणप्रयोजनमुक्तं भवति । **इत्यत आहेति** । इत्यतो वाक्यान्तरोपादानेन दार्ष्टान्तिके इति शब्दसद्भावाद्युपपादनपूर्वकमात्मासिद्धिशङ्कां चोत्थाप्य तन्निरासाय दृष्टान्ते तत्साम्योपपादनं सङ्गतमित्याहेत्यर्थः । **शब्दप्रकरण इत्यनेन स्वं रूपं शब्दस्येति** । शब्दस्य तावद्रूपद्वयमस्ति शब्दाख्यमेकं रूपम् । बाह्योऽर्थश्च । तत्र शब्देनार्थावगत्याऽग्न्यादिशब्देनार्थग्रहणे तत्र ठगादिकार्यसंभवात् । तत्परित्यागेन पावकादिपर्यायान्तरपरित्यागेन चाग्निशब्दाख्यपरित्यागेन चाग्निशब्दाख्यविशेषलाभाय शब्दस्य स्वमेव रूपं ग्राह्यं न बाह्योऽर्थः । शब्दसंज्ञां वर्जयित्वा दाधाध्वदाबिति शब्दसंज्ञानन्तरं प्रवृत्तप्रदेशेषु घुमास्थागापाजहातिसां हलीत्यादिषु यक(?)शब्दो न ग्राह्यः। किन्तु संज्ञिनोर्ग्रहणमित्यतोऽयं निषेधः । विशिष्य सूत्रार्थविचारस्तु गीताभाष्यटीकाव्याख्याने गुरुराजनिर्रूपत-स्तद्व्याख्यावसरेऽस्माभिर्निपुणतरमुपपादितस्तत्रैवावधेयः । तथा शब्दशास्त्रे शब्देन अर्थाधिगत्या अर्थप्राप्तावपि तत्परित्यागेन शब्दरूपमेव ग्राह्यम् । ततस्तस्मादेव उणादिकार्याणि भवन्तीति सिद्धत्वात् नवेतिशब्दाभ्यामपि शब्दद्वयस्वरूपमेव प्राप्तमित्यर्थः । मूले **नवेति** शब्दस्य विभाषा वा संज्ञायामित्यनुक्त्वा नवेति शब्दयोरिति शब्दभेदमङ्गीकृत्योक्तिः कुत इत्यतोऽत्र सूत्रे नवेतिशब्दो न वा वक्तव्यमुक्तार्थत्वादित्यादिभाष्यप्रयोग इव प्रतिषेधार्थैकनिपातो वा नवब्राह्मणा इत्यादिवन्नकारान्तः । सङ्ख्यावाची वा नवकुण्डिका न वा घटिकेतिवदभिनव-स्त्रीवाची वा न भवति । किन्तु नेति वेति निपातयोः समुदाय एवेति सूचयितुं नवेतिशब्दयोरिति द्विवचनोक्ति -रित्यभिप्रेत्य पक्षान्तरनिरासेन अभिप्रेतपक्षसमर्थनस्य एतत्सूचितत्वमुपपादयति **नवेतिशब्दयोरित्युक्तेत्यादिना सूचयतीत्यन्तेन** । तत्र तावन्निराकरणीयपक्षत्रये प्रथमं प्रत्याचष्टे **नायमिति** । तत्र हेतुमाह **विभाषेति** । यद्यत्र प्रतिषेधार्थकस्य नवाशब्दस्य ग्रहणं तर्हि तदर्थस्य प्रतिषेधमात्रस्यैव विभाषासंज्ञायाः वक्तव्यतया विभाषा-दिक्समास इत्यत्र सर्वनामसंज्ञया विभाषेत्यनेन प्रतिषेधस्यैव कृतत्वापत्तेः प्रकृतप्रतिषेधवाचिविभाषाशब्दानु-वृत्त्यैव न बहुव्रीहावित्यस्य सर्वनामसंज्ञानिषेधपरत्वस्य सिद्धत्वेन पुनःप्रतिषेधवाचि नशब्दोपादानं व्यर्थमिति वा प्रतिषेधमात्रस्य विभाषासंज्ञेत्यङ्गीकारे विभाषादिव समास इति सूत्रे सर्वनामसंज्ञानिषेधः क्रियत इति वाच्यम् । तथाच दिक्समास एव सर्वनामसंज्ञानिषेधो वा दिक्समास इति अदिक्समासे सर्वनामसंज्ञानिषेधाभावसूचनाय गृहीतेन दिक्समास इति विशेषणेन तस्य सूत्रस्य दिक्समासे सर्वनामसंज्ञा भवतीत्यर्थपरत्वसिध्या न बहुव्रीहावित्यस्य चादिक्समासे सर्वनामसंज्ञानिषेधपरत्वे पूर्वोत्तरविरोधापत्त्या अदिक्समासे सर्वनामसंज्ञानिषेधपरत्वेऽस्यानुपपन्नत्वेन दिक्समास एव तन्निषेधपरत्वेऽङ्गीकार्ये तत्र तन्निषेधस्य विभाषेति पूर्वसूत्रेणैव सिद्धत्वादस्य पुनः प्रतिषेधस्य





वैयर्थ्यमेवेति वाभिप्रायः । प्रतिषेधस्यैव विभाषासंज्ञाङ्गीकारे विभाषा श्वेरित्यादिविभाषाप्रदेशेषु प्रतिषेधवाचि-विभाषाशब्दमयस्य लाघवप्रकर्षाय तद्वाचि नवाशब्द एवोपादेयः स्यादिति दूषणान्तरमप्याह **प्रदेशेष्विति** । अत्र नशब्द एवेति पाठो लेखकप्रयुक्तः । संज्ञासूत्रे निर्दिष्टसंज्ञानुसारेणैव प्रदेशेषु नवाशब्दोपादानस्यावश्यकतया मञ्जर्यामपि तथैव पाठेन च तदनुवादरूपेऽत्र तथैव पाठनिर्णयात् । नकारान्तसङ्ख्यावाचि नवशब्दस्य वा अभिनवस्त्रीवाचक नवाशब्दस्य वा ग्रहणमिति द्वितीयतृतीयौ निराह **सङ्ख्यावाचकेत्यादिना** । तर्हि लाघवप्रकर्षाय विभाषा श्वेरित्यादौ विभाषाप्रदेशे संख्यार्थकनवशब्दस्याभिनवस्त्र्यर्थकस्य वा नवाशब्दस्यैव विभाषाशब्द-निष्कासनेनोपादानं कर्तव्यं स्यादिति अनुपपत्तिरेवेत्यर्थः । उपलक्षणं चैतत् । संप्रसारणस्य चतुर्विधत्वेन नवविधत्वाभावात् श्वेर्नवविधसंप्रसारणमिति विभाषा श्वेरित्यादावर्थासङ्गतिश्चाद्ये पक्षेऽनुसन्धेया । द्वितीये विभाषा श्वेरित्यादौ विधेयस्य संप्रसारणस्य नूतनत्वपुरातनत्वयोरुभयोरप्यभावेन पुरातनत्वव्यावृत्त्यर्थं नूतनत्वोक्तेः स्त्रीलिङ्गत्वस्य चासंभवेन तदुक्तेश्चायोगादित्यपि द्रष्टव्यम् । संप्रसारणस्य नवसङ्ख्याकत्वाद्यनुपपत्तावपि नाभिनवत्वासंभवः । सर्वत्र दिशो नित्यत्वेन नवत्वपुराणत्वायोगेऽपि दिङ्निमित्तशालाया दक्षिणपूर्वदिशोरन्तराले शालेति विगृह्य दक्षिणपूर्वा शालेति व्यपदेशकाले उक्तशालायाभिनवतयाऽभिनववाचिदिक्समासे सर्वनामसंज्ञा नित्यं भवतीत्यर्थकविभाषा दिक्समासे बहुव्रीहावित्यनेन न बहुव्रीहावित्यनेन प्राप्तनिषेधापवादतया नित्यं तत्संज्ञाप्राप्तौ संज्ञाकार्यस्याडादिना प्रत्यग्रत्वाभिव्यक्तिसंभवेन चाभिनवार्थकनवाशब्दस्य विभाषासंज्ञोपपत्तिरिति चेन्न । तथा सति विभाषा दिगित्यादिप्रदेशेष्वपि नवेत्येव लाघवप्रकर्षाय वक्तव्यत्वापातेन विभाषाग्रहणायोगापातात् । विभाषा दिगित्यत्र दिङ्निमित्तशालाव्यपदेशकालमाश्रित्य कथञ्चिन्नूतनत्वोपपत्तावपि पूर्वसंप्रसारणं विधाय प्रवृत्ते विभाषा श्वेरित्यत्र विभाषाशब्दो निषेधरूपमेव वार्थं प्रत्यापयति । न तु प्रत्यग्रार्थम् । तद्यथा ग्रामो भवता गन्तव्यो न वा इत्युक्ते नेत्यवगम्यते । एवमन्यत्रापीति न प्रत्यग्रार्थतोपपत्तिः । ननु समानलिङ्गनिर्देशस्थले प्रत्यग्रार्थप्रतीतिर्भवत्येव । तद्यथा ग्रामो भवता गन्तव्यो नव इत्युक्ते प्रत्यग्रप्रतीतिर्भवति । तथा च नवा इत्याकारान्ततया भिन्नलिङ्गनिर्देशस्थल एव निषेधस्य प्रतीयमानतया विभाषा श्वेरित्यत्र तथा लिङ्गत्वेन निषेधार्थत्वेऽपि विध्युत्तरत्वस्याप्रयोजकतया विभाषा दिगित्यादौ भिन्नलिङ्गताभावेन प्रत्यग्रार्थोपपत्तेरिति चेन्न । विभाषा सेनेत्यादौ क्वचिन्निर्देशो हि समानलिङ्गनिर्देश इति वाच्यम् । अन्यत्र विभाषाप्रदेशे तत्प्रसक्तेरप्यभावात् । न चायं निर्देशः समानलिङ्गः । विभिन्नविभक्तितया सामानाधिकरण्याभावात् । ततो नेदमपि प्रत्यग्रार्थावसाये हेतुः । किञ्च दिक्समासे बहुव्रीहौ । सर्वादीनि सर्वनामसंज्ञानि विभाषा संभवतीति नवाशब्दस्य क्रियया अभिसंबन्ध एवोचितः । क्रियाभिसंबन्धे निषेधार्थप्रतीतिनियमः । शब्दाभिसंबन्धे तु कामचारेणार्थप्रतीतिनियमायोगात् क्रियायाः शब्दापेक्षया प्राधान्याच्च । तस्मान्न प्रत्यग्रार्थता युक्तेत्यलम् । **अत इति** । उक्तपक्षान्तरासंभवात्प्रतिषेधविकल्परूपार्थकनेति वेति निपातसमुदायस्यैव ग्रहणमित्यर्थः । विभाषाशब्दो विकल्पार्थतया अन्यतरस्यामित्यादिशब्दवत्प्रसिद्धः । तथा च यत्र भावांशस्य स्थितत्वं तत्राभावार्थत्वं यत्र चाभावांशः स्थितः पूर्वेणोत्तरेण वा प्राप्तेस्तत्र भावपरत्वं एवमुभयार्थतया सर्वविभाषास्थले विकल्पस्य विधिमुखेन निषेधमुखेन वा प्रवृत्त्या तावन्मात्रस्यैव विभाषासंज्ञोपपत्तौ निषेधस्यापि तत्संज्ञाकरणं व्यर्थम् । तद्धि प्राप्तविभाषा-स्थले वोपयुक्तमप्राप्तविभाषास्थले वेति विकल्पद्वयं मनसि निधाय पक्षद्वयेऽपि उभयसंज्ञाकरणानुपयोगं प्रतिपादयति





**यद्यपीति । प्राप्तविभाषेति** । विध्यंशस्य प्राप्तौ सत्यां प्रवर्तमाना विभाषा प्राप्तविभाषेत्यर्थः । प्राप्ते विभाषेति सप्तमीतत्पुरुषः । एवमप्राप्तेत्यत्रापि । परत्वमित्यस्य सिध्यतीति वक्ष्यमाणेनान्वयः । **विभाषोपपदेनेति** । ननु स्वरितञितः कर्त्रभिप्राये क्रियेति नित्यमात्मनेपदे प्राप्ते विभाषेति सूत्रं प्रवृत्तमित्ययुक्तम् । उक्तार्थानामप्रयोग इत्यनेनोक्तार्थप्रयोगनिषेधेनात्र च स्वं यज्ञं तनुत इत्यादौ स्वमित्युपपदेनैव कर्तृगामिक्रियाफलाभिधानेन तदभिधाने आत्मनेपदप्रयोगासंभवेनात्मनेपदाप्राप्त्या उपपदेन कर्तृगामिक्रियाफले प्रतीयमानेऽप्राप्तात्मनेपदविधानाय प्रवृत्त-विभाषोपपदेनेति विभाषाया अप्राप्तविभाषात्वात् । उक्तं च मञ्जर्याम् अप्राप्तविभाषेयमित्याह **तदुपपदेनेतीति** । तदनुसारेण शेष्यादावपि अप्राप्तविभाषात्वस्यैवोक्तेश्च । तत्कथमेतत् । किन्तु काशिकाद्यनुसारेण भासनोपसंभाषेत्यतो वद इत्यनुवर्तमाने व्यक्तवाचां समुच्चारण इति सूत्रेण वदतेर्नित्यमात्मनेपदे सति संप्रवदन्ते ब्राह्मणा इत्यादिवद्विप्रवदन्ते ब्राह्मणा इति नित्यमात्मनेपदे प्राप्ते युगपत्परस्परप्रतिषेधेन विरुद्धवचनरूपविप्रलापात्मकव्यक्तवाचां सहोच्चारणे वर्तमानाद्वदतेरात्मनेपदं भवति विभाषेत्यर्थकविभाषाविप्रलाप इत्यस्य प्राप्तविभाषात्वेनोदाहरणमुचितम् । तथा शेषात्कर्तरीत्यतः परस्मैपदमित्यनुवर्तमाने व्याङ्परिभ्योरम इत्यनेन रमतेर्नित्यं परस्मैपदे प्राप्ते विभाषाऽकर्मकादित्यनेन विभाषा परस्मैपदं भवतीति विभाषाया प्रथमतृतीयोक्ताया उदाहरणं युक्तम् । एवं 'ऋदुपधाच्चाक्लृपिचृतेरि'त्यत्र 'एतिस्तु-शास्वृदृजुषः क्यबि'त्यतः क्यबित्यस्यानुवर्तमानतया परिमृज्य इत्यादौ नित्यं क्यप्प्राप्तौ मृजेर्विभाषेति प्राप्त-विभाषातृतीयाद्यपादे एवमन्या अपि बह्वप्राप्तविभाषाः उदाहर्तुमुचिता इति चेत्सत्यम् । मञ्जरीकृतोक्तार्थानामप्रयोग इत्येतदनादृत्य स्वरितञित इत्यनेन प्राप्ते विभाषोपपदेनेति विभाषेति अत्राभिधानेन तदनुसृत्य टीकाकृता तथैवा-नुवादेन दोषाभावात् । न च तेनैव विभाषोपपदेनेति सूत्रव्याख्यावसरे उक्तन्यायमाश्रित्य प्राप्तविभाषात्वस्य काशिकोक्तस्य शब्दमुक्तत्वात् तद्विरोधः कथं समाधेय इति वाच्यम् । अस्माभिर्मञ्जरीकारीया एकस्मिन्नेव विषये भेदेनोक्तिं साधुतया कुतो विचार्यापरकीयोदाहरणानुसारेणैवोदाहरणेऽपि तत्साधुत्ववदेव साधुत्वस्य ज्ञातुं शक्यत्वात्तदसाधुत्वे वा वृत्तिव्याख्यानकारोक्तिस्तु तथास्तीत्येतावन्मात्रेणोदाहरणोपपत्तेर्यथाश्रुतमञ्जर्यनुवादेऽपि नास्माकं दोष इत्याशयेन टीकाकृता तथैवानुवादस्य करणात् । यदि चाप्राप्तविभाषोदाहरणाय प्रवृत्तोऽपि भाष्यकारः वृद्धिविधौ प्राप्तविभाषारूपेणेति विभाषेति सूत्रमुदाहृतवान् । तत्र मुख्यसूत्रोदाहरणानुपपत्तौ विभाषोर्णोरित्येतदर्थतो भाष्यकारेण पठितम् । तत्र चोर्णोतेः परस्येडादिप्रत्ययस्य विभाषाङित्वमप्राप्तं विधीयत इति नानुपपत्तिरित्यादि समाधानं यथा आवश्यकं प्रामाणिकप्रयोगस्य दूषयितुमनुचितत्वात् । तथा मञ्जरीकृत उक्तिरपि स्वरितञित इत्यस्योक्तार्थानामप्रयोग इत्यनेनापवादे प्राप्ते तन्निरासपरविभाषासूत्रेण स्वरितञित इति प्राथमिकमेव सर्मार्थतं भवतीति प्राप्तिपूर्वकविभाषैवेयम् । सूत्रोक्तलक्षणमुक्तार्थत्वेऽप्यगतमित्यादिरूपेण कथञ्चिदुपपाद्या प्रामाणिकोक्ति-त्वादिति मन्यसे । तदा तदनुवादरूपेऽत्रापि न दोष इत्याहुः । वयं तु ब्रूमः । अप्राप्तविभाषाः प्राप्तविभाषाः उभयत्रविभाषाश्चेति विभाषात्रैविध्यमभिप्रेत्य सर्वासां त्रिसंशयत्वं प्रतिपादयता भाष्यकारेण अप्राप्ते त्रिःसंशयाः इति प्रतिज्ञाय इत ऊर्ध्वं या विभाषा अनुक्रमिष्यामः ता अप्राप्ते द्रष्टव्याः । त्रिसंशयास्तु ताः भवन्ति । प्राप्ते अप्राप्ते उभयत्र चेतीति व्याख्याय द्वन्द्वे च विभाषा जसीत्यादिना अप्राप्तविभाषास्तत्संशयप्राप्ताप्राप्तोभयेति कोटिप्रापकादिकं च प्रदर्श्य प्राप्ते चेति प्रतिज्ञाय इत ऊर्ध्वं या अनुक्रमिष्यामस्ताः प्राप्ते द्रष्टव्या इत्यादिकमुक्त्वा विभाषाविप्रलाप इत्यादिना





प्राप्तविभाषाः प्रदर्श्य उभयत्र चेत्याद्युक्त्वा ह्क्रोरन्यतरस्यामित्याद्या विभाषाः प्रदर्शिताः । तथा च स्वरित इति नित्यं प्राप्ते विभाषोपपदेनेति विभाषाप्रवृत्तेर्भाष्यकारेणोक्तेः प्राप्तविभाषैवेयम् । अप्राप्तविभाषेति मञ्जर्युक्तिस्तु उक्तार्थानामप्रयोग इत्यपवादसद्भावात्प्रकृतोदाहरणभूत स्वं यज्ञं तनुत इत्यादौ स्वमित्याद्युपपदेन द्योतनादप्राप्तिरिति सन्देहकोटिमाश्रित्येति न दोषः । एवं शेष्याद्युक्तिरपि योज्येति सकलमवदातम् । अदृश्यत्वाधिकरणटीकायां प्राप्ताप्राप्तविभाषास्थलानि बहून्युदाहृतानि । तत्राप्यत्रत्यविचारानुसारेण विचारो ज्ञेयः । **प्रसिद्ध इति** । अन्यतरस्यामित्यादिशब्दवदिति शेषः । नवेतिशब्दयोरिव विभाषाशब्दस्यापि संज्ञात्वाभावः । किन्तु तदर्थविकल्पस्यैवेति प्रमेयमिति शब्दः काकाक्षीत्यादिवक्ष्यमाणभाष्यानुसारेण सिद्धमिति मन्वानो मूलानुसारेणैवोपयुक्तं विचारितवान् ग्रन्थकारः । अधिकं वक्ष्यामः । ततो भावाभावौ विकल्पार्थकविभाषाशब्देन प्रतिपादितौ भवत इति पूरणीयम् । अयमाशयः । प्राप्तविभाषास्थले हि निषेधोऽपेक्षितो न तु विधिरपि । अप्राप्त एव शास्त्रस्य सार्थकत्वेनापूर्वार्थबोधकत्वस्वीकार एव तद्विभाषासूत्रस्य सार्थकत्वलाभात् । तथा च विध्यंशस्य प्राप्तत्वेन विधिमुखेन प्रवृत्त्यनुपपत्तेरप्राप्तनिषेधमुखेनैव प्रवृत्तौ वाच्यायां वाशब्दार्थो विकल्पो निषेध एव पर्यवस्यतीति । **अप्राप्तेति** । विभाषोर्णोरित्यादिरूपायामिति पूरणीयम् । विभाषोर्णोरित्यत्र हि गाङ्कुटादिभ्य इत्यतः ङिदित्यनुवर्तते । विज इडित्यतः इडित्यप्यनुवर्तते तथा च उर्णुञ् आच्छादन इत्यस्मात्परस्येट्प्रत्ययस्य विभाषा ङिद्भावो भवति इति प्रतिपादितं ङिद्भावे प्रोर्णुवितेति ङित्वाद्गुणनिषेधे उवङि सति रूपमुदाजहार । ङिद्भावाभावपक्षे तु गुणस्यैव प्राप्तौ प्रोर्णुवितेत्युदाहरणम् । एवं कोः कत्तत्पुरुषेऽचीत्यतः कोरित्यनुवर्तमाने का पथ्यक्षयोरित्यतः का इति चानुवर्तमाने पुरुषशब्दे उत्तरपदे कु इत्येतस्य का इत्ययमादेशो भवति । विभाषेत्यर्थकविभाषापुरुष इत्यत्राप्राप्तविभाषा । कापुरुषः कुपुरुष इति रूपद्वयमुदाहरणम् । तथा विभाषा तृतीयादिष्वचीत्यादावपि अप्राप्तविभाषा बोध्या । एवं च विभाषोर्णोरित्याद्यप्राप्तविभाषास्थले प्रापकाभावेनाभावांशस्य स्थितत्वेनाप्राप्त एव शास्त्रस्यार्थवत्तया स्थितनिषेधमुखेन प्रवृत्त्यनुपपत्त्या अप्राप्तविधिमुखेनैव प्रवृत्तौ वाच्यायां विकल्पो विधावेव पर्यवस्यतीति । तथाच यत्र विधिमुखेन प्रवृत्तिस्तत्र तावन्मात्रार्थत्वं यत्र निषेधमुखेन प्रवृत्तिस्तत्र तावन्मात्रार्थत्वमिति उभयार्थत्वं न कुत्रापीति फलितोऽर्थः । अस्त्वन्यत्र यथा तथा अंशभेदेन प्राप्ते अप्राप्ते च प्रवर्तमानविभाषास्थले विभाषा श्वेरित्यत्रोभयत्र विभाषासिध्यर्थमुभयोः संज्ञाकरणं सार्थकमेवेत्याशयेन समाधत्ते **तथाऽपीति** । विभाषा श्वेरित्यत्र श्वेः संप्रसारणं विभाषा भवतीति विभाषाशब्दस्य विध्यर्थत्वेऽप्राप्ते शास्त्रस्यार्थवत्तया वचि स्वपि यजादीनां कितीत्यनेन च यजादिनवकान्तर्गतश्वयतेरुत्तरलिटो अपिल्लिटः कित्वविधायकासंयोगाल्लिडित्यनेन सिप्तिप्मिपो वर्जं कित्वविधानेन कित्वेन तल्लिटि परतः संप्रसारणस्य विधानेन किति परत एव संप्रसारणप्राप्तावपि तिबादिपिल्लिटि संप्रसारणस्याप्राप्ततया तत्परत एव संप्रसारणं विभाषा भवतीति विधिमुखेन प्रवृत्तिपक्षे लब्धं भवति । तथा च यजादित्वप्रयुक्तस्य कित्सु संप्रसारणस्य विभाषाया अनुक्त्या नित्यमेव तत्संप्रसारणं स्यात् । न चैतदिष्टम् । पिति शुशाव शिश्वायेत्यादिरूपद्वयसद्भावेन तत्र विभाषाया अवश्यविधेयत्ववत् कित्स्वपि शुशुवतुः शिश्वियतुरित्यादिरूपद्वयसद्भावेन तदुपपत्त्यर्थं कित्परतोऽपि विभाषाया आवश्यकत्वात् इत्याशयेनाह **विभाषा श्वेरित्यत्र विधिमुखेनेति । प्रतिषेधमुखेनेति** । यदि यत्संप्रसारणं तद्विभाषा न भवतीति निषेधमुखेन प्रवृत्तिरिति स्वीक्रियते तर्हि निषेधस्य प्राप्तिपूर्वकतया वचिस्वपीत्यनेन कित्येव

संप्रसारणस्य श्वयतौ प्राप्त्या तन्निषेधमात्रेण चारितार्थ्ये किति परतः श्वयतेः संप्रसारणं विभाषेति विकल्पो निषेधमुखेन प्रवृत्तिपक्षे सिध्यति। पित्सु तु संप्रसारणस्याप्राप्ततया तन्निषेधाय प्रवृत्त्यनुपपत्त्या तत्राप्राप्तमेव संप्रसारणमिति शुशाव शिश्वायेत्यादिरूपद्वयालाभप्रसङ्ग इत्याशयः। ननु सकृच्छ्रुतस्यापि विभाषाशब्दस्य उभयार्थत्वमङ्गीक्रियते। तथा च पित्सु संप्रसारणविधिः कित्सु तन्निषेधश्चेत्युभयमपि सिध्यतीत्यत आह **एकवाक्यत्वादिति**। एकवाक्यत्वे हि तद्वाक्यं विभाषाशब्दस्य विधिविकल्पनिषेधविकल्पयोरन्यतरविकल्प एवोपक्षीणं भवति। न तूभयपरम्। वाक्यार्थभेदे वाक्यभेदनियमेनोभयार्थत्वएकवाक्यत्वभङ्गप्रसङ्गादिति भावः। एवं विकल्पमात्रस्य विभाषासंज्ञाकरणे अनुपपत्तिं प्रदर्श्य प्रतिषेधविकल्पयोः संज्ञाकरणपक्षमुपाददानस्तत्पक्षे अनुपपत्त्यभावमुपपादयति **इति प्रतिषेधेति**। उक्तरीत्या विकल्पमात्रस्य विभाषासंज्ञानुपपत्त्येत्यर्थः। **कृतायां** कर्तव्यायामित्यर्थः। निषेधविकल्पयोरर्थत्वेऽपि श्रुतक्रमानुरोधेन निषेधस्य पूर्वं प्रवृत्तिः। पश्चाद्विकल्पस्य। तथा च विकल्पानन्तरं निषेधप्रवृत्तिः व्यर्थेत्यादिशङ्कानवकाश इत्याशयेन निषेधस्य प्रथमं प्रवृत्तिस्थलं दर्शयन्निषेधप्रवृत्तिफलं च दर्शयति **पूर्वं प्रतिषेध इति**। कित्स्वेव प्राप्ततया निषेधप्रवृत्तिरिति भावः। **सर्व एवेति**। पित्सु तावदप्राप्तं संप्रसारणम्। प्रापकाभावात्। कित्सु तु यद्यपि प्रापकेन प्राप्तं संप्रसारणम्। तथापि तत्संप्रसारणमत्रत्यप्रतिषेधार्थविभाषया निषिद्धं यदा भवति तदापित्किच्च लिट्सर्व एव समानः कृतो भवति। पित्परत इव कित्परतोऽपि संप्रसारणाभावेन कित्वस्याप्रयोजकीकृतत्वादित्यर्थः। उक्तं च काशिकायाम्। प्रतिषेधेन समीकृते विकल्पः प्रवर्तते। उभयत्र विभाषाः प्रयोजयतीति। तत्त्वबोधिन्यामेतद्विस्तरोऽस्ति। **समीकृते** एकरूपं प्रापित इत्यादेस्तत्राभिधानात्। अन्यथाख्यातावेतत्काशिकावाक्यमुदाहृत्यापि तदर्थः इदं नित्यप्राप्तं न। सर्वथाऽप्राप्तं नेति निषेधपूर्वको विकल्प उभयत्रावशिष्ट इत्यादिरूपेण कथितः। तथा काकाक्षीत्यादिभाष्यमुदाहृत्यापि सूत्रार्थोऽन्यथावर्णितः तरङ्गिणीवाक्यानुवादोऽप्यनुकूलत्वबुध्या कृतः तत्र निमित्तं स्पष्टमेव। प्राप्ताप्राप्तविभाषयोरनुपयोगश्च नावबुद्धः। अधिकं तत्त्वनिर्णयटीकाव्याख्यानप्रपञ्चेऽस्माभिरुक्तप्रकारेण ज्ञेयम्। विधिमुखेन निषेधमुखेन चेत्युभयथा विकल्पप्रवृत्तिरित्यङ्गीकारे सकृच्छ्रुतस्यानेकार्थत्वप्रसङ्गे वाक्यभेदापत्तिरित्युक्तं दूषणं नोभयसंज्ञापक्षे प्राप्नोतीति दर्शयितुं विकल्पप्रवृत्तिप्रकारमुपपादयति **ततो विकल्प इति**। निषेधेन प्राक्प्रवृत्तेन सर्वसाम्ये सति विषयभेदाभावेन विकल्पस्य विधिमुखेनैव प्रवृत्तेः संभवादित्यर्थः। विधिरपि नित्यस्थलव्यावृत्त इत्येतद्विकल्पपदेनाभिधित्सितम्। तत्स्पष्टीकृतं पक्षे संप्रसारणं संपादयतीति। विभाषा श्वेरित्यादावित्युक्त्या प्रागपि विभाषा श्वेरित्यत्रेत्येतदुपलक्षणमित्यभिप्रैति। आदिपदेन तु विभाषाघ्राधेट्शाछासः। बन्धे च विभाषेत्यादेर्ग्रहणम्। धेटः कृतात्वस्य घुग्रहणेन गृहीततया गातिस्थाघुपेति पूर्वसूत्रेण धेटः परस्य सिचो लोपे प्राप्ते प्रवृत्तविभाषा घ्रेति सूत्रेण सिच्लोपः पक्षे भवतीति प्रतिपादिते सति निषेधप्रवृत्त्युत्तरं विधिमुखप्रवृत्तिविभाषया अधात्। अधासीदिति रूपद्वयनिर्वाहः। घ्रादिभ्यस्तु सिचो लोपाप्राप्तेरेव तत्र अत्रापि च निषेधेन साम्ये सति पश्चाद्विभाषाविधिमुखेन प्रवर्तते इति विकल्पः उभयत्रापि विधिमुखेन प्रवृत्तः। एवमन्यत्रापि काशिकाद्यनुसारेण बोध्यम्। ननु विकल्पमात्रस्यैव विभाषासंज्ञाकरणेऽपि नोभयत्र विभाषास्थलेऽनुपपत्तिः। क्वचिद्विभाषा श्वेरित्येतस्य विधिमुखेन क्वचिन्निषेधमुखेनेत्येवं विषयभेदेन प्रवृत्तत्वेन एकविषये विधिनिषेधरूपोभयार्थत्वाभावेन वाक्यभेदानापत्तेः। न चैकदैवोभयत्रप्रवृत्त्योभयार्थत्वमेकदेवाव्याप्तमिति वाच्यम्। प्रतिलक्ष्यं लक्षणं प्रवर्तत इति पक्षे लक्ष्यभेदेन





तत्प्रवृत्त्या तत्तल्लक्ष्ये प्रवृत्तस्य तत्तदर्थकत्वेऽपि सकृदनेकार्थत्वाभावात् । एवं चापित्सुकित्सु च भिन्नकालप्रवृत्त-विभाषा श्वेरित्यस्य क्वचिद्विधिमुखेन क्वचिन्निषेधमुखेन प्रवृत्त्यङ्गीकारे बाधकाभावाद्विकल्पमात्रस्यैव विभाषा-संज्ञाकरणं युक्तिमत् इत्युक्तरीत्या व्यक्तिषु प्रत्येकं लक्षणं प्रवर्तत इति पक्षे उभयोः संज्ञाकरणानर्थक्येऽपि आव् तौ पदार्थसमुदाये सकृदेव लक्षणं प्रवर्तत इति पक्षे विकल्पमात्रस्य विभाषासंज्ञाकरणायोगेन तत्पक्षवाक्यभेद-परिहारायावश्यकमेवोभयोः संज्ञाकरणमित्याह **एतच्चाकृतावित्यादि** । तर्हि कथं टीकोक्तं प्रयोजनमत आह **तथा चाकृतिपक्ष इति** । तत्पक्षमनुरुध्यायं ग्रन्थ इति भावः । उपलक्षणं चैतत् । नवाशब्दार्थयोर्विभाषेति संज्ञाकरणे यत्र विभाषापदं विभाषा श्वेरित्यादौ श्रूयते तत्र निषेधविकल्पौ संज्ञिना उत्तिष्ठेते इत्येव प्राप्तावपि यत्र ह्वक्रोरन्यतरस्यामित्यादावन्यतरस्यामित्यादिपदानि विभाषापदार्थकानि श्रूयन्ते । तत्रान्यतरस्यां वा । आचार्याणा-मित्यादिपदैरेव नवाशब्दार्थप्रतिषेधविकल्पयोः प्रत्यायनेन विभाषापदेन तदप्रत्यायनादुक्तपदान्तरप्रयोगस्थलेऽपि नवाशब्दार्थावुपतिष्ठेते इत्यस्याप्राप्तिरिति संज्ञाकरणानुपपत्तिरेव । संज्ञामारभमाणोऽप्याचार्यः । भूयिष्ठमन्यैः शब्दैरेतमर्थं प्रत्याययति न तु विभाषेति शब्देनैवेति स्पष्टत्वादिति प्रतिलक्ष्यं लक्षणप्रवृत्तिपक्षे दोषश्च ज्ञेयः । अत एव मञ्जर्यां तथा च ह्वक्रोरन्यतरस्यामित्यादावित्यादिना संज्ञाकरणानुपपत्तावुपष्टम्भकतया भूयिष्ठमन्यैः शब्दैरित्यादेरर्थस्योक्तिः । तथा अबुधबोधनार्थं सूत्रारम्भ इति पक्षेऽपि वान्यतरस्यामित्यादिसङ्ग्रहोपपत्त्यर्थ इति शब्दः काकाक्षिन्यायेनोभाभ्यां संबध्यत इत्यादि भाष्यानुसारेण मञ्जर्यां सूत्रारम्भे तु संज्ञाऽप्यर्थः विभाषेत्यर्थसंज्ञा । नवार्थयोरिति व्याख्येयमिति तत्समाधानकारणात्तदनुसारेण समाधिश्च कर्तव्यः । टीकाकारेण तु नवाशब्दार्थयोरिति मूलानुसारेणेति शब्दस्यैव त्रैव संबन्धविचारे भारवतोत्तरमञ्जर्युक्तं न मुखत उक्तम् । सूत्रारम्भे त्वित्येतत्कुसुमविकासे चेति शब्दो मध्यमणि-न्यायेनोभाभ्यां संबध्यत इति विभाषेति शब्दोऽपिं संज्ञा । तस्यार्थो विकल्पोऽपि संज्ञा । ततश्च विकल्पार्थेषु वान्यतरस्यामाचार्याणामित्येतेष्वपि प्रतिषेधविकल्पा उपतिष्ठेते । संज्ञाप्यर्थ एवेति भाव इत्युक्तम् । तत्त्वबोधिन्यां तु इति शब्दः काकाक्षिन्यायेनोभाभ्यां संबध्यते । स च पदार्थविपर्यासकृत् । तेन निषेधो विकल्पश्च नवाशब्दार्थः संज्ञी । विभाषाशब्दार्थो विकल्पः संज्ञेति प्रतिज्ञायोभयत्र विभाषार्थं चेत्यादिना नवाशब्दार्थयोः संज्ञितामुपपाद्य संज्ञात्वमर्थस्यैव न तु विभाषाशब्दस्येति व्याख्यानस्य ह्वक्रोरन्यतरस्यामित्यादौ वैरूप्योद्धारः फलमित्युक्त्वा तत्सूत्रस्योभयत्र विभाषया प्रवर्तमानत्वं च भाष्यादिसंमत्या दर्शितम् । तदेवमिहोभयत्रापीति शब्दबलादर्थयोरेव संज्ञित्वं संज्ञात्वं चेति लभ्यत इति । स्थिते प्रतिलक्ष्यं लक्षणप्रवृत्तिपक्षे संज्ञाकरणानर्थक्यमिव विभाषाशब्दस्य संज्ञात्वे अन्यतरस्यामित्यादौ नवार्थयोरुपस्थानानुपपत्तिरप्युपलक्षणया ग्राह्या । आकृतिपक्षाश्रयणेन परिहारे तूक्तरीत्या संज्ञाया अप्यर्थतया अन्यतरस्यामित्यादेः नवार्थयोरपि सङ्ग्रहोपपत्तिरप्युपलक्षणया ग्राह्येति सूरयो विदांकुर्वन्तु । अत एव श्रीनिवासाचार्यीयतत्त्वनिर्णयटीकाव्याख्याने संज्ञायामेवेति शब्दबलादर्थत्वमिति प्रतिपादितम् । तदुपपादनं च तत्त्वनिर्णयटीकाव्याख्यानप्रपञ्चे अस्मदीये द्रष्टव्यम् । **शङ्का न मूलेनेति** । एवमाशङ्काप्रतिबन्दीग्रहणमात्ररूपेण मूलेन सुपरिहरा न भवतीत्येवं योज्यम् ।

**स०व्र०— यथेति** । नवाशब्दयोः निषेधविकल्पार्थयोः स्वं रूपं शब्दस्याशब्दसंज्ञेति शब्दस्वरूपग्रहणे प्राप्ते स्वाभाविकमेवार्थपरत्वमिति शब्दो ज्ञापयतीत्यर्थः । सूत्रार्थस्त्वित्थम् । नेति निषेधो वेति विकल्पः निषेधेन





समीकृतेऽर्थे अविकल्पः प्रवर्तते । विकल्पो हि द्विविधः नित्यतया प्राप्तस्य सर्वथा प्राप्तस्य चेति द्विविधोऽप्ययं निषेधपूर्वक एव । नित्यप्राप्तिस्थले चेद्विकल्पः प्रवर्तते तदा सर्वथा इदं नित्यप्राप्तं न किन्तु पक्ष एवेति । यत्र च सर्वथा प्राप्तौ विकल्पात्तत्रापि इदं सर्वथाऽप्राप्तं न किन्तु पक्ष एवेति इतिशब्दोऽर्थपर एव स्वीकार्यः । अन्यथा स्वं रूपमिति परिभाषाया नवाशब्दयोरेव विभाषासंज्ञायां विभाषा जसीत्यादौ नवाशब्दयोरेव ग्रहणप्रसङ्गः तथाच निषेधपूर्वको यो विकल्पः तस्य विभाषा संज्ञा स्यादिति ।

**विठ्ठ०— वैपरीत्य इति** । यस्माच्छब्दात्परत य इति शब्दश्श्रुतः स इति शब्दस्तस्य शब्दस्य तत्प्रकरण-प्राप्तार्थं प्रच्याव्य तद्विपरीतार्थपरत्वं व्यवस्थापयतीत्यर्थः । **नवेति** सूत्रे इति शब्दस्य वैपरीत्यपरत्वं व्युत्पादयति **शब्देति** । 'क्तक्तवतू निष्ठे'त्यादिसूत्रे यथा शब्दस्वरूपानुवादेन तस्य निष्ठा संज्ञा विधीयते तथा तस्मिन्नेव संज्ञाविधानप्रकरणे नवेति विभाषेत्यत्रापि नवेति यौ शब्दौ तयोर्विभाषा विभाषेति संज्ञेत्यर्थः प्राप्नोति प्रकरणबलात् तथा च न प्रकृतोपयोगः अतस्तत्रेति शब्दो निवेशितः सूत्रकारेण स च इतिशब्दः प्रकरणप्राप्तशब्दरूपार्थं निवार्य नवेतिशब्दयोर्निषेधविकल्परूपार्थपरत्वं व्यवस्थापयतीत्यर्थः । **किन्तु स्मृतिमात्रेणेतीति** । अग्नौ जुहोतीत्यत्रेति शब्दयोगेऽग्नेः स्वरूपेण होमाधिकरणत्वं न किन्तु अग्नावधिकरण इति स्मृतिमात्रेण होमान्वयो भवेदित्यर्थः । अग्नाविति स्मृत्वा भस्मादावपि होमः प्रसज्यत इति भावः ।

**चषकः— नवेतिशब्दयोरिति** । स्वं रूपं शब्दस्याशब्दसंज्ञेति अग्नेर्ढकित्यादाविव शब्दस्वरूपग्रहणे प्राप्ते तस्य संज्ञाविधानप्रकरणे नवाविभाषेत्युक्तौ नेति वेतिशब्दौ तयोर्विभाषा संज्ञा प्राप्नोति प्रकरणबलात्तथा च विभाषाकार्यस्थले विभाषाभवतीत्युक्ते न वा भवतीत्यस्यापत्त्येष्टसिद्धिर्न स्यात् । अतः प्राकरणिकार्थवैपरीत्य-वाचिनेति शब्देन निषेधविकल्परूपार्थपरौ व्यवस्थाप्येते इत्यर्थः । **प्रकारेति** । इति हेतुप्रकरणप्रकारादिसमाप्ति-ष्वित्यभिधानादिति भावः ।

इतिशब्दादर्शनस्य उभयपक्षेऽपि साम्येन बाधकाभावः—

**५६० सु०— ननु 'अग्नौ जुहोती'त्यत्रेतिशब्द एव नास्ति, तस्य वैपरीत्यार्थत्वं कुत इति चेन्न । तर्हि उपासनावाक्यानामपीतिशब्दविधुराणां बहुलमुपलम्भात्स्वार्थे तात्पर्योपपत्ति-रित्याह इतिशब्देति ।**

**अनु०— इतिशब्दव्यपेतानि ह्यपि सन्ति वचांस्यलम् ॥**
**आत्मानमेवेत्यादीनि**

**अलं** बहूनीति शेषः ।





**परि०—** **इतिशब्दविधुराणामिति** । 'ओमित्येतदक्षरमुद्गीथमुपासीत' 'आत्मानमेव लोकमुपासीते'त्यादीनामिति भावः ।

**यादु०—** अलमित्यस्य समभिव्याहृतपदैरन्वयो न स्वरसतया प्रतीयतेऽतस्तदन्वययोग्यं पदं पूरयित्वा तेनान्वयं दर्शयति **अलं बहूनीति शेष इति** ।

**कं०रा०—** अलमित्यस्याविद्यमानेनान्वयायोगाच्छेषपूरणेनान्वयं दर्शयति **अलमिति** ।

**श्रीनिधि०—** **अलं बहूनीति शेष इति** । अलमिति संबन्धप्रदर्शनार्थम् । तथा च कपिञ्जलाधिकरणव्यावृत्त्यर्थं वयांसीति बहुवचने लब्धेऽपि बहूनीत्युक्तम् । वचांसि बहूनि अलं सन्तीत्युक्ते अलंशब्दस्य अलमोऽर्थः सम्यक्त्वमतिबहुत्वमेवेति भावः ।

**वा०चं०—** अलमित्यस्य वचांसीत्यनेनान्वयेऽर्थे विशेषाल्लाभात्तदर्थमध्याहृतेनान्वयमाह **अलमिति** ॥

**वा०र०—** **अलमित्यस्येति** । प्रतिवाक्यार्थस्य वचस्युक्तेः प्रयोजनाभावादित्यर्थः । उपलक्षणमेतत् । आत्मानमित्यादिना संबन्धेऽपि अर्थविशेषाभावादित्यपि द्रष्टव्यम् । **तदर्थमिति** । अर्थविशेषलाभार्थमित्यर्थः । बहुत्वसङ्कोचवारणायातिबहूनीत्यर्थलाभस्यालमित्यनेन लाभादिति भावः ।

**स०ना०—** 'इतिशब्दव्यपेतानि ह्यपि सन्ति वचांस्यलमि'त्यनुव्याख्यानसुधायां अलंशब्दार्थकथनपरवाक्योदाहरणव्याजेनालंशब्दार्थं सूचयति **अलं बहूनीति शेष इति** । शेषो नाम कश्चित् । अलमितिपदं बहूनीति व्याचख्याविति । अत्रापि अलमित्यस्य बहूनीत्यर्थ इति भावः । एतेन यत्रानवसरोऽन्यत्रेति वचनात् बहूनीति पदं विनापि सावकाशत्वात् शेषाभिधानं व्यर्थमिति परास्तम् ।

**विठ्ठ०—** **अलं बहूनीति शेष इति** । अलमर्थस्य सम्यक्त्वस्य व्यपेतानीति राहित्येनान्वयायोगात् सम्यग्वचनानीति वा योगादलं सन्तीत्यन्वयायोगाच्चाध्याहृतेन वचांसीत्यस्य विशेषणेन बहूनीति पदेनान्वय इत्याशयेनान्वयं सूचयन्नध्याहरति **अलमिति** । अतिबहूनीत्यर्थः । अत एव इतिशब्दविधुराणां बहुलमुपलम्भादित्युक्तम् ।

**चषकः—** वचःपदप्रकृतिकजसोऽस्तिप्रकृतिकस्य झेर्वा त्रित्वपर्यवसायिताभ्रान्त्यपनुत्तये बहूनीतिपदस्योपस्कार्यतया तेनैवालमित्यस्यान्वेतव्यता स्वारसिकी न समभिव्याहृतपदैरिति मन्वानोऽलमित्यस्य योजनां दर्शयति **अलं बहूनीति शेष इति** ॥





अध्याहृत इतिशब्दयोजनायाश्चापि उभयत्र साम्येन बाधकाभावः—

**५६१ सु०**— सत्यम्, तथाऽपि तत्राध्याहारः क्रियत इत्यत आह **योग इति** ।

**अनु०— योगेऽग्नावपि तत्समम् ॥**

**योगे** इतिशब्दस्याध्याहृतस्य योजने । 'अग्नौ जुहोती'त्यत्रापि तद्योजनं समम् । आत्मादिशब्दात्परतो यद्यश्रुतेति शब्दोऽध्याहियते तदाऽग्न्यादिशब्दात्परतोऽपि कुतो नाध्याहियत इत्यर्थः ॥

**गु०दी०**— ''न गिरा गिरेति ब्रूयात्'' इति वक्ष्यमाणन्यायेन अत्राप्यध्याहारसंभवादिति भावेनोक्तम् कुतो नाध्याहियत इति ।

उपासनावाक्येषु अध्याहारः नान्यत्र इतिकल्पनायाः अयुक्तत्वम्—

**५६२ सु०**— एकदेशिनस्त्वेवं परिहारमाहुः । ''सत्यं कार्यनिष्ठो वेदस्तथाऽपि न सर्वः । वेदान्तास्तु परिनिष्ठितस्वरूपेऽपि ब्रह्मणि प्रमाणम् । 'अथातो धर्मजिज्ञासे'ति कार्यनिष्ठवेदभागे विचारितेऽपि वस्तुतत्त्वनिष्ठवेदान्तविचाराय शारीरकमीमांसारंभस्संभवती''ति ॥ सोऽय-मयुक्तः परिहारः ।

तथा हि । 'वेदान्ता ब्रह्मनिष्ठा, अपरो वेदभागः कार्यनिष्ठ' इति वाक्यभेदः किमेक-वाक्यत्वासंभवात् कल्प्यते उतैकवाक्यत्वसंभवेऽपि ।

**बिन्दुः— एकदेशिनस्त्विति** । यद्यप्येवं परिहारमाचक्षाणाः पञ्चपादिकाविवरणकारादयो मायावादिनोऽत्यन्तविरोधिन एव तथापि उत्तरमीमांसायाः पूर्वमीमांसागतार्थत्वाभावादारम्भणीयत्वमिति सिद्धान्तवादिसमूहे तेषामेकदेशित्वमिति भावः ।

**परि०— एकदेशिन इति** । ब्रह्मतन्त्रव्याख्यातृषु मध्ये केचन मायावादिन इत्यर्थः ।

**वं०प०— आहुरिति** । अत्र जैमिनीया मन्यन्त इत्यादिना कार्यपरत्वमुपपाद्य कार्य एव सर्ववेद-पर्यवसानादनुग्राह्यप्रमाणाभावान्न ब्रह्ममीमांसारम्भः संभवतीति शङ्काया रामानुजा एवं परिहारमाहुरित्यर्थः ।





**श्रीनिधि०— परिहारमाहुरिति** । मीमांसानुग्राह्यप्रमाणाभावशङ्कया इति शेषः । **परिनिष्ठितस्वरूपे** । सिद्धस्वरूपे ।

**वा०चं०—** ननु कार्यव्युत्पत्तिवादिना सर्वस्यापि वेदस्य कार्यपरताया एवोपपादितत्वेनैकवाक्यता-ऽभ्युपगमात्तं प्रत्युत्तरवाक्योक्ता वाक्यभेदानुपपत्तिरयुक्तेत्यतः स्वमतेन स्वप्रधानतयोपासनाविधिशेषतया च सर्वस्यापि वेदस्य ब्रह्मपरत्वमुभयथा व्युत्पाद्य कार्यपरत्वं सर्वस्य वेदस्येयता ग्रन्थेन निरस्य सर्वस्य वेदस्य कार्यपरत्वं वदन्तं प्रति वृत्तिकारान्तराणां परिहारप्रकारनिरासायोत्तरग्रन्थः प्रवृत्त इति नानुपपत्तिरित्याशयेनाह **एकदेशिन-स्त्विति** । नन्वत्रैकवाक्यत्वयोगेऽपीत्येकवाक्यतां सिद्धवत्कृत्य योगश्च स्यादिति तस्या एव साध्यतोक्तिरनुपपन्नेत्यतो विकल्प्य तत्तत्कल्पनिरासकतया ग्रन्थं योजयितुं तावत्प्रतिजानीते **सोऽयमिति** ।

**वा०र०— इयता ग्रन्थेन** निरस्तमिति पाठः । निरासाय तूत्तरग्रन्थ इति तुशब्दयुक्तः पाठः । पूर्वत्र निरस्येति पश्चात्तुशब्दरहितः पाठोऽपि क्वचित् । तत्रापि 'यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यत' इति भिन्नकर्तृकत्वेऽपि त्तवाप्रत्ययदर्शनेन समानकर्तृकयोरित्यस्य प्रायिकतयोपपत्तेरत्रापि भिन्नकर्तृकत्वेऽपि त्तवादेशे ल्यबुपपत्तिरिति ज्ञेयम् । निरस्याहेति संबन्धो वा । यथा चैतत्तथोक्तमिति मूलार्थं मनसि निधाय यथोक्तमिति प्रतीकोपादानमात्रं कृतमिति ज्ञेयम् । एकवाक्यस्येत्यारभ्य प्रयासेनेत्यतः शेषः । दूषणान्तरेत्युत्तरेणान्वयः ।

**विठ्ठ०— एकदेशिनो** मायावादिनः । तेषामपि सूत्रव्याख्यातृत्वाभिमानात् । एकदेशिनः परिहारमाहुः इत्युक्तपरिहारमाहुरित्यस्य सर्वस्यापि वेदस्य कार्यनिष्ठत्वेन ब्रह्मणि प्रामाण्याभावात् ब्रह्ममीमांसारम्भो युक्त इति शङ्कया इति शेषः । **परिनिष्ठितस्वरूपे** सिद्धस्वरूपे ।

एकवाक्यत्वयोगे अशेषतोऽपि वेदस्य वाक्यभेदकल्पनायाः अयुक्तत्वम्—

५६३ **सु०—** न तावत् द्वितीयः कल्पनागौरवप्रसङ्गादित्याह **एकवाक्यत्वेति** ।

**अनु०— एकवाक्यत्वयोगे तु वेदस्यापि ह्यशेषतः ॥**
**वाक्यभेदो न युक्तः स्यात्**

**अशेषतोऽपि** इति संबन्धः । **हिशब्दः** कल्पनागौरवादिप्रसङ्गं हेतुं सूचयति ।

**बिन्दुः— कल्पनागौरवप्रसङ्गादिति** । संभवत्येकवाक्यत्वे वाक्यभेदो हि दूषणमिति परेणाप्यभ्युपगतत्वात् । अन्यथा वायुक्षेपिष्ठादिवाक्यानां विध्येकवाक्यतया प्रामाण्याभ्युपगमो





विरुद्धचेतेति भावः । यद्यपि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत । आत्मा वा अरे द्रष्टव्यः श्रोतव्य इत्यादिवाक्यानां स्वार्थबोधे समाप्तत्वेन नैराकाङ्क्ष्याभावान्न परस्परं पदैकवाक्यता वाक्यैकवाक्यता वा संभवति तथापि यथा यूपं तक्षति यूपे पशुं बध्नातीत्यादीनां स्वार्थबोधे समाप्तत्वेऽपि लक्षणादिसंस्कृते यूपे पशुबन्धनं कर्तव्यं यथा वा प्राकरणिकानां समिधो यजति व्रीहीनवहन्तीत्याद्यङ्गवाक्यानां यदाग्नेयोऽष्टाकपालोऽमावास्यायां पूर्णमास्यां चाच्युतो भवतीति प्रधानवाक्यानां च प्रकरणकल्पितैकवाक्यता, समिद्यागादीतिकर्तव्यताविशिष्टैराग्नेयादिभिः प्रधानैः स्वर्गादिफलं भावयेदित्येवंरूपा कल्प्यते तथैव प्रकृतेऽपि कर्मकाण्डप्रतिपादितनित्यनैमित्तिकादिकर्मानुष्ठानादिशुद्धान्तःकरणादिसत्यज्ञानानन्दाद्यनन्तकल्याणगुणविशिष्टं निरनिष्टं निरवद्यं च ब्रह्मस्वरूपं श्रवणमनननिदिध्यासनादिभिः साक्षात्कृत्य तत्प्रसादेन मोक्षं लभेतेत्याद्येकवाक्यतासंभवः । एकवाक्यत्वं च सर्ववेदानां 'सर्वे वेदा यत्पदमामनन्ति, वेदैश्च सर्वैरहमेव वेद्य इत्यादिश्रुतिस्मृतिभिरवगम्यते । अर्थैकत्वादेकं वाक्यमित्यादिना जैमिनिसूत्रेणैव तथाविधलक्षणप्रणयनात् इति ध्येयम् । ननु विषमोऽयमुपन्यासः । प्राकरणिकानां समिद्यागादीनां फलमपेक्षमाणानां आग्नेयादिप्रधानयागानां चेतिकर्तव्यतामपेक्षमाणानां साकाङ्क्षत्वान्नष्टाश्वदग्धरथन्यायेन युज्यतेऽन्वयः । अत एव उभयाकाङ्क्षाप्रकरणमिति सिद्धान्तः । प्रकृते च स्वर्गकामादिपदसमभिव्याहारमहिम्ना फललाभेन निराकाङ्क्षत्वात्कथमेकवाक्यतेति चेत् श्रूयमाणस्वर्गपश्वादिपदानां यन्न दुःखेन संभिन्नमित्यादिस्वर्गस्वरूपावेदकवाक्यानां च नित्यनिरतिशयसुखरूपमोक्षपदार्थकत्वात् । अन्यथा प्रतिपत्तॄणां मूर्खत्वेन तदुक्तेरप्रामाण्यात् । उक्तं च भगवता— "यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः । वेदवादरताः पार्थ नान्यदस्तीति वादिनः" इत्यादि । तदिदमनुपदमेवाह मूले— **योगश्च स्यान्महाफल इति** ।

**श्रीनिधि०— कल्पनागौरवादिप्रसङ्गं हेतुमिति** । तद्रूपं हेतुमित्यर्थः । आदिपदेन सर्वोत्कर्षे देवदेवस्य विष्णोरित्यादि श्रुतिविरोधसङ्ग्रहः ।

**वा०चं०—** वेदस्यापीत्यपिशब्दस्य यथास्थितसंबन्धानुपपत्तेरशेषत इत्यनेनाभिव्यास्यर्थस्य तस्य संबन्ध इत्याशयेनाह **अशेषतोऽपीति** । हेत्वनुक्त्या न्यूनतापरिहाराय तत्सूचकतया हिशब्दं योजयति **हिशब्द इति** । आदिपदेनैकवाक्यतया संप्रतिपन्नसकलस्थलेष्वपि वाक्यभेदकल्पनापातेन न कोऽप्यर्थः सिध्येदित्यतिप्रसङ्गस्योपादानम् ।

**विट्ठ०— अशेषतोऽपि** इत्यपिरभिव्याप्त्याविति ध्येयम् ।





महाफलसाधने ब्रह्मण्येव अशेषतोऽपि वेदस्य संबन्धसत्त्वम्—

५६४ **सु०— आद्यं दूषयति योगश्चेति।**

**अनु०— योगश्च स्यात्**

**अशेषतोऽपि वेदस्यैकवाक्यताया, योगो घटना, च, स्यादेव। यथोक्तं पुरस्तात्। वक्ष्यति च 'अतो ज्ञानफलान्येव कर्माणी'ति॥**

**बिन्दुः—** तावतापि कर्मणामेव साक्षान्मोक्षहेतुत्वमिति न भ्रमितव्यमित्यभिप्रेत्य व्याचष्टे **अतो ज्ञानफलान्येव कर्माणीति**। 'कर्मणा ज्ञानमातनोति, ज्ञानेनामृती भवती'त्यादिश्रुतेरिति भावः।

**परि०— यथोक्तं पुरस्तादिति**। अयमत्राशय इत्यादिपूर्वग्रन्थेन द्वेधा वाक्यान्वयस्योक्तत्वादिति भावः।

**गु०दी०—** ''स एव सर्ववेदार्थ'' इति वदता आचार्येणैवान्तःकरणशुद्धिद्वारा कर्मकाण्डस्य ब्रह्मस्वरूपप्रतिपादकत्वेन ब्रह्मकाण्डस्य च भगवत्येव समन्वयस्य सूचितत्वादिति भावेनोक्तम् **यथोक्तं पुरस्तादिति**।

**यादु०— यथोक्तमिति**। वाक्यार्थज्ञानमात्रेणेत्यत्रायमाशय इत्यादिनेति शेषः।

**श्रीनिधि०— पुरस्तात्** ओतत्ववाचीत्यनेन।

**वा०चं०—** नन्वत्रापि हेत्वनुक्त्या न्यूनता स्यादेवेत्यतो वाक्यार्थज्ञानमात्रेणेत्येतद्व्याख्यावसरेऽयमाशय इत्यादिना स्वप्राधान्याभ्युपगमेनोक्तं तस्मादुपासनार्थं चेत्यादिना चोपासनादिविधिशेषतयाऽपि प्रतिपादितमेकवाक्यताघटनाप्रकारं स्मारयति **यथोक्तमिति। वक्ष्यते चेति**। तत्रापि कर्मणो ज्ञानार्थताप्रतिपादनेन कर्मब्रह्मकाण्डयोरेकवाक्यतायाः स्पष्टप्रतिपादनादिति भावः। एकवाक्यस्य सिद्धार्थप्रतिपादकत्वव्युत्पादनप्रयासेनेति शेषपूरणेन वैकं वाक्यं प्रतिपादकं यस्य सिद्धस्येत्येकवाक्यं सिद्धं तत्त्वस्य योगे संभवे केनचिदायासेन कस्यचिद्वाक्यस्य सिद्धार्थपरत्वव्युत्पादन इति यावत्।

**स०व्र०— पुरस्तादिति**। वाक्यार्थज्ञानमात्रेणेत्यत्रायमाशय इत्यादिनेति शेषः।

**चषकः— यथोक्तमिति**। वाक्यार्थज्ञानमात्रेणेति प्रतीकव्याख्यावसरेऽयमाशय इत्यादिनेति पूरणीयम्।





**५६५ सु०—** **किञ्च 'कृत्स्नोऽपि वेदः कार्यनिष्ठ' इति वदन्तं प्रत्येकस्यापि वाक्यस्य परिनिष्ठितवस्तुप्रतिपादकत्वप्रतिपादने यः प्रयासस्तेनैव कृत्स्नस्यापि वेदस्य तथात्वे संभवति किं वाक्यभेदकल्पनया । 'दृष्टो हि तस्यार्थः कर्मावबोधनमि'त्याद्यभियुक्तवाक्यानुरोधादिति चेत् । तर्हि 'वेदोषरा वेदान्ता' इत्यभियुक्तवाक्यं परमास्तिकेन भवता अनुरोद्धव्यं स्यात् । उपक्रमादिना कार्यनिष्ठतावगमादेवमिति चेन्न । अवान्तरवाक्येऽपि उपक्रमाद्यानुगुण्यस्य संभवात् । अधिकारादिविरोधादिति चेन्न। तथा सत्युपनिषत्स्वपि वाक्यभेदप्रसङ्गादिति ।**

**बिन्दुः—** **अभियुक्तवाक्यानुरोधादिति** । शाबरभाष्यवचनादित्यर्थः । **वेदोषरा इति** । प्राभाकरवाक्यमेतत् । **अवान्तरवाक्येऽपीति** । यथा दर्शपूर्णमासमहाप्रकरणान्तर्गतस्यापि अभिक्रामं जुहोतीत्यादेः प्रयाजाङ्गत्वं तदन्तर्गतावान्तरप्रयाजप्रकरणपठितत्वात्, तथा ब्रह्मस्वरूपप्रतिपादकसर्ववेदरूपमहाप्रकरणान्तर्गतकर्मकाण्डरूपावान्तरप्रकरणस्य कर्मणि तात्पर्यमविरुद्धमिति भावः ।

**परि०—** मीमांसकवाक्यानुरोधाद्वाक्यभेदः कल्प्यत इति मायावादी शङ्कते **दृष्टो हीति** । तस्य कर्मकाण्डरूपवेदस्य कर्मावबोधनरूपेणेत्यर्थः । प्रयोजनं दृष्टमिति तदीयवाक्यस्यार्थः । **वेदोषरा इति** । निष्फलवेदभागा इत्यर्थः । **भवता** मायावादिना । तथाच वेदान्तेतिकर्तव्यताभूतब्रह्मतन्त्रभाष्यमपि त्वया न कार्यं स्यादिति भावः । **परमास्तिकेन** इत्युपहासः । **एवमिति** । वाक्यभेदकल्पनेनेत्यर्थः । **अवान्तरेति** । सर्ववेदस्य ब्रह्मपरमहावाक्यैकवाक्यतयैकवाक्यत्वेऽपि तज्ज्ञानाङ्गकर्मप्रतिपादकतया ब्रह्मकाण्डस्य ब्रह्मपरमहावाक्ये अवान्तरवाक्यभूतेऽप्युपक्रमाद्यानुगुण्यसंभवादित्यर्थः । कर्मकाण्डस्य फलकामनावदाधिकारिकत्वादनित्यफलत्वाद्वेदान्तानां निष्कामाधिकारिकत्वान्नित्यफलकत्वाच्च विरोधान्नैकवाक्यतेति शङ्कते **अधिकारेति** । **उपनिषत्स्वपीति** । पुत्री पशुमानित्यादीनामत्रापि श्रवणादिति भावः ।

**गु०दी०—** **अभियुक्तवाक्यानुरोधात्** इत्यत्र अभियुक्तपदेन जैमिनिसूत्रभाष्यकारादयो गृह्यन्ते । वेदोषरा इत्यत्र ऊषरपदेन लवणादिमिश्रितत्वात्फलायोग्या असारभूमिर्गृह्यते । **उपनिषत्स्वपि वाक्यभेदप्रसङ्गात्** इत्यत्र उद्दालकाद्युक्तब्रह्मविद्यासु श्वेतकेतुप्रभृतीनां भिन्नभिन्नाधिकारिणां श्रूयमाणत्वादित्यर्थः ।

**यादु०—** शङ्कते **दृष्टो हीति** । अस्यायमर्थः । स्वाध्यायोऽध्येतव्य इति विधेरक्षरग्रहणमात्ररूपाध्ययनविधायकत्वेऽप्यदृष्टद्वारा स्वर्गार्थत्वसंभवादर्थज्ञानस्यानपेक्षितत्वान्न तदर्थकमीमांसारम्भः संभवतीत्याशङ्कायामुक्तं





**दृष्टो हीति**। तस्याध्ययनविधेः कर्मावबोधनं नाम दृष्टार्थोऽस्ति। लभ्यमाने फले दृष्टे नादृष्टपरिकल्पनेति वचनात्। कर्मज्ञानं च न विचारमन्तरेण संभवतीति मीमांसारम्भः संभवतीति। अत्र यद्यपि दृष्टो हि तस्यार्थः प्रयोजनवदर्थावबोधनमित्येव वक्तव्यम्। तथाऽपि धर्मजिज्ञासायाः प्रकृतत्वाद्धर्मस्य च कर्मत्वात्कर्मावबोधनमित्युक्तमिति ज्ञातव्यम्। तथा चैतदभियुक्तवाक्यानुसाराद्विधिप्रतिषेधात्मकस्यैव वेदभागस्य कार्यरूपपरत्वमुच्यते न कृत्स्नस्यापीत्याशयः। **वेदोषरा इति**। वेदेषूषरा वेदोषराः। वेदमध्ये निष्फला इत्यर्थः। तथा च निष्फलवेदान्तानामविचार्यत्वान्न वाक्यभेदकल्पना युक्तेति भावः। **एवमितीति**। कर्मकाण्डस्य वेदान्तापेक्षया भिन्नवाक्यत्वमिति भावः। **अवान्तरवाक्येऽपीति**। कर्मकाण्डगतावान्तरवाक्येऽप्युपक्रमाद्यानुगुण्यसंभवात्कर्मकाण्डेऽपि वाक्यभेदप्रसङ्ग इत्यर्थः। ननु कर्मकाण्डे स्वर्गकामोऽधिकारी वेदान्ते तु मुमुक्षुः। स्वर्गकाममुमुक्षयोश्च नैकस्मिन्संभवो विरुद्धत्वात्। अतो विरुद्धाधिकारिकमिदं काण्डद्वयं नैकवाक्यतामापद्यत इत्याशङ्कते **अधिकारादिविरोधादिति**। आदिपदेन फलविरोधो ग्राह्यः। स्वर्गमोक्षयोर्नश्वरानश्वरयोरेकफलत्वासंभवात्। **उपनिषत्स्वपीति**। मध्वादिविद्यासु वस्वादिपदेच्छुरधिकारी सदेव सोम्येत्यादिरूपासु विद्यासु मुमुक्षुरेवाधिकारीति विरुद्धाधिकारिकत्वाद्विरुद्धफलकत्वाच्च वेदान्तेष्वप्येकवाक्यत्वं न स्यादिति भावः।

**वं०प०— एकस्यापि वाक्यस्येति**। वेदान्तभागगतस्यैकस्यापि वाक्यस्येत्यर्थः। **परिनिष्ठितवस्त्विति**। ब्रह्मरूपसिद्धार्थेत्यर्थः। **कृत्स्नस्यापीति**। कर्मकाण्डस्येत्यर्थः। **तथात्व इति**। सिद्धार्थब्रह्मपरत्व इत्यर्थः। कर्मकाण्डस्य ब्रह्मप्रतिपादकत्वं न संभवतीत्यतो वाक्यभेदकल्पना कार्येत्याशङ्कते **दृष्टो हीति**। तस्य कर्मकाण्डस्य कर्मावबोधनमेव स्पष्टं दृष्टोऽर्थोऽतो न तस्य ब्रह्मप्रतिपादकत्वं तत्प्रतिपादने सामर्थ्याभावादिति भावः। **अनुरोद्धव्यम्** अनुसर्तव्यम्। तथाच वेदेषु मध्ये वेदान्तभागानामूषरभूमिवत्फलसाधनत्वाभावेन निष्फलत्वोक्त्या तद्विचारो न कर्तव्यः स्यादित्यर्थः। नन्वथाऽपि कर्मकाण्डस्य वेदान्तभागापेक्षया भिन्नवाक्यत्वमङ्गीकार्यम्। कुत इति चेत्तत्राह **उपक्रमादिनेति**। उपक्रमादीनां वाक्यभेदसाधकत्वेऽतिप्रसङ्ग इत्याह **अवान्तरवाक्येऽपीति**। कर्मकाण्डगतावान्तरवाक्येऽपीत्यर्थः।

**आनन्दः— दृष्टो हीति**। वेदाध्ययनस्यादृष्टत्वादर्थज्ञानस्यानपेक्षितत्वाद्वेदमधीयादिति वेदाध्ययनानन्तरं गुरुकुलान्निवृत्ते मीमांसारंभानुपपत्तिरित्याशङ्क्योक्तं **दृष्टो हीति**। तस्याध्ययनविधेः कर्मावबोधनं नाम दृष्टोऽर्थो विद्यते स चार्थज्ञानद्वारक एवेत्यक्षरग्रहणादिपरम्परयाध्ययनस्य कर्मानवबोधः फलमिति स्मृतिबोधेन धर्ममीमांसारम्भणीयेत्यर्थः। ननु कार्यपरत्वप्रतिपादकवाक्यानुरोधेन वाक्यभेदः कल्प्यत इत्याशङ्कते **अवान्तरवाक्येऽपीति**। तथाचावान्तरवाक्यस्यैव कर्मादिपरत्वं न कृत्स्नकर्मकारकस्येति भावः। **वेदार्थपर इति**। अपूर्वपरा इत्यर्थः(?)। ननु पश्वादिरूपफलकामिन एव कर्मकाण्डे अधिकाराद्वैराग्यादिमत एव च वेदान्ते अधिकारात् तस्यापि ब्रह्मपरत्वे अधिकारविरोधः स्यादिति शङ्कते **अधिकारेति**। आदिशब्देन फलपरिग्रहः। **तथा सतीति**। अत्रापि फलकाम्याधिकारिकोपासनादेः सत्त्वेन वाक्यभेदः स्यादित्यर्थः।





**कं०रा०— दृष्टो हीति** । अधीतस्य वेदस्य कर्मावबोधनरूपं दृष्टं हि प्रयोजनमित्यभियुक्तवाक्यात्कार्यनिष्ठताया अभ्युपगमात्कृत्स्नवेदस्यैकवाक्यत्वायोगेन वाक्यभेदः कल्प्यत इति शङ्कितुराशयः । **तर्हीति** । यद्यभियुक्तवाक्यस्यानुसर्तव्यत्वनियमस्तर्हि वेदोषरा वेदान्ता इति वेदान्तानामुषरशब्दोक्तवस्तुतत्त्वप्रमितिरूपफलजनकत्वाभावप्रतिपादकं यदभियुक्तवाक्यं तदपि परमास्तिकेन भवताऽनुसर्तव्यं स्यात् । तदनुसरणे च वस्तुतत्त्वप्रमापकवेदान्तविचाराय शारीरकमीमांसारंभ इत्ययुक्तं स्यादिति भावः । **एवमिति** । वाक्यभेदकल्पनमित्यर्थः । **अवान्तरेति** । समस्तस्य वेदस्य ब्रह्मनिष्ठत्वेऽपि तदेकदेशस्यावान्तरतात्पर्येण कार्यनिष्ठतया तस्य तत्रोपक्रमाद्यानुगुण्यसंभवान्नेदं वाक्यभेदकल्पकमिति भावः । **अधिकारेति** । कार्यनिष्ठवेदभागे स्वर्गादिकामोऽधिकारी ब्रह्मनिष्ठवेदान्तभागे तु मुमुक्षुरिति तयोरधिकारभेदाद्वाक्यभेदः कल्प्यत इति भावः । **तथा सतीति** । अधिकारिभेदाद्वाक्यभेदे उपनिषत्स्वपि मध्वादिविद्यास्वप्यधिकारभेदस्य सत्त्वाद्वाक्यभेदः स्यादिति भावः ।

**श्रीनिधि०— यः प्रयास इति** । सिद्धार्थे व्युत्पत्तिसमर्थनं कार्यव्युत्पत्तौ गौरवादिप्रदर्शनादिरूपः प्रयास इत्यर्थः । **अवान्तरवाक्येऽपीति** । तथा च कार्यवाक्यानि स्वार्थे अवान्तरतात्पर्योपेतानि महावाक्यार्थपराणि इत्येवमेकवाक्यता भविष्यतीति भावः ।

**वा०चं०—** तेनैव न्यायेनाशेषतोऽपि वेदस्यैकवाक्यतायोगे सतीत्येकवाक्यतायोग इत्यस्यावृत्त्या वा दूषणान्तरपरत्वेन मूलं योजयति **किञ्चेति** । यद्वा मूलोक्तन्यायेन लब्धं स्वयमेव दूषणान्तरमाह **किञ्चेति** । वेदाध्ययनस्यादृष्टार्थत्वादर्थज्ञानस्यानपेक्षितत्वाद्वेदमधीत्य स्नायादिति स्मृत्यनुरोधेन वेदाध्ययनानन्तरं गुरुकुलान्निवृत्तेर्मीमांसारम्भानुपपत्तिमाशङ्क्य शाबरभाष्ये उक्तं **दृष्टो हीति** । तस्याध्ययनविधेः कर्मावबोधनं नाम दृष्टोऽर्थो वर्तते स चार्थज्ञानद्वारक एवेत्यर्थग्रहणादिपरम्परयाऽध्ययनस्य कर्मावबोधः फलमिति स्मृतिबाधेन धर्ममीमांसारम्भोपपत्तिरिति हि तदर्थः । तथा च वेदस्य तद्वाक्यानुरोधेन कर्मावबोधकत्वसिद्धेः कथं सर्वस्य ब्रह्मपरत्वाभ्युपगमेनैकवाक्यता वक्तुं शक्यत इत्याशयेन शङ्कते **दृष्टो हीति** । यद्यप्यत्र तर्हि तद्वाक्यानुसारेण सर्वस्यापि कर्मपरत्वमभ्युपगम्यैकवाक्यत्वमेव वक्तव्यं न तु वेदान्तानां वस्तुतत्त्वनिष्ठत्वाभ्युपगमेन भिन्नवाक्यत्वम् । अन्यथाऽभियुक्तवाक्यविरोधापरिहारादित्येव दूषणं वक्तुं युक्तम् । तथाऽपि कर्मशब्दो विचार्यतया प्रकृतकर्मकाण्डाभिप्रायेण । वस्तुतस्त्वर्थावबोधकत्वं वेदस्येत्येतावदेवैतद्वाक्याभिप्रेतमिति न वेदान्तानां ब्रह्मावबोधकत्वाभ्युपगमेऽपि तद्विरोध इति पञ्चपादिकादावुक्तत्वात्तद्दूषणमनुक्त्वा दूषणान्तरमाह **तर्हीति** । भूप्रदेशेषूषरभूमिवद्वेदेषु वेदान्ता व्यर्थो भाग इत्यर्थः । उक्तरीत्या युक्तिबाधितस्य तद्वाक्यस्याप्रामाण्यान्नानुसरणीयत्वमिति भावः । माऽस्तु तद्वाक्यानुसरणमुपक्रमादिवशात्प्रतीतस्य कर्मकाण्डे कर्मपरत्वस्य नापलापो युक्त इत्याशङ्कते **उपक्रमादिनेति** । अधिकारादीति कर्मण्यैहिकामुष्मिकफलकामस्य ब्रह्मविद्यायां च तदुभयभोगविरक्तस्याधिकारः । आदिपदेनैकत्र स्वर्गाद्यनित्यं फलमपरत्र मोक्षरूपं नित्यं फलमिति फलभेदसङ्ग्रहः तर्हि उपनिषत्स्वपि कर्माङ्गभूतोद्गीथाद्युपासनानां सविशेषब्रह्मविद्यायाश्च नित्याफलकत्वादविद्वदधिकारिकत्वाच्चैकवाक्यता न स्यादित्याह **तथा सतीति** । यदि





चोपासनादीनां यत्किञ्चिद्द्वारेण निर्विशेषज्ञानार्थतयैकवाक्यत्वं तर्हि नित्यादिकर्मणामपि चित्तशुद्धिद्वारा काम्यादीनामप्यनित्यफलकत्वादिकथनेन वैराग्यजननादिद्वारा निर्विशेषज्ञानार्थतया कर्मकाण्डस्यापि वेदान्तैरेकवाक्यता स्यादिति भावः ।

**वा०र०—** मूलम् **एकवाक्यत्वेति** मूलम् । **शाबरभाष्य इति** । दृष्टो हि तस्यार्थः । कर्मावबोधनं नामेति प्रथमसूत्रे भाष्यमिति ज्ञेयम् । **स्मृतीति** । अधीत्य स्नायादिति स्मृतीत्यर्थः । तत्सूत्रपूर्वपक्षसिद्धान्तयोः स्पष्टमिदम् । इष्टापत्तिपरिहारोपदर्शनाय परस्यापि संप्रतिपन्नं तद्वाक्याप्रामाण्यनिमित्तमाह **उक्तरीत्येति** । अध्ययनविध्यापादितमेव वेदान्तानामपि सार्थकत्वमिति उक्तभाष्यादेव सिद्धेर्वैयर्थ्यवाक्यमप्रमाणमित्यर्थः ।

**स०व्र०—** दृष्टो हि तस्यार्थ इत्यस्यायमर्थः । वेदाध्ययनस्यादृष्टार्थत्वात् अर्थज्ञानस्यानपेक्षितत्वात् वेदमधीयादिति वेदाध्ययनानन्तरं गुरुकुलान्निवृत्तमीमांसारम्भानुपपत्तिरित्याशङ्क्योक्तं **दृष्टो हीति** । तस्याध्ययनविधेः कर्मावबोधनं नाम दृष्टोऽर्थो विद्यते स चार्थज्ञानाद्वारक एवेति अक्षरग्रहणादिपरम्परयाऽध्ययनस्य कर्मावबोधः फलमिति स्मृतिबाधेन मीमांसारम्भणीयेति । तथा चैतदभियुक्तवाक्यपर्यालोचनया न कृत्स्नवेदस्य परिनिष्ठितवस्तुपरत्वमपि तु कर्मकाण्डस्य कार्यरूपकर्मावबोधार्थत्वमेव वक्तव्यमिति भावः । **एवमिति चेदिति** । कर्मकाण्डस्य वेदान्तापेक्षया भिन्नवाक्यत्वमिति भावः । **अवान्तरवाक्येऽपीति** । कर्मकाण्डवेदान्तयोरेकवाक्यत्वमेव । उपक्रमाद्यानुगुण्यं तु कर्मकाण्डस्यावान्तरवाक्यत्वेऽप्युपपद्यत इति भावः । यद्वा कर्मकाण्डावान्तरवाक्यार्थेऽप्युपक्रमाद्यानुगुण्यसंभवात्कर्मकाण्डेऽपि वाक्यभेदः स्यादित्यर्थः । ननु कर्मकाण्डे स्वर्गकामोऽधिकारी वेदान्ते मुमुक्षुः । स्वर्गकाममुमुक्षयोश्च नैकस्मिन्संभवो विरोधात् । मुमुक्षौ स्वर्गकामाभावात् स्वर्गकामे च मुमुक्षाया अभावात् अतो विरुद्धाधिकारिकमिदं वाक्यद्वयं नैकवाक्यतामापद्यत इत्याशङ्कते **अधिकारादिविरोधादिति** । आदिपदेन स्वर्गमोक्षलक्षणफलभेदो द्रष्टव्यः । **तथा सतीति** । मध्वादिविद्यासु वस्वादिपदेच्छुरधिकारी । सदेव सोम्येत्यादि विद्यासु मुमुक्षुरधिकारीति विरुद्धाधिकारित्वात् वेदान्तेऽप्येकवाक्यत्वं न स्यादिति भावः ।

**वि०ठ०—** मीमांसकवाक्यानुरोधाद्वाक्यभेदः कल्प्यत इति शङ्कते **दृष्टो हीति** । अस्यार्थः स्वाध्यायोऽध्येतव्य इति विधेरर्थग्रहणमात्ररूपार्थकत्वेऽप्यदृष्टद्वारा स्वर्गार्थत्वसंभवादर्थज्ञानस्यानपेक्षितत्वान्न तदर्थकमीमांसारंभः संभवतीत्याशङ्क्योक्तं **दृष्टो हीति** । तस्याध्ययनविधेः कर्मावबोधनं नाम दृष्टोऽर्थोऽस्ति कर्मज्ञानं च न विचारप्रवृत्तिमन्तरेण संभवतीति मीमांसारम्भो युक्त इति । तथाचैतद्वाक्यपर्यालोचनया सर्वस्यापि वेदस्य न सिद्धरूपब्रह्मपरत्वं अपि तु कर्मकाण्डस्य कार्यपरत्वमेव युक्त इति भावः । यद्वा तस्य विधिप्रतिषेधात्मककर्मकाण्डस्य कर्मावबोधनं नाम दृष्टं प्रयोजनमस्ति । तथाच लक्षमाणे फलेनादृष्टपरिकल्पनमिति न्यायेन तदध्ययनस्यादृष्टद्वारा स्वर्गादिरूपादृष्टफलं न कल्प्यम् । तथाचाध्यायनविधेर्वेदपाठकर्तव्यतामात्राभिप्रायकत्वाभावादृष्टफलस्य कर्मावबोधनस्य विचारप्रवृत्तिमन्तरेणाभावान्मीमांसारम्भो युक्त इत्यभियुक्तवाक्यपर्यालोचनया विधिप्रतिषेधात्मक-

वेदभागस्यैव कार्यरूपकर्मपरत्वं न कृतस्यापीति लभ्यत इत्याशयः । यदि मीमांसकवाक्ये तव श्रद्धा तर्हि वेदान्तानामकिञ्चित्करताप्रतिपादकमीमांसकवाक्यमपि श्रद्धाय तदितिकर्तव्यतात्वेनापि शारीरकमीमांसारम्भोऽपि न कर्तव्य इत्याशयेनाह **तर्हि वेदोषरा इति** । निष्फलवेदभागा इत्यर्थः । नाभियुक्तवाक्यानुरोधाद्वाक्यभेदः कल्प्यते किन्तु उपक्रमादितात्पर्यलिङ्गानां कर्मकाण्डे कार्ये वेदान्तेषु ब्रह्मणि चेति व्यवस्थितत्वाद्वाक्यभेद इत्याशयेन शङ्कते **उपक्रमादिनेति** । सर्वस्याप्येकवाक्यत्वेऽपि कर्मब्रह्मकाण्डयोरवान्तरवाक्यत्वात् पृथगुपक्रमाद्यानुगुण्यं नैतावता स्वतन्त्रवाक्यभेदो वक्तुं शक्यते अन्यथा कर्मकाण्डेऽप्यवान्तरवाक्यार्थे उपक्रमाद्यानुगुण्यसंभवात्तत्रापि स्वतन्त्रवाक्यभेदः स्यादित्याशयेन परिहरति **नेति** । ननु कर्मकाण्डे स्वर्गकामोऽधिकारी ब्रह्मकाण्डे मुमुक्षुरित्यधिकारिभेदाद्वाक्यभेद इति शङ्कते **अधिकारादीति** । आदिपदेन विषयप्रयोजनभेदो ग्राह्यः । तथात्वे वेदान्तेऽपि मध्वादिविद्यासु वस्वादिरधिकारी सदेव सोम्येत्यादिविद्यासु तु मुमुक्षुरधिकारीति भेदस्य विद्यमानत्वात्तत्रापि स्वतन्त्रवाक्यभेदप्रसङ्गः स्यादिति परिहरति **नेति** ।

**चषकः**— अध्ययनविधेर्ज्ञानकामाधिकारप्रतिषेधेन 'कल्प्यस्तु विधिसामर्थ्यात्स्वर्गो विश्वजिदादिवदि'ति वचनाददृष्टार्थाध्ययनविधायकत्वेनाधीत्य स्नायादिति गुरुकुलान्निवृत्तेर्मीमांसारम्भो न घटत इत्याशङ्क्य शबरस्वाम्यभाविष्ट भाष्ये **दृष्टो हीति** । तस्याध्ययनविधेः कर्मावबोधनं नाम दृष्टार्थोऽस्ति स चाक्षरग्रहणादिपरम्परयोपजायमानः फलमिति स्मृतिबाधया मीमांसारम्भः सङ्गच्छत इति तदर्थः । इत्थं च वेदस्य कर्मावगमकतया कृत्स्नस्य तस्य ब्रह्मतात्पर्यकत्वोपगमेनैकवाक्यता दुर्वचेत्याशयेनाशङ्कते **दृष्टो हीति** । फलवदर्थावबोधनमित्येवाभिधातव्यत्वेऽपि धर्मस्यैव कर्मत्वात्कर्मावबोधनमित्युक्तिः । वेदोषराः वेदेषु निष्फलभूप्रदेशायिताः तादृशानाम् अविचार्यतया वाक्यभेदकल्पना न सङ्गच्छत इत्याशयः । **एवमिति चेत्** । कर्मब्रह्मकाण्डयोः भिन्नवाक्यत्वमिति चेत् । कर्मब्रह्मकाण्डे नैकवाक्यतापन्ने स्वर्गमुक्तिकामरूपविभिन्नाधिकारिकत्वादित्यभिप्रेत्याशङ्कते **अधिकारेति** । **उपनिषत्स्वपीति** । मध्वादिविद्यानां वस्वादिपदप्रेप्सुरधिकारी तत्पदप्राप्तिः फलं सदेवेत्यादिविद्यानां तु मोक्षकामः स मोक्षश्च तदिति वैरूप्यात्तदेकवाक्यता दुरुपगमा प्रसज्यत इति भावः ।

**प्रदीपः**— वेदाध्ययनस्यादृष्टत्वादर्थज्ञानस्यानपेक्षितत्वाद्वेदमधीत्य स्नायादिति वेदाध्ययनानन्तरं गुरुकुलान्निवृत्तेर्मीमांसारम्भानुपपत्तिरित्याशङ्क्योक्तं **दृष्टो हीति** । तस्याध्ययनविधेः कर्मावबोधनं नाम दृष्टोऽर्थो विद्यते स चार्थज्ञानद्वार एवेत्यक्षरग्रहणादिपरम्परयाऽध्ययनस्य कर्मावबोधः फलमिति स्मृतिबाधेन धर्ममीमांसारम्भणीयेति । **अवान्तरवाक्येऽपीति** । लिङादिवत् यूपादिपदानामपि कार्यपरत्वात् पदार्थासिद्धिः स्यादधिकरोमीति कर्मब्रह्मखण्डवाक्ययोरेकवाक्यत्वं न संभवतीत्यर्थः । उपनिषत्स्वप्यधिकारादिभेदो विद्यत इति एकवाक्यत्वं न स्यादित्याह **नेति** ।





**५६६ सु०— अपर आह । भवति कृत्स्नस्यापि वेदस्यैकवाक्यता । सा चात्मज्ञानस्य स्वर्गादिफल(कर्म)शेषतयाऽस्तु । देहव्यतिरिक्तात्मज्ञानव्यतिरेकेण पारलौकिककर्मप्रवृत्त्यनुपपत्तेः ॥ अथवा कर्माङ्गभूतदेवतानुस्मरणार्थमात्मप्रकरणमस्तु । तत्र फलश्रुत्यादिकमर्थवादोऽस्तु । यथोक्तम् 'आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न तु चोदितम् । कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते । विज्ञाते चास्य पारार्थ्ये याऽपि नाम फलश्रुतिः । साऽर्थवादी भवेदेव न स्वर्गादेः फलान्तरमि'ति । तत्राह महाफल इति ।**

अनु०— **महाफले ॥**

**महाफले महत्फलं कैवल्यं यस्मात्तन्महाफलं ब्रह्म तस्मिन्नेवाशेषतो वेदस्य योगः संबन्धः स्यात् । न पुनरल्प(फले)के कर्मणि । प्रयाजादिषु तथा दर्शनात् ।**

**परि०—** सर्वस्यैकवाक्यतामुपेत्य कर्मपरतयैकवाक्यतां वदतो मीमांसकैकदेशिनो निरीश्वरवादिनो मतमाह **अपर आहेति** । **अस्य पारार्थ्य इति** । आत्मज्ञानस्य कर्माङ्गत्वे विज्ञात इत्यर्थः । अत्रात्मपदेनैतन्मते जीव एव ग्राह्यः । **फलश्रुतिरिति** । 'तरति शोकमात्मविदि'त्यादिफलश्रुतिरित्यर्थः । अर्थवादीभवेदित्येकं पदम् । **स्वर्गादेः** स्वर्गादितः । **फलान्तरम्** आत्मज्ञानस्य नेत्यर्थः । **प्रयाजादिष्विति** । 'समिधो यजति' 'तनूनपातं यजती'त्यादिवाक्योक्तेषु प्रयाजादिनामकयज्ञेषु दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेतिश्रुतस्वर्गादिफलवति दर्शादिकर्मण्यङ्गाङ्गिभावेन योगस्य दर्शनादित्यर्थः । यद्वा क्रतूपकाररूपाल्पफलकप्रयाजादिषु वाक्यापर्यवसानेन प्रधानकर्मणि महाफलहेतावेव वाक्यपर्यवसानस्य दर्शनादित्यर्थः ।

**गु०दी०— प्रयाजादिषु तथा दर्शनात्** इत्यत्र पौर्णमासीत्रिकं अमावास्यात्रिकं चेति यागषट्काजन्ये अल्पफलभूतावान्तरफलमात्रे तात्पर्यादर्शनान्मिलित्वा षड्यागजन्ये महाफले महापूर्व एव तात्पर्यदर्शनाच्चेति भावः ।

**यादु०—** ननु यद्येवमेकवाक्यत्वमेव वक्तव्यमित्याग्रहस्तदोपनिषदामपि कार्यपरत्वेनैव तदस्त्विति कस्यचिन्मतमाशङ्कते **अपर आहेति** । नन्वेवं 'तरति शोकमात्मवित्' 'ब्रह्मविदाप्नोति परं' 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते' इत्यत्रात्मप्रतिपादकस्य वेदान्तभागस्य स्वर्गातिरिक्तमोक्षफलकत्वश्रुतिः कथमुपपद्यत इत्यत आह **तत्र फलश्रुत्यादिकमिति** । आदिपदेन स्मृत्यादेर्ग्रहणम् । तथा च न तस्य स्वार्थे तात्पर्यमिति भावः । **न स्वर्गादेः फलान्तरमिति** । स्वर्गादिकं विहाय नात्मविद्यायाः फलान्तरमस्तीत्यर्थः । **प्रयाजादिष्विति** । अनेन कर्म

नान्यशेषतया वेदप्रतिपाद्यमल्पफलकत्वात्प्रयाजाद्यङ्गकलापवत् । ब्रह्म वाऽनन्यशेषतया वेदप्रतिपाद्यं महाफलत्वाद्दर्शादिवदिति प्रयोगौ सूचिताविति ज्ञातव्यम् । अदर्शनादिति छेदे तु दर्शपूर्णमासादिविधायकवाक्यानामिडो यजतीत्यादिवाक्यप्रतिपाद्येऽवान्तरापूर्वलक्षणस्वल्पफलके प्रयाजादौ महातात्पर्यलक्षणसंबन्धस्यादर्शनादित्यर्थो द्रष्टव्यः । इदमुपलक्षणम् । प्रत्युत प्रयाजादिवाक्यानामेव स्वर्गलक्षणमहाफलके दर्शादौ महातात्पर्यलक्षणसंबन्धस्य दर्शनादित्यपि द्रष्टव्यम् ।

**वं०प०— आत्मज्ञानस्येति** । जीवज्ञानस्येत्यर्थः । तदुपपादयति **देहेति** । **देवतेति** । ईश्वरोऽपि देवताशब्देन ग्राह्यः । **आत्मप्रकरणमिति** । आत्मशब्देन देवता ईश्वरश्च ग्राह्यः । तथाच प्राणो वा आशाया इत्यादिदेवताप्रकरणमात्मा वा अरे द्रष्टव्य इत्यादिरूपमीश्वरप्रकरणं चेत्यर्थः । देवतानामीश्वरस्य च यज्ञभागभोक्तृत्वेन यज्ञे इज्यतया यज्ञादिकर्माङ्गत्वादिति भावः । नन्वीश्वरप्रकरणस्याप्युक्तरीत्या कर्माङ्गत्वेन स्वर्गार्थत्वे । तरति शोकमात्मवित् । ब्रह्मविदाप्नोति परमित्याद्युपनिषद्भागे ईश्वरज्ञानस्य स्वर्गातिरिक्तमोक्षरूपप्रयोजनप्रतिपादनं कथं सङ्गच्छत इत्यत आह **तत्रेति** । तरतीत्याद्युपनिषदेकदेश इत्यर्थः । **फलश्रुतीति** । ब्रह्मज्ञानस्य मोक्षरूपफलश्रवणमित्यर्थः । तथाच न स्वार्थे तात्पर्यमिति भावः । **आत्मज्ञानस्य** देवतेश्वरयोर्ज्ञानस्य । **अस्य** आत्मज्ञानस्य । **पारार्थ्ये** स्वर्गार्थत्वे । **फलश्रुतिः** ब्रह्मज्ञानस्य मोक्षार्थत्वश्रुतिः । उपसंहरति **नेति** । स्वर्गादिरन्यत् आत्मविद्यायाः फलान्तरं नास्तीत्यर्थः ।

**आनन्दः—** नन्वेकवाक्यत्वे अलं विवादेनेत्यत आह **सा चेति** । एकवाक्येनेत्यर्थः । नन्वात्मज्ञानस्य कथं स्वर्गादिफलककर्मविशेषत्वमित्यत आह **देहेति** । देहस्यात्मभिन्नत्वेन ज्ञाने हि देहनाशे सत्यात्मनोऽपि नाशात् परलोकसाधनीभूलकर्मणि प्रवृत्तिरेव न स्यादित्यर्थः । नन्वात्मज्ञानस्य कर्मशेषत्वे शेषस्य शेष्यतिरिक्तफलाभावात्फलप्रतिपादकश्रुत्यादिविरोध इत्यत्राह **तत्र फलश्रुत्यादिकमिति** । आदिपदेन प्राधान्यप्रतिपादकश्रुतिपरिग्रहः । अस्य आत्मज्ञानस्य । ननु फलश्रुतेरर्थवादत्वं कुत इति चेदत्र वक्तव्यम् । तद्धि श्रुतं फलशेषस्य वा शेषिणो वा शेषिफलस्य वा । नाद्यः । शेषिफलातिरिक्तशेषफलस्याभावात्फलवत्सन्निधावफलस्यैव तदङ्गत्वमिति न्यायात् । न द्वितीयः । तस्य फलान्तरत्वाविरुद्धत्वात् न तृतीय इत्याह । ननु प्रयोजनान्यत्वात्प्रकरणान्यत्वमत्राह **न स्वर्गादिरिति** । स्वर्गादिव्यतिरिक्तफलस्यासंभवात् 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादि'ति न्यायात्फलश्रुतेः स्तुतिमात्रपरत्वादर्थवादतेति भावः । ननु महाफल इत्येतदयुक्तं उक्तपरिहाराभावादित्यत आह **महत्फलमिति** । कुतो नेत्यत आह **प्रयाजादिष्विति** । फलवत्सन्निधावफलं तदङ्गमिति न्यायेन प्रयाजादीनां फलाश्रवणात् । फलवद्दर्शपूर्णमासाद्यङ्गत्वं गोदोहनेन पशुकामः प्रणयेदित्यादौ फलश्रवणेऽपि गोदोहनादीनामङ्गत्वनिश्चयान्नाल्पपशुमात्रं फलमिति भावः ।

**कं०रा०— देहव्यतिरिक्तात्मेति** । पारत्रिकफलस्य देहव्यतिरिक्तात्मान्वयितया देहव्यतिरिक्तात्मज्ञानाभावे पारत्रिकफलककर्मानुष्ठानानुपपत्तेरित्यर्थः । अनेनात्मज्ञानस्य कर्मस्वरूपनिवर्तकत्वेन सन्निपत्योपकारकत्वरूपं





तच्छेषत्वमुक्तं भवति । ततश्चात्मज्ञानद्वारा तत्प्रकरणस्याप्यात्मप्रकरणस्य कर्माङ्गभूतदेवतास्मरणार्थत्वे आत्मज्ञानस्य (प्रकरणस्य) मोक्षरूपफलान्तरोक्तिर्न स्यात् । अङ्गानां प्रधानफलव्यतिरिक्तफलायोगादित्यत आह **तत्रेति** । **आत्मेति** । आत्मा ज्ञातव्य इत्यात्मज्ञानं मोक्षसाधनत्वेन न विहितं किन्तु तस्योक्तप्रकारद्वयेन कर्मानुष्ठानहेतुत्वं लक्ष्यते । एवमात्मज्ञानस्य कर्मशेषत्वेऽवगते या फलश्रुतिः साऽर्थवाद एव भवेदतः स्वर्गादिरन्यन्मोक्षरूपं फलं नास्तीत्यर्थः। **प्रयाजादिष्विति**। क्रतूपकाररूपाल्पफलकेषु प्रयाजादिषु वाक्यपर्यवसानाभावस्य दर्शनादित्यर्थः।

**श्रीनिधि०— लक्ष्यते** ज्ञायते। आत्मज्ञानस्य लक्ष्यत इत्यनेन प्रकरणद्वयमपि सङ्गृहीतं विज्ञाते चास्य च पारार्थ्य इति प्रकरणद्वयेऽपि द्रष्टव्यम्। स्वर्गादिस्सकाशात्।

**वा०चं०—** ननु भिन्नवाक्यतामङ्गीकुर्वाणेनाल्पफलेऽप्येकवाक्यताऽनभ्युपगमान्महाफल इति व्यर्थमित्यतो मीमांसकमतनिरासाय तदित्याशयेन तद्व्यावर्त्यं मतमनुवदति **अपर इति** । एकदेशिव्यतिरिक्त इत्यर्थः । पृथक् फलवत्तया श्रुतस्य कथमन्यशेषत्वमित्यत आह **तत्रेति** । अत्रार्थे भट्टवार्तिकसंमतिमाह **यथोक्तमिति** । ज्ञानस्य न मोक्षसाधनत्वं प्रमाणाभावादिति । ज्ञानं मोक्षनिमित्तं च गम्यते नेन्द्रियादिनेत्यनेनोक्तम् । तर्हि वेदस्तत्र मानं स्यादित्यतो द्विविधं ह्यात्मज्ञानमुपनिषत्सूपदिश्यते देहाद्विवेकज्ञानम् । अविनाशी वा अरेऽयमात्मेत्यादि । आत्मानमुपासीतेति प्राणायामाद्यङ्गोपेतमुपासनात्मकं च । तत्र साङ्ख्यादिभिर्मोक्षसाधनत्वेनाश्रितं विवेकज्ञानं तावन्न वेदेन मोक्षार्थं चोदितमित्याशयेन न च साङ्ख्यादिविज्ञानं मोक्षदत्वेन चोच्यत इति पूर्ववाक्येन ज्ञापयित्वा नन्वात्मा ज्ञातव्य इति विधावप्यपुनरावृत्तिर्वाक्यशेषे श्रूयत इत्याशङ्कायामुक्तम् **आत्मेति**। तर्हि वैयर्थ्यमित्यत आह **कर्मेति** । विवेकज्ञानस्य पारलौकिकफलेषु ज्योतिष्टोमादिषु प्रवृत्तिरध्ययनस्येव दृष्टं फलं संभवति नादृष्टफलापेक्षेति भावः । निर्ज्ञाते च ज्ञानस्य कर्मप्रवृत्तिहेतुतया कर्माङ्गभूतदेवतानुस्मरणार्थतया वा कर्मफलस्वर्गाद्यर्थत्वे वाक्यशेषस्था फलश्रुतिः पर्णमयीन्यायेनार्थवादमात्रं स्यान्न स्वर्गादिः फलान्तरं बोधयितुमलमित्याह **निर्ज्ञाते चेति**। अयं च विवेकज्ञानविषयः प्रकारः । उपासनात्मकज्ञानस्य कर्मणि पुरुषे वा दृष्टप्रयोजनाभावाददृष्टापेक्षायां श्रुत्याद्यभावेन क्रत्वर्थत्वाभावाद्वाक्यशेषोपनीताभ्युदयनिःश्रेयसफलकतया रात्रिसत्रन्यायेन पुरुषार्थत्वमेवेति व्याकरणाधिकरणोक्तप्रकारस्तूपासनात्मज्ञानविषयः । अत्र च पक्षे विधिशेषत्वेनैकवाक्यत्वं द्रष्टव्यम् । ननु ब्रह्मपरत्वेनैकवाक्यता पूर्वमुक्ता तत्कथमुच्यते महाफल इति फलपरतयैकवाक्यता। नापि फलं प्रतिपाद्यं येन तत्परतयैकवाक्यतोक्तिः सङ्गच्छेतेत्यत आह **महदिति। प्रयाजादिष्विति**। अन्यथा दर्शपूर्णमासयोरङ्गत्वं प्रयाजादीनामेव प्रकरणित्वमिति स्यादिति भावः। एवं परोक्तपरिहारनिरासपरतयैतद्वाक्यव्याख्यानपक्षे इति ब्रूयादित्युत्तरवाक्यसङ्गतिरेवमभिमता।

**वा०र०— भट्टवार्तिकेति** । प्रथमस्य प्रथमपादे चैतद्वार्तिकमिति ज्ञेयम् । राणकाद्यनुसारेण व्याचष्टे **ज्ञानस्येत्यादिना** । सदेवेत्यादिविधीनां नित्यफलकत्वादित्यप्युपलक्षणया बोध्यमित्यभिप्रायेणाह **कर्माङ्गभूतोद्गीथेति** । **पर्णमयीन्यायेनेति** । यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्यत्र पर्णमयीवाक्ये फलश्रुतिरर्थवादमात्रम् । अङ्गवाक्यानां प्रधानफलातिरिक्तफलसंबन्धबोधकत्वायोगात् । यथा चैतत्तथा चतुर्थे





अध्याये तृतीयपादे 'द्रव्यसंस्कारकर्मसु परार्धत्वात्फलश्रुतिरर्थवादः स्यादि'ति पर्णमय्यधिकरणे स्पष्टमिति भावः । विधिर्वा स्यादित्येतदर्थवादपादेऽपीदं प्रमेयं ज्ञेयम् । ससार्थवादी भवेदिति वार्तिके पाठोऽस्ति । एतत्संबन्धिराणकादि द्रष्टव्यमस्ति । संमतिश्लोके निर्ज्ञात इति विज्ञात इति च पाठद्वयं तदनुसारेण पाठसङ्करो मूलटीकयोरिति न विरोधः । देहव्यतिरिक्त आत्मेति विवेकज्ञानस्येव प्राणायामाद्यङ्गोपेतोपासनात्मकज्ञानस्याप्युपनिषत्सूक्तत्वे सति विवेकज्ञान-विषयकप्रकारस्यैव च तस्य परार्थेऽपि तत्र फलश्रुतिरर्थवादतया सावकाशेत्यनेनोक्तिरयुक्ता । उपासनात्मक-ज्ञानविषयप्रकारानुक्तेः । विज्ञाते चास्य पारार्थ्य इत्यादिप्रकारस्य तत्रासंभवादित्यत आह **अयं च विवेकेति** । सत्यमयं प्रकारः साङ्ख्याभिमतदेहात्मविवेकज्ञानविषय एव । न तु प्राणायामाद्यङ्गोपेतोपासनात्मकज्ञानविषय इत्यर्थः । तथा सति तद्विषयप्रकारानुक्तिप्राप्तिरित्यतस्तत्प्रकारस्याप्युपलक्षणया व्याकरणाधिकरणोक्तरीत्याऽवसेय-त्वाभिप्रायान्नानुपपत्तिरित्याशयेन तत्प्रकारमुपदर्श्य तदधिकरणोक्तरीत्या तदवसेयत्वमाह **उपासनात्मकेत्यादिना विषय इत्यन्तेन** । व्याकरणाधिकरणं तु प्रथमस्य तृतीये पादे प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यादित्येवं रूपम् । एतदधिकरणशरीरं च प्रयोगचोदनाभावादर्थैकत्वमविभागादित्येतदधिकरणे सिद्धत्वादित्येतट्टीकाव्याख्या-वसरे प्रागेवास्माभिरुपदर्शितं तदधिकरणपूर्वपक्षे शब्दप्रयोगमाश्रित्य विधीयमानः साधुशब्दनियमस्तदङ्गं स्यात् । न च तथा संभवति । स्वरूपे कार्ये चानुप्रयोगात् । शब्दप्रयोगस्य केवलदृष्टार्थत्वादिति प्रयोगोत्पत्तेः प्रयोगविशेष-नियमस्य शास्त्रीयत्वासंभवादनियम एव युक्त इति शङ्कितस्य दृष्टार्थेऽपि चशब्दप्रयोगे तदाश्रितः साधुनियमो भोजनाश्रितदिङ्नियम इव शास्त्रेण क्रियत इति पुरुषार्थत्वमेव । ततो न प्रयोगोत्पत्त्यशास्त्रत्वादव्यवस्थेत्यादि परिहारकरणादुक्तार्थस्य व्याकरणप्रमेयत्वमित्यादि ज्ञेयम् । **अत्र चेति** । सर्वं चैतत्स्पष्टं व्याख्येयमस्ति । ......... । **तत्कथमिति** । तत्तथात्वे । महाफल इति फलपरतयैकवाक्यता कथमुच्यत इति संबन्धः । **प्रकरणित्वम्** । अङ्गित्वम् । अथवा योगेऽग्नावित्याद्युत्तरयोजनायामिवैतद्योजनायामिति ब्रूयादित्येतन्मूलकृता न योजितम् । तावतोत्तरयोजनायामेव तस्य सङ्गतिर्न त्वेतद्योजनायामपीति प्रतीयते । न चैवं मन्तव्यम् । अपि तु स्पष्टत्वात् ग्रन्थकृतोऽपेक्षितोऽयं प्रकार इत्याशयेनैतद्योजनानुसारेण स्वयं तद्वाक्ययोजनाप्रकारप्रदर्शनं प्रतिजानीते **एवं परोक्तेति** । उत्तरयोजनाव्यावर्तनायोक्तं **परोक्तेत्यादि** । **एवमभिमता** । वक्ष्यमाणरीत्येत्यर्थः ।

**स०व्र०**— ननु यद्येवमेकवाक्यत्वमेव वक्तव्यमित्याग्रहः । तदोपनिषदामपि कार्यपरत्वेनैव तदस्त्विति कस्यचिन्मतमाशङ्कते **अपर आहेति** । नन्वेवं ब्रह्मविदाप्नोति परमिति आत्मप्रकरणस्य स्वर्गातिरिक्तमोक्षफलकत्व-श्रुतिः कथमुपपद्यते । प्रयोजनान्यत्वात् प्रकरणान्यत्वमिति न्यायादित्यत आह **तत्रेति** । स्वर्गादिव्यतिरिक्त-फलस्यासंभवात् 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यादि'ति न्यायात् । फलश्रुतेः स्तुतिमात्र-परत्वेनार्थवादत्वान्न स्वार्थे तात्पर्यमिति भावः । **न स्वर्गादेः फलान्तरमिति** । स्वर्गादिकं विहाय नात्मविद्यायाः फलान्तरमस्तीत्यर्थः । **प्रयाजादिष्विति** । न हि दर्शपूर्णमासादियागविधायकवाक्यानां प्रयाजादिवाक्यार्थे-ऽवान्तरापूर्वलक्षणस्वल्पफलक इति प्रयाजादौ महातात्पर्यलक्षणः संबन्ध इत्यस्ति अपि तु प्रयाजादिवाक्यानामेव स्वर्गलक्षणमहाफलकदर्शपूर्णमासादीतिकर्तव्यतायामित्यर्थः । फलवत्सन्निधावफलं तदङ्गमिति न्यायात् प्रयाजादीनां





फलाश्रवणात् फलवद्दर्शपूर्णमासाद्यङ्गत्वम् । गोदोहनेन पशुकामः प्रणयेदित्यादौ फलश्रवणेऽपि श्रुत्यादिना गोदोहनादीनामङ्गत्वनिश्चयात् । नाल्पपशुमात्रं फलमिति भावः ।

**विट्ठ०**— ननु यद्येकवाक्यत्वमेव वक्तव्यमित्याग्रहस्तर्ह्युपनिषदामपि स्वर्गादिरूपकर्मफले सहकारि-भूतात्मज्ञानजनकतया कार्यपरत्वेनैव तदस्त्विति मीमांसकैकदेशिमतमाशङ्कते **अपर इति** । कथं तर्हि तरति शोकमात्मविदित्यात्मप्रकरणस्य स्वर्गातिरिक्तमोक्षफलकत्वश्रुतिरुपपद्यत इत्यत आह **तत्र फलेति** । तथा च न स्वार्थे तात्पर्यमिति भावः । कारिकायां लक्ष्यत इत्यस्य ज्ञायत इत्यर्थः । **अस्य** आत्मज्ञानस्य । **पारार्थ्ये** कर्माङ्गत्वेन स्वर्गादेरित्यस्य स्वर्गादिकमपहाय नात्मविद्यायाः फलान्तरमस्तीत्यर्थः । **प्रयाजादिष्विति** । प्रयाजादिजन्या फलभूतावान्तरफले प्रयाजादिवाक्यानां तात्पर्यस्यादर्शनाद्वेदान्तानामपि नाल्पफले कर्मणि तात्पर्यमित्यर्थः । तथा च प्रयोगः कर्मानन्यशेषतया वेदप्रतिपाद्यं न भवति स्वर्गादिरूपाल्पफलकत्वात् प्रयाजादिवदिति दर्शनादिति पदच्छेदे तु ब्रह्मण्येवाशेषवेदानां तात्पर्यं न तु कर्मणि प्रयाजानुयाजदर्शपूर्णमासादिषड्यागजन्यमहाफल एव यजतीत्यादीनां तात्पर्यदर्शनादित्यर्थः ।

**चषकः**— उपनिषदामपि कार्यपरत्वेनैकवाक्यतामभियोगेनाभिदधानस्य कस्यचिन्मतं दुदूषयिषुरनुवदति **अपर आहेति** । फलश्रुत्यादिकं स्वर्गातिरिक्तकैवल्यरूपफलश्रुत्यादिकम् । न तस्य तात्पर्यमिति भावः ।

**प्रदीपः**— अस्तु तर्ह्युपनिषदामपि कार्यपरत्वेनैकवाक्यतेति शङ्कते **अपर इति** । ननु प्रयोजना-न्यत्वात् प्रकरणान्यत्वमित्यत आह **तत्रेति** । स्वर्गादिव्यतिरिक्तफलस्यासंभवात् द्रव्यसंस्कारकर्मसु फलार्थत्वात् फलश्रुतिरर्थवादः स्यादिति न्यायात् फलश्रुतेः स्तुतिमात्रपरत्वेनार्थवादतेत्यर्थः । **प्रयाजादिष्विति** । फलव-त्सन्निधावफलं तदङ्गमिति न्यायात्प्रयाजादीनां इदंफलश्रवणात्फलवद्दर्शपूर्णमासाङ्गत्वं गोदोहनेन पशुकामस्य प्रणयेदित्यादौ फलश्रवणेऽपि श्रुत्यादीनां गोदोहनादीनामङ्गत्वनिश्चयान्नाल्पपशुमात्रफलत्वमिति युगपदाकार-द्वयविरोधादिति अनुवाद्यत्वमुद्देश्यत्वं प्राधान्यं विधेयत्वमुपादेयत्वं गुणत्वं चेति त्रिकद्वयमेकस्मिन्वाक्ये विरुद्धमिति भावः ।

**५६७ सु०— अथवा 'योगेऽग्रावपि तत्समम्' इति न युक्तम् । संभवति खलु उपासनावाक्ये क्वचित् 'आत्मेत्येव उपासीते'तीतिशब्दश्रवणाद् अविद्यमानेतिशब्देष्वपि उप्युपासनावाक्येष्वितिशब्दाध्याहारः । न च कर्मप्रकरणे क्वचिदपीतिशब्दोऽस्ति; येन तदभावस्थानेऽध्याहारो भविष्यति । अत्रैव विधिवाक्ये श्रवणात् कर्मकाण्डेऽपि तथाऽध्याहारः किं न स्यादिति चेन्न । वेदान्तानां कर्मकाण्डस्य च भिन्नवाक्यत्वादित्यत आह एकवाक्यत्वेति ।**

**श्रीनिधि०— भिन्नवाक्यत्वादिति** । यद्यपि ऐक्यं नाध्याहारनियामकं तथापि ज्ञापकं भवत्येवेति भावः ।

**वा०चं०—** एवं योगेऽग्नावपीति इति ब्रूयादिति इति वाक्ययोरेकविषयकयोर्मध्यस्थत्वेऽपि परोक्तपरिहारनिरासस्य मूलारूढतालाभादेकवाक्यत्वयोगेऽपीति वाक्यं भिन्नवाक्यतया व्याख्यातम् । इदानीं पूर्वोत्तर-वाक्यैकवाक्यतया व्याख्यानेऽपि परपरिहारनिरासस्यार्थतः सिद्धिं मन्वानः पूर्वैकवाक्यतया व्याख्यातुं प्रकारान्तरेण सङ्गमयति **अथवेति** । अथवाऽस्य वाक्यस्य द्वेधा योजनाऽप्यत्राभिमता । एवं च परोक्तपरिहारनिरासस्य कण्ठत एव सिद्धिरेकवाक्यता च । अत एव पूर्वकल्पे उत्तरवाक्यसङ्गत्यकथनम् । एवमुत्तरत्रापि द्रष्टव्यम् ।

**वा०र०— मध्यस्थत्वेऽपीति** । एकवाक्यत्वयोगेऽपीति वाक्यमित्युत्तरत्रोक्तेरेकवाक्यत्वयोगेऽपीत्य-स्येति लभ्यते । एकविषयकयोरित्युक्त्या तदुभयमध्यस्थवाक्यस्य पूर्वोत्तरानुगुण्येनैव योजना स्वरसतया प्राप्तेति सूचयति । लाभादित्यनेन तथा योजनायां परपरिहारनिरासलाभो न भवति । तत्परिहारनिरासश्च स्वोक्तपरिहार-दार्ढ्यायावश्यकः अतस्तदर्थं स्वरसापि योजना तम् । **योगेऽपीति वाक्यमिति** । एतेनैकवाक्यत्वयोगेऽपीत्यपि-पदयुक्तोऽनुव्याख्यानपाठ इति सूचितम् । अत एव सद्भावेऽपीति विकल्पे मूलयोगे त्विति भाष्यपाठे तु तुशब्दोऽप्यर्थतया व्याख्यात इति ज्ञेयम् । **व्याख्यानेऽपीति** । तथा व्याख्याने एकवाक्यताप्राप्त्या स्वारस्यनिमित्तं स्पष्टमेव । न च तावता परपरिहारनिरासालाभ इति मन्तव्यम् । तन्निरासस्य मुखतोऽभावेऽप्यर्थतः सिद्धेरिति भावेने-त्यर्थः । एवं पूर्वोत्तरग्रन्थयोजनायां पूर्वयोजनायामेकवाक्यताभङ्गं सोढ्वा मतान्तरनिरासलाभात्प्रवृत्तिरित्याश्रय-णीयम् । एतद्योजनायां तु मतान्तरनिरासस्य मुखतो लाभान्नायं सोढ्वैकवाक्यतास्वारस्यात्प्रवृत्तिरित्याश्रयणीयम् । तदुभयत्राप्यस्वरसो यथा न स्यात्तथा योजनामाह **अथवाऽस्य वाक्यस्येति** । तथा चैकवाक्यत्वयोगेऽपीति श्लोको योगेऽग्नावित्यादिमध्यगततया तदुभयेनैकविषय एव मतान्तरनिरासपरतया योजनं तु वर्णकान्तरतया कृतमिति तन्निरासोऽपि मुखत एवायातीति न कश्चिद्दोष इत्युक्तं भवति । पूर्वयोजनायामेकवाक्यत्वभावाभावज्ञापकमाह **अत एवेति** । स्वयं तद्योजनाप्रदर्शनं तु कण्ठतः परिहारान्तरनिरासपरतया योजनापि प्रतीयमाना नापूर्णेति सूचयितुमिति न दोषः । **उत्तरत्रापीति** । पूर्वोत्तरवाक्ययोरेकविषयत्वेऽपि तन्मध्यस्थवाक्यस्य भिन्नवाक्यतया योजनानन्तरं पुनरेकवाक्यतया योजना यत्र तथाविधे उत्तरत्रापि फलान्तरलेभः । एकवाक्यतास्वारस्यं तदुभय-परत्वं चेत्युक्तप्रकारेण समाधानमवधातव्यमित्यर्थः । यथा .............. उपलक्षणं चैतत् । पूर्वत्रापि .............. तत्रतत्रैवं ज्ञेयमित्यपि द्रष्टव्यम् ।

**विठ्ठ०—** पूर्ववाक्यसङ्गततयापि एकवाक्यत्वेति श्लोकं व्याख्यातुमाह **अथवेति** ।



॥ वाक्यभेदे अङ्गीकृतेऽपि उपासनातोऽन्यत्रापि इतिशब्दाध्याहारस्य युक्तत्वम् ॥

कर्मप्रकरणेऽपि इति ब्रूयात् इति श्रुतौ इतिशब्दश्रवणम्—

**५६८ सु०—** अस्तु वा कर्मब्रह्मकाण्डयोर्वाक्यभेदः तथाऽप्यग्न्यादिशब्दात्परमितिशब्दाध्याहारो युज्यते। कर्मप्रकरणेऽपि क्वचिदितिशब्दश्रवणादित्यभिप्रेत्याह **इति ब्रूयादिति**।

**अनु०— इति ब्रूयादिति वचो गतमग्नौ समीपगम् ॥**

'न गिरा गिरेति ब्रूयात्' **इति वचः** 'अग्नावि'त्यस्य **समीपगम्**। **गतम्** अवगतमित्यर्थः।

**बिन्दुः— न गिरा गिरेति**। ज्योतिष्टोमादौ औद्गात्रे यज्ञायज्ञीयं नाम साम, 'यज्ञा यज्ञा वो अग्नयो गिरा गिरा च दक्षसे। प्रप्रवयममृतं जातवेदसं प्रियं मित्रं न शंसिषम्।' एतस्यामृचि गीयते तत्र गानकाले गकारोच्चारणनिषेधार्थमिदं वाक्यं न गिरा गिरेति ब्रूयात्' 'ऐरं कृत्वोद्गेयमि'ति। अस्यार्थः— गिरा गिरा च दक्षस इत्यत्र गिरा गिरे इति न ब्रूयात् किन्तु तत्स्थाने ऐरा इ इति कृत्वा गेयमिति पठन्ति चोद्गातारः। आ ३। इरा ३। इत्यादि। तत्र श्रूयमाण इतिशब्दः सर्वत्र कर्मवाक्येषु संबन्धनीय इत्याखण्डलार्थः। (इत्यखण्डार्थः)

**परि०— न गिरा गिरेति ब्रूयादिति वच इति**। ज्योतिष्टोमप्रकरणे यज्ञायज्ञीयेन स्तुवीतेति स्तोत्रसाधनत्वेन प्राप्ते 'यज्ञायज्ञावोऽग्नये गिरागिरा च दक्षसे। प्र प्रवयममृतं जातवेदसं प्रियं मित्रं न शंसिषम्' इति मन्त्रे गिरागिरेत्यक्षरस्थाने इराइरेत्यक्षरस्थापनं कृत्वा तेन समायुक्तस्तोत्रं कार्यमितिभावेन न गिरागिरेति ब्रूयात्। ऐरं कृत्वोद्गायेदिति वाक्यं पठ्यते। तथैव नवमाद्यपादान्तेऽभिधानात्। तथाच ज्योतिष्टोमाख्यकर्मप्रकरण एवेतिपदश्रवणमस्तीति 'आहवनीये जुहोती'ति 'अग्नौ जुहोतीत्याहवनीयाग्निसमीपमितिपदमस्ति आहवनीये जुहोतीत्यादावाहवनीय इति जुहोतीत्यध्याहारेणेतिपदान्वयेऽग्निस्मृतिमात्रेण होमः स्यादित्यर्थवैपरीत्यवाचकत्वमितिशब्दस्योक्तम्।

**गु०दी०— "न गिरा गिरेति ब्रूयात्"** इत्यत्र पटत्पटदितिवद्गिरा गिरेत्यपि शब्दानुकारी व्यर्थशब्दो गृह्यते। व्यर्थकोलाहलं न कुर्यादित्यर्थः।



**वा०चं०**— एवं परोक्तपरिहारं निरस्य पुनः पूर्वोक्तमेवानुसन्दधन्ननु ब्रह्मकाण्डे क्वचिदितिशब्द-स्यान्यत्राध्याहारकल्पकस्य सद्भावेऽपि कर्मकाण्डे क्वचिदपीतिशब्दस्याभावेन कल्पकाभावाद्योगेऽग्नाविति न युक्तमित्यतः कर्मकाण्डेऽपि तत्सद्भावं प्रतिपादयति **इति ब्रूयादितीति** । नन्वस्मिन्पक्षे कर्मकाण्डे इतिशब्दसद्भावप्रतीकोत्तरवाक्यासङ्गतिः । एकवाक्यताप्रतिपादकपूर्ववाक्येनैवोक्तशङ्कापरिहारादित्यतस्तत्सङ्गमयति **अस्तु वेति** ।

**वा०र०**— तमेव प्रकारं दर्शयति **एवं परोक्तपरिहारमित्यादिनेतीतीत्यन्तेन**। पूर्वोक्तमेवानुसन्दधदित्य-स्योपासनाविधिशेषत्वेन प्रतिपादितैकवाक्यताप्रकारमनुसन्दधदित्यर्थः । तथा तत्र पक्षे आत्मेत्येवेतीति शब्देन वैपरीत्यार्थेन स्मृतिमात्रेणात्मन उपयोगप्राप्तिशङ्कापरिहारायोक्ता या प्रतिबन्दी तर्हि अग्नौ जुहोतीत्यादावपीति शब्देन स्मृतिमात्रेणाग्न्युपयोगादिकल्पनापातादिति तां चानुसन्दधदित्यर्थः । अनेन यद्यप्येकवाक्यत्वयोगेऽपीत्येतच्छ्लोकस्य मतान्तरनिरासकतया योजनापक्षे इति ब्रूयादित्युत्तरभाष्यस्य नाव्यवहितसङ्गतिरिति स्पष्टम् । व्यवधानादेव योगेऽग्नावित्येतत्प्रकृतसङ्गतिश्च नास्ति । तथापि इति ब्रूयादित्यर्धस्य पुनः प्रकृतानुसरणेन योजनायां तत्सङ्गति-रित्युक्तं भवति **क्वचिदितीति** । अन्यत्राध्याहारकल्पकस्येति शब्दस्य क्वचित्सद्भावेऽपीत्यस्य ब्रह्मकाण्डे क्वचिदिति शब्दसद्भावेन तद्बलादन्यत्राध्याहारकल्पनोपपत्तावपीत्यर्थः । यद्वा क्वचिद्विद्यमानो यः इतिशब्दस्तस्यान्यत्राध्याहार-कल्पकतया सत्त्वेऽपीत्यर्थः । तथा क्वचिदपीतिशब्दस्याभावेन कल्पकाभावादित्युत्तरवाक्येऽपि क्वचिदपि स्थले इतिशब्दाभावेन तत्सद्भावरूपकल्पकाभावादित्यर्थः । न त्वन्यत्राध्याहारकल्पकस्येत्यप्यनुषञ्जनीयम् । कल्पका-भावादित्यस्य वैयर्थ्यापत्तेर्हेतुहेतुमद्भावानुपपत्तेश्च । एवं च ब्रह्मकाण्डे क्वचिदित्यादिग्रन्थस्याथवेत्युत्तरमूलानुसारेणोप-युक्तार्थकथनपरत्वसंभव इति ज्ञेयम् । **अस्मिन्पक्ष इति** । कर्मब्रह्मकाण्डयोरेकवाक्यतया ब्रह्मकाण्डे श्रुतेतिशब्दस्य कर्मकाण्डेऽध्याहारोपपत्तिरित्यर्थस्यैकवाक्यत्वयोगेऽपीत्येतच्छ्लोकाल्लाभपक्ष इत्यर्थः । असङ्गतिः वैयर्थ्यरूपा-सङ्गतिरित्यर्थः । अत एवाह **एकवाक्यतेति** । **सङ्गमयतीति** । कर्मब्रह्मकाण्डयोर्भिन्नवाक्यतामङ्गीकृत्येति शेषः । इतिशब्दस्य शब्दस्वरूपग्रहणार्थत्वशङ्का न युक्ता ।

**स०व्र०**— **न गिरा गिरेति ब्रूयादिति** । 'यज्ञायज्ञावोऽग्नये गिराऽगिरा च दक्षसे' इति मन्त्रः यदा यज्ञेषु पठ्यते तदेतिकर्तव्यतारूपमिदं ब्राह्मणमिति ज्ञातव्यम् ।

**विठ्ठ०**— **न गिरागिरेति ब्रूयादिति** । ज्योतिष्टोमप्रकरणे 'यज्ञा यज्ञीयेन स्तुवीते'ति स्तोत्रसाधनतया प्राप्ते 'यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे' इति मन्त्रे गिरागिरेत्यक्षरस्थाने इराइरेत्यक्षरस्थापनं कृत्वा तेन सामयुक्तस्तोत्रं कार्यमिति भावेन न गिरागिरेति ब्रूयादैरं कृत्वोद्गमायेदिति ब्राह्मणे पठ्यते । तथाच कर्मप्रकरण एव इतिशब्दश्रवणादग्नौ जुहोतीत्यादावपीतिशब्दाध्याहारेणाग्नाविति जुहोतीत्यन्वये अग्निस्मृतिमात्रेण होमः स्यादित्यर्थः ।





॥ सत्यज्ञानादिपदानां पदार्थे ब्रह्मणि वाक्यार्थे कार्ये च उपासनादौ इत्युभयत्र तात्पर्यस्य ग्राह्यता ॥

॥ पृथक्तात्पर्यकल्पने कल्पनागौरवाभावः ॥

अन्यथा अविशेषात् यूपादिपदार्थानामपि अभावापत्तिः—

**५६९ सु०— नन्वत्र इतिशब्दः शब्दस्वरूपग्रहणार्थ इति सत्यम् । अत एवार्थप्रकरणे शब्दस्वीकारार्थे वैपरीत्यवाचीत्युक्तमिति । तथाऽपि नोपासनाकर्मतया ब्रह्मणः सिद्धिः । ब्रह्मप्रतिपादकवाक्यानां ह्युपासनाकार्यत्वे तावत्तात्पर्यमावश्यकम् । ब्रह्मस्वरूपेऽपि तात्पर्य-मित्यङ्गीकारे तु कल्पनागौरवप्रसङ्गादित्यत आह कल्पनेति ।**

**अनु०— कल्पनागौरवं चेत्स्यात् पृथक् तात्पर्यकल्पने ॥**
**कल्पनागौरवादेव पदार्था न स्युरेव हि ।**

**परि०**— तदिह नेति वाऽत्रेवाध्याहृतस्थलेऽप्यग्निस्वरूपपरः स्यादिति भावेन वाऽऽशङ्कते **नन्वत्रेति** । **उक्तमिति** । पूर्वग्रन्थे उक्तमित्यर्थः ।

**यादु०— शब्दस्वरूपग्रहणार्थ इति** । तथा चास्येति शब्दस्याग्नौ जुहोतीत्यत्राध्याहारे तत्रापि शब्दरूपग्रहणार्थ एवेतिशब्दः स्यात् । एवं चाग्निशब्द एव होमान्वयप्राप्त्याऽग्नेः स्मृतिमात्रेण होमान्वयः इति प्रागुक्तोऽर्थो गत इति भावः । इतिशब्दो हि पदार्थवैपरीत्यमात्रे शक्तः । स च विपरीतोऽर्थो न गिरा गिरेत्यत्र शब्दस्वरूपमेव । अग्नावित्यत्र तु स्मृतिरिवेत्यन्यदेतत् । यत्र यस्य विपरीतार्थस्यान्वययोग्यता तत्र तस्य ग्राह्यत्वात् । वैपरीत्यार्थत्वं तूभयत्राविशिष्टमेवेत्याशयेन परिहरति **अत एवार्थप्रकरण इति** । **आवश्यकमिति** । अन्यथाऽस्तु वा कार्यपरत्वं वेदस्येत्यभ्युपगमानुपपत्तेरिति भावः ।

**वं०प०— शब्दरूपग्रहणार्थ इति** । तथाच न गिरा गिरेति शब्दं न ब्रूयादित्यर्थः । **वैपरीत्य-वाचीत्युक्तमिति** । इतिशब्दस्य पदार्थवैपरीत्यमात्रे शक्तत्वान्न गिरा गिरेत्यत्र वैपरीत्यं शब्दः । अत्र तु वैपरीत्यं स्मृतिरिवेति भावः ।

**आनन्दः— नन्वत्रेतीति** । तथाच कथमस्य वैपरीत्यवाचित्वमित्याशयः । **अत एवेति** । शब्दस्वरूपग्रहणार्थकत्वादेवेत्यर्थः ।

**कं०रा०— अत्रेति** । न गिरा गिरेति ब्रूयादित्यत्रेतिशब्दः शब्दस्वरूपग्रहणार्थ एवातः कथमितिशब्दस्य वैपरीत्यवाचित्वमिति भावः । **अत एवेति** । यत एव तत्रार्थप्रकरणे शब्दस्वीकारार्थमितिशब्दोऽत एव स





वैपरीत्यवाचीत्युक्तमित्यर्थः। यद्वा न गिरा गिरेति ब्रूयादित्यत्रेतिशब्दो गिरा गिरेत्यनेनार्थग्रहणे प्रसक्ते तन्निवारणेन तस्य शब्दस्वरूपपरत्वव्यवस्थापकोऽतः कथमितिशब्दस्य वैपरीत्यवाचित्वमिति भावः। परिहाराभिप्रायस्तु यतोऽर्थप्रकरणे इतिशब्दो यस्मात्परतः प्रयुक्तस्तस्य शब्दस्य शब्दस्वरूपपरत्वव्यवस्थापनार्थोऽत एव कारणात्स वैपरीत्यवाचीत्युक्तं न तु स्वयमेव वैपरीत्यवाचकत्वात्तद्वाचीत्युक्तमिति।

**वा०चं०**— ननु प्रतीकग्रहणार्थतयेतिशब्दप्रसिद्धेः प्रकृतेऽपि गिरागिराशब्दस्वरूपग्रहणार्थकत्वेन वैपरीत्यार्थकत्वाभावादग्नावित्यादौ तदध्याहारेऽपि न प्रसिद्धार्थपरित्यागेनार्थान्तरलाभ इति न प्रतिबन्दीसिद्धि-रित्याशङ्क्ते **नन्विति**। किमेतावता किमयं नार्थप्रकरणे शब्दस्वीकारार्थो येन वैपरीत्यार्थत्वं न स्यात्। प्रतीक-ग्रहणमपि वैपरीत्यार्थकत्वेनैवेति प्रतिबन्दीसिद्धिरित्याशयेन समाधत्ते **सत्यमिति**। यद्वा ननु गिरागिरेति ब्रूयादित्यत्र इतिशब्दस्य शब्दस्वरूपार्थकत्वेन स्वरूपार्थत्वपरित्यागेन स्मृतिमात्रपरत्वाभावेन वैपरीत्यवाचित्वाभावात्कथं तदध्याहारेऽप्यग्नेः स्मृतिमात्रेण होमान्वयः स्यादित्युक्तसिद्धिरित्याशङ्क्ते **नन्वत्रेति**। एवमप्यर्थप्रकरणेऽर्थस्वरूपस्यैव पदार्थत्वात् तत्परित्यागेन शब्दस्वरूपार्थत्वाभ्युपगमे कथं न वैपरीत्यवाचित्वम्। श्रुतस्थले शब्दस्वरूपार्थकत्वेन वैपरीत्यार्थकत्वम्। अध्याहृतस्थले च स्मृतिविषयत्वार्थकत्वेनेति विशेषस्त्वप्रयोजकः। स्वरूपार्थकत्वपरित्यागेन वैपरीत्यार्थकत्वस्योभयत्राविशिष्टत्वेन वैपरीत्यार्थकत्वमात्रे उदाहरणस्याभिप्रेतत्वादित्याशयेनाह **सत्यमिति**। इतिशब्दस्य प्रकारवाचित्वमनभ्युपगम्य वैपरीत्यार्थत्वान्नात्मस्वरूपे तात्पर्यमित्यभ्युपगमे इतिशब्दश्रवणान्नाग्नि-स्वरूपे तात्पर्यमिति बाधकपरिहारपरपूर्वग्रन्थसङ्गत्यभावेऽप्यात्मस्वरूपे तात्पर्याभ्युपगमे बाधकान्तरपरिहारा-र्थत्वान्नोत्तरग्रन्थासङ्गतिरित्याशयेनाह **तथाऽपीति**।

**वा०र०**— अर्थप्रकरणगतेतिशब्दस्य शब्दार्थकत्वे सिद्धान्त्यभिमतसिद्धेरित्यतः शङ्काभिप्रायं दर्शयन्नव-तारयति **ननु प्रतीकेति**। शब्दस्वरूपग्रहणार्थकतयेतिशब्दोपादानेऽपि न सिद्धान्त्यभिमतसिद्धिः। पदार्थवैपरीत्यं हि सिद्धान्तिनाऽपाद्यम्। ततश्च तदा स्याद्यदि गिरागिरेति ब्रूयादित्यत्रत्येतिशब्दस्य वैपरीत्यमर्थः स्यान्न चैवम्। किन्तु प्रतीकग्रहणार्थतयेति शब्दप्रसिध्यनुसारेण तत्रत्येतिशब्दस्य प्रतीकग्रहणार्थतया प्रतीकग्रहणस्य च शब्दस्वरूपग्रहणरूपत्वेन तदर्थत्वे शब्दस्वरूपरूपयथास्थितार्थप्राप्तेः। एवं च न गिरेतिवाक्यगतेतिशब्दस्याग्ना-वित्यध्याहारेऽपि वैपरीत्यमर्थतया न प्राप्नोतीति प्रसिद्धार्थपरित्यागेनार्थान्तरलाभो नेत्यर्थः। **किमेतावतेति**। प्रतीकग्रहणार्थत्वमित्येतावता किम्। न हि शब्दप्रकरणगतेतिशब्दो यथाऽर्थार्थकस्तथाऽर्थप्रकरणगतः शब्द-स्वीकारार्थो नेत्यङ्गीक्रियते। येन शब्दप्रकरणे वैपरीत्यार्थकत्वेऽप्यर्थप्रकरणे तदभावः स्यात्। यच्च प्रतीकग्रहणार्थत्व-मुपन्यस्तम्। तदपि वैपरीत्यार्थकत्वमूलकमिति तत्स्वीकारे वैपरीत्यार्थकत्वत्यागाभाव एवेति प्रतिबन्दी-युक्तैवेत्याशयेनेत्यर्थः। अस्मिन्पक्षे प्रतीकग्रहणार्थत्वरूपयुक्त्याश्रयणेन शब्दपदार्थकत्वमानेयं भवति। तच्च प्रागुपन्यस्तार्थप्रकरणगतत्वादेवेतिशब्दस्य शब्दपदार्थकत्वप्राप्त्युपपत्तौ न स्वरसमित्यपरितोषादर्थप्रकरणगतत्वा-श्रयणेनैवेति शब्दस्याशब्दस्वरूपार्थकत्वमाश्रित्य तावतापि न सिद्धान्त्यभिमतसिद्धिः। स्वरूपार्थत्यागेन स्मृति-मात्रपरत्वस्यानाश्रयणादित्येवं प्रकारान्तरेण नन्वत्रेत्यादि शङ्काग्रन्थं योजयति **यद्वेति**। न वयं स्वरूपपरित्यागो





नाम यः कश्चन तत्परित्याग इति ब्रूमः। येन शब्दस्वरूपार्थकतास्वीकारेण तत्परित्यागोऽस्तीति शङ्कनीयं स्यात्। किन्त्वर्थप्रकरणतया प्राप्तं यदर्थस्वरूपं तत्परित्याग इति ब्रूमः। न चासाविह नास्ति। न गिरागिरेत्यत्रार्थपरित्यागेन शब्दार्थत्वाङ्गीकारस्य भवता स्वीकारेण स्वरूपपरित्यागवदग्नावित्यध्याहारस्थलेऽप्यर्थस्वरूपपरित्यागस्यावश्यकत्वात्। तथा च अर्थप्रकरणे स्वरसतः प्राप्तार्थविपरीतशब्दार्थकतयेति शब्दव्याख्याने वैपरीत्यवाचि तावदग्नावित्यत्राप्यर्थपरित्यागे वैपरीत्यवाचिता प्राप्तैव। इयांस्तु विशेषः। श्रुतेति शब्दस्थलेऽर्थविपरीतशब्दार्थकत्वम्। अध्याहृतस्थले चार्थस्वरूपविपरीतस्मृतिविषयत्ववाचित्वमिति। स चाप्रयोजकः। अर्थविपरीतत्वाविशेषादित्याह **एवमपीति**। नन्वर्थविपरीतत्वेऽपि द्विविधत्वाश्रयणान्न गिरागिरेतीत्यस्याग्नावित्यस्य च कथं दृष्टान्तदार्ष्टान्तिकभाव इत्यत आह **वैपरीत्यार्थकत्वमात्र इति**। यथा न गिरागिरेतीत्यादावितिशब्दस्य वैपरीत्यार्थत्वं तथा अग्नावित्यध्याहृतस्थलेऽपि वैपरीत्यार्थत्वमित्येतावन्मात्रे दृष्टान्तत्वमिति न दोष इत्यर्थः। स यमितीत्यन्तानन्तरमिति शब्दश्रवणान्नात्मस्वरूपतात्पर्यमिति बाधकपरिहारपरपूर्वग्रन्थसङ्गत्यभावेऽपीत्यादिरीत्याशयेनाह तथापीति पाठः। इति यद्बाधकं तत्परिहारपरो यः पूर्वग्रन्थ इति योज्यम्। तथा अभ्युपगमे यद्बाधकान्तरं तत्परिहारार्थकत्वं योज्यम्। अनेनात्मस्वरूपे तात्पर्ये इतिशब्दश्रवणरूपं बाधकं परिहृत्य बाधकान्तरपरिहाराय कल्पनागौरवमिति भाष्यं प्रवृत्तम् इति तद्भाष्यस्य पूर्वबाधकपरिहारपरभाष्येण सङ्गतिनपेक्षितेति सूचयतीत्युत्तरभाष्यं न पूर्वशेष इति प्रदर्शितं भवति। अत्र स्थले इति शब्दश्रवणादित्यतः प्रागितिशब्दस्य प्रकारार्थत्वमनभ्युपगम्य वैपरीत्यार्थत्वान्नात्मस्वरूपे तात्पर्यमित्यभ्युपगम इत्यंशोऽधिकोस्ति। स च विवक्षितपाठस्येतिशब्दश्रवणादित्यादिनैव संपूर्तेरनन्वितत्वाच्च निवेशानर्ह इति कुतस्तस्य लिखनं जातमिति चेच्छृणु सावधानमनाः। प्रथमतस्तट्टीकाकृतेतिशब्दश्रवणान्नात्मस्वरूपे तात्पर्यमित्यभ्युपगमे बाधकप्रदर्शनपरपूर्वग्रन्थसङ्गत्यभावेऽपीति विन्यासः कृतः। तनदन्तरमत्रेतिशब्दस्य प्रकारवाचित्वात् विपक्षे बाधकमाहेत्येतन्मूलानुसारेणोक्तविन्यासे श्रवणादित्येतदुद्वास्येतिशब्देत्यनन्तरस्य प्रकारवाचित्वमनभ्युपगम्य वैपरीत्यार्थत्वेत्येतावच्छोधितम्। तत्र च वैपरीत्यार्थत्वाभ्युपगमे बाधकेति पाठः पर्यवसन्नः। श्रवणादित्यंशं विनाश्यापि पाठान्तरस्य लोभेन नात्मस्वरूपे तात्पर्यमित्येति दशाक्षराणां नाशनमकृत्वैव संपूर्णावतारलेखात्। तस्मिंश्च पक्षे प्राग्बाधकप्रदर्शनं कृतम्। उत्तरग्रन्थे तु बाधकान्तरं परिह्रियत इति योजना न स्वरसेति मत्वा बाधकप्रदर्शनेत्यत्रत्यनकारोपरि रेखाचतुष्टयं कृत्वेतिशब्दश्रवणान्नात्मस्वरूपे तात्पर्यमिति बाधकपरिहारेति शोधितम्। तदा चात्मस्वरूपे तात्पर्ये इतिशब्दश्रवणरूपमित्यादिप्रागस्मदुपदर्शितरीत्या प्रागेवं बाधकं परिहृतमिदानीं तु बाधकान्तरं परिह्रियत इति योजनास्वारस्यमिति सूचितमिति वाक्यविन्यासस्थितिः। प्रतिपुस्तके तु सत्यमितीत्यन्तानन्तरमितिशब्दश्रवणादिति प्राथमिकपाठं नाशितत्वादेव परित्यज्य परिष्कृतपाठलिखनाय प्रवृत्तो लोभेनानाशितदशाक्षराण्यपि सङ्गृह्याभ्युपगमे इत्यन्तं लिखित्वा बाधकप्रदर्शनेत्यस्य लिखनाय उक्तो नकारोपरि रेखाचतुष्टयमवलोक्य बाधकप्रदर्शनपरेत्यंशं परित्यज्यातिपरिष्कृतशोधितपाठमेव लिखितवान्। इतिशब्दस्येत्यारभ्याभ्युपगम इत्यन्तं तूत्तरलिखनभारेण न नाशितम्। न त्वपरामशर्शात्। कथमन्यथाभ्युपगम इत्यनन्तरं विद्यमानबाधकप्रदर्शनपरेत्यंशमपि न लिखेदिति। नेयं कल्पनेति तु मूलकोशदृशां प्रत्ययोत्पादनिश्चितं भविष्यति। आहेत्यस्य बाधकान्तरमुपन्यस्य तन्निरासपरतयोत्तरग्रन्थे योजयतीत्यर्थः।





**स०व्र०— शब्दस्वरूपग्रहणार्थ इति** । तथा चास्येतिशब्दस्याग्नौ जुहोतीत्यत्राध्याहारे तत्रापि शब्दस्वरूपग्रहणार्थ एवेतिशब्दः स्यात् । एवं चाग्रे स्मृतिमांत्रेण होमान्वय इति प्रागुक्तोऽर्थो नायातीति भावः । इतिशब्दो हि वैपरीत्यमात्रे शक्तः । स च विपरीतोऽर्थो न गिरागिरेत्यत्र शब्दस्वरूपं अग्नावित्यत्र तु स्मृतिरेवेत्यन्यदेव तत् । वैपरीत्यार्थं तूभयत्राविशिष्टमेवेत्याशयेन परिहरति **अत एवार्थप्रकरण इति** ।

**वि्ठ०—** ननु न गिरागिरेतीत्यत्रेतिशब्दो वचनरूपार्थपरत्वं परित्यज्य शब्दरूपग्रहणार्थः । तद्वदग्नौ जुहोतीत्यत्रेतिशब्दाध्याहारे अग्नावितिशब्दो जुहोतीत्यर्थप्रात्याग्निस्मृतिमात्रेण होम इत्यर्थो न सिध्यतीत्याशयेन शङ्कते **नन्वत्रेति** । इतिशब्दो हि वैपरीत्यमात्रे शक्तः । सचेतिशब्दबोध्यो विपरीतार्थो न गिरेत्यत्र शब्दस्वरूपं अग्न्यावित्यत्र तु स्मृतिरेवेति पूर्वोक्त......दोषतादवस्थ्यं यत्र यस्यान्वययोग्यता तत्र तस्यैव ग्राह्यत्वादित्याशयेन परिहरति **अत एवेति** ।

**५७० सु०— एवं तर्हि यूपाहवनीयादिवाक्यानामपि पशुबन्धादिकार्ये तात्पर्यं तावदावश्यकम् । यूपादिस्वरूपेऽपि पृथक् तात्पर्यकल्पने कल्पनागौरवं स्यात् । ततश्च वेदात्तदसिद्धौ प्रमाणान्तराभावाद् यूपादिपदार्थाभाव एव प्रसज्यत इत्यर्थः ।**

**वा०चं०—** ननु घटादिपदार्थाङ्गीकारे न किञ्चित्कल्पनागौरवमित्यतः प्रकृताभिप्रायेण योजयति **एवं तर्हीति** । ननु कल्पनागौरवाद्वाक्यतात्पर्याभावेन वाक्यात्तदसिद्धावपि प्रमाणान्तरेणैव तत्सिद्धिसंभवात्पदार्था न स्युरित्यनुपपन्नमित्यत आह **ततश्चेति** ।

**वा०र०— प्रकृतेति** । पदार्थपदस्य न यत्किञ्चित्पदार्थपरत्वं किन्तु प्रकृतयूपादिपरत्वमित्यभिप्रायेणेत्यर्थः । **इत्यनुपपन्नमिति** । प्रमाणान्तराभावादित्येतद्व्यावर्त्यशङ्केयम् ।

**वि्ठ०— प्रमाणान्तराभावादिति** । संस्कारादिविशिष्टयूपादेः प्रत्यक्षाद्यवेद्यत्वादिति भावः ।

प्रमाणावगतत्वस्य उभयत्र साम्यम्—

**५७१ सु०— ननु यूपादिषु तद्वाक्यानां तात्पर्याणि प्रमाणसिद्धानि । न तु कल्प्यन्ते । येन खलु वाक्येन यस्यार्थस्य प्रमितिरुत्पद्यते तत्तत्परमित्युच्यते । यूपादिवाक्याच्च यूपादिज्ञानं तावदुत्पद्यते । न चायं संशयः एकाकारनियतत्वात्, न च विपर्ययः बाधकाभावात्, न चानुवादोऽयम् अप्राप्तत्वात्; तत्कथं कल्पनागौरवम्; कथं च यूपादिपदार्थाभाव इत्याशङ्क्याह प्रमाणेति ।**

## अनु०— प्रमाणावगतत्वं चेत्तात्पर्याणां तथैव हि ॥

**तथैव हि** तर्हि, **'ब्रह्मवाक्यानां ब्रह्मणि तात्पर्यं प्रमाणावगतमिति न कल्पनागौरवम्'** इति शेषः ।

**परि०— तथैव हीति** । येन खलु वाक्येनेत्युक्तप्रकारेणेत्यर्थः ।

**यादु०—** यूपादिवाक्यं यूपादिपरं तत्प्रमितिकरणत्वात्संप्रतिपन्नवाक्यवदित्यभिप्रेते तात्पर्यसाधकानुमाने स्वरूपासिद्धिपरिहाराय सामान्यसिद्धिपरिशेषावाह **यूपादिवाक्याच्चेत्यादिना** । अप्राप्तत्वादित्यनन्तरं तथा परिशेषा-त्प्रमारूपमेव तत्सिद्ध्यतीति वाक्यशेषः ।

**आनन्दः— ननु यूपादिष्विति** । तथाच विमतं यूपादिवाक्यं तत्परं तत्प्रमितिफलकत्वात् । न च हेतुरसिद्धः यूपाहवनीयादिवाक्यजं ज्ञानं प्रमा संशयविपर्ययान्यत्वे सति ज्ञानत्वादित्यनुमानप्रकार इति भावः । **तथैवेति** । अनुमानप्रकारस्तु उक्तरीत्या द्रष्टव्यः ।

**कं०रा०— प्रमितिरिति** । अनधिगततथाभूतार्थनिश्चय इत्यर्थः । तेन होमानुवादेन दध्यादिगुणविधिपरेण दध्ना जुहोतीति वाक्येन होमप्रमितिरुत्पद्यते । न च तद्वाक्यं तत्परमिति चोद्यं निरस्तम् । अत एवोत्तरत्र यूपादिवाक्यजन्यज्ञानस्य प्रमितत्वोपपादनाय न चानुवादोऽयमिति ज्ञातार्थविषयकत्वरूपानुवादत्वपरिहारोऽपि सङ्गच्छत इति द्रष्टव्यम् । **प्रमाणावगतमिति** । उक्तरीत्येति शेषः ।

**वा०चं०—** ननु कल्पनागौरवपरिहारोपायानुक्तेर्न प्रतिबन्दीमात्रेणार्थसिद्धिरित्यतः परमुखेनैव तत्परिहा-रोपायं वक्तुं प्रतिबन्दीग्रहणमित्याशयेनोत्तरभाष्यं सङ्गमयति **नन्विति** । अनेन यूपाहवनीयादिवाक्यं यूपादिपरं तत्प्रमितिजनकमिति यावत् । तत्प्रमितिजनकत्वातिरिक्ततात्पर्याभावात्संशयविपर्ययानुवादभिन्नज्ञानजनकत्वात् संमतवदित्यनुमानं तात्पर्ये प्रमाणमुक्तं भवति । अनुवादत्वं प्राप्तार्थविषयकत्वमभिमतम् । यद्वाऽनुवादभिन्नत्वे सति संशयविपर्ययान्यज्ञानजनकत्वादिति हेतुशरीरं विवक्षितम् । एवं प्रमाणविशेषस्वरूपकथनेन प्रमाणावगतत्वं चेदिति मूले प्रमाणस्वरूपविशेषानुक्त्या शङ्कासमाधानयोराभासत्वमपहस्तितं भवति । तथैव हीत्येतावन्मात्रेण पूर्तेः । प्रकृतोपयोगितयाऽध्याहारेण योजयति **तथैव हीति** ।

**वा०र०— न प्रतिबन्दीति** । प्रतिबन्ध्या अनुत्तरत्वादिति भावः । **प्रतिबन्दीग्रहणमिति** । परमुखेन समाधानवचनफलकप्रतिबन्ध्या उत्तरत्वमेवेति भावः । **सङ्गमयति** तद्व्यावर्त्यशङ्कनमुत्थाप्य तन्निवर्तकतया भाष्यं





योजयतीत्यर्थः । तात्पर्यसाधकानुमाने प्रमितिजनकत्वसाधनमर्थान्तरग्रस्तमित्यत आह **तत्प्रमितिजनकत्वेति** । मूलेन चानुवादोऽयमित्यत्रानुवादत्वं नाम प्राप्तार्थविषयकत्वं विवक्षितमिति वक्ष्यमाणं मनसि कृत्वा संशयविप-र्ययानुवादभिन्नेति ज्ञानविशेषणमुपात्तम् । तेनायमिति स्थानत्रयेऽप्येकार्थं भवति । स्थानत्रयेऽपि संशयादिविवक्षया पुल्लिङ्गमिति ज्ञेयम् । यदि च यूपादिवाक्यजन्यज्ञानस्य संशयविपर्ययरूपत्वपराकरणानन्तरं तद्वाक्यमेवानुवादयति । न तेन पदार्थसिद्धिरित्याशङ्कापरिहारकतया न चानुवाद इत्येतद्वाक्ययोजना । अत एव च न च विपर्यय इतिवन्न चानुवाद इत्येवानुक्त्वा पुनरयमिति वाक्यविवक्षया प्रयुक्तम् । तथा च जनकविशेषणमनुवादभिन्नत्वं प्राप्तं तदा संशयविपर्ययभिन्नज्ञानजनकत्वे सत्यननुवादत्वादिति हेतुशरीरं बोध्यमित्याह **यद्वेति** । **मूल इति** । मूले प्रमाण-विशेषानुक्त्या यत्तात्पर्याणां प्रमाणसिद्धत्वशङ्कनमात्रं तदाभासभूतमेव । तथैव हीति तत्समाधानमप्याभास इति तयोर्यदाभासत्वं तत्प्रमाणस्वरूपविशेषकथनेनापहस्तितं भवतीति योज्यम् । **अध्याहारेणेति** । न कल्पनागौरव-मित्यस्याध्याहारः ।

**विठ्ठ०**— प्रमाणसिद्धानीत्युक्तमेव दर्शयितुमाह **येन खल्विति** । अत्र यूपादिवाक्यं यूपादिपरं तत्प्रमिति-कारणत्वादित्यभिप्रेते तात्पर्यसाधकानुमाने स्वरूपासिद्धिपरिहाराय सामान्यसिद्धिपरिशेषावाह **यूपादिवाक्याच्चेति** । तत्कथमिदं यूपादिवाक्याज्जायमानज्ञानस्य प्रमात्वादनुवादरूपत्वाभावेन तत्सिद्धिसंपादकत्वाच्च । प्रामाणिककल्पना-भावान्न कल्पनागौरवादिकमिति भावः ।

**५७२ सु०— कल्पनागौरवं परिहृत्योपसंहरति तस्मादिति ।**

## अनु०— तस्मात्पदार्थे वाक्यार्थे तात्पर्यमुभयत्र च ॥

**सत्यज्ञानादिपदानां पदार्थे ब्रह्मणि वाक्यार्थे कार्ये च उपासनादाविति उभयत्र तात्पर्यं ग्राह्यम् । पदार्थ इत्यवान्तरवाक्यार्थोपलक्षणम् ।**

**परि०**— ननु पदार्थे ब्रह्मणि तात्पर्यं चेत्तर्हि सत्यब्रह्मादिपदानां पर्यायता सत्यादिपदव्यर्थता ब्रह्मणि सत्यत्वादिधर्मसंसर्गासिद्धिश्च स्यादित्यतो वा पृथगेवेत्युत्तरवाक्यसङ्गत्यर्थं वाऽऽह **पदार्थ इति** । सत्यं ब्रह्म ज्ञानं ब्रह्मेत्याद्यवान्तरवाक्यार्थे सत्यत्वाद्यन्वयरूपे इत्यर्थो ध्येय इति भावः ।

**यादु०**— संस्काराविष्टस्य विशिष्टसंस्थानस्य दारुणः पदमात्रतोऽसिद्धेराह **पदार्थ इत्यवान्तरेति** ।

**आनन्दः**— ननु पदार्थे महावाक्यार्थे तात्पर्यम् । वेदावान्तरवाक्यार्थे तदस्ति न वेत्यत्राह **पदार्थ इति** ।



**कं०रा०—** ननु सत्यत्वादिविशिष्टस्य ब्रह्मणः सत्यज्ञानादिवाक्यार्थतया कथं पदार्थ इत्युक्तिरित्यत आह **पदार्थ इति** । अवान्तरवाक्यार्थोपलक्षणमित्यनेन पदार्थशब्दस्यावान्तरवाक्यार्थेऽजहत्स्वार्थलक्षणामभिप्रैति । तेन ब्रह्मात्मादिपदार्थस्यावान्तरवाक्यार्थस्य सत्यत्वादिविशिष्टब्रह्मणश्च तात्पर्यविषयत्वमुक्तं भवतीति द्रष्टव्यम् । ननु काकेभ्यो दधि रक्ष्यतामित्यादौ काकादिपदानां शक्याशक्योपसङ्ग्राहकदध्युपघातकत्वादिरूपधर्मपुरस्कारेणैव श्वादिष्वजहत्स्वार्थलक्षणादर्शनात्प्रकृते च शक्याशक्ययोः पदार्थावान्तरवाक्ययोरुपसङ्ग्राहकधर्माभावेन पदार्थशब्दस्यावान्तरवाक्यार्थे कथमजहत्स्वार्थलक्षणेति चेन्मैवम् । अवान्तरवाक्यार्थस्यापि महावाक्यार्थरूपान्वयप्रतियोगितयाऽन्वयप्रतियोगित्वस्यैव पदार्थावान्तरवाक्यार्थसङ्ग्राहकस्य सत्त्वात् ।

**वा०चं०—** बाधकानामद्याप्यपरिहारादुपसंहारोऽनुपपन्न इत्यत आह **कल्पनेति** । तस्मादुपासनार्थं चेति पूर्ववाक्ये उपासनारूपकार्यशेषतया ब्रह्मणि प्रामाण्यस्योपक्रान्तत्वात्तदनुसारेणोपसंहारवाक्ये पदार्थवाक्यार्थशब्दौ तदर्थतया व्याख्याति **पदार्थे ब्रह्मणीत्यादिना** । उत्तरत्र महावाक्यावान्तरवाक्यविभागकथनात्तदनुसारेण महावाक्यैकदेशसङ्गत्या पदार्थपदमवान्तरवाक्योपलक्षणतया व्याख्याति **पदार्थे इतीति** ।

**वा०र०—** **बाधकानामिति** । सत्यज्ञानादिवाक्यानां स्वार्थे तात्पर्यानुपपत्त्यादिवक्ष्यमाणबाधकानामित्यर्थः । अशेषाणामिति पूरणीयम् । **अपरिहारात्** परिहाराकरणात् । **तदर्थतयेति** । उपासनारूपकार्यब्रह्मरूपोभयार्थतयेत्यर्थः । **विभागकथनादिति** । विभागमाश्रित्य वाक्यभेदरूपदूषणस्य व्यवस्थाकथनादित्यर्थः । महावाक्यैकदेशसङ्गत्येत्येतद्योजनीयमस्ति । पदार्थपदपदमवान्तरवाक्योपलक्षकतयेति पाठः । तत्रार्थपदघटिते लक्षणावचने गौरवमित्यतो मूलाभिप्रायः एवमेवेत्याशयेनाऽर्थपदं परित्यज्य पदपदमवान्तरवाक्येत्युक्तम् । पदार्थपदमिति पाठे तु अवान्तरवाक्यार्थेति पाठः ।

**॥ सत्यज्ञानादिवाक्यानामपि स्वार्थे तात्पर्यस्य उपपन्नत्वम् ॥**

**सत्यं ब्रह्म ज्ञानं ब्रह्म इति पृथगन्वयेन पृथक्तात्पर्याङ्गीकारात्—**

**५७३ सु०— ननु तत्रा(थाऽ)पि सत्यज्ञानादिवाक्यानां कथं स्वार्थे तात्पर्यम् । सत्यत्वे हि विधातव्ये ज्ञानत्वादीनामनुवादेन भाव्यम्; ज्ञानत्वे च विधातव्ये सत्यत्वादीनाम् । न चैतत्संभवति युगपदाकारद्वयविरोधात् । मैवम् । सत्यं ब्रह्म, ज्ञानं ब्रह्मेति पृथगन्वयेन पृथग्वाक्यत्वाङ्गीकारादित्याह पृथगेवेति ।**

## अनु०— पृथगेव च वाक्यत्वं पृथगन्वयतो भवेत् ॥

**बिन्दुः— युगपदाकारद्वयविरोधादिति ।** यथा वाजपेयाधिकरणपूर्वपक्षे वाजपेयशब्देन वाजं च तत् पेयं चेति व्युत्पत्त्या पानार्हान्नरूपगुण एव बोध्यते, तथाच वाजपेयेन यागं कुर्यात् यागेन स्वाराज्यं भावयेदिति वाक्यार्थे प्राप्ते सिद्धान्तितम् । गुणविधाने हि गुणं प्रति यागस्यानुवाद्यत्वं फलं प्रति च विधेयत्वमित्यादि विरुद्धत्रिकद्वयमापद्येत । विधेयत्वं उपादेयत्वं गुणत्वमिति एकत्रिकः । अनुवाद्यत्व-मुद्देश्यत्वं प्रधानत्वं चेत्यपरस्त्रिकः । न चैतदुभयं युगपत्संभवति । एकस्यां वचनव्यक्तावेकस्यैव यागस्य द्वितीयान्तपदेनोपस्थितौ यागे गुणविधानं स्यात् । तृतीयान्तपदेनोपस्थितौ च तद्विधानं स्यादित्यनुपपन्नं गुणविधानं तस्माद्वाजपेयशब्दो नामधेयं, तथाच सामानाधिकरण्येनैव यागेनान्वयः । न चैवं सोमेन यजेतेत्यादावपि सोमशब्दस्य गुणपरत्वं न स्यादिति वाच्यम् । तत्र मत्वर्थलक्षणया सोमवता यागेन फलं भावयेदिति वाक्यार्थमङ्गीकृत्य विशिष्टविधानाश्रयणात् । प्रकृते तु नामधेये नोपपत्तौ गौरवाद्विशिष्ट-विधिर्नाङ्गीक्रियते । उक्तं च भट्टवार्तिके उद्भिदधिकरणे । 'पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक्श्रुति । निर्णीयते निरूढं तु न स्वार्थादपनीयते' इति, प्रसिद्धौ निर्णीतार्थकैर्यागादिपदैरपृथक्श्रुतिसमानाधिकरण-यौगिकत्वादिना लोके अनिरूढार्थकत्वादनिर्णीतार्थकं यत् । उद्भिद्वाजपेयादिपदं तद्वाचकत्वेन निर्णीयते, यागादिनामधेयत्वेनैव स्वीक्रियते । यत्तु द्रव्यान्तरे निरूढं सोमादिपदं तत्प्रसिद्धार्थान्न प्रच्याव्यत इति वार्तिकश्लोकार्थः । तथा सत्यज्ञानादिवाक्येऽपि विरोधापत्त्या नोक्तविधेर्ब्रह्मरूपार्थे तात्पर्यमिति भावः । **पृथग्वाक्यत्वाङ्गीकारादिति** । नन्वेवमप्यावृत्तिलक्षणो वाक्यभेदः स्यात् । अरुणैकहायनीस्थलेऽपि मत्वर्थलक्षणामङ्गीकृत्य मीमांसकैः आरुण्यादिविशिष्टाया एकस्याः क्रयभावनाया विधेयत्वाङ्गीकारात् एकस्यैव क्रीणात्यादिक्रियापदैरन्वयोऽङ्गीकृत इत्यनुक्तोपालम्भ इव च प्रतिभातीत्यतः कथमेतदिति चेत् उच्यते । यथा मीमांसकैरारुण्यादिविशिष्टा क्रयभावनैका प्रतिपाद्यत इति ब्रूषे एवमेव सत्यत्वज्ञानत्वा-नन्तत्वविशिष्टमेकं ब्रह्मेह प्रतिपाद्यत इत्यत्र तात्पर्यात् । यदि तत्र सर्वेषामारुण्यादीनां क्रयसंबन्धार्थं क्रीणातिपदमावर्तयसि तर्हि मयाऽपि ब्रह्मपदमावर्तनीयं यदि च विनैवावृत्तिं विशिष्टविधिं मन्यसे तर्ह्यत्रापि विशिष्टब्रह्मबोधो विनैवावृत्तिमस्तु वचनव्यक्तिविशेषे नास्माकमाग्रहः । त्वदनुसृतमार्गेणैवास्माभिरनुगन्त शक्यत्वादित्यभिप्रेत्यैवोक्तं मूले ''अङ्गीकृतत्वादपि तैः'' इत्यादि । एतावत् परम् आवयोरवान्तरवैलक्षण्यं यत् क्रियारूपक्रयः अनुष्ठेयत्वाद्विधेयः ब्रह्मस्वरूपं तु सिद्धत्वेनानुष्ठेयं न भवतीति । अप्रतीतप्रत्यायनं तूभयत्राविशिष्टमेवेति समुदायतात्पर्यार्थः ।

**परि०**— यज्ज्ञानं ब्रह्म तत्सत्यं ब्रह्म तज्ज्ञानमित्यादिरूपेण यत्सत्यं तज्ज्ञानं तद्ब्रह्मेति वाऽन्वयं मत्वा शङ्कते **नन्वित्यादिना** ।





**यादु०— युगपदाकारद्वयेति** । एवं सत्येकस्यैकदैवोद्देश्यत्वविधेयत्वयोः प्राप्त्या तदुभयानुबन्धि-विरुद्धत्रिकद्वयमापद्येत । उद्देश्यत्वे हि सिद्धत्वमनुवाद्यत्वं प्रधानत्वं चेति त्रिकम् । विधेयत्वे च साध्यत्वमननुवाद्यत्वं गुणत्वं चेति त्रिकमापद्यते । इदं त्रिकद्वयमेकस्यैकदा विरुद्धमिति लोके प्रसिद्धमेवेति ।

**वं०प०— आकारद्वयेति** । एकस्यैवानुवाद्यत्वविधातव्यत्वरूपाकारद्वयेत्यर्थः ।

**आनन्दः— युगपदाकारेति** । विधेयत्वे असिद्धत्वं अनुवाद्यत्वे च सिद्धत्वं एवं चैकस्यैकदेव सिद्धत्व-मसिद्धत्वं च विरुद्धम् । अनुवाद्यत्वोद्देश्यत्वप्राधान्याख्यत्रिकस्य विधेयत्वोपादेयत्वगुणत्वरूपत्रिकस्यैकत्र विरुद्ध-त्वादिति भावः ।

**कं०रा०— सत्यत्वादीनामिति** । अनुवादेन भाव्यमित्यनुषञ्जनीयम् । **युगपदिति** । एकदाऽनुवाद्यत्व-विधेयत्वयोर्विरोधादित्यर्थः । अग्निहोत्रं जुहोतीत्युत्पत्तिवाक्यविधेयस्य होमस्य दध्ना जुहोतीत्यादिगुणविधान-दशायामनुवाद्यत्वदर्शनाद्युगपदित्युक्तम् । अत एव वाजपेयेन स्वाराज्यकामो यजेतेत्यत्र वाजपेयशब्दस्य गुण-विधित्वे यागानुवादेन गुणविधानाद्यागस्यानुवाद्यत्वं फलोद्देशेन तस्य विधेयतया विधेयत्वं चापततीति तस्य कर्मनामधेयत्वमाश्रितं वाजपेयाधिकरण इति भावः ।

**श्रीनिधि०— ज्ञानत्वादीनामनुवादत्वेन भाव्यमिति** । अन्यथा वाक्यभेदः स्यादिति भावः । **आकारद्वयेति** । विधेयत्वानुवाद्यत्वरूपेत्यर्थः ।

**वा०चं०— युगपदिति** । एकान्वयप्रयुक्तैकवाक्य इत्यर्थः । **आकारेति** । अनुवाद्यत्वविधेयत्वयो-र्विरुद्धत्रिकद्वयापादकत्वेनैकत्र विरुद्धत्वादित्यर्थः । **पृथगिति** । पृथगन्वयप्रयुक्तपृथग्वाक्यत्वस्वीकारादित्यर्थः ।

**स०व्र०— युगपदाकारद्वयविरोधादिति** । अनुवाद्यत्वं उद्देश्यत्वं, प्राधान्यं विधेयत्वं, उपादेयत्वं गुणत्वं चेति त्रिकद्वयमेकस्मिन् विरुद्धमिति भावः ।

**विट्ठ०— ननु** पदार्थत्वं तात्पर्यं चेद्ब्रह्मण एव सत्यज्ञानादिपदार्थत्वेन सत्यज्ञानादिपदानां पर्यायता स्यादित्यतो ब्रह्मस्वरूपं न सत्यादिपदार्थः । किन्तु ब्रह्मगतसत्यादिरूपाण्येवातो नावान्तरवाक्यत्वमिति भ्रान्त्या शङ्कते **नन्विति** । **युगपदिति** । एवं सति उद्देश्यविधेययोर्गुणप्रधानभावापन्नतया एकस्यैकदा गुणत्वं प्रधानत्वं च विरुद्धमापद्येतेति भावः ।

**चषकः— युगपदाकारद्वयेति** । एकस्यैवोद्देश्यविधेयभावोपगमे सिद्धत्वानुवाद्यत्वप्रधानत्वरूपोद्देश्यानु-बन्धित्रिकस्य साध्यत्वाननुवाद्यत्वगुणत्वरूपविधेयानुबन्धित्रिकस्य चान्योन्यविरुद्धस्यैकत्र समावेशः प्रसज्यत इत्याशयः ।





॥ अत्र वाक्यभेददूषणाभावः ॥

॥ अस्य वाक्यस्य अवान्तरवाक्यभेदत्वम् ॥

अवान्तरवाक्यभेदस्य दूषणत्वे क्वापि महावाक्यासंभवः—

**५७४ सु०— तर्हि वाक्यभेददोष इत्यत आह अवान्तरत्वादिति ।**

## अनु०— अवान्तरत्वाद्वाक्यानां वाक्यभेदो न दूषणम् ।

**एकवाक्यत्वे संभवति स्वतन्त्रवाक्यभेदकल्पनैव दोषो न त्ववान्तरवाक्यभेदः । तथात्वे क्वापि महावाक्यं न स्यात् ।**

**परि०— तथात्व इति** । अवान्तरवाक्यभेदाभाव इत्यर्थः । भिन्नावान्तरवाक्यसमुदायरूपत्वान्महावाक्यस्येति भावः ।

**यादु०— स्वतन्त्रवाक्यभेदेति** । महावाक्यभेदेत्यर्थः ।

**वं०प०— स्वतन्त्रवाक्यभेदेति** । महावाक्यभेदेत्यर्थः । **तथात्व इति** । अवान्तरवाक्यभेदस्य दोषत्वे तत्समुदायरूपमहावाक्यमपि दुष्टत्वान्नाङ्गीकार्यं स्यादित्यर्थः ।

**आनन्दः— तथात्व इति** । अवान्तरवाक्यभेदस्य दोषत्व इत्यर्थः ।

**कं०रा०— स्वतन्त्रेति** । महावाक्यभेदकल्पनेत्यर्थः । **तथात्व इति** । अवान्तरवाक्यभेदाभाव इत्यर्थः । भिन्नावान्तरवाक्यसमुदायरूपत्वान्महावाक्यस्येति भावः । अत्र कश्चिदाह । अवान्तरवाक्यार्थस्य न महावाक्यार्थेऽन्वयः, किन्तु महावाक्यस्थसर्वपदगोचरसमूहालम्बनस्मृतिरूपं करणं शुद्धतावत्पदार्थगोचरसमूहालम्बनस्मृतिरूपावान्तरव्यापारसहितमेकदैव महावाक्यस्थसर्वपदार्थान् अन्वितितया बोधयतीति । तन्न । दिनेदिने श्रुतेन शास्त्ररूपमहावाक्यैकदेशरूपावान्तरवाक्येन तदर्थबोधोदयस्यानुभवसिद्धतया तस्याः प्रक्रियायास्तद्विरुद्धत्वात् । किञ्चैवं सति प्रतिज्ञावाक्येन विशिष्टस्वार्थावबोधनात् कुत इत्याकाङ्क्षानुदयेन हेतुवाक्यस्यानन्वयः स्यात् । तथा च बधिरकलहः स्यात् । तस्मादवान्तरवाक्यार्थबोधपूर्वकत्वान्महावाक्यार्थबोधस्योक्तमुपपन्नमिति ।





॥ मीमांसकैरपि अरुणयैकहायन्या इत्यादौ अवान्तरवाक्यभेदेन व्याख्यानम् ॥

**महावाक्यभेदस्यैव दोषत्वम्—**

**५७५ सु०— किञ्च परेणाप्येवमङ्गीकृतमित्याह अङ्गीकृतत्वादिति ।**

**अनु०— अङ्गीकृतत्वादपि तैः पदानां च पृथक् पृथक् ।**
**क्रियापदेनान्वयस्य वाक्यभेदो हि दूषणम् ॥**

**'अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाती'त्यादौ तैर्मीमांसकैरपि पदानाम् अरुणयेत्यादीनां क्रीणातीत्यादिक्रियापदेनैकैक(श्येना)स्यान्वयो अङ्गीकृतः । अनुवाद-विधानयोर्युगपद्विरोधभयादरुणादीनां गवादिभिस्त्वाकाङ्क्षादिवशात्पार्ष्टिकान्वयोऽभ्युपगतः । ततश्च तेषामपि वाक्यभेदो दूषणं प्रसज्येत ॥ तत्रैतावदेव वक्तव्यम् । महावाक्यभेद एव दोषो नावान्तरवाक्यभेद इति । तदस्माकमपि समानमिति ।**

**परि०— एकैक(श्येना)स्यान्वयोऽङ्गीकृत इति** । तृतीयाध्यायस्याद्यपादे 'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यादि'त्यधिकरणे ज्योतिष्टोमप्रकरणगतमरुणयेत्यादिवाक्यमुदाहृत्य तथैव उक्तत्वादिति भावः । **अनुवादेति** । 'गवा सोमं क्रीणाती'ति क्रयसाधनत्वेन गोर्विधानं या गौः क्रय-साधनत्वेन विहिता तदनुवादेनारुणया गवेत्यारुण्यविधाने सति क्रयं प्रति गोस्साधनत्वेन विधानं आरुण्यादिविधिं प्रत्यनुवादविधानयोर्यौगपद्ये सति नामधेयपादीयवाजपेयाधिकरणोक्तदिशा विधेय-त्वानुवाद्यत्वयोरन्योन्यप्रतिद्वन्दीभूतत्वेन सहानवस्थितयोरेकत्र समावेशलक्षणविरोधः स्यात् । तथा विधेयत्वसमानाधिकरणस्य गुणत्वोपादेयत्वरूपधर्मद्वयस्यानुवाद्यत्वसमानाधिकरणत्वेन प्रधानत्वोद्देश्य-त्वरूपधर्मद्वयस्य वाऽन्योन्यप्रतिद्वन्द्वीभूतस्यैकत्र समावेशलक्षणविरोधः स्यादिति विरुद्धत्रिकद्वय-समावेशलक्षणविरोधभयादित्यर्थः । एवं तर्ह्यस्मिन्नेव वाक्ये खले कपोतन्यायेन तृतीयान्तपदचतु-ष्टयस्य प्रत्येकं युगपत्क्रीणातिनाऽन्वये वाक्यचतुष्टयं प्राप्नोतीत्यत आह **अरुणादीनामिति** । अरुणया पिङ्गाक्ष्येत्येवमादिरूपेण विशेषणविशेष्यभावापन्नतया आरुण्यादिविशिष्टगोरूपवस्तुना क्रीणातीत्येक-वाक्यता पश्चात्तनी अङ्गीकृतेत्यर्थः ।





**गु०दी०— पार्ष्ठिकान्वय** इत्यत्र ''गवा सोमं क्रीणाति'' इति साक्षात् क्रियान्वितगोपदेन अरुणया गवेत्यादिरूपेण यः पृष्ठतोऽन्वयः सः पार्ष्ठिकान्वय इत्युच्यते।

**यादु०— क्रीणातीत्यादिक्रियापदेनेति** । आदिपदेन सप्तदशप्राजापत्यान्पशूनालभेत चतुरश्चतुरो मुष्टीन्निर्वपतीत्याद्यमूर्तगुणवाचकवाक्यसंग्रहः। सप्तदशत्वस्य चतुष्ट्वस्य वाऽमूर्तत्वेन साक्षात्क्रियान्वयासंभवादित्याह **एकैकस्येवेति**। स्वार्थे कप्रत्ययः। एकैकश इत्यर्थः। अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीत्येव श्रुतिपाठः। तादृशं च द्रव्यं गोरूपमेव विवक्षितमिति दर्शयितुं गवेति विशेष्यपदं पठितमिति वदन्ति । वस्तुतस्तु गवेत्यादिपदमेतच्छ्रुतिगतमेव । अत एव तन्त्रचूडामण्यादिचिरन्तननिबन्धेष्वेवमेव पाठो दृश्यते । तत्रारुणशब्दो-ऽन्वयव्यतिरेकाभ्यां गुणवचनः । पिङ्गाक्ष्यैकहायनीशब्दौ यौगिकौ सामानाधिकरण्यादेकद्रव्यवचिनौ । ततश्च द्रव्य-गुणयोरुभयोः पृथक्तृतीयाश्रुत्या प्रत्येकं क्रयसाधनत्वं प्रथमं प्रतीयते । अन्यथा तृतीयाविभक्तिवैयर्थ्यापत्तेः । ननु नात्र गुणद्रव्ययोः प्रत्येकं क्रयसाधनत्वमुच्यते येनान्वयभेदेन वाक्यभेदापादने इदमुदाहरणं स्यात् । किन्त्वेव हायनी क्रयसाधनत्वेन विहितामनूद्य तस्यामारुण्यं विधीयते । विशेषणविभक्तेश्च विशेष्यानुसारित्वात्तृतीयोपपत्तिरित्यत आह **अनुवादविधानयोरिति** । यदा ह्येकहायनी क्रयसाधनत्वेन विहिता तदा तस्या विधेयत्वानुबन्धिगुणत्वादिकं प्राप्तम् । पुनस्तदैव तदुद्देशेनारुण्यविधाने उद्देश्यत्वानुबन्धिप्राधान्यादिकमपि तस्याः स्यात् । न चैतद्विरुद्धत्रिक-मेकदैकत्राङ्गीकर्तुमुचितम् । अत एतद्भयाद्द्रव्यगुणयोः प्रत्येकमेव क्रयेणान्वय इति तैरपि वक्तव्यमिति भावः । नन्वेवं द्रव्यगुणयोः प्रत्येकं क्रयान्वयेऽङ्गीकृते आरुण्यस्य गुणत्वेन साक्षात्क्रयसाधनत्वासंभवाद्बाधितार्थकं वाक्यमापद्येत । अतो हायनवदक्षिवच्चारुण्यमपि गोद्रव्यमवच्छिनत्ति । तच्च द्रव्यं साधनमिति तद्द्वाराऽऽरुण्यस्य क्रयान्वय एक एव प्रतीयत इत्यस्तु । ततश्च कथमिदमुक्तार्थोदाहरणं स्यादित्यत आह **अरुणादीनां गवादिभिरिति** । नात्रारुण्यस्य प्रथममेव द्रव्यावच्छेदकतया क्रयान्वयः प्रतीयत इति तेषामङ्गीकारः । किन्तु प्रथमं द्रव्यगुणयोः प्रत्येकं तृतीया-श्रुत्या क्रयसाधनतयाऽन्वयः प्रतीयते । श्रुतेर्बलवत्त्वेन शीघ्रोपस्थापकत्वात् न तु वाक्यबललभ्यो द्रव्यगुणयोः परस्परमन्वयोऽपि तदैव प्रतीयते श्रुत्यपेक्षया वाक्यस्य दुर्बलत्वात् । किन्तु प्रथमावगतारुण्यक्रयसाधनतानिर्वाहाय स पश्चादेव प्रतीयत इत्येव तेषामङ्गीकारः। अतो युक्तमिदमुदाहरणमित्यर्थः। यथोक्तम्। 'तृतीयया गुणस्यैव कारणत्वं क्रयं प्रति । विस्पष्टं गम्यते तच्च द्रव्यद्वारेण युज्यत' इति । अन्यत्राप्युक्तम् । अवगतक्रयशेषत्वनिर्वाहस्तु द्रव्यगुणयोः अन्योन्याकाङ्क्षाबलात् पार्ष्ठिकसंबन्धाङ्गीकारेणैव सन्निहितक्रयार्थिकहायन्यवच्छेदद्वाराऽस्त्विति । नन्वेवं द्रव्यगुणयोः पार्ष्ठिकान्वयस्वीकारेऽरुणादिशब्दानां गवादिद्रव्येषु लक्षणाप्रसङ्ग इत्यत उक्तम् **आकाङ्क्षादिवशादिति** । आदिपदात् योग्यतासत्तिपरिग्रहः अयं भावः आरुण्यादिकमवच्छेदकं हि अवच्छेद्यमपेक्षते । अवच्छेद्यं च गवादिकमित्यव-च्छेद्यावच्छेदकयोः परस्परमाकाङ्क्षावशाद्योग्यतादेश्चावच्छेद्यावच्छेदकभावेनैव द्रव्यगुणयोरन्वयो न तु सामानाधि-करण्येन येन लक्षणा स्यात् । गुणं हि साधनत्वेन विदधच्छब्दो यथाऽनेन शक्यते साधयितुं तथा कुर्यादित्याह स च द्रव्यपरिच्छेदमुखेन शक्नोति साधयितुं नान्यथा। तेनायमर्थो भवति। आरुण्याद्यवच्छिन्नेन द्रव्येण कुर्यादिति। अतो न कोऽपि दोष इति। नन्वस्त्वेवमारुण्यादीनां क्रयसाधनतया प्रथमं प्रत्येकमन्वयः श्रौतत्वात्तैरङ्गीकृत इति। तथाऽपि किं





प्रकृत इत्यत आह **ततश्चेति**। वाक्यभेदाख्यं दूषणं स्यादित्यर्थः। वाक्यभेदादिति पाठे वाक्यभेदप्राप्त्या तल्लक्षणं दूषणं स्यादित्यर्थः। अत्र कश्चिदाह भावनाभेदेनैव वाक्यभेदस्य दृष्टत्वात्। प्रकृते च वाक्यभावनाया एकत्वान्नावान्तरवाक्यभेदोऽत्राङ्गीकृत इति। तत्तुच्छम्। न हीदं भाट्टान्प्रत्यापाद्यते किन्तु प्राभाकरान्। तैरन्वये भिन्ने वाक्यं भिद्यत एवेति नियमस्याङ्गीकृतत्वात्। यथाहुः। अन्वितपदात्मकं हि वाक्यम्। तच्च कथं नान्वये भिन्ने भिद्येतेति। अतो न कोऽपि क्षुद्रोपद्रव इति।

**वं०प०— एकैकांशेनेति**। अरुणया क्रीणाति एकहायन्या क्रीणाति पिङ्गाक्ष्या क्रीणातीत्येवमेकैकांश इत्यर्थः। **पार्ष्ठिकान्वय इति**। आदौ तृतीयया बोधितं गुणरूपारुण्यस्य क्रयसाधनत्वं बाधितमिति पश्चादाकाङ्क्षादिवशाद्गवादिना क्रयेणान्वयः स्वीकृत इत्येवं गवादिभिरन्वयः पार्ष्ठिकः पृष्ठभागीयः पाश्चात्य इत्यर्थः। आदावरुणया क्रीणातीत्याद्यन्वयबोधोऽङ्गीकृतः पश्चादरुणया गवा क्रीणातीत्यन्वयबोधः स्वीकृत इति भावः।

**आनन्दः— एकैकश्येनेति**। एकैकश इति स्वरूपे प्रवृत्तिनिमित्ते भावप्रत्ययः। **अरुणादीनामिति**। अरुणया पिङ्गाक्ष्या गवैकहायन्या सोमं क्रीणातीत्यत्र द्रव्यगुणयोस्तृतीया श्रुत्या साधनत्वप्रतीतेः पृथक् पृथक् क्रियान्वयावश्यंभावादवच्छेद्यविधुरस्य गुणस्यामूर्तत्वात् क्रियानुपपत्तेर्द्रव्यगुणयोरवच्छेद्यावच्छेदकस्वाभाव्यायोग्यतया पश्चात्तनः परस्परेणान्वयः परेणाभ्युपगत इत्यर्थः। अतो विशेषत्वेनापि सिद्धार्थे तात्पर्यमावश्यकं तथाहि वेदवाक्यानि ज्योतिष्टोमादिकार्येषु योऽधिकारी तद्विशेषणीभूतं स्वर्गादिकं फलं "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदमि"ति सिद्धमेव प्रतिपादयन्ति। प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीत्यर्थवादेन रात्रिसंज्ञकानां कर्मणां सफलत्वं बोध्यते यो ब्राह्मणायावगुरेत् तं शतेन यातयेत् इति अवगुरणशतयातनासाध्यसाधनभावोऽवगम्यते। एवं वेदान्तवाक्येष्वप्युपासनालक्षणकार्याधिकारिफलत्वेन ब्रह्मप्राप्तिः श्रूयते। तत्र वाच्यतया प्रतीयमानं ब्रह्मस्वरूपं तद्विशेषणं सर्वं कार्योपयोगितयैव सिद्धं भवति। तदन्तर्गतमेव जगत्स्रष्टृत्वादिकं संहर्तृत्वमन्तरात्मत्वमित्याद्युक्तं, अनुक्तं च सर्वमिति न किञ्चिदनुपपन्नम्। एवं च सति मन्त्रार्थवादगता ह्यविरुद्धा अपूर्वार्थाश्च सर्वे विधिशेषतयैव सिद्धा भवन्ति। तथाहि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिभिर्देवताराधनभूता यागादयो विधीयन्ते। देवतोद्देशेन द्रव्यत्यागस्तु देवताराधनार्थ एव। न च विग्रहवती देवता नास्ति अचेतनस्य फलदातृत्वाभावस्य वक्ष्यमाणत्वात् विग्रहवत्या देवताया उपपादयिष्यमाणत्वाच्च अन्यथा विधिव्यतिरिक्तानामनन्तवाक्यानाम् अप्रामाण्यप्रसङ्गात्। तस्माद्देवताराधनभूतयागादेः साङ्गस्याराध्यदेवतायाश्च अदृष्टरूपान् गुणान् सहस्रशो वदन्नर्थवादः कर्मणि प्राशस्त्यमुत्पादयति तेषामसद्भावे प्राशस्त्यबुद्धिरेव न स्यादिति कर्मणि प्राशस्त्यबुध्यर्थं गुणसद्भावमेव बोधयन्तीति। अनयैव दिशा सर्वमन्त्रादिगता ह्यर्थाः सिद्धाः। न च प्रत्यक्षानुपलम्भबाधः तेषामस्मदाद्यक्षायोग्यत्वात्। अन्यथा तन्न्यायेन वेदार्थमात्रापवादः स्यात्। अपि च सिद्धे शब्दस्य प्रामाण्यानभ्युपगमे ब्राह्मणो न हन्तव्य इत्यादेर्निषेधवाक्यस्याप्रामाण्यं स्यात्। अकार्यत्वान्निषेधः स्यान्न हि कृत्युद्देश्यत्वं ब्राह्मणहननादेरस्ति तद्धेतुभूतमिष्टसाधनत्वं वा येन कार्यता स्यात्। कार्यत्वे न निवर्तकं स्यात्।





ननु यथा नेक्षेतोद्यन्तमादित्यमिति व्रतप्रकरणान्नञः प्रधानप्रत्ययान्वयपरित्यागेनाप्रधानप्रकृत्यन्वयः । तथात्रापि ब्राह्मणहननव्यतिरिक्तसंकल्पादिविधिरस्तु । मैवम् । तथाविधविनिगमकाभावात् । एवमेव सर्वत्राश्रयणे निषेधशास्त्राभावप्रसङ्गात् । अतः सिद्धार्थबोधकत्वं युक्तं सर्ववेदस्य । परमतात्पर्येण ब्रह्मावबोधकत्वं च । कर्मकाण्डस्य भगवच्छेषकर्मभूतकर्मप्रतिपादनद्वारा भगवत्येव तात्पर्यम् । पूर्ववाक्यैकवाक्यता चाभ्युपगन्तव्या । सोमेन यजेतेत्याद्येकवाक्यप्रतिपादितयज्ञानां तमेतमेव वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति परमात्मज्ञानाङ्गत्वमुक्तम् । एवं सति अर्थवादादेर्विधिवाक्येनैकवाक्यत्वे सिद्धे व्युत्पत्त्यभावे खलु स्वार्थावसानाभावात्प्राशस्त्यमात्रलक्षकत्वेन तदेकवाक्यता स्यात् । तथाच सत्यं ज्ञानमित्यत्र ब्रह्मपदेन सत्यादिपदानां पृथक् पृथक् समुदितानां चान्वयसिद्धिः । अवान्तरवाक्यानां बहुत्वेऽपि महावाक्यस्यैकवाक्यत्वान्न वाक्यभेदस्यावकाशः । अन्यथा अप्यधस्तात्समिधं धारयन्ननुद्रवेदित्येकवाक्यत्वेनोपरि हि देवेभ्यो धारयतीत्युपरि धारणविधिर्न स्यात् । वाक्यभेदप्रसङ्गात् । अतः कार्यानुप्रवेशोऽननुप्रवेशो वा सिद्धार्थे तात्पर्यमावश्यकमित्यनवद्यम् । **पार्ष्ठिकान्वय इति** । विशेषणविशेष्यभावेन योऽन्वयः स पश्चात्तन इत्यर्थः ।

**कं०रा०**— नन्वरुणादीनां गवादिभिरन्वयस्य मीमांसकैरङ्गीकृतत्वात्कथमुच्यते तेषां क्रियापदेनान्वयस्तैरङ्गीकृत इत्याशङ्कायामाह **अरुणादीनामिति** । आरुण्यादेर्गुणस्य परिच्छेद्याकाङ्क्षायां द्रव्यस्य च परिच्छेदाकाङ्क्षायां सति च योग्यतादौ तद्वशादरुणादीनां गवादिभिः पार्ष्णिकः पाश्चात्योऽन्वयोऽङ्गीकृतः । तेन प्रथमं त्वरुणयेत्यादीनां क्रीणातीति क्रियापदेनैवान्वयोऽङ्गीकर्तव्य इति नोक्तविरोध इति भावः । **तदस्माकमपि समानमिति** । एतच्चोपलक्षणम् । यद्यरुणयेत्यादावारुण्याद्यनेकगुणविशिष्टैकक्रियाविधानाद्वाक्यभेद इत्युच्यते । तदा 'सत्यं ज्ञानमनन्तम्' इत्यादावपि सत्यत्वाद्यनेकधर्मविशिष्टैकब्रह्मविधानाद्वाक्यभेद इति समानमित्यपि द्रष्टव्यम् ।

**वा०चं०**— न केवलमस्माभिरेव युगपदाकारद्वयविरोधपरिहाराय वाक्यभेदप्रयोजकमन्वयपार्थक्यमङ्गीक्रियतेऽपि तु परेणापि तदङ्गीकृतमित्याह **किञ्चेति** । **एवमिति** । युगपदाकारद्वयविरोधपरिहारकवाक्यभेदप्रयोजकमन्वयपार्थक्यमित्यर्थः ।

**अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोममित्यादि** । अत्र प्रसिद्धशाखायामरुणयैकहायन्या पिङ्गाक्ष्या क्रीणातीत्येवं पाठेऽप्यत्रैवमुदाहरणं शाखान्तराभिप्रायेण प्रकरणलब्धार्थानुवादाभिप्रायेण वा । यथा शाबरभाष्यादावरुणयैकहायन्या पिङ्गाक्ष्येत्युदाहरणम् । अत एव तन्त्रचूडामणौ सुधायामिव पाठ उदाहृत इति द्रष्टव्यम् । क्रीणातीत्यादावित्यादिपदेन सप्तदशप्राजापत्यान्पशूनालभेतेत्यादेर्जातियौगिकशब्दसमभिव्याहृतामूर्तरूपरसगन्धस्पर्शसङ्ख्यापरिमाणार्थकशब्दोपेतवाक्यसंग्रहः । **अरुणयेत्यादीनामिति** । अत्रादिपदेन स्वसमभिव्याहृतैकहायन्यादिपदानामादिपदसंगृहीतवाक्यस्थकारकपदानां च संग्रहः । क्रीणातीत्यादिपदेनालभेतेत्यादिक्रियापदसंग्रहः । एकैकश्येनेति स्वार्थे भावप्रत्ययः । **अन्वयोऽङ्गीकृत इति** । अरुणप्रातिपदिकपरतृतीयाश्रुतेः क्रियाकरणत्वरूपसंबन्धाभिधायकत्वादारुण्यैकहायनीद्रव्यसंबन्धस्य च वाक्यार्थत्वाच्छ्रुतेस्तदपेक्षया बलवत्त्वाद्युक्तस्त-





त्संबन्धाङ्गीकार इति युक्त्या आरुण्यक्रियान्वयस्य विगानाभावेनैकहायनीक्रियान्वयस्य च तेन स्वीकृतत्वादिति भावः ।

नन्वारुण्यस्यामूर्तत्वेन श्रुतिप्राप्तस्यापि क्रयकरणत्वस्यानुपपत्तेः । आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेन श्रुतिबाधे वाक्यीयस्यापि गुणद्रव्यान्वयस्यैव स्वीकर्तव्यतया कथमारुण्यक्रियान्वयस्वीकारस्तेषामित्यत एकहायनीकरणकक्रयस्य विधेयत्वेन तच्छरीरप्रविष्टैकहायन्यास्तस्मिन्नेव वाक्ये गुणं प्रत्यनुवाद्यत्वस्य विरुद्धत्रिकद्वयापादकत्वेनानुपपन्नतया वाक्यीयगुणद्रव्यान्वयास्वीकारेण श्रुतिप्राप्तक्रियाकारकान्वयस्वीकार एव तेषामुचित इत्यभिप्रायेणाह **अनुवादेति** । नन्वरुणगुणपरिच्छिन्नैकहायनीद्रव्येण कुर्यादित्येकान्वयप्रयुक्तैकवाक्यत्वस्य तैरङ्गीकृतत्वात्कथं पृथगन्वयस्वीकारस्तेषामित्यतोऽरुणया क्रीणातीति साधनत्वेन गुणविधायकशब्देन यथाऽनेन साधयितुं शक्यते तथा कुर्यादिति सामान्यतो गुणस्य क्रयसाधनत्वेऽभिहितेऽमूर्तत्वेन साक्षात्तस्य क्रयसाधनत्वाशक्तेर्द्रव्यपरिच्छेदमुखेन क्रयसाधनत्वसंभवात्किं तत्परिच्छेद्यमिति परिच्छेदकस्य गुणस्य परिच्छेद्यद्रव्याकाङ्क्षायामेकहायन्या क्रीणातीति शब्देन चैकहायन्याः क्रयसाधनत्वे बोधितेऽपरिच्छिन्नद्रव्यस्य क्रयसाधनत्वानुपपत्त्या परिच्छेद्यद्रव्यस्य परिच्छेदकगुणाकाङ्क्षायां समानवाक्योपात्तद्रव्यगुणयोः परस्परान्वययोग्यत्वाच्च पार्ष्ठिको विशिष्टान्वय इत्येकान्वयप्रयुक्तैकान्वयत्वस्य पृथगन्वयस्वीकारोपजीव्यकत्वान्न तद्विघातकत्वमित्यभिप्रेत्याह **अरुणादीनामिति** । आकाङ्क्षादीत्यादिपदेन योग्यतासन्निध्योः परिग्रहः ।

ननु मीमांसकैरन्वयभेदाङ्गीकारेऽपि क्रीणातिपदार्थभूतक्रयभावनाया एकत्वेन पदैकवाक्यताया एव स्वीकाराद्वाक्यभेदस्य च भावनाभेदनिबन्धनत्वान्न वाक्यभेदापत्तिरित्यतः क्रियाभेदस्यापि क्रियान्वयभेदद्वारैव वाक्यभेदप्रयोजकत्वात्क्रियाभेदाभावेऽपि तदन्वयभेदे वाक्यभेदोऽङ्गीकर्तव्य एव । अन्यथा युगपदाकारद्वयविरोधापरिहारादित्याशयेनाह **ततश्चेति** । एवं च यत्कस्यचिन्मतमित्यन्यथानुवाद इति वल्गनं तदेवान्यथावादरूपमिति बोध्यम् । तदीयान्वयभेदाभ्युपगमस्यानूदितत्वात्तस्य च तद्ग्रन्थपर्यालोचनायां स्पष्टत्वात् । वाक्यभेदस्य चापादितत्वात्तस्य चोक्तरीत्या पूर्वोत्तरपर्यालोचनायां सुशकत्वात् । अत एवान्वयोऽभ्युपगत इति वाक्यभेदः प्रसज्येतेति चोक्तम् । एतेनैव चैतद्दूषणपरिजिहीर्षयाऽभ्युपगतमित्येतदभ्युपगमनीयमिति व्याख्याय विशिष्टविधिपक्षेऽपि भामत्युक्तरीत्या वाक्यभेदः स्यादेवेति केषाञ्चित्समाधानं निरस्तम् । अन्वयभेदाभ्युपगमस्य तदीयस्य स्पष्टत्वेनाभ्युपगमनीयमित्यन्यथाकरणे निमित्ताभावात् । विशिष्टविधेरेकवाक्यत्वमङ्गीकृत्यैवान्वयभेदेनावान्तरवाक्ययोर्भेदस्याकरे स्पष्टप्रतिभासाच्चेत्यास्तां तावत् ।

**वा०र०— एकान्वयेति** । यत्रैकान्वयस्तत्रैकवाक्यत्वं यत्र पृथक्पृथगन्वयस्तत्र भिन्नवाक्यत्वमिति स्थितत्वादेकान्वयप्रयुक्तैकवाक्यत्वोपेत इत्यर्थः । **अनुवाद्यत्वविधेयत्वयोरिति** । विरुद्धं त्रिकद्वयं च नैतदुभयव्यतिरिक्तम् । अपि तु । सोमेन यागो यागेन स्वर्ग इत्यादौ यदा यागोऽनुवाद्यस्तदा तस्यानुवादेन सोमविधानात् सोमे





विधेयत्वम् । तथा यागमुद्दिश्य सोमोपादानाद्यागस्योद्देश्यत्वं सोमस्य चोपादेयत्वम् । तथा यागस्य फलतया प्राधान्यं सोमस्य च तदर्थतया गुणत्वमेवं यागेन स्वर्ग इत्युक्तौ पूर्वत्रानुवाद्यत्वोद्देश्यत्वप्राधान्यानीव विधेयत्वोपादेयत्वगुणत्वानां यागे प्राप्त्या विरुद्धत्रिकमिति सिद्धत्वात् सत्यत्वज्ञानत्वादिष्वपि यदैकस्यानुवाद्यत्वं तदा तस्यानुवाद्यत्वोद्देश्यत्वप्राधान्यरूपं त्रिकं प्राप्तम् । यदा तु तस्यैव विधेयत्वं प्राप्तं तदनुबन्धिभूतोपादेयत्वगुणत्वयोरपि प्राप्त्या तत्त्रिकमित्येव तदुभयान्तर्भविनैवेति ज्ञेयम् । यत्त्वन्यथाख्यातौ सिद्धत्वमनुवाद्यत्वं प्रधानत्वमित्येतत्त्रिकमुद्देश्यत्वे मान्योस्ति । विधेयत्वे च साध्यत्वमनुवाद्यत्वं गुणत्वं चेति त्रिकं प्राप्नोतीत्युद्देश्यत्वविधेयत्वपरित्यागेन सिद्धत्वादिकं त्रिकं वर्णितम् । तच्छिष्यबन्धनमिति स्पष्टम् । अनुवाद्यत्वविपरीततया अननुवाद्यत्वस्योक्तिवत् सिद्धत्वप्रधानत्वं प्रतियोगित्वेनासिद्धत्वमप्राधान्यं चेत्येवोक्तिसंभवे तत्र प्रकारान्तरोक्तिवैयर्थ्यं च । मीमांसकसंमतप्रकारस्य न्यायामृतटीकादावुपपादितस्य परित्यागेन स्वतन्त्रकल्पनायोगाच्चेत्यादि । **अत्रेति** । अरुणयेति वाक्यविषय इत्यर्थः । **अत्रेति** । एतद्ग्रन्थ इत्यर्थः । एवमुदाहरणम् । एकहायनीगोपदोपेतश्रुतिपाठोदाहरणमित्यर्थः । स्वयमुक्तो यो ग्रन्थकाराशयस्तदाशयेन वाक्योदाहरणं ग्रन्थकारान्तरस्य दृष्टं चेति नाचातुर्यापादकमित्याह **यथा शाबरेति** । तृतीयाध्यायप्रथमपादे 'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यादि'ति सूत्रे अरुणया पिङ्गाक्ष्यैकहायन्या गवा (?) सोमं क्रीणातीति भाष्ये उदाहरणादित्यर्थः । उपलक्षणं चेदम् । तृतीयस्य तृतीये सन्तर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यादित्यधिकरणे क्रयणवद्विकल्पिष्येते । यथा हि आरुण्येन क्रीणाति वाससा क्रीणाति गवा क्रीणातीत्येवमादीनां विकल्प एवं विकल्पो भविष्यतीत्युक्तं भाष्ये । तेन गवेत्यनेनापि युक्तस्य पाठस्य भाष्यकारसंमतिसिद्धिः । प्रत्येकान्वयस्फुटीकरणायैव वाससा क्रीणातीति मध्ये वाससा व्यवधानं भाष्ये कृतमिति न वाससेत्यनेन गवेत्यस्य साम्यं मन्तव्यमित्यपि द्रष्टव्यम् । अर्थैकत्वे द्रव्यगुणयोरित्येतदधिकरण एव तन्त्रचूडामणावरुणयेवेत्यादि मूलानुसारी श्रुतिपाठोऽस्ति । तमपि संवादयति **अत एव तन्त्रेति** । शास्त्रदीपिकातट्टीकादौ चोक्तपाठावगमः । कल्पतर्वादौ चोक्तपाठविचारोऽस्ति वैशेषिकसूत्रोपकारे षष्ठाध्याये - यदिष्टरूपरसगन्धस्पर्शप्रोक्षितमभ्युक्षितं च तच्छुचीति सूत्रव्याख्यावसरे तत्र रूपमरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणातीत्येवोदाहृतं साधर्म्यनिरूपणस्थलीयगङ्गापुर्यामपि जात्यादीनां तु न साक्षाद्धर्मकर्तृत्वमित्येतत्प्रतिज्ञातोपपादनावसरेऽरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणातीति वाक्यमुदाहृतमिति च द्रष्टव्यम् । ..........अनुसारेणाह **जातियौगिकशब्देति** । एतत्स्थलमुदाहरणविशेषादिना निरूपणीयमस्ति । ........... **तदपेक्षयेति** । वाक्यापेक्षयेत्यर्थः । क्रियान्वयस्येत्यस्य तेन स्वीकृतत्वादित्युत्तरेण संबन्धः । **विगानाभावेनेति** । एकहायनीक्रियान्वये विवादाभावेनेत्यर्थः । इतःपरं शब्दप्रामाण्यनिरूपणपर्यन्तं व्याकर्तव्यमस्ति ।

**स०व्र०— एकैकश्येनेति** । एकैकश इति स्वरूपे प्रकृतिनिमित्ते भावप्रत्ययः । अत्रारुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीति श्रुतिपाठः । तत्रारुणाशब्दो गुणवचनः । पिङ्गाक्ष्यैकहायनीशब्दौ यौगिकौ सामानाधिकरण्यादेकद्रव्यवचनौ तच्च द्रव्यं किमित्यपेक्षायां गोरूपमेव विवक्षितमिति दर्शयितुं विशेष्यपदमध्याहृत्य पठितमिति द्रष्टव्यम् । अत्रारुणयेत्यादीनां प्रत्येकं क्रयसाधनत्वं प्रतीयते । प्रत्येकं तृतीया श्रवणात् । अन्यथा





तद्वैयर्थ्यापत्तेरिति भावः । ननु नात्र प्रत्येकं क्रयसाधनत्वमुच्यते एतद्वाक्यात् । किन्त्वेकहायनीं क्रयसाधनत्वेन तृतीयया विहितामनूद्य तस्यामारुण्यादिकं पदद्वयेन विधीयते । विशेषणयोश्च विशेष्यानुसारित्वात् तृतीयोपपत्तिरित्यत आह **अनुवादविधानयोरिति** । अयमर्थः । अत्र हि यदैकहायनीक्रयसाधनत्वेन विहिता । तदा तस्या विधेयत्वानुबन्धिगुणत्वादिकं प्राप्तम् । पुनस्तदैव तदनुवादेनारुण्यादिविधानेऽनुवाद्यत्वानुबन्धिप्राधान्यादिकमपि तस्याः स्यात् । न चैतद्युक्तम् । एकस्मिन् युगपद्विरुद्धधर्मसमावेशायोगात् । क्रमाङ्गीकारे चावृत्तिप्रसङ्गः अत एतद्द्वयान्न विशेषणविशेष्यभावेन अन्वयः । किन्तु प्रत्येकमेवेति वक्तव्यमिति । ननु न प्रत्येकमन्वयोऽस्माभिरभ्युपगतः । किन्तु यद्यप्येवं प्रत्येकमन्वयः श्रुत्या प्रतीयते । तथापि नासावव्यवधानेन युक्तः आरुण्यस्य गुणस्यामूर्तत्वेन साक्षात्क्रयसाधनत्वानुपपत्तेः । न च श्रुत्या प्रतीतं हातुं युक्तम् । अतो हायनवदारुण्यादिकमपि गोद्रव्यमवच्छिनत्ति । तच्च द्रव्यं साधनमिति तद् द्वारा आरुण्यादेः क्रयेणान्वयोऽङ्गीकृतोऽतः कथं वाक्यभेद इत्यत आह **आरुण्यादीनां गवादिभिरिति** । **आकाङ्क्षादिवशादिति** । तदन्यथानुपपत्त्येत्यर्थः । आदिपदाद्योग्यतापरिग्रहः । आरुण्यादिकं ह्यवच्छेदकमवच्छेद्यमपेक्षते । अवच्छेद्यं च गवादिकमारुण्यमवच्छेदकमित्यवच्छेद्यावच्छेदकतया परस्परमाकाङ्क्षितत्वं द्रष्टव्यम् । **पार्ष्ठिकान्वय इति** । पश्चादर्थापत्तिबलादेव द्रव्यावच्छेदकत्वेनान्वयः प्रतीयते न स शाब्दस्तथात्वे युगपदाकारद्वयविरोधात् । शाब्दस्तु प्रत्येकान्वयः । स एव चास्माभिर्निदर्शित इत्यर्थः । अयमत्राभिप्रायः । सत्यमेवं भवदभ्युपगम इति । तथापि पूर्वमारुण्यादीनां श्रुत्या प्रत्येकं यत्क्रयसाधनत्वं प्रतीतं तन्न परित्यक्तम् । किन्त्वव्यवधानमावश्यकद्रव्यमपहाय । तदेव प्रत्येकं क्रयसाधनत्वमुपपादितम् । अतः प्रत्येकमन्वयो नाङ्गीकृत इति रिक्तं वचः । यथाहुः भवदीयाः । 'तृतीयया गुणस्यैव करणत्वं क्रयं प्रति । विस्पष्टं गम्यते तच्च द्रव्यद्वारेण युज्यत' इति । अत एव श्रौतप्रत्येकान्वयंस्याङ्गीकृतत्वाभिप्रायेणैकैकश्येनान्वयोऽङ्गीकृत इति उक्तमिति न कोऽपि क्षुद्रोपद्रव इति ।

केषाञ्चित्समाधानप्रकारोऽयम् । **एकैकस्यैवेति** । अरुणया क्रीणाति एकहायन्या क्रीणाति इत्येवमेकैकस्येत्यर्थः । ननु एकहायन्या क्रीणातीति क्रयसाधनत्वेन विहितैकहायन्यनुवादेन तत्र अरुणयेत्यारुण्यविधानोपपत्तौ अरुणया क्रीणातीत्यारुण्यस्य क्रीणातिनान्वयाऽभ्युपगमे किं मानमित्यत आह **अनुवादविधानयोरिति** । एकहायन्या क्रयसाधनत्वस्य अप्राप्तत्वे तत्क्रयसाधनत्वेन एकहायन्या विधानत्वात् एकहायनीमेवानूद्य आरुण्यविधाने एकहायन्या अनुवाद्यत्वस्यापि अङ्गीकर्तव्यत्वात् एकस्मिन्नुच्चारणे एकस्यैव अनुवाद्यत्वविधेयत्वयोश्च विरुद्धत्रिकद्वयापत्त्या असंभवादरुणयेत्यस्य क्रीणातिनैवान्वय इति भावः । युगपदित्यस्य एकस्मिन्नेवोच्चारण इत्यर्थः । **अरुणादीनामिति** । अरुणया पिङ्गाक्ष्या गवैकहायन्या सोमं क्रीणातीत्यत्र द्रव्यगुणयोः तृतीयाश्रुत्या साधनत्वप्रतीतेः तथा अपरिच्छिन्नस्य द्रव्यस्य क्रयसाधकत्वानुपपत्तेः । द्रव्यगुणयोरवच्छेद्यावच्छेदकत्वस्वाभाव्यात् । योग्यतया पश्चात्तनः आरुण्यगुणपरिच्छिन्नेन द्रव्येण कुर्यादित्येवंरूपः परस्परेणान्वयः परेणाभ्युपगत इत्यर्थः । नन्वत्र क्रयभावनाया विधेयत्वेन अप्राप्ते तु विधीयेरन् बहवोऽप्येकयत्नत इत्युक्तरीत्या आरुण्यविशिष्टक्रयभावनारूपक्रियैक्येन क्रियाभेदनिबन्धनवाक्यभेदाप्राप्तेः तन्मतमित्यन्यथानुवादोऽयमिति चेन्न । अरुणया क्रीणातीत्यविशिष्टस्य क्रय-





भावनारूपक्रियान्वयाप्रतीतौ अवच्छेद्यत्वेन द्रव्यस्य अवच्छेदकत्वेन च गुणस्य आकाङ्क्षाया एव अभावेन तन्निबन्धनस्य विशिष्टक्रयभावनान्वयबोधस्यैव असंभवेन तत्प्रयोजकत्वेन अविशिष्टक्रियान्वयप्रतीतेरपि अवश्य-मङ्गीकर्तव्यत्वात् । अविशिष्टक्रियान्वयस्यैव च अवान्तरवाक्यार्थत्वादवान्तरवाक्यभेदोपपत्तेः आरुण्यविशिष्ट-क्रयभावनारूपक्रियैक्येन महावाक्यभेदस्यैव परिहारात् ।

**एकैकश्येनेति** । एकैकश इति स्वरूपे प्रवृत्तिनिमित्ते भावप्रत्ययः । **अरुणादीनामिति** । अरुणया पिङ्गाक्ष्या गवैकहायन्या सोमं क्रीणातीत्यत्र द्रव्यगुणयोस्तृतीयाश्रुत्या साधनत्वप्रतीतेः पृथक्पृथक् क्रियान्वयावश्यंभावात् । अवच्छेद्यविधुरस्य गुणस्यामूर्तत्वात्क्रियान्वयानुपपत्तेर्द्रव्यगुणयोरवच्छेद्यावच्छेदकस्वाभाव्याद्योग्यतया पश्चात्तनः परस्परेणान्वयः परेणाभ्युपगत इत्यर्थः ।

**विठ्ठ०— किञ्चेत्येतद्भाष्यगतचशब्दार्थः । मीमांसकैरिति** । अरुणया क्रीणाति पिङ्गाक्ष्या क्रीणातीति कारकपदानां प्रत्येकश एवान्वयाङ्गीकृत इत्यर्थः । कुतोऽङ्गीकृत इत्यत आह **अनुवादेति** । यथास्थितान्वयाङ्गीकारे आरुण्यादीनां प्रागसिद्धत्वेन सोमविक्रयसाधनगोविशेषणतयानुवादानुपपत्तेररुणात्वादेरपि विधेयत्वेन गौररुणा या अरुणा सैव पिङ्गाक्षी या च पिङ्गाक्षी सैवेकहायनीतया सोमं क्रीणातीति पर्यवसानं स्यात् । तथाच यदा अरुणायाः पिङ्गाक्ष्याः पृथग्विधेयत्वं तदा तदनुबन्धिगुणत्वादिकं प्राप्तं पुनस्तस्यैवोद्देशे तदनुबन्धिप्राधान्यादिकमपि स्यात् । तथाचैकदैकत्रैव गुणत्वमसिद्धत्वं विधेयत्वमिति त्रयं, प्रधानत्वं सिद्धत्वमुद्देश्यत्वं चेति त्रयं च परस्परविरुद्धं स्यादित्यर्थः । नन्वेवं प्रत्येकं क्रियान्वयेऽङ्गीकृते वाक्यचतुष्टयमापद्येतेत्यत आह **अरुणादीनामिति** । अरुणया पिङ्गाक्ष्येवमादिरूपेणारुणादिपदानां विशेषणतया गवादीनां विशेष्यतया चाकाङ्क्षासन्निधियोग्यतावशात्पश्चा-त्ततोऽन्वयस्तैरङ्गीक्रियत इति भावः । अथवा प्रत्येकमन्वयस्तैरङ्गीकृत इति कथमुच्यते । अरुणात्वस्य गुणत्वेन साक्षात्क्रयसाधनत्वानुपपत्तेरित्यत आह **अरुणादीनामिति** । आकाङ्क्षादीत्यादिपदेन योग्यतासङ्ग्रहः । आरुण्यादीनां गुणत्वेन गुणानां च गुणिसाकाङ्क्षत्वाद्गवादीनां च गुणित्वयोग्यतया तैर्गवादिभिः पार्ष्ठिकान्वयः पश्चादर्थापत्तिबलेन द्रव्यावच्छेदकतयान्वयस्तैरभ्युपगत इत्यर्थः । न चासौ शब्दः, युगपदाकारद्वयविरोधात् शब्दस्य प्रत्येकमन्वय एव । स एवास्माभिर्दृष्टान्तीकृत इति ज्ञेयम् । उक्तं च परेण 'तृतीयया गुणस्यैव कारणत्वं क्रियां प्रति । विस्पष्टं गम्यते तच्च द्रव्यद्वारेण युज्यत' इति ।

**चषकः— एकैकश्येन** एकैकशः । गोपदविनिर्मुक्त एव श्रुतिपाठ इति शाखान्तराभिप्रायेण विशेष्य-वाचकपदपूरणेन वाऽयं निर्देशस्तन्त्रचूडामण्यादिचिरन्तननिबन्धेषु तादृगानुपूर्वीदर्शनादिति स्थितम् । एको गुणवचनोऽवयववृत्त्या द्रव्यवचनादाविति तत्तत्प्रकृतिकतृतीया श्रुतिभिः प्रत्येकं धातूपस्थाप्यान्वितकारणता-प्रत्यापनात् । ननु न तुल्यकक्षापन्नतृतीयात्रिकस्यापि धात्वर्थान्वितकरणत्वप्रत्यायकत्वमूरीक्रियते किन्त्वेक-हायनीपदप्रकृतिकाया एव । शिष्टद्विकस्य विशेषणवाचकपदोत्तरविभक्तित्वमेवोपेयत इति तदानर्थक्येऽपि न क्षतिरिति नेदं वाक्यभेदोदाहरणं सङ्गच्छत इत्यत आह **अनुवादविधानयोरिति** । क्रयसाधनत्वेनैकहायन्याः विधानदशायां





विधेयत्वानुबन्धिगुणत्वादित्रिकं प्रासाङ्क्षीत् । पुनस्तामुद्दिश्य तस्य विधाने उद्देश्यत्वानुबन्धिप्राधान्यादित्रिकमिति विरुद्धत्रिकद्वयसमावेशापत्त्या निखिलानां कारकतृतीयात्वमुपेत्य क्रमेण दर्शितदिशाऽन्वयबोधस्य तैरप्युपेतव्यत्वादिति भावः । **अरुणादीनामिति** । आरुण्यादीनाममूर्तत्वेन साक्षात्क्रियायां करणत्वेनान्वयस्य बाधिततया द्रव्यपरिच्छेदकतयैवानुपपत्तिप्रतिसन्धाननिबन्धनो विशिष्टवैशिष्ट्यावगाह्यन्वयबोध उदीच्यस्तैरुपगत इति भावः ।

**प्रदीपः**— **एकैकश्येनेति** । एकैकश इति स्वरूपे प्रवृत्तिनिमित्ते भावप्रत्ययः । **अरुणादीनामिति** । अरुणया पिङ्गाक्ष्या गवा एकहायन्या सोमं क्रीणातीत्यत्र द्रव्यगुणयोः तृतीयाश्रुत्या साधनत्वप्रतीतेः पृथक् पृथक् क्रियान्वयावश्यंभावात् । अवच्छेद्यविधुरस्य गुणस्यामूर्तत्वात् क्रियान्वयानुपपत्तेर्द्रव्यगुणयोरवच्छेद्यावच्छेदकस्वाभाव्याद्योग्यतया पश्चात्तनः परस्परेणान्वयः परेणाभ्युपगत इत्यर्थः । अतो विधिशेषत्वेनापि सिद्धार्थे तात्पर्यमावश्यकम् । तथाहि वेदवाक्यानि ज्योतिष्टोमादिकार्येषु योऽधिकारी तद्विशेषणीभूतं स्वर्गादिकम् । "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च सुखं स्वर्गास्पदं विदुः ॥" इति सिद्धमेव प्रतिपादयति । 'प्रतितिष्ठन्ति ह वा य एता रात्रिरुपयन्ती'त्यर्थवादेन रात्रिसंज्ञकानां कर्मणां प्रतिष्ठाफलत्वं बोध्यते यो ब्राह्मणायावगुरेत् तं शतेन यातयेत् इति अवगुरणशतयातनासाध्यसाधनभावोऽवगम्यते । एवं वेदान्तवाक्येष्वप्युपासनालक्षणकार्याधिकारिफलत्वेन ब्रह्मप्राप्तिः श्रूयते । अत्र प्राप्यतया प्रतीयमानं ब्रह्मस्वरूपं तद्विशेषणम् । सर्वं कार्योपयोगितयैव सिद्धं भवति । तदन्तर्गतमेव जगत्स्रष्टृत्वादिकं संहर्तृत्वं आधारत्वमन्तरात्मत्वमित्यादि । उक्तमनुक्तं च सर्वमिति न किञ्चिदनुपपन्नम् । एवं च सति मन्त्रार्थवादगता ह्यविरुद्धा अपूर्वार्थाश्च सर्वे विधिशेषतयैव सिद्धा भवन्ति । तथाहि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिभिर्देवताराधनभूता यागादयो विधीयन्ते । देवतोद्देशेन द्रव्यत्यागस्तु देवताराधनार्थ एव । न च विग्रहवती देवता नास्ति अचेतनस्य फलदातृत्वाभावस्य वक्ष्यमाणत्वाद्विग्रहवत्या देवताया उपपादयिष्यमाणत्वाच्च । अन्यथा विधिव्यतिरिक्तानामनन्तवाक्यानां अप्रामाण्यप्रसङ्गात् । तस्माद्देवताराधनभूतयागादेः साङ्गाराध्यदेवतायाश्चादृष्टरूपान् गुणान् सहस्रशो वदन्नर्थवादः कर्मणि प्राशस्त्यबुद्धिमुत्पादयति । तेषामसद्भावे प्राशस्त्यबुद्धिरेव न स्यादिति कर्मणि प्राशस्त्यबुद्ध्यर्थं गुणसद्भावमेव बोधयन्तीति । अनयैव दिशा सर्वमन्त्रादिगता ह्यर्थाः सिद्धाः । न च प्रत्यक्षानुपलम्भबाधः तेषामस्मदाद्यक्षायोग्यत्वात् । अन्यथा तन्न्यायेन वेदार्थमात्रापवादः स्यात् । अपि च सिद्धे शब्दस्य प्रामाण्यानभ्युपगमे ब्राह्मणो न हन्तव्य इत्यादेः निषेधवाक्यस्याप्रामाण्यं स्यात् । अकार्यत्वान्निषेधः स्यान्न हि कृत्युद्देश्यत्वं ब्राह्मणहननादेरस्ति तद्धेतुभूतमिष्टसाधनत्वं वा येन कार्यता स्यात् । कार्यत्वे न निवर्तकं स्यात् । ननु यथा नेक्षेतोद्यन्तमादित्यमिति व्रतप्रकरणान्नञः प्रधानप्रत्ययान्वयपरित्यागेन अप्रधानप्रकृत्यन्वयः । तथात्रापि ब्राह्मणहननातिरिक्तसङ्कल्पादिविधिरस्तु । मैवम् । तथाविविधनिगमकाभावात् एवमेव सर्वत्राश्रयणे निषेधशास्त्राभावप्रसङ्गात् । अतः सिद्धार्थबोधकत्वं युक्तं सवेदस्य । परमतात्पर्येण ब्रह्मावबोधकत्वं च । कर्मकाण्डस्य भगवच्छेषभूतकर्मप्रतिपादनद्वारा भगवत्येव तात्पर्यम् । पूर्ववाक्यैकवाक्यता चाभ्युपगन्तव्या । सोमेन यजेतेत्याद्येकवाक्यप्रतिपादितयज्ञानां तमेव वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति परमात्मज्ञानाङ्गत्वमुक्तम् । एवं सत्यर्थवादादेः विधिवाक्यैकवाक्यत्वे सिद्धे व्युत्पत्त्यभावे





खलु स्वार्थपर्यवसानाभावात्प्राशस्त्यमात्रलक्षकत्वेन तदेकवाक्यता स्यात् । तथा च सत्यं ज्ञानमित्यत्र ब्रह्मपदेन सत्यादिपदानां पृथक् पृथक् समुदितानां चान्वयसिद्धिः । अवान्तरवाक्यानां बहुत्वेऽपि महावाक्यस्यैकवाक्यत्वान्न वाक्यभेददोषावकाशः । अन्यथा अप्यधस्तात्समिधं धारयन्ननुद्रवेदित्येकवाक्यत्वेनोपरि हि देवेभ्यो धारयतीत्युपरि धारणविधिर्न स्यात् । वाक्यभेदप्रसङ्गादिति । अतः कार्यानुप्रवेशेऽननुप्रवेशे वा सिद्धार्थे तात्पर्यमावश्यकमित्यनवद्यम् ।

**॥ प्रतीतार्थस्य प्रत्यक्षादिविरोधे अग्निर्माणवकः इत्यादेरिव अमुख्यार्थकल्पनोपपत्तिः ॥**

**आभिधानिकः एव स्वार्थः नान्यः इति अनभ्युपगमः—**

**५७६ सु०—** स्यादेतत् । तथाऽपि वेदान्तपदानां स्वार्थेषु तात्पर्यं नोपपद्यते । प्रत्यक्षादिविरोधात् । तथा हि । 'विज्ञानमानन्दं ब्रह्म', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'तत्त्वमसी'त्यादौ ब्रह्मानुवादेनानन्दादित्वमद्वितीयत्वं च विधीयत इति व्याख्येयम् । ब्रह्म च प्रत्यक्षादिसिद्धो जीवः । न च तस्यैतद्रूपत्वं प्रत्यक्षादिकं सहते, तेन तद्विपरीतोल्लेखनादित्यत आह **प्रत्यक्षादिविरोध इति** ।

## अनु०— प्रत्यक्षादिविरोधे तु गौणार्थस्यापि संभवात् । अतात्पर्यं पदार्थेऽपि न कल्प्यम्

न तावत्सर्वत्र प्रत्यक्षादिविरोधः । सत्यं ज्ञानमित्यादिवाक्यानां जीवातिरिक्तेश्वरविषयत्वाङ्गीकारात् ॥ 'तत्त्वमस्या'दिवाक्यानां **प्रत्यक्षादिविरोधे**ऽपि न स्वार्थे तात्पर्याभावः कल्पनीयः । प्रतीतार्थस्य प्रत्यक्षादिविरोधादेव 'अग्निर्माणवक' इत्यादेरिव अमुख्यार्थकल्पनोपपत्तेः । न ह्याभिधानिक एव स्वार्थो नान्य इति कस्यचिदभ्युपगमः । न च गौणार्थे तात्पर्याङ्गीकृतौ कश्चिद्विरोधोऽस्ति ।

परि०— **कश्चिद्विरोध इति** । 'रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेदि'त्यादिकर्मनिर्णयवाक्यं तु तत्रैव सम्यग्व्याख्यातवन्त इति न तद्विरोधोऽपीति । मूले पदार्थेऽपीत्यस्य सत्यं ब्रह्मेत्याद्यवान्तरवाक्यार्थेऽपीति पूर्वोक्तदिशा व्यक्तत्वादर्थो नोक्तः ।





**वं०प०— जीवातिरिक्तेति** । अस्मिन्पदे भारः । तथाच ब्रह्म च प्रत्यक्षादिसिद्धो जीव इत्युक्तमयुक्तमिति भावः । नन्वमुख्यार्थस्य पदार्थत्वाभावात्कथममुख्यार्थकल्पनेत्यत आह **न हीति** । आभिधानिकोऽभिधानसिद्धो मुख्य इत्यर्थः । **स्वार्थः** पदानामर्थः ।

**आनन्दः— ब्रह्मानुवादेनेति** । यद्यपि प्रसिद्धस्यैव अनुवाद्यत्वात् ब्रह्मणश्चाप्रसिद्धत्वेनानुवादायोगात् । प्रसिद्धं सत्यत्वादिकमनूद्य ब्रह्मत्वमेव विधातुं युक्तम् । तथापि परमते ब्रह्मणो जीवाभिन्नत्वात्तस्य च सिद्धत्वात्सिद्धं ब्रह्मानूद्य सत्यत्वं विधातव्यमिति परमताभिप्रायेणोक्तमिति द्रष्टव्यम् । प्रत्यक्षादिविरोधेन स्वार्थतात्पर्याभावात्सर्वत्र क्वचिदेव वा नाद्य इत्याह **न तावदिति** । न द्वितीय इत्याह । तत्त्वमस्यादीति मूले तत इत्यस्य प्रतीतार्थस्य प्रत्यक्षविरोधादिति व्याख्यानात् । ननु शक्त्या प्रतिपाद्यार्थस्यैव मुख्यार्थत्वाद्गौणोऽर्थो न स्वार्थ इत्यत्राह **न हीति** । नन्वेवं सति विरोध इत्यत्राह **न चेति** ।

**कं०रा०— अद्वितीयत्वमिति** । यद्यपि तत्त्वमसीत्यत्रैक्यमेव विधेयम् । तथाऽपि जीवब्रह्मैक्यस्य द्वितीयसत्यत्वेऽनुपपत्तेरद्वितीयत्वमप्यर्थाद्विधीयत इत्यभिप्रेत्यैतदुक्तमिति द्रष्टव्यम् । **तेनेति** । प्रत्यक्षादिना आनन्दादिरूपत्वाद्वितीयत्वविपरीतयोरनानन्दादिरूपत्वसद्वितीयत्वयोर्जीवेऽवगाहनादित्यर्थः । **अमुख्येति** । ज्ञानानन्दादिरूपत्वेन ब्रह्मसादृश्यरूपामुख्यार्थकल्पनोपपत्तेरित्यर्थः ।

**वा०चं०—** ननु स्वार्थे वेदान्तानां प्रत्यक्षादिविरोधप्राप्तमतात्पर्यं परिहर्तुं गौणार्थपरत्वप्रतिपादकमुत्तरवाक्यमव्यवहितपूर्वग्रन्थासङ्गतमनुपपन्नं च प्रत्यक्षविरोधाप्रसक्तेरित्यतो बाधकान्तरपरिहारतया तत्प्रवृत्तिरित्याशयेन प्रत्यक्षादिविरोधमुपपादयन्नेव तत्सङ्गमयति **तथाऽपीति** । परमते पदार्थवाक्यार्थपरत्वेन विभागाद्वाक्यद्वयस्य स्वशब्देनोपादानम् । यद्वा प्रकृतत्वात्सत्यज्ञानादिवाक्योपादानम् । गौणार्थपरत्वेनावश्यं प्रतिपादनीयत्वेनोत्तरवाक्याभिप्रेततया तत्त्वमसीत्यस्येति द्रष्टव्यम् । अत्र प्रत्यक्षादिविरोधे सति गौणार्थत्वं न तु तदभावस्थल इत्यभिप्रायकेण प्रत्यक्षादिविरोध इत्यनेन क्वचित्प्रत्यक्षादिविरोधो नास्तीति सूचितम् । तेन च सत्यज्ञानादिवाक्येनानुपपत्तिरित्याशयेनाह **न तावदिति** । ननु कथमेतद्ब्रह्म चेत्युक्तदोषापरिहारादित्यतस्तदेवासिद्धमित्याशयेन तद्विषयं दर्शयति **सत्यमिति** । यद्वा स्पष्टत्वाद्भाष्यकारोपेक्षितं स्वयमेव सत्यज्ञानादिवाक्यविषयकानुपपत्तिपरिहारं दर्शयति **न तावदिति** । व्यवहितत्वाद्धेतुसाध्यसमर्पकपदानां विविच्य तदर्थमाह **तत्त्वमसीत्यादीति** । वाक्यार्थे कार्ये परेण तात्पर्यानभ्युपगमादपिशब्दो भिन्नक्रमेण योजितः । अतःशब्दव्याख्या **प्रतीतार्थस्येत्यादि** । तत्त्वमसीत्यादौ लाक्षणिकार्थस्याप्यभ्युपगमाद्गौणशब्दोऽमुख्यार्थपरतया व्याख्यातः । नन्वस्तु गौणाद्यर्थकल्पना तथाऽपि स्वार्थे तात्पर्याभाव एवेत्यत आह **न हीति** । पदवृत्तिबोधितस्यैव स्वार्थत्वम् । अन्यथा लाक्षणिकादेर्वाक्यार्थान्वयो न स्यादित्युपपत्तिविरोधान्नाभिधानिकस्यैव स्वार्थत्वमित्येव न किन्तु तथाऽभ्युपगमोऽपि न कस्यचिदिति सूचनायाभ्युपगमशब्दः । नन्वत इत्यनेनैव हेतुकथनादविरोधत इति व्यर्थम्, अत इति प्रत्यक्षादिविरोधादमुख्यार्थकल्पनामुक्त्वा तदभावकथनं विरुद्धं चेत्यतोऽतःशब्दोक्तस्य प्रतीतार्थे प्रत्यक्षादिविरोधस्य गौणाद्यर्था-





ङ्गीकारे हेतुत्वेनोक्तावपि गौणाद्यर्थाङ्गीकारे विरोधाभावस्याविरोधपदेनोक्तत्वादपौनरुक्त्यमविरोधश्चेत्याशयेना विरोधत इत्यस्यार्थमाह **न चेति** ।

**विट्ठ०**— ननु जीवव्यतिरिक्ततामङ्गीकृत्य सत्यज्ञानादिवाक्ये विरोधपरिहारेऽपि तत्त्वमस्यादिवाक्ये प्रत्यक्षविरोधः स्यादेव भेदस्य प्रत्यक्षसिद्धत्वेनाद्वितीयत्वस्य तद्विरुद्धत्वादित्यत आह **तत्त्वमस्यादीति** । **कश्चिद्विरोधोऽस्तीति** । रुढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेदिति वाक्यविरोधपरिहारस्तु कर्मनिर्णये एतद्वाक्यव्याख्यानानुसारेण द्रष्टव्यः ।

**गौणार्थे तात्पर्याङ्गीकृतौ विरोधाभावः**—

**५७७ सु०— ननु गौणार्थाङ्गीकारेऽपि जीवस्य आनन्दादिरूपत्वमङ्गीकार्यम्; तच्च प्रत्यक्षादिविरुद्धम् । मैवम् । अविद्यावरणतिरोभावसंभवात् । तदिदमुक्तं अविरोधत इति ।**

## अनु०— अविरोधतः ॥

**गु०दी०**— **गौणार्थाङ्गीकारेऽपि** इत्यत्र तत्सदृशस्त्वमसीति हि गौणार्थः । तदा सादृश्यघटकतया जीवस्याप्यानन्दरूपता वाच्येति भावः ।

**आनन्दः**— **आनन्दादिरूपत्वमिति** । किञ्चित्सादृश्यस्याभावे गौणार्थाङ्गीकार एव न स्यादिति भावः । **प्रत्यक्षादिविरुद्धमिति** । यद्ययमानन्दरूपः स्यात्तर्हि तथा प्रतीयेत । न चैवमतो नानन्दरूप इत्यर्थः । प्रत्युत दुःखित्वादेर्ग्रहणादिति भावः । विद्यमानस्याप्यानन्दादिरूपत्वस्यावरणवशात् तिरोधानोपपत्तेर्न प्रत्यक्षविरोध इत्याह **अविद्येति** ।

**कं०रा०**— **तच्चेति** । जीवस्य आनन्दादिरूपत्वं तद्विपरीताकारोल्लेखिप्रत्यक्षविरुद्धम् । तथा आनन्दो न जीवस्वरूपभूतो योग्यत्वे सति तद्रूपत्वेनानुपलभ्यमानत्वात् । योग्यत्वे सति यद्यद्रूपत्वेन नोपलभ्यते नासौ तत्स्वरूपः । यथा पटस्वरूपत्वेनानुपलभ्यमानो घटो न तत्स्वरूपभूत इत्यनुमानविरुद्धं चेत्यर्थः । **अविद्येति** । आनन्दस्य जीवस्वरूपत्वेऽपि अविद्यावरणतिरोधानेनानवभाससंभवात् तद्विपरीताकारोल्लेखिप्रत्यक्षं भ्रान्तमनुमानं चान्यथासिद्धमिति भावः ।

**वा०चं०**— ननु तत्र विरोधप्रसक्तेरेवाभावात्तद्वैयर्थ्यमित्यतस्तत्र विरोधप्रसक्तिं दर्शयति **नन्विति** ।





॥ योगश्च स्यान्महाफले इत्युक्तप्रपञ्चनपुरःसरः उक्तार्थोपसंहारः ॥

**५७८ सु०—** 'योगश्च स्यान्महाफल' इत्युक्तं प्रपञ्चयन् उक्तार्थमुत्सूत्रितत्वभ्रमनिरासाय 'अतः'शब्दारूढं कुर्वन् उपसंहरति **अत इति** ।

**अनु०— अतो ज्ञानफलान्येव कर्माणि ज्ञानमेव हि ॥**
**मुख्यप्रसाददं विष्णोर्जिज्ञासायाश्च तद्भवेत् ॥**
**कर्तव्या तेन जिज्ञासा श्रुतिप्रामाण्ययोगतः ॥**

**परि०— उक्तार्थम्** कार्यता चेत्यादिनोक्तार्थमित्यर्थः ।

**वं०प०— उत्सूत्रितत्वेति** । सूत्रादुद्गतम् । तदनारूढमिति यावत् । तत्त्वभ्रमनिरासायेत्यर्थः ।

**वा०चं०—** ननु उत्तरवाक्यस्योपसंहाररूपत्वे ज्ञानफलानि कर्माणीत्यस्यानुक्तत्वात् उपादानायोगः । एतत्प्रतिपादनपरत्वे च इतरांशवैयर्थ्यम् । उपसंहारस्य अतः श्रुतिप्रामाण्यं युज्यत इत्येतावतैव पूर्तेः जिज्ञासा कर्तव्येत्यादिवैयर्थ्यं च । कथं च भाष्यकारेण स्वयमुपपादितस्य श्रुतिप्रामाण्ययोगस्य सौत्रप्रतिज्ञाया हेतुत्वेन अन्वयकथनमित्यतस्तदभिप्रायमाह **योगश्च स्यादिति** । अत इति सौत्रपदानुवादेन श्रुतिप्रामाण्ययोगत इति व्याख्यानम् । अनेन भाष्ये उभयोपादानवैयर्थ्यमित्यपि परास्तम् । एवं च सौत्रातःशब्दार्थस्यैव श्रुतिप्रामाण्ययोगस्य जिज्ञासाकर्तव्यत्वे हेतुत्वेनोक्ततया नोक्तानुपपत्तिरिति सूचयतोत्सूत्रितत्वभ्रमो निरस्तो भवति । यद्वा श्रुतिप्रामाण्ययोगे पूर्वं भाष्यकारोक्तसाधकादीनामतःशब्देनोपादानम् । तथा चोक्तयुक्त्या श्रुतिप्रामाण्ययोगत इत्यर्थः । अत्र प्रतिज्ञातजिज्ञासाकर्तव्यत्वे श्रुतिप्रामाण्ययोगस्य हेतुत्वेनोक्तेरेव सौत्रप्रतिज्ञाहेतुसमर्पकातःशब्दार्थत्वसिद्धिरिति तदुक्त्यैव अस्य हेतोः सौत्रातःशब्दार्थत्वसूचनादुत्सूत्रितत्वभ्रमनिरास इति द्रष्टव्यम् । एवं च अतःशब्दस्य सूत्रगतस्य व्याख्यानायानुवादे उपसंहारत्वज्ञापकं नात्र किञ्चिदित्यपि परास्तं भवति।

**५७९ सु०— अत्र ज्ञानफलान्येव कर्माणीत्युक्तप्रपञ्चनम् । अतः श्रुतिप्रामाण्ययोगतो ब्रह्मणि श्रुतिप्रामाण्यस्योपपन्नत्वाद् जिज्ञासा कर्तव्येत्युपसंहारः । न विषयसद्भावमात्रेण जिज्ञासोपपत्तिरित्यत उक्तं प्रयोजनसंबन्धं स्मारयति ज्ञानमेव हीति ।**

**परि०— अत्रेति** । श्लोक इत्यर्थः । अत इति सौत्रपदानुवादः । तस्य श्रुतिप्रामाण्ययोगत इत्येतद्व्याख्यानमिति दर्शयति । **अतः श्रुतिप्रामाण्ययोगत इति** । तस्याप्यर्थमाह **ब्रह्मणीति** ।





सिद्धरूपेऽपि ब्रह्मणीत्यर्थः । **उपसंहार इति** । तेन न पुनरुक्ततादोष इति भावः । **न विषयेति** । विषयसमर्थनपरतयाऽप्यतःशब्दं व्याचष्ट इति कार्यता चेत्यादेरवतारितत्वेन सिद्धरूपे ब्रह्मणि वेदस्य प्रामाण्यादित्येतदर्थकतयाऽतःशब्दव्याख्याने विषयसद्भावस्य प्राप्तत्वाद्विषयसद्भावमात्रेणेत्युक्तम् । **उक्तं प्रयोजनसंबन्धमिति** । 'ज्ञानी प्रियतमोऽतो मे' इत्यादिनोक्तमित्यर्थः ।

**यादु०**— ब्रह्मणि श्रुतिप्रामाण्यस्योपपन्नत्वादित्यनन्तरमनुग्राह्यप्रमाणस्य प्राप्तत्वादिति शेषो ज्ञातव्यः ।

**वं०प०**— **श्रुतिप्रामाण्यस्योपपन्नत्वादिति** । तथाच ब्रह्ममीमांसानुग्राह्यप्रमाणस्य प्राप्तत्वात् । यदुक्तं पूर्वपक्षिणा कार्य एव सर्ववेदपर्यवसानादनुग्राह्यप्रमाणाभावान्न ब्रह्ममीमांसारम्भः संभवतीति; तदसदिति भावः । **विषयसद्भावमात्रेणेति** । तथात्वे काकदन्तपरीक्षाया अपि कर्तव्यत्वं स्यादिति भावः ।

**आनन्दः**— ननूत्तरकारिकायां ज्ञानफलानीति व्यर्थम् । अनुपयोगात् जिज्ञासात्र विधीयत इत्यनेनैव सर्वार्थस्योक्तत्वात् जिज्ञासा कर्तव्या ज्ञानमेव हीत्यादि पुनरुक्तं जिज्ञासासमकक्षज्ञाने साधनान्तरस्याभावा-ज्जिज्ञासायाश्चेत्ययुक्तमत्राह **अत्रेति** । तथाच ज्ञानफलानीत्यस्योक्तप्रपञ्चनरूपत्वाज्जिज्ञासा कर्तव्येत्यस्योपसंहारत्वा-ज्ज्ञानमेव हीत्यस्य प्रयोजनसंबन्धस्मारकत्वाच्चशब्दस्य च एवार्थत्वान्न कश्चिद्दोष इति भावः । ननु जिज्ञासाया एव ज्ञानसाधनत्वे ज्ञानफलान्येव कर्माणीति कर्मणां ज्ञानसाधनत्वबोधकस्योक्तिविरोध इत्यत्राह **कर्माणीति**।

**वा०चं०**— अथाऽपि ज्ञानमेवेत्यादेर्वैयर्थ्यमेवेत्यतस्तत्प्रयोजनमाह **न चेति** ।

**स०व्र०**— ब्रह्मणि श्रुतिप्रामाण्यस्योपपन्नत्वादित्यनन्तरमनुग्राह्यप्रमाणस्य प्राप्तत्वादिति शेषः ।

**विठ्ठ०**— अत इति सौत्रपदानुवादेन श्रुतिप्रामाण्ययोगत इति व्याख्यानमित्याशयेन सौत्रपदानुवादं करोति **अतः श्रुतिप्रामाण्येति** । तस्याप्यर्थमाह **ब्रह्मणीति** । अतो ब्रह्मणि श्रुतिप्रामाण्ययोगतो ब्रह्मणो विषयत्व-संभवाज्जिज्ञासा कर्तव्येत्येतावतापूर्ते ज्ञानमेव हीत्यादि वैयर्थ्यमित्यतो जिज्ञासाप्रयोजनयोः संबन्धज्ञापव त्वेन तदुपयोग इत्याह **न विषयेति** ।

**५८० सु०— हि यस्मात् ज्ञानमेव विष्णोर्मुख्यप्रसाददम्; जिज्ञासाया एव तत्** ज्ञानं **भवेत्; तेन**; न तु विषयादिसिद्धिमात्रेणेति । **मुख्यप्रसादो** मोक्षहेतुप्रसादः । कर्माणि तु जिज्ञासाजनकत्वेन ज्ञानफलानीत्युक्तानीति न विरोध इति ।

**परि०**— ननु 'जिज्ञासायाश्च तद्भवेदि'ति 'कर्माणि ज्ञानफलानी'ति द्वयं विरुद्धमित्यत आह **कर्माणीति** । सिद्धार्थपरत्वरूपं तृतीयमतःशब्दव्याख्यानम् ।





**यादु०**— ननु यदि जिज्ञासा ज्ञानजनिका तर्हि अतो ज्ञानफलान्येवेत्यत्र कथं कर्मणां ज्ञानजनकत्वमुक्तमत आह **कर्माणि त्विति**।

**वं०प०**— **तेनेति**। ज्ञानरूपप्रयोजनसद्भावेनेत्यर्थः। सर्वं वाक्यं सावधारणमिति न्यायेन तेनैवेत्यवधारणमभिप्रेत्य तद्व्यावर्त्यं दर्शयति **न त्विति**। ननु जिज्ञासाया ज्ञानजनकत्वे ज्ञानफलान्येव कर्माणीति कथं कर्मणां ज्ञानजनकत्वमुक्तमित्यत आह **कर्माणि त्विति**। अन्तःकरणशुद्धिद्वारेणेति भावः।

**वा०चं०**— प्रयोजनाभावशङ्कापरिहारकत्वं फलस्य दर्शयितुं मुख्यपदं व्याख्याति **मुख्येति**। ननु जिज्ञासाया ज्ञानजनकत्वे ज्ञानफलानि कर्माणीत्युक्तविरोध इत्यत आह **कर्माणीति**।

**स०व्र०**— ननु यदि जिज्ञासा ज्ञानजनिका तर्हि अतो ज्ञानफलान्येवेत्यत्र कथं कर्मणां ज्ञानजनकत्वमुक्तमत आह **कर्माणि त्विति**।

**विट्ठ०**— ननु जिज्ञासाया उक्तरीत्या मुख्यप्रसादहेतुत्वेऽपि कुतः कर्तव्यत्वं प्रसादस्य स्वतः अपुरुषार्थत्वादित्यतो मुख्यशब्देनैवेषा शङ्का परिहृतेति भावेनाह **मुख्यप्रसादो मोक्षेति**। ज्ञानफलानि कर्माणीति ज्ञानस्य कर्मफलत्वमुच्यते। पुनश्च जिज्ञासायाश्च तद्भवेदिति जिज्ञासाफलत्वमुच्यते। अतो विरोध इत्यत आह **कर्माणीति**। ततश्चैवं मूलयोजना। अतः श्रुतिप्रामाण्ययोगतः श्रुतिप्रामाण्यस्य सिद्धरूपेऽपि ब्रह्मण्युपपन्नत्वेन विषयसद्भावात् हि यस्माच्च ज्ञानमेव विष्णोर्मोक्षजनकप्रसाददं यतश्च कर्माणि जिज्ञासाद्वारैव ज्ञानफलानि जिज्ञासायाः सकाशादेव तज्ज्ञानं भवेत्। तेन कारणेन जिज्ञासा कर्तव्येति॥

**चषकः**— जिज्ञासायाश्चेति चशब्द एवार्थ इत्यभिप्रेत्याह **जिज्ञासाया एवेति**। जिज्ञासाया एव ज्ञानजनकत्वोपगमे ज्ञानफलानि कर्माणीति वचनं विरुणद्धीत्यत आह **कर्माणीति**॥ **इति कार्यतावादः समाप्तः**॥

**॥ प्रामाण्यवादः॥**

पूर्वपक्षः (शब्दप्रामाण्याभावात् विशिष्टविषयाभावशङ्का)—

**५८१ सु०— ननु शब्दस्यैव तावत्प्रामाण्यं दुर्लभम्। तथा हि। प्रमाकरणं हि प्रमाणम्। प्रमाकरणं च तदुच्यते यस्मिन्सति प्रमा भवत्येव, नासति। सत्यपि शब्दे न प्रमा जायते। तत्कथं प्रमाकरणं स्यात्॥ किञ्च प्रमाणं हि विषयसद्भावेन व्याप्तम्। विषयश्च द्वेधा। अपरोक्षः परोक्षश्च। तत्रापरोक्षः प्रत्यक्षसिद्धः। परोक्षस्त्वनुमानवेद्य इति विषयाभावान्न प्रमाणं शब्दः॥ अपि च यत्प्रमाणं तद्विज्ञानात्मकं दृष्टम्। यथा धूमज्ञानम्। अविज्ञाना-**





**त्मकश्च शब्दोऽतो न प्रमाणम् ॥ एवं बाह्यकरणप्रत्यक्षत्वादात्मन्यनाश्रितत्वाच्च; घटवत् ॥ आकाशगुणत्वाच्च तत्परिमाणवत् ।**

**बिन्दुः— विषयाभावान्न प्रमाणं शब्द इति ।** शब्दवेद्यत्वेनाभिमतार्थः प्रत्यक्षश्चेच्चक्षुरादिनैव तत्सिद्धिरस्तु अतीन्द्रियश्चेदनुमानवेद्योऽस्तु तृतीयप्रकारासंभवात् । तस्मान्न शब्दप्रामाण्येन कृत्यमिति भावः । **यत्प्रमाणमिति ।** इन्द्रियभिन्नं प्रमाणमित्यर्थः । सिद्धान्ते तु यथेन्द्रियं सन्निकर्षो वा अविज्ञानात्मकमपि ज्ञानकरणत्वात्प्रमाणमिति । तद्भिन्नत्वविशेषणे अतिप्रसङ्ग इति भावः ।

**परि०—** शब्दाप्रामाण्यवादिबौद्धमतमनुवदति **नन्वित्यादिना ।** एवकारतात्पर्यमुपसंहारे व्यक्तम् । प्रकृताभिप्रायमाह **प्रमाकरणं हीति ।** शब्द इति योज्यम् । अन्वयव्यभिचारान्न प्रमाकरणत्वमिति भावेन बौद्धमतरीत्या व्यतिरेकव्याप्त्युपनयरूपावयवद्वयोक्तिपूर्वं निगमयति **प्रमाकरणं चेति ।** निर्विषयत्वाच्च न प्रमाणं शब्द इत्याह **किश्चेति ।** अविज्ञानात्मकत्वाच्च न प्रमाणं शब्द इति व्यतिरेकोदाहरणोपनयपूर्वमाह **अपि चेति । एवमिति ।** वक्ष्यमाणहेतुत्रयेणापि शब्दो न प्रमाणमित्यर्थः । हेतूनाह **बाह्येति ।** हेतुद्वये दृष्टान्तः **घटवदिति ।**

**गु०दी०— यत्प्रमाणं तद्विज्ञानात्मकं** इत्यत्र प्रमाणं प्रत्यक्षेतरप्रमाणमिति परस्याशयः । **बाह्यकरणप्रत्यक्षत्वात्** इत्यत्र बाह्यकरणाख्यप्रत्यक्षविषयत्वादित्यर्थः । अन्तःकरणवेद्यलिङ्गज्ञाने व्यभिचारपरिहारार्थं बाह्येति विशेषणम् । अनुमानरूपबाह्यकरणवेद्ये तस्मिन्नेव व्यभिचारवारणाय प्रत्यक्षपदम् । स्वातन्त्र्येण बाह्यार्थज्ञापकजातीयं बाह्यकरणमिति परस्याशयः ।

**यादु०— यस्मिन्सतीति ।** अविलम्बेनोत्पादकत्वं करणत्वमभिप्रेत्येदमुक्तमिति ज्ञातव्यम् । **न प्रमा जायत इति ।** व्युत्पत्तिविधुराणामिति शेषः । **तत्कथमिति ।** अनेन शब्दो न प्रमाणमिति व्यवहर्तव्यः प्रमित्यजनकत्वादिति प्रयोगः सूचितो भवति । अन्यथा साध्याविशिष्टता स्यादिति ध्येयम् । यद्यपि बौद्धमतेऽविसंवादिविज्ञानमेव प्रमाणं न करणम् । तथाऽपि परीत्येदमुक्तमिति द्रष्टव्यम् । अत एव स्वमतेनाह **यत्प्रमाणं तद्विज्ञानात्मकमिति ।**

**वं०प०— बाह्यकरणप्रत्यक्षत्वादिति ।** बाह्यकरणजन्यज्ञानविषयत्वादित्यर्थः । न प्रमाणमित्यनुवर्तते । यत्प्रमाणं तद्बाह्यकरणर्प्रत्यक्षं न भवति । यथा विज्ञानम् । शब्दस्तु न तथाऽतो घटादिवदप्रमाणमित्यर्थः ।

**आनन्दः—** अनुग्राह्यशब्दरूपप्रमाणसद्भावान्मीमांसा कर्तव्येत्युक्तं तदयुक्तम् । अनुग्राह्यशब्दस्य प्रामाण्याभावादिति शङ्कते **ननु शब्दस्येति । प्रमाकरणं हीति ।** यद्यपि कारणविशेषस्य करणत्वात्तस्य च शक्तिरूपत्वात्साधनान्तरविरहेण ततः प्रमानुत्पादेऽपि न तस्य करणत्वहानिस्तथापि अविलम्बेन कार्योत्पादकत्वमेव





करणत्वमित्यभिप्रायेण एवमुक्तमिति द्रष्टव्यम् । **अनुमानवेद्य इति** । नन्वेवमनुमानस्यापि प्रामाण्यं न स्यात् । विषयाभावात्स हि भवन्नापरोक्षः परोक्षो वा । नाद्यः । तस्य प्रत्यक्षसिद्धत्वात् । नान्त्यः । तस्य शब्दवेद्यत्वादिति चेत् । न एवमपि सङ्केतग्राहकत्वेनानुमानस्यावश्यकत्वात्तेनैव शब्दविषयस्यापि सिद्धौ न तस्य प्रामाण्यमिति भावः । **यत्प्रमाणमिति** । न च प्रत्यक्षे व्यभिचारः तस्य प्रमाणत्वेऽपि ज्ञानात्मकत्वाभावादिति वाच्यम् । प्रत्यक्षातिरिक्तत्वे सतीति विशेषितत्वात् । **आत्मन्यनाश्रितत्वाच्चेति** । नन्वेवमपि चक्षुरादौ व्यभिचारः । तस्यापि देहाश्रितत्वे नात्माश्रितत्वाभावात् । न च तस्यापि देहद्वारात्माश्रितत्वमस्तीत्यसिद्धिः स्यादिति चेन्न । प्रत्यक्षातिरिक्तत्वे सतीति विशेषणीयत्वात् । **आकाशगुणत्वादिति** । यद्यपि वर्णात्मकस्य शब्दस्य द्रव्यत्वेन नाकाशगुणत्वं तथापि न्यायमतानुसारेणैवमुक्तमिति द्रष्टव्यम् ।

**कं०रा०— न प्रमा जायत इति** । व्युत्पत्तिविधुराणामित्यर्थः । निर्विषयत्वाच्च शब्दो न प्रमाणमित्याह **किञ्चेति** । शब्दाप्रामाण्यवादिबौद्धमतमनुवदति **नन्वित्यादिना** । ननु जिज्ञासाया एव ज्ञानजनकत्वेऽतो ज्ञानफलान्येव कर्माणीति कर्मणां ज्ञानफलत्वोक्तिर्विरुद्धा स्यादित्यत आह **कर्माणि त्विति** । **न विरोध इति** । कर्माणि ज्ञानफलानीत्युक्ते जिज्ञासायाश्च तद्भवेदित्यनेन विरोधो नेत्यर्थः । **विषयेति** । असाधारणविषयसद्भावेनेत्यर्थः । **बाह्येति** । बाह्यकरणप्रत्यक्षत्वादात्मन्यनाश्रितत्वाच्च शब्दो न प्रमाणमिति संबन्धः । अत्र चाद्यहेतौ बाह्यकरणेति विशेषणं धूमज्ञाने व्यभिचारनिरासाय द्वितीयहेतावात्मनीति पदमसिद्धिवारणाय । **आकाशेति** । अत्रापि शब्दो न प्रमाणमिति संबन्धः । लिङ्गज्ञाने व्यभिचारनिरासायाकाशपदम् ।

**वा०चं०—** ननु वेदप्रामाण्यप्रतिपादनमुत्तरवाक्येऽयुक्तमसङ्गतेः । शब्दप्रामाण्ये च सति विशिष्य वेदाप्रामाण्यप्रापकाभावाच्च । न च शब्दप्रामाण्यप्रतिपादनमेवैतदिति वाच्यम् । असङ्गत्यपरिहारात् । तदप्रामाण्यप्रापकाभावाच्चेत्यतस्तत्सङ्गमयितुं शब्दाप्रामाण्ये प्रापकं वक्तुं प्रतिजानीते **नन्विति** । नन्वेतादृशबाधकस्य सर्वत्र संभवात्करणमात्रोच्छेदप्रसङ्ग इत्यत आह **किञ्चेति** । **विषयेति** । न च विषयाभावेऽप्यतीतानागतगोचरानुमानयोगिप्रत्यक्षयोः प्रामाण्येन विषयसद्भावस्य प्रामाण्याव्यापकत्वान्न तन्निवृत्त्या प्रामाण्यनिवृत्तिरिति वाच्यम् । अत्र विषयशब्देनालम्बनस्य विवक्षितत्वात्तस्य च तत्रापि सत्त्वादिति भावः । **परोक्षस्त्विति** । न चानुमानवदागमस्यापि परोक्षार्थविषयकत्वमेवास्त्वन्यथाऽऽगमप्रामाण्यमभ्युपगम्यानुमानेऽप्येतादृशप्रत्यवस्थानं सुलभमिति वाच्यम् । परचित्तवृत्त्याद्यसङ्कीर्णविषयसद्भावेनानुमानप्रामाण्यस्यावश्यकत्वे सकलपरोक्षार्थसंवेदनस्य तेनैवोपपत्तावसङ्कीर्णविषयाभावेन नागमप्रामाण्यमिति भावः । ननु शब्दस्यापि बोधकत्वादसङ्कीर्णो विषयोऽपि कल्पनीय इत्यतः स्वयमप्रकाशात्मकस्यान्यप्रकाशकत्वमेवानुपपन्नमित्याशयेनाह **अपि चेति** । विज्ञानमेव प्रमाणं प्रत्यक्षस्थलेऽपीन्द्रियजन्यज्ञानस्यैव प्रामाण्यं न त्विन्द्रियादेरिति मतेनेदम् । अत एव न्यायवार्तिके यत्प्रमाणं तद्विज्ञानात्मकं यथा प्रत्यक्षमित्युदाहृतम् । अत एव च परिहारदशायामत्रापि यथेन्द्रियमिन्द्रियसन्निकर्षो वा प्रत्यक्षं विज्ञानकरणत्वादविज्ञानात्मकमपि प्रमाणमिति दृष्टान्तकथनावसरे विज्ञानकरणत्वादिति हेतूपादानम् । एवं चात्रापि यथा प्रत्यक्षमिति वक्तव्ये करणप्रसङ्गाद्यथा धूमज्ञानमित्येवोक्तमिति ध्येयम् । मानसप्रत्यक्षलिङ्गज्ञानव्यावृत्त्यै





**बाह्येति** । घटवदित्युक्त्याऽन्यथा घटस्यापि प्रमाणत्वं स्यादित्युक्तं भवति । अविज्ञानात्मकत्वेनाप्रामाण्येऽपि घट एवान्वयदृष्टान्तः । आकाशो महत्प्रत्ययविषयो महत्त्वपरिमाणवत्त्वादित्यादौ लिङ्गतयाऽऽकाशपरिमाणस्य प्रमाणत्वेऽपि लिङ्गतानाक्रान्तस्य तस्य न प्रमाणत्वमिति न तत्रानैकान्तिकता । अन्यथा सङ्ख्याया अपि क्वचिल्लिङ्गत्वोपपत्त्या तस्या अपि दृष्टान्तत्वं न स्यात् । तथा च सङ्ख्यां दृष्टान्ततयोपादाय परिमाणे अनैकान्तिकत्वोद्भावनं केषाञ्चिद्वार्तिककारादीनामनुचितमिति दर्शयितुं सङ्ख्याया आदित्वेऽपि तामनुपादाय परिमाणं दृष्टान्ततयोपादत्ते **तत्परिमाणवदिति** ।

**वा०र०— उत्तरवाक्य इति** । प्रत्यक्षवच्च प्रामाण्यमित्यस्यागम्यत इति व्युत्पत्त्याद्याश्रयणेन वेदप्रामाण्यप्रतिपादकतयापि योजनाया करिष्यमाणत्वादिति भावः । **न च शब्देति** । तथा च शब्दाप्रामाण्यप्रयुक्तं वेदस्याप्रामाण्यं प्रसक्तमिति भावः । शब्दाप्रामाण्य इति लौकिकवैदिकसाधारण्येन शब्दाप्रामाण्य इत्यर्थः । तथा च सकलशब्दाप्रामाण्यशङ्कावारकतया प्रत्यक्षवच्चेत्युत्तरवाक्यं सङ्गतमिति भावः । **एतादृशेति** । सत्यपि शब्दे प्रमानुत्पत्तेरित्युक्तबाधकसदृशस्येत्यर्थः । **सर्वत्रापीति** । यावद्धि प्रमाकरणत्वेन संप्रतिपन्नं यच्च क्रियाकरणत्वेन संप्रतिपन्नं तत्र सर्वत्रापि तस्मिन्सति तत्कार्यं भवत्येवेत्येवं नास्ति । सामग्रीविरहदशायां करणत्वाभिमतेन कार्यानुत्पत्तेः । तथा च तेषां तत्करणत्वायोगे करणमात्रोच्छेदप्रसङ्ग इत्यर्थः । यद्यपि प्रत्यक्षानुमानयोरेव प्रमाणयोः प्रत्यक्षवच्चेत्युत्तरानुसारेण प्रमाणतया प्रसक्तशब्दस्य प्रमाकरणत्वनिराकरणप्रसङ्गेन च शीघ्रोपस्थित्या तदुच्छेद एवाशङ्कनीयः तथापि तस्मिन्सत्यपीत्याद्युक्तबाधकस्य करणमात्रेऽपि प्रसरोऽस्तीति ज्ञापनाय करणमात्रेत्युक्तमिति ज्ञेयम् । **अतीतेति** । अतीतानागतगोचरेत्यनुमानयोगिप्रत्यक्षयोर्विशेषणम् । **न तदिति** । व्यापकनिवृत्तावेव व्याप्यनिवृत्तिप्राप्तेरिति भावः । **आलम्बनस्येति** । उल्लेख्यत्वरूपत्वादालम्बनत्वस्याऽतीतानागतयोश्चोल्लेख्यत्वसद्भावेनोक्तविधविषयस्याऽनुमानयोगिप्रत्यक्षयोरपि सत्त्वादित्यर्थः । उक्तरीत्याऽनुमानागमप्रामाण्यप्रत्यवस्थानसाम्येऽप्यनुमानप्रामाण्यस्य असङ्कीर्णविषयसद्भावेन क्लृप्तत्वात्तदेव स्वीकृत्या सङ्कीर्णविषयशून्यशब्दप्रामाण्यमेव त्याज्यमित्याह **परचित्तवृत्त्यादीति** । **अत एव न्यायेति** । एतत्प्रकरणं न्यायवार्तिकतद्वाचस्पत्यादिकं कुसुमाञ्जलिसूत्रोपस्कारादिकं चाऽवलोक्य विशदीकार्यमस्ति । यत्प्रमाणं तद्विज्ञानात्मकमिति वार्तिके इन्द्रियजन्यज्ञानविवक्षयेव यथा प्रत्यक्षमिति दृष्टान्तीकरणाद्विज्ञानमेव प्रमाणमिति मतस्यात्रानुसृतस्य उक्तवार्तिकसंमतत्वमिति भावः । **हेतूपादानमिति** । तत्करणमित्यर्थः । तथा हेतूकरणेन विज्ञानरूपतया प्रमाणत्वाभावेऽपि तत्करणतया प्रमाणत्वमिति प्रतिपादनं लभ्यते । अत एवाविज्ञानात्मकमपि इत्युक्तम् । एवं च प्रत्यक्षमपि विज्ञानात्मकं प्रमाणमस्तीति सिद्धान्तेऽपि प्राप्नोतीत्यर्थः । तावतापि किमित्यतः दृष्टान्ततया वक्ष्यमाणपरिहारोपात्तस्य प्रथमप्राप्तप्रत्यक्षस्य परित्यागेनाऽनुमानरूपधूमज्ञानोपादानाऽयोग इति फलं दर्शयंस्तत्परिहारं च करोति **एवं चात्रापीति** । **मानसेति** । करणप्रत्यक्षत्वादित्येवोक्ते मानसप्रत्यक्षविषये लिङ्गज्ञाने प्रमाणीभूते व्यभिचारस्तन्निवृत्त्यै बाह्यपदमित्यर्थः । विपक्षे बाधकानुक्तिर्नास्तीति घटवदिति दृष्टान्तीकरणेनैव सिद्धमित्याह **घटवदित्युक्त्येति** । शब्दो न प्रमाणमविज्ञानात्मकत्वादिति प्रागुक्तानुमाने दृष्टान्तानुक्तिर्न मन्तव्येत्याह **अविज्ञानेति** । अत्र प्रथमप्राप्तामपि सङ्ख्यां परित्यज्य परिमाणस्यैव





दृष्टान्ततयोपादानेन सङ्ख्याया दृष्टान्तत्वं न संभवतीति प्रतीयते । तथा न मन्तव्यं परिमाणस्य महत्प्रत्ययविषयत्वानुमापकत्ववत्सङ्ख्याया अपि दशधा गणनीयत्वाद्यनुमापकतया तयोस्तदर्थद्वये प्रमाणत्वस्य तदतिरिक्तार्थे तयोर्लिङ्गत्वाभावेनाप्रमाणत्वस्य चाऽविशेषात् । एतेनाकाशपरिमाणे लिङ्गताक्रान्ते आकाशगुणत्वस्य व्यभिचारोऽपि परास्तः । तदनाक्रान्तपरिमाणस्यैव दृष्टान्तीकरणात् । तर्हि सङ्ख्याया एवोपादानं कार्यम् । प्राथमिकत्वादिति चेत्सत्यम् । कैश्चिद्वृत्तिकारैः सङ्ख्यामेव दृष्टान्तीकृत्यानुमानप्रवृत्तिमुपवर्ण्य तत्परिमाणे तु दृष्टान्तीकृते लिङ्गताक्रान्ते आकाशगुणत्वस्यानैकान्तिकत्वोद्भावनं कृतमस्ति । तदुक्तरीत्या सङ्ख्यापरिमाणयोरविशेषादयुक्तमिति सूचनस्य आदितयाऽप्राप्तपरित्यागेन परिमाणोपादानेन विनाऽनुपपत्त्या तदर्थं पश्चात्प्राप्तस्यापि तत्परिमाणस्य दृष्टान्तीकरणमिति मूलाभिप्रायं दर्शयन्नवतारयति **आकाश इत्यादिना** । अत्र च टीकायामनैकान्तिकत्वं नाम साध्यवैकल्यमेवाभिप्रेतम् । दृष्टान्तदोषस्य वक्तव्यत्वात् । अत एव दृष्टान्तत्वं न स्यादिति मध्ये उक्तमिति ज्ञेयम् । **परिमाण इति** । तद्दृष्टान्तत्वपक्ष इति पूरणीयम् ।

**स०व्र०— तत्कथं प्रमाकरणं स्यादिति** । अनेन शब्दो न प्रमाणमिति व्यवहर्तव्यः प्रमित्यजनकत्वात् इति प्रयोगः सूचितो भवति । अन्यथा साध्याविशिष्टता स्यादिति ध्येयम् । **यत्प्रमाणं तद्विज्ञानात्मकमिति** । परोक्षविषयप्रमाणेऽयं नियम इति भावः । **बाह्यकरणप्रत्यक्षत्वादिति** । बाह्यकरणाख्यप्रत्यक्षविषयत्वादित्यर्थः । अन्तःकरणवेद्यलिङ्गज्ञाने व्यभिचारपरिहारार्थं बाह्येति विशेषणम् । अनुमानरूपबाह्यकरणवेद्ये तस्मिन्नेव व्यभिचारवारणाय प्रत्यक्षपदम् । स्वातन्त्र्येण बाह्यार्थज्ञापकजातीयं बाह्यकरणमिति परस्याशयः ।

**विठ्ठ०—** आगमप्रामाण्यवादिबौद्धमतमनुवदति **नन्वित्यादिना** । **यस्मिन् सतीति** । अविलम्बेनोत्पादकत्वस्यैव करणलक्षणत्वादिति भावः । **न प्रमा जायत इति** । व्युत्पत्तिविधुराणामिति शेषः । **तत्कथं प्रमाकरणं स्यादिति** । अनेन शब्दो न प्रमाणमिति व्यवहर्तव्यः । प्रमित्यजनकत्वादिति प्रयोगः सूचितः । अत एव तथागतमतरीत्योदाहरणपूर्वकं सत्यपीत्युपनयः । **तत्कथमिति** निगमनं च कथितमिति ज्ञेयम् । एवम् इत्यत्र हेतुत्रयेऽपिशब्दो न प्रमाणमिति साध्यमनुवर्तते ।

**चषकः—** वेदप्रामाण्यसमर्थनपरोत्तरमूलं सङ्गमयितुमाशङ्कते **नन्विति** । **यस्मिन्सतीति** । फलायोगव्यवच्छिन्नं कारणं करणमिति मतमाश्रित्येदम् । **भवत्येव** उत्पद्यत एव । **न प्रमेति** । शक्त्यप्रतिसन्दधानानामित्यादिः । **तत्कथमिति** । एतेन शब्दपक्षकप्रमानिरूपितकरणत्वाभावसाध्यकस्वघटितसामग्रीसमवधानकालीनप्रमानुत्पादकत्वलिङ्गकन्यायप्रयोगो ध्वन्यते । तत्कथमित्यवतार्य शब्दो न प्रमाणमिति व्यवहर्तव्यस्तत्प्रमित्यजनकत्वादिति प्रयोगः सूचितो भवति । अन्यथा साध्याविशिष्टता स्यादित्यपि स्थितम् । शब्दो न प्रमाणं निर्विषयत्वादित्यभिप्रेत्याह **किञ्चेति** । तद्धर्मिकतत्साध्यकज्ञानान्यत्वा(दि)हेतुकघटादिनिदर्शनकानुमानमभिप्रेत्याह **अपि चेति** । घटं निदर्शनीकृत्य तद्धर्मिणि तत्साधकहेतुद्वयं गगनपरिमाणं निदर्श्य तादृशमाकाशगुणत्वं चाभिप्रेत्याह **एवमिति** ।





**५८२ सु०— किञ्च किं शब्दोऽर्थेन संबद्धस्तं बोधयति, उतासंबद्धः ॥ आद्ये संबन्धस्तादात्म्यं, संयोगः, समवायो वा ॥ न प्रथमः (वह्न्या)अग्न्यादिशब्दोच्चारणे सति मुखदाहादिप्रसङ्गात् । वर्तमानस्य शब्दस्यातीतादिनार्थेन तादात्म्येऽर्थस्यापि वर्तमानतापत्तिः, शब्दस्य वाऽतीतत्वादिप्राप्तिः ॥ न द्वितीयः गुणत्वात् । द्रव्यत्वेऽपि मूर्तस्य क्रिययार्थसंयोगे अन्तरावस्थितार्थविषयत्वापत्तिः । सर्वगतत्वे तु सर्वार्थप्रतिपादकत्वप्रसङ्गः । सर्वथाऽतीतादिना संयोगानुपपत्तौ तदप्रतिपादकत्वं स्यात् ॥ न तृतीयः आकाशगुणस्यान्यत्र समवायायोगात् । सर्वशब्दानामाकाशार्थतापत्तेश्च । द्रव्यस्यापि मूर्तस्य वा अमूर्तस्य वा न घटादिना समवायो युज्यते ॥ असंबद्धस्य च बोधकत्वे नियामकाभावात्सर्वोऽपि सर्वं बोधयेत् ।**

**बिन्दुः—** यद्वा अत एव दूषणान्तरमाह **किञ्चेति** ।

**परि०—** उक्ताप्रामाण्यसाधकषड्हेतूनामप्रयोजकत्वनिरासाय प्रामाण्यपक्षे बाधकमाह **किं शब्द इत्यादिना** । **गुणत्वादिति** । शब्दस्येति योज्यम् । द्रव्यत्वेऽपीत्यत्राप्येवं योज्यम् । किं मूर्तः उत सर्वगतः शब्दः । आद्ये आह **मूर्तस्येति** । अन्त्ये आह **सर्वगतत्वे त्विति** । **आकाशार्थतेति** । सर्वशब्दानामाकाशसमवेतत्वेन समवायस्य सत्त्वादाकाशमात्रार्थत्वं स्यादित्यर्थः । तृतीयपक्षे दोषान्तरमाह **द्रव्यस्यापीति** । **घटादिनेति** । अयुतसिद्धत्वाभावात् । तथाचाकाशेतरसर्वपदार्थाप्रतिभास एव शब्दात्स्यादिति भावः । प्राग्विकल्पितासंबन्धपक्षं निराह **असंबद्धस्येति** ।

**यादु०—** **सर्वशब्दानामिति** । समवायेन तद्बोधकत्वाङ्गीकारादिति भावः । द्वितीयं दूषयति **असंबद्धेति** ।

**वं०प०—** **आकाशार्थतेति** । येन समवायस्तद्बोधकत्वाङ्गीकारात्सर्वेषामपि शब्दानामाकाशार्थतापत्तेः आकाशविषयकतापत्तेः । आकाशबोधजनकतापत्तेरिति यावदित्यर्थः । अतः शब्दात्संभावनामात्रेणेत्यन्वयः । उत्कटकोटिकः संशयः संभावना । तथाच शब्देन संभावनैव जायते । तन्मात्रेणैव प्रवर्तते इत्येवं शब्दस्य संशयजनकत्वेन प्रमाजनकत्वाभावान्न शब्दः प्रमाणमित्यर्थः ।

**आनन्दः—** **आकाशार्थतापत्तेश्चेति** । आकाशः अर्थो विषयो येषां ते तथा तेषां भावस्तत्ता स्यादित्यर्थः । ननु शब्दस्य द्रव्यत्वान्नाकाशगुणत्वमत आह **द्रव्यस्यापीति** । द्रव्यत्वे किममूर्तत्वममूर्तत्वं वा वक्तव्यं उभयथापि न समवायो युज्यत इत्याह **मूर्तस्येति** । घटादिना शब्दस्यावयवावयव्यादिभावाभावेन समवायो न युज्यत इत्यर्थः । तर्ह्यसंबद्धस्यैवार्थस्य शब्देन बोधनमस्तु इत्यत्राह **असंबद्धस्येति** ।





**कं०रा०— मुखेति** । दाहादिजनकवह्न्याद्यभिन्नस्य शब्दस्य मुखे सत्त्वादिति भावः । **सर्वगतत्वेति** । शब्दस्य मूर्तत्वे सर्वगतत्वे चेत्यर्थः । **सर्वशब्दानामिति** । येन समवायस्तद्बोधकत्वादिति भावः । **न घटादिनेति** । घटादेः शब्दस्य चायुतसिद्ध्यभावादिति भावः ।

**श्रीनिधि०— आकाशार्थतापत्तेरिति** । आकाशलक्षणप्रतिपाद्यवत्त्वापत्तेरित्यर्थः । सत्यं ब्रह्मज्ञानं ब्रह्मेति विधौ स्वप्रयुक्तवाक्यस्य तद्भावाभावयोरिति । स्वप्रयुक्तसर्ववाक्यजन्यज्ञाने बाधोऽस्तीति वाक्यस्य बाधे सर्ववाक्यजन्यज्ञाने बाधाभावसिद्धिः न चेत्सर्ववाक्येन बाधः तद्वाक्य एव व्यभिचारात् । एवं च त्वदभिलषितार्थस्य स्ववचनेन व्याघात इत्यर्थः ।

**वा०चं०—** उक्तहेतूनां विपक्षे बाधकाभावादप्रयोजकताशङ्काऽऽक्रान्ततया तच्छङ्कानास्पदं हेतुमाह **किञ्चेति** । वन्ह्यादीत्यादिशब्देन शस्त्रादि । दाहादीत्यत्र मुखपाटनादि ग्राह्यम् । दूषणान्तरमाह **वर्तमानस्येति** । ननु शब्दो द्रव्यं साक्षादिन्द्रियसंबन्धवत्त्वात्सङ्ख्यावत्त्वाच्च घटवत् । श्रोत्रं नित्यद्रव्यग्राहकं निरवयवेन्द्रियत्वान्मनोवदित्यादिना शब्दस्य द्रव्यत्वस्थितेर्गुणत्वमसिद्धमित्यत आह **द्रव्यत्वेऽपीति** । एवं मूर्तत्वामूर्तत्वपक्षयोः पृथग्दूषणमभिधाय पक्षद्वयेऽप्येकं दूषणमाह **सर्वथेति** । मूर्तत्वपक्षेऽमूर्तत्वपक्षेऽपीत्यर्थः । प्रथमे द्वितीयकल्पं निषेधति **असंबद्धेति** ।

**वा०र०— विपक्षे बाधकेति** । घटवदिति दृष्टान्तीकरणादिनाऽप्राप्तस्यान्यथा घटादेरपि प्रमाणत्वं स्यादित्येवंरूपस्य बाधकस्य सर्वत्र वक्तुं शक्यत्वेनानुकूलतर्कादिरवक्तव्यत्वापत्त्या तस्य बाधकत्वायोगादिति भावः । व्यवधानाच्छब्दोऽर्थेन संबद्धस्तं बोधयत्युतासंबद्ध इति प्रथमविकल्पीयद्वितीयदूषणमेतदित्याह **प्रथम इति** ।

**स०व्र०—** शब्दार्थयोस्तादात्म्याङ्गीकारे दोषान्तरमाह **वर्तमानस्येति** । संयोगः संबन्ध इति पक्षेऽपि किं शब्दो गुणो द्रव्यं वा नाद्य इत्याह **नेति** । द्रव्ययोरेव संयोग इति नियमादिति भावः । द्वितीये किं परिच्छिन्नपरिमाणः सर्वगतो वा । आद्ये क्रियावत्त्वात् व्यवहितघटेन संबध्यमानो घटशब्दो मध्यस्थितपटेनापि संबध्येतेत्याह **द्रव्यत्वेऽपीति** । द्वितीयं दूषयति **सर्वेति** । द्वितीये किं मूर्तोऽमूर्तो वा । पक्षद्वयेऽपि दोषमाह **द्रव्यस्यापीति** । प्रथमविकल्पे द्वितीयविकल्पं दूषयति **असंबद्धयोरिति** ।

**विठ्ठ०—** उक्तानां षण्णां हेतूनामप्रयोजकत्वशङ्कानिरासाय प्रामाण्याङ्गीकारे बाधकमाह **किञ्चेति** । **गुणत्वादिति** । शब्दस्य द्रव्यत्वे मूर्तत्वं स्वीक्रियते उत सर्वगतत्वम् । आद्ये मूर्तस्य गमनक्रियया दूरस्थार्थसंयोगो वाच्यः । प्रकारान्तरासंभवात् । तथात्वे च बाधकमाह **द्रव्यत्वेऽपि मूर्तस्येति** । द्वितीयमाह **सर्वगतत्वेति** । **सर्वशब्दानामिति** । शब्दानां समवायसंबन्धेनार्थबोधकत्वे आकाशमात्र एव समवेतत्वात्सर्वशब्दानां आकाशमात्रबोधकत्वापत्तेश्चेत्यर्थः । न शब्दस्याकाशगुणत्वं येनोक्तदोषः किन्तु द्रव्यत्वमेव । न च संबन्धानुपपत्तिः । द्रव्यस्यापि तस्य समवायसंबन्धनार्थबोधकत्वाङ्गीकारादित्यत आह **द्रव्यस्यापीति** । द्रव्यत्वेऽवयवावयविभावेनैव संबन्धो वाच्यः । प्रकारान्तरासंभवात् । न चासावपि संभवति तथाहि द्रव्यत्वे किं मूर्तः उतामूर्तः द्वितीये





नावयवत्वमवयवित्वं वेति सुतरां न समवायसंभावनेति सुतरां न घटादिना अर्थेन समवायो युज्यते । आद्येऽपि न घटादिना समवायः संभवति तदनवयवत्वादिति भावः ।

**चषकः**— विषयासन्निकृष्टत्वेनापि तत्र तत्सुसाधमित्याह **किञ्चेति** ।

**प्रदीपः**— ननु शब्दस्यैवेत्यादिशब्दो न प्रमाणमिति व्यवहर्तव्यः प्रमित्यजनकत्वादिति प्रथमप्रयोगे द्रष्टव्यम् । अन्यथा साध्यविशिष्टता स्यात् । शब्दार्थयोस्तादात्म्यानङ्गीकारे दोषान्तरमाह **वर्तमानस्येति** । संयोगः संबन्ध इति पक्षेऽपि किंशब्दो गुणो द्रव्यं वा नाद्य इत्याह **नेति** । द्रव्ययोगे संयोग इति नियमादिति भावः । द्वितीये किं परिच्छिन्नपरिमाणः सर्वगतो वा । आद्ये क्रियावत्त्वाद्व्यवहितघटेन संबध्यमानो घटशब्दो मध्यस्थितपटेनापि संयुज्येतेत्याह **द्रव्यत्वेऽपीति** । द्वितीयं दूषयति **सर्वेति** । पक्षद्वयेऽपि साधारणं दूषणमाह **सर्वथेति** । समवायः संबन्ध इति पक्षेऽपि शब्दो गुणो द्रव्यं वा । आद्ये दोषमाह **नेति** । द्वितीयेऽपि किं मूर्तोऽमूर्तो वा । पक्षद्वयेऽपि दोषमाह **द्रव्यस्यापीति** । प्रथमविकल्पे द्वितीयं कल्पं दूषयति **असंबद्धस्येति** ।

**५८३ सु०— किञ्च आप्तानाप्तयोः 'नद्यास्तीरे पञ्चफलानि सन्ती'ति वाक्ययोरस्ति कश्चिद्विशेषो न वा ॥ नाद्यः अनुपलम्भात् । पुरुषे विशेषोऽस्तीति चेन्न तस्य वाक्योच्चारण एवोपक्षीणत्वेन तदुत्पाद्यज्ञानेऽनुपयोगात् ॥ द्वितीये तु कथमेकस्यार्थविसंवादोऽपरस्य तु संवादः । अतः संभावनामात्रेण शब्दात्कृष्यादाविव प्रवृत्तिः ।**

**परि०**— प्रामाण्यपक्षे बाधकान्तरं चाह **किञ्चाप्तेति** । **पुरुषे विशेष इति** । आप्तत्वानाप्तत्वे इति भावः । **तदिति** । शब्दोत्पाद्यज्ञान इत्यर्थः । **संभावनेति** । उत्कटकोटिकसन्देहेत्यर्थः ।

**यादु०**— ततः किमित्यत आह **अत इति** । अनियतसंवादित्वादित्यर्थः । तथा च निष्कम्पप्रवृत्त्यजनकत्वान्न शब्दः प्रमाणमिति भावः ।

**आनन्दः**— **पुरुषे विशेष इति** । प्रवक्तृपुरुषे विशेष इत्यर्थः । तर्हि शब्दश्रवणे सति प्रवृत्तिः कथमत्राह **अत इति** ।

**कं०रा०**— **विशेष इति** । आप्तत्वानाप्तत्वरूपो विशेष इत्यर्थः । **तस्येति** । पुरुषस्य वाक्योच्चारण एवोपक्षीणत्वेन तस्य वाक्यजन्यज्ञानं प्रत्यकारणतया तद्गतविशेषस्य वाक्योत्पाद्यज्ञानगतसंवादित्वविसंवादित्वरूपवैलक्षण्यं प्रत्यप्रयोजकत्वादित्यर्थः । **संभावनेति** । उत्कटकोटिकः संशयः संभावनेत्यर्थः ।

**वा०चं०**— ननु संबन्धाभावेन शब्दस्याबोधकत्वे तद्बोधात्प्रवृत्तिसंवादो न स्यादित्यतोऽस्य बोधकत्वं वदताऽपि संवादविसंवादहेतोर्निरूपयितुमशक्यत्वात्प्रवृत्तेः संभावनामात्रहेतुकत्वं क्वचित्संवादस्य काकताली-





यत्वमकामेनापि स्वीकर्तव्यमित्याशयेनाह **किञ्चेति** । **तस्येति** । पुरुषस्य वाक्योत्पाद्यज्ञानेऽप्युपयोगाङ्गीकारे त्वन्मतेनापौरुषेयवाक्ये पुरुषाभावेन तस्य बोधकत्वं न स्यादिति भावः ।

**वा०र०**— कुतो वाक्योत्पाद्यज्ञाने पुरुषस्योपयोगो नेत्यतस्तत्र हेतुमाह **पुरुषस्येति** ।

**विठ्ठ०**— प्रामाण्ये बाधकान्तरं चाह **किञ्चेति** ।

**चषकः**— अनाप्तप्रणीतवाक्याविशेष्येणापि तत्र सुसाधमित्यभिदधाति **किञ्चेति** । एकस्य अनाप्तप्रणीतस्य विसंवादः अप्रामाण्यमपरस्य आप्तप्रणीतस्य संवादः । प्रामाण्यप्रवृत्तिजनकत्वलिङ्गकप्रतिरोधानुमानमाशङ्क्य तस्य कृष्यादिगोचरप्रवृत्तिजनकज्ञानेऽनैकान्त्यमभिधत्ते **अत इत्यादि** । निशङ्कप्रवृत्तिजनकत्वं त्वसिद्धमेवेति भावः ।

**॥ उत्तरपक्षः (शब्दप्रामाण्यसमर्थनेन तच्छङ्कानिरसनम्) ॥**

**संशयविपर्ययाजनकत्वे सति ज्ञानजनकत्वात् वेदस्य प्रामाण्यम्**—

**५८४ सु०— तदेवं शब्दस्यैवाप्रामाण्यात्कुतस्तद्विशेषस्य वेदस्य प्रामाण्यं, कुतस्तरां सिद्धरूपे ब्रह्मणि, कुतस्तमां च तन्मीमांसारम्भ इत्यत आह प्रत्यक्षवच्चेति ।**

## अनु०— प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि ॥

**चशब्दो व्याख्यानान्तरद्योतकः । न केवलं सिद्धविषयत्वं प्रामाण्यं चेति वा । अनुमानवच्चेति वा । हेतुसमुच्चये वा ।**

**परि०— व्याख्यानान्तरेति** । अतःशब्दस्य प्रयोजनसमर्थनाय कृतज्ञानप्रसादद्वारा मोक्षफलकत्वोक्तिपरत्वबन्धसत्यत्वपरत्वरूपव्याख्यानद्वयात् तथा विषयसमर्थनाय कृताद्वेदानां सिद्धब्रह्मपरत्वोक्तिपरत्वरूपव्याख्यानाच्च वेदानां यथार्थज्ञानजनकत्वरूपं यत्प्रामाण्यं तदर्थकत्वरूपव्याख्यानान्तरद्योतक इत्यर्थः ।

**गु०दी०— चशब्दो व्याख्यानान्तरद्योतक** इत्यत्र शब्दस्य प्रमाणत्वाच्चेति अतश्शब्दस्य व्याख्यानान्तरमित्यर्थः ।





**यादु०— व्याख्यानान्तरेति**। अतःशब्दस्येति शेषः।

**वं०प०— हेतुसमुच्चये वेति**। संशयविपर्ययाजनकत्वाख्यहेतुसमुचये वा चशब्द इत्यर्थः।

**आनन्दः—** मूले चशब्दवैयर्थ्यमाशङ्क्याह **चशब्द इति** । अत्र हि प्रत्यक्षवदिति दृष्टान्तोक्त्या न मानमभिप्रेतं तत्र हेतोरनुक्तत्वान्न्यूनतेत्यतो हेतुसमुच्चायकत्वेन चशब्दं व्याख्याति **हेतुसमुच्चये वेति** ।

**कं०रा०— चशब्द इति** । प्रत्यक्षवदित्यादिभाष्यमतःशब्दस्य व्याख्यानान्तरमिति द्योतनार्थश्चशब्द इत्यर्थः।

**वा०चं०—** एवं (तत्)शब्दाप्रामाण्यमुपपाद्य तत्प्रकृते बाधकत्वेन दर्शयन् भाष्यमवतारयति **तदेवमिति**। **व्याख्यानान्तरत्वेति**। सौत्रातःशब्दसंबन्धीति शेषः। अस्मिन्पक्षे वाक्यस्थपदैरन्वयालाभादाह **न केवलमिति**। अत्रापि भिन्नक्रमत्वं दोष इत्यत आह **अनुमानवच्चेति**। प्रत्यक्षरूपैकदृष्टान्तोक्त्या योग्यताबलादनुमानदृष्टान्ततायाः प्रत्येतुं शक्यत्वात्सर्वथा हेत्वनुक्तिप्रयुक्तन्यूनतापरिहाराय तत्सूचकतया चशब्दं व्याख्याति **हेत्विति**।

**वा०र०— तच्छब्दाप्रामाण्यमिति** द्वितीयान्तम् । **अस्मिन्पक्ष** इत्यादिकं निमित्तकथनं स्पष्टम् । **भिन्नक्रमत्वमिति** । चशब्दस्य पूर्वप्रयुक्तस्योत्तरपदभूतप्रामाण्यमित्येतच्छेषताया अपि वक्तुं शक्यत्वेऽपि समुच्चयाभिव्यञ्जकतया प्रामाण्यमित्यनन्तरं संबन्धस्य कर्तव्यतया भिन्नक्रमत्वेनेवेति भावः। हेत्वनुक्तेरनुमानरूप-दृष्टान्तानुक्तेश्च न साम्यमिति प्रतिपादयन्नावश्यकहेतुसमुच्चयार्थतया चशब्दं व्याचष्ट इत्याह **प्रत्यक्षरूपैकेति**।

**विट्ठ०— व्याख्यानान्तरेति**। अतश्शब्दस्येति शेषः। **हेतुसमुच्चय इति**।

**चषकः— कुतस्तरामित्यादि**। किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्ष इति घादाम्। **प्रत्यक्षवच्चेति**। तस्यैवेति षष्ठ्यन्ताद्वतिरुपमेये षष्ठीदर्शनात्। **व्याख्यानान्तरत्वेति**। मयूरव्यंसकादित्वात्समासः। अतःशब्दस्येत्यादिः।

**५८९ सु०— तथा हि ॥ शब्दाज्ज्ञानमुत्पद्यते न वा ॥ नेति पक्षेऽनुभवविरोधः । स्वक्रियाविरोधश्च; 'न शब्दोऽर्थप्रत्यायक' इति ब्रूते, परप्रत्यायनार्थं च शब्दमेव प्रयुङ्क्ते इति ॥ आद्ये स बोधः संशयो विपर्ययो वा। नाद्यः एकाकारनियतत्वात्। न द्वितीयः बाधबोध-विरहात् । सर्वत्रापि बाधाभ्युपगमे स्वप्रयुक्तवाक्यस्य तद्भावाभावयोस्स्वव्याघातात् ॥ एवं व्यवस्थिते प्रयुज्यते 'शब्दः प्रमाणं संशयविपर्ययाजनकत्वे सति ज्ञानजनकत्वात् प्रत्यक्षादिवदि'ति । न हि प्रत्यक्षादेरपि अन्यत्प्रामाण्यनियामकमस्ति ॥ नन्विदमेव प्रामाण्यमिति साध्याविशिष्टत्वम् । न । याथार्थ्यं प्रामाण्यमिति वक्ष्यमाणत्वात् ।**





**परि०**— हेतुसमुच्चय इत्युक्तं व्यनक्ति **तथा हीत्यादिना**। **एवं व्यवस्थित इति**। बोधकत्वे सन्देहाद्यजनकत्वे च सिद्धे सत्यनुमानमुच्यत इत्यर्थः। प्रत्यक्षादिवदित्युक्त्याऽनुमानवच्चेत्युक्तमपि विवृतं ध्येयम्। हेतोरप्रयोजकत्वं निराह **न हीति**। **याथार्थ्यं** यथार्थज्ञानजनकत्वम्। **वक्ष्यमाणत्वात्**। नविलक्षणत्वादित्यधिकरणे।

**गु०दी०**— **याथार्थ्यं प्रामाण्यम्** इत्यत्र ज्ञाने करणे च साधारणं याथार्थ्यमित्यर्थः।

**यादु०**— **स्वप्रयुक्तवाक्यस्येति**। सर्वत्रापि बाधोऽस्तीति वाक्यस्येत्यर्थः। आद्ये एतद्वाक्यातिरिक्त-शब्दानामबाधितार्थकत्वेन प्रामाण्यप्राप्त्या द्वितीयेऽस्यैव शब्दस्य प्रामाण्यप्राप्त्या शब्दो न प्रमाणमिति प्रतिज्ञाव्याघात इत्यर्थः। **वक्ष्यमाणत्वादिति**। युक्तिपाद इति शेषः।

**वं०प०**— **अनुभवेति**। शब्दादर्थं प्रत्येमीत्यनुभवविरोधः।

**आनन्दः**— नन्वबाधकाभावात् न शब्दप्रामाण्यमिति शङ्कायां तथा हीत्यादिना साधकोक्तिरसङ्गतेति वाच्यम्। प्रश्नपूर्वकज्ञानेन सङ्गतिसंभवात् तथाहि शब्दप्रामाण्यानङ्गीकारः किं साधकाभावाद्वा बाधकसत्त्वाद्वा। नाद्य इत्याह **तथा हीति**। स्वक्रियाविरोधमेव विशदयति **न शब्द इति**। **तद्भावाभावयोः स्वव्याघातादिति**। शब्दस्य न प्रामाण्यमित्यादि। त्वत्प्रयुक्तवाक्यस्यापि बाधाभावस्यैवाप्रमाणत्वादनेन प्रामाण्याभावबोधनासंभवा-द्वेदादिशब्दस्य प्रामाण्यापातः। बाधाभावे चास्यैव शब्दस्य प्रामाण्यापात इति। उभयथापि शब्दप्रामाण्यस्य अपरिहार्यत्वात् तत्प्रामाण्यवचनमव्याहतमित्यर्थः। अप्रयोजकत्वनिरासायाह **न हीति**।

**कं०रा०**— उत विपर्यय इति पक्षं निराह **न द्वितीय इति**। **स्वप्रयुक्तेति**। शब्दो न प्रमाणमिति स्वप्रयुक्तवाक्यस्य बाधाभावे शब्दप्रामाण्यमापततीति शब्दो न प्रमाणमित्यनेन व्याघातः। बाधाभावे तु शब्दो न प्रमाणमित्यस्यैव शब्दस्य प्रामाण्यमायातीत्युभयथाऽपि व्याघात इति भावः। यदा सर्वत्रापि बाधोऽस्तीति स्वप्रयुक्तवाक्यस्य बाधाभावे सर्वत्राबाध एवागत इति सर्वत्र बाधोऽस्तीत्यनेन व्याघातः। बाधाभावे त्वत्रैव वाक्यबाधाभावेन सर्वत्रापि बाधोऽस्तीत्यनेन व्याघात इति भावः। **शब्द इति**। अत्र वक्ष्यमाणहेतुघटितशब्दत्वं पक्षतावच्छेदकत्वेन विवक्षितम्। तेन शब्दत्वमात्रस्य पक्षतावच्छेदकत्वे शब्दाभासे बाधः। हेतोः पक्षताव-च्छेदकत्वे प्रत्यक्षस्यापि पक्षतापत्त्या तत्र सिद्धसाधनम्। अन्वयव्याप्तिग्राहकेणैव पक्षतावच्छेदकसामानाधि-करण्येन साध्यसिद्धेर्जातत्वेनानुमानवैफल्यं चेति दूषणानवकाश इति ध्येयम्। **संशयेति**। अयथार्थज्ञाना-जनकत्वे सति ज्ञानजनकत्वादिति हेत्वर्थो विवक्षितः। तेन विपर्ययाजनकत्वं नामायथार्थनिश्चयाजनकत्वम्। तत्र चायथार्थज्ञानाजन्यत्वस्यैव हेतुविशेषणत्वसंभवे शेषवैयर्थ्यमिति चोद्यानवकाश इति ध्येयम्। अत्र सत्यन्तं दुष्टेन्द्रियादौ व्यभिचारवारणाय। तावन्मात्रं चाबोधके व्यभिचरितमिति विशेष्योपादानम्। **इदमेवेति**।





अयथार्थज्ञानाजनकत्वे सति ज्ञानजनकत्वमेव प्रामाण्यमिति हेतोः साध्याविशिष्टत्वमित्यर्थः । **याथार्थ्यमिति** । याथार्थ्यमेव प्रामाण्यं तन्मुख्यं ज्ञानशब्दयोरित्यत्र याथार्थ्यस्यैव प्रामाण्यशब्दार्थत्वेन वक्ष्यमाणतया तस्माच्च उक्तहेतोर्भिन्नत्वेन न साध्यावैशिष्ट्यमिति भावः ।

**वा०चं०**— कोऽत्र हेतुरित्यतो योग्यताबलात्संशयविपर्ययाजनकत्वे सति ज्ञानजनकत्वमेवेत्याशयेन बोधकत्वमेवानभ्युपगच्छन्तं प्रत्यसिद्ध्यापत्त्या हेतोरुपपादनीयत्वाद्विशेषणविशेष्यासिद्धिपरिहारेण हेतुमुपपादयितुं प्रतिजानीते **तथा हीति** । प्रत्यायनार्थं शब्दप्रयोगक्रियया शब्दस्य प्रत्यायनसाधनता प्राप्तेति शब्दो नार्थप्रत्यायक इति वाक्यार्थस्यार्थप्रत्यायकत्वाभावस्य तादृशक्रियया विरोध इत्याशयेन स्वक्रियाविरोधमुपपादयति **न शब्द इति** । **सर्वत्रापीति** । सर्वं शब्दजन्यं ज्ञानं बाधितं सर्वः शब्दोऽप्रमाणमित्यादि स्वप्रयुक्तशब्दजन्यबोधस्य बाधितत्वे शब्दजन्यज्ञानादेरबाधितत्वाद्यापत्तिः । अबाधितत्वे त्वस्यैवाबाधितत्वेन प्रतिहतप्रमाणत्वात्सर्वशब्दजन्यज्ञान-बाधितत्वादिरूपस्वाभिमतासिद्धिरिति स्वव्याघातादित्यर्थः । यद्वा शिष्यादीन्प्रति तद्बोधाय त्वत्प्रयुक्त-यत्किञ्चिद्वाक्यजन्यज्ञानस्य बाधितत्वे तद्वाक्यप्रयोगानुपपत्तिः । अबाधितत्वे च सर्वत्रापि बाध इत्युक्तहानिरिति भावः । विपक्षबाधकसूचनेनाप्रयोजकत्वं परिहरति **न हीति** ।

**वा०र०**— **बोधकत्वमेवेति** । उपलक्षणमेतत् । बोधकत्वमङ्गीकृत्यापि संशयादिजनकत्वमङ्गीकुर्वन्तं प्रत्यपीत्यपि द्रष्टव्यम् । असिध्यापत्त्या हेतुविशेषणविशेष्ययोरसिध्यापत्तेरित्यर्थः । **न शब्दोऽर्थेति** मूले स्वक्रिया-विरोधस्य स्पष्टमप्रतीतेस्तं व्युत्पादयंस्तद्वाक्यमवतारयति **प्रत्यायनार्थमिति** । अनेन मूकोऽहमिति वाक्यार्थस्य वचनकर्तृत्वाभावस्य परज्ञापनार्थं मूकोऽहमिति वचनक्रियया वचनकर्तृत्वप्राप्त्या स्वक्रियाविरोधवत् प्रत्याय-नार्थशब्दप्रयोगस्यावश्यकत्वात् । तेन च प्रत्यायनसाधनताप्राप्तेत्यादिप्रकारेण स्वक्रियाविरोध इत्युक्तं भवति । **अप्रमाणमित्यादीति** । आदिपदेन शब्दो न बोधक इत्यादेः सङ्ग्रहः । ज्ञानादेरित्यादिपदेन सर्वशब्दपरिग्रहः । अबाधितत्वादीत्यादिपदेन प्रामाण्यादिपरिग्रहः । **अस्यैवेति** । सर्वं शब्दजन्यं ज्ञानं बाधितमित्यादिशब्दजन्यबोधन-स्यैवेत्यर्थः । अबाधितत्वेनेत्यतःपरं तद्वाक्यानां तदंश इति शेषः । तथा सर्वं शब्देत्यादिशब्दस्य स्वजन्यबोधांशे प्रतिहतं प्रमाणत्वमिति सर्वशब्दैर्जन्यज्ञानस्य बाधितत्वमित्यादिरूपस्वाभिमतार्थसाधकत्वानुपपत्त्या तदर्थसिद्धिरिति स्वव्याघातादित्यर्थः । एवं सर्वशब्देत्यादिवाक्यपुरस्कारेण स्वव्याघातोपपादने एतद्वाक्यस्येत्यनुक्त्वा स्वप्रयुक्त-वाक्यस्येति सामान्येनोक्तिर्न स्वरसेत्यतः सामान्योक्तेरप्युक्तवाक्यपुरस्कारेणार्थसंभवान्न दोष इत्यभिप्रेत्य तमर्थ-मङ्गीकृत्यैव वाक्यान्तरपुरस्कारेणापि स्वव्याघातमुपपादयति **यद्वेति** । **विपक्षे बाधकेति** । अन्यथा प्रत्यक्षादेरपि प्रामाण्यं न स्यात् । तन्नियामकस्योभयत्राविशेषेऽर्धजरतीयायोगादिति बाधकेत्यर्थः ।

**स०व्र०**— स्वक्रियाविरोधमुपपादयति **न शब्द इति** । **सर्वत्रापीति** । सर्वत्रापि बाधोऽस्तीति भवत्प्रयुक्तं वाक्यं बाधितमबाधितं वा । आद्ये अर्थप्रत्यायकं न स्यात् । ततश्च तत्प्रयोगो व्यर्थः स्यात् । द्वितीये वाक्यं बाधितमिति वचनं कथं स्यादित्यर्थः ।



**विठ्ठ०**— तदेव व्यनक्ति **तथा हीत्यादिना** । ननु कथं बाधविरहः मया वाक्यजन्यज्ञाने सर्वथापि बाधाभ्युपगमादित्यत आह **सर्वत्रापीति** । सर्वत्रापि वाक्ये बाधोऽस्तीति स्वप्रयुक्तवाक्ये बाधोऽस्ति न वा आद्यस्यैव बाधितत्वेन सर्वत्र बाधाभावप्राप्त्या स्वोक्तिव्याघातः । द्वितीयेऽत्रैव बाधाभावेन सर्वत्रापि बाधोऽस्तीति सुतरां व्याहतमिति भावः । हेतोरप्रयोजकतां परिहरति **न हीति** । अन्यथा प्रत्यक्षादेरप्यप्रामाण्यं स्यादिति भावः ।

**चषकः**— **स्वप्रयुक्तवाक्यस्येति** । सर्वत्रापि बाधोऽस्तीत्यानुपूर्वीकस्येत्यर्थः । तद्भावे स्वातिरिक्त-शब्दमात्रप्रामाण्यापत्त्या तदभावे च स्वस्यैव तदापत्त्या शब्दो न प्रमाणमिति प्रतिज्ञाव्याघात इत्यर्थः । सन्देह-विपर्यासजनकेऽनैकान्त्यविधूननाय हेतुभूताभावप्रतियोगिनि निरूपितत्वप्रत्यासत्त्या विशेषणीभवत्प्रत्यायक-पदद्वयोपादानम् । ज्ञानसामान्यानुत्पादके तद्वारणाय विशेष्यदलम् । ननु यौगपद्येन घटो द्रव्यमिन्द्रियाणि भौतिव ानि न वेति वाक्यद्वयश्रवणादव्यवहितोत्तरक्षणोत्पन्नांशिकसंशयात्मकान्वयबोधजनके घटो द्रव्यमित्यत्र हेत्ववृत्त्या प्रकृतपक्षतावच्छेदकसामानाधिकरण्येनासिद्ध्यापत्त्या लोहितो वह्निर्लोहिता जपेति समूहालम्बनांशिकविपर्यासा-त्मकान्वयधीजनके लोहिता जपेत्यत्र तत्प्रसङ्गेन च नायं हेतुः साधीयान् । न च परोक्षज्ञानं निश्चयात्मक-मेवेति सिद्धान्तान्नाद्यस्थले तदापत्तिः समञ्जसेति वाच्यम् । तत्सिद्धान्तरस्थनैयायिकेनान्तरस्तद्धर्मोपदेशादित्यादौ विरुद्धेन्द्रादिनानाकोटिप्रापकाणां बलाबलनिश्चयासमवधानदशामनवधारणज्ञानेन सिद्धान्त्यभिमतावधारणासिद्ध्या पूर्वपक्षोपगमेन सिद्धान्तिनाऽपि व्याख्यातत्वान्न च संशयविपर्ययपदाभ्यां प्रकृतप्रामाण्यसन्देहतद्विपर्यययोरेव विवक्षणान्न क्षतिरिति वाच्यम् । तथा सति दुष्टेन्द्रियादावनैकान्त्यस्य दुर्वारतापत्तेरिति चेन्मैवं कोटिद्वयप्रकारता-घटितधर्मावच्छिन्नसन्देहवृत्तिजन्यतानिरूपितजनकत्वाभावे सति स्वव्यधिकरणवृत्तिप्रकारतानिरूपितविशेष्यता-घटितधर्मावच्छिन्नविपर्यासवृत्तिजन्यतानिरूपितजनकत्वाभावस्याभिप्रेतत्वात् । दर्शितस्थलयोश्च तादृशहेतुसत्ताया निरवग्रहतयोक्तक्षत्यनवकाशात् । न च नीलो घट इत्यादिवाक्यानां प्रमाभ्रमसाधारणभेदसंसर्गावच्छिन्ननीलत्वा-वच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दधीत्वाद्यवच्छिन्नं प्रत्येव हेतुतायाः स्थिततया भ्रमीयविशेष्यताया अप्यवच्छेदकतया तादृशासिद्धिर्दुष्परिहरेति वाच्यम् । स्वसमानाधिकरणवृत्तिप्रकारतानिरूपित-विशेष्यत्वानवच्छिन्नत्वस्यापि तादृशजन्यतायां निवेशात् । न च लोहितो वह्निरित्यन्वयबोधे यत्र वह्नित्वेन जपैवाभात् तादृशविपर्यासवृत्तिजन्यतायां स्वसमानाधिकरणवृत्तिप्रकारतानिरूपितजपावृत्तिविशेष्यतायाऽप्यव-च्छेदकतया तत्रानैकान्त्यं दुर्वारमिति वाच्यम् । स्वसमानाधिकरणपदेन स्वावच्छेदकाधिकरणवृत्तित्वस्याभि-प्रेतत्वात् । लौहित्यस्य च तादृशतया क्षत्यभावादिति निपुणतरं सुधीभिर्भावनीयम् । **साध्याविशिष्टत्वमिति** । अथ स्वावच्छेदकाभिमतधर्माधिकरणवृत्तिप्रकारतानिरूपितविशेष्यताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकत्वं हि प्रामाण्यं, हेतूकृतं तु नैवमिति कथमेतच्छङ्कावतार इति चेन्मैवम् । सन्देहविपर्यासान्यज्ञानत्वस्यैव प्रमारूपत्वेन तद्धेतुत्वेऽवधृते प्रामाण्यमप्यवधृतमेव । ग्राहकसामग्रीयौगपद्यनियमादित्याशयात् । **वक्ष्यमाणत्वादिति** । युक्तिचरण इत्यादिः ।





**प्रदीपः**— स्वक्रियाविरोधमुपपादयति **न शब्द इति**। **सर्वत्रापीति**। भवत्प्रयुक्तं वाक्यं बाधितमबाधितं वा। आद्येऽर्थप्रत्यायकं न स्यात्। ततश्च तत्प्रयोगो व्यर्थः स्यात्। द्वितीये वाक्यं बाधितमिति वचनं कथं स्यादित्यर्थः।

**५८६ सु०— यदुक्तं 'सत्यपि शब्दे प्रमानुदयादप्रमाणं शब्द' इति। तदयुक्तम्। सत्यपि चक्षुषि रूपज्ञानानुत्पत्तेः, सत्यपि धूमेऽग्निज्ञानानुदयात्प्रत्यक्षानुमानयोरप्यप्रामाण्यप्रसङ्गात्॥ अथ ब्रूषे 'नेन्द्रियमात्रं प्रत्यक्षं किन्त्वन्तःकरणाधिष्ठितं, विषयसन्निकृष्टं च। तथा न धूममात्रमनुमानम् अपि तु व्याप्तिपक्षधर्मतावत्त्वेन अनुसंहितम्। न च तस्मिन्सति न प्रमोत्पद्यत' इति तर्हि वयमपि ब्रूमो न शब्दमात्रं प्रमाणम्, किन्तु श्रुतोऽनुस्मृतसंबन्धश्च। न चैवंविधे शब्दे सति न प्रमोत्पद्यते॥ तथा च शब्दमात्रपक्षीकरणे सिद्धसाधनम्। विशिष्टशब्दपक्षीकारे चासिद्धिरिति॥ तदिदमुक्तं प्रत्यक्षवच्चेति।**

**परि०**— **विशिष्टशब्दपक्षीकारे चेति**। श्रुतमनुस्मृतसंबन्धं च शब्दं पक्षीकृत्य तादृशशब्दो न प्रमाणं प्रमाव्यभिचारित्वादित्युक्तौ त्वसिद्धिरित्यर्थः। **प्रत्यक्षवच्चेतीति**। चशब्दादनुमानवदिति च ग्राह्यम्।

**यादु०**— **विशिष्टशब्दपक्षीकार इति**। श्रुतानुस्मृतसंबन्धशब्दपक्षीकार इत्यर्थः। **असिद्धिरिति**। सत्यपि शब्दे न प्रमा जायत इत्युक्तप्रमाऽजनकत्वहेतोरसिद्धिरित्यर्थः। **तदिदमुक्तमिति**। चशब्दस्यानुमानमित्यर्थकतया व्याख्याततत्वादिति भावः। एवमग्रेऽपि।

**कं०रा०**— **शब्दमात्रेति**। शब्दो न प्रमाणं तस्मिन्सत्यपि प्रमानुत्पत्तेरित्यत्र शब्दमात्रपक्षीकरणेंऽशतः सिद्धसाधनम्। अश्रुते विस्मृतशक्तिके च शब्दे साध्यस्य सिद्धत्वात्। श्रुतत्वानुस्मृतसङ्गतिकत्वविशिष्टशब्दपक्षीकारे च हेतोरसिद्धिरित्यर्थः। नन्वेकस्य पदस्य श्रुतस्यानुस्मृतसङ्गतिकस्यापि प्रमानुत्पादकत्वात्कथमसिद्धिरिति चेन्मैवम्। वक्ष्यमाणरीत्या स्मृतेरपि प्रमात्वेनैकस्यापि पदस्य पदार्थस्मारकतया प्रमोत्पादकत्वस्यैव तत्र सत्त्वाच्छब्दस्यापि परोक्षविषयत्वे शब्दानुमानयोः साजात्यं स्यात्।

**वा०चं०**— एवं स्वपक्षसाधनकथनपरत्वेन मूलं व्याख्याय यथा प्रत्यक्षानुमानयोरेतद्बाधकपरिहारेण प्रामाण्यं तथा शब्देऽपीत्यर्थमभिप्रेत्यैतद्बाधकपरिहारेऽप्येतदेव मूलं व्यापारयिष्यन्प्रत्यक्षानुमानयोरेतद्बाधकाप्रसक्तौ तत्परिहारप्रकारस्यानुपपन्नत्वे तत्प्रकारस्य शब्देऽसंभवे वा तथा मूलस्य योजयितुमशक्यत्वात्प्रत्यक्षादौ तत्प्रसक्त्यादि दर्शयितुमाह **यदुक्तमित्यादिना**। एवमुत्तरत्रापि द्रष्टव्यम्। अत्र चक्षुषीति धूम इतिवत् उदाहरणतयैवोपादानं न तु





चाक्षुषप्रत्यक्षस्येत्यादिवक्ष्यमाण इवात्रापि प्रत्यक्षमात्रोपादानासंभवाभिप्रायेणेति बोध्यम् । अनुस्मृतसंबन्धश्चेत्यत्र चशब्देनाकाङ्क्षादिमत्तया प्रतिसन्निहितत्वरूपानुक्तस्यापि समुच्चयो द्रष्टव्यः । नन्वेतावताऽपि शब्दो न प्रमाणं सत्यपि तस्मिन्प्रमाऽनुदयादित्यनुमाने निष्कृष्य दूषणं नोक्तं स्यादित्यतो विकल्प्य कल्पभेदेनाभिमतदूषणं योजयति **तथा चेति** ।

**वा०र०— स्वपक्षेति** । शब्दप्रामाण्यसाधनप्रकारकथनपरत्वेनेत्यर्थः । **एतद्बाधकेति** । सत्यपि तस्मिन्कार्यानुदयादित्येतदनूद्यमानबाधकेत्यर्थः । अप्रसक्तावित्यादि सप्तम्यन्तद्वयस्य तथा मूलस्येत्युत्तरेण संबन्धः । **एवमिति** । यदुक्तं विषयाभावादित्यादिग्रन्थ इत्यर्थः । चक्षुषीति विशिष्योपादानेन तन्मात्रमत्र विवक्षितमिति भ्रान्तिवारणायाह **अत्र चक्षुषीति** । धूम इतिवदिति वदता धूमग्रहणमनुमानमात्रोपलक्षणमिति व्याख्येयमिति सूचितम् । **वक्ष्यमाण इवेति** । तथा सति चाक्षुषेत्युत्तरत्र चक्षुर्मात्रस्यैव विवक्षिततायाः स्पष्टत्वादिति भावः । **अभिप्रायेणेति** । अत एव वक्ष्यति नेन्द्रियमात्रमितीन्द्रियमिति पुरस्कारेणेति हृदयम् । **नेन्द्रियमात्रमिति** मूलम् । केवलमितीन्द्रियमित्यर्थः । तेन किन्तु सन्निकृष्टमिन्द्रियमिति संबन्धसंभवः । धूममात्रमित्यत्र तु लिङ्गमित्यधिकरणात्केवलं धूमरूपं लिङ्गं नानुमानं किन्तु अनुसंहितधूमरूपं लिङ्गमिति योजनायाः अभिप्रेतत्वान्न विशिष्टान्वयायोगो यथाश्रुते व्याख्याने च लिङ्गव्यत्यास इति लिङ्गावकाश इति ज्ञेयम् । **अनुक्तस्यापीति** । अपिपदं न केवलं श्रुत इति पूर्वोक्तस्येत्यर्थकं विकल्प्य कल्पभेदेनेति विकल्पपूर्वकं पक्षभेदेनेत्यर्थः ।

**स०व्र०— विशिष्टशब्दपक्षीकार इति** । श्रुतानुस्मृतसंबन्धशब्दपक्षीकार इत्यर्थः । **तदिदमुक्तमिति** । चशब्दस्य अनुमानवदित्यर्थकतया व्याख्यातत्वादिति भावः । एवमग्रेऽपि ।

**विट्ठ०— शब्दमात्रेति** । अश्रुता ननु स्मृतसंबन्धशब्दस्यापि पक्षीकरणे तस्य प्रमां प्रत्यकरणत्वात् सिद्धसाधनत्वं श्रुतानुस्मृतसंबन्धविशिष्टशब्दपक्षीकारे तत्र प्रमोदयसद्भावादुक्तहेतोरसिद्धिरित्यर्थः । **तदिदमुक्तमिति** । चशब्दस्यानुमानवदित्यप्यर्थकत्वाद्यथार्थसन्निकर्षादिमत एवेन्द्रियस्य प्रमाकरणत्वं यथा वा व्याप्त्यादिमत एव धूमादेरनुमानत्वं तथा श्रुतानुस्मृतसंबन्धस्यैव शब्दस्य प्रमाणत्वमिति एवमेव एतदप्याह । प्रत्यक्षवच्चेत्यादावुत्तरत्र मन्तव्यम् ।

**चषकः— अनुसंहितं** व्याप्तिपक्षधर्मताप्रकारकानुसन्धानविषयीभूतम् । **विशिष्टशब्दपक्षीकार इति** । विषयताप्रत्यासत्त्या शक्तिग्रहावच्छिन्नशब्दपक्षीकार इत्यर्थः ।

**प्रदीपः— तथा चेति** । किं शब्दः प्रमाणमिति साध्यते उत श्रुतः अनुस्मृतसंबन्धः शब्दः प्रमाणमिति । आद्ये भागे सिद्धसाधनं भागासिद्धिश्च श्रुतानुस्मृतसंबन्धशब्दस्यापि पक्षीकारात् । द्वितीये विशिष्टस्य प्रमाजनकत्वाभावो नास्तीति स्वरूपासिद्धिरित्यर्थः ।





**५८७ सु०—** **यदुक्तं 'विषयाभावान्न शब्दः प्रमाणमि'ति । तदप्ययुक्तम् । तथा सति चाक्षुषप्रत्यक्षस्यापि अप्रामाण्यप्रसङ्गात् । तस्यापि हि 'परोक्षोऽपरोक्षो वा विषयः । नाद्यः तस्यानुमानविषयत्वात् । न द्वितीयः तस्य श्रोत्रादिविषयत्वादि'ति वक्तुं शक्यत एव ॥ तत्र चैवं वक्तव्यम् । उत्पद्यते तावच्चक्षुषा 'शुक्लोऽयं पट' इति प्रमा । तथा च अपरोक्ष-त्वेऽपि विषयस्य श्रोत्राद्यविषयत्वाद्युक्तं तत्र चक्षुषः प्रामाण्यम् ॥ किञ्च प्रयोजनाभावेन न स्पष्टदृष्टं वस्तु निराकर्तुं शक्यते सर्वापलापप्रसङ्गात्; किन्तु वस्तुदर्शनात्प्रयोजनमपि किञ्चित्कल्पनीयमिति । तदेतच्छब्देऽपि समानम् । 'परोक्षोऽपि स तादृशः कश्चिद्विषयो यो नानुमानस्य विषय' इति वक्ष्यामः ॥ एतदप्युक्तं प्रत्यक्षवदिति ।**

**परि०—** **एवं वक्तव्यम्** इत्यस्य **कल्पनीयम्** इत्यनेनान्वयः । **प्रयोजनाभावेनेति** । अनुमानविषयश्रोत्रादिविषयाभ्यां विषयान्तरकल्पने प्रयोजनाभावेनेत्यर्थः । **वक्ष्यामः** । न विलक्षण-त्वनये 'न हि धर्मादिसिद्धिः स्यादि'त्युत्तरवाक्ये । 'आसमन्ताद्गमयति धर्माधर्मौ परं पदम् । यच्चाप्यतीन्द्रियं त्वन्यत्' इत्युपासनापादे चेति भावः ।

**गु०दी०—** **तत्र च चक्षुषः प्रामाण्यम्** इत्यस्य अपरोक्ष एवावान्तरवैजात्यमङ्गीकृत्येति शेषः । **सर्वापलापप्रसङ्गात्** इत्यत्र तदानीमेवोत्पन्नविनष्टघटपटादिरूपसर्वेत्यर्थः ।

**यादु०—** **सर्वापलापेति** । स्पष्टदृष्टकण्टकशौक्ल्याद्यपलापप्रसङ्ग इत्यर्थः । **वक्ष्याम इति** । उपासनापादे आ समन्ताद्गमयति धर्माधर्मौ परं पदम् यच्चाप्यतीन्द्रियं त्वन्यदित्यत्रेति शेषः ।

**वं०प०—** ननु घटे शौक्ल्यमेव नास्ति प्रयोजनाभावादतो न तत्प्रत्यक्षस्य विषय इत्यत आह **किञ्चेति** । **सर्वेति** । कण्टकशौक्ल्यादीत्यर्थः । **किन्त्विति** । तथाच घटशौक्ल्यसद्भावात्तच्चक्षुषो विषय इति कल्पनीयमित्याशयः । **चक्षुरादीनामिति** । चक्षुःश्रोत्रादीनामपरोक्षज्ञानजनकत्वसाम्येन प्रत्यक्षत्ववच्छब्दानुमानयोरपि परोक्षज्ञानजनकत्व-साम्यादेकजातीयत्वं स्यादित्यर्थः ।

**आनन्दः—** न द्वितीय इत्याह **यदुक्तमित्यादीति** । ननु रूपाद्यन्यथानुपपत्त्या चक्षुःप्रामाण्यकल्पनं कुतः । श्रोत्राद्यविषयत्वात्प्रयोजनाभावाच्च तदभाव एव किं न स्यादित्यत आह **किञ्चेति** । ननु विषमोऽयमुपन्यासः श्रोत्राद्यविषयस्य चक्षुर्मात्रगोचरस्य रूपादेः सद्भाववत्प्रकृतोऽनुमानाद्यगोचरस्य शब्दमात्रगोचरस्य वस्तुनोऽभावा-दित्यत आह **परोक्षोऽपीति** ।





**वा०चं०—** अत्रापरोक्षविषयकप्रमाणान्तराभावेन प्रत्यक्षमात्रे परोक्षादिविकल्पमुखप्रवृत्तदूषणानुपपत्तेः परोक्षेऽवान्तरभेदविवक्षया शब्दप्रामाण्यस्य व्युत्पादयिष्यमाणत्वाच्च प्रत्यक्षेऽवान्तरभेदविवक्षया तद्दूषणं तत्परिहारं च प्रवर्त्य तद्वदेव परोक्षेऽप्यवान्तरभेदविवक्षया तत्परिहारसाम्यं व्युत्पादयिष्यन्मूलस्थप्रत्यक्षपदं तद्विशेषपरमित्याशयेनाह **चाक्षुषेति**। एवं विशिष्यासङ्कीर्णविषयं प्रदर्श्य सामान्यतोऽसङ्कीर्णविषयकल्पनाप्रकारं दर्शयति **किञ्चेति**। चक्षुषा जायमानघटादिज्ञानस्यानुभवसिद्धत्वात्त्वगादिनाऽपि तत्सिद्ध्या प्रयोजनाभावेन चक्षुषः प्रामाण्यनिरासे प्रयोजनशून्यस्पष्टदृष्टवस्तुमात्रापलापापत्त्याऽसङ्कीर्णविषयकल्पनया तत्सिद्धिः प्रयोजनतया कल्पनीयेति भावः। धर्माधर्मस्वर्गनरकादिप्रमायाः शब्दाज्जायमानत्वात्परोक्षत्वेऽपि विषयस्यानुमानाविषयत्वाद्युक्तं तत्र शब्दप्रामाण्यम्। वह्निः पर्वतेऽस्तीत्याद्याप्तवाक्याज्ज्ञानादेः स्पष्टदृष्टतयाऽपलापानर्हत्वात्तदनुसारेणापूर्वविषयस्यापि कल्पनीयत्वाच्चेति समाधानं शब्देऽपि समानमित्याह **तदेतदिति**। ननु रूपादेः श्रोत्राद्यविषयत्ववद्वह्निरनुमानाविषयत्वानुपपत्तेरसङ्कीर्णविषयाभावान्न चक्षुषा शब्दस्य साम्यमित्यतः शास्त्रयोनिसूत्रे धर्मादावप्यतीन्द्रियार्थे ईश्वररूपात्यलौकिकाथ च केवलानुमानप्रवृत्त्यभावस्योपपादयिष्यमाणत्वान्नानुपपत्तिरित्याशयेनाह **परोक्षोऽपीति**।

**वा०र०— अत्रापरोक्षेति**। विषयाभावेन शब्दप्रामाण्याक्षेपनिराकरणपरतया प्रत्यक्षवच्चेत्येतद्योजनावसर इत्यर्थः। अपरोक्षविषयकेत्यादेरयमर्थः। प्रत्यक्षपदं चक्षुरादिसर्वप्रत्यक्षपरं न भवति। तथात्वे हि प्रत्यक्षस्य परोक्षो वाऽपरोक्षो वा विषयो वाच्यः। तत्र नाद्यः तस्यानुमानविषयत्वात्। नान्त्यः तस्यापरोक्षविषयकप्रमाणान्तरविषयत्वादिति परोक्षादिविकल्पपूर्वकदूषणानुपपत्तिप्रसङ्गात्। प्रत्यक्षातिरिक्तापरोक्षविषयकप्रमाणान्तराभावेन तद्विषयत्वेनान्यथासिध्युद्भावनानुपपत्तेः। दार्ष्टान्तिके शब्दे परोक्षेऽप्यवान्तरभेदविवक्षया प्रामाण्यस्य शास्त्रयोनिसूत्रे धर्माद्यतीन्द्रियार्थविषयकत्वप्रतिपादनेन व्युत्पादयिष्यमाणत्वाच्च। तस्मात् दृष्टान्तेऽप्यवान्तरभेदविवक्षयैव विकल्पपूर्वकदूषणप्रवृत्त्यादेर्वक्तव्यतया मूलस्थं प्रत्यक्षपदं तद्विशेषपरमित्याशयेन प्रत्यक्षेऽवान्तरभेदविवक्षया दूषणं तत्परिहारं च प्रवर्त्य तद्वदेव परोक्षेऽप्यवान्तरभेदविवक्षया तद्दूषणपरिहारसाम्यं व्युत्पादयिष्यन्नाहेति। चक्षुषेत्यादि अनुभवसिद्धत्वादित्यन्तेन स्पष्टदृष्टमनुभवसिद्धत्वात्तेषां घटादिज्ञानमिति व्याख्यातं भवति। प्रयोजनाभावेनेत्यस्योपपादनं **त्वगादिनापि**। **तस्य** घटादिज्ञानस्य। **सिध्या प्रयोजनाभावेनेति**। निराकर्तुमित्युक्तनिराकरणविषयप्रदर्शनम्। **चक्षुषः प्रामाण्यनिरास इति**। सर्वापलापेत्येतस्य सर्वपदसङ्कोचेन व्याख्यानं प्रयोजनशून्यस्पष्टदृष्टवस्तुमात्रेति। प्रयोजनमपि कल्पनीयमित्यस्योपपादनमसङ्कीर्णविषयकल्पनयेत्यादि। **तत्सिद्धिः**। असङ्कीर्णविषयसिद्धिः यथा रूपादिविशिष्टतया घटादिरसङ्कीर्णो विषय इत्यादि ज्ञेयम्। तदेतदित्यस्यैवं विशिष्यासङ्कीर्णविषयकत्वसामान्यतश्चासङ्कीर्णविषयत्वं शब्देऽपि समानमित्यर्थं मनसि निधाय तदुभयमुपपादयति **धर्माधर्मेत्यादिना**। तत्र धर्माधर्मेत्यारभ्य प्रामाण्यमित्यन्तं विशिष्यासङ्कीर्णविषयप्रदर्शनम्। वह्निरित्यादिकं सामान्यतोऽसङ्कीर्णविषयप्रदर्शनमिति विवेकः। **ज्ञानादेः** इत्यादिपदेन प्रवृत्त्यादिपरिग्रहः। अपूर्वत्वं नामानुमानविषयत्वं तादृशश्च स्वातन्त्र्येण सर्वार्थविषयकागमस्य धर्मादिविषयो द्रष्टव्यः।





**विठ्ठ०— एवं वक्तव्यमित्यस्य कल्पनीय**मितीत्यत्रत्येतिशब्देन संबन्धः । **वक्ष्याम इति** । न हि धर्मादिसिद्धिः स्यादित्युत्तरग्रन्थे (जिज्ञासाधिकरणे) नविलक्षणत्वाधिकरणे चेत्यर्थः ।

**चषकः— सर्वापलापेति** । स्फुटप्रतीतकण्टकशौक्ल्याद्यपलापेत्यर्थः । **वक्ष्याम इति** । उपासनाचरणे आसमन्ताद्गमयति धर्माधर्मौ परं पदमित्यत्रेत्यादिः ।

**५८८ सु०— तथाऽपि चक्षुरादीनां प्रत्यक्षत्ववच्छब्दानुमानयोरेकजातीयत्वं स्यादिति चेत् । तत्किं सर्वथोत यथाकथञ्चित् अथानुमानत्वेन । नाद्यः चक्षुरादावप्यभावात् । न द्वितीयः इष्टापादनात् । न तृतीयः वैलक्षण्यस्यापि वक्ष्यमाणत्वात् ।**

**परि०— वक्ष्यमाणत्वादिति** । 'स्वत एवागमस्य हीत्यत्र स्वतः स्वेनैव रूपेण नत्वनुमानत्वेनेति व्याख्यानेन वक्ष्यमाणत्वादित्यर्थः ।

**यादु०— सर्वथेति** । सर्वधर्मैरित्यर्थः । **वक्ष्यमाणत्वादिति** । युक्तिपादादौ व्याप्त्यादिप्रतिसन्धानाभावेऽपि प्रमापकत्वरूपवैलक्षण्यस्य वक्ष्यमाणत्वादित्यर्थः ।

**वं०प०— चक्षुरादाविति** । चक्षुष्ट्वश्रोत्रत्वादिना वैजात्यसद्भावेन सर्वथैकजातीयत्वाभावादित्यर्थः । **इष्टापादनादिति** । अत्रापि प्रमाणत्वेनैकजातीयतायाः सत्त्वादित्याशयः ।

**कं०रा०—** अपरोक्षविषयेषु चाक्षुषस्पार्शनादिष्वेकजातीयत्वस्य दर्शनादित्याशयेन शङ्कते **तथाऽपीति** । **तत्किमिति** । सर्वथा सर्वप्रकारेण तदेकजातीयत्वमापाद्यते उत यथाकथञ्चिदेकजातीयत्वमथानुमानत्वेनैकजातीयत्वमित्यर्थः । **चक्षुरादाविति** । चाक्षुषस्पार्शनादिष्वपि चाक्षुषत्वस्पार्शनत्वादिरूपवैजात्यस्य सत्त्वेन सर्वथैकजातीयत्वस्याभावादित्यर्थः । **इष्टेति** । परोक्षविषयत्वेन शब्दानुमानयोरेकजातीयत्वस्यास्माभिरङ्गीकृतत्वेन यथाकथञ्चिदेकजातीयत्वापादनमनिष्टापादनमिति भावः । **वैलक्षण्यस्येति** । शब्दस्य शब्दत्वेनैव प्रामाण्यं नानुमानविधयेत्यनुमानात्तस्य वैलक्षण्यस्यापि समर्थयिष्यमाणत्वादित्यर्थः ।

**श्रीनिधि०— इष्टापादनादिति** । परोक्षविषयकत्वेन प्रमाणत्वेन वा संभवादिति भावः । **न तृतीय इति** । नन्वयं नाद्याद्भिद्यत इति चेन्न तद्विषयापेक्षया अन्यूनातिरिक्तविषयत्वे सर्वथा एकजातीयत्वम् । यथा चक्षुषश्चक्षुरन्तरेण । न घ्राणादिना । तदपेक्षया अन्यूनातिरिक्तविषयत्वेऽपि तदनन्यवृत्तिधर्मवत्वे मुख्यमेकजातीयत्वम् । यथा चक्षुष एवं घ्राणादिनिष्ठप्रत्यक्षवत्वेन । अनुमानत्वेन एकजातीयत्वं तु द्वितीयपक्षेऽन्तर्भवति । **नाद्य इति** । भेदात् । **वैलक्षण्यस्यापि वक्ष्यमाणत्वादिति** । तथा च तदनन्यवृत्तिधर्मवत्त्वं नास्तीति भावः ।





**वा०चं०— वैलक्षण्यस्यापीति** । शब्दे व्याप्तिबलेनार्थगमकत्वाभावस्य वाक्यवाक्यार्थयोर्देशतः कालतश्चान्वयव्यतिरेकाभावादिप्रतिपादनेन युक्तिपादे प्रतिपादयिष्यमाणत्वादित्यर्थः ।

**वा०र०— युक्तिपाद इति** । तस्मात्सैवानुमानतेति भाष्यव्याख्यावसर इति शेषः ।

**स०व्र०— न तृतीयः वैलक्षण्यस्यापि वक्ष्यमाणत्वादिति** । गौरवं कल्पनेऽन्यथेत्येतदनुव्याख्यानव्याख्यानावसर इति शेषः ।

**विठ्ठ०— वैलक्षण्यस्यापीति** ।

**चषकः— वक्ष्यमाणत्वादिति** । युक्तिपादे व्याप्त्यादिप्रतिसन्धानाभावकालीनफलोत्पादकतारूपवैधर्म्यस्याभिधास्यमानत्वादित्यर्थः ।

**५८९ सु०— किञ्चैवं विषयविकल्पेन शब्दनिराकरणे शब्दमुपादायानुमानमपाकुर्वन्तं प्रति किं वक्तव्यम् । अनुमानाप्रामाण्ये सकललोकव्यवहारोच्छेदप्रसङ्गात् । परचित्तवृत्त्याद्यसङ्कीर्णविषयदर्शनात्परोक्षविषयत्वेऽपि शब्दाद्भिन्नं तदङ्गीकरणीयमिति वाच्यमिति चेत्; सममेतच्छब्देऽपि । एतदपि चशब्देनोक्तमनुमानवदिति ।**

**गु०दी०— परचित्तवृत्ती**त्यत्र परचित्तवृत्तिपदेन मूकस्य वा अनुच्चारयतो वा परस्य या चित्तवृत्तिः सोच्यते । आदिपदेन तच्चित्तस्थं प्रयोजनं गृह्यते । तच्च परस्यानुमानैकवेद्यमिति कृत्वा असङ्कीर्णविषयमिति भावः । **सममेतच्छब्देऽपि** इत्यत्र वेदैकवेद्यभगवतः शब्दासङ्कीर्णविषयत्वादित्यर्थः ।

**आनन्दः**— समुच्चयप्रयोजनं वक्तुमाह **किञ्चैवमिति** । न च सङ्केतग्राहकत्वेन तस्यावश्यकत्वमुक्तमिति वाच्यम् । तस्यापि प्रयोजकवृद्धोदीरितवाक्यादेव संभवादिति भावः । शङ्कते **अनुमानेति** । यद्यपि शब्दादिना लोकव्यवहारसंभवान्नैतदुच्छेदः । तथापि बालस्याद्यस्तनपानादिप्रवृत्ताविष्टसाधनताज्ञानस्य कारणत्वात् तच्चेष्टसाधनताज्ञानमनुमितिरूपमेव स्वीकर्तव्यं तदानीं शब्दादेरप्रवृत्तत्वात् । तथाचानुमानाप्रामाण्ये आद्यप्रवृत्तेरेवानुपपत्तौ तन्मूलः सर्वोऽपि व्यवहारः उच्छिद्यत इति भावः । अनुमानप्रामाण्ये हेत्वन्तरम् । **परचित्तवृत्तीति** । शब्दाद्यप्रवृत्तावपि जायमानत्वादसङ्कीर्णत्वमिति भावः । **सममेतदिति** । शब्दाप्रामाण्ये प्रयोजकवृद्धोदीरितवाक्यश्रवणानन्तरं प्रवृत्त्यभावे तन्मूलकः सर्वोऽपि अग्रिमो व्यवहार उच्छिद्येतेति भावः । संभावनयैव शब्दात्प्रवृत्तिभिरिति यदि तर्ह्यानुमानिकज्ञानादपि जायमाना प्रवृत्तिः संभावनयैवेत्यपि वक्तुं सुकरमिति भावः । असङ्कीर्णश्चात्रेश्वररूपो विषयो वक्ष्यत इति साम्यमित्यर्थः ।





**कं०रा०— एतदपीति**। अनुमानवदित्यर्थकेन चशब्देनैतदपि प्रमेयमुक्तमित्यर्थः।

**वा०चं०—** अनुमानं परोक्षविषयकमित्यङ्गीकृत्य शब्दमपाकुर्वाणं प्रति चक्षुष्ट्वादेरिवानुमानेऽवान्तर-जातेरभावेन चक्षुरादिवदवान्तरभेदविवक्षया विकल्पानुपपत्तेर्विषयविकल्पेनानुमाननिराकरणानुपपत्त्याऽनुमानवदिति मूलस्य योजयितुमशक्यत्वाच्छब्दमुपादायानुमानमपाकुर्वाणेन त्वां प्रत्येव विकल्प्य दूषणे यस्त्वदीयः परिहार-स्तत्साम्यमनुमानमादाय शब्दप्रामाण्यं निराकुर्वाणं प्रत्यपीत्याशयेनानुमानवदिति मूलं योजयति **किञ्चेति**।

**वा०र०— अनुमानं परोक्षेत्यादि**। अपाकुर्वाणं प्रति शब्दमुपादाय अनुमानमपाकुर्वाणेन त्वां प्रत्येवं विकल्पेत्यन्वयः। ननु प्रत्यक्षे यथा चक्षुर्निराकरणं श्रोत्राद्युपादाय कृतम्। तथाऽनुमानेऽप्यवान्तरभेदविवक्षया अनुमानविशेषमुपादाय तद्विशेषान्तरनिराकरणं कुतो न प्रवर्त्यते। तावताप्यनुमानवदिति दृष्टान्तसंभवादित्यत उक्तं **चक्षुष्ट्वादेरिवेति**। **प्रत्येवमिति**। परोक्षो वाऽपरोक्षो वाऽनुमानस्य विषयो वाच्य इत्यादि विकल्प्य तद्दूषण इत्यर्थः।

**विट्ठ०—** ननु नानुमानाप्रामाण्यमुच्यते येन लोकव्यवहारोच्छेदः किन्तु शब्द एवान्तर्भावं ब्रूम इत्यतः परचित्तगतार्थादिरागमविषयत्वेन तज्ज्ञापकानुमानस्यापि पृथक्प्रामाण्यस्यैवोचितत्वादित्याशयेन शङ्कते **परचित्तेति**।

**५९० सु०— यच्च 'अविज्ञानात्मकत्वान्न शब्दः प्रमाणमि'ति। तदप्ययुक्तम्। यथेन्द्रिय-मिन्द्रियसन्निकर्षो वा प्रत्यक्षमविज्ञानात्मकमपि विज्ञानकरणत्वात्प्रमाणम्, तथा शब्दस्या-प्युपपत्तेः॥ किञ्च धूमाद्यनुमानस्य अविज्ञानात्मकस्यापि प्रामाण्यं दृष्टमिति शब्दस्य कथं न स्यात्॥ अथ न धूमादिकमेवानुमानं किं नाम तज्ज्ञानम्। यथाऽऽहुः प्रमाणविदः; 'लिङ्गपरामर्शोऽनुमानमि'ति। तर्हि शब्दमात्रं न प्रमाणं किन्तु तज्ज्ञानमेवेत्यसिद्धिः॥ एतदप्याह प्रत्यक्षवच्चेति।**

**परि०— प्रमाणविद इति**। तार्किकाः। **प्रत्यक्षवच्चेतीति**। अत्रापि चशब्देनानुमानवदिति गृह्यते। एवमग्रेऽपि।

**आनन्दः—** ननु अज्ञातकरणस्य अज्ञानात्मकस्य प्रमाणत्वेऽपि ज्ञातकरणस्याविज्ञानात्मकस्यापि न प्रमाणत्वमदृष्टत्वादित्यत आह **किञ्चेति**।

**कं०रा०—** सङ्केतवादी शङ्कते **अथेति**। **असिद्धिरिति**। अविज्ञानात्मकत्वहेतोरिति शेषः।

**श्रीनिधि०— असिद्धिः**। अविज्ञानात्मकत्वस्य।





**वा०चं०— यथेन्द्रियमिति** । इन्द्रियादेरविज्ञानात्मत्वेऽपि विज्ञानकरणत्वात्प्रमाणत्वं भाववत्करणेऽपि प्रमाणशब्दस्यानुशासनादिसिद्धत्वादिति भावः । एवं प्रत्यक्षस्याविज्ञानात्मकस्यापि प्रामाण्यमुपपाद्य तत्साम्येनाविज्ञानात्मकस्यापि शब्दस्य प्रामाण्योपपत्तावविज्ञानात्मकत्वमप्रयोजकमित्याशयेन प्रत्यक्षवदिति योजितम् । अनुमानस्थलेऽनुमानस्येवाविज्ञानात्मकस्यापि शब्दस्य प्रामाण्योपपत्तावप्रयोजकत्वं ज्ञानात्मकत्वे चानुमानस्य शब्दस्यापि तद्वदेव ज्ञानात्मकत्वादसिद्धिरित्यपि परिहार इत्याशयेनानुमानवदिति योजयति **किञ्चेति** ।

**५९१ सु०— एतेन बाह्यकरणप्रत्यक्षत्वादात्मन्यसमवेतत्वादित्यपि हेतुद्वयं निरस्तं वेदितव्यम् । बाह्यकरणप्रत्यक्षस्यापि धूमवत्प्रामाण्योपपत्तेः । आत्मन्यसमवेतस्यापि प्रत्यक्षवदनुमानवच्च तत्संभवात् । ज्ञानाङ्गीकारेण व्यभिचारपरिहारे शब्दोऽपि ज्ञानात्मेत्यसिद्धिरेवेति ।**

**बिन्दुः—** ननु धूमादेरात्मसमवेतत्वाभावेऽपि तज्ज्ञानं समवेतमेव । तथाच धूमज्ञानमेव प्रमाणं, न तु धूमः, तस्मात्प्रत्यक्षभिन्नस्य प्रामाण्ये आत्मसमवेतत्वमेव तन्त्रमित्याशङ्क्य तुष्यतु दुर्जन इति न्यायेन मास्तु शब्दः प्रमाणं किन्तु तज्ज्ञानस्यैव प्रामाण्यमभ्युपगच्छाम इत्याशयेनाह **ज्ञानाङ्गीकारेण व्यभिचारपरिहार इति** । प्रमाणत्वेन धूमज्ञानस्यैवाङ्गीकार इत्यर्थः । शब्दोऽपि ज्ञानात्मेति शब्दज्ञानस्य प्रामाण्यादेव हि शब्दः प्रमाणमित्यस्माकं व्यवहार इति भावः ।

**परि०—** धूमादिलिङ्गरूपार्थाभिप्रायेणाह **अनुमानवच्चेति** । ननु धूमादिर्नानुमानम् । येन तत्रात्मासमवेतत्वहेतुसत्त्वेऽपि अप्रामाण्याभावाद्व्यभिचारः स्यात् । किन्तु धूमादिज्ञानमेव । तच्च न्यायमतरीत्याऽऽत्मसमवेतमेवातो न दोष इत्यत आह **ज्ञानाङ्गीकारेणेति । शब्दोऽपि ज्ञानात्मेति** । शब्दः प्रमाणमित्यस्य शब्दज्ञानं प्रमाणमित्यर्थ इति हेतोरसिद्धिः । शब्दज्ञानस्याप्यात्मसमवेतत्वादित्यर्थः । परीत्येदं दूषणमिति ध्येयम् । 'परसिद्धैर्दूषणमि'त्युक्तेः । स्वरीत्या तु प्रमाणभूतानुमित्यादौ व्यभिचारो ध्येयः । वृत्तिज्ञानमात्रस्यान्तःकरणाश्रितत्वात् । असिद्धिरित्युपलक्षणम् । चक्षुरादीन्द्रियप्रत्यक्षप्रमाणे तथापि व्यभिचारापरिहारादित्यपि ध्येयम् ।

**वं०प०— प्रामाण्योपपत्तेरिति** । धूमवत्प्रमाकरणत्वोपपत्तेरित्यर्थः । तथाच धूमे व्यभिचार इति भावः । **ज्ञानाङ्गीकारेणेति** । न धूमः प्रमाणं किन्तु तज्ज्ञानम् । तत्र च बाह्यकरणप्रत्यक्षत्वरूपहेतोरेवाभावात् न व्यभिचार इति भावः । **असिद्धिरिति** । तथाच न शब्दः प्रमाणं किन्तु तज्ज्ञानमेव । तथा चासिद्धिरिति भावः ।





**आनन्दः**— **एतेनेति** । शब्दज्ञानस्यैव प्रमाणत्वकथनेनेत्यर्थः । शब्दे प्रामाण्यपक्षेऽपि दोषाभावमुपपादयति **बाह्येति** । **ज्ञानाङ्गीकारेणेति** । द्वितीयदृष्टान्ताभिप्रायम् ।

**कं०रा०**— **ज्ञानाङ्गीकारेणेति** । धूमज्ञानस्य प्रामाण्याङ्गीकारेण बाह्यकरणप्रत्यक्षत्वात्मासमवेतत्वरूपहेतुद्वयवति धूमादौ साध्यस्यापि सत्त्वात् । साध्यरहिते च धूमादिज्ञाने उक्तहेतोरेवाभावान्न व्यभिचार इति व्यभिचारपरिहारेऽस्माभिरपि शब्दज्ञानं प्रमाणमित्यङ्गीकृतत्वेन तत्र हेतोरसिद्धिरेवेत्यर्थः।

**श्रीनिधि०**— **ज्ञानाङ्गीकारेण व्यभिचारपरिहारेऽपीति** । आत्मन्यसमवेतत्वस्य प्रत्यक्षे व्यभिचार एवेति कथं परिहार इति चेन्न । तदतिरिक्तत्वे सतीति विशेषणादिति ज्ञेयम् ।

**वा०चं०**— **ज्ञानाङ्गीकारेणेति** । अनुमानमात्रविषयकपरिहारोऽयम् । यद्वा प्रत्यक्षस्थलेऽपीन्द्रियादिजन्यज्ञानमेव प्रमाणं नेन्द्रियादिकमिति वैयात्यमात्रप्रवृत्तं प्रति प्रत्यक्षविषयकोऽयं परिहार इति द्रष्टव्यम् ।

**वा०र०**— **परिहारोऽयमिति** । प्रमाणमपीन्द्रियं ज्ञानात्मकं नेति प्रत्यक्षे तत्परिहारासंभवादिति भावः । **वैयात्यमात्रप्रवृत्तमिति** । एतच्च विज्ञानात्मकं प्रमाणं दृष्टं यथा प्रत्यक्षमिति तन्मतोपन्यासटीकायां प्रागेवोपपादितम् ।

**स०व्र०**— इन्द्रियधूमयोरात्मसमवेतत्वाभावेऽपि तज्ज्ञानस्यात्मसमवेतत्वभावात् । तदेव हि प्रमाणमित्याशङ्क्याह **ज्ञानाङ्गीकारेणेति** । **शब्दोऽपीति** । शब्दलक्षणप्रमाणतयाऽभिमतोऽपीत्यर्थः ।

**विठ्ठ०**— ननु धूमादिकं नानुमानं तेन तत्र बाह्यकरणप्रत्यक्षत्वात्मन्यसमवेतत्वरूपहेतोः सत्त्वेऽप्यप्रामाण्याभावाद्व्यभिचारः स्यात् । किन्तु धूमादिज्ञानमेव तच्चान्तःकरणप्रत्यक्षमात्मनि समवेतमेवेति कथं तत्र व्यभिचार इत्यतः शब्दरूपप्रमाणत्वेनोक्तमपि शब्दज्ञानमेव तस्य चान्तःकरणप्रत्यक्षत्वात्मसमवेतत्वस्य सद्भावाद्धेत्वसिद्धिरित्याह **ज्ञानाङ्गीकारेणेति** ।

**प्रदीपः**— इन्द्रियधूमयोरात्मसमवेतत्वाभावे तदज्ञानस्यात्मसमवेतत्वात्तदेव प्रमाणमित्याशङ्क्याह **ज्ञानाङ्गीकारेणेति** । **शब्दोऽपीति** । शब्दलक्षणप्रमाणतयाऽभिमतोऽपीत्यर्थः ।

**५९२ सु०— यदप्याकाशगुणत्वादिति । तदसिद्धम् । वर्णात्मा हि शब्दः प्रमाणम् । न चासावाकाशगुणस्तत्त्वविदाम् । अत्र च प्रत्यक्षवच्चेति व्यतिरेकदृष्टान्तः । यथा प्रत्यक्षस्य नाकाशगुणत्वं तथा शब्दस्यापीति तस्य प्रामाण्यं न विहन्यत इति ।**

**अप्रयोजकाश्चैते हेतवो विपक्षे बाधकाभावादवगन्तव्याः ।**





**परि०**— व्यतिरेकेत्युक्तमेव व्यनक्ति **यथेति** । शब्दस्यापीतीतिशब्दो हेत्वर्थः । यथा प्रत्यक्षस्याकाशगुणत्वं नास्तीति कृत्वा प्रामाण्यं न विहन्यते । तथा शब्दस्यापि तन्नास्तीति प्रामाण्यं न विहन्यत इत्यर्थः । यद्वा इत्यन्तेन दृष्टान्तविवरणम् । ततश्च किमित्यत उक्तं **तस्येत्यादि**।

**यादु०**— **व्यतिरेकदृष्टान्त इति** । शब्दरूपपक्षे आकाशगुणत्वरूपहेतुव्यतिरेके प्रत्यक्षादिकं दृष्टान्त इत्यर्थः । पूर्वयोजनासु परोक्तहेतूनां व्यभिचारोपपादनाय प्रत्यक्षादिकं हेत्वन्वये दृष्टान्ततयोपात्तम् । अत्र तु परोक्तहेतोरसिद्धिव्युत्पादनाय तद्धेतुव्यतिरेक इति ध्येयम् । अत एवाह **यथा प्रत्यक्षस्येति** । **प्रामाण्यं न विहन्यत इति** । प्रामाण्यहानिसाधकोक्तहेतोरसिद्धत्वादिति भावः ।

**वं०प०**— **नाकाशगुणत्वमिति** । तथाच तस्याकाशगुणत्वाभावेऽपि यथा प्रामाण्यं न विहन्यते तथा तस्य द्रव्यभूतस्य वर्णात्मकशब्दस्याप्याकाशगुणत्वाभावेऽपि प्रामाण्यं न विहन्यत इत्यर्थः ।

**श्रीनिधि०**— **व्यतिरेकदृष्टान्त इति** । आकाशगुणत्वाभावरूप उक्तव्यतिरेके दृष्टान्त इत्यर्थः । पक्षान्तरमन्यत्र व्यक्तम् ।

**वा०र०**— **तदसिद्धमिति** मूलम् । यद्यप्याकाशगुणत्वं महत्प्रत्ययविषयत्वानुमापकपरिमाणे दशधा गणनीयत्वानुमापकसङ्ख्यायां चाप्रामाण्यव्यभिचारीत्यपि दूषणं वक्तुं शक्यं तथापि परिमाणदृष्टान्ताश्रयणेन प्रयोगं कुर्वतैव परिमाणविशेषस्य दृष्टान्तत्वाश्रयणे कृते लिङ्गताक्रान्ते आकाशगुणत्वस्य व्यभिचारोऽङ्गीकृत एवेति स्पष्टे सति किं तदर्थं पृथग्यत्नेनेत्याशयेन वस्तुस्थितिकथनमुखेन प्रथमप्राप्तासिद्धिरेवोक्तेति ज्ञातव्यम् । पूर्वत्र सत्यपि शब्दे प्रमानुदयात् प्रमाणान्तरविषयस्य शब्दविषयत्वायोगाविज्ञानात्मकत्वबाह्यकरणप्रत्यक्षत्वात्मन्यनाश्रितत्वानां हेतूनां प्रत्यक्षादौ सत्त्वेऽपि यथा प्रामाण्यं संभवति तथोक्तहेतुमत्यपि शब्दे प्रामाण्यं संभवतीत्येवं प्रत्यक्षादिकमुक्त-हेतुसद्भावेऽपि प्रामाण्यसंभवरूपान्वये दृष्टान्त इति दर्शनादाकाशगुणत्वांशेऽपि प्रत्यक्षादेराकाशगुणत्वेऽपि यथा प्रामाण्यमेवं शब्दस्यापीति हेतुप्रामाण्ययोः प्रत्यक्षादौ सत्त्ववच्छब्देऽपि तदुभयोपपत्तिरित्येवं प्रत्यक्षादेर्हेतुसद्भावेऽपि प्रामाण्यसंभवरूपोऽन्वयस्तत्र दृष्टान्तत्वमिति प्रतीयते । न च तद्युक्तम् । प्रत्यक्षादौ पक्षे चाकाशगुणत्वस्यैवा-भावादित्यतो नात्र पूर्वहेतुष्विवाप्रामाण्यसाधकत्वेनोपन्यस्तहेतुसत्त्वेऽपि प्रत्यक्षादाविव प्रामाण्यमेव । न तु अप्रामाण्यमित्येवं हेतुप्रामाण्ययोरन्वये प्रत्यक्षादिकं दृष्टान्त इत्यभिमतम् । अपि त्वप्रामाण्ये हेतुत्वेनोपन्यस्तस्य आकाशगुणत्वस्य प्रत्यक्षादावभावः । तत एव तत्प्रयुक्तप्रामाण्यविघातस्याप्यभावः । एवं शब्देऽप्यप्रामाण्यहेतो-रप्यभावस्तत्प्रयुक्ताप्रामाण्यस्याप्यभावः । इत्येवं हेतुसाध्ययोरुभयोरपि व्यतिरेके प्रत्यक्षादिकं दृष्टान्त इत्यभि-मतमिति नानुपपत्तिरित्याशयेनाह **अत्र प्रत्यक्षवच्चेति व्यतिरेकदृष्टान्त इति** मूलम् । पूर्वत्राप्रामाण्यसाधकहेतूनां पक्षे सत्त्वेऽपि प्रत्यक्षादिवत्प्रामाण्यं संभवतीत्यन्वयमुखेन भाष्योक्तप्रामाण्ये प्रत्यक्षादिकं दृष्टान्तः । इह त्वाकाश-गुणत्वस्य प्रामाण्यहेतुत्वमङ्गीकृत्य प्रत्यक्षादिवच्छब्दस्याकाशगुणत्वाभावादेव तत्प्रयुक्तः प्रामाण्यविघातो नास्तीत्येवं व्यतिरेकमुखेन प्रामाण्ये प्रत्यक्षादिकं दृष्टान्त इत्यक्षरार्थः । अत एव व्यतिरेकप्रकारस्यास्पष्टत्वात्तं





दर्शयितुं प्रवृत्तयथेति वाक्ये हेतुव्यतिरेकमात्रे वक्तव्ये प्रामाण्यमित्येव च वक्तव्येति प्रामाण्यं न विहन्यत इति व्यतिरकमुखेनाभिधानं च सार्थकम् । एतेनैव यथा प्रत्यक्षस्येत्यादि योजनापक्षेऽप्याकाशगुणत्वाभावप्रामाण्याभावाभावरूपार्थप्रत्यक्षादेरन्वयदृष्टान्ततया व्यतिरेकेत्ययुक्तमिति निरस्तम् । पूर्वयोजनागतहेत्वङ्गीकारेऽपि साध्याभावोपपत्तिरित्येवमन्वयं व्यावर्तयितुं व्यतिरेकपदेन हेत्वभावे तत्प्रयुक्तसाध्याभावे चेत्यर्थस्य विवक्षिततया दोषाभावात् । अत एवार्थापत्तिः शब्दवत् पृथक्प्रमाणं नेत्यादौ शब्दो यथा पृथक्प्रमाणं तथार्थापत्तिः पृथक्प्रमाणं नेति व्यतिरेकदृष्टान्तः । शब्द इत्यादिरूपस्य तत्र तत्र व्यवहारस्य दर्शनेन व्यतिरेकदृष्टान्तस्य तादृशातिदेशस्थले एव सत्त्वसिध्या प्रकृते च तथारूपत्वाभावेन व्यतिरेकदृष्टान्त इत्युक्तययोग इत्यप्यपास्तम् । उक्तरीत्या व्यतिरेकपदस्यान्यपरत्वेन तादृशदृष्टान्तत्वाभिप्रायस्याप्यनङ्गीकारात् । यत्त्वन्यथाख्यातौ पक्षे हेतुव्यतिरेके प्रत्यक्षादिकं दृष्टान्त इति प्रतिपाद्य पूर्वहेतुस्थले हेत्वन्वये दृष्टान्त इत्यादि प्रतिपादनं तदसत् । अप्रामाण्यापादकहेत्वभावस्यावश्यकतया आकाशगुणत्वांशे तदभावप्रतिपादनाय प्रत्यक्षादेर्दृष्टान्तीकरणस्यावश्यकत्वेऽपि पूर्वहेतुषु हेतुसत्त्वेऽपि प्रामाण्योपपत्तिरित्येतत्प्रमेयस्य प्रतिपाद्यतया त्वत्र हेत्वन्वयमात्रे दृष्टान्तत्ववचनस्यानावश्यकत्वेन तथोक्तेरयोगात् । हेतुव्यतिरेकमात्रे दृष्टान्तत्वेऽपि पूर्वत्रैव प्रामाण्यमित्येव वक्तव्यतया न विहन्यत इत्यधिकांशवैयर्थ्यापत्तिश्च । अधिकं पूर्वोपपादनानुसारेणैतद्व्याख्यानेऽस्वरसबीजं ज्ञेयम् । यदपि न विहन्यत इतीति प्रतीकमुपादाय प्रामाण्यहानिसाधकहेतोरसिद्धत्वादिति भाव इति वर्णनं तदप्यसत् । तथा शब्दस्यापि नाकाशगुणत्वमितीत्यनेनासिद्धमिति प्रागुक्तासिद्धेरेवोक्ततया पुनरसिद्धेर्भावतया वर्णनायोगात् ।

**स०व्र०— अत्र च प्रत्यक्षवच्चेति व्यतिरेकदृष्टान्त इति** । शब्दरूपपक्षे आकाशगुणत्वरूपहेतुव्यतिरेके प्रत्यक्षादिकं दृष्टान्त इत्यर्थः । पूर्वतनप्रयोगेषु बाह्यकरणप्रत्यक्षत्वादिषु प्रत्यक्षादिकं पक्षे व्यभिचारोपपादनाय दृष्टान्तत्वेनोपात्तम् । अत्र तु पक्षे हेतुव्यतिरेकोपपादनायोपादीयत इति भावः । अत एव आह **यथा प्रत्यक्षस्येति** । **प्रामाण्यं न विहन्यत इति** । साधकाभावादिति भावः ।

**विट्ठ०— अत्र चेति** । यथा शब्दो न प्रमाणं अविज्ञानात्मकत्वाद्बाह्यकरणप्रत्यक्षत्वादित्यत्रशब्दे अविज्ञानात्मकत्वबाह्यकरणप्रत्यक्षत्वादिहेतुसत्त्वमङ्गीकृत्य विज्ञानात्मकस्यापीन्द्रियस्य धूमस्य च प्रामाण्यमङ्गीक्रियते । बाह्यकरणप्रत्यक्षस्य धूमस्य च यथा प्रामाण्यं तथा शब्दे अविज्ञानात्मकत्वादेः सत्त्वेऽपि प्रामाण्यं युज्यत इत्युक्तम् । न तत्तथा किन्तु शब्दो न प्रमाणमाकाशगुणत्वादित्युक्ते प्रत्यक्षे अनुमाने च यथाकाशगुणत्वाभावः तथा शब्दरूपे पक्षे च आकाशगुणत्वस्याभावे दृष्टान्तः । व्यतिरेके अभावे प्रत्यक्षवच्चेति दृष्टान्त इत्यर्थः । अत एवोपपादनं **यथा प्रत्यक्षस्येति** । **इति तस्य** इत्यत्र इति हेतोरित्यर्थः ।

**चषकः— व्यतिरेकदृष्टान्त इति** । पक्षे हेतुव्यतिरेकांशे प्रत्यक्षादिकं निदर्शनीकृतमित्यर्थः । प्राक्तनयोजनायामुक्तहेतूनामनैकान्त्योपपादनाय प्रत्यक्षादिकमन्वयनिदर्शनतयोपेतम् । **न विहन्यत इति** । दर्शितहेतोरेवासिद्धत्वादिति भावः ।





**५९३ सु०— यच्चोक्तं 'शब्दस्यार्थेन संबन्धोऽस्ति न वे'ति । तत्रास्तीति ब्रूमः । स च तादात्म्यादेरसंभवेऽन्यो भविष्यति । यथा खलु चक्षुरादेः प्रत्यक्षस्यासंबद्धस्य ग्राहकत्वेऽतिप्रसङ्गात्तादात्म्यादेरसंभवात्कार्यवशादेव घटादिना संयोगः कल्प्यते । श्रोत्रस्य शब्देन संयोगाद्यसंभवात्समवायः । अनुमानस्य च धूमादेरग्न्यादिना संयोगादेरव्याप्त्यतिव्याप्त्यादिना असंभवाद् व्याप्यव्यापकभावः कल्पितः । एवं शब्दस्यासंबद्धस्य गमकत्वेऽतिप्रसङ्गात् तादात्म्यादेरसंभवात्संबन्धान्तरं कल्पनीयम् । न पुनः स्पष्टदृष्टतत्कार्यापलापो युक्तः ॥ तदिदमाह प्रत्यक्षवच्चेति ।**

**परि०—** बाधकाभावादित्यस्यासिद्धिनिरासाय प्रागुक्तबाधकान्यनूद्य निराह **यच्चोक्त-मित्यादिना । अव्याप्तीति** । रूपरसादौ ।

**यादु०— अव्याप्त्यतिव्याप्त्यादिनेति** । संयोगस्य रसस्य रूपेण प्रमेयत्वस्याभिधेयत्वेन चासंभवादव्याप्तिः पाषाणादेरप्यग्न्यादिना संयोगस्य सत्त्वादतिव्याप्तिः । एवं समवायस्याप्यादिपदगृहीतस्य धूमस्याग्निनाऽसत्त्वेनाव्याप्तिः । अग्न्यव्याप्तेष्वग्न्यवयवेष्वपि सत्त्वेनातिव्याप्तिरित्यर्थः ।

**वं०प०— अव्याप्त्यतिव्याप्तीति** । अव्याप्तिरसार्वत्रिकता । अतिव्याप्तिरतिप्रसक्तता । रसाद्रूपानुमानेन रसस्य रूपेण संयोगाभावादव्याप्तिः । पाषाणादेरग्न्यादिना संयोगसद्भावात्तेनाप्यग्न्यनुमानापत्तिरित्यतिव्याप्तिः । एवमादिपदगृहीतस्य समवायस्य धूमस्याग्निनाऽभावादव्याप्तिः । अग्न्यव्याप्तेऽग्न्यवयवेऽप्यग्निसमवायस्य सत्त्वात्तेनापि अग्न्यनुमानापत्त्याऽतिव्याप्तिः । इष्टापत्तिरिति चेत् । न । व्याप्त्यभावेनाग्न्यवयवेनाग्न्यनुमानासंभवात् । तथाहि । यत्राग्न्यवयवस्तत्राग्निरिति न तावद्दैशिकी व्याप्तिः । अग्न्यवयवस्य स्वावयवे सत्त्वेन तत्राग्न्यभावेन व्यभिचारात् । नापि यदा अग्न्यवयवः तदा अग्निरिति कालिकी व्याप्तिः । अग्न्यनुत्पत्तिदशायामग्न्यवयवसद्भावेऽप्यग्न्यभावेन व्यभिचारादिति ध्येयम् । **संबन्धान्तरं** वाच्यवाचकभावरूपम् । **तत्कार्येति** । अर्थज्ञानरूपकार्येत्यर्थः ।

**आनन्दः— अनुमानस्य च धूमादेरिति** । धूमस्य वह्निसंयोगात् निमित्तात् धूमेन वह्न्यनुमानं धूमसंयोगस्य घटादावपि सत्त्वात्तेनापि तदनुमानं स्यादिति संयोगमात्रमतिव्यापकमित्यर्थः । आदिशब्दपरिगृहीत-रूपरसयोस्तु समवायाभावादव्याप्तिः तदास्य रूपसंबन्धस्य च साध्यसाधनयोः क्वास्ति संबन्ध इत्यर्थः ।

**कं०रा०— अव्याप्तीति** । गमकस्य धूमस्य गम्येनाग्निना संयोगसद्भावेऽपि कृतकत्वादेरनित्यत्वादिना संयोगाभावादव्याप्त्या घटाद्यगमके पटादौ घटसंयोगस्य सत्वादिति व्याप्त्या च संयोगस्य लिङ्गलिङ्गिनोः क्वापि समवायाभावादसंभवेन समवायस्य च गमकतायां प्रयोजकत्वासंभवादित्यर्थः ।





**श्रीनिधि०— संयोगादेरव्याप्त्यतिव्याप्तीति** । पाषाणादावतिव्याप्तिः रसादावव्याप्तिरित्यर्थः ।

**वा०चं०— उक्तेति** । द्रव्यत्वेऽपीति सुधाऽवतारिकायामुक्तेत्यर्थः । **न चासाविति** । उक्तानुमानद्वयेन प्रत्यभिज्ञया कूटस्थनित्यताप्रतिपादकागमैश्च नित्यव्यापकवर्णानामतादृशाकाशगुणत्वासंभवादिति भावः । **तदिदमिति** । अनेन प्रत्यक्षवदित्यस्य प्रत्यक्षानुमानयोः किञ्चित्संबन्धासंभवेऽपि संबन्धान्तरकल्पनया प्रामाण्यवच्छब्दस्यापीति व्याख्यानं सूचितं भवति । एवं संबन्धासंभवादगमकत्वं शब्दस्येति वदन्तं प्रति स्पष्टदृष्टकार्यानुसारेण प्रत्यक्षादिदृष्टान्तेन संबन्धसामान्यमभ्युपेयम् । तद्विशेषचिन्ता त्वार्द्रकवणिजो वहित्रचिन्तावद्व्यर्थैवेत्युक्तम् ।

**वा०र०— उक्तानुमानेति** । शब्दोऽद्रव्यं साक्षादिन्द्रियसंबधवत्त्वादित्यादिना प्रागुपन्यस्तशब्दश्रोत्रपक्षकानुमानद्वयेनेत्यर्थः । संबन्धविशेषचिन्तार्थत्वमुपपादयितुं संबन्धसामान्याभावेनागमकत्वमित्याक्षेपस्यैव परेण कृतत्वादिति हेतुं वदंस्तथापि तादृशः संबन्धः क इति शङ्कानवकाशं दर्शयति **एवं संबन्धेति** । प्रत्यभिज्ञागमाः तत्त्वनिर्णयादावुदाहृता ज्ञेयाः । तट्टीकायामधिकं च ज्ञेयम् । एतेन पूर्वोत्तरग्रन्थयोर्विरोधोऽपि परिहृतः । अस्य ग्रन्थस्याङ्गीकारवादेन प्रवृत्तेरिति सूचनात् ।

**स०व्र०— अव्याप्त्यतिव्याप्त्यादिनेति** । अनुमेयसंयुक्तमनुमानमित्युक्ते धूमादौ सत्त्वेऽपि रूपरसादौ प्रमेयत्वाभिधेयत्वादौ अव्याप्तिः । रासभादावव्याप्येऽपि सत्त्वादतिव्याप्तिः । तथा पर्वतादावतिव्याप्तिश्च स्यात् । अनुमेयसमवेतमित्युक्ते धूमाद्यनुमाने असत्त्वेनाव्याप्तिः । वह्निरूपादौ चातिव्याप्तिः तादात्म्यरूपसंबन्धाङ्गीकारे चासंभवः । साध्ये चातिव्याप्तिश्च स्यादित्यर्थः ।

**विठ्ठ०—** ननु शब्दार्थयोरसंबन्धानुपपत्त्यादेर्बाधकस्योपन्यस्तत्वात्कथं बाधकाभाव इत्यतस्तदनूद्य निराकरोति **यच्चोक्तमित्यादिना** । **अग्न्यादिना संयोगादेरिति** । रसादपूपानुमाने संयोगस्यासत्त्वादव्याप्तिः । धूमानुमाने पाषाणादेरप्यग्न्यादिनेव संयोगस्य सत्त्वादतिव्याप्तिः । एवमादिपदगृहीतस्य समवायस्य धूमानुमानादावसत्त्वादव्याप्तिः । वह्निव्याप्ये धूमावयवादावपि सत्त्वादतिव्याप्तिरिति द्रष्टव्यम् ।

**५९४ सु०— स च संबन्धः पारमेश्वरः सङ्केत एवेत्येके । स्वाभाविकः प्रत्याय्यप्रत्यायकत्वलक्षण इत्यपरे । तत्र कः संबन्धो विवक्षित इत्यपेक्षायामुक्तं स्वत एवेति । स्वाभाविकेनैव संबन्धेनेत्यर्थः । तदुक्तं जैमिनिना 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति । वक्ष्यति चाचार्यः 'नित्ययोगोऽपि शब्दानामर्थैर्नैव निषिद्ध्यत' इति ।**

**बिन्दुः— पारमेश्वरः सङ्केत इति**। ई॰ च्छैव शक्तिः। अनेन शब्देनायमर्थो बोद्धव्य इत्येवं प्रकारा या इच्छा सैव शब्दार्थयोः संबन्ध इति नैयायिका मन्यन्त इत्यर्थः। **स्वाभाविक इति**। अनादिरित्यर्थः। यद्यपीश्वरेच्छाप्यनादिस्तथापि तेन सर्गाद्यकाले तत्कालीनान् प्रत्यपूर्व एवोपदेशः क्रियत इति तदीयाभिमानः। यदि च पूर्वपूर्वकल्पीयव्यवहारानुसारेणैवेश्वर उपदिशति अध्यापकवदिति ब्रूयात्तर्हि सिद्धान्तपक्षकक्षीकारः, जितं च वेदापौरुषेयवादिभिरिति ध्येयम्। **स्वाभाविकेनैव संबन्धेनेति**। अनादिसंबन्धेनेत्यर्थः। स च प्रत्याय्यप्रत्यायकभावो लक्षणास्थलेऽप्यस्तीति शब्दार्थसंबन्धत्वेन तेषामपि संग्राह्यतैवेति ध्येयम्। यथापूर्वमकल्पयदित्यादि श्रुत्या अनादित्वमेवास्थेयं नत्विदंप्रथमतायां किञ्चिन्मानमस्तीति भावः। **तदुक्तं जैमिनिनेति**। प्रमाणलक्षणे तर्कचरणे सूत्रम्। औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वादिति। चोदनालक्षणोऽर्थो धर्म इति प्रथमसूत्रे धर्मचोदनैव प्रमाणं चोदनाप्रमाणमेवेति वाक्यार्थद्वयं वर्णितं, तत्र प्रत्यक्षादीनां धर्मे प्रामाण्यनिरासेन चोदनैवेत्यवधारणस्य सिद्धौ चोदनाप्रमाणमेवेत्यस्य साधनार्थमिदं सूत्रम्। अस्यार्थः। औत्पत्तिको नित्यः शब्दार्थसंबन्धः तस्य धर्मस्य निमित्तं पूर्वसूत्रे समासान्तर्गतो निमित्तशब्द इहानुषज्यते। तथाच संबन्धकर्तृनिमित्तदोषशङ्का नास्तीति भावः। कथं च धर्मे प्रमाणमित्यपेक्षायां उपदेशो विधिः। ज्ञानं ज्ञापको यत इत्यलम्। न च तत्र बाधकप्रत्यय इत्याह अव्यतिरेकश्चेति। अनपेक्षत्वात् प्रमाणान्तरसंवादानपेक्षत्वादिति।

**परि०— पारमेश्वरः सङ्केत इति**। अस्माच्छब्दादयमर्थो बोद्धव्य इति परमेश्वरेच्छारूप इति तार्किका इत्यर्थः। **औत्पत्तिकस्त्विति**। विवृतश्चैतत्सूत्रार्थः प्राक् 'दृश्यते ब्रह्मसूत्राणां प्रामाण्यं त्रिविधं महदि'त्येतत्सुधावाक्यविवृतिप्रस्तावे। **वक्ष्यति चेति**। आनुमानिकपादे। नैवेति पदच्छेदः।

**यादु०— औत्पत्तिकस्तु शब्दस्यार्थेनेति**। यद्यप्यौत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रामाण्यं बादरायणस्यानपेक्षत्वादित्येतावज्जैमिनिसूत्रम्। तथाऽपीतरांशस्य प्रकृतानुपयोगादनुदाहरणमिति ज्ञातव्यम्।

**वं०प०— एके तार्किकाः। अपरे जैमिन्यादयः।**

**वा०चं०—** अस्तु वा सा विशेषस्यापि सुनिरूपत्वान्न क्षतिरित्याशयेन स्वत एवेति मूलं तत्संबन्धविशेषसमर्पकतया योजयितुं तद्व्यावर्त्यशङ्कोत्थापनाय तत्प्रसञ्जकतया मतभेदमाह **स चेति**। **औत्पत्तिक इति**। उत्पत्तिमारभ्य प्रवृत्तोऽनागन्तुकः स्वाभाविक इति यावत्।





**वा०र०**— मूलोदाहृतजैमिनिसूत्रस्य स्वाभाविकत्वरूपभाष्योक्तार्थसमर्पकत्वाप्रतीतेर्व्याचष्टे **उत्पत्तिमारभ्येति** । मूले **वक्ष्यति चेति** । आनुमानिकपादे ।

**स०व्र०**— **औत्पत्तिकस्त्विति** । वाच्यवाचकभावलक्षणशब्दार्थसंबन्धः । स्वाभाविक इत्यर्थः । शब्दार्थौ यदोत्पन्नौ ततःप्रभृत्यागत इत्यर्थः ।

**वि०ठ०**— **पारमेश्वर इति** । अस्माच्छब्दादयमर्थो बोद्धव्य इति परमेश्वरेच्छारूप एव सङ्केत इति तार्किका इत्यर्थः । **औत्पत्तिकस्त्विति** । स्वाभाविक इत्यर्थः ।

**चषकः**— **औत्पत्तिक इति** । नैसर्गिक इत्यर्थः । इदं तु जैमिनिसूत्रखण्डम् ।

**प्रदीपः**— **औत्पत्तिकस्त्विति** । वाच्यवाचकभावलक्षणः शब्दार्थसंबन्धः स्वाभाविक इत्यर्थः । शब्दार्थौ यदोत्पन्नौ ततःप्रभृत्यागतः शब्दार्थयोरेवोत्पत्त्यभावात् संबन्धोऽप्यनुत्पन्न इति यावत् ।

**५९५ सु०— ननु यदि शब्दस्य स्वाभाविकी वाच्यविषया शक्तिस्तदा व्युत्पन्नवदव्युत्पन्नोऽपि शब्दादर्थं प्रतीयात् । न ह्यग्निरविदितशक्तिर्न दहतीति । मैवम् । यथा प्रत्यक्षस्य चक्षुरादेः स्वाभाविक्यां रूपप्रतीतिजननशक्तौ सत्यामप्यागन्तुकसन्निकर्षपेक्षया रूपप्रत्यायकत्वम्, यथा च लिङ्गस्य सत्यपि स्वाभाविके साध्यसंबन्धे तदनुसन्धानापेक्षयैव गमकत्वम् एवं शब्दस्यापि सत्यप्यर्थेन स्वाभाविके संबन्धे विदितसंबन्धस्यैव बोधकत्वं नान्यथेति नियमात् ॥ तदेतदप्याह प्रत्यक्षवच्चेति ।**

**वं०प०**— **प्रतीयादिति** । स्वाभाविक्याः शक्तेः सद्भावादित्याशयः । ननु स्वाभाविकशक्तौ सत्यामपि शब्दे तस्या अज्ञातत्वेनाज्ञातशक्तिकाच्छब्दान्नार्थप्रत्यय इत्यत आह **न ह्यग्निरिति** । सत्यपि स्वाभाविके साध्यसंबन्ध इति स्वाभाविकसंबन्धरूपव्याप्तौ सत्यामपीत्यर्थः । **तदनुसन्धानेति** । व्याप्त्यनुसन्धानेत्यर्थः ।

**आनन्दः**— स्वाभाविकत्वेऽनुपपत्तिशङ्का । **ननु शब्दस्येति** । यत्स्वाभाविकं तस्य कार्यजननेऽन्यापेक्षा नास्तीति वोच्यते उत यत्स्वाभाविकं तज्ज्ञानस्य कारणत्वे मानं नास्तीति वा नाद्य इत्याह **यथा प्रत्यक्षस्येति** । न द्वितीय इत्याह **यथा च लिङ्गस्येति** । **तदनुसन्धानापेक्षया** स्वाभाविकसंबन्धानुसन्धानापेक्षया ।

**वा०चं०**— **तदेतदिति** । प्रत्यक्षानुमानयोः स्वत एव प्रामाण्यं स्वाभाविकशक्त्यादिना गमकत्वं यथाऽऽगन्तुकसन्निकर्षादिना व्युत्पाद्यते तथा शब्दस्यापि संबन्धानुसन्धानेन तद् व्युत्पाद्यमिति मूलं व्याख्येयमिति भावः । अत्र प्रत्यक्षादिकरणसाम्योक्त्या करणत्वादस्य वह्निदृष्टान्तवैषम्येऽपि न क्षतिरिति सूचितं भवति ।





**वा०र०—** स्वाभाविकसंबन्धसमर्पकपदस्य भाष्येऽभावात्कथं प्रत्यक्षवच्चेत्यादिभाष्येण यथा प्रत्यक्षस्य चक्षुरादेरित्यादिनोक्तार्थस्योक्तत्वमुच्यत इत्यतो भाष्यगतप्रामाण्यपदस्य स्वत एवेत्यनेन संबन्धे सति स्वाभाविकशक्त्यादिनैवार्थगमकत्वमित्यर्थसमर्पणसिद्धेर्न दोष इत्याशयेनात्र भाष्ये व्याख्यानं यथाभिप्रेतं तथा दर्शयति **प्रत्यक्षानुमानयोरिति** । वदिति दृष्टान्तीकरणाभिप्रायमाह **यथागन्तुकसन्निकर्षादिनेति** । न ह्यग्निरविदितशक्तिर्न दहतीति शङ्कित्रुक्तदृष्टान्तवैषम्यस्य मूलेऽनुक्तेर्न्यूनतेत्यर्थः । तस्य प्रत्यक्षादिकरणसाम्योक्त्यैवोक्तप्रायत्वान्न पृथक् तदुक्त्युपयोग इत्याशयेनाह **अत्र प्रत्यक्षेति । करणत्वादस्य वह्नीति** । नन्वेतदयुक्तम् । वह्नेरपि करणतया तत्साम्यापरिहारादिति चेत् । अत्राहुः । वह्नेर्दाहं प्रति कर्तृत्वमेव । न तु करणत्वम् । वह्निः काष्ठानि दहतीत्येव प्रयोगसत्त्वेऽपि वह्निना देवदत्तो दहतीत्यप्रयोगात् । तथा च वह्नेर्दाहक्रियां प्रति कर्तृत्वेऽपि करणत्वाभावाद्युक्ताकरणसाम्योक्त्या वह्निवैषम्यसिद्धिरिति । वस्तुतस्तु प्रत्यक्षादिरूपं यत्करणं करणविशेषस्तत्साम्योक्त्येत्यर्थात्करणत्वेऽपि वह्नेस्तत्साम्याभावसिद्धिरप्रत्यूहा । करणसाम्यादित्यस्यापि ज्ञानकरणसाम्यादित्येवार्थः । वह्निदृष्टान्तेत्यस्य वह्निरूपकरणेत्यर्थ इति न दोषः । प्रत्यक्षानुमानयोरपि वह्निवत्सन्निकृष्टयोरेव स्वकार्यकारित्वेऽपि मनःसन्निकृष्टत्वादिरूपज्ञानजनकत्वोपयोगिधर्मस्य पुरुषाधीनस्य तयोः सत्त्वेनाविदितशक्तिकवह्निवैषम्यवत् शब्दस्यापि संबन्धानुस्मरणादिपुरुषव्यापाराद्यपेक्षत्वादिनोक्तविधवह्निवैषम्यसिद्धेरिति भाव इति ज्ञेयम् । **यथा प्रत्यक्षस्य चक्षुरादेरिति** मूले रूपपदमुपलक्षणया रसादेरपि सङ्ग्राहकमतो न दोषः ।

**५९६ सु०— अथापि स्यात् । स्वाभाविकोऽपि संबन्धः, किं सर्वेषां शब्दानां सर्वैरर्थैरुत कस्यचिच्छब्दस्य केनचिदर्थेन । नाद्यः शब्दार्थव्यवस्थाऽनुपपत्तिप्रसङ्गात् । न द्वितीयः ऋष्यार्यम्लेच्छानामनियमाभावप्रसङ्गात् । तथा हि । यवशब्दमार्या दीर्घशूके प्रयुञ्जते, यवशब्दाद्दीर्घशूकमेव प्रतिपद्यन्ते । म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते, प्रियङ्गुमेव प्रतिपद्यन्ते । त्रिवृच्छब्दमार्या लताविशेषे प्रयुञ्जते, ऋषयोऽन्यत्रेत्येवमादिरनियमः स्वाभाविक्यां शब्दशक्तौ न स्यात् न हि प्रदीपो रूपप्रकाशनशक्ती रसमपि कदाचित्प्रकाशयति । साङ्केतिकत्वे त्वनियमो युज्यते, पुरुषेच्छाधीनत्वात् तस्याश्चानियतत्वात् चेष्टासङ्केतवदिति ॥ अत्रोच्यते ।**

**बिन्दुः— ऋष्यार्यम्लेञ्छानामिति** । ऋषीणामार्यत्वेऽपि गोबलीवर्दन्यायेन पृथगुक्तिः । तथा चैतद्विचारितं पूर्वतन्त्रे प्रमाणलक्षणे तृतीयचरणे । तेष्वदर्शनात् विरोधस्य समा विप्रतिपत्तिः स्यात् इदमत्राधिकरणे पूर्वपक्षसूत्रम् । तथा हि । यवमयश्चरुर्भवति वाराही चोपानहौ । वैतसे कटे प्राजापत्यान् सञ्चिनोतीति श्रूयते । तत्र यववराहवेतसशब्दाः किं प्रियङ्गुवायसजम्बूनां वाचकाः किं वा दीर्घशूकसूकरवंजूनामिति मिथोऽभिधानविप्रतिपत्तेः सन्देहे अविशेषादुभयार्थता तदनुष्ठाने विकल्प इति.





पूर्वपक्षार्थः । अत्र सिद्धान्तसूत्रम्— शास्त्रस्था वा तन्निमित्तत्वादिति । तस्यार्थः वाशब्दपूर्वपक्षं व्यावर्तयति शास्त्रस्था या प्रसिद्धिः सैव बलवती शिष्टानुष्ठानं प्रति निमित्तत्वादिति । इदमुक्तं भवति । सत्यमेवम् । तथापि । वाक्यशेषाद्दीर्घशूकादय एव वाच्याः । यवमतीभिरद्भिरौदुम्बर्याः प्रोक्षणे विधीयमाने वाक्यशेषोऽयम् । यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमाना इव तिष्ठन्तीति । आह च— यदा वर्षासु जायन्ते सम्यग्जाताः प्रियंगवः । तदा नान्यौषधिग्लानिः सर्वासामेव मोदनात् । इति । एवं वराहं गावोऽनुधावन्ती, अप्सुजो वेतस इति वाक्यशेषाद्वराहवेतसशब्दार्थावपि निर्णीयेते ॥ इति भाष्य-रीत्याऽधिकरणार्थः वार्तिककारस्त्वन्यथैव वर्णितवान् । तत्प्रकृतेऽत्यन्तमुपयोगाभावान्न लिख्यते । **त्रिवृच्छब्दमिति** । लताविशेष इत्युपलक्षणम् । त्रिवृद्रज्जुरित्यादौ त्रिगुणीकृतेत्यपीति बोध्यम् । **ऋषयोऽन्यत्रेति** । त्रिवृद्बहिष्पवमानं भवतीत्यादौ स्तोत्रीयानवके प्रयुञ्जत इत्यर्थः । **एवमादिरिति** । चर्वश्वबालादिशब्देष्वपीत्यर्थः । तथाच भट्टवार्तिकम् । त्रिवृद्बवेऽश्वबालादेर्लोकेऽन्योऽर्थः प्रतीयते वेदे तदभियुक्तैश्च तस्मादन्यो विलक्षणः । यथा त्रिवृच्छब्दस्य लोके त्रिगुणत्वमर्थः । त्रिवृद्रज्जुरिति । वेदे तु त्रिवृद्बहिष्पवमानमित्युक्त्वा ऋक्त्रयस्यानुक्रान्तत्वात्स्तोत्रीयानवकमर्थः । बहिष्पवमानमिति स्तोत्र नाम । पवमानात् बहिः क्रियमाणत्वात् । पवमानशब्देन सोमो यत्र भूयः पूयते तत्स्थलं हविर्धानाख्यमुच्यते । तत्स्तोत्रं तु नवसु ऋक्षु क्रियते । अतस्ता नव ऋच स्तोत्रीया नवकशब्देनोच्यन्ते । स्तोत्रसाधनत्वा-त्स्तोत्रीयास्तासां नवक इत्यर्थात् । तथा चरुशब्दस्यापि लोके स्थालीवाचा वेदे त्वादितः प्रायणीय-श्चरुरित्युक्त्वा आदिमोदनेनेति वदनादोदनोरर्थः । एवं आश्ववालः प्रस्तर इति लोकप्रसिद्धाश्वजातीय वालमय इति गम्यते वाक्यशेषात्तु काशमय इत्यादि । यद्यप्यत्र आर्यम्लेञ्छेत्युभयोरेवोपादानं युक्तम् । तथापि अवेष्ट्यधिकरणोक्तन्यायसङ्ग्रहार्थम् । ऋषीणामपि पृथगुपादानं कृतम् । तथाहि । द्वितीयाध्याये भेदलक्षणे विचारितम् । स्वाराज्यकामो राजा राजसूयेन यजेतेत्यत्र किं राजशब्देन जनपदपरिपालनादिकर्ता ब्राह्मणादिरपि गृह्यते । आहोस्वित्क्षत्रियत्वजात्याक्रान्तो वेति तदर्थमियं चिन्ता, किं राज्यस्य कर्ता राजेति वा राज्ञः कर्म वा राज्यमिति वेति । तत्र लोके जनपदपरपरिपालनादिकर्तरि ब्राह्मणादावपि राज्यं करोति राजाऽसावित्यादिव्यवहारात् । ब्राह्मणादेरपि न यववराहाधिकरणन्यायविरोधः । तत्र हि म्लेञ्छप्रसिद्ध्य-पेक्षया आर्यप्रसिद्धिर्बलवतीत्युक्तम् । प्रकृते तु आर्याणामेव तथाविधब्राह्मणादौ राजेति व्यवहारात् । तस्मात् तादृशत्रैवर्णिकस्यापि राजसूयेऽधिकार इति प्राप्ते सिद्धान्तितम् । सत्यमेवम् । तथापि आर्येष्व-प्यस्ति महान् अवान्तरतारतम्यस्य विशेषः । तत्रार्यतरऋष्यादिप्रसिद्धिबलात्क्षत्रिय एव ग्राह्यः । तथाच भगवानाचार्यवरः पाणिनिः राज्ञः कर्म राज्यमित्यभिप्रेत्य राजशब्दप्रकृतिकं राज्यशब्दमनुशास्ति स्म ।





कथमन्यथा पुरोहितादिगणे राजन् शब्दं पठित्वा पत्त्यन्तपुरोहितादिभ्यो यगिति यकं विदध्यात्। यदि च पूर्वपक्षीयोऽर्थोऽभिप्रेतः स्यात्तर्हि राज्यशब्दमेव प्रकृतिभूतमादाय तस्य कर्तेत्यस्मिन्नर्थे राजेति साध्वित्येवाकरिष्यत्। तस्मादार्यप्रसिद्ध्यपेक्षयापि आर्यवराणां ऋष्यादीनां प्रसिद्धिर्बलवतीति स्थितम्। तत्संग्रहार्थमत्र ऋषिशब्दोपादानं कृतमिति।

**परि०**— सङ्केतवादी शङ्कते **अथापीति**। दीर्घशूको नाम गोधूमसदृशधान्यविशेषः। प्रियंगुस्तु सूक्ष्मधान्यविशेषः। **अन्यत्रेति**। त्रिवृदग्निष्वि(ष्वबि)त्यादिस्तोत्रियानवके। **चेष्टासङ्केतवदिति**। भ्रूनयनहस्तादिचेष्टानामर्थविशेषे सङ्केतं कृत्वा व्यवहरन्ति नयनादिभाषणचतुरा लोके। तत्र यथा पुरुष-भेदेन स च सङ्केतो नानार्थप्रत्यायकत्वेन अनियतस्तथाऽसावपि अस्माच्छब्दादयं बोध्य इतीच्छारूपसङ्केत एवानियत इत्यर्थः।

**यादु०**— **ऋषयोऽन्यत्रेति**। स्तोत्रीयानवक इत्यर्थः। **स्वाभाविक्यां शब्दशक्ताविति**। एकस्मिन्नेवार्थ इति शेषः। न स्यादित्यनन्तरं किन्तु सर्वेषामेकस्माच्छब्दादेकस्य शक्यार्थस्य प्रतिपत्तिरिति नियम एव स्यादिति पूरणीयम्।

**वं०प०**— सङ्केतवादी शङ्कते **अथाऽपीति**। नन्वेकस्मिन्नेवार्थे शब्दस्य शक्तौ सत्यामप्यन्यमप्यर्थं कदाचित्प्रकाशयतीति ऋष्यार्यम्लेच्छानामनियमो युक्त इत्यत आह **न हि प्रदीप इति**। **तस्याश्चेति**। पुरुषेच्छाया इत्यर्थः। **चेष्टेति**। चेष्टायां वर्णसङ्केतवदित्यर्थः। करपल्लववदिति यावत्।

**आनन्दः**— **शब्दार्थेति**। घटशब्दस्य घटरूपार्थेनापि संबन्धसत्त्वाद्घटशब्दस्य घट एवार्थो न पट इत्यादि व्यवस्था न स्यादित्यर्थः। अनियमाभावेन विशदयति **तथा हीति**। स्वाभाविकशक्तिसद्भावेऽप्यनियमः किं न स्यादित्यत आह **न हीति**।

**कं०रा०**— **साङ्केतिकत्व इति**। शब्दार्थसंबन्धस्येति शेषः। **तस्या इति**। पुरुषेच्छायाश्चानियतत्वा-दित्यर्थः।

**श्रीनिधि०**— **शब्दार्थव्यवस्थानुपपत्तिप्रसङ्गादिति**। अस्य शब्दस्यायमर्थ इति व्यवस्थानुपपत्ति-प्रसङ्गादित्यर्थः। **चेष्टासङ्केतः** अनया चेष्टया अयमर्थो बोध्य इति सङ्केतः।

**वा०चं०**— **शब्दार्थेति**। कुतश्चिदेव कश्चिदेवार्थः प्रतीयते न तु सर्वस्मात्सर्व इति शब्दार्थव्यवस्था सर्वेषां सर्ववाचकतायां न स्यादित्यर्थः। **अनियमेति**। प्रयोगप्रतिपत्त्योरिति शेषः। यत्रार्थे यस्य शब्दस्य स्वाभाविकी





शक्तिस्तस्य तत्रैव सर्वेषां प्रयोगाद्यापत्त्या तदन्यत्र केषामपि प्रयोगादि न स्यादित्यर्थः । **ऋषयोऽन्यत्रेति** । स्तोत्रीयानवक इत्यर्थः । कुतो न स्यादित्यतोऽन्यत्र स्वाभाविकशक्तस्यान्यप्रकाशकत्वे रूपप्रकाशनशक्तेर्दीपस्य रसप्रकाशनत्वापातेनातिप्रसङ्ग इत्याह **न हीति** । नन्वसंबद्धस्य शब्दस्य गमकत्वेऽतिप्रसङ्गेन स्वाभाविक-शक्तेरावश्यकत्वे तत्र प्राप्तदोषः सर्वैरपि कथञ्चित्परिहर्तव्य एवेत्यतः स्वाभिमतपक्षे न कोऽपि दोष इत्याह **साङ्केतिकत्वपक्ष इति** ।

**वा०र०—** जातिविशेषे चानियमादित्येतद्गौतमसूत्रसंबधि तथा सति शब्दार्थव्यवस्था न स्यादिति न्यायवाचस्पतिवाक्यव्याख्यानरूपकुतश्चिदेवेत्यादिनिबन्धानुसारेण व्याचष्टे **कुतश्चिदेवेति** । शब्दादिति शेषः । किन्तु सर्वशब्देभ्यः सर्वार्थानां प्रत्ययः स्यादिति मूले सूचितम् । अत एवोक्तातिप्रसङ्ग इति टीकाकृद्वक्ष्यति । प्रयुञ्जते प्रतिपद्यन्त इति उत्तरानुसारेण शेषं पूरयति **प्रयोगेति** । निबन्धे ऋष्यादि प्रसिध्याद्युपपादनं नास्ति । स्मृतिपादीयतेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यादित्यधिकरणे विरोध ऋष्यार्यम्लेञ्छप्रसिद्धिपूर्वपक्षस्य वार्तिककारोक्त-वर्णुकान्तरे, त्रिवृच्चर्वश्वबालादिशब्देषु ऋष्यादिप्रसिद्धिषु विरोधपूर्वपक्षस्य च प्रवर्तनात् तदनुसारेण प्रसिद्धिविरोधो व्युत्पाद्यः । चर्चादिशब्दानामुपलक्षणापि ज्ञेयेत्यादिकमुपयुक्तं मूले द्रष्टव्यमित्यभिप्रेत्य चेत्यस्य अर्थाप्रतीतेस्तद्व्याचष्टे **स्तोत्रीयानवकाश इत्यर्थ इति** । मूले **लताविशेष इति** । त्रैगुण्ये त्रिवृच्छब्दस्यार्थ-प्रसिद्धेर्वार्तिकशास्त्रदीपिकादावुक्तत्वेऽपि न्यायवाचस्पत्यनुसारेण मूलम् । त्रिवृद्बहिष्पवमानमित्येतद्वाक्यगत-त्रिवृच्छब्दस्योपास्मै गायता नर इत्यादितृचः दविद्युतत्प्रवृत्त्यापरीत्यादि त्रिचः; पवमानस्य ते कवे इत्यादि त्रिचश्चे-त्येवं तृचत्रयानुक्रमणतत्स्तुतिरूपवाक्यशेषानुसारेणोक्तस्तोत्रीयानवकपरत्वस्य ऋषिसंमतत्वादिति भावः । सामवेदे प्रातःसवने बहिष्पवमानत्वेनोक्तानां नवानां ऋचामेवोपादानात्तत्रैवोक्तक्रमेणैव गानोक्तेश्चेति ज्ञेयम् । न हि प्रदीप इति वाक्यस्यातिप्रसङ्गपरत्वाप्रतीतेस्तत्परत्वेन तद्वाक्यं योजयन्न स्यादिति पूर्वोक्ते हेत्वनुक्तिं च परिहरति **कुत इत्यादिना** । पातेनातिप्रसङ्गादित्याहेति पाठः । तेन कुतो नेत्यत इत्यत्र हेतुलाभः । पातरूपातिप्रसङ्गादित्यर्थः । **चेष्टासङ्केतवदिति** मूलम् । ऊर्ध्वतर्जनीनिर्देशादेर्दशसङ्ख्यादौ सङ्केतवदित्यर्थः ।

**स०व्र०— स्वाभाविक्यां शब्दशक्ताविति** । एकस्मिन्नेवार्थ इति शेषः । न स्यादित्यन्तरं किन्तु सर्वेषां एकस्माच्छब्दादेकस्य शक्यार्थस्यैव प्रतिपत्तिरिति नियम एव स्यादिति पूरणीयम् ।

**वि०—** सङ्केतवादी तार्किकः शङ्कते **अथापि स्यादिति** । **अनियमाभावप्रसङ्गादिति** । एकस्यैवशब्दस्य अनेकार्थप्रयोगेन वाच्यो नियमः । तदभावप्रसङ्गादित्यर्थः । **दीर्घशूकादि** धान्यविशेषः । **अन्यत्रेति** । त्रिवृदग्नि-ष्टुदित्यादौ श्रोत्रियानवके स्वाभाविक्यां शब्दशक्ताविति एकस्मिन्नर्थ इति शेषः । न स्यादित्यनन्तरं किन्तु सर्वेषामेकस्माच्छब्दादेकस्यैव शक्यार्थस्य प्रतिपत्तिनियम एव स्यादिति पूरणीयम् ।





**५९७ सु०— न वयं क्वचिदपि शब्दस्य सङ्केताद् बोधकत्वं नास्तीति ब्रूमः; किन्त्वर्थविशेषे स्वाभाविकी च शक्तिरस्तीति । तथा च स्वाभाविक्या शक्त्या क्वचिद्बोधः क्वचित् सङ्केतादित्यनियमो युज्यते । अथवोभयत्र स्वाभाविकी शक्तिरस्तु; व्युत्पत्तिवशाद्व्यवहार-नियमसंभवात् ।**

**बिन्दुः—** सर्वे सर्वार्थवाचका इति मतावष्टम्भेनापि परिहारान्तरमाह **अथवोभयत्र स्वाभाविकी शक्तिरस्त्विति ।** एतन्मते लक्षणादिवृत्तिर्नास्त्येव । गङ्गायां घोष इत्यादौ तीरप्रतीतिरपि शक्त्यैव । न चैवमतिप्रसङ्गः स्यात् । गां दद्यादित्यादिविधेरश्वरासभादिदानेनापि चरितार्थत्वापातादिति वाच्यम् । नानार्थगवादिशब्देषु गावो बाणाः प्रकीर्तिता इत्यादि निघण्टुबलाद्वा बाणादिदानप्रसङ्गस्य तथापि साम्येन तदर्थं यत्नान्तरस्य त्वयाऽप्यवश्यमाश्रयणीयत्वादिति भावः ।

**परि०—** 'शास्त्रस्था वा तन्निमित्तत्वादि'ति यववराहाधिकरणोक्तरीत्या समाधिमाह **न वय-मिति ।** ननु क्वचित्सङ्केतेन प्रयोगप्रत्यययोरङ्गीकारे तेनैव सर्वत्र तयोरुपपत्तौ किमपूर्वशक्तिकल्पनयेत्यतः सर्वत्र शक्त्यैवार्थबोधकत्वं शब्दस्येत्याह **अथवेति ।** तर्ह्यार्याणामपि प्रियंगुव्यवहारो म्लेच्छानां दीर्घशूकव्यवहारश्च स्यादित्यत आह **व्युत्पत्तीति ।**

**यादु०— अथवोभयत्रेति ।** दीर्घशूकादौ प्रियंग्वादौ चेत्यर्थः । ननु यवशब्दस्य दीर्घशूक इव प्रियङ्गावपि यदि स्वाभाविकी शक्तिस्तदाऽऽर्याणामेव यवशब्दश्रवणे दीर्घशूकव्यवहार इति नियमो न स्यात् । तथा म्लेच्छानामेव प्रियङ्गुव्यवहार इति नियमो न स्यादित्यत आह **व्युत्पत्तिवशादिति ।** अत एव यस्योभयत्र व्युत्पत्तिरस्ति तस्योभयार्थव्यवहारोऽपि दृश्यत इति भावः ।

**आनन्दः—** ननु क्वचित्सङ्केतस्वीकारेऽन्यत्रापि तेनैवोपपत्तौ स्वाभाविकशक्तिकल्पना न युक्तेत्यत आह **अथवेति । उभयत्र स्वाभाविकी शक्तिरिति ।** उभयार्थबोधकस्वभाव इत्यर्थः । न तूभयत्र स्वाभाविकसंबन्धरूपा शक्तिरित्यर्थः । तथा सति दृष्टान्तानानुगुण्यप्रसङ्गात् । तत्राप्यर्थप्रत्यायकत्वमात्रस्यैव चक्षुरादिस्वभावत्वाङ्गीकारात् । ननु तर्ह्युभयार्थबोधकत्वाविशेषात् यवादिशब्दानां दीर्घशूकादावेवार्यैः प्रयोगो न क्रियेत किन्तु प्रियंग्वादिष्वपि प्रयोगः क्रियेतेत्यत आह **व्युत्पत्तिवशादिति ।** व्युत्पत्तिलक्षणसहकारिवशादित्यर्थः । तथा आचार्याणां यवादिशब्दस्य दीर्घशूकेष्वेव व्युत्पत्तिः, म्लेच्छानां तु प्रियंग्वादिष्वेवेति नियम इति भावः ।

**कं०रा०— स्वाभाविकीति ।** यवादिशब्दः क्वचिद्दीर्घशूकादौ स्वाभाविक्या शक्त्यावबोधकः क्वचित् प्रियंग्वादौ सङ्केताद्बोधक इत्यार्यम्लेच्छादीनां प्रागुक्तः प्रयोगप्रत्ययानियमो युज्यत इत्यर्थः ।





**श्रीनिधि०— उभयत्र स्वाभाविकी शक्तिरिति** । एकत्र स्वाभाविकी शक्तिः सहकारिवशादुभयत्राप्यस्त्विति अर्थः ।

**वा०चं०—** कस्यचिच्छब्दस्य केनचिदर्थेन स्वाभाविकः संबन्ध इति द्वितीयपक्षमभ्युपगम्य तत्रोक्तदोषं सङ्केतस्यापि बोधकत्वाङ्गीकारेण परिहरति **न वयमिति** । अत्र शक्तिसङ्केतोभयाङ्गीकारे विजातीयद्वये बोधकत्वाङ्गीकारापत्तेरेकजातीयस्यैव बोधकत्वकल्पनं युक्तमित्याशयेनाद्यपक्षतुल्यं पक्षमभ्युपैति **अथवेति** । न सर्वशब्दानां सर्वार्थैः स्वाभाविकः संबन्धो येनोक्तातिप्रसङ्गः, किन्तु यत्र प्रयोगादिकं तत्र सर्वत्रेति परिहारं सूचयति **उभयत्रेति** । नन्वेवमपि सैन्धवादिशब्दवत्सर्वेषामुभयार्थप्रतीत्याद्यापत्त्या ऋष्यार्यम्लेञ्छेषु कस्यचित्कुत्रचिदेव प्रयोगादेरनुपपत्तिस्तदवस्थैवेत्यतस्तेषां तेषां तत्तदर्थस्वाभाविकसंबन्धमात्रज्ञानं न त्वन्यार्थे विद्यमानस्यापि स्वाभाविकसंबन्धस्येति न नियमानुपपत्तिरित्याशयेनाह **व्युत्पत्तीति** ।

**वा०र०—** स्वाभाविकसंबन्धोऽपि किं सर्वेषामित्यादिना विकल्पितपक्षद्वयैकं पक्षमङ्गीकृत्य न वयमित्यादिपरिहारः प्रवृत्त इति न ज्ञायते अतोऽत्राभिप्रेतं पक्षविशेषं दर्शयन् तत्पक्षीयानुपपत्तिपरिहाराय सङ्केतस्यापि क्वचिद्बोधकत्वमाश्रियत इत्याह **कस्यचिदिति** । कस्यचिदर्थस्य केनचिच्छब्देन स्वाभाविकसंबन्ध इति द्वितीयमनङ्गीकृत्यापि न संपूर्णः सर्वार्थैः सर्वशब्दानां स्वाभाविकः संबन्ध इति प्रथमपक्षोऽङ्गीक्रियते । किन्तु प्रयोगप्रतिपत्तिस्थल एव तत्तच्छब्दानां तत्रतत्रार्थे शक्तिरिति प्रथमपक्षतुल्यः पक्षोऽङ्गीक्रियतेऽतो न शब्दार्थव्यवस्थानुपपत्तिप्रसक्तिरित्याशयेनाद्यपक्षतुल्यमित्युक्तम् । वक्ष्यति च **न सर्वशब्दानां सर्वार्थैरित्यादि** । स्वाभाविकसंबन्ध इत्यनन्तरमङ्गीक्रियत इति शेषः । एवमुत्तरत्र वाक्येऽपि । **उक्तातिप्रसङ्ग इति** । शब्दार्थव्यवस्थानुपपत्तिप्रसङ्गादिति पूर्वमूलेऽन्यथा सर्वशब्देभ्यः सर्वार्थप्रतीतिप्रसङ्गादिति सूचितातिप्रसङ्ग इत्यर्थः । **यत्रेति** । येषां शब्दानां यत्रार्थे प्रयोगप्रत्ययौ तेषां तेषां शब्दानां तत्तदर्थैः सर्वैः स्वाभाविकसंबन्धोऽङ्गीक्रियत इत्यर्थः । मूलानुसारेण सर्वत्रेत्यनन्तरं स्वाभाविकी शक्तिरिति पूरणे तु सर्वत्रेति सप्तमी यथाश्रुतैव । **उभयत्रेतीति** । सर्वत्रेत्यनुक्तोभयत्रेत्युक्त्या सर्वत्रेत्यस्य प्रयोगप्रत्ययविषयानेकस्थल इति सङ्कोचसूचनादिति भावः । **सैन्धवादिशब्दवदिति** । षष्ठीबहुवचनार्थे वतिः । सैन्धवादिशब्दानामुभयविधो योऽर्थस्तत्प्रतीत्यादिकं सर्वेषां पुरुषाणामस्ति तद्वत् सर्वेषां यवादिशब्दानामुभयत्र स्वाभाविकशक्तेः सत्त्वात्तेषां शब्दानामुभयविधो योऽर्थस्तत्प्रतीत्यादिकमपि सर्वेषां स्यादित्येवं यवादिशब्दानामुभयविधस्यार्थस्य प्रतीत्याद्यापत्तेरिति योजना । म्लेञ्छेष्वित्यस्य म्लेञ्छानामित्यर्थः । यवादिशब्दानां केषुचिदेवार्थेषु प्रयोगादिकं यदस्ति तदनुपपत्तिरित्यर्थः । प्रागुक्तनियमरूपदूषणमनेकार्थे शक्तिस्वीकारेऽपि न परिहृतमित्यर्थः । तेषामित्याद्यस्य ऋष्यार्यम्लेञ्छानामित्यर्थः । द्वितीयस्य तेषामित्यस्यावृत्त्या यवादिशब्दानामित्यर्थः । तथा च तेषां यवादिशब्दानां एते ते अर्थाः । आर्यप्रसिध्या दीर्घशूकः । म्लेञ्छप्रसिध्या प्रियङ्गुरित्यादिरूपास्तैस्साकं यत्संबन्धमात्रं तस्य ज्ञानम् । आर्याणां यवशब्दस्य दीर्घशूकरूपार्थेनैव यः संबधस्तन्मात्रज्ञानं म्लेञ्छानां तु तच्छब्दस्य प्रियङ्गुरूपार्थेन यः संबन्धस्तन्मात्रज्ञानमिति यावत् । न तु स्वस्वप्रतिपन्नार्थे विद्यमानस्यापि स्वाभाविकसंबन्धस्य ज्ञानमतोऽर्थविशेष





एव तच्छब्दप्रयोगादिकं तेषां तेषां ऋष्यादीनामित्यर्थः । संबन्धस्येत्यतःपरं बुध्या विविक्तज्ञानमित्यस्यानुवृत्तिः । यथा खल्वित्यादिमूलग्रन्थस्य पश्चादङ्गीकृताथवेत्युक्तपक्षोपपादनपरत्वमिति भ्रान्तिं वारयितुं प्रथमतोऽङ्गीकृत-कस्यचिदित्युक्तपक्षोपपादनपरत्वेन योजनां करिष्यन् प्रथमतोऽङ्गीकृतपक्षोपपादकत्वे तदुपपादनस्य पूर्वमेव कर्तव्यत्वापातः ।

**स०व्र०— अथवोभयत्रेति**। दीर्घशूकादौ प्रियंग्वादौ चेत्यर्थः। ननु यवशब्दस्य दीर्घशूक इव प्रियंगावपि यदि स्वाभाविकी शक्तिस्तदा आर्याणामेव यवशब्दश्रवणे दीर्घशूकव्यवहार इति नियमो न स्यात्। तथा म्लेञ्छानामेव प्रियंगुव्यवहार इति नियमो न स्यादित्यत आह **व्युत्पत्तिवशादिति** । अत एव यस्योभयत्र व्युत्पत्तिरस्ति तस्योभयार्थव्यवहारोऽपि दृश्यत इति भावः ।

**स०ना०— प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हीति**। **अर्थविशेषे स्वाभाविकी शक्तिरस्तीति**। यवादिशब्दानां दीर्घशूकादौ स्वाभाविकी शक्तिः प्रियंग्वादौ तु सङ्केत इति भावः । **अथवोभयत्र स्वाभाविकी शक्तिरस्त्विति** । द्वे शब्दशक्ती, ज्ञानजननशक्तिरेका अपरा ज्ञानजननोपयोगिनी शब्दार्थयोः संबन्धरूपा । प्राक् यवादिशब्दानां दीर्घशूक एव स्वाभाविकी शक्तिः। प्रियंग्वादिभिस्तु सङ्केत एव। यवादिशब्दानां संबन्धः न शक्तिः। तत एव प्रियंग्वादिज्ञानजनने त्वाहिताशक्तिरित्युक्तम्। इदानीं तु अथवोभयत्र स्वाभाविकी शक्तिरित्यनेन यवादि-शब्दानां दीर्घशूकज्ञानजनने प्रियंगुज्ञानजनने च स्वाभाविकी शक्तिः, न तु क्वचित्स्वाभाविकी शक्तिः, क्वचिदाहिता शक्तिः। तदुपयोगिसंबन्धस्तु दीर्घशूकादौ तु शक्तिः प्रियंग्वादौ प्रागिव सङ्केत एवोच्यते। अत एव शब्दः सङ्केतेनापि प्रमापक इति वक्ष्यते।

**वि०ट०—** ननु सर्वत्र सङ्केतेनैवानियमोपपत्तौ क्वचिच्छक्तिः क्वचित्सङ्केत इत्यङ्गीकारे गौरवमित्यतः पक्षान्तरमाह **अथवेति**। प्रौढिवादेनैवैते पक्षा उक्ताः। वस्तुतस्तु वैदिके शब्दे स्वाभाविक्येव शक्तिः। न तु तत्र अनियमः । प्राकृतानां तु सङ्केत एवेति वक्ष्यते । वाचारंभणश्रुत्यर्थविचारेणाप्येषोऽर्थोऽवगम्यते । यदा तु संस्कृतानामेव यवादिशब्दानामार्यम्लेञ्छादिभिरन्यत्र सङ्केतितत्वं तदा तेषामपि प्राकृतत्वमेवेति ध्येयम् । ननु एकस्यैव शब्दस्योभयपरत्वे आर्याणां दीर्घशूके म्लेञ्छानां प्रियंग्वादावेवेत्येकस्य यवशब्दस्यैव तत्र तत्रैव व्यवहारानियम इत्यत आह **व्युत्पत्तिवशादिति**। अत एव यस्योभयत्रापि व्युत्पत्तिरस्ति तस्योभयार्थव्यवहारोऽपि दृश्यत इति भावः।

**चषकः— व्युत्पत्तिवशादिति**। यस्यार्थद्वयेऽपि तादृशशक्तिप्रतिपत्तिरस्ति तस्योभयार्थव्यवहारोऽपीति भावः।





**५९८ सु०— यथा खलु शुक्तिसन्निकृष्टेन चक्षुषा कश्चिच्छुक्तिकां प्रतिपद्यते कश्चिद्रजतम् । न चैतावता चक्षुषोऽर्थप्रत्यायकत्वमस्वाभाविकं दोषसहकारिसदसद्भावाभ्यामनियम-संभवात् । यथा कृतकत्वाल्लिङ्गात् कश्चिदनित्यतां प्रत्येति, कश्चिन्नित्यताम् । अन्यथा विरुद्धहेत्वाभासानवसरप्रसङ्गात् । तावता न तस्यास्वाभाविकं गमकत्वम्; अनियमस्य संबन्धग्रहणदोषभावाभावाभ्यामुपपन्नत्वात् । तथा शब्दस्यापि शक्त्यनुसार्यननुसारि-व्युत्पत्तिलक्षणसहकारिवशादनियमेऽपि स्वाभाविकशक्तिसद्भावः संभवतीति ॥**

तदिदमाह **प्रत्यक्षवच्चेति ।**

**इयांस्तु विशेषः । शब्दस्सङ्केतादपि प्रमापकः । नैवं चक्षुरादि । तेन संवाद-विसंवादोपपत्तिरिति ।**

**बिन्दुः— इयांस्तु विशेष इति** । यथा चक्षुषो दोषसद्भावासद्भावाभ्यां भ्रमप्रमाव्यवस्था । एवं शब्दस्यापि स्वस्वपरिगृहीतसङ्केतविशेषरूपग्रहणाग्रहणाभ्यां तदुपपत्तिरिति भावः ।

**परि०—** नन्वेवं पूर्वतन्त्रे यवशब्देन प्रियंग्वादिव्यवहारोऽसाधुरित्युक्तमित्यतो दीर्घशूक-विषयिणीमेव शब्दशक्तिं दोषवशादन्यविषयतया व्युत्पद्य व्यवहरन्ति । शब्दश्च व्युत्पत्तिमनुसृत्यार्थं बोधयतीति तस्य साधुत्वं युक्तमिति दृष्टान्तपूर्वं व्यनक्ति **यथेति । दोषसहकारीति** । दोषरूप-सहकारीत्यर्थः । **संबन्धेति** । व्याप्यव्यापकाभिमतयोः संबन्धग्रहणेत्यर्थः । **प्रत्यक्षवच्चेतीति** । चशब्दादनुमानवदिति पूर्ववत् गृह्यते । नन्वेवं प्रत्यक्षादिवदर्थविसंवादोऽपि प्रियंग्वादिव्यवहारे स्यात् इत्यत आह **इयांस्त्विति** ।

**यादु०—** ननु क्वचित्स्वाभाविक्या शक्त्या बोधकः क्वचित्सङ्केतादित्युक्तमयुक्तम् । सर्वत्रापि सङ्केतेनैवानियमोपपत्तौ क्वचित्स्वाभाविकशक्तिकल्पनस्यान्याय्यत्वात् । कथं चेकत्रैव शब्दशक्तिकल्पनेऽशक्य-स्यान्यस्य तस्माच्छब्दात्सङ्केतरूपसहकारिबलादपि प्रतीतिरित्याशङ्कायामाद्यं पक्षं दृष्टान्तमुखेनोपपादयति **यथा खलु शुक्तिसन्निकृष्टेनेत्यादिना । एतावतेतिं** । अशक्यरजतप्रत्यायकत्वं वर्तत इत्येतावतेत्यर्थः । **अर्थप्रत्यायकत्वं** शुक्तिप्रत्यायकत्वम् । नन्वत्रापि शुक्तिसन्निकृष्टचक्षुषः कथं शक्याशक्योभयार्थप्रत्यायकत्व-रूपोऽनियम इत्यत आह **दोषसहकारीति । कश्चिन्नित्यतामिति** । कृतकत्वहेतोर्नित्यत्वसामानाधिकरण्यभ्रमा-त्तेनाशक्यामेव नित्यतां कश्चित्प्रत्येतीत्यर्थः । **अन्यथेति** । सामानाधिकरण्यभ्रमेण नित्यत्वप्रतीत्यभाव इत्यर्थः ।





**गमकत्वं** अनित्यत्वगमकत्वम्। अनियमस्येत्येतत्पूर्ववद्योज्यम्। **शक्त्यनुसारिव्युत्पत्तीति**। सङ्केतग्रहरूपेत्यर्थः। **अनियमेऽपीति**। शक्याशक्योभयार्थप्रतीतावपीत्यर्थः। **स्वाभाविकशक्तिसद्भाव इति**। क्वचिदर्थ इति शेषः। **सङ्केतादपीति**। देवदत्तादिपदे तथात्वस्य क्लृप्तत्वादिति भावः। **नैवं चक्षुरादीति**। तत्र सहकारिणो दोषस्याप्रमाजनकत्वेनैव क्लृप्तत्वादिति भावः।

**वं०प०— रजतं** तत्रारोपितं रजतम्। **अन्यथेति**। कृतकत्वस्य नित्यत्वप्रतीतिजनकत्वाभाव इत्यर्थः। **तावतेति**। कृतकत्वहेतोरशक्यनित्यताप्रत्यायकत्वमस्तीत्येतावतेत्यर्थः। नन्वनित्यत्वसमानाधिकृतस्य कृतकत्वहेतोः कथं शक्याशक्योभयार्थप्रत्यायकत्वरूपोऽनियम इत्यत आह **अनियमस्येति**। **संबन्धग्रहणे** व्याप्तिग्रहणे। व्याप्तिग्रहणे दोषभावाभावाभ्यामित्यर्थः।

**आनन्दः—** तत्रैव संप्रतिपन्नदृष्टान्तमाह **यथा खल्विति**। न चैवमस्तु अज्ञातकरणे, ज्ञातकरणे तु नैवमित्यत आह **यथेति**। **स्वाभाविकशक्तिसद्भाव इति**। उभयबाधकत्वशक्तिसद्भाव इत्यर्थः। अत्रेदं तत्त्वम्। एकत्रैव स्वाभाविकसंबन्धरूपा शक्तिः न तूभयत्र। तथाच यवादिशब्दानां दीर्घशूकादिष्वेव स्वाभाविकसंबन्धरूपा शक्तिर्न तु प्रियंग्वादौ। तत्र तु शक्तिभ्रमादेव प्रवृत्त्यादिकार्यं न च कारणभ्रमे कार्यप्रमा कथं स्यादिति वाच्यम्। तस्य तत्राप्रयोजकत्वात्। बाधाबाधाभ्यामेव विषयव्यवस्थोपपत्तेः। अत एव धूलीपटले धूमभ्रमाद्वह्निप्रमोदयः। गन्धप्रागभावावच्छिन्न इत्यादौ सत्यामपि कारणप्रमायां भ्रमानुमितिरेवोत्पद्यते। ननु शब्दस्योभयत्र बोधकत्वाविशेषे शक्तिग्रहविशेषे च सति एकत्रैव स्वाभाविकसंबन्धरूपा शक्तिः नापरत्वेति कस्मादवसीयत इति चेन्न। साधुभिर्भाषितव्यमिति यज्ञादौ साधुप्रयोगकरणं विहितम्। तत्र यदि प्रियंग्वादौ यवादिशब्दानां स्वाभाविकसंबन्धरूपा शक्तिः स्यात्तर्हि यज्ञादावार्यैः यवादिशब्दः प्रियंग्वादौ प्रयुज्येत। न चैवं, किन्तु तैर्यवादिशब्दः दीर्घशूकादावेव प्रयुज्यते कुतः साधुत्वस्यैव स्वाभाविकसंबन्धरूपशक्तिनियामकत्वेन दीर्घशूकेष्वेव शक्तिर्न प्रियंग्वादाविति दिक्। ननु तर्हि दोषसहकृतचक्षुरादिना ज्ञातस्य नियमेन विसंवादित्वं सिध्येत्। शक्तिभ्रमाभ्यां जातस्य तु संवादित्वमेवेत्येतत्कुत इत्यत आह **इयांस्त्विति**। सङ्केतेनापीत्यपिशब्देन शक्तिभ्रमपरिग्रहः।

**कं०रा०— अनियमस्येति**। कृतकत्वस्य नित्यत्वेन सह संबन्धग्रहणलक्षणदोषभावात्कश्चित्कृतकत्वेन नित्यत्वं प्रतिपद्यते। तदभावाच्च कश्चित्तेनानित्यत्वं प्रत्येतीत्येवंप्रकारेणानियमस्योपपन्नत्वादित्यर्थः।

**श्रीनिधि०— अनियमेऽपीति**। केचिद्दीर्घशूक एव प्रयुञ्ज्यते। केचित्प्रियङ्गौ प्रयुञ्जत इत्[illegible]मेऽपि। **तेन संवादविसंवादोपपत्तिरिति**। चक्षुरादेः रजतविषयकज्ञानजनकत्वे शुक्तिसन्निकृष्टस्यैव सहकारिवशात् स्वाभाविकेऽपि चक्षुषः संवादिविसंवादिज्ञानजनकत्वं, यवादिशब्दस्य तु उभयत्र संवादिज्ञानजनकत्वमिति विशेषः उक्तविशेषेणोपपन्न इत्यर्थः।





**वा०चं०**— एवं पक्षद्वयमुपपाद्य कस्यचित्क्वचिदेव शक्तिरित्याद्यपक्षे यत्परेण प्रदीपदृष्टान्तेनैकत्र स्वाभाविकशक्तिमतो न परप्रकाशकत्वं अन्यप्रकाशकत्वे वा न तत्र स्वाभाविकशक्तिरिति दूषणमुक्तम् । तस्य प्रदीपादेस्तादृशसहकार्यभावेन रसाद्यप्रकाशकत्वेऽपि प्रमाकरणान्तरे स्वार्थप्रमाजननशक्तिमत्यपि दोषादिसहकारि-वशादन्यार्थज्ञानजनकतादर्शनाच्छब्दस्याप्येकत्र स्वाभाविकशक्तिमतः सहकारिवशादन्यार्थज्ञानजनकतोपपत्तिरिति परिहारं प्रत्यक्षवदिति मूलसूचितं विवक्षुराह **यथा खल्वित्यादिना** । न च सन्निधानाद्यथेत्यादिग्रन्थोऽव्यवहित-पक्षोपपादकत्वेन किं न व्याख्यात इति वाच्यम् । तथात्वे उभयत्र स्वाभाविकसंबन्धे व्यवहारनियमस्यैवोप-पादनीयत्वेनानियमोपपादनासङ्गतेरुभयत्र स्वाभाविकशक्तौ प्रत्यक्षादेः प्रमाप्रमोभयजननशक्तेः स्वाभाविकत्वापातेन अप्रामाण्यस्यापि स्वतस्त्वापत्तेश्चोभयत्र स्वाभाविक्यां शक्तौ व्युत्पत्तिद्वयस्यापि शक्त्यनुसारित्वेन शक्त्यनुसा-र्यननुसारीत्युत्तरग्रन्थासङ्गतेश्चोभयत्र शक्तिपक्षे सङ्केतप्रसक्तेरभावेन विसंवादाप्राप्त्या चेयांस्तु विशेष इत्याद्यनुपपत्तेश्च । न चैवमुभयत्रेति पक्षस्य सर्वादौ वाऽऽद्यपक्षोपपादनान्ते वा निवेशः स्यादिति वाच्यम् । दोषरूपसहकारिलाभे प्रत्यक्षादीनामप्रमाजनकत्वमेव । तदभावे प्रमाजनकत्वमेवेति सहकारिवशप्रयुक्तनियमस्यापि दृष्टतया प्रकृतेऽपि व्युत्पत्तिवशाद्व्यवहारनियमोपपत्तिरित्यर्थस्यापि यथेत्यादिग्रन्थेन सूचिततया व्युत्पत्तिवशाद्व्यवहारनियमस्य तत्पक्षोपपादकस्याप्यनेनोपपादनलाभात्तदनन्तरभावोपपत्तेः । **अर्थप्रत्यायकत्वमिति** । अर्थप्रमापकत्वमित्यर्थः । अर्थशब्दो वा विषयविशेषपर इति बोध्यम् । एवमुत्तरत्रापि द्रष्टव्यम् । **अन्यथेति** । कृतकत्वात्कस्यापि नित्यत्वा-प्रतीतौ तत्पूर्वकप्रयोगानुपपत्त्या विरुद्धहेत्वाभासोच्छेदप्रसक्तेरिति भावः । नन्वेवं दोषसहकृतप्रत्यक्षादिजन्यज्ञानस्य अप्रमात्वेन विसंवादित्ववच्छक्त्यननुसारिव्युत्पत्तिसहकृतशब्दजन्यज्ञानस्याप्रमात्वाद्यापत्तिरित्यत आह **इयांस्तु विशेष इति** ।

**वा०र०**— व्यवधाने निमित्ताभावादित्याशङ्कां च परिहरति **एवं तावदित्यादिना** । **उपपाद्येति** । पक्षद्वयोपपादनं परस्परसङ्गत्या कृत्वा पश्चात्पूर्वोक्तपक्षे शङ्कितबाधकपरिहारेणाप्युपपादनं क्रियत इति नासङ्गतिरिति भावः । **आद्यपक्ष इति** । यद्यपि कस्यचित्क्वचिदेव स्वाभाविकी शक्तिरिति पक्षस्य प्रागुक्तविकल्पक्रमानुसारेण द्वितीयत्वम् । तथापि कस्यचिदिति पक्षस्य प्रथममङ्गीकारः पश्चाच्च सर्वेषामित्येतत्पक्षस्याङ्गीकार इति समाधान-क्रमानुसारेण तस्याद्यत्वात्तथोक्तिर्युक्तेति ज्ञेयम् । ज्ञानजनकतादर्शनात् ज्ञानजनकतोपपत्तिरित्युभयत्र ज्ञानग्रहणेन प्रमाकरणान्तर इत्याद्युक्तेश्च प्रत्यक्षानुमानरूपदृष्टान्ते सहकारिवशेन ज्ञानजनकत्वमात्रं विवक्षितमिति न सहकारि-समवधानस्य प्रमाजनकत्वेऽप्युपयोगप्राप्तिः । दृष्टान्तदार्ष्टान्तिकभावोऽपि सहकारिसमवधानेन ज्ञानजनकत्वमात्र एवेति फलितमिति बोध्यम् । सन्निहिताथवेत्युक्तपक्षोपपादनपरतया यथा खल्वित्यादिग्रन्थयोजनासंभवे तत्परित्यागेन व्यवहितप्रथममुक्तपक्षोपपादनपरतया योजना कुत इत्याक्षिप्य स्वकृतां योजनां समर्थयितुमाह **न च सन्निधानादिति** । **अव्यवहितपक्षेति** । शुक्तिकां प्रतिपद्यते कश्चिद्रजतमित्युक्ते उभयज्ञानजननशक्तेः स्वाभाविकत्वमिति लाभेन तथैवोत्तरग्रन्थयोजनायाः कर्तुं शक्यत्वादिति भावः । **तथात्व इति** । अव्यवहितपक्षोपपादकत्वेन व्याख्यान इत्यर्थः । **संबन्धे व्यवहारेति** । उभयत्र स्वाभाविकसंबन्धेऽङ्गीक्रियमाणे कस्यचित्कुत्रचिदेव व्यवहारानुपपत्तिरित्याशङ्का-





परिहाराय तन्नियममात्रस्यैव व्युत्पत्तिवशादित्युक्तरीत्योपपादनीयस्येत्यर्थः । **अनियमेति** । एकस्यैव दोषरूपसहकार-सदसद्भावाभ्यां शुक्तिकाज्ञानरजतज्ञानरूपकार्यद्वयजनकत्वसंभवात्कस्यचिच्छुक्तिकाप्रतिपत्तिः कस्यचित् रजत-प्रतिपत्तिरित्यनियमोपपादनासङ्गतेरित्यर्थः । दोषसहाकारादिप्रतिपादनादि पर्यालोचनया एकत्रैव स्वाभाविकशक्ति-श्चेदेकमात्रप्रकाशनस्वभावस्यान्यप्रकाशकत्वायोगः । अन्यथा रूपप्रकाशनसमर्थदीपस्य रसप्रकाशकत्वापाता-दित्येतद्दूषणपरिहारपरत्वस्यैव प्राप्तेरिति भावः । दोषसदसद्भावोक्त्या नैकत्र स्वाभाविकशक्तिः कल्पनीया । एकस्यै-वोभयस्मिन् विरुद्धे कथं स्वाभाविकी शक्तिरित्यतः तदुपपादनाय दोषसहकाराद्याश्रयणादित्यतो बाधकान्तरमाह **उभयत्रेति** । एकस्यैवोभयस्मिन् विरुद्धे कथं स्वाभाविकी शक्तिरित्यतः तदुपपादनाय दोषसहकाराद्याश्रयणादि । तथा चैकत्रैव स्वाभाविकशक्तिः संमतेति भावः । एवं दृष्टान्तपरग्रन्थानुपपत्तिमभिधाय दार्ष्टान्तिकग्रन्थानुपपत्तिमप्याह **उभयत्रेति** । **सङ्केतप्रसक्तीति** । एकत्रैव स्वाभाविकशक्तिस्तदनुसारिणी व्युत्पत्तिश्च । अपरत्र तु सङ्केत एव । अत एव शक्त्यननुसारिणी व्युत्पत्तिरित्यङ्गीकारे किल दोषसहकृतप्रत्यक्षादिजन्यज्ञानस्येत्यादिवक्ष्यमाणटीकारीत्या विसंवादशङ्काप्रसक्तिः । यदा तूभयत्र स्वाभाविकसंबन्ध एव तदैकत्र सङ्केतप्रसक्तेरभावात्तत एव विसंवादशङ्का-प्राप्त्यभावात् तत्परिहारकेयांस्तु विशेष इत्यादिग्रन्थानुपपत्तिश्चेत्यर्थः । **सर्वादाविति** । कस्यचित्कुत्रचिदेवेति पक्षाङ्गीकारात्प्रागेवेत्यर्थः । आद्येति कस्यचिदित्युक्ताद्यपक्षस्य यदुपपादनमनियमोपपत्तेरित्यन्तमथवेत्यतः प्राक्तनं तथा तदुत्तरं यथा खल्वित्यादिविसंवादोपपत्तेरित्यन्तं च तदुभयानन्तरमुभयत्र स्वाभाविकी शक्तिरिति पक्षस्य निवेशनीयत्वं स्यात् । कस्यचिदित्याद्यपक्षोपपादनपरयथाखल्वित्यादिग्रन्थस्योभयत्रेति पक्षान्तरेण व्यवधाने निमित्ताभावादिति भावः । व्यवधाने निमित्तमाह **दोषरूपेति** । कस्यचित्क्वचिदेव शक्तिस्वीकारेऽपि सहकारि-वशादन्यार्थेऽपि ज्ञानजनकत्वं युक्तमित्येवं प्रतिपादनपरस्य यथा खल्वित्येतद्ग्रन्थैकदेशस्य न केवलं तत्पक्षोप-पादकत्वमात्रम् । किन्तूभयत्र स्वाभाविकशक्तिपक्षे प्राप्तानुपपत्तिपरिहाराय प्रवृत्तव्युत्पत्तिवशादित्येतद्युक्त्युपपादकत्वं च दृष्टान्तप्रदर्शनमुखेनार्थतोऽस्ति । ततस्तल्लोभेन मध्ये उभयत्रेति पक्षं प्रवर्त्य तदुपपादकतया व्युत्पत्तिवशा-दित्यादिकमुक्त्वा पश्चादाद्यपक्षीयानुपपत्तिपरिहारपरयथेत्यादिग्रन्थप्रवर्तनं कृतमिति तद्ग्रन्थस्योभयत्रेत्येतद्ग्रन्थानन्तर-त्वोपपत्तिरित्यर्थः । उपपत्तेरित्यनन्तरमिति द्रष्टव्यमिति शेषः । प्रत्यायकत्वं नाम प्रत्ययजनकत्वम् । न च प्रत्यक्षादीनां तावन्मात्रं स्वभावः । अपितु प्रमाजनकत्वमतो व्याचष्टे **अर्थप्रमापकत्वमित्यर्थ इति** । अत्र पक्षे प्रत्ययशब्दस्य तद्विशेषप्रमायां लक्षणाश्रयणीया भवतीत्यपरितोषात्पक्षान्तरमाह **अर्थशब्दो वेति** । विषयविशेषः शुक्तित्वादिः । तथा च शुक्तिकादिसन्निकृष्टस्य शुक्तिकादिप्रत्यायकत्वे प्रमाजनकत्वमेव प्राप्तमिति भावः । न तस्यास्वाभाविकं गमकत्वमित्युत्तरत्रापि गमकत्वमित्यस्य प्रमापकत्वमित्यर्थः । यदि च गमकत्वनिरूपक-तयार्थपदाध्याहारस्तत्रास्ति । तर्हि तदर्थपदं वा विषयविशेषपरमित्यूह्यमित्याह **एवमुत्तरत्रापीति** । विरुद्ध-हेत्वित्येतद्दुर्गमत्वाद्व्याचष्टे **कृतकत्वादिति** । **अप्रमात्वादीति** । आदिपदेन विसंवादित्वपरिग्रहः । **आहेति** । शब्दस्य चक्षुरादिवैषम्यमाहेत्यर्थः । **संवादविसंवादेति** मूले सङ्केतेन बोधकशब्दे संवादः । अतथाभूते चक्षुरादौ तु विसंवाद इति योज्यम् । पूर्वक्रमानुसारेण चक्षुरादेः शब्दस्य चेति लाभेऽपि संवादशब्दस्याल्पाच्तरत्वात्पूर्वनिपातेऽपि फलतः विसंवादस्य संवादस्य चोपपत्तिरित्येव चक्षुरादिक्रमेण संबन्धनीयमिति ज्ञेयम् ।





**स०व्र०—** **ननु स्वाभाविक्या शक्त्या क्वचिद्बोधकः क्वचित्सङ्केतादित्युक्तमयुक्तम्** । सर्वत्रापि सङ्केतेनैव नियमोपपत्तौ क्वचित्स्वाभाविकशक्तिकल्पनस्यान्याय्यत्वात् । कथं चैकत्रेव शब्दशक्तिकल्पनेऽशक्यस्य अन्यस्य तस्मात्प्रतीतिरित्याशङ्कयामाद्यं पक्षं दृष्टान्तमुखेनोपपादयति **यथा खलु शुक्तिसन्निकृष्टेनेत्यादिना** । **एतावतेति** । अशक्यरजतप्रत्यायकत्वं वर्तत इत्येतावतेत्यर्थः । **अर्थप्रत्यायकत्वं** शुक्तिप्रत्यायकत्वम् । नन्वत्रापि शुक्तिसन्निकृष्टचक्षुषः कथं शक्याशक्योभयार्थप्रत्यायकत्वरूपोऽनियम इत्यत आह **दोषसहकारीति** । **कश्चिन्नित्यतामिति** । सामानाधिकरण्यभ्रमात् कृतकत्वहेतोरशक्यामेव नित्यतां प्रत्येतीत्यर्थः । **अन्यथेति** । सामानाधिकरण्यभ्रमेण नित्यत्वप्रतीत्यभावे । **गमकत्वं** अनित्यगमकत्वम् । अनियमस्येत्येतत्पूर्ववद्योज्यम् । **शक्त्यननुसारिव्युत्पत्तीति** । सङ्केतग्रहेणेत्यर्थः । **अनियमेऽपीति** । शक्याशक्योभयार्थप्रतीतावपीत्यर्थः । **स्वाभाविकः शक्तिसद्भाव इति** । क्वचिदर्थ इति शेषः । यवादिशब्दानां म्लेञ्छादिसङ्केतग्रहः रूपसहकारि-वशादशक्यार्थप्रत्यायकत्वेऽपि क्वचिच्छक्त्यनुसारिव्युत्पत्तिवशाच्छक्यार्थस्यापि प्रतिपत्तौ तत्र शक्तिकल्पनं युज्यत एवेति भावः । **सङ्केतादपीति** । देवदत्तादिपदे तथा दर्शनादिति भावः । **नैवं चक्षुरादीति** । तत्र दोषस्य सहकारित्वेन तज्जन्यज्ञानस्याप्रमात्वमित्यर्थः । व्युत्पत्तेः शक्त्यननुसारित्वं नाम स्वतःशक्तेर्यद्विषयकत्वं तज्ज्ञानरहितत्वमिति द्रष्टव्यम् ।

**स०ना०—** **न चैतावता चक्षुषोऽर्थप्रत्यायकत्वमस्वाभाविकम्** इति च वक्ष्यत इति ।

**विट्ठ०—** एवं कल्पनागौरवपरिहारायाभ्युपगमवादेन पक्षान्तरमुपपाद्य शब्दस्य क्वचिदेव शक्तिरन्यत्र तु सङ्केत इत्याद्यपक्षाङ्गीकारेऽपि न गौरवमिति सूचयन् एकत्रैव शक्तस्य शब्दस्याशक्यान्यार्थप्रत्यायकत्वं न संभवति । रूपप्रकाशने शक्तस्य प्रदीपस्य रसप्रकाशकत्वादर्शनादित्याशङ्कां परिहर्तुं आद्यपक्षं दृष्टान्तेनोपपादयति **यथा खल्विति** । एतावता असद्रजतप्रत्यायकत्वमित्येतावता अर्थप्रत्यायकत्वं शुक्तिरूपसत्यार्थप्रत्यायकत्वम् । ननु शुक्तिरूपार्थप्रत्यायकत्वमेव स्वाभाविकं चेत्तर्हि कदाचिच्छुक्तिप्रतीतिः कदाचिद्रजतप्रतीतिरित्यनियमो न स्यादित्यत आह **दोषसहकारीति** । **तावतेति** । कृतकत्वेन कश्चिन्नित्यतां प्रत्येतीत्येतावता कृतकत्वस्यानित्यता-गमकत्वं नास्वाभाविकमित्यर्थः । तर्हि कथं क्वचिन्नित्यतागमकत्वमित्यनियम इत्यतो व्याप्तिग्रहणे दोषसदसद्भाव-वशादित्याह **अनियमस्येति** । **स्वाभाविकशक्तिसद्भाव इति** । क्वचिदर्थ इति शेषः । तथा च यवादिशब्दानां म्लेञ्छादिसङ्केतग्रहणरूपदोषसहकारिवशादशक्यार्थप्रत्यायकत्वे क्वचिच्छक्त्यनुसारि व्युत्पत्तिवशाच्छक्यार्थस्यापि प्रतिपत्तौ तत्रैव स्वाभाविकशक्तिग्रहणं युक्तमिति न कल्पनागौरवादिकमिति भावः । ननु तर्हि प्रत्यक्षादि-वदर्थविसंवादोऽपि प्रियंग्वादिव्यवहारे स्यादित्यत आह **इयांस्त्विति** । यवादिशब्दः सङ्केतात् प्रियंग्वाद्यर्थप्रमापको भवति । देवदत्तादिपदानां तथात्वस्य दृष्टत्वात् । **नैवं चक्षुरादीति** । प्रमाविरोधिदोषाणामेव चक्षुरादिसहकारित्वा-दिति भावः ।

**चषकः—** अथार्थनिरूपितनैसर्गिकशक्तिप्रतिसन्धानेन पुरुषविशेषपरिभाषाप्रतिसंहित्या च तृणारणि-मणिन्यायेनान्वयबोधोपगमे परस्परजन्यस्थलीयव्यतिरेकव्यभिचारवारणाय कार्यतावच्छेदककोटावव्यवहितोत्तरत्व-





निवेशप्रसङ्गेन सार्वत्रिकपरिभाषानुसंहितिहेतुतोपगतिरेव श्रेयसी । परिभाषास्थलेऽर्थस्याशक्यतापत्त्या शक्य-स्यैवान्वयबोधे भानमिति मर्यादाऽत्ययेन कथं सहकारिसामर्थ्यादन्वयधीरित्याशङ्कायामाद्यकल्पं निदर्शनद्वय-प्रदर्शनेन संघटयति **यथेत्यादि** । **अन्यथेति** । कृतकत्वस्य नित्यत्वसामानाधिकरण्यभ्रमेण तदप्रत्यायकत्वे । **अनियमेऽपीति** । शक्याशक्योभयार्थगोचराधिगतावपीत्यर्थः । **स्वाभाविक इति** । अर्थविशेष इत्यादिः ।

**प्रदीपः**— ननु कृतकत्वात्कथं नित्यतां प्रत्येतीत्यत आह **अन्यथेति** । यदि कृतकत्वान्नित्यतां प्रतीयात्तदा तत्पक्षविपक्षवृत्तिविरुद्धलक्षणहेत्वाभासाभिधानायोगाद्धेत्वाभासन्यूनता स्यादिति भावः ।

**५९९ सु०— ननु ये स्वाभाविकं संबन्धमास्थिषत शब्दार्थयोस्तेषामपि नैष सत्ता-मात्रेणावगमाङ्गम् । अपि तु विज्ञातस्सन् । विज्ञाने च 'अस्यायमर्थस्य वाचक' इति वा 'अस्मादयं बोद्धव्य' इति वा सङ्केत एवोपायः । वृद्धव्यवहारोऽपि गवादिशब्दानां देवदत्तादि-शब्दवत्सङ्केतपूर्वक एव । तद्वरमस्तु सङ्केत एव । कृतमत्र स्वाभाविकेन संबन्धेन । तन्मात्रादेव प्रयोगप्रतिपत्तिव्यवहाराणामुपपत्तेः ।**

**परि०**— सङ्केतवाद्यभिमतचोद्यमनुवदति **ननु ये स्वाभाविकमित्यादिना अत्र ब्रूम** इत्यन्तेन । **इति वा सङ्केत इति** । परमेश्वरेच्छाधीनो यः सङ्केतः तज्ज्ञानमेवोपाय इत्यर्थः । वृद्धव्यवहार एव शक्तिज्ञानोपायोऽस्त्वित्यत आह **वृद्धेति** ।

**यादु०**— **सङ्केत एवोपाय इति** । अस्माच्छब्दादयमर्थो बोद्धव्य इत्यादिवाक्यादवगत इति शेषः । स्वाभाविकसंबन्धस्य शक्तिरूपत्वेन प्रत्यक्षादिना ज्ञातुमशक्यत्वादिति भावः । ननु स्वाभाविकसंबन्धविज्ञानं वृद्धव्यवहारादेव भविष्यति । अतो न सङ्केतस्य तत्रोपजीव्यतेत्यत आह **वृद्धव्यवहारोऽपीति** । यथा पिण्डविशेषे देवदत्तादिशब्दसङ्केते पित्रादिना कृते सति पश्चात्प्रयोजकवृद्धादिव्यवहारस्तज्ज्ञापकः प्रवर्तते तथा गवादिशब्देष्वपि कस्यचित्सङ्केतानन्तरमेव वृद्धव्यवहारस्तज्ज्ञापनाय प्रवर्तत इत्यर्थः । तथा च गवादिशब्दाः साङ्केतिकाः शब्दत्वाद्देवदत्तादिशब्दवदित्यनुमानसिद्धसङ्केतज्ञापक एव सर्वत्र वृद्धव्यवहारो न क्वापि स्वाभाविकसंबन्धज्ञापक इति भावः ।

**वं०प०**— **सत्तामात्रेणेति** । अज्ञात एवेत्यर्थः । **अस्मात्** शब्दात् । **अयम्** अर्थः ।

**आनन्दः**— सङ्केतपक्षे शङ्कते **ननु ये इति** । एषः स्वाभाविकसंबन्ध इति विशेषः ।

**श्रीनिधि०**— **सङ्केतपूर्वक एवेति** । तथा च बालः प्रयोज्यवृद्धप्रवृत्तिं दृष्ट्वा सङ्केतमेवानुमिमीते । न तु तत्तत्पदानां तत्र तत्र शक्तिमिति भावः ।





**वा०चं०**— स्वाभाविकसंबन्धमभ्युपगच्छता तद्ग्रहोपायत्वेन सङ्केतस्यैव वक्तव्यत्वात्तेनैव प्रयोगाद्युपपत्तौ तदर्थतया स्वाभाविकसंबन्धकल्पने गौरवमित्याशङ्कते **नन्विति** । नन्वस्तु तावत्सामयिकेषु देवदत्तादिशब्देष्वेवम् । ये पुनरिदंप्रथमव्यवहारप्रवृत्तास्तेषु कथं समयापेक्षेत्यत आह **वृद्धव्यवहारोऽपीति** । गवादिशब्दा अपि समयाधीनवृत्तयः पदत्वाद्देवदत्तादिपदवदित्यर्थः । न चानादितयाऽप्येतदुपपत्स्यते, प्रलये विच्छेदादिति भावः ।

**वा०र०**— स्वाभाविकसंबन्धग्रहोपायत्वेनैव सङ्केतोऽङ्गीक्रियते । न तु तेनैव प्रयोगाद्युपपत्तिरपि । सङ्केतावगतस्वाभाविकसंबन्धेन तु प्रयोगादिनिर्वाह इत्यङ्गीक्रियत इत्याशङ्कापरिहाराय मूलतात्पर्यं वदन् निष्कृष्टमूलार्थं दर्शयन्नवतारयति **स्वाभाविकसंबन्धमिति** । संबन्धवादिनापि नायमवर्जनीय इत्यादिवात्स्यायनभाष्यव्याख्यानवार्तिकमयं च वाच्यवाचकभावलक्षणसंबन्धः स्वाभाविकशब्दार्थसंबन्धवादिनाऽप्यभ्युनुज्ञेयः । न हि स्वाभाविकसंबन्धवादिनोऽनुपयुक्तशब्दार्थसंबन्धस्य शब्दग्रहणाद्विशेषप्रत्ययो भवतीत्यादि तद्व्याख्यानरूपन्यायवाचस्पतिग्रन्थः । येऽपि मीमांसकाः वैयाकरणा वा स्वाभाविकशब्दार्थयोः संबन्धमास्थिषत तेषामपि नैष सत्तामात्रेणावगमाङ्गमपि तु ज्ञातः सन्नित्यादिः । सङ्गृह्योपयुक्ततदनुवादरूपश्चायम् । ननु ये स्वाभाविकसंबन्धविशेषमित्यादि मूलग्रन्थ इति ज्ञेयम् । उक्तवाचस्पतिनिबन्धानुसारेण वृद्धेतिवाक्यमवतारयति **नन्वस्त्विति** । तदनुसारेणैवोपपादयति **गवादिशब्दा इति । तथैवाह न चेत्यादि** । तत्र इदंप्रथमतयेत्युक्तस्यानादितयेत्यर्थानुवादः । व्यवहारस्येति शेषः । इतःपरमकृतसमयत्वादित्येतद्वाक्ये निबन्धोऽस्ति । तदन्यत्र निबन्धो नास्ति शब्देनैवेति । अनेन प्रकारान्तरेण निर्देशाभ्युपगमात् स्वाभाविकसंबन्धाभावेऽपि निर्देशसिद्धिरिति निराकृतं भवति ।

**स०व्र०— सङ्केत एवोपाय इति** । घटादिशब्दानां घटादावेव कुतः स्वाभाविकः संबन्धः पटादावपि किं न स्यादित्यतिप्रसङ्गभञ्जकस्यान्यस्याभावादित्यर्थः । न च सङ्केतोऽपि घटादावेव कुत इत्यतिप्रसङ्गतादवस्थ्यम् । स्वतन्त्रेच्छाया नियोक्तुमशक्यत्वात् । तथाच घटादिशब्दः घटादिना स्वभावेनैव संबद्धः । ईश्वरेण तद्वाचकतया सङ्केतितत्वादित्यनेन प्रकारेण शक्यत एव शक्त्यवगमोपाय इति भावः । ननु स्वाभाविकसंबन्धावगमादिकं वृद्धव्यवहारादेव भविष्यति । अतो न सङ्केतस्योपजीव्यतेत्यत आह **वृद्धव्यवहारोऽपीति** । यथा पिण्डविशेषे देवदत्तादिशब्दसङ्केते पित्रादिना कृते पश्चात्प्रयोजकवृद्धादिव्यवहारः तच्छक्तिज्ञापकः प्रवर्तते । तथा गवादिशब्देष्वपि कस्यचित्सङ्केतानन्तरमेव वृद्धव्यवहारः तच्छक्तिज्ञापनाय प्रवर्तत इत्यर्थः । अन्यथोक्तातिप्रसङ्ग इति भावः ।

**वि्ट०**— सङ्केतवाद्यभिमतचोद्यमनुवदति **ननु ये स्वाभाविकमित्यादिना अत्र ब्रूम इत्यन्तेन । सङ्केत एवोपाय इति** । घटादिशब्दानां पटादावपि स्वाभाविकः संबन्धः किं न स्यात् घटादावेवेति नियमः कुत इत्यतिप्रसङ्गपरिहारे तथा सङ्केतव्यतिरेकेण उपायान्तरादर्शनादिति भावः । न च सङ्केतोऽपि घटादावेवेति कुतः पटादावपि स किं न स्यादिति वाच्यम् । सङ्केतकर्तुरीश्वरस्य स्वतन्त्रत्वेन तदिच्छाया नियन्तुमशक्यत्वादिति भावः । ननु स्वाभाविकसंबन्धावगमादिकं वृद्धव्यवहारादेव भविष्यति किं सङ्केतेत्यत आह **वृद्धेति** । यथा कस्मिंश्चित्पुरुषविशेषे तत्पित्रादिना देवदत्तादिशब्दे सङ्केतिते पश्चाद्वृद्धव्यवहारः शक्तिज्ञापकः प्रवर्तते तथा





गवादिशब्दानामपीति भावः । **तद्वरमस्त्विति** । स्वाभाविकसंबन्धवादिनाप्यन्ततः सङ्केतस्यावश्यं स्वीकार्यत्वात्ततो वरं सङ्केत एवेत्यस्तु तस्मादेव सङ्केताद्गवादिशब्दप्रयोगस्य शब्दादर्थप्रतिपत्तेः वृद्धव्यवहारस्य चोपपत्तेः स्वाभाविव न संबन्धेन कृतमलं स्वाभाविकसंबन्धो व्यर्थ इति यावदिति ।

**चषकः—** गवादिशब्दधर्मिकसाङ्केतिकत्वसाध्यकशब्दत्वलिङ्गकदेवदत्तादिशब्दनिदर्शनकानुमानमभिप्रेत्याह **वृद्धव्यवहारोऽपीति** । तथा च सङ्केतग्राहक एव वृद्धव्यवहारो न नैसर्गिकसंबन्धावगमक इति भावः ।

**६०० सु०— नन्वयं सङ्केत एव केषाञ्चिच्छब्दानामसति स्वाभाविकार्थसंबन्धे न शक्यः कर्तुम् । निर्दिश्य ह्यर्थं ब्रूयात् 'अयमस्माद् बोद्धव्य' इति । न च निर्देशोऽसति स्वाभाविके संबन्धे केषाञ्चिच्छब्दानां सिध्यति । सङ्केताधीने तु वाचकत्वे सर्वेषां शब्दानामकृतसमयत्वात्किं केन निर्दिशेत् । तस्मात्सङ्केतकरणमेव स्वाभाविकसंबन्धं प्रतिपादयति शब्दानाम् ॥ मैवम् ॥ सर्गादिभुवां महर्षिदेवतानां परमेश्वरानुग्रहाद्धर्मज्ञानवैराग्यैश्वर्यसंपन्नानां परमेश्वरस्य तावत्सुकर एव सङ्केतः कर्तुम् । तद्व्यवहाराच्चास्मदादीनामपि सुग्रहः सङ्केतः । तथा हि । वृद्धवचनानन्तरं तच्छ्राविणो वृद्धान्तरस्य प्रवृत्तिहर्षशोकभयादिप्रतिपत्तेस्तद्धेतुं प्रत्ययमनुमिमीते बालस्तस्य सत्स्वप्यन्येष्वभूतस्य वाक्यश्रवणसमनन्तरं भवतो वाक्यश्रवणहेतुतामवगच्छति । तदवयवानां च पदानामावापोद्धारभेदेन तत्तदर्थप्रत्ययजननोपायत्वदर्शनात् । तेषु तेष्वर्थेषु तेषां पदानां वाचकत्वं च कल्पयति । एवं पदावयवेषु प्रकृत्यादिष्वपि द्रष्टव्यम् । स्वाभाविकीं शक्तिमभ्युपगच्छताऽप्येषा प्रक्रिया अनुसरणीया । साऽपि न सत्तामात्रेणावगमाङ्गमित्युक्तम् ।**

**परि०—** शक्तिवादी शङ्कते **नन्वयमिति** । **केषाञ्चिदिति** । इदमादिपदानाम् । सङ्केतवादी निराह **मैवमिति** । **सर्गादीति** । सर्गादौ जातान्महर्षिप्रभृतीन्प्रति प्रत्यक्षेण दृष्टार्थे सङ्केतः सुकर एव । तत्र शब्देन निर्देशानपेक्षणादिति भावः । विसंवादादिव्यवहाराभावसूचनाय धर्मज्ञानवैराग्यसंपन्नानामित्युक्तिः ।

**यादु०— निर्दिश्य ह्यर्थं ब्रूयादिति** । न च सङ्केतस्येच्छारूपस्याशब्दात्मकत्वान्न निर्देशापेक्षेति वाच्यम् । अत्र परं प्रति सङ्केतकरणं नाम सङ्केतज्ञापको योऽस्माच्छब्दादयमर्थो बोद्धव्य इत्युपदेशस्तत्करणमेव विवक्षितम् । तस्य च शब्दत्वेन निर्देशापेक्षाऽस्त्येवेत्याशयात् । एवमग्रेऽपि सङ्केतकरणं यत्रोच्यते तत्र तज्ज्ञापकोपदेशकरणमेव विवक्षितम् । तेन सङ्केतस्येश्वरेच्छारूपस्यानादित्वेन कथं करणमिति शङ्काऽनवकाशोऽपीति ध्येयम् । **सुकर एव सङ्केतः कर्तुमिति** । ऋष्यादीनां सर्वज्ञत्वेन भगवन्निष्ठसर्वशब्दसङ्केतग्रहणमुपदेशाभावकालेऽप्यस्तीति सर्वेषामकृत-





समयत्वात्किं केन निर्दिशेदित्युक्तदोषाभावादिति भावः । न चैवं तान्प्रति सङ्केतकरणं व्यर्थम् । अदृष्टार्थत्वात्संप्रदायप्रवर्तनार्थत्वाच्च । अत्र सार्वज्ञोपपादनायैव धर्मवैराग्योपादानम् । योगजधर्मरूपप्रत्यासत्त्यभावे विषयविशेषरागरूपप्रतिबन्धकसद्भावे वा सर्वविषयकज्ञानोत्पत्त्ययोगात् । रागाभावोपपादकमैश्वर्यमित्यवगन्तव्यम् । नन्वेवं तेषामपीश्वरसाम्यप्रसङ्ग इत्यत उक्तं **परमेश्वरानुग्रहादिति** । **तद्व्यवहाराच्चेति** । महामहर्ष्यादीनां प्रयोज्यवृद्धं प्रति व्यवहारादित्यर्थः । इदमुपलक्षणम् । तदुपदेशाच्चेत्यपि ग्राह्यम् । अत एवाग्रे उपदेशादिनैवेति वक्ष्यति । गामानयेत्यादौ प्रवृत्तिप्रतिपत्तिः । पुत्रस्ते जात इत्यादिषु हर्षप्रतिपत्तिः । पुत्रस्ते मृत इत्यादौ शोकप्रतिपत्तिः । सर्पोऽस्तीत्यादौ भयप्रतिपत्तिः । आदिपदात्तृणमस्तीत्यादावौदासीन्यप्रतिपत्तिर्ग्राह्या । **वाचकत्वं** सङ्केतम् । ननु कुत एषा प्रक्रिया तेनानुसरणीयेत्यत आह **साऽपीति** । तदवगमोपायश्चोक्तरीत्या सङ्केत एव । तद्ग्रहणाय चोक्तप्रक्रिया तेनाप्यनुसरणीयेति भावः ।

**वं०प०**— ये स्वाभाविकसंबन्धमास्थिषत शब्दार्थयोस्तेषामपि तज्ज्ञाने उक्तरूपः सङ्केत एवोपाय इत्युक्तं दूषयितुं सिद्धान्ती शङ्कते **नन्वयमिति** । यदर्थमेतदुक्तं तदाह **सङ्केताधीने त्विति** । **अकृतसमयत्वात्** कृतसङ्केतत्वात् । सर्गादिभुवामित्यादि कर्मणि षष्ठी । **तस्य** तद्धेतुप्रत्ययस्य । पदानामावापेन तत्तदर्थप्रत्ययस्य जननदर्शनात् । उद्वापेन तत्तदर्थप्रत्ययस्यापायदर्शनादिति योज्यम् ।

**आनन्दः**— **निर्दिश्य हीति** । उच्चार्येत्यर्थः । निर्देशप्रकारमेवाह **अयमस्मादिति** । **न च निर्देश इति** । तथा सति घटशब्देन पटस्यापि निर्देशः स्यादविशेषः स्यादित्यतिप्रसङ्ग इत्यर्थः । **सर्गादिभुवामिति** । तथा चेष्टादिनापि निर्देशस्य संभवेन सङ्केतः सुकर इति भावः । अत्र हि सर्गादिभुवामित्यनेन किमभिप्रेतं किं निर्देशाभावेऽपि सङ्केतः संभवतीति उत निर्देशः प्रकारान्तरेण संभवति । आद्यपक्षेऽपि किं सङ्केताकारः किं पदार्थो बोद्धव्य इति वा अस्मात्पदादयमर्थो बोद्धव्य इति वा । नाद्यः । तथा सति धर्म्यनिर्देशेन तस्य बुद्ध्यनारूढत्वात्सङ्केतग्रह एव न स्यात् येन केनचित्पदेन यस्यकस्यचित्पदार्थस्य बोधापत्तौ अतिप्रसङ्गापत्तेश्च । न द्वितीयः । तथा सत्येतादृशसङ्केतस्य निर्देशसापेक्षस्य स्पष्टत्वान्निर्देश आवश्यक एव । तथाच घटादिशब्दानां ऐश्वरः सङ्केतोऽप्ययमिति निर्देशपूर्वकमेव । तथा चेश्वरेणायमिति । निर्देशः सङ्केतं विना न संभवति । स्वाभाविकसंबन्धानङ्गीकारात् । तत्र चायमित्यस्य सङ्केतः किमन्यदीयः उतेश्वरस्यैव । नाद्यः । ईश्वरं प्रत्यन्यस्य सङ्केतयितुरभावात् । न द्वितीयः । तस्यापि निर्देशपूर्वकत्वात् तस्य च सङ्केतपूर्वकत्वेन सङ्केतपरम्परयाऽनवस्थापत्तेः । नन्वस्तु निर्देशसापेक्षत्वं तथापि स शब्दात्मैव नियमाभावाच्चेष्टादिनापि निर्दिश्य सङ्केतः कर्तुं शक्य एवेति न दोष इति । द्वितीयोऽस्त्विति चेन्न । ये हि प्रत्यक्षसिद्धाः पदार्थास्तानङ्गुल्या निर्दिश्य शब्दसङ्केतः कर्तुं शक्यते । पदार्थानां बुद्ध्यनारूढत्वात्पुरोपस्थितत्वाच्च । अतीन्द्रियपदार्थानां तु बुद्ध्यारोहस्यैवासंभवात्पुरोपस्थितत्वाभावाच्चाङ्गुल्यादिना निर्देशस्यैवासंभवेन सङ्केतस्य कर्तुमशक्यत्वात् । न चातीन्द्रिया अपि पदार्था महर्षिदेवतानां धर्मज्ञानादिसंपन्नानां प्रत्यक्षा इति सुकरः सङ्केत इति वाच्यम् । तथापि बोध्यानामज्ञानाम् अप्रत्यक्षत्वात् तान्प्रति सङ्केतः कर्तुमशक्य एव । किञ्च सङ्केतो अज्ञान् प्रत्येव





सप्रयोजनः तेषां सङ्केतं विना व्यवहाराद्यसंभवात् देवतादीनां च सङ्केतं विनैव व्यवहारादिसंभवेन तान्प्रति तत्सुकरत्वोपपादनस्य निष्फलत्वात् ।

**कं०रा०**— ननु केषाञ्चिच्छब्दानामसति स्वाभाविकेऽर्थसंबन्धे सङ्केत एव कर्तुमशक्यः । अथ केनचिच्छब्देन निर्दिश्य खल्वयमस्माद्बोद्धव्य इति सङ्केतः कर्तव्यः । न चायं निर्देशः शब्दार्थयोः स्वाभाविकसंबन्धं विना युज्यते । सर्वशब्दानां वाचकत्वस्य सङ्केताधीनत्वे निर्देशशब्दस्याकृतसङ्केतत्वेन तेनार्थस्य निर्देष्टुमशक्यत्वात् । न च वाच्यमुक्तरीत्या शब्देन निर्देशायोगेऽपि प्रत्यक्षोपस्थितं घटादिकमङ्गुल्या निर्दिश्य तत्र घटादिशब्दसङ्केतः कर्तुं शक्य इति । अतीन्द्रियपदार्थेऽङ्गुलिनिर्देशायोगेन तत्र शब्देनैव निर्दिश्य सङ्केतस्य कर्तव्यत्वात् । तस्य चोक्तरीत्याऽनुपपत्तेः । तस्मात्सङ्केतकरणमेव स्वाभाविकसंबन्धं विनाऽनुपपद्यमानं तं गमयतीत्याशयेन शङ्कते **नन्विति** । उक्तरीत्याऽस्मदादिभिः सङ्केतस्य कर्तुमशक्यत्वेऽपि परमेश्वरेण सर्गाद्यकालोत्पन्नमहर्षिदेवताः प्रति तत्तच्छब्दानां तत्तदर्थेषु सङ्केतः कर्तुं शक्यत एव । परमेश्वरानुग्रहवशाद्धर्मज्ञानादिसंपन्नानां महर्षिदेवतानामतीन्द्रियादिसकलार्थसाक्षात्कारवत्त्वेन तान् प्रति तमर्थमङ्गुल्या निर्दिश्य तत्तच्छब्दप्रयोगस्य कर्तुं शक्यत्वादित्याशयेन परिहरति **मैवमिति । धर्मज्ञानेति** । यद्यपि ज्ञानसंपत्तिरेव वक्तव्या प्रकृतोपयुक्तत्वात् । तथाऽपि योगजादृष्टजन्यत्वादतीन्द्रियादिविषयकज्ञानस्य ज्ञानसंपत्तिहेतुत्वेन धर्मग्रहणम् । सति चित्तविक्षेपेऽनन्तेषु पदार्थेषु सङ्केतो दुर्ग्रह इत्यतश्चित्तविक्षेपाभावं सूचयितुं वैराग्यग्रहणम् । अनन्तेषु पदार्थेष्वनन्तानां शब्दानां सङ्केतग्रहणमसमर्थानां न संभवतीत्यतः सामर्थ्यापरपर्यायैश्वर्यग्रहणं च कृतमिति द्रष्टव्यम् । एतत्सर्वं कुतः संपन्नमित्याकाङ्क्षायां परमेश्वरानुग्रहादित्युक्तम् । **परमेश्वरस्येति** । यद्यपि सुकरशब्दस्येषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खलिति खल्प्रत्ययान्तत्वात्तद्योगे च नलोकाव्ययनिष्ठाखलर्थतृनामिति षष्ठीप्रतिषेधात्परमेश्वरस्येति निर्देशानुपपत्तिस्तथाऽपि नलोकेत्यादिसूत्रेण कृद्योगलक्षणाया एव षष्ठ्याः प्रतिषिद्धत्वेन शेषलक्षणायाः षष्ठ्याः प्रतिषेधाभावात्तामादाय परमेश्वरस्येति निर्देशोपपत्तिरिति द्रष्टव्यम् ।

**श्रीनिधि०**— **केषाञ्चिच्छब्दानाम्** इदमादिशब्दानाम् । परमेश्वरसंबन्धी सङ्केतः अर्थेषु कर्तुं शक्यत इत्यर्थः । तत्तदर्थप्रत्ययोपजनने विषये उपायप्रदर्शनादित्यर्थः । आवापोद्धारभेदलक्षणोपायदर्शनादिति यावत् । एवं च निर्दिष्यार्थकथने खलु शक्तेरावश्यकत्वं वृद्धव्यवहारादेवार्थप्रतिपत्तौ तु नैवमिति भावः ।

**वा०चं०**— स्वाभाविकसंबन्धाभावे सङ्केतकरणस्यैवासंभवाद्विपरीतमुपजीव्योपजीवकत्वमिति शङ्कते **नन्वयमिति**। निर्देशो हि शब्देनैव। स च स्वाभाविकसंबन्ध एव संभवति। तस्य पूर्वमपि सत्त्वात्। न तु सङ्केतेन। तस्य पूर्वमसत्त्वादित्याह **न चेति। अकृतसमयत्वादिति**। सृष्ट्यादाविति शेषः। तथा च प्रलये विच्छेद एवानुपपन्न इति भावः । सङ्केतकरणं किमस्मदादीनां परमेश्वरस्य वाऽस्मदादीन्प्रत्यशक्यमुत परमेश्वरस्यापि देवादीन्प्रत्यपीति । नाद्यः इष्टापत्तेः । नापि द्वितीयः, महर्षिदेवादीनां धर्मादिसंपत्त्या सर्गाद्यकालीनपदार्थान्परमेश्वरं च साक्षात्कर्तुं समर्थत्वात्तान्प्रति परमेश्वरेणाङ्गुल्यादिनैव तांस्तानर्थान्निर्दिश्य शब्दविशेषसङ्केतस्य स्वेच्छयैव कर्तुं शक्यत्वेन शब्देनैव

तन्निर्देशानावश्यकतया स्वाभाविकसंबन्धानपेक्षणात् । अस्मान्प्रति सङ्केतकरणं च नावश्यकम् । तद्व्यवहार-सिद्धतत्सङ्केतज्ञानमात्रेणास्मदादिप्रयोगाद्युपपत्तेरित्याह **सर्गादिभुवामित्यादिना** । तान्प्रति महेश्वरेणायमस्यार्थस्य वाचक इत्यस्मादयमर्थो बोद्धव्य इति वा गवादिपदानां साक्षादिमदर्थेषु सङ्केतः सुकर इत्यर्थः । कथमतीन्द्रियेश्वर-प्रत्यक्षं तदुपदेशादिकं च तेषामित्यतः परमेश्वरानुग्रहादित्यादि विशेषणम् । प्राथमिकसङ्केतत्वज्ञापनाय **सर्गादीति** । ननु तर्हि शक्तिपक्ष एवास्तु । एतादृशप्रक्रियाया सङ्केतग्रहपक्षस्य गौरवकरत्वादित्यर्थः । **स्वाभाविकीमिति** । स्वाभाविकशक्तिवादिनाऽपि तद्ग्रहोपायत्वेन सङ्केतस्य तद्ग्रहोपायतया चास्याः प्रक्रियाया अवश्यानुसर्तव्यत्वेनाति-गौरवमिति भावः ।

**वा०र०— विच्छेद एवेति** । वृद्धव्यवहारस्येति शेषः । स्वाभाविकसंबन्धानभ्युपगमे सृष्ट्यादावकृत-समयतया निर्देशानुपपत्त्या सङ्केतकरणं न संभवतीत्यतो वृद्धव्यवहारस्यानादितैव प्रागाशङ्किता स्वीकार्या । न च प्रलये विच्छेदानुपपत्तिः । सङ्केतकरणपक्षानुपपत्त्या स्वाभाविकसंबन्धानभ्युपगमे तदा व्यवहारविच्छेदाभावस्यैव न्याय्यत्वादिति भावः । वाचस्पतौ हि परमेश्वरेण हि यः सृष्ट्यादौ गवादिशब्दानामर्थे सङ्केतः कृतः सोऽधुनेत्यादिनाऽविदितसङ्गतिः बालानां सङ्केतग्रहं प्रतिज्ञाय तथाहि वृद्धव्यवहारानन्तरमित्यादिना मूलेऽनूदित-प्रकारेण तदुपपादनं च कृत्वा सर्गादिभुवां त्वित्यादिना महर्षिदेवतादीन्प्रति परमेश्वरस्य सङ्केतकरणं संभवतीति प्रतिपाद्यापि तद्व्यवहाराच्चास्मदादीनामपि सुग्रहः सङ्केत इत्यादिना पुनरस्मदादीनां सङ्केतग्रहोपपादनं सङ्कोचेन कृतम् । तथापि एकत्रैव सर्गादीत्येतदपेक्षया पूर्वोत्तरग्रन्थप्रमेययोर्निवेशसंभवे गौरवप्रापकप्रस्थानभेदो नाश्रयणीय इत्याशयेन स्वयं लाघवमाश्रित्य सर्गादिषु ऋष्यादिक्रमेणैव सङ्केतग्रहमुपपादयति **सर्गादिभुवां हीति** मूलम् । तत्रास्मदादीन्प्रति सङ्केतकरणानुपपत्तिरूपपक्षान्तरनिराकरणं सर्गादिभुवामित्याद्युक्त्यैव सूचितमिति न तन्निराकरणाभावप्रयुक्तन्यूनतेति दर्शयन्पक्षद्वयं विकल्प्य तन्निराकरणपरतया तन्मूलं योजयति **सङ्केतकरणं किमित्यादिना** । **अस्मदादीनामिति** । अयमत्र विकल्पक्रमोऽभिप्रेतः । सङ्केतकरणं किमस्मदादीनामशक्यं उत परमेश्वरस्यापि । द्वितीयेऽपि परमेश्वरस्य शक्यमप्यस्मदादीन्प्रत्यशक्यं अथवा देवादीन्प्रत्यपीति । अत एव परमेश्वरस्य वेति परमेश्वरस्यापीति देवादीन् प्रत्यपीति चोक्तम् । तत्र सङ्केतकरणमस्मदादीनामस्मदादीन्प्रत्यशक्यं परमेश्वरस्याप्यस्मदादीन्प्रत्यशक्यमिति कल्पद्वयं मिलित्वा शक्यमित्यतः आद्यः कल्पः । द्वितीयद्वितीयस्तु परमेश्वरस्यापीत्यनेनोक्तः । एतत्कल्पद्वय-निराकरणेनैवोक्तकल्पत्रयनिराकरणसिद्धिरिति ज्ञेयम् । **नाद्यः इष्टापत्तेरिति** । इदं चाद्यकल्पीयप्रथमस्येव द्वितीयाद्यस्यापि दूषणम् । तथाहि । अस्मदादीनामस्मदादीन्प्रति सङ्केतकरणमशक्यमित्याद्योऽनङ्गीकारपराहतः । सर्गाद्यकालीनानेकपदार्थसाक्षात्कारस्यास्मास्वसंभवेन तान्पदार्थान्यङ्गुल्यादिना निर्दिश्य शब्दविशेषसङ्केतस्य अस्माभिरस्मदादीन्प्रति कर्तुमशक्यत्वस्य मयाऽप्यङ्गीकारात् । तथा परमेश्वरस्यास्मदादीन्प्रति सङ्केतकरण-मशक्यमिति द्वितीयोऽप्यनङ्गीकारपराहतः । परमेश्वरस्य सर्गाद्यकालीनपदार्थसाक्षात्कारसंभवेऽप्यस्मदादीनां तदसंभवेन तान् पदार्थान् परमेश्वरं च साक्षात्कर्तुमसमर्थानस्मदादीन्प्रति परमेश्वरेणाङ्गुल्यादिनैव तांस्तानर्था-न्निर्दिश्य शब्दविशेषसङ्केतकरणस्यासंभव इत्यस्य मयाऽप्यङ्गीकारादिष्टापत्तिरिति । परमेश्वरस्यापि देवादीन्प्रत्यपि





सङ्केतकरणमशक्यमित्येतत् द्वितीयद्वितीयं निराकरोति **नापि द्वितीय इति** । मूले परमेश्वरानुग्रहादिकथनस्य सङ्केतकरणोपायताऽभिप्रेतेति दर्शयंस्तदुपायताप्रकारं दर्शयति **संपत्त्येत्यादिना** । उत्तरत्र व्यवहारस्य सङ्केत-ग्रहणोपायत्वाच्छब्देनैवार्थस्य निर्देष्टव्यत्वदर्शनादिकालेऽपि व्यवहारं परित्यज्य कुतोऽङ्गुल्यादिनैव निर्देश ईश्वरेण क्रियत इत्यत उक्तं **स्वेच्छयैवेति** । अस्मदादीनां देशादिव्यवहारात्तत्सङ्केतज्ञाने सति किं स्यादित्यतो मूले पूरितमस्मदादिप्रयोगाद्युपपत्तेरिति । एतत्प्रक्रियानुसरणमात्रं न दोष इत्यतोऽभ्युपगच्छताऽपीत्यपिपदसूचितं दूषणमाह **स्वाभाविकशक्तीति** ।

**स०व्र०— निर्दिश्य ह्यर्थं ब्रूयादिति** । न च सङ्केतस्येच्छारूपत्वान्न तत्र शब्दनिर्देशाद्यपेक्षेति वाच्यम् । अत्र परं प्रति सङ्केतकरणं नाम सङ्केतज्ञापको योऽस्माच्छब्दादयमर्थो बोद्धव्य इत्युपदेशः तत्करणमेव विवक्षितम् । तत्र च शब्दनिर्देशादिकमस्त्येवेत्याशयात् । एवमग्रेऽपि सङ्केतकरणं यत्रोच्यते तत्र तज्ज्ञापकोपदेशकरणमेव व्याख्येयम् । तेन सङ्केतस्येश्वरेच्छारूपस्यानादित्वेन कथं करणमिति शङ्कानवकाशोऽपीति ध्येयम् । **सुकर एव सङ्केतः कर्तुमिति** । ऋष्यादीनां सर्वज्ञत्वेन भगवन्निष्ठसर्वशब्दसङ्केतग्रहणमुपदेशाभावकालेऽप्यस्तीति **सर्वेषामकृत-समयत्वात् किं केन निर्दिशेदिति** । उक्तदोषाभावादिति भावः । न चैवं तान् प्रति सङ्केतकरणं व्यर्थम् । संप्रदायप्रवर्तनार्थत्वात् । अथवा यदा सर्वज्ञ एव कश्चिदसर्वज्ञं परं प्रति स्वसङ्केतज्ञापनायोपदिशति । तदा तं प्रति युगपत्सर्वशब्दसङ्केतानां बोधयितुमशक्यत्वात्क्रमेणैव तेषां बोधनीयत्वे तत्राद्योपदेशे निर्देशार्थं केषाञ्चिच्छब्दानां स्वाभाविकोऽर्थेन संबन्धोऽपेक्षणीयः स्यात् । न चैवम् । किं तु ईश्वरस्य महर्ष्यादीनां च सर्वज्ञत्वात् युगपदेवोपदेशः । न च महर्ष्यादीनां कथं सार्वज्ञ्यमिति वाच्यम् । योगजधर्मवत्त्वात् । विषयरागरूपप्रतिबन्धाभावाच्च । इदं चेश्वरानुग्रहादेव तेषां भवति । तथा चेश्वरः सर्गादावुत्पन्नान् सर्वज्ञान् महर्ष्यादीन् प्रति युगपदेव तेभ्यस्तेभ्यः सर्वेभ्यः शब्देभ्यः ते तेऽर्था बोद्धव्या इत्युपदिशतीत्यङ्गीकारे न कोऽपि विरोधः । न च तेभ्य इत्यादीनामेतदुपदेशगतानां शब्दानामिदानीमकृतसमयत्वात्कथमत्र निर्देश इति वाच्यम् । स्वाध्यायोऽध्येतव्य इतिवदेतदुपदेशनिर्दिष्टशब्दाना-मप्यनेनैवोपदेशेन कृतसमयत्वात् । अत एवैतादृशदुर्घटज्ञानसामर्थ्योपपादकमैश्वर्यं तेषामुक्तमिति । **तद्व्यवहाराच्चेति** । महर्ष्यादीनां प्रयोज्यवृद्धं प्रति व्यवहारादित्यर्थः । इदमुपलक्षणम् । तदुपदेशाच्चेत्यपि ग्राह्यम् । वाचकत्वं सङ्केतम् । ननु कुत एषा प्रक्रिया तेनानुसरणीयेत्यत आह **साऽपीति** । तदवगमोपायश्चोक्तरीत्या सङ्केत एव । तत्करणार्थं चोक्तप्रक्रियाऽनुसरणीयेति भावः ।

**विठ्ठ०—** ननु यथा स्वाभाविकसंबन्धवादिनापि तज्ज्ञापनाय सङ्केतः स्वीकर्तव्य इत्युच्यते । एवं सङ्केतवादिनामपि स्वाभाविकसंबन्धः स्वीकर्तव्यः । विना स्वाभाविकसंबन्धं सङ्केतकरणस्यैवाभावादित्याशङ्क्य सङ्केतवादी परिहरति **नन्वयमिति** । **निर्दिश्य ह्यर्थं ब्रूयादिति** । न च सङ्केतस्येच्छारूपत्वान्न तत्र निर्देशापेक्षेति वाच्यम् । अत्र परं प्रति सङ्केतकरणं नामास्माच्छब्दादयमर्थो बोद्धव्य इति सङ्केतज्ञापकपदोच्चारणमेव विवक्षितम् । तत्र शब्दनिर्देशादिकमस्त्येव । अन्यथा केषाञ्चिदर्थानामतीन्द्रियत्वेन प्रत्यक्षादिना निर्देष्टुमशक्यतया अयमिति





निर्दिश्यास्माच्छब्दाद्बोद्धव्य इति सङ्केतकरणानुपपत्तेरित्याशयात् । एतेन सङ्केतस्येश्वरेच्छारूपत्वेन तस्याश्च नित्यत्वात् कथं करणमित्येतदपि निरस्तं वेदितव्यम् । **केषाञ्चिच्छब्दानामिति** । अतीन्द्रियार्थवाचकशब्दानामित्यर्थः । **सर्गादिभुवामिति** । अत्र महर्षिदेवतानां सर्वज्ञत्वेन वाच्यार्थानां प्रत्यक्षदृष्टतया शब्देन निर्देशानपेक्षणात् तान् प्रति ईश्वरस्य सङ्केतः कर्तुं सुकरः । सार्वज्ञं तु योगजधर्मवत्त्वेन विषयरागरूपप्रतिबन्धकाभावाच्च तत्पापकपरमेश्वरानुग्रहभावाच्च तेषां भवति । तेषामेव सर्गादिभवत्वान्न ततः पूर्वमसर्वज्ञोपदेशाय निर्देशार्थं स्वाभाविकशक्त्यङ्गीकारः । तेषामेवं सङ्केते सुकरे अस्मदादीनामपि तेषां ऋष्यादीनां प्रयोज्य वृद्धं प्रति व्यवहारादुपदेशाच्च सुग्रहः सङ्केत इत्यर्थः । **वाचकत्वं** सङ्केतानाम् । शक्तिवादिना कुत एषा प्रक्रियानुसरणीयेत्यत आह **साऽपीति** । शक्तिरपि न सत्तामात्रेण शक्यार्थावगमाङ्गं किन्तु ज्ञाततयैव तत्र चातिप्रसङ्गवारणाय सङ्केत एवानुसरणीय इत्युक्तम् । ततश्च सङ्केतकरणार्थमेषा प्रक्रियाऽनुसरणीयेति भावः ।

**चर्षकः— निर्दिश्य ह्यर्थमिति** । सङ्केतस्येच्छारूपत्वेन शब्दानात्मकतया उच्चारणरूपनिर्देशनैरपेक्ष्येऽपि तादृशसङ्केतग्राहकस्यास्माच्छब्दादित्याद्यानुपूर्वीकस्य शब्दतया तद्रूपनिर्देशापेक्षास्तीति भावः । एवं सङ्केतकरणमित्यत्रापि तादृशसङ्केतग्राहकशब्दोच्चारणमित्यर्थोऽवधेयः । तेन सङ्केतस्येश्वरेच्छारूपतयाऽनादित्वेनोत्पादरूपतत्करणायोग इति शङ्का निरवकाशेव । **सुकर इति** । ईषदिति कर्मसाधनखलन्तोऽयं तेषां सार्वज्ञादुपदेशमन्तरेणापि भागवतसङ्केताधिगमसत्त्वेन किं केन निर्दिशेदिति क्षत्यनवकाशादिति भावः । **तद्व्यवहाराच्चेति** । प्रयोज्यवृद्धावबोधोद्देश्यकमहर्ष्यादिव्यवहारादित्यर्थः । तदुपदेशादिसमुच्चायकश्चशब्दः । **भयादिप्रतिपत्तेरिति** । द्वन्द्वगर्भबहुव्रीहिगर्भस्तत्पुरुषः । **हेतुतामिति** । तदन्वयव्यतिरेकित्वादिहृदयं तत्प्रक्रियानुसरणस्य तदवगमाङ्गत्वं स्मारयति **साऽपीति**।

**६०१ सु०— स्यादेतत् । यदि शब्दानां साङ्केतिकः संबन्धो न स्वाभाविकः; कृतं तर्हि साध्वसाधुविभागपरेण व्याकरणेन । स्वाभाविकं हि यस्य वाचकत्वं स शब्दः साधुरसाधुश्चेतरः । सामयिकत्वे तु सर्व एव साधवोऽसाधवो वा स्युः । मैवम् । परमेश्वरसमयपरिपालनार्थत्वात् । तथा च येषां पदानां येष्वर्थेषु परमेश्वरेण कृतः समयस्तानि तत्र साधूनि; असाधूनि चेतरत्रेति विभागाय व्याकरणमर्थवदिति ।**

**बिन्दुः— विभागाय व्याकरणमर्थवदिति** । तथा च वैदिकशब्दानां पारमेश्वरसङ्केतयुक्तत्वात् तद्रक्षार्थं व्याकरणं युक्तमेवेति भावः ।

**परि०**— सिद्धान्ती शङ्कते **स्यादेतदिति** । पूर्ववादी निराह **मैवमिति** ।





**यादु०— सामयिकत्वे इति**। साङ्केतिकत्व इत्यर्थः। **सर्व इति**। साधव इत्यादि अपभ्रंशा अपि साधवः स्युः साधुशब्दा वा अपभ्रंशवदसाधवः स्युः। साङ्केतिकत्वस्योभयत्राविशेषादिति भावः।

**वं०प०— पुनः** सिद्धान्ती शङ्कते **स्यादेतदिति**। **स्वाभाविकं हीत्यादि**। एवं विभागप्रतिपादनाय हि व्याकरणशास्त्रं प्रवृत्तमस्तीत्यर्थः। **स्युरिति**। तथाच साध्वसाधुविभागपरं व्याकरणशास्त्रं व्यर्थमेव स्यादित्यर्थः। **परमेश्वरसमयेति**। परमेश्वरकृतसङ्केतेत्यर्थः।

**कं०रा०— सामयिकत्वे त्विति**। वाचकत्वस्येति शेषः।

**वा०चं०—** स्वाभाविकसंबन्धपक्षे साध्वसाधुविभागस्य स्वाभाविकसंबन्धोपेतानां गवादिपदानां साधुत्वं तद्रहितानां गाव्यादीनामसाधुत्वमिति कर्तुं शक्यत्वेऽपि सङ्केताधीनवाचकत्वपक्षे गाव्यादिशब्दानामिव गवादिशब्दानामपि सङ्केतितत्वाविशेषेण साध्वसाधुविभागो न कर्तुं शक्य इत्याह **स्वाभाविकं हीति**। यद्यप्यत्र न स्वाभाविकवाचकत्वादिकमेव साधुत्वादिकमभेदेन व्याप्यव्यापकभावानुपपत्तेः। नापि साधयति बोधयतीति व्युत्पत्त्या बोधकत्वं साधुत्वम्। गाव्यादीनामपि साधुत्वापत्तेः। नापि शक्तत्वं तत्। विकरणानामनर्थकतया पचतीत्यादौ तेषामसाधुत्वापत्तेः। लाक्षणिकानामपि लक्ष्येऽशक्ततयाऽसाधुत्वापत्तेश्च। क्वचिच्छक्ततया साधुत्वे तु हयदरिद्रशक्ताश्वास्वशब्दयोर्दरिद्राश्वयोरपि साधुता स्यात्। नापि वृत्तिमत्त्वं तत्। द्योतकनिपातानामसाधुत्वापत्तेः। औपसन्दानिकी शक्तिरेव द्योतनीति चेत्। प्रोत्तरजित्व-घोत्तरटत्वयोरविशेषेण विनिगमनाविरहाच्छक्तताप्राप्तौ व्यासज्यवृत्तिशक्तौ विश्रान्तेः। ततश्च द्विर्वचनाद्यव्यवस्थापत्तिः। नापि जातिविशेषः साधुत्वम्। कत्वादिना सङ्करापत्तेः। एवं च साधुत्वस्यानिरुक्त्या व्याप्यव्यापकभावावधारणमनुपपन्नमिवाभाति। तथापि 'अनपभ्रष्टतानादिर्यद्वाऽभ्युदययोग्यता। व्याक्रिया व्यञ्जनीया वा जातिः काऽपीह साधुता।' तत्र शक्तिवैकल्यादिप्रयुक्तमन्यथोच्चारणमपभ्रष्टता तदभावोऽनपभ्रष्टता। सैव हि साधुता। सा चार्थविशेषान्तर्भावेनैव। तथा हि। यमर्थं शक्त्या लक्षणया वा बोधयितुं द्योतयितुं वा यादृक् शब्दोऽनादिः प्रयुक्तः स तस्मिन्नर्थे दोषादन्यथात्वं प्राप्तोऽसाधुरन्यथा तु साधुरनादिता वाऽभ्युदययोग्यता वा रत्नतत्त्ववच्छास्त्रपरिशीलनशालिभिर्गम्यो जातिविशेषो वा साधुता। न च जातिसङ्करो दोषः। दूषकताबीजाभावेनोपाधिसङ्करवत्तस्याप्यदोषत्वादिति वैयाकरणाद्युक्तरीत्या साधुत्वादेर्निर्वक्तुं शक्यत्वात्तस्य स्वाभाविकसंबन्धव्यापकतोपपद्यत एव। लाक्षणिकादावपि परम्परया स्वाभाविकसंबन्धप्रयोज्यताऽस्त्येवेति नानुपपत्तिरिति भावः। गवादिपदां गाव्यादिपदानां च सङ्केतितत्वाविशेषेऽपि गवादीनां परमेश्वरसङ्केतितयाऽन्येषां तदभावेन सङ्केतेऽप्यवान्तरविशेषसद्भावात्परमेश्वरसङ्केतितानां साधुत्वमन्येषामसाधुत्वमिति परमेश्वरसङ्केतपरिपालनार्थतया व्याकरणसार्थक्यं सङ्केतपक्षेऽपि संभवत्येवेत्याह **परमेश्वरेति**।

**वा०र०— साध्वसाधुविभागस्येति**। असाधुत्वमिति वक्ष्यमाणन्यायेनान्वयः। यस्तु प्रयुङ्क्ते कुशलो विशेषशब्दानिति भाष्यव्याख्यानकैय्यटे स एव शब्दः क्वचिदर्थे केनचिन्निमित्तेन प्रयुक्तः साधुः। अन्यथा त्वसाधुः।





यथाऽश्वेऽस्वशब्दो धनाभावनिमित्तकः साधुः । जातिनिमित्तकोऽसाधुरित्याद्युक्तम् । तद्विवरणे किमिदं साधुत्वम् । जातिरूपं वा सामान्यमुपाधिरयं वेत्यादिकमुक्तम् । तथा मञ्जर्यां शब्दानुशासनमित्यत्र समासविचारानन्तरं व्याकरणप्रयोजनतया साधुभिरेव भाषितव्यं नासाधुभिरिति ज्ञानोपयोगितया 'अनिदंप्रथमाः शब्दाः साधवः परिकीर्तिताः । त एव शक्तिवैकल्यप्रमादालसतादिभिः । अन्यथोच्चारिताः पुंभिरपशब्दा उदीरिता' इत्यादिना आदित्वं साधुत्वमिति आदिमत्वमपभ्रंशत्वमिति च लक्षणकथनपूर्वकमनादित्वं चोपपाद्य 'अनादिता चेत्साधुत्वं संज्ञाशब्देषु का गतिः । उच्यत' इत्यादिना संज्ञाशब्दानामपि द्व्यक्षरं चतुरक्षरं वा नामेति ऋष्यनूकं देवतानूकं वेति चापस्तम्ब-बोधायनोक्तेरनादितो देवतादिवाचिनामेव कार्यमित्यतः संज्ञानामप्यनादित्वमिति व्युत्पाद्य तथापि यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः । कथं तु तासां साधुत्वमित्यादिना टिघुभादिसंज्ञापदेषु साधुत्वमपि न । अपभ्रंशरूपत्वं च न । किन्तु हस्तचेष्टादिवत्सङ्केतमात्रत्वमित्यादि चोक्त्वा तदेवमनादिरनपभ्रष्टता च साधुत्वमित्या-द्युक्तम् । तथा ........................... प्रतिपादितं तत्सर्वं मनसि निधाय साधुत्वनिर्वचनमाक्षिप्य समाधत्ते **यद्यप्यत्र न स्वाभाविकेत्यादिना** । आदिपदद्वयेनास्वाभाविकवाचकत्वमसाधुत्वमित्यनयोः क्रमेण परिग्रहः । इदं च स्वयमधिकमुक्तं **साधुतापत्तेरिति** । तत्रातिव्याप्तिः स्यादित्यर्थः । तदिति साधुत्वमित्यर्थः । **अनर्थकतयेति** । निरर्थकेषु शबादिविकरणेष्वर्थविशेषे शक्तत्वायोगादव्याप्तिः स्यादित्यर्थः । दूषणान्तरमाह **लाक्षणिकानामपीति** । तीरमाणवकाद्यभिप्रायेण प्रयुक्तामग्न्यादिशब्दानामपीत्यर्थः । ततश्चाव्याप्तिरिति ज्ञेयम् । **क्वचिदिति** । तेषामपि प्रवाहाङ्गारादिषु शक्तत्वादत्रापि साधुत्वे इत्यर्थः । **हयेत्यादि** । हये शक्तमश्वपदं दरिद्रे शक्तमस्वपदं तयोस्तत्रार्थे शक्तत्वादश्वपदस्य दरिद्रे अश्वपदस्य च हयेऽपि साधुता स्यादित्यर्थः । **वृत्तिमत्त्वमिति** । अभिधालक्षणादि-वृत्तिमत्त्वमित्यर्थः । **द्योतकेति** । वचनवृत्त्यादेस्तेष्वभावादिति भावः । उपसन्दानत्वापरपर्यायद्योतकत्वशक्त्यन्त-र्भाविन निरुच्य तेषामपि शक्तिमत्वमस्तीत्याशङ्कते **औपसन्दानिकीति** । **व्यासज्येति** । यथाद्यवर्णटवर्णयोर्न कलशे प्रत्येकं शक्तिरपि तु मिलितयोरेवैवमौपसन्दानिकशक्तिपक्षे द्वयोरेव शक्तिस्वीकारापत्त्या प्रोपसर्गजिधात्वोर्मिलित्वैकैव शक्तिरित्यागतमित्यर्थः । इष्टापत्तिं परिहरति **ततश्चेति** । यदि केवलजिधातुप्रयोगस्तदा तस्य लङादिष्वजयदित्यादि-रूपेणाडागमः लुङ्लङ्लृङ्क्ष्वित्यनेन प्राप्नोति । यदा तु प्रोपसृष्टजिधातुप्रयोगस्तदा तस्यैवाडागमे सत्यप्रजयदिति प्राप्नोति । न तु प्राजयदिति जिधातोरेव । एवं लिटि जिगायेत्यादिरूपेण द्विर्वचनमाप्नोति । तदपि प्रोपसृष्टजिधातुशक्तिपक्षे प्रशब्दस्यैवेति । पप्रजयेत्याद्येव प्राप्नोति । न तु प्रजिगायेतीत्येवं प्रकारेण व्यवस्थाभावप्रसङ्गादित्यर्थः । आदिपदेन विपराभ्यां जेरित्यादिनोक्तात्मनेपदादिपरिग्रहः । **जातिविशेष इति** । शब्दत्वावान्तरजातिरित्यर्थः । **कत्वादिनेति** । कत्वं हि साधुत्वं विहायासाधु ककारेऽस्ति । साधुत्वमपि हि कत्वं विहाय गकारे साधावस्ति साधौ ककारे च तदुभयसमावेशः । एवं गत्वादावपि इत्येवं सङ्कर इत्यर्थः । यद्यपि योगरूढिवादमणिग्रन्थे स्मृतिपादीयप्रयोगो-त्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यादिति व्याकरणाधिकरणशास्त्रदीपिकादौ च साधुत्वनिर्वचनमाक्षिप्य समाहितम् । तत्र चादृष्टसाधनत्वादिप्रकारान्तराण्यप्याशङ्क्य निराकृतानि तथाप्येकग्रन्थानुसारेणोपयुक्तपक्षनिराकरणेन पक्षान्तरस्यार्थतो लाभं मत्वा तन्निराकरणं न कृतमिति ज्ञेयम् । **तथापीति** । मञ्जरीकृता स्वोक्तसाधुत्वनिर्वचन-संवादायेयमेव कारिकोदाहृता । तामर्थप्रतीतौ व्याचष्टे **तत्र शक्तीति** । बाला हि शक्तिवैकल्यात्प्रमादालसतादिना वा





गोशब्दस्थाने गावीगोणीगोपालिकेत्यादिशब्दान् प्रयुञ्जत इति भावः। यद्यनपभ्रष्टतासाधुत्वम्। तर्ह्यश्वशब्दस्य दरिद्रे साधुत्वमित्याद्यापत्तिरित्यत आह **सा चेति**। तथा चाश्वशब्दो हय एव साधुरस्वशब्दश्च दरिद्र एवेति नातिप्रसङ्ग इति भावः। तदेव स्पष्टयति **तथा हीति**। अनादिरित्यस्य व्याख्यानम् **अनादिता वेति**। अनादिशब्दत्वमित्यर्थः। यद्वेत्यस्योत्तरत्रापि संबन्ध इत्याशयेनोक्तम् **अभ्युदययोग्यता वेति**। रत्नतत्त्ववदित्यादि गम्य इत्यन्तं लिङ्ग-विपरिणामेन पूर्वत्रापि योज्यम्। सा च व्याकरणपरम्परयाऽवसीयत इति मञ्जर्यामुक्तत्वेन व्याक्रिया व्यञ्जनीयेत्यस्य पूर्वत्रापि संबन्धावगमात्। **शास्त्रेति**। व्याकरणश्रवणपरिकर्मितचेतसि चकास्तीति मञ्जर्यामपीदमुक्तम्। परिकर्म-जातमस्येति परिकर्मितं प्रसाधितं निर्मलीकृतमित्यर्थ इति कुसुमविकासः। प्रागुक्तं जातिपक्षे दोषमुद्धर्तुमाह **न च जातीति**। **दूषकताबीजाभावेनेति**। इदं च ......................... गुरुटीकायां व्यक्तमत्रापि लेख्यम्। तर्हि लाक्षणिकादौ सत्यपि साधुत्वे स्वाभाविकसंबन्धाभावाद्व्यापकतानुपपत्तिरित्यत आह **लाक्षणिकादावपीति**। इतःपरमन्यथाऽस्मदादीत्येतदवतारिकारूपैवं सत्यपि वैय्यात्यमात्रेण यः शुद्धेत्येतत्पर्यन्तं व्याख्येयमस्ति।

**स०व्र०— सामयिकत्वे इति**। साङ्केतिकत्व इत्यर्थः। **सर्व इति**। साधव इत्यादि अपभ्रंशा अपि साधवः स्युः साधुशब्दा वाऽपभ्रंशवदसाधवः स्युः। साङ्केतिकत्वस्योभयत्राविशेषादिति भावः।

**विठ्ठ०— सामयिकत्वे** साङ्केतिकत्वे। **सर्वेऽपीति**। अपभ्रंशा अपि साधवः स्युः साधवोऽप्यसाधवः स्युः। साङ्केतिकत्वस्योभयत्राविशेषादिति भावः।

**चषकः**— नैसर्गिकसंबन्धव्यवतिष्ठापयिषुराशङ्कते **स्यादेतदिति**। **सामयिकत्व इति**। साङ्केतिकत्व इत्यर्थः। **सर्व इति**। अपभ्रंशा अपि साधवः स्युरनपभ्रंशाश्चासाधवः स्युस्तद्विभागो न स्यादिति भावः।

**६०२ सु०— अत्र ब्रूमः॥ परस्यापि मते किमीश्वरसङ्केत एवावगमाङ्गम् उतास्मदादीना-मपि॥ आद्ये कथमृष्यार्यम्लेच्छानामनियताः प्रयोगप्रत्ययव्यवहाराः। किञ्चेश्वरसङ्केतोऽपि गृहीत एवावगमाङ्गं न स्वरूपेण। व्युत्पन्नवदव्युत्पन्नस्यापि प्रतिपत्ति(त्तीति)प्रसङ्गात्। तद्ग्रहश्च त्वदुक्तरीत्योपदेशादिनैव। तथा चास्त्वस्मदाद्युपदेश एव। किमदृष्टेश्वरसङ्केत-कल्पनयेति समानम्। अस्मदादिभिरपि पूर्वतनस्सङ्केतो ज्ञाप्यत एव न तु क्रियत इति चेत्। तर्ह्यस्मन्मतेऽपि वृद्धेन स्वाभाविकी शक्तिर्ज्ञाप्यत एव। न त्वपूर्वसङ्केतः क्रियत इति तुल्यम्॥ द्वितीये तु व्याकरणादिवैयर्थ्यम्। व्यवहारमात्रं हि शब्दप्रयोजनम्। तच्चेश्वरा-नीश्वरसङ्केतयोः समानम्। अदृष्टार्थमिति चेन्न प्रमाणाभावात्। श्रुत्यादेः सङ्केतशक्ति-पक्षोदासीनत्वात्। किञ्च चरमभाविनं सहकारिणमुपदेशादिकमुपादाय शक्तिप्रत्याख्याने अतिप्रसङ्गः।**





**परि०— अदृष्टार्थमिति चेदिति** । व्याकरणनिगमनिघण्ट्वादिकमिति योज्यम् । ईश्वरर्ष्यार्यकृतसङ्केतज्ञानेन व्यवहारेऽदृष्टमस्तीति तत्प्रतिपालनपरव्याकरणादिकमप्यदृष्टार्थं भविष्यतीति भावः । ईश्वरादिसङ्केतज्ञानस्यैव अदृष्टार्थत्वमप्रामाणिकं येन तत्परिपालनद्वारा व्याकरणाद्यपि तथा स्यादिति भावेनाह **प्रमाणाभावादिति** । ननु 'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवतीति ब्राह्मणेन । न म्लेच्छितवै नापभाषित वै म्लेच्छो ह वा एष यदपशब्द' इत्यादिश्रुत्या । 'यस्तु प्रयुङ्क्ते कुशलो विशेषैः शब्दान्यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैरि'-त्यादिस्मृत्या च साध्वसाधुशब्दज्ञानप्रयोगयोरर्थानर्थयोरुक्त्या परमेश्वरसङ्केतज्ञानपूर्वकं व्यवहारेऽदृष्टं नान्यथेति परिकल्प्यत इत्यत आह **श्रुत्यादेरिति । चरमभाविनं सहकारिणमुपदेशमिति** । तथाहि वृद्धव्यवहारानन्तरमित्यादिनोक्तवृद्धव्यवहाररूपोपदेशमित्यर्थः । **अतिप्रसङ्ग इति** । दण्डचक्रादिसहकारिसंपत्तिमादाय घटादिकार्यापलापोऽपि स्यात् । क्षितिसलिलादिसहकारिसंपत्तिमादाय बीजस्य अङ्कुरजननसामर्थ्यापलापप्रसङ्गात् । अन्त्यतन्तुसंयोगसहकार्युपादाय पटापलापोऽपि स्यादित्यर्थः ।

**यादु०— उतास्मदादीनामिति** । ईश्वरव्यतिरिक्तानामपीत्यर्थः । **त्वदुक्तरीत्येति** । सर्गादिभुवां महर्षिदेवतानामुपदेशादिनैवेत्यर्थः । **अस्मदाद्युपदेश एवेति** । अस्मदादिकृतसङ्केतज्ञापक इति शेषः । देवदत्तपित्रादिवदीश्वरातिरिक्ता महर्ष्यादयः स्वकृतमेव सङ्केतमुपदेशादिना ज्ञापयन्तीत्यस्त्विति भावः । **अस्मदादिभिरिति** । ईश्वरव्यतिरिक्तैर्महर्ष्यादिभिरित्यर्थः । **वृद्धेनेति** । अत्र वृद्धशब्देन प्रथममुपदेशादिना शक्तिज्ञापको भगवानेव विवक्षित इति ज्ञेयम् । ननु साधुभिर्भाषितव्यमिति श्रुत्यादेः का गतिरित्यत आह **श्रुत्यादेरिति । उपदेशादिकमुपादायेति** । अत्र यद्यपि चरमभाविनं सङ्केतमुपादायेत्येव वक्तव्यम् । पूर्वं तथैवाशङ्कितत्वात् । तथाऽप्यनवगतस्य सङ्केतस्यागमकत्वात् तदवगमकमुपदेशादिकमावश्यकमित्यभिप्रेत्यैवमुक्तमिति द्रष्टव्यम् । **अतिप्रसङ्ग इति** । चरमकारणानामन्त्यतन्तुसंयोगादीनामेव पटादिजनकत्वोपपत्तौ तज्जनकतन्त्वादौ पटादिजनकत्वमपि न कल्पनीयं स्यादित्यतिप्रसङ्ग इत्यर्थः ।

**वं०प०—** ये स्वाभाविकसंबन्धमास्थिषत शब्दार्थयोस्तैरपि तदवगमाय सङ्केतोऽङ्गीकार्यः । तथाच तेनैव प्रयोगादेरुपपत्तौ किं स्वाभाविकसंबन्धेनेति पूर्वपक्षिणा यथोक्तं तन्न्यायेनैव परमेश्वरसङ्केतस्यैवावगमाङ्गत्वं यैरङ्गीक्रियते तैरपि तदवगमायेश्वरातिरिक्तानामुपदेशोऽङ्गीकार्यः । तथाच तेनैव सर्वत्र प्रयोगादेरुपपत्तौ किमीश्वरसङ्केतकल्पनयेति वक्तुमाह **अत्र ब्रूम इत्यादिना** । **अवगमः** अर्थावगमः । **अस्मदादीनामिति** । अत्रास्मदादिशब्द ईश्वरातिरिक्तमहर्ष्यादिपरः । एवमुत्तरत्रापि । **कथमिति** । ईश्वरसङ्केतस्य सर्वान्प्रत्यविशिष्टत्वादित्यर्थः । **स्वरूपेणेति** । अगृहीत एवेत्यर्थः । अगृहीतस्यैवेश्वरसङ्केतस्यार्थावगमाङ्गत्वे बाधकमाह **व्युत्पन्नवदिति** । अन्यथेति शेषः । ईश्वरसङ्केतस्य स्वरूपसतः सत्त्वादित्यर्थः । **उपदेशादिनैवेति** । सर्गादिभुवामृष्यादीनामुपदेशादिनैवेत्यर्थः । **समानमिति** । ननु ये





स्वाभाविकसंबन्धमास्थिषतेत्यादिना स्वाभाविकसंबन्धपक्षे यद्दूषणमुक्तं तत्परमेश्वरसङ्केतपक्षेऽपि समानमित्यर्थः। शङ्कते **अस्मदादिभिरिति**। **पूर्वतनः** ईश्वरकृतः। **द्वितीय इति**। न केवलमीश्वरसङ्केत एवावगमाङ्गं किं त्वीश्वरातिरिक्तानामपीति पक्ष इत्यर्थः। तदुपपादयति **व्यवहारमात्रं हीति**। साधुभिर्भाषितव्यमिति वचनात् साधुशब्दव्यवहारमात्रमित्यर्थः। **तच्चेति**। व्याकरणशास्त्रप्रयोजनभूतं व्यवहारमात्रमित्यर्थः। **समानमिति**। ईश्वरतदतिरिक्तकृतयोरुभयोरपि सङ्केतयोर्व्यवहारमात्रस्यैव प्रयोजनत्वेन व्याकरणशास्त्रस्येश्वरातिरिक्तकृतसङ्केत-परिपालनार्थत्वस्यापि प्राप्त्या येषां पदानां येष्वर्थेषु परमेश्वरकृतः समयस्तानि तत्र साधून्यसाधूनि चेतरत्रेति विभागाय व्याकरणमर्थवदिति यत्परमेश्वरमात्रकृतपरिपालनार्थत्वं व्याकरणशास्त्रस्योक्तं तदयुक्तमित्यर्थः। नन्वस्तु अस्मदाद्युपदेश एव किमदृष्टेश्वरसङ्केतकल्पनयेति समानमिति यदुक्तं तदयुक्तम्। परमेश्वरसङ्केतकरणस्यादृष्टार्थत्वेन स्वाभाविकशक्तिज्ञापकत्वाभावादित्यभिप्रेत्य शङ्कते **अदृष्टार्थमिति चेदिति**। वृद्धव्यवहारोऽपि गवादिपदानां देवदत्तादिशब्दवत्सङ्केतपूर्वक एव। तद्वरमस्तु सङ्केत एव कृतमत्र स्वाभाविकसंबन्धेनेति यदुक्तं तद्दूषयति **किञ्चेति**। **चरमभाविनमिति**। अयं सङ्केत एव केषाञ्चिच्छब्दानामसति स्वाभाविकेऽर्थसंबन्धे न शक्यः, 'निर्दिश्य ह्यर्थं ब्रूयादस्माच्छब्दादयमर्थो बोद्धव्य इति। न च निर्देशोऽसति केषाञ्चिच्छब्दानां स्वाभाविकसंबन्धे सिध्यती'त्युक्तत्वात् सङ्केतः स्वाभाविकशक्त्यपेक्षया चरमभावीत्यर्थः। **उपदेशादिकमिति**। सहकारिभूतोपदेशादिसिद्धं सङ्केतमित्यर्थः। अज्ञातस्य सङ्केतस्यार्थागमकत्वादुपदेशादेरेव तद्ग्राहकतया संगादिभुवामित्यादिना परेणोक्तत्वादुपदेशादिकमित्युक्तम्। वस्तुतस्तु चरमभाविनं सङ्केतमित्येव वाच्यमिति द्रष्टव्यम्।

**आनन्दः**— तस्मात्स्वाभाविकसंबन्धं विना सङ्केतस्याप्यसंभवेनावश्यक एव स्वाभाविकसंबन्ध एवाङ्गीकार इति दूषणे सत्येव दूषणान्तरमाह **अत्र ब्रूम इति**। **आद्ये कथमृष्यार्यम्लेञ्छानामनियता इति**। ईश्वरसङ्केतस्योभयत्राप्यविशेषे दीर्घशूक एवार्षप्रयोगो म्लेञ्छानां तु प्रियङ्गुष्वेवेति। नानार्थवन्नियमो न स्यादिति भावः। न च व्यवस्थयैवेश्वरसङ्केतस्य संभवान्नानियम इति वाच्यम्। तर्ह्युभयोरपि साधुत्वाविशेषात्साधुभिर्भाषितव्यमित्यादौ यज्ञे साधुभाषणस्यैव विधानादुभयोरपि व्यवस्थया यज्ञादौ प्रयोगः स्यात्। न च तेन शब्देन तैरेव प्रयोक्तव्यमिति ईश्वरसङ्केतान्नानियम इति वाच्यम्। तादृशसङ्केतकल्पनस्याप्रामाणिकत्वात्। द्वितीये **व्याकरणादिवैयर्थ्यमिति**। व्याकरणं विनाऽप्यस्मदादिसङ्केतेन व्यवहारः। ईश्वरसङ्केतेनापि व्यवहारोपपत्तौ व्याकरणवैयर्थ्यं स्यादित्यभिप्रायेणोप-पादयति **व्यवहारमात्रं हीति**। नन्वीश्वरसङ्केतेति शब्दप्रयोगेणादृष्टं भवति इत्येतदर्थप्रतिपादनान्न वैयर्थ्यमित्याशयेन शङ्कते **अदृष्टार्थमिति चेदिति**। प्रमाणाभावादिति लोकोत्तरसङ्केतयितृसङ्केतितशब्दप्रयोगेणादृष्टं भवतीत्यत्र प्रमाणाभावादिति भावः। साधुभिर्भाषितव्यमित्यादिश्रुतिरेव प्रमाणं भविष्यतीत्यत आह **श्रुत्यादेरिति**। श्रुत्यादावीश्वरसङ्केतितशब्दानां साधुत्वात्तैर्व्यवहर्तव्यमित्यर्थः। स्वाभाविकशक्तियुक्तानां साधुत्वात्तैर्व्यवहर्तव्य-मित्यप्यर्थसंभवेनोदासीनत्वादिति भावः। किञ्च वक्ष्यमाणरीत्या स्वाभाविकसंबन्धकस्य प्रामाणिकत्वात्तेनैवोपपत्तौ अप्रामाणिकसङ्केतकल्पनस्यायुक्तत्वादिति भावः। **अतिप्रसङ्ग इति**। चरमभाविकारणमुपादाय पूर्वप्राप्तौ कारणनिरासे अन्त्यतन्तुसंयोगरूपचरमकारणमुपादाय पूर्वप्राप्ततुर्यादेरपि कारणत्वं परित्याज्यमित्यतिप्रसङ्ग इत्यर्थः।

**कं०रा०— ईश्वरेति** । ईश्वरसङ्केतितशब्दैर्व्यवहारनिष्पत्तिवदनीश्वरसङ्केतितशब्दैरपि तन्निष्पत्तेरनुभवसिद्धत्वेन व्यवहारमात्ररूपं शब्दप्रयोजनमीश्वरानीश्वरसङ्केतयोः समानमिति भावः । ननु दृष्टप्रयोजनस्य व्यवहारमात्रस्योभयसाधारण्येऽपीश्वरसङ्केतितशब्दप्रयोगस्य साधुशब्दप्रयोगरूपत्वेन धर्मसंपादकत्वादीश्वरसङ्केतितशब्दानां साधुत्वव्युत्पादनपरं व्याकरणमदृष्टार्थतया सार्थकं भविष्यतीत्याशयेन शङ्कते **अदृष्टार्थमिति** । **अतिप्रसङ्ग इति** । दण्डचक्रादिसहकारिसंपत्तिमादाय घटादिकार्यापलापोऽपि स्यात् । क्षितिजलादिसहकारिसंपत्तिमादाय बीजस्य अङ्कुरजननसामर्थ्यापलापप्रसङ्गात् । अन्त्यतन्तुसंयोगसहकारिणमुपादाय पटलोपोऽपि स्यादित्यर्थः । भवेदेतद्यदीश्वरसङ्केतितशब्दप्रयोगस्य धर्मार्थत्वे किञ्चित्प्रमाणं स्यात् । तदेव तु नास्तीत्याशयेन परिहरति **नेति** । ननु श्रूयते हि तस्माद्ब्राह्मणेन न म्लेञ्छितवै म्लेञ्छो ह वा एष यदपशब्द इत्याद्यपशब्दप्रयोगनिषेधः । तथैकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवतीति गुणवादः । तथाऽऽहिताग्निरपशब्दं प्रयुज्य सारस्वतीमिष्टिमित्यादिप्रायश्चित्तविधानम् । तथा उतत्वः पश्यन्न ददर्श वाचमुतत्वः शृण्वन्न श्रुणोत्येनामित्यादयो मन्त्राः शब्दापशब्दविभागाभिज्ञतदनभिज्ञस्तुतिनिन्दापराः । तथा नानृतं वदेदित्याद्यन्यार्थानृतभाषणनिषेधपराणि वाक्यानि सत्यान्न प्रमदितव्यं सत्यपूतं वेदवाक्यमित्यादीन्यर्थसत्यशब्दसत्यभाषणविधानपराणि च । एतैश्च साधुशब्दप्रयोगनियमस्य विधेयत्वाध्यवसायेन तस्य धर्मार्थत्वावगमात् कथं प्रमाणाभाव इत्यत आह **श्रुत्यादेरिति** । उदाहृतश्रुत्यादेः साधुशब्दप्रयोगनियमस्यादृष्टार्थतावगमकत्वेऽपि स्वाभाविकशक्तिमच्छब्दप्रयोगेश्वरसङ्केतितशब्दप्रयोगयोरदृष्टार्थतायामौदासीन्यान्न त्वदभिमतार्थसिद्धिरिति भावः।

**श्रीनिधि०— अतिप्रसङ्ग इति** । अन्त्यतन्तुसंयोगेन तदितरकारणानां पटादौ प्रत्याख्यानसंभवादिति भावः। सहकारिरूपसामर्थ्यम्।

**वा०चं०—** ऋष्यादिप्रयोगादीनामनियमानुपपत्तिप्रसङ्गं व्याकरणादिवैयर्थ्यं च सङ्केतपक्षेऽपि प्रतिपादयितुं विकल्पयति **परस्यापीति** । **आद्य इति** । ईश्वरसङ्केतस्यैकमात्रविषयकत्वेन सर्वविषयकत्वाभावादेकत्रैव ऋष्यादीनां सर्वेषां प्रयोगापत्त्याऽनियतप्रयोगाद्यनुपपत्तिः । ईश्वरसङ्केतस्य सर्वविषयकत्वेनेश्वरोपदेशपूर्वकवृद्धव्यवहारादिना सैन्धवादिशब्दवदनेकत्र सर्वेषामपि प्रयोगापत्त्याऽनियतप्रयोगाद्यनुपपत्तिरेव । तेषां तदन्यत्र सङ्केताज्ञानकल्पने च तदन्यत्र व्यवहारादि पश्यतामपि तथाऽप्रयोगाद्यनुपपत्तिरेवेति भावः ।

ननु केषाञ्चित्सङ्केतान्तराज्ञानादन्येषां चाज्ञानपूर्वकस्वपूर्वपूर्वव्यवहाराद्याग्रहेणान्यत्र सङ्केताभावज्ञानाद्वा अन्यत्राप्रयोग इत्यतो दूषणान्तरमाह **किञ्चेति** । **तथा चेति** । शक्तिज्ञापकसङ्केतमादाय शक्त्यपलापे सङ्केतज्ञापकास्मदाद्युपदेशादिना सङ्केतापलापोऽपि स्यादित्यर्थः । ननु नास्मदादीनां सङ्केतकारकत्वं येनास्मदाद्युपदेश एवायमस्मात्पदाद्बोद्धव्य इत्याद्याकारकोऽवगमाङ्गं स्यादपि तु पूर्वतनतज्ज्ञापकत्वमेवातः सङ्केत ईश्वरीय एक एव कल्प्यत इत्याशङ्कते **अस्माभिरपीति** । तर्हीश्वरस्य वृद्धानामपि न सङ्केतकारकत्वमपि त्वीश्वरज्ञापितस्वाभाविकशक्तिज्ञापकत्वमेवेति न सङ्केतेनापि शक्त्यपलाप इति तुल्यमित्याह **तर्हीति** । **द्वितीये त्विति** । अस्मदादिसङ्केत-





स्याप्यवगमाङ्गत्वे तेनापि प्रयोगाद्युपपत्त्या शब्दप्रयोजनसिद्ध्या तेषामपि साधुत्वेनेश्वरसङ्केतितानामेव साधुत्व-नियमाभावेन साध्वसाधुविभागाभावेन पारमेश्वरसमयपरिपालनस्यानावश्यकतया साध्वसाधुविभागपरव्याकरण-वैयर्थ्यमेवेति भावः । ननु प्रयोगप्रत्ययादिजनकत्वेनैव न शब्दस्य साधुत्वमपि त्वदृष्टजनकत्वेन । तच्चेश्वर-सङ्केतितानामेवेति तदन्येषामसाधुत्वात्तद्विभागाय व्याकरणमित्याशङ्कते **अदृष्टार्थमिति चेदिति** । ईश्वरसङ्केति-तानामेवादृष्टजनकत्वेन साधुत्वमित्यत्र प्रमाणाभावान्नैवमित्याह **प्रमाणाभावादिति** । ननु साधुभिर्भाषितव्यम् । साधूनेव प्रयुञ्जीत न म्लेच्छित वै नापभाषित वै म्लेच्छो ह वा एष यदपशब्द इत्यादिश्रुत्यादिकं तावत् साधूनामेव प्रयोज्यत्वमसाधूनां तदभावं बोधयति तच्च शब्दस्य प्रयोगप्रत्ययादिजनकत्वेनैव साधुत्वे सर्वेषामपि प्रयोगादिजनकत्वादनुपपन्नमित्यदृष्टजनकतयैव वाच्यम् । तच्चानीश्वरसङ्केतितानां न हि कल्पयितुं युक्तम् । न च प्रकारान्तरेण साधुत्वं शक्यव्युत्पादनमिति तादृशश्रुत्यादिकमेवेश्वरसङ्केतितानामेवादृष्टजनकतया साधुत्व-कल्पकमित्यतः स्वाभाविकशक्तिमतामेवादृष्टजनकत्वेन साधुत्वं तदन्येषामसाधुत्वमित्यभिप्रायेणापि श्रुत्याद्युप-पत्तिर्न तेनेश्वरसङ्केतितानामेव साधुत्वसिद्धिरित्याह **श्रुत्यादेरिति** । किञ्च स्वाभाविकशक्तौ व्युत्पन्नवदव्युत्पन्नस्यापि शब्दार्थावगमे प्राप्ते पश्चाज्ज्ञापकतया सहकारित्वेन कल्पितोपदेशादिना शक्तेरेवापलापे सन्निकर्षव्याप्त्युपदेशा-दिनेन्द्रियव्याप्त्यादेरप्यपलापप्रसङ्ग इत्याह **किञ्चेति** ।

**स०व्र०— उतास्मदादीनामपीति** । ईश्वरव्यतिरिक्तानामपीत्यर्थः । **त्वदुक्तरीत्येति** । सर्गादिभुवां महर्षिदेवतानाम् ईश्वरोपदेशादिनैवेत्यर्थः । **अस्मदाद्युपदेश एवेति** । ईश्वरातिरिक्तपुरुषकर्तृकोपदेश एव कृतसङ्केतज्ञापकोऽस्त्वित्यर्थः । देवदत्तपदवदिति भावः । **अस्मदादिभिरपीति** । ईश्वरव्यतिरिक्तैर्देवादिभिरित्यर्थः । **तर्ह्यस्मिन्मतेऽपि वृद्धेनेति** । अत्र वृद्धशब्देन प्रथमं व्यवहारादिना शक्तिज्ञापको भगवानेव विवक्षितः । तथा च यदुक्तं वृद्धव्यवहारोऽपीत्यादि तदयुक्तमिति भावः । स्वाभाविकसंबन्धस्यानादित्वान्नोक्तातिप्रसङ्गोऽपीति । ननु साधुभिर्भाषितव्यमिति श्रुत्यादेः का गतिरित्यत आह **श्रुत्यादेरिति** । **उपदेशादिकमुपादायेति** । अत्र यद्यपि चरमभाविनं सङ्केतमुपादायेति वक्तव्यम् । पूर्वं तथैवाशङ्कितत्वात् । तथाऽप्यस्मदाद्युपदेश एव किमदृष्टेश्वर-सङ्केतकल्पनयेत्यत्रेष्टापत्तिचोदनेऽप्यतिप्रसङ्गं वक्तुमेवमुक्तमिति द्रष्टव्यम् । **अतिप्रसङ्ग इति** । अन्त्यतन्तु-संयोगादीनामेव पटादिजनकत्वोपपत्तौ तन्त्वादावपि पटादिजनकत्वशक्तिर्न कल्पनीयेत्यतिप्रसङ्ग इत्यर्थः ।

**विठ्ठ०— अस्मदादीनामिति** । ईश्वरव्यतिरिक्तानामपीत्यर्थः । **त्वदुक्तरीत्येति** । सर्गादिभुवामित्यादि-रीत्या महर्ष्यादीनां परमेश्वरोपदेशेनास्मदादीनां तद्व्यवहारेण चेत्यर्थः । **अस्मदाद्युपदेश एवेति** । अस्मदादिकृत-सङ्केतज्ञापक इति शेषः । देवदत्तपित्रादिवदीश्वरातिरिक्ता ऋष्यादय एव स्वकृतसङ्केत एवोपदेशादिना ज्ञापयन्तीत्यस्त्विति भावः । **समानमिति** । यदुक्तमत्र वृद्धोपदेशादिरूपसङ्केतमात्रेणैव प्रयोगप्रत्ययाद्युपपत्तेः किं स्वाभाविकशक्तिकल्पनयेति अस्माकं दूषणं तद्भावतो समानं ईश्वरातिरिक्तपुरुषकर्तृकोपदेश एव प्रयोगादि-निर्वाहको भवत् किं ईश्वरसङ्केतकल्पनयेति अस्माभिरपि वक्तुं शक्यत्वादित्यर्थः । **अस्मदादिभिरिति** । ईश्वर-

व्यतिरिक्तैर्महर्ष्यादिभिरित्यर्थः । **वृद्धेनेति** । अत्र वृद्धेन प्रथमोपदेशको भगवानीश्वर एव विवक्षित इति ज्ञेयम् । वैय्यर्थ्यमेवोपपादयति **व्यवहारेति** । समानमित्यतःपरं तथा च व्यवहारजनने शब्दसाधुत्वादेरुपयोगाभावान्निरूपकव्याकरणादिवैयर्थ्यमेवेत्यनुसन्धेयम् । ननु व्यवहारजननाय शब्दसाधुत्वमुपयुक्तमित्युच्यते किन्त्वदृष्टजननार्थमेव तच्च साधुत्वमीश्वरसङ्केतितानामेव तदन्येषां त्वसाधुत्वमिति साध्वशब्दविभागाय व्याकरणमर्थवदित्यत आह **अदृष्टार्थमिति चेदितिं** । ईश्वरसङ्केतितानामेवादृष्टजनकत्वेन साधुत्वमित्यत्र प्रमाणाभावादित्याह **प्रमाणाभावादिति** । ननु साधुभिर्भाषितव्यं एकः शब्दः सम्यग्ज्ञातः सुष्ठुप्रयुक्तः स्वर्गे लोके कामधुक् भवतीत्यादि श्रुत्या 'यस्तु प्रयुंक्ते कुशलो विशेषैः शब्दान्यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति जयमि'त्यादि स्मृत्या साधूनामेवशब्दानां प्रयोज्यत्वं ज्ञायते नासाधूनाम् । तच्च साधुत्वं प्रयोगप्रत्ययादिजनकत्वं न भवति । तस्य सर्वेष्वपि समत्वात् । तस्माद् दृष्टबलकत्वमेवेति वाच्यम् । तच्चादृष्टजनकत्वमनीश्वरसङ्केतितानां न हि कल्पयितुं युक्तम् । अत ईश्वरसङ्केतितानामेवादृष्टजनकत्वे श्रुत्यादिकमेव प्रमाणमित्यत आह **श्रुत्यादेरिति** । सङ्केतपक्ष एवादृष्टजनकत्वं न शक्तिपक्ष इति विशेषस्य श्रुत्यादावभावात्स्वाभाविकशक्तिमतामेवादृष्टजनकत्वेन साधुत्वं स्यादिति भावः । **अतिप्रसङ्ग इति** । दण्डचक्रादिसहकारिसंपत्तिमादाय मृत्पिण्डादेर्घटाद्यकारणत्वादतिप्रसङ्ग इत्यर्थः ।

**चषकः**— साङ्केतिकत्वकल्पेऽपि ऋष्यादिप्रयोगानियमानुपपत्तिं व्याकरणादिनैरर्थक्यं चाभिधित्समानो विकल्पयति **परस्यापीति** । **त्वदुक्तरीत्येति** । सर्गादिभुवामित्यादिनेत्यादिः । **अस्मदाद्युपदेश एवेति** । ज्ञापक इत्युपस्कृतेनान्वेति । **अदृष्टेश्वरेति** । अतीन्द्रियेश्वरेत्यर्थः । परमेश्वरादतिरिच्यमानाः महर्ष्यादयः स्वस्वरचितसङ्केतानेव पाणिन्यादिवदुपदिशन्तीत्याशयः । **अस्मदादिभिः** ईश्वरव्यतिरिक्तैर्महर्ष्यादिभिः । **अस्मन्मतेऽपि** सार्वत्रिकसङ्केतहेतुतानुपगन्तृमतेऽपि । **वृद्धेन** प्रथममुपदेष्ट्रा भगवतैव । द्वितीये तु ईश्वरातिरिक्तसङ्केतोऽप्यवगमाङ्गमिति कल्पे तु श्रुत्यादेरिति साधूनेव प्रयुञ्जीत नासाधूनित्याद्यानुपूर्वीकत्वादेरित्यर्थः । **उदासीनत्वादिति** । शक्तिसङ्केतोभयबोधकपदसमभिव्याहाराभावादिति भावः । **अतिप्रसङ्ग इति** । सन्निकर्षेणेन्द्रियस्य परामर्शेन व्याप्तिधियः पदार्थस्मृत्या पदज्ञानस्यान्त्यतन्तुसंयोगादिनैव पटाद्युत्पत्तौ तन्त्वादेरपि पटजनकत्वस्याप्यपह्नवप्रसङ्ग इत्यर्थः ।

**६०३ सु०— अथौत्पत्तिकशक्तिसद्भावे किं प्रमाणम् । अर्थावबोधस्य स्वरूपसहकारिभ्यां शब्दसङ्केताभ्यामेवोपपत्तेरिति ॥ उच्यते । किं स्वरूपसहकारिव्यतिरिक्तातीन्द्रिया शक्तिः क्वापि नाङ्गीक्रियते, उत शब्द एव ॥ आद्ये वक्ष्यामः । द्वितीये चाधुनातनास्तावन्न सङ्केतयितार इति तवापि संमतम् । न च लोकोत्तरे सङ्केतयितरि प्रमाणमस्ति । तथा च स्वभाव एवायं शब्दानामिति गम्यते ॥ गवादिशब्दाः साङ्केतिकाः शब्दत्वाद्देवदत्तादिशब्दवदिति चेत् । किमत्र**





**साङ्केतिकत्वमात्रं साध्यम्, उत सास्नादिमत्यर्थे । आद्ये सिद्धसाधनम् । गुप्तभाषणादौ मया गोशब्दस्य घटेऽपि सङ्केतितत्वात् । द्वितीये व्यभिचारः । न हि 'सर्वेऽपि शब्दाः सास्नादिमति पिण्डे सङ्केतिता' इत्यत्र प्रमाणमस्ति । गोशब्दः सास्नादिमत्यर्थे सङ्केतितः तत्र प्रयुज्यमान-शब्दत्वात् गाव्यादिशब्दवदिति चेन्न असाधुशब्दत्वस्योपाधित्वात् । साधनावच्छिन्नसाध्य-व्यापकत्वेनाप्युपाधित्वस्य वक्ष्यमाणत्वात् । अन्यथाऽस्मदादिविशेषणप्रक्षेपोऽपि प्रतिज्ञायां प्रसज्येतेति ।**

**तदेवं शब्दस्यार्थसंबन्धसंभवान्नाप्रामाण्यम् ।**

**बिन्दुः— असाधुशब्दत्वस्योपाधित्वादिति** । ननु हस्तचेष्टादौ साध्यव्यापकताभङ्ग इत्यत आह **साधनावच्छिन्नेति** । अपिशब्देन पक्षधर्मावच्छिन्नेत्यपि ग्राह्यम् । नन्वेवमपि कृष्णवेणी-त्यादिशब्देषु आधुनिकैर्गवादिष्वेव स्वेच्छया सङ्केतितेषु व्यभिचारः । तेषां साधुत्वादिति चेत् । न । यद्यपि अपभ्रष्टतानादिः यद्वाऽभ्युदययोग्यता । व्याक्रिया व्यञ्जनीया वा जातिः कापीह साधुतेत्यनेक-विधेषु साधुत्वेषु अनपभ्रष्टत्वादिरूपं साधुत्वमस्ति तथाप्यनादित्वरूपमस्य साधत्वम् ॥

**परिं०**— ननु घटपटादि कार्यं प्रमितमिति नापलापार्हम्; शक्तिर्न प्रमितेति शङ्कते **अथेति** । **वक्ष्याम इति** । लिङ्गपादे । 'इति पैङ्गिश्रुतिः प्राह शक्तिसद्भाव एव तु' इत्याद्यनुव्याख्याव्याख्यावसर इति भावः । गोपिण्डे केनचित्सङ्केतितचेष्टाविशेषे साध्यव्यापकत्वादाह **साधनावच्छिन्नेति** । **वक्ष्यमाण-त्वादिति** । द्वितीयाद्यपादे 'न विलक्षणत्वादि'ति नये 'साध्याव्यापकवैलोम्यमव्याप्तिः साधनस्य च' इत्येतद्व्याख्यावसर इति भावः । **अन्यथेति** । साङ्केतिकत्वस्यासाधुशब्दत्वनिबन्धनत्वाभावे गोशब्दः सास्नादिमत्यर्थेऽस्मदादिभिः सङ्केतितः तत्र प्रयुंज्यमानशब्दत्वादित्यपि प्रयोगप्रसङ्गेन त्वदभिमत-पारमेश्वरसङ्केत इत्यस्यासिद्धिप्रसङ्गादिति भावः । प्रपञ्चितमेतत्सङ्केतपक्षखण्डनं तर्कताण्डवे द्वितीय-परिच्छेदे ।

**गु०दी०— न च लोकोत्तर** इत्यत्र लोकोत्तरे अलौकिके अस्मदादिदृष्ट्यगोचरे इत्यर्थः । तत्कृतसङ्केतः नास्माभिर्दृष्टः । स सङ्केतं कृतवानित्यत्र श्रुतिः स्मृतिर्वा प्रमाणं नास्तीति भावः । गवि सङ्केतितकरपल्लवादावसाधु-शब्दत्वस्याभावात् साध्याव्यापकतेति शङ्कापरिहाराय **साधनावच्छिन्नसाध्ये**त्युक्तम् । किञ्च शब्दानां सहजशक्त्य-भावे देशे देशे स्वेच्छया भिन्नसङ्केतयितृलौकिकपुरुषवत् ईश्वरोऽपि देशान्तरे कालान्तरे च स्वतन्त्रया स्वेच्छया संस्कृतशब्दानामपि कुतो न भिन्नभिन्नप्रकारेण सङ्केतं कुर्यात् । योगेन भेकादिष्वपि प्रवर्तयितुं शक्यानां पङ्कजादिशब्दानां

कुतः पद्मादिष्वेव सङ्केतं कुरुते। अतः सहजैव शक्तिर्वाच्या। नित्यत्वे तु शब्दानामर्थसंबन्धस्यापि नित्यत्वेन सुतरां न साङ्केतिकत्वमिति बाधितविषयमनुमानमित्यपि द्रष्टव्यम्।

**यादु०**— **वक्ष्याम इति**। लिङ्गपाद इति शेषः। लोकान्तरसङ्केतयितृसद्भावे पूर्वपक्षावसरे वृद्धव्यवहारोऽपीत्यादिनोक्तमनुमानमेव मानमाशङ्कते **गवादिशब्दा इति**। प्रसिद्धबाधसहकृतं पुनरनुसन्धीयमानमिदमेवानुमानमप्रसिद्धेश्वरकृतसङ्केतमादाय पर्यवस्यतीत्याशयः। **द्वितीये व्यभिचार इति**। घटादिशब्देष्विति शेषः। ननु तेऽपि कदाचित्केनचित्तत्र सास्नादिमति पिण्डे सङ्केतिता एवेत्यत आह **न हीति**। ननु प्रतिज्ञायां बहुवचनश्रवणात् घटादिशब्दानामपि पक्षत्वप्रतीत्या कथं तत्र व्यभिचारोद्भावनमिति चेन्न। घटादिशब्देष्वेवमेव प्रत्येकं तेषु तेष्वर्थेषु साङ्केतिकत्वं साधनीयमिति सूचयितुमेव बहुवचनं न तु तेषामप्यत्र पक्षत्वलाभायेत्याशयात्। न चैवमुत्तरानुमानपौनरुक्त्यम्। हेतुभेदात्। **तत्र प्रयुज्यमानेति**। तथा च घटादिशब्देषु व्यभिचार इति भावः। सास्नादिमदित्यर्थे सङ्केतितचेष्टाविशेषे साध्यांव्यापकत्वमित्यत आह **साधनावच्छिन्नेति**। **वक्ष्यमाणत्वादिति**। युक्तिपाद इति शेषः। शुद्धसाध्यव्यापकस्यैवोपाधित्वं न साधनावच्छिन्नसाध्यव्यापकस्येत्यभिमाने बाधकमाह **अन्यथाऽस्मदादीति**। न चात्र बाधः। ईश्वरातिरिक्तस्याप्रसिद्धस्यैव कस्यचित्सङ्केतयितुः सिद्धिप्रसक्त्या भवदभिलषितेश्वरसङ्केतसिद्धिर्न भविष्यति। उपाधिभयस्य त्वयैव त्याजितत्वात्। दोषान्तरस्य चाभावादित्याशयात्।

**वं०प०**— नन्वर्थावबोधान्यथाऽनुपपत्तिरेव शक्तिसद्भावे प्रमाणमित्यतोऽर्थापत्तेरन्यथैवोपपत्तिमाह **अर्थावबोधस्येति**। शब्दस्वरूपसहकारिभूतसङ्केताभ्यामित्यर्थः। **क्वापीति**। वह्न्यादावपीत्यर्थः। वह्न्यादिस्वरूपकरतलानलसंयोगरूपसहकारिभ्यामेव कार्योपपत्तेर्वह्न्यादावपि दाहानुकूलाऽतीन्द्रियाविशिष्टधर्मरूपा शक्तिर्नाङ्गीक्रियत इति भावः। सहकार्यभावमुपपादयति **अधुनातना इति**। **तथा चेति**। शब्दानां सकाशाज्जायमानोऽयमर्थावबोधः स्वभाव एव। शब्दानामर्थावबोधजनकत्वरूपा शक्तिः शब्दस्वरूपमेवेति यावदिति गम्यत इत्यर्थः। **अन्यथेति**। अवच्छिन्नसाध्यव्यापकस्योपाधित्वमनङ्गीकृत्यानुमानस्य साधुत्वाङ्गीकार इत्यर्थः। **अस्मदादीति**। गोशब्दः सास्नादिमत्यर्थेऽस्मदादिभिः सङ्केतित इत्यपि प्रतिज्ञायां विशेषणप्रक्षेपसंभवान्नानेनानुमानेनेश्वररूपलोकोत्तरसङ्केतयितृपुरुषसिद्धिरिति भावः। **अर्थसंबन्धेति**। स्वाभाविकशक्त्यैवार्थबोधकत्वसंभवादित्यर्थः।

**आनन्दः**— घट इति शब्दस्य सास्नादिमत्यर्थे सङ्केतितत्वेऽप्यसाधुशब्दत्वाभावात्साध्याव्यापक इत्यत आह **साधनेति**। तथाच तत्र प्रयुज्यमानत्वावच्छिन्नसास्नादिमत्यर्थे सङ्केतितत्वरूपसाध्याभावान्न तदव्यापकत्वमिति भावः। **अन्यथेति**। उपाध्यनङ्गीकार इत्यर्थः। तथाच गोशब्दे अस्मदादिभिः सास्नादिमत्यर्थे सङ्केतितस्तत्र प्रयुज्यमानत्वादित्यस्मात्सङ्केतसिद्ध्यभावसाम्यमित्यर्थः। तदेवं सङ्केतस्यासंभवादन्यथानुपपत्त्या स्वाभाविकः संबन्धोऽङ्गीकरणीय इत्युपसंहरति **तदेवमिति**।

**कं०रा०**— ननु सास्नादिमत्यर्थे सङ्केतितं यच्चेष्टादिकं तत्र साध्यसत्त्वेऽप्यसाधुशब्दत्वस्याभावेन साध्याव्यापकत्वान्न तस्योपाधित्वमित्यत आह **साधनावच्छिन्नेति**। तथा च साधनावच्छिन्नसाध्यस्य





चेष्टादावभावात्तद्वत्सु गाव्यादिशब्देषु चासाधुशब्दत्वस्य सत्त्वान्न तस्यानुपाधित्वशङ्कावकाश इति । **अन्यथेति** । असाधुशब्दत्वस्य शुद्धसाध्यव्यापकत्वाभावेनानुपाधित्वमङ्गीकृत्य तत्र प्रयुज्यमानशब्दत्वेन तत्र सङ्केतित्वसाधने गोशब्दः सास्नादिमत्यर्थेऽस्मदादिसङ्केतितस्तत्र प्रयुज्यमानशब्दत्वाद्गाव्यादिशब्दवदित्यप्यनुमानं प्रसज्येत । तत्रेदमेव त्वया वक्तव्यम् । साधनावच्छिन्नसाध्यव्यापकस्यासाधुशब्दत्वस्योपाधित्वान्नास्मदादिसङ्केतितत्वानुमानं संभवतीति । तच्च ममापि सममिति भावः । यद्वा । तत्र प्रयुज्यमानशब्दत्वस्य तत्र सङ्केतितत्वेन गाव्यादिशब्देषु सहचारदर्शनमात्रेण तेन तत्साधने गोशब्दः सास्नादिमत्यर्थेऽस्मदादिसङ्केतित इति प्रतिज्ञायामस्मदादिविशेषणं प्रक्षिप्य तेनैव हेतुनाऽस्मदादिसङ्केतितत्वमपि साधनीयं स्यात् । सहचारदर्शनस्याविशिष्टत्वादिति भावः । **शब्दस्येति** । सर्वस्यापि शब्दस्येत्यर्थः ।

**श्रीनिधि०— वक्ष्याम इति** । उत्तरत्र सहजशक्तिः साध्यत इति भावः ।

**वा०चं०—** ननु स्वाभाविकशक्तेः प्रामाणिकत्वे तद्बलाद्वृद्धोपदेशादेस्तज्ज्ञापकत्वकल्पनं श्रुत्यादेरन्यथासिद्धिकल्पनमतिप्रसङ्गोक्तिरुक्तरीत्या बाधकपरिहारश्चोपपद्यते; तदेव तु कथमित्याशङ्कते **अथेति** । अर्थावबोधान्यथाऽनुपपत्तिमन्यथयति **अर्थेति** । अतीन्द्रियशक्तिमात्रानभ्युपगमप्रयोजिकायाः स्वरूपसहकारिभ्यामन्यथोपपत्तेरुक्तत्वाच्छब्दतत्सङ्केताभ्यामिति चोक्तेर्विकल्प्य दूषयति **किमिति । आद्ये वक्ष्याम इति** । लिङ्गपादे शक्तिसद्भाव एव तु क्रियादिनित्यता ज्ञेयेत्यनुव्याख्याव्याख्यावसरे स्वरूपसहकारिसमवधानातिरिक्ता शक्तिरेव नास्तीति केचित्तेषां श्रुत्यादिविरोध इत्यादिनेत्यर्थः । द्वितीये तु शब्दस्यास्याबोधकत्वासंबद्धबोधकत्वानुपपत्त्या सङ्केतस्याप्यनुपपत्तौ परिशेषात्स्वाभाविकशक्तिसिद्धिरित्याह **द्वितीये चेति** । ननु सर्वविप्रतिपन्नशब्दानां पक्षीकारात्कुत्र व्यभिचार इत्यतो घटादिशब्दानां सास्नादिमत्यर्थे साङ्केतिकत्वस्य तत्कार्यदर्शनेनाकल्पनीयत्वात् । तद्व्यतिरिक्तानां पक्षीकारे तेषां सास्नादिमत्यर्थे साङ्केतिकत्वस्य परेणाप्यनभ्युपगमात्तत्रैव व्यभिचार इत्याशयेन तत्र साध्याभावं व्युत्पादयति **न हीति** । तत्तच्छब्दानामेव पूर्वत्रेवात्रापि पक्षत्वे व्यभिचारनिरासाय हेतुविशेषणं वक्तुं प्रयोगान्तरं दर्शयति **गोशब्द इति** । सास्नादिमत्यर्थे सङ्केतितचेष्टाविशेषे गुप्तभाषादौ तत्र सङ्केतितघटादिशब्दे च साध्याव्यापकत्वादाह **साधनेति** । ननु साधनावच्छिन्नसाध्यव्यापकस्य नोपाधित्वम् । उपाधेः पक्षादिप्रविभागोत्तरकालं प्रतिपक्षोन्नायकत्वेनैव दूषकतयोपाध्यभावेन साधुशब्दत्वेन सास्नादिमत्यर्थे साङ्केतिकत्वाभावे साध्ये गुप्तभाषणादौ गवि सङ्केतिते घटादिशब्दे व्यभिचारापत्त्या दूषकताबीजासंभवादित्यत उक्तं **वक्ष्यमाणत्वादिति** । यदवच्छिन्नसाध्ये य उपाधिस्तद्विशेषणावच्छिन्नसाध्याभावस्योपाध्यभावेन साधनसौलभ्याद्यथा समवायः समवेतः संबन्धत्वात्संयोगवदित्यत्र साधनावच्छिन्नसाध्यव्यापकस्य कृतकत्वस्योपाधित्वात्समवायः संबन्धत्वे सति समवेतत्वेन हीनोऽकार्यत्वादिति साधनं तथा गवादिशब्दः सास्नादिमत्यर्थे प्रयुज्यमानत्वे सति तत्र सङ्केतिता न साधुशब्दत्वादिति प्रकृतेऽपि प्रयोगसंभवात् । न च साध्ये विशेषणवैयर्थ्यम् । शब्दो न स्पर्शवद्विशेषगुणः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वादित्यादाविव व्यभिचारवारकतया सार्थक्यादित्यर्थस्य युक्तिपादे साध्यव्यापकवैलोम्यमव्याप्तिरित्यनुव्याख्याव्याख्यावसरे वक्ष्यमाणत्वादित्यर्थः । न चैवमुपाध्यभावेनावच्छिन्नसाध्याभावसिद्धावपि तस्याव-





च्छेदकाभावेनाप्युपपत्त्या पक्षे न शुद्धसाध्याभावसिद्धिरिति वाच्यम्। अवच्छेदकीभूततत्रप्रयुज्यमानत्वाभावस्य पक्षे बाधिततया साध्यरूपविशेष्याभावमादायैव साध्यपर्यवसाने वक्तव्ये पर्यवसानगत्या शुद्धसाध्याभावस्यैव सिद्धेरित्याशयः। एवं सत्यपि वैयात्यमात्रेण यः शुद्धसाध्यव्यापकस्यैवोपाधित्वं मन्यते तं प्रत्याभाससाम्यमाह **अन्यथेति**। तत्रागत्यैतादृशोपाधेरेव स्वीकर्तव्यत्वादित्याशयः।

**वा०र०**— गवादिशब्दा इति पक्षनिर्देशोऽपि विकल्प्यते क्वचिदर्थे सङ्केतिता इति प्रथमपक्षे गोशब्दस्य गुप्तेत्यनेन दूषणमुक्त्वा सास्नादिमत्यर्थेन सङ्केतिता इति द्वितीयपक्षनिरासाय मूले **द्वितीये व्यभिचार** इत्युक्तम्। तत्र कुत्र व्यभिचार उक्त इति न प्रतीयते। अतो घटादिशब्देष्विति दर्शयितुं न हीत्युत्तरमूलवाक्यं प्रवृत्तम्। तदुक्तव्यभिचारोपपादकं यथा स्यात्तथा योजयितुं तद्व्यावर्त्यामाशङ्कां दर्शयन्नवतारयति **ननु विप्रतिपन्नेत्यादि**। अत्र विप्रतिपन्नसर्वशब्दपक्षीकारादित्येतच्छङ्कापरिहारो न प्रतीयते। प्रत्युत सर्वशब्दपक्षीकारेणोक्तानुमानेन सास्नादिमत्यर्थे साङ्केतिकत्वसाधने कृते सति तत्र प्रमाणाभाववचनायोग इत्यतस्तदभिप्राय उक्तः **घटादिशब्दानामित्यादिना**। अयमर्थः। गवादिशब्दाः सास्नादिमत्यर्थे सङ्केतिता इति द्वितीयेऽपि सर्वेषां गोघटादिशब्दानां सास्नादिमत्यर्थे सङ्केतितत्वमिति न प्रतिपन्न एवार्थो विवक्षित इति वक्तुं शक्यम्। घटादिशब्दानामपि सास्नादिमत्यर्थे सङ्केतितत्वसाधनं किं सङ्केतवादिनाऽभ्युपगमाद्वा कल्पनामात्रेण वा। नाद्यः। तेषां शब्दानां तत्रार्थे सङ्केतस्य स्वाभाविकसंबन्धवादिनेव सङ्केतवादिनाऽप्यनङ्गीकारात्। न द्वितीयः। प्रयोगप्रत्ययादिरूपसङ्केतकार्यसद्भावे तत्कल्पनायाः संभवेऽपि प्रकृते तददर्शनेन कल्पनाया अप्यनुपपत्तेः। तस्माद्घटादिशब्दव्यतिरिक्तो गोशब्द एव पक्षीकर्तव्यः। आदिशब्दस्त्वेवं घटादिशब्दा अपि पृथुबुध्नोदराकारविशिष्टपिण्डादौ सङ्केतिता इति प्रयोगान्तराभिप्रायेणेति च वक्तव्यम्। तदा च गवादिशब्दा इत्युक्तानुमानस्य विप्रतिपन्नसर्वशब्दानां सास्नादिमत्यर्थे सङ्केतितत्वमित्यत्र प्रमाणत्वासंभवात्तेन तदसिध्या तेषु शब्दत्वहेतोर्व्यभिचारो युक्त इति। अनेन प्रमाणं न ह्यस्तीत्यस्योत्तं प्रमाणं नास्ति हि न भवति हि न संभवतीति मूलार्थः सूचितः। पर्यवसानगत्या गोशब्दस्यैव पक्षीकारप्राप्तेर्घटादिशब्देषु व्यभिचारो युक्त इति तदभिप्रायश्च दर्शितः। अत एव पर्यवसानपक्षमेव पुरस्कृत्योक्तव्यभिचारपरिहाराय हेतुविशेषणोपादानेन प्रयोगान्तरं शङ्कत इति पूर्वोक्तमूलार्थोपष्टम्भकतयोत्तरवाक्यावतारः करिष्यत इति ज्ञेयम्। अत्र टीकायां परेणाप्यनभ्युपगमादित्यस्य तेषां सास्नादिमत्यर्थे साङ्केतिकत्वस्येत्यस्याशयेन तत्र साध्याभावमुपपादयतीत्यस्य च भिन्नभिन्नावच्छेदककरणेनोपरि शोधितत्वात्तत्कार्यादर्शनिनाकल्पनीयत्वादित्यस्य च पंक्त्यन्तरे शोधितत्वात् हंसपदादेश्च ज्ञापकस्याव्यवस्थितत्वेन नियामकविशेषाभावदृष्ट्या घटादिशब्दानां सास्नादिमत्यर्थे साङ्केतिकत्वस्य तत्कार्यादर्शनिनाकल्पनीयत्वात् तद्व्यतिरिक्तानां पक्षीकारे तेषां सास्नादिमत्यर्थे साङ्केतिकत्वस्य परेणाप्यभ्युपगमात् तत्रैव व्यभिचार इति पाठो योजितः। यद्यपि तत्र घटादिशब्दानां पक्षत्वानुपपत्त्या तदतिरिक्तशब्दानां पक्षीकार इत्यनेन गवादिशब्दपक्षीकार इत्यर्थस्य सिद्धतया तेषामित्यनेन गवादिशब्दपरामर्शप्रतीतेस्तेषां च वादिनोक्तसाङ्केतिकत्वस्याभ्युपगमेन तदनभ्युपगमासिद्धिरित्याभाति तथापि तद्व्यतिरिक्तानामित्यत्र तच्छब्देन निर्दिष्टानामेव तेषामित्यनेन परामर्शात् घटादिशब्दानामुक्तार्थे साङ्केतिकत्वस्य परेणाप्यनभ्युपगमा-





दनभ्युपगमप्राप्त्या शब्दत्वहेतोस्तत्रैव तेष्वेव घटादिशब्देषु व्यभिचार इति योजनाश्रयणेन गवादिशब्दानां तेषामित्यनेन परामर्शानङ्गीकारेणादोषात् । अव्यवस्थितो हंसपदादिना साङ्केतिकत्वस्य तत्कार्यादर्शनेन परेणाप्यनभ्युपगमात् तद्व्यतिरिक्तानां पक्षीकारे तेषां सास्नादिमत्यर्थे साङ्केतिकत्वस्य तत्रैव व्यभिचार इति पाठयोजनाकरणपक्षेऽपि तेषामित्यनेन गवादिशब्दपरामर्शमङ्गीकृत्यावश्याध्याह्रियमाणशब्दत्वहेतोरित्यनेन संबन्धे तद्धेतोर्गवादिशब्दानां तेष्विति यावत् । साध्यभूतं यदुक्तसाङ्केतिकत्वं तस्येति कर्मणि षष्ठी । तेन साध्येनेति यावत् । तत्रैव घटादिशब्देष्वेव व्यभिचार इति योज्यम् । परेणापीत्यपिशब्दस्यानभ्युपगमादपीति संबन्धः । तेन समुच्चयसिद्धिः । यदि तु साङ्केतिकत्वस्य परेणाप्यनभ्युपगमात् तेषां सास्नादिमत्यर्थे साङ्केतिकत्वस्य तत्कार्यादर्शनेनाकल्पनीयत्वाच्च तद्व्यतिरिक्तानां पक्षीकारे तत्रैवेति पाठयोजना । तदापि तेषामिति भागे तेषामुक्तार्थे इति वक्तव्ये स्पष्टत्वाय सास्नादिमत्यर्थ इति वचनम् । तत्रैवेत्यस्य तेष्वेव घटादिशब्देष्वित्यर्थ इति सिद्धमेवेति ज्ञेयम् । **तत्तच्छब्दानामेवेति** । पूर्वोक्तरीत्या गोशब्द एव पक्षः । आदिपदेन घटादिशब्दग्रहणं पृथुबुध्नोदराकारविशिष्टपिण्ड इत्यादिरूपप्रयोगान्तरसूचनार्थम् । न चोक्तव्यभिचारः । गवि प्रयुज्यमानत्वे सतीति विशेषणेन तत्परिहारादित्यर्थः । **तत्रागत्येति** । सास्नादिमत्यर्थे अस्मदादिभिः सङ्केतित इत्यपि प्रयोगापत्त्या तद्दूषणायागत्यैतादृशोपाधिः स्वीकर्तव्य एव । स चास्मदादिपदरहितेऽनुमाने उद्भाव्यत इति तदसहनं व्यर्थमिति भावः ।

**स०व्र०— किं स्वरूपसहकारिव्यतिरिक्ता शक्तिः क्वापि नाङ्गीक्रियते उत शब्द एव** । आद्ये **वक्ष्याम इति** । शक्तिसद्भाव एव तु क्रियादिनित्यता ज्ञेयेत्यनुव्याख्यानव्याख्यानावसर इति शेषः । **असाधुशब्दत्वस्येति** । धेन्वादिशब्दानां पक्षतुल्यत्वान्न तत्र साध्याव्यापकत्वम् । यादृशतादृशसाधुत्वस्य पक्षेऽपि सत्त्वेन साधनव्यापकत्वपरिहाराय शब्दग्रहणम् । सास्नादिमत्यर्थे सङ्केतितचेष्टाविशेषे साध्याव्यापकत्वमित्यत आह **साधनावच्छिन्नेति** । प्रयोगस्य शब्दधर्मत्वान्नोक्तदोषः । ननु तथापि सास्नादिमत्यर्थे सङ्केतितघटशब्दादौ साध्याव्यापकत्वम् । न च तस्यापि साङ्केतिकत्वादसाधुशब्दत्वमस्त्येवेति वाच्यम् । तथात्वे गवादिशब्दानामपि सङ्केतित्वपक्षे तथात्वापत्त्या साधनव्यापकत्वप्रसङ्गादिति चेत् । न । गवादिशब्दानां सास्नादिमत्यर्थे परमेश्वरेण सङ्केतितत्वेन साधुत्वेऽपि घटशब्दस्य तत्रास्मदादिभिः सङ्केतितत्वेनासाधुशब्दत्वात्साध्यव्यापकत्वोपपत्तेः । केचित्तु । उभयसंप्रतिपन्नसाधुत्वोपेतशब्दभिन्नशब्दत्वस्योपाधित्वात् । सङ्केतितघटादिशब्दानां मन्मते साधुत्वानङ्गीकारादिति भावः । इत्याहुः । शुद्धसाध्यव्यापक एवोपाधिरित्याशङ्क्याह **अन्यथेति** । ईश्वरसङ्केतवत् अस्मत्सङ्केतोऽपि तेनैव साध्यः स्यात् । उपाधेः त्वयैव परिहृतत्वेन शङ्कितुमशक्यत्वात् । **दोषान्तरस्य** चाभावात् । भावे वा ईश्वरसङ्केतसाधनेऽप्यविशेषादिति भावः ।

**विठ्ठ०**— मृत्पिण्डादिकं घटकारणतया प्रमितं नापलापार्हम् । शक्तिर्न प्रमितेति शङ्कते **अथौत्पत्तिकेति** । **वक्ष्याम इति** । युक्तिपादे शक्तिसद्भाव एवेत्यत्रेति शेषः । **द्वितीये व्यभिचार इति** । घटादिशब्देष्विति शेषः । ननु केचित् क्वचित्सङ्केतिता एवेत्यत आह **न हीति** । **तत्र प्रयुज्यमानेति** । तथा च न घटादिषु व्यभिचार इति भावः ।





**गाव्यादिशब्दवदिति**। आर्यैः गावीशब्दः सास्नादिमत्यर्थे सङ्केतितस्तत्र प्रयुज्यते चेति द्रष्टव्यम्। आदिशब्देन तत्र सङ्केतितभाषान्तरग्रहणम्। **असाधुशब्दत्वस्येति**। पक्षे गोशब्दे तत्प्रयुज्यमानशब्दत्वरूपसाधनवति असाधुशब्दत्वं नास्तीति साधनाव्यापकत्वम्। साध्यमुपाधिश्च गावीशब्दे वर्तत इति साध्यव्यापकता। गोशब्दस्य विप्रतिपन्नत्वात् न तत्र व्यभिचार इति भावः। ननु सास्नादिमत्यर्थे सङ्केतितचेष्टाविशेषे असाधुशब्दत्वाभावात् साध्याव्यापकत्व-मित्यत आह **साधनावच्छिन्नेति**। शब्दत्वे सति सास्नादिमत्यर्थे सङ्केतितत्वस्य चेष्टाविशेषे अभावादिति भावः। **वक्ष्यमाणत्वादिति**। साध्यव्यापकवैलोम्यमित्यस्य व्याख्यानावसर इति भावः। शुद्धसाध्यव्यापकत्वाभावेनोपाधे-रप्रयोजकत्वाङ्गीकारे बाधकमाह **अन्यथेति**। साङ्केतिकत्वस्यासाधुशब्दत्वनिबन्धनत्वाभावे गोशब्दः सास्नादिमत्यर्थे अस्मदादिभिः सङ्केतितः। तत्र युज्यमानत्वाद्गाव्यादिशब्दवदित्यपि प्रयोगप्रसङ्गेन त्वदभिमतपारमेश्वरसङ्केत इत्यस्यासिद्धिप्रसङ्गादिति भावः। रामचन्द्रतीर्थीये तु अन्यथेति असाधुशब्दत्वस्य शुद्धसाध्याव्यापकत्वाभावेन अनुपाधित्वमङ्गीकृत्य तत्र प्रयुज्यमानशब्दत्वेन तत्र सङ्केतितत्वसाधने गोशब्दः सास्नादिमत्यर्थे अस्मदादिसङ्केतितः। तत्र प्रयुज्यमानशब्दत्वात् गाव्यादिशब्दवदित्यपि अनुमानं प्रयुज्यते। तत्रेदमेव त्वया वक्तव्यं साधनावच्छिन्नसाध्य-व्यापकस्य असाधुशब्दत्वस्य उपाधित्वात् नास्मदादिसङ्केतितत्वसाधनं भवतीति तच्च ममापि संभवतीति भावः। इति व्याख्यातम्।

**चषकः— वक्ष्याम इति**। लिङ्गचरण इत्यादि। प्रसक्तानामबोधकत्वासंबद्धबोधकत्वसङ्केतकल्पानां प्रत्याख्याने सति नैसर्गिकी शक्तिरेवासैत्सीदित्याह **द्वितीये चेति**। पूर्ववादिमतप्रदर्शनावसरे वृद्धव्यवहारोऽपी-त्यादिनाऽभिहितं लोकोत्तरसङ्केतयितृपर्यवसायकमनुमानमाशङ्कते **गवादिशब्दा इति**। लाघवप्रतिसन्धानदशायां व्यापकतानवच्छेदकरूपेणापि भानं यथोपेतं तद्वद्भौमवह्निशून्यस्तार्णदहनशून्यो वा पर्वत इत्यादि बाधप्रति-सन्धानदशायां वह्नित्वावच्छिन्ननिरूपितव्याप्त्यवच्छिन्नहेतुवृत्तिप्रकारताशालिपरामर्शादपि धूमव्यापकताऽनव-च्छेदकीभूतभौमवह्नित्वतार्णदहनत्वाद्यवच्छिन्नविधेयताकानुमितेरप्युपगततया प्रकृते तादृशबाधप्रतिसंहिति-सहकारादलौकिकेश्वरसङ्केतविषयत्वमवगाहमानैवानुमितिरुदेष्यतीति भावः। **द्वितीये व्यभिचार इति**। घटादि-शब्देष्वित्यादिः घटादिशब्देऽनैकान्त्यविधूननाय लक्षणप्रतिसन्धानाभावकालीनसास्नादिमद्व्यक्तिविषयकान्वयधी-जनकत्वतात्पर्यकं तत्र प्रयुज्यमानेतिपदं हेतुवाक्यघटकतयोपात्तम्। सास्नादिमद्व्यक्तिसङ्केतितचेष्टाविशेषे साध्याव्यापकतया नोपाधित्वमित्यत आह **साधनावच्छिन्नेति**। **वक्ष्यमाणत्वादिति**। युक्तिपाद इत्यादिः। शुद्धसाध्यव्यापकस्यैवोपाधित्वं न किञ्चिदवच्छिन्नतद्व्यापकस्येत्यभिहितावाभाससाम्यरूपं बाधकमभिधत्ते **अन्यथा अस्मदादीति**। तत्रानापत्त्यैतादृशोपाधेरेव स्वीकर्तव्यत्वादित्याशयात्। साङ्केतिकत्वस्य साधुशब्दनिबन्धनत्वाभावे गोशब्दः सास्नादिमत्यर्थेऽस्मदादिभिः सङ्केतितस्तत्र प्रयुज्यमानशब्दत्वादित्यपि प्रयोगप्रसङ्गेन त्वदभिमतपारमेश्वर-सङ्केत इत्यस्यासिद्धिप्रसङ्गादिति भाव इत्यपि स्थितम्।

**प्रदीपः**— सास्नादिमत्यर्थे सङ्केतितचेष्टाविशेषे गुप्तभाषादौ तत्र सङ्केतितघटादिशब्दे च साध्याव्यापक-त्वादाह **साधनावच्छिन्नेति**।





**६०४ सु०— यत्पुनरुक्तम् 'आप्तानाप्तप्रयुक्तयोरि'त्यादि । तदप्यसारम् । प्रत्यक्षवदेवोपपत्तेः । चक्षुरादिप्रत्यक्षं हि क्वचिद्यथार्थज्ञानं क्वचिदयथार्थज्ञानं जनयदपि प्रमाणमङ्गीक्रियत एव । दोषसदसद्भावाभ्यां तत्र भेद इति चेत्; तर्ह्यत्राप्यनाप्तवक्तृसदसद्भावाभ्यां भेदो भविष्यति । वक्ता वाक्योच्चारण एवोपयुज्यत इति चेन्न । यतस्तदेवाविषये प्रयुञ्जानो दुष्टं करोति निशातमसिमाकाशे प्रयुञ्जान इव । अन्यथाऽनुमानमप्यप्रमाणं स्यात् । कृतकत्वं हि शब्दानित्यत्वसाधने साधु, असाधु चाग्न्यवयविनोऽनुष्णत्वसाधने । तत् कस्माद्विशेषात् । व्याप्तिपक्षधर्मताभावाभावाभ्यामिति चेन्न कालातीतत्वस्य पृथग्दूषणताया वक्ष्यमाणत्वात् । ततः (अतः) अविषयवृत्तित्वतदभावरूप एव विशेषो वक्तव्यः । स च समानः शब्देऽपीति । तदिदमुक्तं प्रत्यक्षवच्चेति ।**

**परि०— यत्पुनरुक्तमिति** । प्रत्यक्षवच्चेत्यादेरवतारिकायामुक्तमित्यर्थः । **अन्यथेति** । विषयवृत्तित्वतदभावाभ्यां प्रामाण्याप्रामाण्यव्यवस्थाऽनङ्गीकार इत्यर्थः । तदेव व्यनक्ति **कृतकत्वं हीति** । **अग्नीति** । अग्निरूपस्थूलावयविन इत्यर्थः । परमाण्वादेरनुष्णतासाधने बाधस्याप्रसक्तेरेवमुक्तम् **व्याप्तीति** । कृतकत्वं चानुष्णत्वेन न व्याप्तं नापि सन्दिग्धसाध्यवत्पक्षवृत्तित्वरूपपक्षधर्मतोपेतमिति । अनुष्णत्वसाधने तदुभयहीनत्वात् । शब्दानित्यत्वसाधने तदुभयवत्त्वात्साधुत्वादिकं तस्य सेत्स्यतीति भावः । एवं हि अविषयवृत्तित्वरूपकालातीतत्वं नाम दोषो न स्यात् । अस्तु को दोष इत्यत आह **कालातीतत्वस्येति** । **वक्ष्यमाणत्वादिति** । युक्तिपादे 'विरोधोऽपि त्रिधैव स्यात्प्रतिज्ञार्थविरुद्धते'-त्येतद्व्याख्यावसर इति भावः । **प्रत्यक्षवच्चेतीति** । अनुमानवच्चेति चार्थः ।

**यादु०— वक्ष्यमाणत्वादिति** । युक्तिभक्तिपादयोरिति शेषः ।

**वं०प०— अग्न्यवयविन इति** । अग्निरूपावयविन इत्यर्थः । **व्याप्तिपक्षधर्मताभावाभावाभ्यामिति** । कृतकत्वेऽनित्यत्वनिरूपिता व्याप्तिरस्ति पक्षधर्मता चास्ति । कृतकत्वे पक्षधर्मतासद्भावेऽपि नानुष्णत्वनिरूपिता व्याप्तिरस्ति । अग्न्यवयवे द्व्यणुके व्यभिचारापत्तेरित्यर्थः । **स चेति** । उक्तरूपो विशेष इत्यर्थः । **शब्देऽपीति** । वक्ता तदेव वाक्यमविषये प्रयुञ्जानो दुष्टं करोतीति भावः ।

**आनन्दः— तदप्यसारमिति** । एवं हि शब्दो न प्रमाणं क्वचिद्विसंवादित्वादित्यनुमानमुक्तं भवति । तच्चायुक्तम् । व्यभिचारित्वादित्यत आह **प्रत्यक्षवदेवेति** । **तर्हीति** । तथाचानाप्तवक्तृकत्वमेव दोष इति भावः । ननु वक्तृविशेषस्य वाक्योच्चारण एवोपयोगात् न तद्वाक्यार्थज्ञाने तस्य दोषित्वमित्याशङ्कते **वक्तेति** । **यत इति** ।





तथाच परम्परया दुष्टत्वोपयोगित्वमस्तीति भावः । **अन्यथेति** । अविषयवक्तृरूपदोषसदसद्भावाभ्यां शब्दस्य विशेषानङ्गीकार इत्यर्थः । तदेवोपपादयति **कृतकत्वमिति** । **कालातीतस्येति** । तथाच व्याप्त्यादिसदसद्भाववचनमयुक्तमिति भावः । तस्मादप्रामाण्यपरिहाराय विशेषो वाच्य इत्याह **तत इति** ।

**श्रीनिधि०— अग्न्यवयविनः** । अग्निरूपावयविनः । **पक्षधर्मताभावाभावाभ्यामिति** । तथा च विषयवृत्तित्त्वेनासाधुत्वं नेति भावः ।

**वा०चं०—** वाक्ये स्वाभाविकदोषाणामभावाद्वक्तृपुरुष एव स्वाज्ञानादिवशादविषये वाक्यं प्रयुञ्जानस्तत्राविषयवृत्तित्वरूपं दोषं संपादयतीति युक्तं तस्यानाप्तवक्तृकत्वेनाप्रामाण्यमित्याह **यत इति** । अन्यथाऽविषयवृत्तित्वस्यादोषत्वे । अविषयवृत्तित्वस्य दोषत्वं वदता व्याप्त्यसिद्ध्योर्दोषत्वस्य स्वीकार्यत्वात्तेनैवोपपत्तावविषयवृत्तित्वस्य तत्रापि न दोषत्वमित्याशयेन शङ्कते **व्याप्तीति** । अत्र वक्तव्यम् । अविषयवृत्तित्वं तत्र नास्त्येव वा विद्यमानमप्यन्यथासिद्धतया न दोष इति वा । नाद्यः सर्वन्यायानां धर्म्यादिग्राहकत्वेन प्रत्यक्षागममूलत्वादुपजीव्यप्रबलप्रत्यक्षादिविरुद्धन्यायाभासानां तदपहृतविषयत्वेनाविषये प्रमाजननासामर्थ्येनाविषयवृत्तिताया दोषत्वस्यावश्यकत्वात् । न द्वितीयः । सर्वं तेजोऽनुष्णं कृतकत्वादित्यादौ पक्षादन्यत्र व्यभिचाराभावेनासिद्ध्यभावेन च दोषान्तराप्राप्तेः । पक्षे च व्यभिचाराप्रसक्तेः पक्ष एव बाधेन साध्याभावस्य निश्चयात्पक्षस्यैव विपक्षत्वात्तस्यैव विपक्षत्वात्तत्रैव व्यभिचारेण व्याप्तिभङ्गस्य चोपजीव्येनाविषयवृत्तित्वेनैवानुमानस्य दुष्टत्वे जघन्यप्रतिपत्तिकरस्याननुसरणीयत्वात् । एवं च व्याप्तिग्रहणसमये हेतुमति क्वचित्साध्याभावोपस्थितौ तदानीं विषयस्य बुद्धावनारोहाद्व्याप्तिभङ्गस्य पुरःस्फूर्तिकत्वाच्च दोषत्वेऽपि परार्थप्रयोगोत्तरमविषयवृत्तित्वमेव दोष इति कालातीतस्य पृथग्दूषणताया भक्तिपादे 'प्रत्यक्षागममूलास्तु न्यायाः सर्वे भवन्ति हि । न्यायाभासा अमूलाः स्युर्न्यायस्यान्यस्य तौ पुनः । अदृष्टे व्यभिचारे तु साधकं तदिति स्फुटम् । ज्ञायते साक्षिणैवाद्धा मानबाधे न तद्भवेत् ।' इत्यनुव्याख्याव्याख्यावसरे वक्ष्यमाणत्वादनुमानेऽविषयवृत्तित्वं दोष एवेत्याह **कालातीतताया इति** ।

**वा०र०—** प्रमाजननेति नञ्रहित एव पाठः । नञः पातो लेखकप्रयुक्तः । सङ्केतदूषणस्थलीय**सर्गादिभुवामिति** मूलवाक्ये **संपन्नानां परमेश्वरस्येति** षष्ठी तृतीयार्थे परमेश्वरेणेति न्यायवाचस्पतौ परमेश्वरेणेत्येवोक्तेः । तद्ग्रन्थानुसारिण्येतद्ग्रन्थेऽपि तृतीयान्तपाठस्तु स्वरस एव ।

**विठ्ठ०— अन्यथेति** । विषयवृत्तित्वतदभावाभ्यां प्रामाण्याप्रामाण्यव्यवस्थानङ्गीकार इत्यर्थः । **अग्नीति** । अग्निरूपस्थूलावयविन इत्यर्थः । परमाण्वादेरनुष्णतासाधने बाधस्याप्रसक्तेः कृतकत्वासिद्धेश्चैवमभिहितमिति ज्ञेयम् । ननु न विषयवृत्तित्वतदभावाभ्यां प्रामाण्याप्रामाण्यव्यवस्था किन्तु व्याप्तिपक्षधर्मताभावाभावाभ्यामेवेति शङ्कते **व्याप्तीति** । तदेतन्न संभवति । तथात्वे व्याप्तिवैकल्यादेरेवानुमानदूषणत्वं स्यान्न तु विषयावृत्तित्वरूप-





कालातीतत्वस्य । मास्तु कालातीतत्वं नाम पृथक्दूषणमिति चेन्न । तस्य पृथक् दूषणतायाः 'विरोधोऽपि त्रिधैव स्यात्प्रतिज्ञार्थविरुद्धते'त्यस्य व्याख्यानावसरे वक्ष्यमाणत्वादित्याशयेनाह **कालातीतत्वस्येति** ।

**चषकः— वक्ष्यमाणत्वादिति** । युक्तिभक्तिपादयोरित्यादिः ।

**प्रदीपः— न कालातीतत्वस्येति** । न व्याप्त्यभावे नासिद्धावन्तर्भाव इति ।

**६०५ सु०— एतद्दोषभयात्केचित् शब्दस्यानुमानेऽन्तर्भावमिच्छन्ति । अपरे पुनरपौरुषेयतया निरस्तसमस्तदोषाशङ्कस्य वेदस्य शब्दतयैव प्रामाण्यम्; पुरुषवचसां त्वनुमानतयेत्यातिष्ठन्ते ॥ तदुभयमप्य(त एवा)युक्तम् । किन्तु प्रत्यक्षवत् अनुमानवत् च शब्दमात्रस्यापि प्रामाण्यं स्वतः स्वेन एव रूपेण न त्वनुमानत्वेन । अत एव श्रुतेः प्रकृतत्वेऽपि सर्वशब्दपरिग्रहाय आगमस्य इत्युक्तम् । हिशब्दस्तत्र प्रमाणप्रसिद्धिद्योतकः । तच्चोत्तरत्र वक्ष्यामः ।**

**परि०— एतद्दोषेति** । आप्तानाप्तवाक्ययोर्विशेषानुपलम्भेन प्राप्ताप्रामाण्यदोषभयादित्यर्थः । **तच्चोत्तरत्र वक्ष्याम इति** । 'गौरवं कल्पनेऽन्यथे'त्यस्य चतुर्थव्याख्यावसरे केचिदाहुरित्यादिग्रन्थेनेति भावः । न विलक्षणत्वनये स्मृतिप्रामाण्यप्रस्तावे 'स्मृतिः प्रत्यक्षमैतिह्यमनुमे'ति श्रुत्यादेः सुधायां वक्ष्यमाणत्वादिति भावः ।

**यादु०— वक्ष्याम इति** । युक्तिपाद इति शेषः ।

**वं०प०— एतद्दोषभयादिति** । आप्तानाप्तप्रणीतयोर्वाक्ययोरस्ति । कश्चिद्विशेषो न वेत्युक्तदोषभयादित्यर्थः । **अनुमानेऽन्तर्भावमिति** । एतानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्वकाणि । आकाङ्क्षादिमत्पदकदम्बकत्वात् । गामानय दण्डेनेत्यादिपदकदम्बकवदित्यनुमानेन वक्तृज्ञानावच्छेदकतया संसर्गस्य सिद्धेरनुमानविधयैव प्रामाण्यं न शब्दत्वेनेत्यनुमानेऽन्तर्भावमिच्छन्तीत्यर्थः । **शब्दतयैव प्रामाण्यमिति** । वेदस्यापौरुषेयतया वक्तुरेवाभावेनोक्तानुमानाद्वक्तृज्ञानावच्छेदकतया संसर्गासिद्धिः तत्र वक्तुं न शक्यत इत्यर्थः । **स्वेनैव रूपेणेति** । शब्दत्वेनैवेत्यर्थः ।

**आनन्दः—** अत एवेत्युक्तमेव विशदयति **किन्तु प्रत्यक्षवदिति** । ननु शब्दमात्रस्य स्वेन रूपेण प्रामाण्यमित्यत्र किं ज्ञापकमित्यत्राह **अत एवेति** । स्वेनैव रूपेण प्रमाणत्वादेवेत्यर्थः । **तच्चेति** । प्रमाण उत्तरः(?) ज्ञानकरणस्य संत इत्यादिनेति शेषः ।

**वा०चं०**— अत्र स्वत एवेत्यागमस्येति चोक्त्या व्यावर्तितमतद्वयनिरासेऽप्युक्तयुक्तिमेव योजयितुं तन्मतद्वयमुपन्यस्यति **एतदिति । अत एवेति ।** यद्दोषभयादागमत्वेन सर्वागमस्य च प्रामाण्यत्यागस्तद्दोषाणां परिहृतत्वादेवेत्यर्थः । न वाक्यं वाक्यार्थेऽनुमानम् । वाक्यवाक्यार्थयोर्देशतः कालतश्चान्वयव्यतिरेकाभावात् । वाक्यं वाक्यार्थवद्वाक्यत्वादित्यत्र वाक्यार्थमात्रसाधने विशेषप्रतिपत्तेर्निर्निबन्धनत्वापत्त्या विशेषसाधने च पूर्वं विशेषप्रतिपत्तौ वाक्यवैयर्थ्यापत्त्या तदप्रतिपत्तौ चाप्रसिद्धविशेषणतापत्त्या विशेषस्यान्यत्राभावेनानैकान्तिकत्वात् मतुबर्थानुपपत्तेश्च नायमनुमानप्रकारो युक्तः । विमतानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्वकाण्याकाङ्क्षादि-मत्पदकदम्बकत्वादिति च न । विनाऽप्यन्वयप्रमितिं दैवात्प्रयुक्तेष्वाकाङ्क्षादिमत्स्वनैकान्त्यात् । आप्तप्रयुक्तत्वेन हेतुविशेषणे च साध्यार्थस्य हेतुप्रवेशापत्तेः । पुरुषविशेषप्रयुक्तत्वस्य चाध्यापकप्रयुक्तेऽनैकान्त्यात् । मूलप्रमाणा-नुमाने चापौरुषेये वेदेऽनुपपत्तेरित्यादिनाऽऽगमस्यानुमानत्वेन प्रमाणत्वाभावस्य व्युत्पादयिष्यमाणतया पदाना-मन्विताभिधाने शक्तेः पदानामेव च वाक्यत्वाद्वैदिकपदानामेव च लौकिकत्वाभावे लोकवेदाधिकरणविरोधापत्त्या वक्तुः पदज्ञान एवोपयोगित्वेन लोकवेदयोः प्रकारभेदानुपपत्त्यादिना वेदस्यागमत्वेन पौरुषेयस्यानुमानत्वेन प्रामाण्यमिति प्रकारस्य निरस्यमानतया च पर्यवसानगत्या सर्वागमस्यागमत्वेन प्रामाण्यसिद्धिरित्याशयेन हिशब्दं तदर्थतया योजयति **हिशब्द इति ।** युक्तिपादे भगवत्पादोदितप्रत्यक्षानुमानादिव्युत्पादनावसरेऽवसितमनुमानं निर्दोषं वाक्यमित्यादिना प्रमाणं व्युत्पादयिष्याम इत्याशयेनाह **तच्चेति** ।

**वा०र०**— न विलक्षणाधिकरणीयकेचिद्वाक्यं वाक्यार्थेऽनुमानमित्यादिमूलानुसारेणानुमानान्तर्भाव-निराकरणप्रकारमाह । **न वाक्यं वाक्यार्थ** इत्यादिशब्दस्यानुमानान्तर्भावनिराकरणग्रन्थोऽपि न्यायवाचस्पत्या-द्यनुसारेण व्याख्येयोऽस्ति। ....।

**स०व्र०**— **तच्चोत्तरत्र वक्ष्याम इति**। एतदपि गौरवं कल्पनेऽन्यथेत्येतद्व्याख्यानावसर एवेति द्रष्टव्यम्।

**वि०—** **एतद्दोषेति** । आप्तानाप्तवाक्ययोर्विशेषानुपलंभेन प्राप्ताप्रामाण्यदोषभयादिति वा सत्यपिशब्दे न प्रमेत्याद्युक्तसकलदोषभयादित्यर्थः । **अत एवायुक्तमिति** । पृथक्प्रामाण्याङ्गीकारेऽपि दोषाभावादनङ्गीकारे चाक्षुषप्रत्यक्षादेरपि तत्स्यादित्युक्तत्वादेवेत्यर्थः । **वक्ष्याम इति** । गौरवं कल्पनेऽन्यथेत्यस्य चतुर्थव्याख्यानावसरे तथा नविलक्षणत्वाधिकरणे 'श्रुतिः प्रत्यक्षमैतिह्यमनुमान' इत्यादौ श्रुत्यादेर्वक्ष्यमाणत्वादित्यर्थः ।

**चषकः**— **वक्ष्याम इति**। युक्तिपाद इत्यादिः।





**६०६ सु०— ननु तथाऽपि वेदस्य प्रामाण्यं नोपपद्यते । अनृतव्याघातपुनरुक्तदोषात् ॥ तथा हि ॥ अनृतमप्रमाणं दृष्टम् । यथा विप्रलम्भकवाक्यम् । अनृतश्च वेदः पुत्रकामेष्ट्यनुष्ठानेऽपि फलानुपलब्धेः ॥ व्याहतं चाप्रमाणम् । यथोन्मत्तवाक्यम् । व्याहतश्चायम् 'अतिरात्रे षोळशिनं गृह्णाति', 'नातिरात्रे षोळशिनं गृह्णाति'; 'उदिते जुहोति', 'अनुदिते जुहोती'त्यादि ॥ पुनरुक्तं चाप्रमाणम् । पुनरुक्तिश्च वेदे 'त्रिः प्रथमामन्वाहे'त्यादिदर्शनादिति ॥ तददिमपि अयुक्तम् ।**

**परि०— ननु तथापीति** । शब्दस्यार्थेन स्वाभाविकसंबन्धेऽनाप्तवाक्याद्विशेषे च सत्यप्यनुमानाद्बहिर्भावेऽपीत्यर्थः । **अतिरात्र इति** । ज्योतिष्टोमस्याग्निष्टोमात्यग्निष्टोमोक्थ्यषोळ(ड)-श्यतिरात्राप्तोर्यामवाजपेयभेदेन सप्त संस्थाः । तत्रातिरात्रसंज्ञके ज्योतिष्टोमयागे षोडशिनामकं सोमपात्रं गृह्णातीति किञ्चिद्वाक्यम् । न गृह्णातीत्यपरम् । अहोरात्रप्रकरणे शाखाभेदेन उदिते जुहोति अनुदिते जुहोतीतिवाक्यद्वयं श्रुतम् । त्रिः प्रथमामिति दर्शपूर्णमासप्रकरणे पञ्चदश सामिधेनीर्विधाय एकादश ऋचः पठित्वा त्रिः प्रथमामन्वाह त्रिरुत्तमां ताः पञ्चदश संपद्यन्त' इति श्रुतम् । प्रथमां प्रथमपठितां ऋचं त्रिरनुवदेदित्यर्थः ।

**गु०दी०— त्रिः प्रथमामन्वाह** इत्यत्र प्रथमां ऋचं त्रिः त्रिवारमाहेत्येकस्यैव वाक्यस्य त्रिःकथन-शंसनात्पौनरुक्त्यमिति भावः ।

**यादु०— अतिरात्रे षोडशिनमिति** । ज्योतिष्टोमसंस्थासु अतिरात्राख्यैका संस्था । षोडशीनामा षोडशाक्षरार्धर्चवच्छस्त्रविशेषः । नन्वयं नानुयाजेष्वित्यत्रेव पर्युदासो वा न तौ पशौ करोतीत्यत्र न सोम इतिवदर्थवादो वाऽस्तु न प्रतिषेधः । अतो न व्याहतिरत्रेति चेत् । मैवम् । न तावदयं पर्युदासः । पर्युदासो हि भवन् अनतिरात्रे गृह्णाति षोडशिनमिति स्यात् । अषोडशिनमतिरात्रे गृह्णातीति वा । प्रकारान्तराभावात् । पक्षद्वयेऽप्यतिरात्रे षोडशिनो विधानानर्थक्यात् । नाप्ययमर्थवादः । पूर्ववाक्यप्राप्त्याऽर्थप्रतिषेधरूपत्वे संभवत्यर्थवादत्वकल्पनायोगात् । वाक्यस्य विधिनिषेधरूपत्वासंभवे ह्यर्थवादत्वं कल्प्यम् । न सोमेध्वर इत्यत्र त्वर्थवादत्वमेव । दर्शपूर्णमासयो-राज्यभागावग्नीषोमाभ्यां यजतीत्याज्यभागौ विधाय तौ न पशौ करोतीति निषिध्य पश्चान्न सोमेऽध्वर इति श्रूयते । अयं च न पर्युदासः प्रतिषेधो वा संभवति । सोमस्योपदेशातिदेशाभ्यामाज्यभागप्राप्त्यभावात् । तस्मान्न पशावित्यस्यायमर्थवादः । यथा सोमस्याज्यभागावेवं पशावपीति । इत्थं महाभागावाज्यभागौ सोमेऽक्रियमाणौ तावत्र पशौ न क्रियेते इति स्तुतिरूपत्वसंभवात् । अत्र चाप्राप्तिसद्भावात्प्रतिषेधत्वमेव । ततश्च व्याहतिः । न च व्याहतिभयात्प्रतिषेधत्वासंभवेऽर्थवादरूपत्वमेवाश्रयणीयमिति वाच्यम् । अर्थवादत्वेऽपि व्याहतिसाम्यात् । अपशावो





वाऽन्ये गोऽश्वेभ्य इत्यत्र पश्वन्तरनिषेधेन गवामश्वानां च स्तुतिर्दृष्टा । इह तु स्तुत्यस्तावकयोरेकविषयत्वेन षोडशिनिषेधेन षोडशिन एव स्तुतौ स्पष्टव्याहतिः । अतो विकल्पेन प्रतिषेधकत्वमेव वरमाश्रयितुमिति सिद्धान्तितं मीमांसकैः । न च तद्युक्तम् । विकल्पस्याष्टदोषदूषितत्वात् । अतो व्याहतत्वेनाप्रामाण्यमेवेत्याशयात् । **उदिते जुहोतीति** । पूर्वं विधिनिषेधयोः व्याघात उक्तः । अत्र तु विध्योरेवेति ज्ञातव्यम् । **त्रिः प्रथमामिति** । अत्रादिपदेन त्रिरुत्तमामित्यस्य ग्रहणम् । उत्तमां अन्तिमाम् । अत्र प्रथमोत्तमऋचोरावृत्तिं स्वयमेव वेदो विदधातीति पौनरुक्त्यमिति भावः ।

**वं०प०— तथाऽपि** शब्दस्यार्थेन स्वाभाविकसंबन्धेनाप्तवाक्याद्विशेषे च सति अनुमानाद्बहिर्भविऽपीत्यर्थः ।

**कं०रा०— अतिरात्र इति** । ज्योतिष्टोमस्य चतस्रः संस्थाः । अग्निष्टोम उक्थः षोडश्यतिरात्र इति । अग्निष्टोमस्यैव विधान्तरमत्यग्निष्टोमो वाजपेयश्च षोडशिन एव भेदः । आप्तोर्याम इत्यतिरात्रस्य भेद इति मीमांसकोक्तेः । तत्रातिरात्र इति रात्रिमतीत्य यः सन्तिष्ठते यज्ञः स उच्यते तस्मिन्नतिरात्रे षोडशिनं गृह्णातीति षोडशिशब्दितग्रहस्य ग्रहणं विधाय नातिरात्रे षोडशिनं गृह्णातीति षोडशिग्रहणं निषिध्यतेऽतो व्याहतोऽयमिति भावः । **त्रिः प्रथमामिति** । दर्शपूर्णमासयोः सामिधेनीः पञ्चदश विधायैकादश ऋचः पठित्वा तासां पञ्चदशत्वसंपत्त्यर्थं त्रिःप्रथमामन्वाह त्रिरुत्तमामित्याम्नातम् । तत्र पुनरुक्तिर्वर्तत इति भावः ।

**वा०चं०—** वेदप्रामाण्यं विशेषयुक्त्याऽऽक्षिपतोऽपीदमेवानुव्याख्यानमुत्तरमित्याशयेन तदाक्षेपप्रकारमनुवदति **नन्विति** । **तथाऽपीति** । शब्दस्य प्रमाणत्वोपपादनेन तदप्रामाण्यप्रयुक्ताप्रामाण्यशङ्कानिरसनेऽपीत्यर्थः । प्रामाण्यमविपरीतार्थप्रतिपादकत्वम् । अनृतत्वमयथाभिधानम् । विरुद्धार्थोपस्थापकत्वेन पदयोर्वाक्ययोर्वा सहासंभवो व्याघातः । पूर्वोक्ताभिधानं पुनरुक्तं प्रत्येकं चैतेषां हेतुत्वम् । एकवचनं चैकार्थसाधकत्वेन । तत्त्वनिर्णयटीकायां निरर्थकत्वादीनामन्येषामप्रामाण्यहेतुतयोपादानेऽप्यत्रानृतत्वादीनां त्रयाणामेवोपादानं तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्य इति गौतमसूत्रे त्रयाणामेवोपादानाद्वा निरर्थकत्वस्य व्याघातनिरासकेणापाततः सर्वथा वेति विकल्पनिरासकन्यायेनापाततो नैरर्थक्यमनैकान्तिकं शक्तितात्पर्यापरिज्ञानादर्थाप्रतिपत्तेः सर्वथा नैरर्थक्यमसिद्धमित्येवंरूपेण नैरर्थक्यस्यानृतत्वनिरासकन्यायेन प्रमाणान्तरविसंवादस्य पौनरुक्त्यनिरासकन्यायेन च प्रमाणान्तरसिद्धार्थत्वस्य सुपरिहरत्वात्संवादराहित्यस्य चासिद्धत्वादपूर्वतासंपादकत्वेनादोषत्वाच्च पृथगुपादानस्यानावश्यकत्वाद्वा युक्तं, तत्त्वनिर्णयटीकायां तु स्पष्टत्वाय तदुपादानमिति । अत एव तत्रानृतत्वादिदोषपरिहारातिदेशादिना नैरर्थक्यादिनिरास इति द्रष्टव्यम् । व्याप्तिपक्षधर्मताशून्यत्वान्नैतेषामप्रामाण्यहेतुत्वमित्यत आह **तथा हीति** ।

बौद्धमते उदाहरणोपनययोर्द्वयोरेवावयवत्वात्तथैवोदाहरति **अनृतमित्यादिना** । वेदः पुत्रकामः पुत्रेष्ट्या यजेतेत्यादिः । **अतिरात्र इत्यादि** । ज्योतिष्टोमसंस्थाविशेषोऽतिरात्रः । षोडशी ग्रहविशेषः । तत्र पूर्ववाक्यविहितं ग्रहणमुत्तरवाक्ये प्रतिषिध्यते । उपदेशातिदेशाभ्यां सोमे आज्यभागप्राप्तेरभावेन प्रतिषेधपर्युदासयोरसंभवात्सोमस्य





यथाज्यभागौ न कर्तव्यौ तथा पशावपीति न सोम इत्यस्य न पशावित्येतदर्थवादत्वेऽपि प्रकृते पूर्ववाक्येनैव प्राप्त्याऽप्राप्तेरभावादप्राप्तविषयकविधेरेवार्थवादत्वेन नातिरात्र इत्यस्य नार्थवादता। सामान्यविषये विधौ विशेषविषयो नञ्पर्युदासरूपेण विधिवाक्यशेष इति यजतिषु येयजामहङ्करोति नानुयाजेषु येयजामहङ्करोतीत्यादावनुयाजव्यतिरिक्तयजतिषु येयजामहङ्करोतीत्यर्थनिष्पत्त्याऽनुयाजेषु येयजामहस्याविहितत्वादेव विहितप्रतिषेधत्वाभावेन नानुयाजेष्वित्यस्य पर्युदासत्वेऽपि प्रकृते विधिनिषेधयोरुभयोरपि विशेषविषयकत्वेनातिरात्रव्यतिरिक्तेऽतिरात्रे षोडशिनं गृह्णातीत्यर्थानुपपत्त्या पर्युदासासंभवात्पूर्ववाक्यविहितप्रतिषेधरूपत्वमेव नातिरात्र इत्यस्य वक्तव्यं तथाच व्याहतिरिति भावः। विधिनिषेधयोर्व्याघातमुदाहृत्य विध्योरेव व्याघातमुदाहरति **उदित इति**। अग्निहोत्रं जुहोतीति वाक्यविहितहोमानुवादेनैकं वाक्यमुदितं कालं विधत्ते। अपरमनुदितम्। न चैक एव होमस्तदा तदा शक्यः कर्तुम्। न च कालरूपगुणानुरोधेन प्रधानीभूतहोमानुवृत्तिर्युक्ता। न चोदितादिवाक्ये होमाभ्यासः श्रूयते। अतः परस्परव्याघातादप्रामाण्यमेवेति। अत्र वात्स्यायनीयभाष्ये उदिते होतव्यमनुदिते होतव्यं समयाध्युषिते होतव्यमिति विधाय श्यामोस्याहुतिमभ्यवहरति य उदिते जुहोति शबलोस्याहुतिमभ्यवहरति योऽनुदिते जुहोति श्यामशबलौ वास्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोतीति वेदः स्वयमेव व्याहरतीत्युदितहोमादिविधिवाक्यानां निन्दाभिर्व्याघात इत्युक्तम्। तद्वार्तिके चाग्निहोत्रं जुहोतीति विधिवाक्यस्योदितादिहोमकालनिन्दावाक्यैर्व्याघातः। उदितादिहोमकालानां निन्दया प्रतिषेधादन्यकालस्य चाभावादित्युक्तम्। तदुभयानुसारेणादिपदेन निन्दावाक्यानामग्निहोत्रविधायकवाक्यस्य च ग्रहणम्। परिहारदशायां वाक्यद्वयग्रहणेन विधिनिन्दावाक्यद्वयग्रहणं व्याख्येयम्। एवं चातिरात्र इति श्रौतविधिनिषेधयोरुदाहरणम्। उदित इति तु निन्दायाः प्रतिषेधव्याप्तत्वाद्विधिनिन्दालैङ्गिकप्रतिषेधयोरुदाहरणमिति द्रष्टव्यम्। यद्वोदितानुदितवाक्ययोर्विरोधत्वेऽप्युक्तरीत्या साक्षाद्व्याघातसंभवे तद्भाष्यकारीयं विधिनिन्दालैङ्गिकप्रतिषेधयोर्व्याघातव्युत्पादनमयुक्तम्। वार्तिककारीयं तद् व्युत्पादनं त्वत्यन्तायुक्तम्। उदितादिकालानां निन्दया प्रतिषेधेऽपि मध्याह्नापराह्णसायाह्नादिकालानामप्रतिषिद्धत्वेन नाग्निहोत्रविधिवाक्यस्य कालविशेषनिषेधपरवाक्यैर्व्याघातः। न चोदयानन्तरभाविकालस्यैवोदितकालत्वान्मध्याह्नादीनामप्युदितकालत्वेन प्रतिषेधविषयत्वमेवेति वाच्यम्। मध्याह्नादिषूदितव्यवहाराभावेनोदयाव्यवहितोत्तरकालस्यैवोदितशब्देनोक्ततया तेषु प्रतिषेधाप्रसक्तेः। एवं च पक्षद्वयस्यायुक्तत्वादेवोक्तरीत्या व्याघातोपपादनमभिप्रेत्योदितानुदितवाक्ययोरेवोपादानमिति द्रष्टव्यम्। आदिपदेन चैवंजातीयकवाक्यान्तरस्याकाशादिसादित्वानादित्वप्रतिपादकवाक्यान्तरस्योपादानम्। अत एव च वक्ष्यति **यथा चासिद्धिस्तथा सूत्रकृदेव वक्ष्यतीति**। **पुनरुक्तिश्चेति**। प्रथमोत्तमयोस्त्रिरभिधानेन पुनरुक्तत्वम्।

**वा०र०**— मूले वेदाप्रामाण्यशङ्कनमपि न्यायसूत्रभाष्याद्यनुसारेण क्रियत इति तट्टीकापि तन्न्यायवाचस्पत्याद्यनुसारेण प्रवृत्ता। अतो निबन्धाद्यनुसारेण सा व्याख्यायते। **अनृतत्वम्** अयथार्थप्रतिपादकत्वम्। अप्रामाण्यमपि तदेवेति साध्याविशेषशङ्कावारणायाप्रामाण्यमर्थस्याप्रत्यायकत्वमिति न्यायवार्तिके व्याख्यानात् तट्टीकायां च अविपरीतस्येति न्यायवाचस्पतिमिश्रैः पूरणात् तदनुसारेणाभावप्रतियोगिप्रामाण्यमेव निरूपयति **प्रामाण्यमविपरीतेति**। प्रामाण्याभावरूपमप्रामाण्यं त्वविपरीतार्थाप्रतिपादकत्वमिति स्पष्टमेवेति नोक्तम्। न च





विपरीतार्थाप्रतिपादकत्वमिति च वक्ष्यति । एतेनानृतत्वसमकक्ष्यतया साध्यभूताप्रामाण्यस्यैव निर्वचनीयत्वे सति प्रामाण्यनिर्वचनमसङ्गतमिति शङ्कानवकाशः । **सहासंभव इति** । सहप्रयोगानर्हत्वमित्यर्थः । **पूर्वोक्तेति** । एकेनैवैकं प्रत्येवेति शेषः । अनृतत्वादेरेकैकस्याप्रामाण्याव्यभिचारादाह **प्रत्येकं चेति** । तर्हि दोषेभ्य इति बहुवचनप्रसङ्ग इत्यत आह **एकवचनं चेति** । निबन्धाद्यनुसारेणाधिकं ज्ञेयम् । एतद्ग्रन्थस्य ग्रन्थान्तरविरोधं परिहरति **तत्त्वनिर्णयेति** । **निरर्थकत्वादीनामिति** । आदिपदेन निरर्थकत्वोपरिश्रुतयोः प्रमाणान्तरसिद्धार्थत्वसंवादराहित्ययोरिव सिद्धान्ते अनृतत्वपदार्थतया शङ्किष्यमाणप्रमाणान्तरविसंवादस्यापि ग्रहणम् । अत एवाग्रे तस्याप्यतिदेशेन निरासं वक्ष्यति **अप्रामाण्येति** । अप्रामाण्यं चाविपरीतार्थाप्रतिपादकत्वं सर्वहेतुसाधारणं प्रागुक्तं ज्ञेयम् । उपादानं युक्तमित्यन्वयः । युक्तत्वे उपायद्वयाभिधानं **तदप्रामाण्यमित्यादि** । तर्ह्युक्तटीकायामपि त्रयाणामेवोपादानं स्यादित्यपरितोषा-दुपायान्तरमुक्तं **व्याघातेत्यादिना** । इह टीकायां व्याघातनिरासकेनेत्यतः पूर्वं निरर्थकत्वस्येत्यधिकम् । हेतूपादान-मुखेन दूषणातिदेशलिखनाय प्रवृत्तेन प्रथमतो निरर्थकत्वस्येति लिखित्वापि दूषणातिदेशमुखेनैव हेतूपादानं करिष्यामीति भावेन पुनर्नैरर्थक्यस्येति लिखितत्वात् । तथैवोत्तरत्रापि क्रमोऽनुसृतः । अत एव मूलकोशे प्रमाणान्तरविसंवादस्येति षष्ठ्यन्तस्य प्रथमलिखनेऽपि तदुपरि द्वितीयोऽङ्कोऽनृतत्वनिरासकेत्याद्युपरि च प्रथमोऽङ्को निक्षिप्तः । संवादराहित्यांशे तु मूलोक्तदूषणातिदेशाभावात् तत्त्वनिर्णयटीकोक्तरीत्या स्वयमेव तद्दूषणोपदर्शनाय पृथगेव तदुपादानपूर्वकमसिद्धत्वादिदूषणकथनमिति न दोषः । ननु तथापि त्रयाणामेवोपादाने हेत्वन्तरभूतं यत्पृथगुपादान-स्यानावश्यकत्वं तत्र व्याघातेत्यादिनोक्तहेतुर्न सङ्गतः । निरर्थकत्वादिनिरासस्यान्यथासिध्या पृथगनिरासोपपत्तिरिति तदुक्तहेतोः पृथङ्निरासाभावानुपपत्तिपरिहारकतया पृथगुपादानावश्यकत्वाभावहेतुत्वाभावादिति चेन्न । तन्निरासा-वश्यकत्वाभिप्रायेणैव पृथक् तदुपादानस्याशङ्काविषयत्वेन तदनुसारेण पृथङ्निरासस्यानावश्यकतया पृथगुपादान-स्याप्यनावश्यकत्वादिति हृदि कृत्वैव व्याघातेत्यादेरुक्ततया तन्निरासानावश्यकत्वस्य पृथक्तदुपादानावश्यकत्वे हेतुत्वोपपत्त्या सङ्गतत्वात् । **विकल्पनिरासकेति** । विकल्पपूर्वकं तन्निरासको यो न्यायः प्रकारस्तेनेत्यर्थः । व्याघातनिरासकेत्युक्त्या व्याघातत्वपुरस्कारेणैवोक्तन्यायातिदेश इति भ्रान्तिः स्यात् तां वारयितुं सामान्याति-देशोऽयं निरर्थकत्वपुरस्कारेण तूपादानं कार्यमित्याशयेनातिदिश्यमानन्यायस्वरूपमाह आपाततो नैरर्थक्यमित्यादि । तत्त्वनिर्णयटीकोक्तं हेतुमाह **शक्तीति** । आपातत इत्यादिनैव किं वाक्यद्वयमित्यादिना प्रथमत उक्त तन्निरास-प्रकारान्तरस्य नायमतिदेश इति सूचितम् । नैरर्थक्यस्येत्यस्य सुपरिहरत्वादित्युत्तरेणान्वयः । **अनृतत्व-निरासकेति** । अत्राप्यर्थशून्यत्वस्यायथार्थप्रतिपादकत्वरूपत्वेऽप्रामाण्यस्यापि तद्रूपत्वेन हेतोः साध्याविशिष्टतेति प्रथममुक्तदूषणस्य नातिदेशोऽभिप्रेतोऽपि तु अप्रामाण्यमविपरीतार्थाप्रतिपादकत्वमनृतत्वं तूक्तरूपमेवातो न साध्याविशिष्टतेति पराभिसन्धिनिराकरणार्थं यन्मूले दूषणमुक्तं न चानृतत्वमेकदेशोऽपीत्यादि । तद्दूषणस्य बोधकवेदे प्रामाण्यस्येत्याद्युत्तरटीकोक्तप्रकारेणोपपाद्यस्य न विलक्षणत्वादितिसूत्रोक्तन्यायरूपस्यैवातिदेशः । ननु तत्त्वनिर्णयटीकायां प्रमाणान्तरविसंवादस्यानृतत्वपदार्थतया शङ्कनेऽपि नानृतत्वादिसमकक्ष्यतया स्वातन्त्र्येण उपादानमस्तीति तस्य तत्समत्वे नेहोपादानायोगः । नापि तस्योक्तन्यायातिदेशेन निराकरणं संभवति । तथाहि । उक्तन्यायप्रवृत्तिर्हि बोधकवेदे प्रामाण्यस्येत्याद्युत्तरटीकाप्रकारेणाविपरीतार्थाप्रतिपादकत्वरूपाप्रामाण्ये हेतुभूत-





मयथार्थप्रतिपादकत्वमसिद्धम् । तत्साधकत्वाभावात् । न च कृतायामपि पुत्रेष्टावित्यादिनोक्तः फलव्यभिचार एव तत्साधकः । प्रमाणत्वेन निश्चिते वेदे तस्य सामग्रीवैकल्यप्रतिबन्धकसद्भावाभ्यामन्यथासिद्धत्वेन तत्साधकत्वानुपपत्तेः । तथा च फलविसंवादस्यान्यथासिद्धतया तेन पुत्रकामादिवाक्येऽयथाभिधानसिद्धेरयोगादयथार्थप्रतिपादकत्वरूपस्याप्रामाण्यहेतोरसिध्या तेनोक्ताप्रामाण्यासिद्धिरित्येवंरूपा वाच्या । अत एव नविलक्षणत्वाधिकरणीयतत्त्वप्रकाशिकायां पूर्वपक्षावसरे कारीर्या यजेत वृष्टिकाम इत्यादिश्रुतेः कारीर्याद्यनुष्ठानेऽपि वृष्ट्याद्यदृष्ट्या अविद्यमानाभिधायकत्वात् । अविद्यमानाभिधायकानां च पाशुपतादिस्मृतिवदप्रामाण्यनियमादिति अप्रामाण्यहेतुभूतायथाभिधानहेतुतया फलविसंवादवर्तिनः । तन्निरासश्चान्यथासिध्या कृतः । तथा चोक्तरीत्या फलव्यभिचाररूपप्रमाणान्तरविसंवादस्य निरासोऽनृतत्वनिरासे पर्यवसन्नः तत्कथं तन्निरासन्यायेन प्रमाणान्तरविसंवादस्य निरास इत्युक्तिः । अस्य न्यायस्य अत्रोपदेशात् अतिदेशोक्तिश्च अयुक्तेति चेन्मैवम् । यथा ह्ययथाभिधानरूपानृतत्वस्य साक्षादेव अविपरीतार्थप्रतिपादकत्वरूपाप्रामाण्ये साधकता एवमेव प्रमाणान्तरविसंवादपदोक्तफलव्यभिचारस्याप्यविपरीतेत्युक्ताप्रामाण्यं प्रति साक्षादेव हेतुत्वं विवक्षित्वा यदा प्रयोगस्तदाऽनृतत्वपदार्थतयोक्तटीकाशङ्कितरूपादतिरिक्तः परम्परया प्राप्तप्रागुक्तफलविसंवादरूपाच्चातिरिक्त एव फलविसंवादो लभ्यत इति तस्यैवानृतत्वादिसमकक्ष्यतया स्वातन्त्र्येणोपादानस्य विवक्षितत्वान्नाद्यो दोषः । नाप्यतिदेशेन तन्निराकरणानुपपत्तिरूपो द्वितीयो दोषः । उक्तरीत्या न विलक्षणत्वाधिकरणोक्तन्यायस्य परम्परया प्राप्त तद्विसंवादनिरासेऽनृतत्वनिरास एव पर्यवसानादेव तन्न्यायेन स्वातन्त्र्येणानृतत्वादिसमकक्ष्यतया प्राप्तप्रमाणान्तरविसंवादस्यापि निराकरणोपपत्त्या तथोक्तेरुपपन्नत्वात् । अत एवोपदेशस्योक्तपरम्परागते प्रमाणान्तरविसंवादे प्राप्त्या स्वतन्त्रे तस्मिन्नतिदेशोक्तेर्युक्तत्वात् तृतीयदोषोऽपि न । यदि चाप्रामाण्यस्यायथाभिधायकत्वरूपत्वपक्षे तद्रूपानृतत्वेन तत्साधने प्राप्तसाध्याविशेषपरिहारायाविपरीतेत्यादिविवक्षाया आवश्यकत्वेऽपि व्याघातादिहेत्वन्तरेणाप्रामाण्यसाधने साध्याविशेषप्रसङ्गाभावादप्रामाण्यस्यायथाभिधानरूपत्वस्यैव प्राप्तिस्तदा फलविसंवादेनापि तस्य साक्षादेव साधनपक्षस्य प्रसक्तेस्तत्पक्षे च न विलक्षणत्वाधिकरणोक्तप्रकारप्रविष्टफलविसंवादातिरिक्त एव स्वतन्त्रः फलविसंवादः प्राप्नोतीति तन्निरासेऽनृतत्वनिरासकन्यायातिदेशोक्तिर्युक्तैव । एतेनाविपरीतेत्यादिरूपाप्रामाण्यपक्षे फलविसंवादस्य साक्षाद्धेतुत्वोक्तिरपि उदाहृततत्त्वप्रकाशिकायामेवोत्तरत्र विद्यमानाया फलव्यभिचारेऽपि नाप्रामाण्यमित्यादिकोक्तिस्तद्धेत्परम्परापर्यवसन्नेति निरस्तम् । फलविसंवादे हेतौ कृतेऽप्रामाण्यस्यायथार्थाभिधानरूपतया परम्परानवकाशात् । प्रमाणान्तरविसंवादोऽनृतत्वमिति चेदित्येतत्तत्त्वनिर्णयटीकाया अप्ययमेवाभिप्रायः । यथा चैतत्तथा तट्टीकाव्याख्यानप्रपञ्चे अस्माभिरुपपादितमिति सकलमकलङ्कम् । प्रमाणेन विसंवादो यष्टीकायामुदाहृतः । तत्स्वरूपं यथाबुद्धि विवृतं बुधतुष्टये ॥

**संवादराहित्यस्य चेति** । सजातीयसंवादराहित्यस्येत्यर्थः । वेदसमानविषयकत्वे सति तत्प्रामाण्यग्राहकत्वं संवादस्य सजातीयत्वम् । तत्समानविषयकत्वाभावे सति तत्प्रामाण्यग्राहकत्वं च विजातीयत्वमिति ब्रह्मसूत्रप्रामाण्यसमर्थनपराप्तवाक्यतयेत्यादिभाष्यमूलटीकायामेवोक्तम् । **असिद्धत्वादिति** । अग्निर्हिमस्य





भेषजमित्यादेः संवाददर्शनेन भागासिद्धत्वादित्यर्थः । सर्वसङ्ग्रहाय दूषणान्तरमाह **अपूर्वतेति** । उक्तं च तत्त्वनिर्णयटीकायां किमयथार्थत्वादेवात्र संवादो नास्ति । उत तस्यार्थस्य तदेकप्रमाणकत्वादितीति भावः । तर्हि तत्त्वनिर्णयटीकायामपि नैरर्थक्यादेः पृथगाशङ्कानिरासयोरयोग इत्यत आह **तत्त्वनिर्णयेति** । **स्पष्टत्वायेति** । स्पष्टं तन्निरासप्रतिपत्त्या शिष्यसमाधानायेत्यर्थः । अन्यथा अत्रोक्तातिदेशेन तन्निरासाय प्रवर्तमानशिष्याणां श्रमः स्यादिति भावः । किमेवं कल्पनया । अनृतत्वादिवत्पृथङ्न्यायनिवर्त्यत्वाभिप्रायेणैवाशङ्का तट्टीकायां पूर्वपक्षे कृतेति किं न स्यादित्यत आह **अत एवेति** । **अनृतत्वेति** । अनृतत्वस्य प्रमाणान्तरविसंवादरूपतायास्तत्र शङ्कने न तन्निरासायैव सर्वथा प्रमाणविसंवादः उतान्यनिमित्तक इति निराकरणेन तन्न्यायातिदेशस्यैव नैरर्थक्यनिरासाय प्रवर्तनेन च तथोक्तेरुपपत्तेः । एतेन तत्रापातत इत्युक्त्या व्याघातनिरासकन्यायातिदेश इति शङ्कानिरासः । शक्तितात्पर्यापरिज्ञानरूपनिमित्तस्य वैगुण्यादिस्थानापन्नतयोक्तेः । पुनरुक्त्यादिनिरासकन्यायातिदेशे तु न विवादः । अनृतत्वादिर्यो दोष इति दोषत्वोक्तिस्तु दोषेभ्य इति सूत्रानुसारेणेति ज्ञेयम् । **व्याप्तिपक्षधर्मतेति** । उत्तरत्रोदाहरणोपनयात्मकपरार्थानुमानेन व्याप्तिपक्षधर्मतोपेततयाऽनृतत्वादिलिङ्गप्रतिपादनात्तद्व्यावर्त्यतयेयं शङ्केति ज्ञेयम् ।

अनृतश्च वेद इत्यत्रत्यं वेद इत्येतदनूद्य तत्पदसङ्ग्राह्यपुत्रकामेत्युत्तरमूलानुसारेणाह **वेद इत्यादिना** । आदिना वृष्टिकामः कारीर्या यजेतेत्यादिग्रहः । पुत्रकामेष्टीति मूलमुपलक्षणमिति चानेन सूचितम् । अत एवोत्तरत्रातिरात्र इत्यादेरिवात्र वाक्यविशेषोपादानं कुतो न कृतमिति शङ्काऽप्यनवकाशा । पुत्रकामेष्टीत्युत्तरमूलादेव वाक्यविशेषलाभात् । यद्यपि न्यायवार्तिकादावुदितहोमादिवाक्यानामेव व्याघातोदाहरणतया प्रतिपादनमस्ति तथाप्यतिरात्रे षोडशिनं गृह्णातीत्यादावपि व्याघातविचारस्य पूर्वमीमांसायां दशमाष्टमपादे करणादन्यत्रापि व्याघातमाशङ्क्य विकल्पाश्रयणेन साधुत्वव्युत्पादनाच्चेदमप्युदाहरणमस्त्विति भावेनाऽतिरात्र इत्यादिवाक्यमप्युदाहरति **अतिरात्रे षोडशिनमिति** मूले । **संस्थाविशेष इति** । समन्वयाधिकरणचन्द्रिकाऽवलोक्यास्ति । **ग्रहविशेष इति** । सोमपात्रविशेषः । नन्वयं व्याघातविषयो न भवति । न तौ पशौ करोति न सोम इत्यत्र न सोम इत्यस्य न पशावित्येतदर्थवादत्ववन्नातिरात्र इत्यस्यापि किञ्चिदर्थवादत्वोपपत्तेः । यद्वा नानुयाजेष्विति वाक्यस्येवातिरात्रभिन्न इत्येवं पर्युदासाश्रयणेन विधिवाक्यशेषत्वस्यैव संभवात् । तथा चास्योदाहरणमयुक्तमित्यतोऽतिरात्र इत्यादिस्थले अर्थवादत्वाद्यसंभवं प्रतिपाद्य व्याघातस्थलत्वं समर्थयते **तत्र पूर्ववाक्येति** । अनेनातिरात्र इति पूर्ववाक्यविहितस्य ग्रहणस्य नातिरात्र इत्यनेन निषेधाद्व्याघात एवात्र प्रकारान्तरेणेति प्रतिज्ञा कृता । तामुपपादयितुमर्थवादत्वासंभवं तावदुपपादयति **उपदेशेति** । सोमे तावदाज्यभागयोरुपदेशो नास्ति । सोमस्य विकृतित्वाभावेन तत्रातिदेशतोऽपि आज्यभागयोर्न प्राप्तिरित्यर्थः । **तत्र प्रतिषेधेति** । प्राप्तस्यैव निषेधौचित्येन सोम इत्यस्य चाप्राप्ताज्यभागप्रतिषेधत्वमनुपपन्नम् । तथा सोमेऽप्राप्तत्वादेव सोमभिन्ने पशावाज्यभागौ न करोतीत्येकवाक्यतया योजनोपयोगिपर्युदासत्वं च न संभवतीत्यर्थः । अर्थवादत्वप्रकारप्रदर्शनं **सोमस्य यथेत्यादि** । आप्त्यभावेऽप्यर्थवादत्वमस्त्विति शङ्कमानं प्रत्याह **अप्राप्तेति** । नानुयाजेष्वित्येतत्साम्यासंभवमप्याह **सामान्यविषय इति** । अत्र च यजतिष्वित्यादौ नानुयाजेष्वित्यस्य पर्युदासत्वेऽपि प्रकृत इत्यादि पर्युदासासंभवादिति संबन्धः । नानुयाजेष्वित्यादौ पर्युदासत्वाश्रयणे हेत्वभिधानं





**नानुयाजेष्वित्यादेः प्रतिषेधत्वाभावेनेत्यन्तम्** । अप्राप्तस्य च प्रतिषेधायोग इति भावः । पर्युदासत्वे एकवाक्यताप्रकारप्रापकवचनपूर्वकं तत्प्रकारप्रदर्शनं सामान्येत्यादिनिष्पत्त्येत्यन्तम् । यत्र सामान्यविषयको विधिरस्ति । निषेधश्च विशेषविषयकः । तथाविधस्थले निषेधवाक्यगतस्य नञः पर्युदासार्थतामाश्रित्य विधिवाक्यशेषत्वमेवाश्रीयते न तु स्वतन्त्रविधित्वमिति यत इत्यर्थः । **अनुयाजव्यतिरिक्तेति** । प्रकृतौ तावद्देवं बर्हिः देवो नराशंसः । देवोऽग्निः स्विष्टकृदित्येवंरूपानुयाजत्रयातिरिक्तयजतिषु समिदादिपञ्चप्रयाजप्रधानयागादिषु ये यजामहं करोतीत्यर्थेत्यर्थः । **प्रकृत इति** । अतिरात्रवाक्य इत्यर्थः । तथा चातिरात्र इत्यादिवाक्ययोरेकवाक्यताप्रापकसामान्यविषय इत्यादिन्यायाप्रवृत्त्यातिरात्रव्यतिरिक्त इत्यादिरूपेणार्थानुपपत्तिरित्यर्थः । दशमीयाष्टमपादस्थशिष्टात्तु प्रतिषेध इति सूत्रे निर्णीतं प्रमेयं प्रथमाध्यायप्रथमपादीय 'यद्यपि स्याद्विधिस्पृष्टे निषेधो नैव तादृशः । विज्ञायते ह्यनर्थत्वं षोडशिग्रहणादिवदि'ति वार्तिकोक्तप्रमेयं चानुसृत्य स्पष्टनीयमेतत् । **नानुयाजेषु ये यजामह इतीति** । नन्वमावास्यायां पितृभ्यो दद्यादिति वाक्यस्येव रात्रौ श्राद्धं न कुर्वीतेत्यस्य निषेधवाक्यस्यापि पृथक्क्रियायुक्ततया पर्युदासाङ्गीकारे क्रियान्तरानन्वयप्रसङ्गेन ब्राह्मणेभ्यो दधि दीयतां कौण्डिन्याय न दातव्यमित्यादाविव प्रतिषेधत्वमेवेति दृष्टतया यजतिवाक्यसन्निहितनानुयाजवाक्ये पृथक्क्रियाराहित्यपक्षे एकवाक्यत्वेनानुयाजव्यतिरिक्तेति पर्युदाससंभवेऽपि ये यजामहं करोतीति वाक्यशेषाङ्गीकारे एकवाक्यत्वायोगेन पर्युदासासंभव इति चेत् । न । अभिप्रायविशेषसद्भावात् । तथाहि । पर्युदासप्रतिषेधयोः पर्युदास एव बलवान् । पर्युदासस्योपजीव्यबाधकत्वाभावात् । प्रतिषेधस्य चान्याय्योपजीव्यबाधनाश्रयणेन प्रवृत्त्या जघन्यत्वात् । ततः पर्युदासे संभवति सति न प्रतिषेधः कल्प्यः । किञ्चानुयाजपदसमभिव्याहृतनञोनुयाजपदेनैवान्वये संभवति तत्परित्यागेन दूरस्थकरोत्यन्वये मानाभावः । यत्र सर्वथा प्रतिषेधं विना अगतिस्तत्र रात्रिश्राद्धनिषेधकवाक्यादौ प्रतिषेधाश्रयणेऽपि न दोषः । निरवकाशप्रतिषेधेन सावकाशपर्युदासबाधेऽपि औत्सर्गिकपर्युदासप्राबल्योपपत्तेः । एवं च पृथक्क्रियायोगे समानेऽपि रात्रौ श्राद्धमित्यत्र नञः करोत्यन्वयस्य स्वत एव सत्त्वेनात्र च नञःकरोतिना व्यवधानेन सन्निहितानुयाजान्वयमालम्ब्य पर्युदासाश्रयणोपपत्तिः । इदं च विशिष्टपाठोऽपि शाखान्तरेऽस्तीत्याशयेन । वस्तुतो नानुयाजेष्वित्येव पाठसद्भावेन तत्र वाक्ये प्रतिषेधकत्वकल्पने वाक्यभेदः । ये यजामहं करोतीत्यनयोरनुषङ्गदोषश्च स्यादिति प्रतिषेधत्वपरित्यागेनोक्तदोषरहितमेकवाक्यतासंपादनानुकूलं पर्युदासार्थत्वमेव युक्तमिति न कश्चिद्दोष इति । अत एव इत्यादावित्यादिपदेन ये यजामहं करोतीत्येतच्छून्यपाठान्तरस्य उपादानम् । अन्यथाऽनुयाजव्यतिरिक्तेत्येकस्यैवार्थस्य निदर्शनायोगप्रसङ्गः । अर्थान्तरोपलक्षणया योजनात् कुसृष्टिरेव । अतद्गुणसंविज्ञानबहुव्रीहिणा वाक्यान्तरस्यैवात्रोपादेयत्वेनाभिप्रेतत्वात् पर्युदासाश्रयणेनानुयाजव्यतिरिक्तेति अर्थकथने न कश्चिद्दोष इत्यप्याहुः । नञः पर्युदासार्थत्वविचारो दशमाध्यायस्याष्टमपादे सप्ताधिकरणेषु पूर्वमीमांसायां कृतोऽस्ति । शब्दमणिभक्तुधर्मराज्यादौ च विधिवादे । नानुयाजेषु ये यजामहं करोतीति विशिष्टपाठोऽप्युक्तस्थले शास्त्रदीपिकायां चास्ति । पूर्वत्रैवात्रापि विधिनिषेधयोरेवोदाहरणम् । किन्तु प्राचीनयोरुभयोरपि श्रुतित्वम् । इदानीमुदाहृतयोरेकस्य विधित्वं वर्तत एव । अपरनिन्दात्वेऽपि निन्दयोन्नेयप्रतिषेधपरत्वमिति विशेष इति पक्षान्तरमाह **अत्र वात्स्यायनीयेत्यादिना** । **विधिनिन्दालैङ्गिकप्रतिषेधयोरिति** । विधिश्च निन्दा लैङ्गिकप्रतिषेधश्चेति विग्रहः । निन्दारूपं यल्लिङ्गं तेन लिङ्गेन सिद्धो यः प्रतिषेध इति योज्यम् । पररीत्यनु-





सरणेन योजनायामस्वारस्यं मत्वा तत्परित्यागेन तद्रीत्युन्मूलनाभिप्रायेण मूलप्रवृत्तिरिति योजयति **यद्वेति** । **भाष्यकारीयमिति** । वात्स्यायनभाष्यकारीयमित्यर्थः । **नाग्निहोत्रेति** । व्याघात इत्यनन्तरं यत इति शेषः । प्रतिषिद्धत्वेनाग्निहोत्रेत्यादिर्व्याघाताभावादिति पाठस्तु स्वरस एव । एवं च भाष्याद्युक्तिद्वयस्यापीति पाठः । पक्षद्वयस्यापीति क्वचित्कपाठेऽप्ययमेवार्थः । वाक्यान्तरस्य वोपादानमिति पाठः । आकाशपरवाक्योदाहरणस्याभिमतत्वे ज्ञापकमाह **अत एवेति** । **प्रथमोत्तमयोरिति** । ननु अग्निहोत्रादिवाक्यस्यानेकशाखागतत्वेऽपि शाखानां व्यवस्थया पुरुषविशेषाधिकारिकत्वेन तत्तच्छाखाध्यायिनं प्रति तत्तद्वाक्येनाग्निहोत्रादिकर्तव्यत्वप्रतिपादनेऽपि न पौनरुक्त्यमिति शाखान्तरोक्तस्य शाखान्तरेऽभिधानादित्ययुक्तमित्याशङ्कापरिहाराय एकस्यामपि शाखायां वाक्यावृत्तिदर्शनादिति एकशाखाध्यायिनं प्रत्येव पौनरुक्त्यं वेदे प्रतिपाद्य तत्रापि शपथरूपत्वादिकल्पनेनावृत्तेः सप्रयोजनताया वक्तुं शक्यत्वान्न पुनरुक्तिदोष इत्याशङ्कापरिहाराय न शपथरूपत्वादिकल्पनया सप्रयोजनत्वं वाच्यम् । पञ्चदशसप्तदशैकविंशादिसामिधेनीयुक्तदर्शपूर्णमासादियागेषु वेदेनैव त्रिःप्रथमामन्वाह त्रिरुत्तमामिति प्र वो वाजाऽभिद्यव इत्यादिरूपाद्यायाः आजुहोतादुवस्यत इत्यादिरूपान्त्यायाश्च त्रिरभिधानं कार्यमिति प्रतिपादनेन तत्र च शपथरूपत्वाद्यप्रतीत्या व्यर्थानुवादविधानसिद्धेः । एवं च वेदसंमत्यैव वेदस्य मरुद्भिरग्नेकुवित्सोमस्य । तन्नो मित्रो वरुणो मा महन्तामित्यादितत्तद्वेदगतवाक्यावृत्तिस्थलेऽपि व्यर्थानुवादत्वमेव कल्पयितुमुचितम् । न तु प्रयोजनकल्पनया सार्थकत्वं वाच्यमिति पौनरुक्त्योपपादनं तत्त्वनिर्णयटीकायां कृतमिति तदनुसारेणात्रापि मूलाभिप्रायो वर्णनीयः । त्रिःप्रथमामित्यादेरेव पुनरुक्तोदाहरणताया आपाततः प्रतीतमानाया अयोगेन प्रकारान्तराभावात् । न हि प्रथमोत्तमऋचोस्त्रिरभिधानं कार्यमिति विधानपरं वाक्यं स्वयं पुनरुक्तमिति शक्यते वक्तुम् । न वाद्यन्तर्चोर्यज्ञादौ पाठकाले आवृत्तिः प्राप्तेति वेदे पठ्यमानं तद्वाक्यमावृतं भवति । अध्ययनजपादिकाले बहुवृत्तेर्वेदमात्रस्य पुनरुक्ततापातात् । एतेनैव तद्भाष्यादावुक्तरीत्या पुनरुक्तिशङ्कनपरिहारसूत्रार्थतया यज्ञादौ पुनः पठ्यमानवाक्यमेवोपादाय तदावृत्तिप्रयोजनसद्भावेन पुनरुक्तिर्नेति प्रतिपादनं चासङ्गततया परास्तम् । वेदवाक्ये तदुभयाभावात् । अत एवाग्नये प्रणीयमानायेति खण्डभाष्ये आद्यन्तयो ऋचोरावृत्तिं विधत्ते इति त्रिःप्रथमामन्वाहेत्यस्यावतारः कृतः । अयमत्र वाक्यविवेकः । त्रिःप्रथमामन्वाह त्रिरुत्तमामित्याकारं प्रथमपठितं विधिरूपं त्रिः प्रथमम् । त्रिरुत्तमामन्वाहेत्येवमाकारमुत्तरवाक्यं त्वावृत्तिप्रशंसापरम् । तथैव तद्भाष्योक्तेः । एवमग्नये मथ्यमानायेत्येतद्भाष्येऽप्यावृत्तिविधिमित्याद्युक्तिः । यजुःशाखायामपि द्वितीयाष्टके त्रिःप्रथमामन्वाह त्रिरुत्तमामिति विधिपरं वाक्यमस्तीति शङ्काया भ्रान्तिमूलत्वे च परिहारावसरे सार्थकानुवादत्वेन पुनरुक्तिपरिहारायोगः । यत्तु वर्धमानकृता पौनरुक्त्योपपादनायोत्तमत्वमाद्यत्वमिति त्रिरिति वाक्येनाद्याया एव त्रिरभिधानस्य पुनरुक्तिर्लब्धा भवतीति भवत्येवेदं पुनरुक्तोदाहरणमित्येकं पक्षमुक्त्वोत्तमत्वस्यान्त्यऋक्त्वरूपतया प्रथमत्वेन व्याख्यानमश्लिष्टमित्यतः पौनरुक्त्योद्भावनायोग इत्यस्वरसं मनसि निधाय त्रिरिति पदस्य पुनरभिधानेन पुनरुक्तमिति पक्षान्तरमुक्त्वा एवं पौनरुक्त्यस्य परिहारावसरे भाष्यादावनुद्धारात्कथमाशङ्काविषयत्वमित्याशङ्कापरिहाराय सार्थकोऽनुवादो न पुनरुक्तम् । निरर्थकाभ्यासस्यैव पुनरुक्तत्वात् शीघ्रं शीघ्रतरं गम्यतामित्यादौ तरपा क्रियातिशयस्यैव सामिधेनीनां पञ्चदशत्वसंपादनस्य त्रिस्त्रिरभिधानेन विना लाभाभावेन सार्थकानुवादत्वमिति क्रियमाणपरिहारस्य त्रिस्त्रिरिति पदावृत्तिसार्थकत्वपरतयापि





योजयितुं शक्यतया युक्तमाशङ्कनं त्रिःपदावृत्त्या पुनरुक्तेरिति प्रतिपादितम् । तत्तु पुनरुक्तोदाहरणतया अग्निहोत्रं जुहोतीत्यादिकमादर्श्य पुनरुक्तिसमर्थनाय त्रिःप्रथमामित्यस्य स्वयमेव विधानाच्चेति निरर्थकानुवादविधानपरत्वेन योजयता मूलकृतैव तत्त्वनिर्णयटीकायां निराकृतप्रायमिति न तथा वर्णनं युक्तम् । किञ्च संपूर्णावर्तितवु वित्सोम-स्येत्यादिवाक्यस्य परिग्रहसंभवे पदमात्रावृत्त्यभिप्रायेण त्रिरिति वाक्योदाहरणं कुर्वन्भाष्यादिकारः कथमचतुरो न स्यात् । कथञ्चित्पुनरुक्तावेव तात्पर्यं भाष्यकारादेरिति वदता टीकाकारेण वा त्रिःप्रथमामन्वाह त्रिरुत्तमामिति यजुःशाखागतवाक्यसमानार्थकत्रिःप्रथमामन्वाह त्रिरुत्तमामित्यैतरेयब्राह्मणवाक्यस्य सोमाय क्रीताय प्रोह्यमाणायानु-ब्रूहीत्यादिखण्डषट्के आवृत्तस्यैकैकस्मिन्नपि खण्डे अन्वाहेत्यस्य व्यत्यासेन द्विरावृत्तस्योपादानेन संपूर्णवाक्यस्यैव पुनरुक्तिलाभसंभवे सार्थकानुवादत्वरूपपरिहारस्यापि तत्र संभवे च तथा पुनरुक्तोपपादनं कुतो न कृतम् । पदावृत्तिमात्रस्येषेत्वोर्जेत्वा पुत्रकाम इत्यादौ सर्वत्र सत्त्वेनानृतव्याघाताद्युदाहरणमेव पुनरुक्तोदाहरणं भवतीति तत्परित्यागेनाप्रसिद्धवाक्यगवेषणायासायोगश्च । पदमात्रस्य तत्तद्वाक्यार्थभेदेनावृत्तावपि न पुनरुक्तिर्वाक्यार्थैक्या-भावादिति तु त्रिःपदमात्रावृत्तिवादिनं स्वात्मानमेव व्याहन्तीति न शङ्कार्हम् । पूर्वान्त्यर्चोस्त्रिष्ट्वप्रतिपादनरूप-वाक्यार्थभेदेनात्रापि तदनवकाशात् । सकृदुच्चारितत्रिरित्यस्यावृत्त्यैव विशिष्टवाक्यार्थद्वयनिष्पत्तिसंभवे त्रिरिति पुनरभिधानं दुष्टमिति तात्पर्यमिति तु न युक्तम् । भाष्याद्युक्तं परिहारस्य पूर्वयोजनायां सञ्चारसंभवेऽप्येतद्योजनायां तदसंभवेन तथा सञ्चारोक्त्ययोगप्रसङ्गात् । तस्माद्यत्किञ्चिदेतत् । तदेवं प्रकारान्तरेण पौनरुक्त्योपपादनायोगात् तत्त्वनिर्णयटीकोक्तरीत्या पुनरुक्तिमभिधाय तदुपपादकतया त्रिःप्रथमामिति त्रिरभिधानविधायकवाक्यमुदाहार्यमिति सिद्धे मूलग्रन्थेऽपि त्रिःप्रथमामित्यस्यैव पुनरुक्ततयोदाहरणायोगः । तत्कथं प्रथमोत्तमयोस्त्रिरभिधानेन पुनरुक्त-मित्येतावदेव टीकाकारीयं व्याख्यानमवकाशवत् । एतेनैवात्र प्रथमोत्तमऋचोरावृत्तिं स्वयमेव वेदो विदधातीति पौनरुक्त्यमित्यन्यथाख्यातिरप्यपास्ता । वेदे पुनरुक्त्यप्राप्तेः । परिहारे वैयर्थ्योदाहरणत्वाङ्गीकारायोगश्चेति चेत् । अत्र ब्रूमः । यत्तावत्तत्त्वनिर्णयोक्तप्रकारेण वक्तव्यत्वमभ्यदायि तत्संमतमेव । अत्र त्रिःप्रथमामित्यादेरेव ग्रन्थकृता, अभिधानेऽपि तेनैव ग्रन्थान्तरे उक्तो या रीतेरत्राप्यभिप्रेतताया वक्तुं युक्तत्वात् । अत एवेत्याद्येति वक्तव्ये तथानुक्त्वा इत्यादिदर्शनादित्युक्तम् । तथा वदता च शाखाभेदेनेत्याद्युक्तरीत्या अग्निहोत्रं जुहोति आग्नेयमष्टाकपालं निर्वपति कुवित्सोमस्य पामितीत्यादिपुनरुक्तवाक्यमेव पुनरुक्त्युदाहरणतयाऽभिप्रेतं तदुपपादकं च त्रिःप्रथमामित्येतदिति सूचनात् । इत्यादिदर्शनादित्यनेनैवेत्यादिना स्वयमेव विधानादित्यप्यर्थस्य प्रत्येतुमशक्यत्वाच्च । एवं च त्रिःप्रथमा-मित्यादावेव वा तद्वाक्येन त्रिरनूद्यत्वेन विहितवाक्ये वा न पुनरुक्तिरित्यादिरूपेण यत्प्रकारान्तरासंभवव्युत्पादनं कृतं तदप्यनुकूलमेवास्माकं न प्रतिकूलम् । तथा तदुपपादनानङ्गीकारात् । तद्भाष्याद्युक्तप्रकारस्य चासंमतेः । एतावत्परमवशिष्यते । प्रथमोत्तमयोरितिटीकास्थे व्याख्यानमर्यादया त्रिःप्रथमामिति वाक्यमेव पुनरुक्तोदाहरणतया ज्ञापितं भवति । तच्चायुक्तमिति । तदपि नास्ति । अत्र हि त्रिःप्रथमामित्यादेरर्थाप्रतिभासेन तद्विशदीकरणाय प्रवृत्तेन वाक्यनिष्ठविधायकत्वलब्धं यत्प्रथमोत्तमर्चोस्त्रिरभिधानं तन्निमित्तीकृत्य शपथरूपत्वाद्यभावेऽपि व्यर्थानुवाद-विधानात्तत्तद्वेदे पुनःपुनरभिधीयमानकुवित्सोमेत्यादिवाक्यस्य पुनरुक्तता सिद्धेत्यभिप्रेयते । अत एव पूर्वोक्ताभिधानं पुनरुक्तमिति प्राक्तल्लक्षणमुक्तम् । कथमन्यथा व्यधिकरणाप्रयोजकत्वे स्पष्टे अप्यवगणितवान् टीकाकार इति कल्पना





न स्यात् । अभिधानादित्यस्याभिधानविधानादित्यर्थः । तत्त्वनिर्णयटीकानुसारात् । अभिधानविधानेनेति पाठे तु न लक्षणापत्तिः । अथ मन्यसे उक्ताभिप्रायसद्भावे तद्भाष्योक्तप्रकारान्तरपराकरणं कुतो न कृतमिति । न्यायभाष्यानुसारेणानुवादावसरे ग्रन्थकृतैव तत्त्वनिर्णयटीकायां विशेषप्रतिपादनात्तदनुसारेण तद्दूषणप्रकारस्य स्पष्टत्वेन शिष्यैरेवोह्यत्वाभिप्रायात् । पुनरुक्तिपरिहारपरोत्तरमूलस्याप्येतदनुसारेणैव प्रवृत्तेर्न कश्चिद्दोषः । यथा चैतत्तथा तद्व्याख्यावसरे निरूपयिष्याम इति । अत्र मूले आदिपदेन त्रिरुत्तमामिति वाक्यशेषग्रहणम् । तत्त्वनिर्णयटीकायां तावत उदाहरणात् । यद्वा एतादृशं वा एतदन्यविषयं वाक्यान्तरमादिपदगृहीतमत एव समिदादिवाक्यं टीकाकृदुदाहरिष्यति परिहारावसर इति ज्ञेयम् । अन्ये तु अतद्गुणसंविज्ञानबहुव्रीहिणा शुद्धपुनरुक्तवाक्यस्यैव ग्रहणमिति न दोष इत्याहुः । परमार्थस्तु न्यायभाष्याद्यनुसारेण प्रवृत्तैतद्ग्रन्थे तत्साधुत्वासाधुत्वविचारस्यानभिप्रेततया तदनुसारेणानुवादो मूले । टीकायां च तट्टीकोक्तप्रकारेण त्रिरभिधानस्पष्टीकरणमिति यथाश्रुतत्रिःप्रथमामिति त्रिरनूद्यत्वेन विहित प्र वो वाजेत्यादिरूपवाक्यमेव पुनरुक्तोदाहरणतयोदाहृतम् । स्वाभिप्रेतप्रकारविशेषस्तु तत्त्वनिर्णयटीकायामुक्तत्वादेव च परभाष्यादाविवान्यथाप्रतिपत्तिमूलकोऽयं व्यवहार इति शङ्कापि नास्तीति सर्वं समञ्जसमिति ॥ इत्थं विचारः पुनरुक्तिमूले टीकाकृता व्याकरणे च वर्तितः । स्मृत्वा गुरोः पादयुगं मुहुर्मुहुस्तद्दृष्टितो यान्तु सुखं सुबोधाः ॥

**स०व्र०**— ज्योतिष्टोमसंस्थासु सप्तस्वेकं कर्मातिरात्राख्यम् । षोळशी नाम ग्रहविशेषः । एकत्र विधिनिषेधयोः व्याघातः । उदिते जुहोतीत्यादौ विध्योरेव । **त्रिः प्रथमामिति** । त्रयोदशैकादशसंभिन्नार्था यत्र ऋचः सामिधेन्यः तत्र त्रिः प्रथमामन्वाह त्रिरुत्तमामित्यावृत्त्या सप्तदश पञ्चदश वा सामिधेन्यो भवन्ति । पाञ्चदश्यं प्रकृतौ निवेशयति, साप्तदश्यं विकृतौ; उभयोरेकत्र विरोधादिति स्थितिः । तत्रावृत्तिं स्वयमेव वेदो विदधातीति अप्रमाणम् ।

**स०ना०**— **पुनरुक्तिश्च वेदे त्रिः प्रथमामन्वाहेत्यादिदर्शनादितीति** । त्रिः प्रथमां ऋचमन्वाह त्रिः उत्तमामित्यस्य वाक्यस्य ब्राह्मणे बहुवारं दर्शनात् पुनरुक्तिरित्यर्थः । नन्विदं व्याख्यानं तत्त्वनिर्णयटीकाविरुद्धम् । तथाहि । तत्र पुनरुक्तं च वेदवाक्यमेकशाखोक्तस्य शाखान्तरेऽभिधानात् । एकस्यामपि शाखायां वाक्यावृत्तिदर्शनात् **त्रिः प्रथमामन्वाह त्रिरुत्तमामिति** स्वयमेवाभिधानाच्चेति वाक्यावृत्तेः पार्थक्येनास्याभिधानात् इति चेत् । तद्वाक्यार्थानवबोधात् । तत्र हि शाखान्तरोक्तस्य शाखान्तरे आम्नानादित्यनेनार्थतः पौनरुक्त्यमुक्त्वा एकस्यामपि शाखायां वाक्यावृत्तिदर्शनादित्यनेन शब्दतोऽपि पौनरुक्त्यमुच्यते ।

**विठ्ठ०**— **ननु तथापीति** । प्रामाण्ये निर्विषयत्वादियुक्तिविरोधपरिहारेऽपीत्यर्थः । **अतिरात्र इति** । ज्योतिष्टोमस्याग्निष्टोमादि सप्तसु संस्थासु अतिरात्राख्या एका संस्था तत्र षोडशिनामकं सोमपात्रं गृह्णातीत्येवं न गृह्णातीत्यपरम् । षोडशिशब्देन शंसनीयशस्तुतिविशेषो वाभिप्रेतः । तत्प्रकारस्तु कर्मनिर्णये स्पष्टः । अत्र षोडशिग्रहणविधितन्निषेधयोर्व्याघातः । अग्निहोत्रप्रकरणे । **उदिते जुहोति अनुदिते जुहोतीति** । विध्योरेव





व्याघात इति द्रष्टव्यम् । दर्शपूर्णमासप्रकरणे पञ्चदश सामिधेनीर्विधाय एकादशऋचः पठित्वा त्रिः प्रथमामन्वाह त्रिरुत्तमामिति श्रुतिः प्रथमोत्तरऋचोरावृत्तिं स्वयमेव विदधातीति पौनरुक्त्यमिति भावः ।

**चषकः**— विधान्तरेण वेदप्रामाण्यदुरुपपादताशङ्काया अपि समाधायकं प्रकृतप्रतीकमेवेत्याशयेन तच्छङ्कां दर्शयति **नन्विति** । तथापि पूर्वोक्तदिशा अप्रामाण्यशङ्कानिरसनेऽपि । अतिरात्र इति ज्योतिष्टोमीय-संस्थाविशेषोऽतिरात्रः । षोडशी ग्रहविशेषः । तत्रातिरिक्तसंस्थाके ज्योतिष्टोमयागे षोडशिनामकं सोमपात्रं गृह्णातीति किञ्चिद्वाक्यं न गृह्णातीत्यपरम् । विधिनिषेधयोर्व्याहतिमुपपाद्य विध्योरेव तामुपपादयति **उदित इति** । अग्निहोत्र-प्रकरणे शाखाभेदेनोदिते जुहोतीत्यादिवाक्यद्वयं श्रुतम् । **त्रिः प्रथमामिति** । दर्शपूर्णमासप्रकरणे पञ्चदश-सामिधेनीर्विधायैकादशऋचः पठित्वा त्रिः प्रथमामन्वाह त्रिरुत्तमाम् । ताः पञ्चदश प्रपद्यन्त इति श्रुतम् । **प्रथमां** प्रथमपठिताम् ऋचं त्रिरनुवदेदित्यर्थः । **उत्तमाम्** अन्तिमाम् । अत्र प्रथमोत्तमर्चोरावृत्तिं वेदः स्वयमेव विधत्त इति पुनरुक्तिरिति भावः ।

**प्रदीपः**— **ननु तथापीति** । **अनृतं** फलविसंवाद्यर्थबोधकं विमतं अप्रमाणम् । अनृतत्वात् व्याहतत्वात् पुनरुक्तत्वादित्यनुमानानि योज्यानि । ज्योतिष्टोमसंस्थासु सप्तसु एकं कर्मातिरात्राख्यम् । षोडशी नाम ग्रहविशेषः । तत्र विधिनिषेधयोर्व्याघातः । उदिते जुहोतीत्यादौ विध्योरेव । **त्रिः प्रथमामिति** । त्रयोदशैकादशसम्भिन्नार्था यत्र ऋचः सामिधेन्यः तत्र त्रिः प्रथमामन्वाह त्रिरुत्तमामित्यावृत्त्या सप्तदश पञ्चदश वा सामिधेन्यो भवन्ति । पाञ्चदश्यं प्रकृतौ निवेशयति, साप्तदश्यं विकृतौ, उभयोरेकत्र विरोधादिति स्थितिः । तत्रावृत्तिं स्वयमेव वेदो विदधातीति अप्रमाणम् ।

**६०७ सु०— तथा हि । किं वेदमात्रं पक्षीकृत्यैतैर्हेतुभिरप्रामाण्यं साध्यते उत तदेकदेशम् । नाद्यः । यथा कस्यचित्प्रत्यक्षस्यानुमानस्य वाऽनृतत्वादौ सत्यप्यन्यस्य प्रामाण्यमेवं वेदस्यानृतादिभागपरिहारेण प्रामाण्योपपत्तेः । अन्यथा हेतूनां भागासिद्धिप्रसङ्गात् । द्वितीये त्वास्तां विप्रतिपन्नो वेदभागः । संप्रतिपन्नवेदभागमीमांसा कथमनुपपन्ना ॥ अथ वेदत्वात् तस्यापि वेदभागस्याप्रामाण्यं साधयामीति मन्यसे । तन्न । यथा हि कस्यचित्प्रत्यक्ष-स्यानुमानस्य वाऽप्रामाण्येऽप्यन्यस्य प्रामाण्यं न प्रत्यक्षत्वादिमात्रेण विहन्यते; तथा वेदस्यापि । अन्यथा सर्वप्रत्यक्षानुमानविलयप्रसङ्गः ।**

**परि०**— **अन्यथेति** । अनृताननृतादिरूपोभयविधवाक्यपक्षीकारेऽनृतत्वादिहेतूनां भागासिद्धि-रित्यर्थः ।





**यादु०— यथा हि कस्यचित्** इत्यादेरयमर्थः । अत्र वेदत्वसामानाधिकरण्येन कुत्रचित्साध्यसिद्धेरुद्देश्यत्वेऽनृतादिभागे हेतूनां पक्षधर्मताबलेनोद्देश्यसाध्यसिद्धेर्जायमानत्वेन तत्र भागासिद्धेरप्रतिबन्धकत्वेऽपि सर्ववेदाप्रामाण्यासिद्ध्याऽर्थान्तरता । अन्यथा वेदत्वावच्छिन्ने सर्वत्र साध्यसिद्धेरुद्देश्यत्वे तदवच्छिन्ने सर्वत्र हेतूनां पक्षधर्मताया उक्तरूपसाध्यसिद्ध्युपपादिकाया अभावेन भागासिद्धिप्रसङ्ग एव दोष इति । केचित्तु अनृतादिनिष्ठधर्मविशेषत्वस्य हेतुत्वेऽर्थान्तरता । अन्यथाऽनृतत्वादेरेव हेतुत्वे भागासिद्धिप्रसङ्ग इत्याहुः । वस्तुतस्तु विं वेदमात्रं पक्षीकृत्येत्यत्र न प्रतिज्ञाविषयत्वरूपं पक्षत्वं विवक्षितं किन्तु विमतिविषयत्वरूपम् । तथा किं वेदमात्रेऽप्रामाण्यविमतिदशायामेतैर्हेतुभिरनृतादिवेदभागानेव प्रतिज्ञायां निर्दिश्याप्रामाण्यं साध्यते । उत तदेकदेशो तद्विमतिदशायाम् । आद्ये सामान्ये विप्रतिपत्तौ विशेषे तत्साधनेऽर्थान्तरता । अन्यथाऽर्थान्तरतापरिहाराय सर्वस्यापि वेदस्य प्रतिज्ञायां निर्देशे भागासिद्धिप्रसङ्ग इति योज्यम् ।

**वं०प०— अनृतत्वादौ सत्यपीति** । विसंवादादौ सत्यपीत्यर्थः । **अन्यथेति** । अनृतादिभागस्य तद्व्यतिरिक्तस्यापि वेदभागस्यानृतत्वादिहेतुभिरप्रामाण्ये साध्ये भागासिद्धिप्रसङ्ग इत्यर्थः । **साधयामि इति** । अनृतादिभागदृष्टान्तेनेति शेषः ।

**आनन्दः— अतिरात्रे** तत्संज्ञिके यागे षोडशिनं स्तोत्रम् । **अन्यथा हेतूनामिति** । कृत्स्नवेदं पक्षीकृत्य तस्याप्रामाण्ये साध्ये अनृतत्वादिरहिते वेदभागे अनृतत्वादिरूपहेत्वभावेन भागासिद्धत्वं स्यादित्यर्थः ।

**वा०चं०—** भागासिद्धिं वक्तुं प्रत्यक्षवच्चेति मूलं यथा तत्सूचकं भवेत्तथा योजयति **नाद्यो यथेति** । अनृतादिभागपरिहारेणेति भागासिद्धेर्मूलसूचितत्वसूचनम् । अत्र दृष्टान्तकथनमुपपत्तिसंभावकत्वेन । प्रामाण्योपपत्तेर्नाद्यः सर्वपक्षीकरणपक्षो नेत्यन्वयः । एवं मूलं व्याख्याय तत्सूचितं दूषणमभिनयेन वक्तुमाह **अन्यथेति** । सर्ववेदपक्षीकरण इत्यर्थः । यद्यप्यत्र क्वचिदनृतत्वादिना वेदमात्राप्रामाण्यसाधने सर्वत्रानृतत्वेन वा तत्साधने प्रत्यक्षादेरपि तत एव तत्साधनसौलभ्यात्सर्वप्रत्यक्षानुमानविलयप्रसङ्गेनोत्तरत्रेवात्राप्याभाससमानयोगक्षेमत्वं वक्तुं शक्यम् । तथाऽपि वक्ष्यमाणरीत्या सुज्ञानत्वाद् दृष्टान्तोक्तिमात्रेण तत्सूचनसंभवादन्ते तदुक्तेः सर्वशेषत्वाच्चात्र तदनुक्तिः । **द्वितीये त्विति** । प्रकृतमीमांसाप्रवृत्तिप्रतिबन्धकत्वाभावात्तत्साधनमारम्भासङ्गतमिति भावः । **अथेति** । अयमथशब्दः शङ्कार्थक आनन्तर्यार्थकश्च । अनृतत्वादिना वैदिकदेशेऽप्रामाण्यानुमानानन्तर्यं च तदर्थः । एवं च दृष्टान्तसिद्धिः सूचिता भवति । तथा च नासङ्गतिरिति भावः । अत्रापि विवक्षितं दूषणं वक्तुं तथा मूलं योजयति **यथा हीति** । दृष्टान्तोक्तिबललब्धमर्थमभिनयेनाह **अन्यथेति** ।

**वा०र०—** दृष्टान्तोपपादनेन व्यवधानादन्वयं दर्शयन् व्याचष्टे **प्रामाण्योपपत्तेरित्यादिना** । अर्थत उक्तत्वादुक्तम् **अभिनयेनेति** । मुखत इत्यर्थः । **नासङ्गतिरिति** । दृष्टान्तानभिधानप्रयुक्तासङ्गतिर्नेत्यर्थः ।





**स०ना०**— ननु नेदं पौनरुक्त्यं दूषणं वक्तृश्रोतृभेदात् । तमेव प्रतीतेनैवोक्तस्यार्थस्य प्रतिपादने खलु दोषः स्यात् । अन्यथा देवदत्तेन यज्ञदत्तं प्रति उक्तमर्थं स्वशिष्याय प्रतिपादयन् यज्ञदत्तः प्रत्याख्यातः स्यादिति शङ्का-निरासाय त्रिः प्रथमामन्वाह । त्रिरुत्तमामित्यनेन येन मन्त्रद्रष्टारं प्रत्युक्तं त्रिः प्रथमामन्वाहेति तं प्रति तेनैव पुनरुच्यते इति पौनरुक्त्यमपरिहार्यमित्युच्यते । न चैवं सत्यस्य व्याख्यानस्य विरोधो भवति । **अन्यथा हेतूनां भागासिद्धत्वादिति** । एकदेशानृतत्वं देशान्तराप्रामाण्यं विनाऽप्युपपन्नमिति । नाद्यः कल्प इत्युक्तम् । इदानीं तु अन्यथा अप्रयोजकत्वस्य दूषणानङ्गीकारे हेतूनां भागासिद्धत्वात् नाद्यः कल्प इत्युच्यत इति बोध्यम् ।

**विठ्ठ०**— **अन्यथेति** । अनृताननृतादिरूपोभयविधवाक्यपक्षीकारेण सर्वाप्रामाण्यसाधने अनृतत्वादिहेतूनां भागासिद्धिः स्यादित्यर्थः ।

**चषकः**— **वेदमात्रमिति** । वेदत्वव्यापकत्वविशिष्टसंसर्गावच्छिन्नाप्रामाण्यवृत्तिविधेयताकानुमितेरुद्दे-श्यतोपेयते तदविशेषिततदवच्छिन्नतादृशविधेयताकानुमितेर्वेति विकल्पाशयः । प्रत्यक्षवच्चेति प्रतीकेण प्रकृतहेतो-र्भागासिद्धिर्ध्वन्यत इत्याशयेन तथा योजयति **नाद्येति** । अन्यथेत्याद्युपपत्तेरित्यन्तेन । **अनृतत्वादाविति** । अविद्यमानार्थविषयकत्वादावित्यर्थः । **अन्यथेति** । प्रकृतपक्षतावच्छेदकीभूतवेदत्वावच्छेदेनानुमितेरुद्देश्यतोपगमे । तादृशानुमित्यौपयिकप्रकृतपक्षतावच्छेदकव्यापकत्वविशिष्टहेतुतावच्छेदकसंसर्गावच्छिन्नहेतुवृत्तिप्रकारताकपरामर्शा-भावेन तादृशानुमित्यनुत्पादप्रसङ्ग इति भावः । **द्वितीये त्विति** । प्रकृतपक्षतावच्छेदकसामानाधिकरण्येनानुमि-त्युद्देश्यताकल्पस्य च सामान्यधर्मावच्छेदेन विप्रतिपत्त्यनानुगुण्यप्रसङ्गेनार्थान्तरतापातादित्याशयः ।

**प्रदीपः**— तत्रोत्तरं वक्ष्यमाणप्रकारेणापौरुषेयत्वेन वेदप्रामाण्यसिद्धौ फलानुपलब्धिः कर्त्रादिवैगुण्येनेति सिद्ध्यति शेषग्रहणाग्रहणयोर्विहितप्रतिषिद्धयोः विहितप्रतिषिद्धत्वाद्विकल्पः स्यात् इति न्यायेन विकल्पः उदिता-नुदितयोः होमयोरधिकारिभेदेन व्यवस्था तात्पर्यलिङ्गाभ्यासेन वाधिकविवक्षया अनुवादादिरूपत्वेन वा पौनरुक्त्य-दोष इति । ''ज्ञानस्योत्पादकत्वं हि स्वतस्त्वं जनने मतम् । ज्ञाने ग्राहकवेद्यत्वं यथार्थत्वस्य वेदने ।'' नाद्यो व्याघातादिति ज्ञानं ज्ञानहेत्वतिरिक्तहेत्वधीनमिति व्याहतमित्यर्थः ।

**६०८ सु०— किञ्चेदमनृतत्वम् । अर्थव्यभिचारित्वमिति चेत् । नन्विदमेवाप्रामाण्यमिति साध्याविशिष्टता । न चानृतत्वमेकदेशोऽपीति सूत्रकार एव वक्ष्यति ।**

**परि०— नन्विदमेवेति** । इदमेव (खल्वि)नन्विति खल्वर्थे ननुशब्दः । अरे इति संबोधनार्थे वा । **न चेति** । चकारः किञ्चेत्यर्थे । **सूत्रकार इति** । नविलक्षणत्वनये दृश्यते चेति गुणसूत्रेणेति भावः ।

**यादु०**— **वक्ष्यतीति** । कर्तृकर्मादिसाद्गुण्ये फलनियमेन तद्वैगुण्यनिबन्धनमेव फलादर्शनमिति न विलक्षणत्वादित्यत्र वक्ष्यतीत्यर्थः ।





**वं०प०— नन्विदमेवेति**। इदमेवार्थव्यभिचारित्वमेवाप्रामाण्यम्। ननु खल्वित्यर्थः।

**आनन्दः—** एवमेकदेशेऽनृतत्वमङ्गीकृत्य समाहितं इदानीं सर्वांशेऽप्यनृतत्वं नास्तीत्याह **न चेति**।

**कं०रा०— न चानृतत्वमिति**। पुत्रकामः पुत्रेष्ट्या यजेतेत्यादिवेदैकदेशेऽप्यर्थव्यभिचारित्वरूपमनृतत्वं नैवास्ति। क्वचित्फलाभावस्य कर्मवैगुण्यादिनिबन्धनत्वादिति। दृश्यते त्विति सूत्रकार एव वक्ष्यतीत्यर्थः।

**श्रीनिधि०—** एवं चेत् सर्ववेदस्यापि मीमांसानुग्राह्यप्रमाणत्वमिति गतः पक्ष इत्यत आह **न चानृतत्वमेकदेशेऽपीति**।

**वा०चं०—** एवमनृतत्वादिहेतुत्रयं साधारणदूषणेन प्रदूष्य प्रत्येकदूषणेनापि दूषयति **किञ्चेत्यादिना**। नन्वविपरीतार्थाप्रतिपादकत्वमप्रामाण्यमनृतत्वं चायथाभिधानमित्युक्तमित्यत आह **न चेति**। बोधकवेदे प्रामाण्यस्यौत्सर्गिकत्वादकारणकार्योत्पत्त्यसंभवेनाप्रामाण्यकारणदोषाभावेऽप्रामाण्यस्यासंभवादनन्यथासिद्धापौरुषेयतया स्वतो दोषशून्यवाक्यरूपवेदे पुरुषदोषनिबन्धनदोषाभावेनापवादकाभावेन प्रामाण्ये निश्चिते सामग्रीवैकल्यप्रतिबन्धकसद्भावाभ्यामन्यथासिद्धफलविसंवादस्य पुत्रकामादिवाक्यबोध्यपुत्रेष्टिसाध्यसाधनभावाविघातकतया तद्वाक्येऽयथाभिधानाभावेन तादृशानृतत्वस्याप्यसिद्धतया यादृशतादृशफलव्यभिचारमात्रस्यायथाभिधानानापादकतया नानृतत्वेन वेदाप्रामाण्यमित्येतत्प्रमेयं नित्यत्वस्वतःप्रामाण्यरूपपाशुपतादिस्मृतिवैलक्षण्यं नविलक्षणत्वादित्यत्र वदन् सूत्रकार एव वक्ष्यतीत्यर्थः।

**वा०र०— अविपरीतार्थेति**। उभयोरपि भिन्नप्रतियोगिकाभावरूपतया नैकरूपतेत्याशयेनैवं विवरणमिति बोध्यम्। **उक्तमिति**। उक्तप्रायमित्यर्थः। प्राक्प्रामाण्यस्याविपरीतार्थबोधकत्वरूपत्वोक्तिरपि प्रामाण्याभावादनृतत्वस्य भेदसिध्यर्थमिति अत्रापि तथैवानुवाद इति ज्ञेयम्। तथाच सन्दिग्धकालातीतत्वं तथाच सन्दिग्धबाध इत्येतट्टीकावाक्यद्वयोपपादनं तत्त्वनिर्णयटीकाव्याख्यानरूपगुरुपादोक्तितद्व्याख्यानरूपास्मल्लेखानुसारेण ज्ञेयम्।

**स०व्र०— न चानृतत्वमेकदेशेऽपीति**। कर्तृकर्मादिसाद्गुण्ये फलनियमेन तद्वैगुण्यनिबन्धनमेव फलादर्शनमिति द्वितीये वक्ष्यतीत्यर्थः।

**विट्ठ०—** नन्विदमित्यत्र नन्वित्यस्य तर्हीत्यर्थः। खल्वित्यर्थो वा अर इति संबोधनार्थो वा। **न च अनृतत्वमिति**। चः किञ्चेत्यर्थे कर्त्रादिसाद्गुण्ये फलनियमेन तद्वैगुण्यनिबन्धनमेव फलादर्शनमिति नविलक्षणत्वाधिकरणे दृश्यते चेति सूत्रेण वक्ष्यतीत्यर्थः।

**चषकः— वक्ष्यतीति**। फलनियमस्य कर्तृकर्मादिसाद्गुण्यनियन्त्रिततया तद्वैगुण्यनिबन्धनमेव फलादर्शनमिति नविलक्षणत्वादितिनये अभिधास्यतीत्यर्थः।





**६०९ सु०— व्याघातेन चाप्रामाण्यं साधयन् किं वाक्यद्वयं पक्षीकुर्यादुतैकमेव । नाद्यः । व्याहतयोः प्रत्यक्षयोरनुमानयोर्वा मध्येऽन्यतरप्रामाण्यसंभववद्वाक्ययोरप्यन्यतरप्रामाण्य-संभवात् । न द्वितीयः अनिश्चितदशायामन्यतरप्रत्यक्षादिवत्पक्षीकृतस्यापि प्रामाण्य-संभवात् ॥ अपि च व्याघातोऽप्यापाततः सर्वथा वा । नाद्यः आपाततो व्याघातवतोऽपि प्रत्यक्षादेरिव वेदस्यापि प्रामाण्यसंभवात् । न द्वितीयः प्रत्यक्षादाविवासिद्धेः । यथा चासिद्धिस्तथा सूत्रकृदेव वक्ष्यति ।**

**परि०— अन्यतरप्रामाण्यसंभवादिति** । तथाच तत्त्वनिर्णयटीकोक्तदिशा सन्दिग्धकाला-तीतत्वस्य सन्दिग्धानैकान्तिकत्वस्य चा(वा)पातः । स्वारसिकसाध्यसन्देहस्यादोषत्वेऽप्यप्रयोजक-त्वाहितपक्षीयसाध्यसन्देहस्य दोषत्वादिति भावः । एवमग्रेऽपि ध्येयम् । **प्रत्यक्षादाविवेति** । अयं घटो द्रव्यमिति न शुक्ल इति प्रत्यक्षयोः पर्वतोऽग्निमान्धूमवत्त्वान्न तरुमान्पाषाणमात्रराशित्वादित्यनुमानयोर्यथा तथेत्यर्थः । **वक्ष्यतीति** । उपासनापादे द्वितीयनये । 'उपसंहारोऽर्थभेदाद्विधिशेषवत्समाने चे'ति । 'न वा प्रकरणभेदात्परोवरीयस्त्वादिवदि'ति च सूत्राभ्यामुक्तोपसंहारानुपसंहारयोस्तदनुगुणवाक्ययोश्च व्याघात-निरासाय 'प्राप्तेश्च समञ्जसमि'ति तृतीयनयेऽधिकारिभेदेन द्वयोश्च सामञ्जस्योक्त्या षोडशिग्रहणा-ग्रहणोदितानुदितहोमादिवाक्यानामपि व्याघातो नेति प्राप्तत्वात्सूत्रकृदेव वक्ष्यतीत्युक्तम् । उपसंहारानुप-संहारादिबोधकवाक्यानामेवात्रोदाहर्तव्यत्वेऽपि कर्मकाण्डगतवाक्योदाहरणं वाद्यन्तरैरुदाहृतत्वात्प्रसिद्ध-त्वाच्च । यद्वा 'न वियदश्रुतेरि'त्यादिद्विपाद्यामशेषवाक्यव्याहतेः परिहरिष्यमाणत्वात् सूत्रकृदित्युक्तम् ।

**गु०दी०— आपाततो व्याघातवत** इत्यत्र घटोऽस्ति नास्तीति प्रदेशप्रभेदेन परिहारयोग्यो व्याघातः आपातव्याघातः । **वेदस्यापि प्रामाण्यसंभवात्** इत्यत्र शाखाभेदेन व्याघातपरिहारे प्रामाण्यसंभवादित्यर्थः ।

**यादु०— अन्यतरप्रामाण्यसंभवादिति** । तथा च बाध इति भावः । **पक्षीकृतस्यापि प्रामाण्य-संभवादिति** । तथा च सन्दिग्धकालातीतत्वमिति भावः । यद्यपि बाधसंशयो ग्राह्यसंशयपर्यवसन्न इति नानुमितिप्रतिबन्धकः । तथाऽपि स्वारसिकस्य तस्य तथात्वेऽपि हेतोरन्यथासिद्धिशङ्काऽऽहितस्य तत्र प्रतिबन्धकत्वमस्त्येवेति ज्ञातव्यम् । **वक्ष्यतीति** । न विलक्षणत्वादित्यत्रोक्तन्यायेन वेदस्य प्रामाण्ये सिद्धे षोडशिग्रहणाग्रहणयोरनन्यगत्या विकल्पाश्रयणेनोदितानुदितहोमयोश्चाधिकारिभेदेनोपपत्तौ सर्वथा व्याघाताभावेन असिद्धिरिति वियत्पादे वक्ष्यतीत्यर्थः । तत्रोपलक्षणया सर्वेषां श्रुतिगतपरस्परविरोधानां परिहृतत्वादिदमपि तत्रोक्तमेवेत्यभिप्रेत्यैवमुक्तमिति ज्ञातव्यम् । तदुक्तम् । 'अथाशेषसमाम्नायविरोधापाकृतिं प्रभुः । करिष्यन्' इति । वस्तुतो न वैयर्थ्यम् । अतिगहनप्रमेयस्यैकेन प्रमाणेन बुद्धावनारोहादत उक्तम् ।





**आनन्दः**— वक्ष्यति नविलक्षणत्वादित्यादौ **प्रत्यक्षादाविवेति** । प्रत्यक्षादौ सर्वथा व्याघातस्य असिद्धत्ववदन्यत्रापि सर्वथा व्याघातत्वमसिद्धमित्यर्थः । तथाचात्र न विरोधस्तथा वक्ष्यति । सूत्रकृद्विचारित न्याय इति शेषः ।

**कं०रा०**— **यथा चासिद्धिरिति** । वेदवाक्येषु सर्वथा व्याघातस्यासिद्धिर्यथा भवति तथा श्रुतीनां परस्परविरोधपरिहारात्मके पादद्वये सूत्रकृदेव वक्ष्यतीत्यर्थः । यद्यपि न वियदश्रुतेरित्यादिसूत्रेष्वतिरात्रे षोडशिनं गृह्णातीत्यादीनां वाक्यानां भाष्यकृताऽनुदाहृतत्वात्तेषामविरोधस्तत्र नोक्त इति भाति । तथाऽपि पृथिव्यधिकार-रूपशब्दान्तरादिभ्य इत्यत्रादिशब्देनापौरुषेयत्वादियुक्तिं सङ्गृह्य निर्दोषवेदवाक्यानां सर्वथा विरोधो न संभवती-त्युक्तत्वात् । अतिरात्रेत्यादिवाक्यस्य विकल्पपरतयोदितहोमादिवाक्यस्य शाखाभेदविषयत्वेनाविरोध उक्तप्राय एवेति द्रष्टव्यम् ।

**श्रीनिधि०**— नन्वेवमपि न पक्षीकृतस्य प्रामाण्यनिश्चय इत्यत आह **अपि चेति** ।

**वा०चं०**— **व्याहतयोरिति** । तथा च सन्दिग्धकालातीतत्वमिदं रजतमिति प्रत्यक्षादिविरुद्धेनेदं रजतमिति प्रत्यक्षादावनैकान्तिकत्वं चेति भावः । **अनिश्चितेति** । तथा च सन्दिग्धबाध इति भावः । **आपातेति** । तथा चानैकान्त्यमिति भावः । **असिद्धेरिति** । न तावत् षोडशीग्रहणाग्रहणवाक्ययोर्व्याघातः । नातिरात्र इत्यस्य पर्युदासार्थवादत्वासंभवेऽपि प्रतिषेधत्वसंभवात् । नन्वत एव विधिप्रतिषेधयोर्विरोध इत्युक्तमिति चेन्न । यदा विधिस्तदा न प्रतिषेधो यदा प्रतिषेधस्तदा न विधिरिति विधिनिषेधयोः परस्परबाधकत्वेन पक्षे एकस्य मिथ्याप्रत्ययत्वकल्पनात् । न च विधिप्रतिषेधयोः सर्वदा प्राप्तिरिति वाच्यम् । प्रयोगवचने एककल्प-ग्रहणेनेतराग्रहणोपपत्तेः । प्रतिषेधावैयर्थ्यायाग्रहणेऽपि क्रतुसिद्धेः । विध्यर्थवत्त्वायानुष्ठाने फलभूयस्त्वस्य च कल्पनेनोभयोपपत्तेः । नाप्युदितादिवाक्ये परस्परमग्निहोत्रं जुहोतीत्यनेन च विरोधः । अग्निहोत्रं जुहोतीतिवाक्य-विहितहोमानुवादेन कालत्रयविधिपराणामेषां वाक्यानां परस्परार्थप्रतिषेधकत्वाभावात् । यद्यपि चैको होमः समुच्चयेन तदा तदा न शक्यः कर्तुम् । तथाऽपि विकल्पेन करिष्यते । व्यवस्थिते वस्तुनि विकल्पासंभवे-ऽप्यनुष्ठानेऽनागतोत्पाद्ये विधिप्रतिषेधविकल्पानामविरोधात् । अत एवाह गौतमः । उभयप्रतिषेधानभिधानाद्दिति । नाप्येषां निन्दावाक्यैर्विरोधः । 'न हि निन्दा'न्यायेनेतरस्तुत्यर्थतयाऽऽधानकाले नियमपरिगृहीतोदितादिकालातिक्रमे-ऽभ्युपेतकालातिक्रमेण तद्विषयतया वा निन्दाद्युपपत्तेः । अत एवाह गौतमः । अभ्युपेत्य कालभेदे दोषवचनादिति । जैमिनिरपि प्रक्रमाद्वा नियोगेनेति । नाप्याकाशादिसादित्वानादित्ववाक्यानां विरोधः । व्यवस्थया तत्राप्य-विरोधोपपत्तेरिति भावः । यद्यपि ग्रहणाग्रहणोदितादिवाक्येषु व्याघातपरिहारः सूत्रकृता न वक्ष्यते तथाऽपि शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णय इत्युक्तत्वादाकाशादिसादित्वानादित्वादिगुणोपसंहारानुपसंहारादिश्रुतीनां व्याहतिपरिहाराय व्यवस्थाविकल्पादिकं गौण्यसंभवात्, अरूपवदेव हि तत्प्रधानत्वात्, प्रकाशवच्चावैयर्थ्यं, न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्, पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् मन्त्रादिवद्वा विरोधः, इत्यादिसूत्रैः





अतीन्द्रियमात्रस्य पक्षत्वेन यत्र प्रत्यक्षतासामग्र्या सद्भावाभावस्तत्र प्रत्यक्षताभावः । यथा अमुक इति दृष्टान्ताभावेन प्रतिपक्षानुत्थितेः कथमस्योपाधित्वमित्यत आह **साध्यव्यापकत्वादिनेति** । दृष्टान्ताभावेनोपाधिव्यतिरेकेण साध्यव्यतिरेकाभावो न दोषाय साध्यव्यापकत्वसाधनाव्यापकत्वमात्रेण साधनाव्यापकत्वात्पक्षाद्व्यावृत्तमान उपाधिसाध्यव्यापकत्वात्स्वव्याप्यं व्यावृत्तयतीत्यस्य लब्धत्वेन प्रतिपक्षानुमानेऽन्वयव्याप्त्यसंभवेऽपि व्यतिरेकव्याप्तिसंभवादिति भावः ।

**चषकः**— **उद्भूतरूपादिरूपत्वात्तस्येति** । उक्तोपाधेरित्यर्थः । एतेन धर्मादिकं धर्मीकृत्य प्रत्यक्षसामग्रीसद्भावसाधने प्रत्यक्षत्वमुपाधिरित्यभिहितं भवति । ननु 'साध्याभावाविनाभावी स उपाधिर्यदत्यय' इत्युदयनमते साध्याभावनिरूपितव्याप्तिविशेषिताभावप्रतियोगिन एवोपाधित्वोपगत्या प्रकृते चातीन्द्रियसामान्यस्य पक्षतया तदन्यस्मिंश्च साध्योपाध्योरेव सत्त्वेन तद्व्यतिरेकयोर्व्याप्तिर्दुर्ग्रहतयोपाधिता दुर्निरूपेत्याशङ्कायां नव्यैरुदयनोक्तभङ्गीमवज्ञाय साध्यव्यापकत्वविशेषितसाधनाव्यापकतामात्रस्यैव तल्लक्षणत्वसमर्थनेन तादृग्लक्षणस्य च प्रकृतेऽप्यक्षततया न क्षतिरित्याह **साध्येति** ।

**६३९ सु०— स्यादेतदेवं यदि बुद्धादीन्पक्षीकृत्यानुमानम् । ईश्वरवादिनं प्रति तु कथम् । ईश्वरो हि तनुभवनादीनां कार्यत्वेन कर्ता सिद्ध्यन् सर्वज्ञ एव सिद्धः । यथा चेश्वरपक्षीकारेण सर्वज्ञतासाधनेऽपि नाश्रयासिद्धिधर्मिग्राहकविरोधौ, तथाऽऽचार्य एव 'शास्त्रयोनि'सूत्रे वक्ष्यति ।**

**परि०**— ननु बुद्धादीन्पक्षीकृत्य पुंस्त्वहेतुना सार्वज्ञाद्यभावसाधने आश्रयासिद्ध्यादेरभावेऽपि तार्किकं प्रति ईश्वरो न सर्वज्ञः पुंस्त्वादिति साधने तदसिद्धिसिद्धिभ्यां आश्रयासिद्धिधर्मिग्राहकप्रमाबाधौ स्यातामिति शङ्कते **स्यादेतदिति** ।

**यादु०**— **ईश्वरवादिनं प्रतीति** । तेनोक्तसामान्यसिद्धिपरिशेषाभ्यामीश्वरसार्वज्ञ्यं न साध्यते येन पुंस्त्वादित्यनुमाहतिः स्यादिति भावः । तर्हि कथं तन्मते सार्वज्ञ्यसिद्धिरित्यत आह **ईश्वरो हीति** । अत्र चेश्वरो न धर्मदर्शी पुंस्त्वादित्यनुमानं धर्मिग्राहकमानबाधितम् । अन्यथाऽऽश्रयासिद्धमिति भावः । उत्तरमाह **यथा चेश्वरेति** । **वक्ष्यतीति** । 'वनकृत्त्वादिरूपेण पक्षभूतस्य चेशितुः । किञ्चिज्ज्ञत्वं हि पुंस्त्वेन शक्यं साधयितुं सुखमि'त्यत्र न क्षित्यादिसर्वकर्तृत्वेन तस्य पक्षता येनोक्तदोषः । किन्तु प्रसिद्धकर्तृरहितवनकृत्त्वेनैव । तथा च न पुंस्त्वानुमाने धर्मिग्राहकमानबाधादिकमिति वक्ष्यतीत्यर्थः ।

**आनन्दः**— **ईश्वरो हीति** । तथा चात्र नाश्रयासिद्धिः धर्मिग्राहकविरोधादिति भावः । परिहरति **यथा चेति** ।





**कं०रा०— ईश्वरवादिनं प्रति त्विति** । न बुद्धो धर्मदर्शी स्यात्पुंस्त्वादित्येवं बुद्धादीन्पक्षीकृत्य असर्वज्ञत्वसाधनमिवेश्वरवादिनं प्रति नेश्वरः सर्वज्ञः पुंस्त्वादित्यसर्वज्ञत्वसाधनं न कथञ्चित्संभवतीत्यर्थः । कुत इत्यत आह **ईश्वरो हीति** । हि यस्मात्तनुभवनादीनां कार्यत्वेन हेतुना कर्तृत्वेन सिध्यन्नीश्वरः सर्वज्ञतयैव सिद्धोऽतो धर्मिग्राहकमानविरोधात्तस्यासर्वज्ञत्वानुमानं न संभवति । तदसिद्धौ त्वाश्रयासिद्धेस्तन्न संभवतीति भावः । परिहरति **यथा चेति** । ईश्वरपक्षीकारेणासार्वज्ञतासाधनेऽप्याश्रयासिद्धिधर्मिग्राहकमानविरोधौ यथा न भवतस्तथा आचार्य एव शास्त्रयोनिसूत्रव्याख्यानावसरे 'वनकृत्त्वादिरूपेण पक्षभूतस्य चेशितुः । किञ्चिज्ज्ञत्वं हि पुंस्त्वेन शक्यं साधयितुं सुखमि'त्यत्र वक्ष्यतीत्यर्थः ।

**श्रीनिधि०— तथाऽऽचार्य एव शास्त्रयोनिसूत्र इति** । 'वृक्षकृन्नाखिलं वृक्षमि'त्यादिनेति भावः ।

**वा०चं०— वक्ष्यतीति** । 'वनकृत्त्वादिरूपेण पक्षभूतस्य चेशितुरि'त्यादिनेति शेषः ।

**स०व्र०—** उत्तरमाह **यथेश्वरपक्षीकारेणेत्यादिना** । ततः अत्रापीश्वरो न सर्वज्ञः पुंस्त्वादित्यनुमान-बाधस्तदवस्थ एवेत्युत्तरमादावुपस्कर्तव्यम् । नन्वत्रेश्वरः सिद्धो न वा । नेति पक्षे आश्रयासिद्धिः, आद्ये धर्मिग्राहकमानबाध इत्याशङ्कापरिहाराय यथाचेत्यादिवाक्यं योज्यम् । **वक्ष्यतीति** । 'वनकृत्त्वादिरूपेण पक्षभूतस्य चेशितुः । किञ्चिज्ज्ञत्वं हि पुंस्त्वेन शक्यं साधयितुं सुखमि'ति वक्ष्यतीत्यर्थः । तथाचेश्वरस्य नेश्वरत्वेन पक्षत्वं अतो नोक्तदोषः । किन्तु प्रसिद्धकर्तृरहितवनकृत्त्वेनेत्युक्तं भवति ।

**वि०ठ०—** कात्र कथन्तेत्यत आह **ईश्वरो हीति** । यद्युक्तरीत्या सामान्यसिद्धिपरिशेषाभ्यामीश्वरसिद्धिः स्यात्तदा पुंस्त्वानुमाने न हतिः तनुभवनादिकं सर्वं सकर्तृकं कार्यत्वादित्यनुमानेन सर्वकर्तृतया सिध्यन्नीश्वरः सर्वज्ञ एव सिध्यति । तत्रेश्वरो न धर्मदिः पुंस्त्वादित्युक्ते ईश्वरसिद्धौ धर्मिग्राहककार्यत्वानुमानबाधः असिद्धावाश्रयासिद्धिः । अतस्तं प्रति कथं प्रतिपक्षानुमानप्रवृत्तिरिति शङ्काभिप्रायः । उत्तरमाह **यथा चेति** । 'वनकृत्त्वादिरूपेण पक्षभूतस्य चेशितुः । किचिज्ज्ञत्वं हि पुंस्त्वेन शक्यं साधयितुं सुखमि'ति वक्ष्यतीत्यर्थः ।

**चषकः— शास्त्रयोनिसूत्रे वक्ष्यतीति** । 'वनकृत्त्वादिरूपेणे'त्यनुव्याख्याव्याख्यावसरे न क्षित्यादिसर्व-कर्तृत्वेन तस्य पक्षता येनोक्तदोषः किन्तु प्रसिद्धकर्तृरहितवनकृत्त्वेनैव । तथा च न पुंस्त्वानुमाने धर्मिगाहक-मानबाधादिकमित्यभिधास्यतीत्यर्थः ।

**६३६ सु०— तदेवं धर्मादिसिद्ध्यन्यथाऽनुपपत्त्याऽपौरुषेयं वाक्यं किमपि सर्वैर्वादिभि-रभ्युपेयमिति स्थितम् । तच्चापौरुषेयं वाक्यं वेद एव, परिशेषात् । तदतिरिक्तानि हि कर्तृप्रसिद्धिमन्ति । न च धर्मादिव्यवस्थापराणि । न चैवं वेद इति भावः ।**





**परि०— न च धर्मादिव्यवस्थापराणीति**। धर्मादिव्यवस्थापराणि न चेत्यर्थः।

**वं०प०—** परिशेषमुपपादयति **तदतिरिक्तानि हीति**। वेदातिरिक्तानीत्यर्थः। **न चैवं वेद इतीति**। किन्तु कर्तृप्रसिद्धिशून्यो धर्मादिव्यवस्थापरश्चेत्यर्थः।

**वा०चं०—** एवं संभावकयुक्तिं समर्थ्योपसंहरति **तदेवमिति**। पूर्वमुपसंहारदशायामभ्युपेयमितीदानीं च स्थितमिति वैचित्र्येण पूर्वं प्रमाणोपन्यासमात्रमिदानीं च तत्समर्थनेन दृढीकरणमिति सूचयति। एवं मुखतः प्रतीतां संभवयुक्तिमुक्त्वा 'अपि वेदानामङ्गीकार्या हि नित्यता, न हि धर्मादिसिद्धिः स्यादि'त्यादिना तात्पर्यतो लब्धां वेदनित्यत्वे उपपत्तिमाह **तच्चेति**। अथवाऽपौरुषेयवाक्यविषयिणीं सामान्यसिद्धिं मुखतः प्रतिपादितामुपपाद्य वेदापौरुषेयत्वविषयकमभिप्रायतो लब्धं परिशेषमाह **तच्चेति**।

**६३७ सु०— नन्वेवं सति वेदादेव सर्वेषां धर्मादिप्रतिपत्तिरित्यायातम्। सत्यमेवमेतत्। किन्तु धर्मादिस्वरूपे वेदात्प्रतीते तद्विशेषेषु तमतिक्रम्य स्वमतिदोषाद्वादिनां विप्रतिपत्तयः प्रतीयन्त इति।**

**परि०—** धर्माधर्मस्वरूपज्ञानं धर्मादिशब्दस्य तत्र सङ्केतज्ञानं धर्मादिशब्दव्यवहारश्च वेदबाह्यानां न स्यादिति भावेन शङ्कते **नन्वेवमिति**। विदिताभिप्राय उत्तरमाह **सत्यमिति**।

**वं०प०— प्रतीत इति**। सामान्यत इति शेषः। **तद्विशेषेष्विति**। केषोलुञ्चनसप्तघटिकातः प्राग्भोजनादिरूपेषु धर्मविशेषेष्वित्यर्थः। **तं** वेदम्। **प्रतीयन्ते** विस्तृता भवन्ति।

**आनन्दः— नन्वेवं सतीति**। न वादिनां प्रतिपत्तयः स्युरित्याशयः।

**कं०रा०— आयातमिति**। तथा चैकस्माद्वेदाज्जायमानायाः सर्वपुरुषीयधर्मादिप्रतीतेरेकप्रकारत्वावश्यंभावाद्धर्मादिविषये वादिनां विप्रतिपत्तयो न स्युरिति भावः। **वादिनामिति**। यद्यपि **प्रतीयन्त इति** कर्मविहितलकारादेशतिङा कर्तुरनभिहितत्वादनभिहिते च कर्तरि कर्तृकरणयोस्तृतीयेति तृतीयाया अनुशिष्टत्वाद्वादिभिः प्रतीयन्त इति निर्देष्टव्यम्। तथाऽपि वादिनां संबन्धिन्यो विप्रतिपत्तयस्तच्छिष्यैः प्रतीयन्त इति कर्त्रध्याहारेण वा पच्यते ओदनः स्वयमेवेत्यादिवद्वादिनां विप्रतिपत्तयः स्वयमेव प्रतीयन्त इति कर्मकर्तृत्वाश्रयणेन वा वादिनामिति षष्ठीनिर्देशोपपत्तिरिति द्रष्टव्यम्। प्रतीयन्ते प्रतन्यन्ते 'तनोतेर्यकि' इति वैकल्पिकमात्वम्।

**वा०चं०—** गूढाभिसन्धिः शङ्कते **नन्विति**। तथैवोत्तरमाह **सत्यमिति**। प्रमापकप्रमाणस्यैकत्वे धर्मादौ वादिनां मतभेदो न स्यादित्याशयेन शङ्किता स्वाशयमुद्घाटयति **किन्त्विति**।





**विठ्ठ०**— वेदेनैव धर्मादिनिश्चयो नान्येनेति चेद्विशेषस्यापि वेदेनैव निश्चितत्वाद्धर्मादिविषयकवादिविप्रतिपत्तयो न स्युरिति गूढाभिसन्धिः शङ्कते **नन्वेवं सतीति** । शङ्कां तावदङ्गीकरोति **सत्यमिति** । शङ्कते **किन्त्विति** । स्वाशये सूचिते परिहरति **धर्मादिस्वरूपे इति**।

॥ वेदस्य सकर्तृकत्वनिरासः ॥

वेदसकर्तृकत्वशङ्का—

**६३८ सु०— ननु वेदस्यापि सकर्तृकत्वमनुमानागमसिद्धम् । तथा हि । वेदवाक्यानि पौरुषेयाणि वाक्यत्वात्कालिदासवाक्यवत् इति । अयं कालो वेदव्यतिरिक्तेदानीन्तनत्वरहितपौरुषेयवान्कालत्वात् अन्यकालवत् । आकाशो वेदव्यतिरिक्ताकाशनिष्ठत्वरहितपौरुषेयवान् द्रव्यत्वात् तन्तुवत् । श्रोत्रं वेदव्यतिरिक्तश्रोत्रग्राह्यत्वरहितपौरुषेयग्राहकम् । इन्द्रियत्वात् चक्षुर्वत् । 'प्रजापतिर्वा इदमेक एवाग्र आसीत् नाहरासीत् न रात्रिरासीत् । स तपोऽतप्यत तस्मात्तपस्तेपानाच्चत्वारो वेदा अजायन्ते'ति । तत्कथम् परिशेषाद्वेदस्य अपौरुषेयतासिद्धिरिति ।**

**परि०— वेदव्यतिरिक्तेति** । वेदव्यतिरिक्तं यदिदानींतनलौकिकवाक्यादि तस्य भावः वेदव्यतिरिक्तेदानींतनत्वं तद्रहितो यः पौरुषेयः तद्वान् वेदान्येदानींतनान्यपौरुषेयवानिति यावत् । यद्यपि वेदान्येदानींतनत्वरहितः पौरुषेयः अतीतागामिकालीनो लौकिकवाक्यपदादिर्वेदश्च भवति । तत्रातीतादिपदार्थवत्त्वस्य बाधात्तादृशवेदत्वेनैव पक्षे साध्यपर्यवसानम् । दृष्टान्ते चेदानींतनपदार्थान्यतत्कालीनपदार्थवत्त्वेन साध्यं ध्येयम् । अत्र पौरुषेयवानित्युक्तौ वेदव्यतिरिक्तपौरुषेयवानित्युक्तौ वा सिद्धसाधनता अतो विशिष्टसाध्योक्तिः । एवमुत्तरत्र प्रयोगद्वयेऽप्यर्थो बोध्यः । **तन्तुवदिति** । तत्रोक्तरूपपटवत्त्वेन साध्यं बोध्यम् । चक्षुर्वदित्यत्र तादृशरूपग्राहकत्वेन साध्यं ध्येयम् ।

**गु०दी०— अयं कालः वेदव्यतिरिक्तेदानीन्तनत्वरहितपौरुषेयवान्** इति विशिष्टव्यतिरेक्यनुमानस्य अयमभिप्रायः । वेदव्यतिरिक्तत्वे सतीदानीन्तनत्वाख्यविशिष्टं वेदत्वे सतीदानीन्तनत्वसहितें वेदे वेदव्यतिरिक्तत्वरूपविशेषणाभावात् न, वेदव्यतिरिक्तत्ववति आगामिनि तु इदानीन्तनत्वाख्यविशेष्याभावान्न । एवं च वेदव्यतिरिक्तेदानीन्तनत्वरहितपौरुषेयः वेदोऽपि भवति, आगामिकार्यं च भवति, तत्रागामिपौरुषेयकार्यवत्त्वमादाय न साध्यासिद्धिः पक्षे, आगामिपौरुषेयवत्त्वस्य पक्षीकृतेऽस्मिन् काले स्पष्टं बाधितत्वात् । अतो वेदे अपौरुषेयत्वस्याद्यापि सन्दिग्धत्वेन बाधाभावाद्वेदाख्यपौरुषेयवत्त्वमादायैव पक्षे साध्यपर्यवसानम् । दृष्टान्ते तु आगामिपौरुषेयवत्त्वमादायैव साध्यपर्यवसानमिति । एवमुत्तरानुमानद्वयेऽपि विशिष्टव्यतिरेको द्रष्टव्यः ।





**यादु०— अयं काल इति**। वर्तमानकाल इत्यर्थः। वेदव्यतिरिक्तं यदिदानींतनत्वरहितपौरुषेयवेदरूप एव तद्वानित्यर्थः। अत्रातीतादिकालस्य पक्षत्वे सिद्धसाध्यतावारणायायमित्युक्तम्। साध्ये पौरुषेयवानित्येवोक्ते सिद्धसाध्यता। अत इदानींतनत्वरहितेत्युक्तम्। तावत्युक्ते बाधः। अस्मिन्काले विद्यमानस्य पौरुषेयस्येदानींतनत्वेन तद्राहित्यासंभवात्। अतो वेदव्यतिरिक्तेदानींतनत्वविशेषणम्। तथा चास्मिन्काले विद्यमाने वेदरूपे पौरुषेये इदानींतनत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणराहित्याद्विशिष्टराहित्यमुपपन्नमिति न बाधः। वेदरूपपौरुषेयवानित्येवोक्तौ दृष्टान्ते साध्यवैकल्यम्। अन्यकाले पौरुषेयवेदत्वासम्मतेः। अतो विशिष्टव्यतिरेकगर्भता। एवं चान्यकालगतपौरुषेये इदानींतनत्वरूपविशेष्याभावेन विशिष्टाभावो दृष्टान्तेऽप्यस्तीति न साध्यवैकल्यमिति भावः। एवमग्रेऽपि विशिष्टव्यतिरेकगर्भताप्रयोजनं द्रष्टव्यम्। एवमाकाशपक्षकानुमाने पौरुषेयवानित्येवोक्तौ सिद्धसाध्यता। अत आकाशनिष्ठत्वरहितेत्युक्तम्। तावन्मात्रोक्तौ बाधः। आकाशगते पौरुषेये आकाशनिष्ठत्वराहित्यासंभवादतो वेदव्यतिरिक्तेत्याकाशनिष्ठविशेषणम्। एवं चाकाशगते वेदरूपपौरुषेयशब्दे आकाशनिष्ठत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणराहित्यात् विशिष्टराहित्यमस्तीति न बाधः। दृष्टान्ते तु तन्तुगतपटलक्षणपौरुषेये विशेष्याभावेन विशिष्टाभावगर्भं साध्यमस्तीति द्रष्टव्यम्। श्रोत्रपक्षकानुमानेऽपि पौरुषेयग्राहकत्वमात्रोक्तौ सिद्धसाध्यता। अतः श्रोत्रग्राह्यत्वरहितेत्युक्तम्। तावत्युच्यमाने बाधः। श्रोत्रग्राह्यपौरुषेयस्य श्रोत्रग्राह्यत्वराहित्यासंभवादतो वेदव्यतिरिक्तेति श्रोत्रग्राह्यविशेषणम्। तथा च श्रोत्रग्राह्ये वेदरूपे पौरुषेये श्रोत्रग्राह्यत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणविरहाद्विशिष्टराहित्यमस्तीति न बाधः। दृष्टान्ते तु चक्षुर्ग्राह्ये रूपादिलक्षणे पौरुषेये विशेष्याभावेन विशिष्टाभावगर्भं साध्यमस्तीति द्रष्टव्यम्।

**वं०प०— पौरुषेयवान्** द्रव्यत्वात्तन्तुवदित्यादि। पटादिरूपपौरुषेयत्वं तन्तावस्तीत्यर्थः। अत्र पटादीनां पौरुषेयत्वोक्तिरुपचारात्पुरुषशब्दात्तत्कृतवाक्यादिष्वेव ढञः स्मरणादिति द्रष्टव्यम्। एवमेव गीताभाष्यटीकायां न ह्यपौरुषेये पौरुषेयाज्ञानादय इत्यत्र समाहितमस्तीत्यवगन्तव्यम्।

**आनन्दः— वेदव्यतिरिक्तेति**। वेदव्यतिरिक्तत्वे सति यदिदानींतनत्वं तद्रहितं यत्पौरुषेयं तद्वत्त्वमित्यर्थः। अत्र हि अन्यकालीनेन केनचित्कृते पौरुषेये वाक्ये वेदव्यतिरिक्तस्वविशिष्टेदानींतनत्वरूपविशिष्टो भावो हि इदानींतनत्वरूपविशेष्याभावापन्न एव न तु विशेषणाभावाद्यतस्तत्र तस्य सत्त्वात्। इदानींतनपौरुषेयवाक्ये तु विशेष्यविशेषणोभयसत्त्वेन न विशिष्टाभावः। वेदात्मके तु वाक्ये वेदव्यतिरिक्तत्वरूपविशेषणाभावापत्तौ विशिष्टाभाव इति वेदरूपपौरुषेयवाक्ये वेत्ता इदानींतनकालस्य सिध्यतीति भावः। **आकाश इति**। अत्रापि वेदव्यतिरिक्ताकाशनिष्ठत्वराहित्यरूपविशिष्टाभावस्य विशेष्याभावमादाय तादृशवेदरूपपौरुषेयवाक्ये सिद्धिरिति द्रष्टव्यम्। एवमुत्तरानुमानेऽपि योजना द्रष्टव्या।

**कं०रा०— वेदव्यतिरिक्तेति**। वेदव्यतिरिक्तत्वे सति यदिदानीन्तनत्वं तद्रहितं यत्पौरुषेयं तद्वानित्यर्थः। अत्र दृष्टान्तीकृतेऽन्यस्मिन्काले जातस्य पौरुषेयस्येदानीन्तनत्वरूपविशेष्याभावेन वेदव्यतिरिक्तत्वविशिष्टेदानी-





न्तनत्वरहितत्वात्तादृशपौरुषेयत्वमादाय तत्र साध्यपर्यवसानम् । पक्षीकृते तु वर्तमानकाले विद्यमानस्य पौरुषेयस्येदानीन्तनत्वरूपविशेष्याभावायोगेन वेदव्यतिरिक्तत्वरूपविशेषणराहित्येनैव तद्विशिष्टेदानीन्तनत्वर्राहतत्व-पर्यवसानाद्वेदव्यतिरिक्तत्वरहितपौरुषेयसिद्धौ वेदपौरुषेयत्वसिद्धिरिति भावः । एवमुत्तरानुमानसाध्ययोरपि वेद-व्यतिरिक्तत्वस्याकाशनिष्ठत्वश्रोत्रग्राह्यत्वरूपप्रतियोगिविशेषणतया तद्विशिष्टप्रतियोगिराहित्यं पक्षदृष्टान्तसंबन्धि-पौरुषेययोर्विशेषणविशेष्यभावावादाय पर्यवस्यतीति द्रष्टव्यम् ।

**वा०चं०**— वेदापौरुषेयत्वसाधनस्य बाधं प्रतिपक्षं वा शङ्कते **नन्विति** । **अयं काल इति** । वेदव्यतिरिक्तं यदिदानीन्तनं तत्त्वरहितपौरुषेयवानिति साध्यार्थः । एवमुत्तरत्रापि । अत्र सर्वत्र विशिष्टव्यतिरेकिषु विशेष्या-भावायत्तविशिष्टाभावमादाय दृष्टान्ते साध्यपर्यवसानं पक्षे च तमादाय साध्यपर्यवसानस्य बाधितत्वाद्विशेषणा-भावायत्तविशिष्टाभावमादाय साध्यपर्यवसाने वेदापौरुषेयत्वसिद्धिरिति भावः । आद्यानुमानदृष्टान्तेऽन्यकालभवं वस्तु पौरुषेयम् । द्वितीये पटतन्तुरूपादि । तृतीये रूपादि । तत्र पौरुषेयत्वोक्तिरौपचारिकी तद्वाक्य एव ढञः स्मरणादिति ध्येयम् ।

**वा०र०**— **उत्तरत्रापीति** । वेदव्यतिरिक्ताकाशेति वेदव्यतिरिक्तश्रोत्रेति च साध्यद्वय इत्यर्थः । तत्राद्ये वेदव्यतिरिक्तं यदाकाशनिष्ठं तत्त्वरहितेति । द्वितीये च वेदव्यतिरिक्तं यच्छ्रोत्रग्राह्यं तत्त्वरहितेत्यर्थो बोध्यः । **विशेषणाभावेति** । वेदव्यतिरिक्तत्वरूपविशेषणाभावेनेत्यर्थः । तथाच पौरुषेये वेदव्यतिरिक्तत्वाभावमादाय साध्य-पर्यवसाने वेदरूपपौरुषेयवानिति फलितं भवतीति भावः । अन्यथाख्यातिः वाक्यार्थविनोदे दूषिता । पौरुषेयत्व-सिद्धिरिति भाव इत्यन्तग्रन्थानन्तरमाद्यानुमानदृष्टान्तेऽन्यकालभवं वस्तु पौरुषेयमित्यारभ्य स्मरणादिति ध्येयमि-त्यन्तानन्तरं आश्रयासिध्यादेरित्यत्रेत्यादिर्द्रष्टव्यमित्यन्तो ग्रन्थः । अनयोर्विपरीतक्रमो दूरतः शोधरस्य पंक्त्यङ्क-गणनावसरे एकपङ्क्तिभ्रमेणाङ्कस्य षोडशत्वे भाव्ये पञ्चदशत्वकरणात् हंसपदस्यापि पञ्चदशाङ्कं पर्यालोच्य तत्पङ्क्तावेव कृतत्वादिति बोध्यम् । कुतः औपचारिकत्वमित्यत आह **तत्कृतवाक्य एवेति** । ननु पञ्चमाद्ये सर्वपुरुषाभ्यां णढञाविति पुरुषशब्दात् ढञ्विधानमात्रे कृतेऽपि पुरुषाद्वधविकारसमूहे तेन कृतेषु इति भाष्यकारीयवक्तव्यानुसारेण वधादिष्वर्थेष्वेव पुरुषशब्दात् ढञ्प्रत्ययविधिरस्ति पुरुषस्य वधः पौरुषेयः पुरुषस्य विकारः पौरुषेयः । पुरुषस्य समूहः पौरुषेयः । एकाकिनोऽपि परितः पौरुषेयवृत्ता इवेति माघप्रयोगात् । पुरुषेण कृतो ग्रन्थः पौरुषेयः । प्रासादादा-वपि पौरुषेय इत्येव । वधादौ तस्येदमित्यादिना प्राप्तानाद्यपवादेनेव ग्रन्थतः कृते ग्रन्थ' इत्यनेन प्राप्ताणोपवादेन शब्दप्रासादादौ तु अनपवाद एव ढञिति विशेषः । भाष्यकारप्रयोगादेव तेनेतिपदद्वन्द्वे निवेशितं न दोषाय । तथाच तत्कृतवाक्य इव तदीयवधादिष्वपि ढञः स्मरणसिद्धेर्न ह्यपौरुषेये वेदे पौरुषेयाज्ञानादय इति गीताभाष्यव्याख्यावसरे टीकायां अज्ञानादौ पौरुषेयत्वोक्तिरौपचारिकीत्यत्र तत्कृतवाक्यादिष्वेवेति हेतूक्तेश्च कथमुक्तवाक्य एवेतीति चेत्सत्यम् । अन्यकालभाववस्त्वादौ हि न वधविकारसमूहरूपतेति तेन कृतत्वमेव निमित्तीकृत्य तस्मिन्नभिधेये पुरुषशब्दाढ्ढञिति वाच्यम् । तेन कृतमित्यर्थे विवक्षितेऽपि वेदस्य प्रकृततया ग्रन्थ एव ढञि वाक्यवाचि





पौरुषेयशब्दनिष्पत्तेरङ्गीकार्यत्वात् । तदिदमुक्तं **तत्कृतेति** । तत्कृते ढञः स्मरणात्प्राप्तोऽपि ढञ् तत्कृतवाक्य एवाङ्गीकार्य इति । तत्कृतप्रासादादावपि ढञो विधानेऽपि पौरुषेयशब्दस्य पक्षे साध्यपर्यवसानं शब्दमादायैवेति दृष्टान्ते तत्पर्यवसानकाले वाक्यवाचिशब्दस्यौपचारिकत्वमेव ।

**स०व्र०— अयं काल इति** । वर्तमानकाल इत्यर्थः । वेदव्यतिरिक्तं यदिदानींतनम् । तत्त्वरहितपौरुषे वेद एव तद्वानित्यर्थः । अत्रातीतादिकालस्य पक्षत्वे सिद्धसाध्यतावारणायायमित्युक्तम् । साध्ये पौरुषेयवानित्युक्ते सिद्धसाध्यता । अत इदानींतनत्वरहितेत्युक्तम् । तावत्युक्ते बाधः । अस्मिन्काले विद्यमानस्य पौरुषेयस्येदानींतनत्वेन तद्राहित्यासंभवात् । अतो वेदव्यतिरिक्तत्वरूपविशेषणम् । तथा चास्मिन्काले विद्यमाने वेदरूपे पौरुषेये इदानींतनत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणराहित्याद्विशिष्टराहित्यमिति न बाध इत्यर्थः । वेदरूपपौरुषेयवानित्येवोक्तौ दृष्टान्ते साध्यवैकल्यम् । अन्यकाले पौरुषेयवेदवत्त्वासंमतेः । अतो विशिष्टव्यतिरेकगर्भता । एवं चान्यकालगतपौरुषेये इदानींतनत्वरूपविशेष्याभावेन विशिष्टाभावो दृष्टान्तेऽप्यस्तीति न साध्यवैकल्यमिति भावः । एवमग्रेऽपि विशिष्टव्यतिरेकगर्भताप्रयोजनं द्रष्टव्यम् । एवमाकाशपक्षकानुमाने पौरुषेयवानित्येवोक्तौ सिद्धसाध्यता । अत आकाशनिष्ठत्वरहितेत्युक्तम् । तावन्मात्रोक्तौ बाधः । आकाशगते पौरुषेये आकाशनिष्ठत्वराहित्यासंभवात् । अतो वेदव्यतिरिक्तेत्याकाशनिष्ठविशेषणम् । एवं चाकाशगते वेदरूपपौरुषेये शब्दे आकाशनिष्ठत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणराहित्याद्विशिष्टराहित्यमस्तीति न बाधः । दृष्टान्ते तु तन्तुगतपटलक्षणपौरुषेये पूर्ववद्विशेष्याभावेन विशिष्टाभावगर्भसाध्यमस्तीति द्रष्टव्यम् । श्रोत्रपक्षकानुमानेऽपि पौरुषेयग्राहकत्वमात्रोक्तौ सिद्धसाधनतातः श्रोत्रग्राह्यत्वरहितेत्युक्तम् । तावत्युच्यमाने बाधः । श्रोत्रग्राह्यपौरुषेयस्य श्रोत्रग्राह्यत्वराहित्यासंभवात् । अतो वेदव्यतिरिक्तेति श्रोत्रग्राह्यविशेषणम् । तथा च श्रोत्रग्राह्ये वेदरूपे पौरुषेये श्रोत्रग्राह्यत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणराहित्याद्विशिष्टराहित्यमस्तीति न बाधः । दृष्टान्ते तु चक्षुर्ग्राह्ये रूपादिलक्षणे पौरुषेये विशेष्याभावेन पूर्ववद्विशिष्टभावगर्भं साध्यमस्तीति द्रष्टव्यम् । **तेपानादिति** । तप इति तेपानः तस्माल्लिटः कानच् वेति कानच् ।

**विठ्ठ०— अयं काल इति** । वर्तमानकालः वेदव्यतिरिक्तत्वे सति यदीदानींतनत्वं तद्रहितं यत्पौरुषेयं तद्वानित्यर्थः । तत्र वेदव्यतिरिक्तत्वे सतीदानींतनत्वविशिष्टं तद्रहितः पौरुषेयो वेदरूप एव तद्वत्वं साध्यं तत्र दृष्टान्ते अन्यस्मिन् पूर्वकाले निष्ठं यत्पौरुषेयं तत्र वेदव्यतिरिक्तत्वरूपविशेषणस्य सत्त्वेन तद्राहित्याभावेऽपि विशेषस्येदानींतनत्वस्याभावेन विशिष्टराहित्योपपत्तेः साध्यपर्यवसानं पक्षे वर्तमानकाले साध्यपर्यवसानं तु इदानींतनत्वरूपविशेष्यस्य वेदे सत्त्वेऽपि वेदव्यतिरिक्तरूपविशेषणराहित्येन विशिष्टाभाव इति ज्ञेयम् । तत्रातीतादिकालस्य पक्षत्वेन तद्राहित्यासंभवात् । अतो वेदव्यतिरिक्तेतीदानींतनत्वविशेषणं विशेषणराहित्येन विशिष्टराहित्यमुपपन्नमिति न बाधः । वेदरूपपौरुषेयवानित्युक्ते दृष्टान्ते साध्यवैकल्यं अन्यकाले पौरुषेयवेदवत्त्वासंमतेः । अतो विशिष्टव्यतिरेकगर्भिता एवं चान्यकालगतपौरुषेये कालिदासवाक्यादौ घटादौ वा इदानींतनवत्व-





रूपविशेष्याभावेन विशिष्टाभावो दृष्टान्तेऽप्यस्तीति न साध्यवैकल्यमिति भावः । एवमाकाशपक्षकानुमाने पौरुषेयवानित्येवोक्ते सिद्धसाधनता । अत आकाशनिष्ठत्वरहितेत्युक्तं तावत्युक्ते बाधः । शब्दमात्रस्य आकाशगतत्वेन आकाशगते पौरुषेये आकाशनिष्ठत्वराहित्यासंभवात् । अतो वेदव्यतिरिक्तेत्याकाशनिष्ठत्वविशेषणम् । एवं च तन्तुगतपटलक्षणपौरुषेये विशेष्यराहित्येन विशिष्टाभावात्साध्यपर्यवसानं पक्षे तु आकाशनिष्ठे वेदरूपे शब्दे आकाशनिष्ठत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणराहित्येन विशिष्टराहित्यमादाय साध्यपर्यवसानं द्रष्टव्यम् । एवं श्रोत्रपक्षकानुमानेऽपि चक्षुर्ग्राह्ये रूपादौ वेदव्यतिरिक्तत्वरूपविशेषणे सत्यपि श्रोत्रग्राह्यत्वरूपविशेष्यराहित्येन साध्यपर्यवसानं पक्षे तु विशेषणराहित्येन विशिष्टव्यतिरेकात्साध्यपर्यवसानम् । पदव्यावर्त्यं पूर्ववद् द्रष्टव्यम् ।

**चषकः— अयं काल इति** । सामानाधिकरण्यप्रत्यासत्त्या वेदव्यतिरिक्तत्वविशिष्टं यदिदानींतनत्वं तद्रहितपौरुषेयवानित्यर्थः । निदर्शने साध्यसङ्गमनदशायां विशेष्याभावनिबन्धनविशिष्टाभाववान् कालान्तरीणः शब्दस्तमादाय पक्षे तत्सङ्गमनदशायां तु तादृशो वेद एव । विशेषणाभावनिबन्धनविशिष्टाभाववत्त्वात् । तथा च वेदस्य पौरुषेयत्व एव साध्यपर्यवसानमिति भावः । एवमग्रेऽपि निदर्शने पक्षे च साध्यसङ्गमनरीतिरवसेया ।

**प्रदीपः— अयं काल** इति पक्षे विशेषणराहित्याद्विशिष्टराहित्यं स्वपक्षे तु विशेषणविशेष्योभयराहित्यादित्यादि द्रष्टव्यम् । आख्यातपदं प्रधानमिति चेदिति क्रियानिष्पत्त्यर्थत्वेन कारकापेक्षणात् क्रियापदस्यैव विधेयपरत्वात्प्राधान्यं मन्यते न दध्ना जुहोतीत्यादिक्रियाया अग्निहोत्रं जुहोतीत्यादिना विहितत्वाद्दधिलक्षणविधानार्थत्वेन क्रियापदस्यानुवाद्यसमर्पकत्वात् अप्रधानत्वमित्यर्थः । शेषं सुगमम् ।

**॥ वेदसकर्तृकत्वशङ्कानिरसनम् ॥**

**वेदसकर्तृकत्वानुमानानां साधारणदूषणम्—**

**६३९ सु०— मैवम् । अनुमानानां विपक्षे बाधकाभावेनाप्रयोजकत्वात् । पौरुषेयत्वे कर्तुराप्त्यनिश्चयेन ततो धर्माद्यनिश्चयापत्तेरुक्तत्वाच्च ।**

**परि०—** तर्कपराहतिं चाह **पौरुषेयत्वे इति** ।

**आनन्दः—** प्रतिकूलतर्कमाह **पौरुषेयत्वे इति** ।

**कं०रा०— उक्तत्वाच्चेति** । तथा च वेदस्य पौरुषेयत्वे कर्तुराप्त्यनिश्चयेन ततो धर्मादिनिश्चयो न स्यादिति प्रतिकूलतर्कपराहतानि च पौरुषेयत्वानुमानानीति भावः ।





**वा०र०**— पौरुषेयशब्दस्यानेकार्थत्वं त्वश्लिष्टमन्यथा पुरुषवधादिरूपत्वस्य वेदेऽसंभवेन साध्यपर्यवसानायोग इति शङ्कापरिहाराय यत्नान्तरायास इत्याशयः । तथाच प्रकृतेऽर्थान्तरासंभवाभिप्रायेणावधारणोक्तेर्न कश्चिद्दोषः । एवमेव गीताभाष्यव्याख्यावसरेऽपि तत्कृतवाक्यादिष्वेवेति प्रमेयदीपिकोक्तिर्व्याख्येया । अज्ञान-विप्रलम्भादिषु वधादिरूपत्वाभावेऽपि तन्मध्ये विप्रलम्भादौ पुरुषकृतत्वमस्त्येव । परस्वज्ञानकरणपटुत्वादौ तदपि नास्ति । ततो ज्ञानादौ तूपचार आवश्यक एवेति । प्रतिकूलतर्कपराहतिमप्याह **पौरुषेयत्व इतीति** मूलम् । वक्ष्यति च टीकाकारः प्रतिकूलतर्कपराहतीम् उक्त्वेति ।

**विठ्ठ०**— पौरुषेयत्वसाधकानुमानानां तर्कपराहतिं चाह **पौरुषेयत्वे इति** । आप्तिनिश्चय एवानुपपन्नः ।

**६४० सु०— ईश्वरः प्रमावान् पुरुषत्वादहमिव; ईश्वरो न विप्रलिप्सावान् ईश्वरत्वात्, न यदेवं न तदेवम्, यथाऽहम्; इति ईश्वरस्यासत्वसिद्धिरिति चेन्न । पुरुषत्वेनाप्रमा-विप्रलिप्सयोरपि साधनसौलभ्यात् । आश्रयासिद्ध्यादेश्च परिहरिष्यमाणत्वात् ।**

**परि०**— ननु ईश्वरोऽसिद्धश्चेत् आश्रयासिद्धिः सिद्धश्चेत् धर्मिग्राहकप्रमाणबाध इत्यत आह **आश्रयासिद्ध्यादेश्चेति** । "वनकृत्त्वादिरूपेण पक्षभूतस्य चेशितुरि"त्यादिना शास्त्रयोनिसूत्रे परिहरिष्यमाणत्वादित्यर्थः ।

**यादु०**— **प्रमावानिति** । अनेन विवक्षितार्थतत्त्वज्ञानसिद्धिरिति ज्ञेयम् । नन्वीश्वरस्यासिद्धत्वे आश्रयासिद्धिः सिद्धत्वे धर्मिग्राहकमानबाध इत्यत आह **आश्रयासिद्ध्यादेरिति** । वनकृत्त्वादिरूपेणेत्यत्रेति शेषः ।

**वं०प०**— ईश्वरस्य विवक्षितार्थतत्त्वज्ञानसाधनायानुमानमाह **ईश्वरः प्रमावानिति** ।

**आनन्दः**— नन्वीश्वरः सिद्धोऽसिद्धो वा । नाद्यः धर्मिग्राहकमानविरोधात् । न द्वितीयः आश्रयासिद्धे-रित्यत्राह **आश्रयासिद्ध्यादेश्चेति** । शास्त्रयोनिसूत्र इति शेषः ।

**कं०रा०**— नन्वीश्वरस्य पुरुषत्वेनाप्रमा अविप्रलिप्सासाधनमनुपपन्नम् । ईश्वरासिद्धावाश्रयासिद्धेः । तत्सिद्धौ च तस्य प्रमाविप्रलिप्साराहित्येनैव सिद्धतया धर्मिग्राहकमानविरोधादित्यत आह **आश्रयेति** । आश्रयासिद्धेर्धर्मिग्राहकविरोधस्य च शास्त्रयोनिसूत्रे परिहरिष्यमाणत्वादित्यर्थः ।

**श्रीनिधि०**— **परिहरिष्यमाणत्वात्** शास्त्रयोनिसूत्रे ।

**वा०चं०**— आश्रयासिद्ध्यादेः इत्यादिपदेन धर्मिग्राहकविरोधग्रहणम् । अनयोश्च व्यवस्थितदूषणत्वमिति द्रष्टव्यम् ।





**वा०र०— व्यवस्थितेति** । ईश्वरस्यासिद्धावाश्रयासिद्धिः । सिद्धौ च धर्मिग्राहकप्रमाणेन प्रमावत्वाविप्रलिप्सावत्वेनैव सिद्धेर्धर्मिग्राहकप्रमाणविरोध इति व्यवस्थां ज्ञेया ।

**स०व्र०—** नन्वीश्वरस्यासिद्धत्वे आश्रयासिद्धिः सिद्धत्वे धर्मिग्राहकमानबाध इत्यत आह **आश्रयासिद्ध्यादेरिति** । वनकृत्त्वादिरूपेणेत्यत्रेति शेषः ।

**विट्ठ०—** अनुमानेन तन्निश्चयादिति शङ्कते **ईश्वर इति** । ईश्वरो न सिद्धश्चेदाश्रयासिद्धिः । सिद्धश्चेद्धर्मिग्राहकमानबाध इत्यत आह **आश्रयासिध्यादेश्चेति** । शास्त्रयोनित्वाधिकरण इति शेषः ।

**चषकः— परिहरिष्यमाणत्वादिति** । वनकृत्त्वादिरूपेणेत्यादिनेत्यादिः ।

**६४१ सु०— किञ्च प्रमावत्त्वमात्रसाधने सिद्धसाधनं तावताऽऽप्तत्वासिद्धेः । न ह्यनाप्तः कदाचित् प्रमावान्न भवति ॥ अप्रमात्वव्युदाससाधने दृष्टान्तस्य साध्यविकलता हेतोरनैकान्त्यं च ॥ ईश्वरत्वहेतुश्च सपक्षादपि घटादेर्व्यावृत्तेरसाधारणः, पूर्ववत्सिद्धसाधनश्च ॥ यथार्थचिख्यापयिषानियतिसाधने च बुद्धर्षभादीश्वरावतारेष्वपि विप्रलिप्सादर्शनाद् बाधः ॥ अशरीरत्वेन सत्प्रतिपक्षतां च सूत्रकार एव वक्ष्यति ।**

**परि०— पूर्ववदिति** । प्रमावानिति प्रयोगे न ह्यनाप्तः कदाचित्प्रमावान्न भवतीत्युक्तदिशाऽनाप्तेऽपि कदाचिद्विप्रलिप्साभावसंभवादिति भावः । **वक्ष्यतीति** । अन्तवत्त्वमसर्वज्ञता वेति समयपादीयपाशुपताधिकरणगुणसूत्रे ईश्वरस्य शरीरमस्ति चेदीश्वरस्यान्तवत्त्वं परिच्छिन्नत्वं न चेत् असर्वज्ञता स्यादिति वक्ष्यमाणत्वादिति भावः ।

**गु०दी०— अशरीरत्वेन** सत्प्रतिपक्षताम् इत्यस्य ''न च कर्तुः करणम्'' इत्यत्र वक्ष्यतीत्यर्थः ।

**यादु०— वक्ष्यतीति** । 'अन्तवत्त्वमसर्वज्ञता वे'त्यत्रेति शेषः ।

**वं०प०— साध्यविकलतेति** । दृष्टान्तीकृते स्वस्मिन्नप्रमायाः सत्त्वेन तदभावाभावादित्यर्थः । **अनैकान्त्यं चेति** । स्वस्मिन्विप्रलम्भके च व्यभिचार इत्यर्थः । **ईश्वरत्वहेतुश्चेति** । विप्रलिप्साभावसाधक इत्यर्थः । **पूर्ववत्सिद्धसाधनश्चेति** । विप्रलिप्साभावसाधने सिद्धसाधनम् । तावताऽप्याप्तत्वासिद्धेः । न ह्यनाप्तः कदाचिद्विप्रलिप्साभाववान्न भवतीति पूर्ववदीश्वरः प्रमावानित्यत्र प्रमावत्त्वमात्रसाधने यथा सिद्धसाधनं तथाऽत्रापि सिद्धसाधनः सिद्धसाधको हेतुरित्यर्थः ।





**आनन्दः**— ननु प्रमावानेव तत्त्वप्रमावानिति साध्यत इत्यत आह **अप्रमात्वेति**। अस्मदादावप्रमाया अपि सत्त्वादिति भावः। **हेतोरिति**। पुरुषत्वस्यानाप्त इत्यर्थः। **पूर्ववदिति**। किञ्चिदंशे विप्रलिप्साभावस्य मयापि स्वीकारादिति भावः। **यथार्थेति**। यथाभूतार्थख्यापनेच्छानियतिमानिति साधन इत्यर्थः। नन्वीश्वरो न प्रमावान् अशरीरत्वादिति सत्प्रतिपक्षः किन्नोच्यत इत्यत्राह **अशरीरत्वेनेति**। शास्त्रयोनित्वसूत्रे वक्ष्यतीति शेषः।

**कं०रा०**— 'ईश्वरो न विप्रलिप्सावानि'त्यत्र सर्वात्मना विप्रलिप्साराहित्यं साध्यम्। उत कदाचित् विप्रलिप्साराहित्यमिति विकल्प्याद्ये दोषमाह **ईश्वरत्वहेतुरिति**। ईश्वरत्वहेतुश्च सर्वात्मना विप्रलिप्साराहित्यरहितत्वेन विपक्षादस्मदादितएवोक्तसाध्यवत्तया सपक्षाद्घटादेरपि व्यावृत्तत्वादसाधारण इत्यर्थः। द्वितीये दोषमाह **पूर्ववदिति**। कदाचिद्विप्रलिप्साराहित्यमात्रेणाप्तत्वासिद्धेस्तन्मात्रसाधने ईश्वरहेतुः सिद्धसाधन इत्यर्थः। व्यवस्थितदूषण-समुच्चयार्थश्चकारः। नन्वीश्वरो न विप्रलिप्सावानित्यनेनेश्वरो यथार्थचिख्यापयिषा नियतिमानिति साध्यम्। अतो नासाधारण्यम्। नापि सिद्धसाधनत्वमित्यत आह **यथार्थेति**। **सूत्रकार इति**। अन्तवत्त्वमसर्वज्ञता वेत्यत्राशरीरत्वेनेश्वरस्य ज्ञानेच्छाद्ययोग इति सूत्रकारेणैव वक्ष्यमाणत्वाद्यथार्थख्यापनेच्छानियतिसाधनं सत्प्रतिपक्षं चेति भावः। यद्वा। संबन्धानुपपत्तेश्चेत्यत्राशरीरत्वेन शिवस्येच्छाप्रयत्नरूपकर्तृत्वानुपपत्तिं वदन्सूत्रकार एव यथार्थ-ख्यापनेच्छानियतिसाधनस्य सत्प्रतिपक्षतां वक्ष्यतीति भावः।

**श्रीनिधि०**— **पूर्ववत्सिद्धसाधन इति**। न ह्यनाप्तः कदाचिदप्रमाभाववान् न भवति इति भावः। सिद्धसाधनतापरिहारार्थं शङ्कते **यथार्थेति**।

**वा०चं०**— **पूर्ववदिति**। न ह्यनाप्तः क्वचिद्विप्रलिप्साभाववान्न भवतीति भावः। **वक्ष्यतीति**। पाशुपतसमयनिरासकाधिकरण इति शेषः।

**वा०र०**— **पाशुपतसमयेति**। 'अदेहश्चेदसर्वज्ञः शिलाकाष्ठादिवत्सदा। देही चेदन्तवानेन यज्ञदत्त-निदर्शनादि'ति 'संबन्धानुपपत्तेश्चे'ति सूत्रव्याख्यानरूपानुव्याख्यानानुसारेण तत्सूत्रे इति शेषः।

**स०व्र०**— **सूत्रकार एव वक्ष्यतीति**। अन्तवत्त्वमसर्वज्ञता वेत्यनेनेति शेषः।

**वि०ठ०**— **पूर्ववत्सिद्धसाधन इति**। अविप्रलिप्सामात्रसाधने सिद्धसाधनता। तावता आप्तत्वासिद्धेः। न ह्यनाप्तः कदाचिदविप्रलिप्सावानिति पूर्ववदित्यर्थः। **वक्ष्यतीति**। अन्तवत्वमसर्वज्ञता वेत्यनेनेति शेषः।

**चषकः**— **वक्ष्यतीति**। 'अन्तवत्त्वमसर्वज्ञता वेत्यत्रे'त्यादिः।





**६४२ सु०— किञ्चासत्त्वेऽपीश्वरस्य वेदाः तत्प्रणीता इत्यत्र न प्रमाणम् ॥ ननु वेद ईश्वरप्रणीतः वेदत्वाद् व्यतिरेकेण गगनवदिति चेन्न एवमनीश्वरप्रणीतत्वस्यापि शक्य-साधनत्वात्, स्मृतीतिहासपुराणेभ्यः सपक्षेभ्योऽपि व्यावृत्तत्वेन असाधारणत्वाच्च । तेषामपि पक्षत्वे भागासिद्धेः । वेदादित्वस्य एकरूपस्याभावेन हेतूकर्तुमशक्यत्वात् । अतीन्द्रियविषयवाक्यत्वं हेतुरस्त्विति चेन्न जिनादिवाक्येषु व्यभिचारात् । तान्यपि पक्षतुल्यानीति चेत् तथात्वे व्यर्थविशेषणत्वात् । वाक्यत्वमात्रं हेतुरस्त्विति चेन्न ईश्वरप्रणीतशब्देन तदाप्तिपूर्वकतासाधने बौद्धादिवाक्ये व्यभिचारात् । ईश्वरनिमित्तता-मात्रसाधने तु प्रामाण्यासिद्धिरिति ।**

**परि०— अनीश्वरप्रणीतत्वस्यापीति** । ईश्वरप्रणीताङ्कुरादौ व्यतिरेकव्याप्तिसंभवादिति भावः । ननु वेदादित्वं हेतुरस्त्वित्यत आह **वेदादित्वस्येति** । कार्यमात्रमीश्वरप्रणीतमेवेति भावेन शङ्कते **तान्यपीति** । अतीन्द्रियविषयेति विशेषणं व्यर्थम् । वाक्यत्वमात्रस्यैवाव्यभिचारादिति भावः ।

**यादु०— पक्षतुल्यानीति** । ईश्वरस्य सर्वोत्पत्तिमत्कर्तृत्वाज्जिनादिवाक्येष्वपीश्वरप्रणीतत्वस्य विद्यमानत्वेन तेषामपि पक्षतुल्यत्वान्न व्यभिचार इति भावः ।

**वं०प०— प्रामाण्यासिद्धिरिति** । विप्रलम्भकवाक्येऽपीश्वरस्य निमित्तकारणत्वादिति भावः ।

**आनन्दः— ईश्वरनिमित्तेति** । तस्य जिनादिवाक्येष्वपि सत्त्वेन तद्वदस्य प्रामाण्यासिद्धिरित्यर्थः ।

**कं०रा०— अनीश्वरेति** । तथा चाभाससाम्यमिति भावः । यद्वा । तेनैव हेतुनेश्वरप्रणीतत्वाभावस्यापि साधयितुं शक्यत्वात्सत्प्रतिपक्षत्वमिति भावः । **तानीति** । सर्वकार्याणामीश्वरकर्तृकतयेश्वरप्रणीतत्वमात्रस्य कार्यमात्रे सत्त्वाज्जिनादिवाक्यान्यपि पक्षतुल्यानीति भावः । **व्यर्थेति** । प्रत्यक्षार्थविषयेऽस्मदादिवाक्येऽप्युक्तरीत्या व्यभिचाराभावेन वाक्यत्वमात्रस्य हेतुत्वसंभवेऽतीन्द्रियविषयत्वरूपविशेषणस्य व्यर्थत्वादित्यर्थः । **ईश्वरेति** । विसंवाद्यस्मदादिवाक्यवदाप्तिमूलत्वाभावेऽपीश्वरनिमित्तकतायाः संभवाद्वेदस्येश्वरनिमित्तकत्वमात्रसाधने प्रामाण्या-सिद्धिरित्यर्थः ।

**वा०चं०— तेषामिति** । स्मृत्यादीनां मनुव्यासादिकृतत्वेऽपीश्वरकृतत्वासिद्धेरिति भावः । **तान्यपीति** । कुलालादिकृतघटादीनामीश्वरकृतत्ववज्जिनादिकृतानामपि तेषामीश्वरकृतत्वं सिषाधयिषितमेवेति भावः । तर्हि लौकिकवाक्यानामपि तादृशत्वादतीन्द्रियविषयकेतिविशेषणं व्यर्थमित्याह **तथात्व इति** ।





**वा०र०—** स्मृत्यादिषु ईश्वरप्रणीतत्वसिद्धेः कथं तेषां पक्षत्वाश्रयणं तथा सति सिद्धसाधनताप्रसङ्ग इत्यतस्तदुपपादयन्नाह **स्मृत्यादीनामिति** । तथाच मनुव्यासादिकृतत्वप्रसिध्येश्वरकृतत्वासिद्धेस्तत्कृतत्वसाधनाय **तेषां पक्षीकारोऽयुक्त** इत्यर्थः । अत्र मनुव्यासादीत्युक्तेऽपि मनोरादिपदोक्तपराशरादीनां च ग्रहणं दृष्टान्तत्वेन । **तथा च व्यासकृतस्मृत्यादेर्मन्वादिकृतवदीश्वरकृतत्वेति** योज्यम् । तेन मन्वादिकृतानां वस्तुतोऽपक्षत्वेऽपि न दोषः । **व्यासकृतमित्यादेरेवेश्वरप्रणीतत्वसंभववतः** पक्षत्वमित्यत्र तात्पर्यात् । **जिनादीति** मूलवाक्ये मन्वादेरपि ग्रहणम् । **एतच्छोध्यम्** । ........... । असाधारण्यायेश्वरप्रणीतानामेव ग्राह्यत्वे सति मन्वादिवाक्यानां पक्षीकारायोगात् । **ननु स्मृत्यादीनामपि पक्षत्वपक्षे** न वेदत्वमात्रं हेतुर्येन भागासिद्धिः स्यादपि तु वेदादित्वम् । तच्च न भागासिद्ध-मित्यत **आह वेदादित्वस्येति** मूलम् । वेदादित्वं हि वेदस्मृतित्वादिरूपम् । तच्च विशिष्टं न कुत्रापीति **स्वरूपासिद्धिरेव वेदत्वादेः** प्रत्येकं तु भागासिद्धिरेव । वेदाद्यन्यतमत्वमिति विवक्षणेऽन्यतमत्वस्य वेदत्वादि-**रूपतया एकरूपालाभ** एव वेदस्मृतीतिहासपुराणान्यान्यत्वमनुगतमस्तीति चेन्न । तदवच्छेद्यरूपापरिचये तस्य **नाममात्रत्वादित्याशयः** । अत एव तदवच्छेद्यं रूपमाशङ्कते **अतीन्द्रियविषयेति** मूलम् ।

**स०व्र०— तान्यपि पक्षतुल्यानीति चेदिति** । ईश्वरस्य सर्वोत्पत्तिमन्निमित्तत्वादिति भावः ।

**वि्ट०—** वेदादित्वादिति हेतुं ब्रूमः तत्रादिशब्देन स्मृत्यादिसङ्ग्रहः । तथा च भागासिद्धिरित्यत आह **वेदादित्वस्येति** । वेदत्वस्य वेदे आदित्वस्य स्मृत्यादाविति पक्षतावच्छेदकावच्छिन्ने एकस्य हेतोरभावेन पुनः भागासिद्धिरेवेति भावः । **तथात्व इति** । ईश्वरस्य सर्वोत्पत्तिमन्निमित्तकारणत्वेन जिनादिकर्तृकाप्रमाणवाक्यानामपि पक्षत्वे वाक्यमात्रस्येश्वरप्रणीतत्वप्राप्त्या अतीन्द्रियविषयेति विशेषणवैयर्थ्यमिति भावः । वेद ईश्वरप्रणीतः वाक्यत्वात् इत्यत्रेश्वरप्रणीतशब्देन किं तदाप्तिपूर्वकत्वं साध्यते उत तन्निमित्ततामात्रत्वमिति विकल्पं मनसि निधायाद्ये दूषणमाह **ईश्वरप्रणीतशब्देनेति** । द्वितीये आह **ईश्वरनिमित्ततेति** ।

**६४३ सु०— किञ्चेश्वरः सर्गादौ यं वेदं निर्मायैकस्मै शिष्यायोपदिशति तमेवान्यस्मा उपदिशति, उत वेदान्तरं निर्मायेति वक्तव्यम् ॥ तमेवेति चेत् । कुतोऽयं भवतो निर्णयः । प्रथमरचितस्य अविस्मरणाद् वृथा वेदान्तरकल्पकाभावाच्चेति चेत् । तत्किं पूर्वकल्पे रचितं वेदं व्यस्मार्षीदीश्वरो येनात्र पुना रचयतीति कल्प्यते । एवं पूर्वतरपूर्वतमादिकल्पेष्वपी-त्यनादितैव ज्यायसी । एवं तर्हि पुराणादीनामप्यपौरुषेयता स्यादिति चेत् । स्याद्यदि तेषामविगानं सकर्तृकत्वे प्रमाणं न स्यात् । प्राक्तनेषु पुराणादिषु प्रतीतिपरिवर्तिषु किमर्थं पुना रचनमिति चेन्न । ईश्वरप्रवृत्तेः स्वप्रयोजनाभावस्य वक्ष्यमाणत्वात् । परप्रयोजनानि तु सूक्ष्माण्युत्प्रेक्षितुं न वयं स्थूलदृश्वानः प्रभवामः । किं नाम प्रमितं कार्यमनुसृत्य प्रयोजन-सद्भावमात्रं संभावयामः । अन्यथा कण्टकशौक्ल्याद्यपलापप्रसङ्ग इति ।**





**परि०— अविगानं सकर्तृकत्वे प्रमाणं न स्यादिति ।** यदि स्पष्टं सकर्तृकत्वबोधकम् । ''पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु। क्रियन्तेऽतस्त्वंनित्यानि तदर्थाः पूर्वसर्गवदि''त्यादिप्रमाणं यदि न स्यात्तदा स्यात्त्वदुक्तम् । तत्सत्त्वे तु कथं तेषामपौरुषेयत्वमिति भावः । **वक्ष्यमाणत्वादिति ।** न प्रयोजनवत्त्वादित्यधिकरणे । **अन्यथेति ।** फलाभावेन प्रमितापलाप इत्यर्थः । **अपौरुषेयपद-प्रक्षेपेणेति ।** दृष्टान्तेऽन्यकाले तादृशाकाशादिमत्त्वेन साध्यसंभवादिति भावः ।

**यादु०— वक्ष्यमाणत्वादिति ।** न प्रयोजनवत्त्वादित्यत्रेति शेषः ।

**वं०प०— स्थूलदृश्वान इति ।** स्थूला दृक् येषां ते स्थूलदृश्वान इत्यर्थः । **अन्यथेति ।** स्वपरप्रयोजना-भावेन पुराणानां प्रमाणसिद्धपुनारचनानिराकरण इत्यर्थः । **कण्टकेति ।** ईश्वरस्य कण्टकशौक्ल्यनिर्माणेनापि स्वपर-प्रयोजनयोरभावादित्यर्थः ।

**आनन्दः— वक्ष्यमाणत्वादिति ।** न प्रयोजनवत्त्वादित्यत्रेति शेषः । ननु प्रयोजनसंभावना कुतः तन्निश्चय एव किं न क्रियते इत्यत आह **अन्यथेति ।**

**श्रीनिधि०— अविगानमिति ।** विगानं सन्देहः तद्रहितमविगानम् ।

**विठ्ठ०—** निर्णायकमाशङ्क्य निराकरोति **प्रथमरचितस्येति । स्याद्यदि तेषामिति ।** तेषां पुराणादीनां सकर्तृकत्वे यदि प्रमाणं न स्यात्तदा अपौरुषेयताशङ्का स्यात् । न चैवं 'पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु । क्रियन्त' इत्यादि प्रमाणानां सत्त्वादित्याशयात् । **प्रतीतिपरिवर्तिषु** बुद्धिसन्निहितेषु । **अन्यथेति ।** प्रयोजनादर्शनेन प्रमितापलाप इत्यर्थः ।

**चषकः— वक्ष्यमाणत्वादिति ।** न प्रयोजनवत्त्वादित्यत्रेत्यादिः ।

वेदसकर्तृकत्वानुमानानां असाधारणदूषणानि—

**६४४ सु०— विशिष्टव्यतिरेकिणश्च पौरुषेयपदस्थानेऽपौरुषेयपदप्रक्षेपेण सत्प्रतिपक्षाः ।**

कालपदेन च काल एवाभिधीयते तदुपाधयो वा । आद्येऽयमित्यन्यकालवदिति चायुक्तम् । द्वितीये कालोपाधिना वेदस्य संबन्धानिरूपणाद् बाधितविषयत्वम् ॥ आकाश-निष्ठत्वं चाकाशसमवेतत्वं तत्संयुक्तत्वं वा । आद्ये वेदव्यतिरिक्तेनाकाशसमवेतत्व-



**रहितेन तन्त्वादिना अर्थान्तरता, संयोगवृत्त्याकाशस्य तद्वत्तोपपत्तेः । द्वितीये त्वाकाश-समवेतैस्संयोगविभागद्वित्वादिभिरर्थान्तरत्वम् । आकाशनिष्ठत्वं तद्वत्त्वं च समवाय एवेति चेन्न अप्रसिद्धविशेषणत्वात्पक्षस्य । अस्माभिस्समवायानङ्गीकारात् । दृष्टान्तस्य साध्यवैकल्याच्च ।। किञ्च वर्णास्तावन्नित्यद्रव्यत्वान्न क्वचित्समवेताः । क्रमस्तु वर्णधर्म इति बाधितविषयता च ।। श्रुतिस्तु सत्प्रतिपक्षा न निश्चयाय भवति । किञ्च 'ऋग्वेद एवाग्ने-रजायत यजुर्वेदो वायोः सामवेद आदित्यादि'त्यनीश्वररचितत्वमपि श्रावयन्त्याः कथमस्या न सत्प्रतिपक्षता । संप्रदायप्रवर्तकत्वेनेयं सावकाशेति चेत् । तर्हि द्वे अपि न्यायोपेत-नित्यत्वश्रुत्यनुरोधेन तथा किं न स्यातामिति ।**

**परि०— इति चायुक्तमिति** । त्वन्मते कालस्याखण्डत्वादिति भावः । **संबन्धेति** । पौरुषेयवानिति मतुप्प्रत्ययोक्तसंबन्धानिरूपणादित्यर्थः । **समवाय एवेति चेदिति** । तथा च तन्त्वादिना संयोगविभागादिना च नार्थान्तरता । आद्ये समवायवृत्त्या तन्त्वादिमत्त्वाभावात् । अन्त्ये समवेतत्वराहित्याभावादिति भावः । **साध्यवैकल्याच्चेति** । अत्रापि समवायानङ्गीकारादित्यनुकर्षः । **श्रुतिस्त्विति** । प्रजापतिर्वा इत्यादि प्रागुक्तश्रुतिस्तु वाचाविरूपनित्ययेत्यादिश्रुत्या सत्प्रतिपक्षेत्यर्थः । तद्रीत्याऽपौरुषेयत्वमुपेत्यापि प्रतिपक्षमाह **किञ्चेति** । **न्यायोपेतेति** । प्रागुक्तधर्मादिसाधकसामान्य-परिशेषरूपन्यायोपेता वाचा विरूपनित्ययेत्यादिश्रुतिर्या तदनुरोधेनेत्यर्थः ।

**गु०दी०— पौरुषेयपदस्थाने अपौरुषेयपदप्रक्षेपेण** इत्यत्र न दृष्टान्तानुपपत्तिराशङ्कनीया । इदानीं इदानीन्तनत्वसहितेऽप्याकाशे कालान्तरे इदानीन्तनत्वरहितत्वस्य सत्त्वादपौरुषेयाकाशमादायैव कालान्तराख्य-दृष्टान्ते साध्यसिद्धेरन्यूनत्वात् । **श्रुतिस्तु सत्प्रतिपक्षा** इत्यत्र नित्यत्वश्रुत्या सत्प्रतिपक्षेत्यर्थः ।

**यादु०— दृष्टान्तस्येति** । पटस्य तन्त्वात्मकत्वेन तन्तुषु तद्वत्तासम्मतेरिति भावः । **वर्णधर्म इतीति** । तथा च न तत्समवाय आकाशे इति बाधितविषयतेत्यर्थः । **सत्प्रतिपक्षेति** । वाचा विरूपनित्ययेत्याद्याभिरिति शेषः ।

**वं०प०— अपौरुषेयपदप्रक्षेपेणेति** । अयं कालो वेदव्यतिरिक्तेदार्नीतनत्वरहितापौरुषेयवान् । कालत्वा-दन्यकालादिवदित्याद्यनुमानत्रये पौरुषेयपदस्थानेऽपौरुषेयपदप्रक्षेपेण सत्प्रतिपक्षत्वं द्रष्टव्यम् । तथाहि । दृष्टान्तभूतातीतकालनिष्ठेऽपौरुषेये आकाशादौ वेदव्यतिरिक्तत्वरूपविशेषणे सत्यपीदार्नीतनत्वरूपविशेष्याभावा-द्विशिष्टाभावः । पक्षीभूतवर्तमानकालनिष्ठेऽपोरुषेये वेदे इदानीन्तनत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूप-विशेषणाभावाद्विशिष्टाभावो द्रष्टव्यः । आकाशपक्षकद्वितीयानुमानेऽपि दृष्टान्तभूततन्तुनिष्ठेऽपौरुषेये तन्तुत्वे



वेदव्यतिरिक्तत्वरूपविशेषणे सत्यप्याकाशनिष्ठत्वरूपविशेष्याभावाद्विशिष्टाभावः । पक्षीभूताकाशानिष्ठापौरुषेये वेदे आकाशनिष्ठत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूपविशेषणाभावाद्विशिष्टाभावो द्रष्टव्यः । **श्रोत्रपक्षकतृतीया-नुमानेऽपि** दृष्टान्तभूतचक्षुर्ग्राह्येऽपौरुषेये रूपत्वे वेदव्यतिरिक्तत्वरूपविशेषणसद्भावेऽपि श्रोत्रग्राह्यत्वरूपविशेष्या-भावाद्विशिष्टाभावः । पक्षीभूतश्रोत्रग्राह्येऽपौरुषेये वेदे श्रोत्रग्राह्यत्वरूपविशेष्यसद्भावेऽपि वेदव्यतिरिक्तत्वरूप-विशेषणाभावाद्विशिष्टाभावो द्रष्टव्यः ।

**काल एवेति** । अखण्ड इत्यर्थः । **तदुपाधय इति** । तरणिपरिस्पन्दरूपा इत्यर्थः । **आद्येऽय-मित्यन्यकालवदिति** । अखण्डकालेऽयं वर्तमानः कालः अन्योऽतीतः काल इति विभागायोगादिति भावः । आकाशस्य तन्त्वादिना समवायाभावादिति भावः । आकाशस्य संयोगादिरूपपौरुषेयवत्त्वं केन संबन्धेन । येनार्थान्तरता स्यादित्यत आह **आकाशसमवेतैरिति** । **समवाय एवेति** । तथा चाकाशसमवेते संयोगादि-रूपेऽपौरुषेयवेदव्यतिरिक्तत्वाकाशसमवेतत्वरूपयोः विशेषणविशेष्ययोः उभयोरपि सत्त्वेन विशिष्टाभावा-संभवान्न तैरर्थान्तरतेति द्रष्टव्यम् । **साध्यवैकल्यं चेति** । दृष्टान्तीकृते तन्तौ समवायेन पटरूपपौरुषेयवत्त्वं नास्ति । तयोरभेदादतः साध्यवैकल्यमिति भावः । आकाशनिष्ठत्वं तद्वत्त्वं च समवाय एवेति पक्षे दूषणान्तरमाह **किञ्चेति** । आकाशसमवेते पौरुषेयवेदे वेदव्यतिरिक्तत्वरूपविशेषणाभावप्रयुक्तविशिष्टाभावमादाय साध्यपर्यवसानं वाच्यम् । तत्र किं वेदशब्देन वर्णा विवक्षिता उत तन्निष्ठ आनुपूर्वीरूपः क्रमविशेष इति विकल्प्याद्ये दूषणमाह **वर्णास्तावदिति** । द्वितीये दूषणमाह **क्रमस्त्विति** । तथा चाकाशे वेदशब्दाभिप्रेतक्रमसमवायवत्त्वं बाधितमिति भावः । **अस्या इति** । प्रजापतिर्वा इदमेक आसीदिति सर्वेश्वरप्रणीतत्वं प्रतिपादयन्त्याः श्रुतेरित्यर्थः । **द्वे अपीति** । ईश्वरानीश्वर-रचितत्वप्रतिपादकतयाऽभिप्रेते प्रजापतिर्वा ऋग्वेद एवेति द्वे अपि श्रुती इत्यर्थः । **न्यायोपेतेति** । न हि धर्मादिसिद्धिः स्यान्नित्यवाक्यं विना क्वचिदित्युक्तन्यायोपेतेत्यर्थः । **नित्यत्वश्रुतीति** । वाचा विरूपनित्ययेत्यादिनित्यत्व-श्रुतीत्यर्थः ।

**आनन्दः**— आद्यानुमाने पक्षं दूषयति **कालपदेनेति** । संबन्धानिरूपणादिति संयोगसमवायादि-रूपसंबन्धानिरूपणादित्यर्थः । ननु केन संबन्धेनाकाशस्य तद्वत्तादिमत्वमित्यत आह **संयोगेति** । **द्वितीय इति** । संयोगादेर्गुणत्वेन तस्य संयुक्तत्वरूपसंयोगवत्वासंभव इत्यर्थः । **आकाशेति** । तत्त्वादेराकाशे समवेतत्वाभावेन संयोगादेश्चाकाशसमवेतत्वाभावाभावेनार्थान्तरताद्वयमिति भावः । **अस्माभिरिति** । दृष्टान्तस्येत्यत्रापि हेतुः । **न्यायोपेतेति** । पौरुषेयत्वेन धर्मादिसिद्धिर्न स्यादिति न्यायोपेतेत्यर्थः ।

**कं०रा०**— ननु तन्त्वादेर्वेदव्यतिरिक्ताकाशसमवेतत्वरहितत्वेऽप्याकाशस्य तन्त्वादिमत्त्वाभावान्न तेनार्थान्तरतेत्यत आह **संयोगेति** । **समवाय एवेति** । तथा च तन्त्वादेर्वेदव्यतिरिक्ताकाशसमवेतत्व-रहितत्वेऽप्याकाशस्य तन्त्वादिना समवायाभावेन विवक्षितस्य समवायेन तद्वत्त्वस्याभावान्न तेनार्थान्तरतेति भावः । **धर्म इतीति** । तथा च न तत्समवाय आकाश इति बाधितविषयतेत्यर्थः । **श्रुतिरिति** । तस्मात्तपस्तेपानाच्चत्वारो



वेदा अजायन्तेति श्रुतिस्तु वाचा विरूपनित्ययेत्यादिश्रुत्या प्रतिरुद्धा वेदपौरुषेयत्वनिश्चयाय न प्रभवतीत्यर्थः । न केवलं नित्यत्वं प्रतिपादयन्त्या श्रुत्या वेदपौरुषेयत्वश्रुतेः सत्प्रतिपक्षता किंनाम ऋग्वेद एवाग्नेरजायतेत्यादिकया वेदस्यानीश्वररचितत्वं प्रतिपादयन्त्याऽपीत्याह **किञ्चेति** ।

**श्रीनिधि०**— सत्प्रतिपक्षान्तरमाह **किञ्चेति** । **द्वे अपीति** । प्रजापतिर्वा इदमेक एवाग्र आसीदित्येका ऋग्वेद एवाग्नेरजायतेत्याद्या अपरा ।

**वा०चं०**— एवं सर्वानुमानसाधारण्येनाप्रयोजकत्वप्रतिकूलतर्कपराहती उक्त्वा विशिष्टव्यतिरेकिमात्रासाधारणं दूषणमाह **विशिष्टेति** । तत्रापि तत्तदनुमानासाधारणदूषणान्याह **कालपदेनेत्यादिना** । **संबन्धानिरूपणादिति** । शब्दरूपगुणतयाऽङ्गीकृतस्य द्रव्यस्य वा वेदस्य सूर्यगत्यादिरूपोपाधिना संयोगस्य समवायस्य च त्वयाऽनङ्गीकारात्स्वरूपसंबन्धादेश्च संबन्धत्वस्यैवासंभवादिति भावः । **किञ्चेति** । स एवायं गकार इति प्रत्यभिज्ञया श्रोत्रं नित्यद्रव्यग्राहकं निरवयवेन्द्रियत्वान्मनोवदित्यनुमानेन तैर्वर्णैरित्याद्यागमैश्च तेषां नित्यत्वादेः सिद्धिरिति भावः । **श्रुतिस्त्विति** । अङ्गीकार्या हि नित्यतेत्यत्र हिशब्दसूचितवाचा विरूपनित्ययेति नित्यत्वप्रतिपादकश्रुत्या सत्प्रतिपक्षेत्यर्थः । अनीश्वराणामनन्तवेदप्रणयनस्यासंभावितत्वात् संभावितार्थकेश्वरप्रणीतत्वश्रुतिविरोधेनानीश्वरप्रणीतत्वश्रुतिः सावकाशेत्याशङ्क्ते **सम्प्रदायेति** । यदि संभावनामूलत्वेन बलवत्त्वं तर्हि नित्यत्वश्रुतेर्न्यायोपेततया सुतरां बलवत्त्वमित्याशयेनाह **न्यायेति** । सामान्यसिद्धिपरिशेषरूपन्यायोपेतेत्यर्थः ।

**वा०र०**— **नित्यत्वादेरिति** । आदिपदेन द्रव्यत्वपरिग्रहः । अत्र चोपलक्षणया शब्दो द्रव्यं साक्षात्संबन्धेन्द्रियग्राह्यत्वादित्यनुमानान्तरमपि प्रागुपन्यस्तं ग्राह्यम् । अत्र यत्केनचित्साक्षाद्बाह्येन्द्रियग्राह्यत्वावच्छिन्नद्रव्यत्वव्यापकं रूपवत्त्वमुपाधिः । साधनावच्छिन्नसाध्यव्यापकस्याप्युपाधित्वादित्यादिदूषणमभिहितम् । तदसत् । त्वदुक्तरीत्या रूपवत्त्वोपाधिव्यतिरेकेण विशिष्टसाध्याभावसाधनेऽर्थाप्रतिपादकत्वस्योपाधित्वात् । साक्षाद्बाह्येन्द्रियग्राह्यत्वावच्छिन्नद्रव्यत्वाभाववति शब्दान्यस्मिन्नर्थाप्रतिपादकत्वसद्भावेन साध्यव्यापकत्वात् पक्षे च तदभावेन साधनाव्यापकत्वाच्च । न च पक्षेतरत्वेनानुपाधित्वम् । श्रोत्रं नित्यद्रव्यग्राहकं निरवयवेन्द्रियत्वादित्यनुमानसिद्धं द्रव्यत्वमुपादाय बाधोन्नीततया पक्षेतरत्वेऽप्युपाधित्वसंभवात् । अस्तु पर्वतेतरत्वादीनामप्युपाधित्वमित्येतत्प्रमेयप्रतिपादकसाध्यव्यापकवैलोम्यमित्येतद्भाष्यमूलदेवताधिकरणीयतत्त्वप्रकाशिकानुसारेण तदुपाधित्वौचित्याच्च । विशेषविचारः कर्तव्योऽस्ति । एवं श्रोत्रपक्षकानुमानविचारोऽपि प्रतिपक्षादिशङ्कानिरासपरतत्त्वप्रदीपिकाद्यनुसारेण कर्तव्योऽस्ति । किञ्च ऋग्वेद इत्यादिना वक्ष्यमाणसत्प्रतिपक्षतातिरिक्तप्रतिपक्षवत्ताकथनपरतया तत्प्रतिपक्षेत्येतद्व्याचष्टे **अङ्गीकार्या हीति** । **संभावितार्थकेति** । इदं चेश्वरप्रणीतत्वश्रुतिविशेषणम् । अनीश्वरप्रणीतत्वश्रुतेः सावकाशत्वोपपादकासंभावितार्थकत्वोपपादनायानीश्वराणामित्यादिः पञ्चम्यन्तो हेतुः ।





**स०व्र०— दृष्टान्तस्येति** । पटस्य तन्त्वात्मकत्वेन तन्तुषु तद्वत्त्वासंमतेरिति भावः । **वर्णधर्म इति** । तथा च न तत्समवाय आकाश इति बाधितविषयतेत्यर्थः । **श्रुतिस्तु सत्प्रतिपक्षेति** । वाचा विरूपनित्यये-त्यादिभिरिति शेषः ।

**विठ्ठ०—** विपक्षे बाधकाभावेनाप्रयोजकत्वादिति दूषणमुक्तम् । तत्र विशिष्टव्यतिरेकिणश्चेत्यादिना सत्प्रतिपक्षान्तराण्याह **विशिष्टव्यतिरेकिणश्चेत्यादिना** । **अपौरुषेयपदप्रक्षेपेण** दृष्टान्तीभूतान्यकाले तदानींतन-परमाण्वादेरिदानींतनत्वरहितपौरुषेयवत्त्वसंभवात् । द्वितीयानुमाने च तन्तुषु तन्तुत्ववत्त्वेन तृतीये चक्षुषो रूपत्त्वग्राहकत्वेन साध्यसंभवादिति द्रष्टव्यम् । **इति चायुक्तमिति** । तन्मते कालस्याखण्डत्वादिति भावः । **संबन्धानिरूपणादिति** । मतुप्प्रत्ययार्थस्तु संबन्धो न तावत्संयोगः । परेण वेदस्याकाशगुणत्वाङ्गीकारात् । अत एव न समवायः वेदतादात्म्यं वा । तथा च पौरुषेयवानिति कालस्य वेदसंबन्धवत्त्वसाधने बाधितविषयत्वमिति भावः । तर्हि कथम्राकाशस्य तन्त्वादिमत्त्वं संबन्धानिरूपणादित्यत आह **संयोगवृत्त्येति** । **संयोगविभागेति** । आकाशगुणभूतसंयोगादीनां वेदव्यतिरिक्ताकाशसंयोगित्वरहितपौरुषेयत्वेनाकाशस्य तद्वत्त्वोपपत्तेरिति भावः । **समवाय एवेतीति** । तथाच न तन्त्वादिना अर्थान्तरता । आकाशस्य समवायवृत्त्या तत्त्वादिमत्वाभावात् नापि संयोगादिना अर्थान्तरता समवेतत्वराहित्याभावादिति भावः । **साध्यवैकल्याच्चेति** । पटस्य तन्त्वभिन्नत्वेन तत्र समवायानङ्गीकारादिति भावः । **श्रुतिस्त्विति** । प्रजापतिर्वेत्यादिश्रुतिषु अङ्गीकार्या हि नित्यतेति हिशब्दसूचितया वाचा विरूपनित्ययेत्यादि श्रुत्या सत्प्रतिपक्षा । **द्वे अपीति** । प्रजापतिर्वा इति ऋग्वेद एवाग्नेरिति च वाक्ये धर्मादिसिध्यन्यथोपपत्त्या न्यायोपेत वाचा विरूपेति नित्यत्वश्रुत्यनुरोधेन संप्रदायप्रवर्तकत्वेनेत्यर्थः । ननु वर्णाः तावन्नित्यद्रव्यत्वान्न क्वचित्समवेताः । क्रमस्तु वर्णधर्म .... एव वेद इति च प्रागुक्तत्वात्कथं न हि वयं वेदं कूटस्थनित्यं ब्रूम इत्यभ्युपगमवादे वेयमुक्तिः । वस्तुतस्तु क्रमविशिष्टवर्णानां कूटस्थनित्यं ब्रूम इत्यतोऽभ्युपगम-वादेनैवेयमुक्तिः । वस्तुतस्तु क्रमविशिष्टवर्णानां कूटस्थनित्यत्वमेव भग .... दौ न चोच्चारणकाल एव वर्णानां उत्पत्तिरिति वाच्यम् । 'तदेवेदं वचनमिति प्रत्यभिज्ञाविरोधादिति तत्क्रमैरेव तैर्वर्णैः तैः स्वैरैव नान्यथे'ति तत्क्रमात्मको वेदश्च नित्यए ... ना तथोपपादितत्वादिति भावः । तथापि न वेदस्यापौरुषेयता युज्यते त .... अहमादिपदप्रयोगानुपपत्तेः । तेन पुरुषाभिप्रायपूर्वकताप्रतीतेः । किञ्च वेदस्याप्तोक्तत्वेनैव प्रामाण्यमनुमातव्यम् । नान्यथा वेदार्थस्य मानान्तरागोचरत्वेन सजातीयसंवादासंभवात् मोक्षादेः तत्फलस्याप्रत्यक्षत्वेनार्थक्रियासामर्थ्यादि-रूपविजातीयसंवादेनाप्यनुमातुमशक्यत्वात् ततश्चापौरुषेयत्वे प्रामाण्यं दुर्ज्ञानं स्यात् । अपि च प्रामाण्यस्याप्तोक्तत्व-रूपगुणजन्यत्वेनापौरुषेयत्वे यथार्थज्ञानजनकत्वमेवासिद्धमिति चेन्न । .अपौरुषेयत्वेऽपि मन्त्रादिद्रष्टृऋष्या-द्यभिप्रायप्रवेशस्यास्माभिरङ्गीकृतत्वात् अन्यथा त्वन्मतेऽपि 'शरीरं मे विचर्षणं यत्ते रूपं कल्याणतमं तत्ते पश्यामि' 'श्रुतं मे मा प्रहासीः' इत्यादेरीश्वरवाक्यत्वायोगेन ऋषिवाक्यत्वाभावे अप्रामाण्यप्राप्तेः प्रामाण्यग्रहणार्थमाप्तोक्तत्वादे उपयोग इति चायुक्तम् । ज्ञानप्रमाणस्य साक्षिवेद्यत्वेन करणप्रामाण्यस्य ज्ञानप्रामाण्यान्वयव्यतिरेकावसेयत्वेन आप्तोक्तत्वादेरुपयोगाभावस्योक्तत्वात् प्रामाण्यं गुणजन्यमित्यनुपपन्नम् ।





**चषकः— दृष्टान्तस्येति** । तन्तुपटयोरभ्युपगताधाराधेयभावानुपगतेरिति भावः । **वर्णधर्म इतीति** । तथा च न तन्निरूपितसमवाय आकाश इति बाध इति भावः । **सत्प्रतिपक्षेति** । वाचा विरूपनित्ययेत्यादि श्रुतिभिरिति पूरणीयम् ।

वर्णनित्यता—

**६४५ सु०— ननु वर्णा एव तावदनित्यास्तत्कुतस्तदात्मकस्य वेदस्य नित्यत्वमिति । मैवम् । न हि वयं वेदं कूटस्थनित्यं ब्रूमः किन्तु नियतैकप्रकारम् । तत्र को वर्णनित्यत्वस्योपयोगः । वस्तुतत्वविचारकं प्रति तु वर्णानां कूटस्थनित्यत्वं भगवत्पादैरेवान्यत्रोपपादितमित्यास्तां विस्तरः ।**

**परि०— अन्यत्रेति** । तत्त्वनिर्णये तदेवेदं वचनमिति प्रत्यभिज्ञानादित्यादिग्रन्थेनोपपादितमित्यर्थः । प्रपञ्चितमेतद्वर्णनित्यत्वं वेदापौरुषेयत्वं च तर्कताण्डवे प्रथमपरिच्छेदे ।

**गु०दी०— न हि वयं वेदं कूटस्थनित्यं ब्रूम** इति अभ्युपगमवादोऽयम् । वस्तुस्थितेः "वस्तुतत्त्वविचारकं प्रति तु वर्णानां कूटस्थनित्यत्वम्" इति स्वेनैवोक्तत्वात् ।

**यादु०—** वर्णानां जन्यत्वमभ्युपेत्य समाधत्ते **नियतैकप्रकारमिति** । **अन्यत्रेति** । विष्णुतत्त्वनिर्णयादावित्यर्थः । ननु वैदिकमहमादिपदं स्वतन्त्रवक्तृपरम् । अहमादिपदत्वात् संमतवत् इत्यनुमानाद्वेदस्य सकर्तृकत्वसिद्धिरिति चेन्न । अपौरुषेयेऽपि वेदे मन्त्रलिङ्गप्रकरणादिना यजमानाद्यभिप्रायप्रवेशस्यास्माभिरङ्गीकारात् । अन्यथा त्वन्मतेऽपि वेदे शरीरं मे विचर्षणमित्यादौ स्वतन्त्रवक्तुरीश्वरस्यैवाहमादिशब्दार्थत्वापातात् । ननु वेदे स्वतन्त्रवक्तुरभावे इच्छाघटिततात्पर्यासंभवादुपक्रमादिना तन्निर्णयानुसरणं न स्यात् । तथा च श्रुतिकुमार्यास्तात्पर्यरूपगर्भ एव पुंयोगे लिङ्गमिति चेन्न । तत्प्रमितिशेषत्वरूपस्य तात्पर्यस्यास्मदभिमतत्वेन तस्येच्छादिघटितत्वानङ्गीकारात् । द्रष्टृपुरुषेच्छामादायैवेच्छाघटिततात्पर्यस्याप्यपौरुषेये वेदे संभवाच्चेत्याद्यभिप्रेत्याह **आस्तां विस्तर इति** ।

**वं०प०— अनित्या इति** । वैकारिकत्वेन तज्जन्यत्वात्तन्नाशेन नाशाच्च न क्रमविशिष्टवेदस्य कूटस्थनित्यत्वमित्यर्थः । **नियतैकप्रकारमिति** । नियतानुपूर्वीविशेषविशिष्टमित्यर्थः । **उपयोग इति** । वर्णानामनित्यत्वेऽपि तदात्मकस्य नियतैकप्रकारताया अनपायादित्यर्थः । **अन्यत्रेति** । न चोच्चारणकाल एवेत्यादिना तत्त्वनिर्णय इत्यर्थः ।





**आनन्दः—** **अन्यत्रेति** । विष्णुतत्त्वनिर्णयादावित्यर्थः ।

**वा०चं०—** तर्हि कथं तत्त्वनिर्णये तदुपपादनमित्यत आह **वस्तुतत्त्वेति** । वस्तुतत्त्वमत्रापि व्युत्पादनीयमेवेत्यत आह **आस्तामिति** । यद्वा ननु गूढकर्तृके वाक्ये व्यभिचारान्न परिशेषो युक्त इत्यतोऽन्यत्र भगवत्पादैरेव तत्परिहारस्य निपुणतरमभिधानान्न विस्तरो युक्त इत्याह **आस्तामिति** ।

**वा०र०—** ननु वर्णा एव तावदनित्या इत्यादिशङ्कामुत्थाप्य न हि वयं वेदं कूटस्थनित्यं ब्रूमः । किन्तु नियतैकप्रकारम् । तत्र को वर्णनित्यत्वस्योपयोगः । **वस्तुतत्त्वेत्यादि** मूलग्रन्थस्य तत्त्वनिर्णयटीका-तत्त्वसंख्यानटीकाग्रन्थस्य चैकवाक्यताविचारो गायत्र्यधिकरणटीकायां करिष्यते । तत एव प्रतिपत्तव्यः । **अन्यत्रेति** । तत्त्वनिर्णयेन च केनचित्कृत्वा वेद इत्युक्तं वेदसममित्यादिनेति शेषः । प्रक्षेपेण व्यर्थमिवेति लिङ्गविपरिणामेनाकृष्यते । न्यायतया धर्मेत्यत्र नञः प्रश्लेषेणाधर्मेति पदच्छेदः । आदिपदं मूलानुसारेण ।

**स०व्र०—** वर्णानां जन्यत्वमभ्युपेत्य समाधत्ते **नियतैकप्रकारमिति** । **अन्यत्रेति** । विष्णुतत्त्व-निर्णयादावित्यर्थः । ननु वैदिकमहमादिपदं स्वतन्त्रवक्तृपरम् । अहमादिपदत्वात् संमतवत् इत्यनुमानाद्वेदस्य सकर्तृकत्वसिद्धिरिति चेन्न । अपौरुषेयेऽपि वेदे मन्त्रलिङ्गप्रकरणादिना यजमानाद्यभिप्रायप्रवेशस्यास्माभिरङ्गीकारात् । अन्यथा त्वन्मतेऽपि वेदे शरीरं मे विचर्षणमित्यादौ स्वतन्त्रवक्तुरीश्वरस्यैवाहमादिशब्दार्थत्वापातात् । ननु वेदे स्वतन्त्रवक्तुरभावे इच्छाघटिततात्पर्यासंभवादुपक्रमादिना तन्निर्णयानुसरणं न स्यात् । तथाच श्रुतिकुमार्या-स्तात्पर्यरूपगर्भ एव पुंयोगे लिङ्गमिति चेन्न । तत्प्रमितिशेषत्वरूपस्य तात्पर्यस्यास्मदभिमतत्वेन तस्येच्छादि-घटितत्वानङ्गीकारात् । द्रष्टृपुरुषेच्छामादायैव इच्छाघटिततात्पर्यस्याप्यपौरुषेये वेदे संभवाच्चेत्याद्यभिप्रेत्याह **आस्तां विस्तर इति** ।

**वि०ठ०—** यादृच्छिकसंवादिनोऽनाप्तवाक्यस्यापि प्रमाणज्ञानजनकत्वदर्शनादित्यादि हृदि निधायाह **आस्तां विस्तर इति**।

**चषकः—** वर्णानामनित्यत्वमुपेत्य समाधत्ते **नियतैकेति** । **अन्यत्रेति** । विष्णुतत्त्वविनिर्णयादावि-त्यर्थः । ननु वेदस्य पौरुषेयत्वानङ्गीकारे इच्छारूपतात्पर्यस्य दुरुपपादतया तत्प्रतिसन्धानाधीना अन्वयधीः कथं तत्रोदीयादित्याशङ्कायां तत्प्रमितिशेषवत्त्वरूपतात्पर्यस्य सिद्धान्तेऽभिप्रेतस्येच्छारूपतानुपगतेः । तत्तद्द्रष्टृ-पुरुषेच्छारूपस्य वा तस्यापौरुषेयत्वेऽपि तत्र सूपपादत्वाच्चेत्याह **आस्तामिति**।





संस्कृतवेदस्य बोधकता—

**६४६ सु०— अत्राह कश्चित् वेदः संस्कृतोऽसंस्कृतो वा बोधकः । न तावद् द्वितीयः सर्वदा बोधकत्वप्रसङ्गात् । आद्ये संस्कारकेष्वस्याश्वासकारणाभावात्सर्वमिदं गजस्नानमिति ॥ तदिदमयुक्तम् । संस्कारकाः खलूच्चारयितारो व्याख्यातारश्च वेदस्य । तत्राद्येषु तावत् अविगीतसंवाददर्शनेनाश्वासो युज्यते । द्वितीयेषु तु लोकावगतां शब्दशक्तिं लौकिकानेव तात्पर्यावगमोपायाननुसरत्सु कथमनाश्वास इति यत्किञ्चिदेतत् ।**

**गु०दी०— वेदः संस्कृत** इत्यत्र संस्कारपदेनाभियुक्तकृतव्याख्यानादिकं गृह्यते ।

**यादु०— संस्कृत इति** । सलक्षणमुच्चारितः ससंप्रदायं व्याख्यातो वेत्यर्थः ।

**वं०प०— सर्वमिदं गजस्नानमिति** । वेदप्रामाण्यादिसमर्थनमित्यर्थः । वेदप्रामाण्यादिके समर्थितेऽपि संस्कृतासंस्कृतादिविकल्पेनार्थबोधकत्वासंभवाद्व्यर्थमेव तत्समर्थनम् । पुनर्धूलीप्रक्षेपेण गजस्नानवदिति भावः । **शक्तिं** योगरूढिरूपाम् । **तात्पर्यावगमोपायान्** उपक्रमादीन् ।

**आनन्दः— वेदः संस्कृत इति** । पदार्थावान्तरवाक्यार्थवत्तयोपक्रमाद्यानुगुण्येन पूर्वापरपर्यालोचनया महावाक्यार्थतात्पर्यवत्तयावधारितत्वं संस्कृतत्वमित्यर्थः । **संस्कारकेष्विति** । अवधारकेष्वित्यर्थः । **आद्येष्विति** । उच्चारयितृष्वित्यर्थः । **द्वितीयेष्विति** । व्याख्यातृष्वित्यर्थः ।

**कं०रा०— संस्कृत इति** । सलक्षणमुच्चारित इत्यर्थः । ससंप्रदायं व्याख्यातो वा ।

**वा०चं०— सर्वमिदमिति** । कर्तृषु विश्वासकारणाभावात् धर्मादिनिश्चयाय अपौरुषेयत्वाङ्गीकारेऽपि संस्कारकेषु विश्वासकारणाभावात्पुनस्तदनिश्चयापातेनापौरुषेयत्वाङ्गीकारो धूलिनिर्हरणार्थं गजस्नानं पुनर्धूलिप्रक्षेपेणेव व्यर्थ इत्यर्थः । इति यदेतत्किञ्चित्क्षुद्रमित्यर्थः । अतो न भाष्यकारेण कण्ठतो निराकृतमिति भावः ।

**स०व्र०— वेदः संस्कृत इति** । सलक्षणमुच्चारितः ससंप्रदायं व्याख्यातो वेत्यर्थः ।

**विठ्ठ०— संस्कृत इति** । सलक्षणमुच्चारितः ससंप्रदायं व्याख्यात इत्यर्थः । **संस्कारकेष्विति** । व्याख्यातृषु अध्यापयितृषु चेत्यर्थः । **लौकिकानेवेति** । लौकिकरूढाभिप्रायवत्त्वेन तात्पर्यलिङ्गतया प्रसिद्धत्वादित्याशयः ।





॥ धर्माद्यनङ्गीकर्तारं चार्वाकं प्रति अपौरुषेयवाक्यसाधनम् ॥

अधर्मवादिनां वाक्यस्य अप्रयोजनकत्वम्—

**६४७ सु०— स्यादेतदेवं धर्मादिकमभ्युपगच्छन्तं प्रत्यपौरुषेयवाक्यसमर्थनम् । यस्तु धर्मादिकमेव नाङ्गीकरोति चार्वाकस्तं प्रति कथम् । निराश्रयत्वादिति चेन्न । यतस्तेनाप्यङ्गीकारयाम इत्याशयवानाह अधर्मवादिन इति ।**

**अनु०— अधर्मवादिनो वाक्यमप्रयोजनमेव हि ॥**

धर्माद्यतीन्द्रियार्थानभ्युपगन्तुरित्यर्थः । **वाक्यं** शास्त्रम् । **अप्रयोजनम्** इत्युपलक्षणम्; निर्विषयं चेत्यपि द्रष्टव्यम् । **हि**शब्दो यस्मादित्यर्थे । 'तस्मात्तेनापि धर्मादिकमङ्गीकार्यमि'ति शेषः । एतच्च 'अभ्युपगमेऽप्यर्थाभावादि'त्यत्रैव व्युत्पादयिष्यामः ।

**परि०— इत्यत्रेति ।** समयपादीयतृतीयेऽधिकरणे ।

**वं०प०— निराश्रयत्वादिति ।** धर्मादिकं प्रमाणोपेतं वस्तुत्वादित्यनुमानं न युक्तम् । तं प्रत्याश्रयासिद्धत्वादित्यर्थः ।

**आनन्दः**— धर्मविरुद्धातीन्द्रियवस्तुवादित्वेन कथं दीयत शास्त्रस्य प्रयोजनाद्यभावापादनं तत्राह **धर्मादीति ।**

**कं०रा०— यस्त्विति ।** यस्तु चार्वाको धर्मादिकमेव नाङ्गीकरोति तं प्रति निराश्रयतया धर्मादिकं प्रमाणोपेतं वस्तुत्वादिति सामान्यसिद्धेरेवायोगेन तन्मूलकपरिशेषस्य सुतरामयोगात्सामान्यसिद्धिपरिशेषाभ्यामपौरुषेयवाक्यसमर्थनं न संभवतीत्यर्थः ।

**वा०चं०**— ननु चार्वाकनिराकरणं न प्रकृतसङ्गतमित्यतस्तत्सङ्गमयति **स्यादेतदिति ।** नन्वधर्मवादिनः समानन्यायतया धर्माद्यतीन्द्रियाभ्युपगन्तृत्वात्तं प्रतीदं दूषणं न चार्वाकं प्रति तस्याताद‍ृशत्वादित्यत आह **धर्मादीति ।** यद्वा धर्माद्यभाववादिनं प्रति न निर्विषयत्वाद्यापादनं युक्तं तस्यैव विषयत्वादुत्तरवाक्यानानुगुण्याच्चेत्यत आह **धर्मादीति ।** ननु तदीययत्किञ्चित्तद्वाक्यवैयर्थ्यं नानिष्टमित्यत आह **वाक्यमिति । उपलक्षणमिति ।** इदं च प्रयोजनपदं रूढिमाश्रित्य । यौगिकत्वे तु योगत एव विषयस्यापि लाभः । तथा चोक्तं तत्त्वनिर्णयटीकायाम् । चार्वाकेण धर्मादिकमङ्गीकरणीयमित्यस्य शेषपूरणेन मूलारूढतां दर्शयितुं तदुपयुक्ततया हिशब्दं व्याचष्टे **हिशब्द इति ।** नन्वतीन्द्रियानङ्गीकारेऽप्यैन्द्रियकस्यैव विषयादेः संभवात्कथमेतदापादनमित्यत आह **एतच्चेति ।**



**वा०र०— उत्तरवाक्यानानुगुण्यमिति** । उत्तरत्र पराभ्युपगतधर्माद्यभावमाश्रित्यापौरुषेयवाक्याभ्युपगम अङ्गीकार्यते । अत्र च धर्माद्यभाव एव नाङ्गीकृत इति प्रतीयतेऽतस्तद्विरोध इत्यर्थः । **तत्त्वनिर्णयटीकायामिति** । समयप्रयोजनाभावादित्येतद्व्याख्यावसरे प्रयुज्यते प्रेर्यते प्रणेता प्रणयने श्रोता च श्रवणे येन तत्प्रयोजनं विषयः साध्यं चेत्युक्तेरिति भावः । तत्त्वनिर्णयटीकायामित्युपलक्षणम् । सुखादिधर्महानौ तु किमित्येतच्चतुर्थाध्यायगतानु-व्याख्यानमूले प्रयुज्यते प्रवर्त्यते पुरुषो येनेति विगृहीष्यत इत्यपि ज्ञेयम् । तथा गीताभाष्यस्थाप्रयोजकत्वादित्यस्यापि प्रयुज्यते प्रवर्त्यते प्रणेता श्रोता चेत्यादिना प्रयोजकशब्दोऽप्येवं व्याख्यातः ।

**विठ्ठ०—** अधर्मवादिन इत्यस्य धर्माद्यभाववादिन इत्यर्थपरतया धर्माद्यभावाङ्गीकरणपरतयोत्तरं सङ्गमयितुमाह **स्यादेतदेवमिति** । निराश्रयत्वादिकं प्रमाणोपेतं वस्तुत्वादित्यनुमानस्याश्रयासिद्धत्वादिति भावः । **एतच्चेति** । धर्माद्यनङ्गीकारे विषयप्रयोजनशून्यत्वमित्यर्थः ।

**अपौरुषेयवाक्यानङ्गीकारे प्रत्यक्षानवगततया धर्माभावस्याप्यसिद्धिः—**

**६४८ सु०— किञ्च मा भूद्धर्मादिकम् । धर्माद्यभावस्तावच्चार्वाकिणाङ्गीकृत एव । तमाश्रित्यापौरुषेयवाक्यं तेनाङ्गीकारयाम इत्याशयवानाह धर्माभावोऽपीति ।**

**अनु०— धर्माभावोऽपि नो तेन प्रत्यक्षावगतो भवेत् ॥**
**अतः संशयसंपत्तौ वाक्यं प्रत्यक्षवत्प्रमा ॥**

**तेन** चार्वाकिण(न) । **धर्माभावोऽपि प्रत्यक्षावगतो न भवेत्** । अनुमानं तु नाङ्गीकृतम् । अङ्गीकारेऽपि न तद्विषयम् । यतः **अतो**, धर्माद्यभावावगमाय **वाक्यं** प्रत्यक्षमिव प्रमाण-मङ्गीकरणीयम् । तच्चोक्तविधया अन्यस्मिन्ननाश्वासादपौरुषेयमेवेति ।

**परि०— न तद्विषयमिति** । प्राक् प्रतियोगिनो धर्मादेरानुमानिकत्वनिरासेनेति भावः । **धर्माद्यभावमपीति** । प्रतियोग्यनुपलब्ध्येति योज्यम् ।

**यादु०— अङ्गीकारेऽपीति** । लिङ्गदर्शनान्तरं लैङ्गिकव्यवहारः संभावनामात्रात्संवादेन च प्रामाण्या-भिमानस्तत्रेति तेनाङ्गीकारादेवमुक्तमिति मन्तव्यम् । **न तद्विषयमिति** । यथा धर्मादिकं केवलानुमानेन साधयितुं न शक्यमित्युक्तं तथा तदभावोऽपि नानुमानेन साधयितुं शक्यो लिङ्गाभावादिति भावः ।

**वा०चं०—** ननु धर्माद्यवगमार्थत्वेनापौरुषेयवाक्याङ्गीकरणप्रसङ्गे धर्माद्यभावावगमार्थतया तदङ्गीकरणं प्रकृतासङ्गतमित्यतो 'ननु माऽस्तु धर्मादिकमतीन्द्रियं विषयादि तथाऽपि न शास्त्रस्य निर्विषयत्वाद्यापत्तिः ।





धर्माद्यभावादेरेव विषयादितासंभवादि'ति परेणाशङ्किते किमस्माकं धर्मादिविषयकेण प्रकृतानुपयुक्तेनाग्रहेण विषयादित्वादिना त्वदभिमतधर्माद्यभावादिसाधकतयैवापौरुषेयवाक्यमङ्गीकारयाम इत्याशयेनोत्तरग्रन्थप्रवृत्ते-र्नासङ्गतिरित्याशयेनाह **किञ्चेति** । तेनेति धर्माद्यनभ्युपगन्तृपरामर्शस्य निष्प्रयोजनत्वाद्विशेष्यमात्रपरामर्श इत्याह **तेनेति** । नन्वतो वाक्यमिति परिशेषोऽनुपपन्नः । अनुमानानिरासादित्यतः स्पष्टतया भाष्यकृतोऽपेक्षितं तन्निरास-प्रकारं दर्शयति **अनुमानं त्विति** ।

**वा०र०— अङ्गीकरणप्रसङ्ग इति** । न हि धर्मादीत्यारभ्यैतत्पर्यन्तं धर्मादिकं सर्ववादिभिरङ्गीकृतमिति तैस्तत्साधकतया अपौरुषेयं वाक्यमङ्गीकार्यमेव । योऽपि चार्वाको धर्मादिकं नाङ्गीकरोति तेनापि स्ववाक्यस्य विषयप्रयोजनवत्त्वार्थधर्मादिकमङ्गीकार्यमेव । तथाच तत्साधकत्वेन तेनाप्यपौरुषेयं वाक्यमङ्गीकार्यमित्येवमपौरुषेय-वाक्यस्य यदङ्गीकरणं प्रकृतम् । तदवसर इत्यर्थः । **आग्रहेणेति** । अनेन तत्त्वनिर्णयस्थपरस्परहिंसादिना-ऽपकारप्राप्त्यादिदूषणेन धर्माद्यभावस्य विषयतानुपपत्तेर्धर्मादिकमेव विषय इत्यपि वक्तुं शक्यमिति सूचितमिति ज्ञेयम् । **परामर्शस्येति** । अधर्मवादिन इत्यनेन विशिष्टरूपेणैव प्रक्रमात्तत्परामर्शप्राप्तिरिति ज्ञेयम् ।

**विठ्ठ०—** लिङ्गदर्शनात्साध्यव्यवहारः संभावनामात्रेण संवादेन चानुमानप्रामाण्याभिमान इत्यत आह **अङ्गीकारेऽपीति** । **न तद्विषयोऽयमिति** । अतीन्द्रियत्वेन संवादाद्यभावादिति भावः । सतोऽपीत्यतःपरं धर्मादेरिति शेषः । प्रत्यक्षस्य योग्याभावमात्रग्राहकत्वादिति भावः ।

**॥ करणान्तरेण अज्ञातार्थतया संशयसंपत्तौ सत्यां आगमस्य तदर्थनिर्णायकत्वम् ॥**

**६४९ सु०— ननु घटाद्यभावमिव धर्माद्यभावमपि प्रत्यक्षमेव कुतो न गोचरयेत् । मैवम् । अयोग्यतया चक्षुषा रसस्येव प्रत्यक्षेण सतोऽप्यग्रहणोपपत्तेः ॥ किं योग्यताविशेषणेन; यत्प्रत्यक्षेण सर्वथा नोपलभ्यते तन्नास्त्येवेति निश्चीयत इति चेत् ॥ स्यादेतदेवम् । यद्यत्र वादिनो न विप्रतिपद्येरन् । यदि च चक्षुरादिना रसादिकमयोग्यतया न गृह्यत इति न स्यात् । सत्यां तु वादिविप्रतिपत्तौ, सति चायोग्यतया क्वचिदनुपलम्भे, प्रत्यक्षानुपलब्धिः संशयमेव संपादयति 'किमनुपलम्भान्नास्ति धर्मादिकम्, उत वाद्यन्तरोक्तरीत्या चक्षुषाऽनुपलभ्यमानो रसो रसनेनेव अयोग्यतया प्रत्यक्षेणानुपलभ्यमानमपि प्रमाणान्तरादस्ती'ति । न हि न्यायमतिक्रम्य स्वसमयमात्रेण संशयोत्तारो युज्यते । एतत्संशयनिरासार्थमपि वाक्यं प्रमाणमङ्गीकरणीयम्; यथा प्रत्यक्षयोग्येऽर्थे 'स्थाणुर्वा पुरुषो वे'ति संशयनिवृत्तये विशेषप्रत्यक्षमिति ॥ तदिदमुक्तं संशयसंपत्तौ सत्यामिति ।**

**तदेवमपौरुषेयत्वाद्वेदस्य कर्तृदोषमूलत्वाभावेन स्वत एव प्रामाण्यमिति सिद्धम् ।**





**परि०— सतोऽपीति** । धर्मादेरिति शेषः । **न्यायमतिक्रम्येति** । रसस्येवायोग्यतया विद्यमानोऽपि धर्मादिर्नोपलभ्यत इति न्यायमतिक्रम्य प्रत्यक्षेणानुपलम्भान्नास्तीति स्वसिद्धान्तमात्रेण संशयनिवृत्तिर्न हि युज्यत इत्यर्थः ।। **वेदापौरुषेयत्वसमर्थनम्** ।।

**यादु०— नास्त्येवेति निश्चीयत इति** । शशविषाणादिकमिवेति शेषः । अत्र धर्मादिकं किं नास्तीत्युतास्तीत्येव सन्देहः । तत्राद्यकोटिप्रापकमुक्तम् **अनुपलम्भादिति** । न ह्यनुपलभ्यमानं शशविषाणादिकमस्तीति सन्दिह्यतेऽतः कथमयं संशयः इत्याशङ्कायां तद्वैलक्षण्यप्रदर्शनाय द्वितीयकोट्युपपादकमुक्तं **वाद्यन्तरोक्तरीत्येति** । न वाद्यन्तरोक्तत्वमात्रेण वस्तुसत्त्वसिद्धिः किन्तु प्रमाणादेव । अन्यथा शून्यादेरपि सिद्धिप्रसङ्गात् । अतः कथमेतत् द्वितीयकोटिप्रापकमित्यत उक्तं **प्रमाणान्तरादिति** । तत्संभावनार्थमुक्तं **चक्षुषाऽनुपलभ्यमानोऽपीत्यादि** । तदेतत् द्वितीयकोटिप्रापकद्वयं क्रमेणोपपादयितुं यद्यत्र वादिन इत्यादिकः प्राक्तनो ग्रन्थ इत्यवधेयम् । **न हि न्यायमतिक्रम्येति** । संशयकोटिप्रापकन्यायमतिक्रम्येत्यर्थः । तथा च संशयकोटिप्रापकन्याययोः प्रबलत्वान्न तन्मूलकः संशयः समयमात्रनिवर्त्य इति भावः ।

**वं०प०— प्रत्यक्षेणेति** । सतोऽपि धर्मादेरयोग्यत्वात्प्रत्यक्षेणाग्रहणोपपत्तेरित्यर्थः । तथा च योग्यस्यानुपलब्धिरभावग्राहिका साऽत्र नास्तीति भावः । विशेषप्रत्यक्षं पुरुषत्वव्याप्यकरादिदर्शनम् । **इति वेदापौरुषेयत्वसमर्थनम्** ।।

**आनन्दः—** संशयमेव दर्शयति **किमनुपलम्भादिति** ।

**कं०रा०— अयोग्यतयेति** । अयोग्यतया चक्षुषा रसस्याग्रहणवद्विद्यमानस्यापि धर्मादेरयोग्यतया प्रत्यक्षेणाग्रहणोपपत्तेः । यदि धर्मादिकं स्यात्तर्ह्युपलभ्येतेति तर्किततत्सत्त्वप्रसञ्जितप्रतियोगिकत्वरूपयोग्यताविशिष्टानुपलब्धेरभावान्न प्रत्यक्षं धर्माद्यभावनिश्चयायालमित्यर्थः । शङ्कते **किमिति** । यत्प्रत्यक्षेण सर्वथा नोपलभ्यते तन्नास्त्येवेति निश्चीयत इत्यनुपलब्धिमात्रस्याभावनिश्चायकत्वे संभवति तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वरूपयोग्यताविशेषणं व्यर्थमिति भावः । यद्वा । अयोग्यतयेत्यादिपरिहारवाक्यस्यायमर्थः । अयोग्यत्वेन विद्यमानस्यापि रसस्य चक्षुषाऽनुपलम्भवत्सतोऽपि धर्मादेरयोग्यत्वेन प्रत्यक्षेणानुपलम्भोपपत्तेः । योग्यस्यानुपलब्धिर्नेति न प्रत्यक्षेण धर्माद्यनिश्चयः संभवतीत्येतदनुसारेण किमित्यादिशङ्काग्रन्थस्यापि यत्प्रत्यक्षेण सर्वथाऽनुपलभ्यते तन्नास्त्येवेति निश्चीयत इत्यनुपलब्धिमात्रस्याभावनिश्चयहेतुत्वसंभवे योग्यस्यानुपलब्धिरभावनिश्चायकेति किं योग्यताविशेषणेनेत्यर्थो द्रष्टव्यः । **प्रत्यक्षेति** । प्रत्यक्षेणानुपलब्धिः संशयमेव संपादयत्येव । न तु निश्चयमित्यर्थः । योग्यानुपलब्ध्यभावेन प्रत्यक्षेण धर्माद्यनिश्चयो न संभवतीत्येतत्समाधानमनुपलब्धिरभावज्ञानकारणमिति परमतानुसारेणैव न स्वमतानुसारेण । पद्धतावनुपलब्धिस्त्ववर्जनीयसन्निधिरेवेत्युक्तत्वेन स्वमतेऽनुपलब्धेरभावकारणत्वाभावात् । अयोग्यत्वाच्च । तथा हि । अनुपब्धेरुपलब्धिसामान्याभावरूपत्वे शङ्खे शङ्खत्वेन लिङ्गेन श्वेतत्वे-





ऽनुमिते श्वैत्याभावभ्रमानुदयप्रसङ्गः। न चोक्तरूपानुपलब्धिरभावप्रमाहेतुरिति वाच्यम्। गुञ्जापुञ्जे चक्षुषाऽऽरोपितेन वह्नित्वेन उष्णस्पर्शानुमितौ सत्यां त्वचोष्णस्पर्शाभावप्रमाऽनुदयप्रसङ्गात्। न च प्रमारूपोपलब्धिसामान्याभावोऽभावप्रमाहेतुरिति वाच्यम्। शुक्तौ रूप्यभ्रमे सत्यपि रूप्यप्रमाभावस्य सत्त्वेन रूप्याभावप्रमाप्रसङ्गात्। न च वाच्यं प्रत्यक्षरूपोपलब्ध्यभावोऽनुपलब्धिशब्देन विवक्षितस्ततो नोक्तदोष इति। मण्डूकवसाञ्जनदोषेण वंशमुरगत्वेन चक्षुषा पश्यतस्त्वचोरगत्वाभावाप्रमितिप्रसङ्गात्। न चाभावग्राहकेन्द्रियकरणकज्ञानाभावोऽनुपलब्धिरिति वाच्यम्। विनश्यदवस्थापन्नघटविषयकस्य कपाले घटोऽस्तीति चाक्षुषसाक्षात्कारस्योत्पत्त्यनन्तरं घटध्वंसे सति तत्ध्वंसविषयकचाक्षुषसाक्षात्कारानुदयप्रसङ्गात्। ध्वंससाक्षात्कारोत्पत्त्यपेक्षया पूर्वक्षणरूपध्वंसोत्पत्तिक्षणेऽभावग्राहकेन्द्रियकरणघटज्ञानस्य स्थित्या तदभावरूपानुपलब्ध्यभावात्। एतेनैव तदिन्द्रियजन्यानाहार्यप्रत्यक्षे प्रतियोग्यधिकरणसंसर्गविषयकत्वाभावेऽनुपलब्धिरित्येतदपि निरस्तम्। स्वमतानुसारेण तु चक्षुर्योग्यस्य रूपादेश्चक्षुषाऽभावनिश्चयात् तदयोग्यस्य रसादेस्तेनाभावनिश्चयात् अन्वयव्यतिरेकाभ्यां संसर्गाभावप्रत्यक्षतायां प्रतियोगियोग्यत्वस्यापि तन्त्रतया तदभावान्न प्रत्यक्षेण धर्माद्यभावनिश्चयः संभवतीति समाधानं द्रष्टव्यम्।

**श्रीनिधि०**— अत्र धर्माद्यभावे **वादिनो न विप्रतिपद्येरन्**। विप्रतिपद्यन्त एवेत्यर्थः। **सति चायोग्यतया क्वचिदनुपलम्भ इति**। इदं च स्वेनाप्यङ्गीकृतमिति भावः। प्रत्यक्षवदिति मूलं योजयति **यथा प्रत्यक्षयोग्येऽर्थे इति**।

**वा०चं०**— संशयसंपत्तावित्यस्य प्रसक्तिं दर्शयितुं न प्रत्यक्षावगत इत्यत्रानुपपत्तिं शङ्कते **नन्विति**। नन्वनुपलब्धिविरुद्धा वादिविप्रतिपत्तिर्न संशयाय भवतीत्यतोऽनुपलब्धेः सावकाशत्वमाह **यदि चेति**। **वादिविप्रतिपत्ताविति**। वादिनां धर्मादिसत्त्वाभिमान इत्यर्थः। **अस्तीतीति**। अनेन वादिविप्रतिपत्तिः क्वचिदयोग्यताप्रयुक्ता दर्शनयोर्मिलितयोरनुपलब्धेरस्तित्वकोटिसाहचर्यप्रापकतया साधारणत्वसंपादकत्वेन संशयोपयोग उक्तः। नास्तित्वकोटिसाहचर्यस्य च स्पष्टत्वादनुपपादनम्। ननु यत्प्रत्यक्षेण नोपलभ्यते तन्नास्त्येवेति नियमादेव संशयनिवृत्तिः स्यादित्यत उक्तरीत्या संशयप्रापकन्यायप्राप्तसंशयस्य त्वत्समयाभ्युपेतनियममात्रेणापह्नवेऽतिप्रसङ्ग इत्याशयेनाह **न हीति**। अन्यथा चक्षुरेकप्रत्यक्षवादिनाऽपि केनचित्तदनुपलम्भाद्रसाद्यभावं वदता जीयेतेति भावः। प्रत्यक्षयोग्येऽप्यर्थे संशयनिवृत्तये विशेषानुसरणं प्रत्यक्षवदिति मूलोक्तमुक्तेऽर्थे संभावकत्वेनाह **यथेति**।

**वा०र०**— तेन प्रत्यक्षावगत इत्यत्र तृतीया यस्य तौ नाभिमतावित्यत्रत्यव्युत्पादनानुसारेण व्युत्पाद्या। वादिविप्रतिपत्तावित्यस्य वादिनां परस्परं विप्रतिपत्तावित्यर्थप्रतीतिनिरासायाह **धर्मादिसत्त्वाभिमान इति**। अनेन चार्वाकातिरिक्तवादिनां चार्वाकप्रतिपन्नविपरीतवादित्वेन विप्रतिपत्तिशब्दप्रयोग इति सूचितम्।

**स०व्र०**— **न हि न्यायमतिक्रम्येति**। संशयकोटिप्रापकन्यायमतिक्रम्येत्यर्थः। संशयकोटिप्रापकन्याययोः प्रबलत्वान्न तन्मूलकः संशयः समयमात्रनिवर्त्य इति भावः।





**विठ्ठ०**— प्रत्यक्षायोग्यपदार्थाभावेन योग्यताविशेषणं व्यर्थमित्याशयेन शङ्कते **किं योग्यताविशेषणेनेति**। प्रत्यक्षेणास्मदादिभिरनुपलब्धोऽपि पिशाचादिर्मान्त्रिकादिभिरुपलभ्यत इत्याशयेन **सर्वथेत्युक्तम्**। संशयमेव कोटिद्वयोपपादनपूर्वकं दर्शयति **किमनुपलम्भादित्यादिना**। **न्यायमतिक्रम्येति**। संशयकोटिप्रापकन्यायमतिक्रम्य तन्मूलकः संशयसमयमात्रनिवर्त्यो नेत्यर्थः। अथवा रसस्येवायोग्यतया विद्यमानोऽपि धर्मादिर्नोपलभ्यत इति न्यायमतिक्रम्य प्रत्यक्षेणानुपलम्भान्नास्तीति स्वसमयमात्रेण संशयनिवृत्तिर्न हि युज्यत इत्यर्थः। **एतत्संशयेति**। तच्चोक्तविधयान्यस्मिन्ननाश्वासादित्यनेन संशयसंपत्तौ पौरुषेयवाक्ये आप्त्यनिश्चयेन तत्प्रामाण्यविषयकसंशयसंपत्तौ पौरुषेयवाक्यस्यानिश्चायकत्वादपौरुषेयं वाक्यं प्रत्यक्षवत्प्रमाणमङ्गीकरणीयमिति व्याख्यातृसंशयसंपत्ताविति मूलांशः प्रकारान्तरेण व्याख्यात इत्यवगन्तव्यम्। अत एव वक्ष्यति **तदिदमुक्तमिति**। तथाच संशयसंपत्तावित्यत्र संशयोत्पत्त्यभावायेत्यर्थः। उक्तं सन्न्यायरत्नावल्यां वादिविवादाल्लोकस्य संशयोत्पत्ताविति ॥

**चषकः**— **संशयोत्तार इति**। सन्देहनिरास इत्यर्थः। **स्वत एवेत्यादि**। सप्रपञ्चमुत्पत्तिज्ञप्त्योर्गुणग्राहकान्तरनैरपेक्ष्यस्य समर्थितत्वादिति भावः।

॥ अन्विताभिधानवादः (शक्तिवादः) ॥

पूर्वपक्षः (अन्वितस्वार्थे शब्दशक्त्यभावात् विशिष्टविषयाभावशङ्का)—

**६५० सु०— ननु तथाऽपि न वेदः प्रमाणम्। स हि पदार्थेषु वाक्यार्थे वा प्रमाणं भवेत्। न तावत्पदार्थेषु, तेषां प्रागवगतत्वात्। अनवगमे च व्युत्पत्त्यभावप्रसङ्गात्। व्युत्पत्तेर्वाच्यवाचकसंबन्धज्ञानरूपत्वात्। संबन्धज्ञानस्य संबन्धिज्ञानपूर्वकत्वनियमात्। व्युत्पत्त्यनपेक्षायां चातिप्रसङ्गात्। यद्यपि याथार्थ्यमेव प्रामाण्यं नागृहीतग्राहकत्वम्, तथाऽपि परार्थानुमानस्येव शब्दस्यापि परबोधनार्थं प्रवृत्तत्वेन न ज्ञातज्ञापकता न्याय्या॥ ननु पुरुषदोषोऽयं यज्ज्ञातज्ञापनाय शब्दोच्चारणम्। वेदे त्वपौरुषेये ज्ञातज्ञापनेनापि किं दुष्यति। न किञ्चित्। अनुपादेयत्वं तु स्यात्। तथा च न तन्मीमांसारंभ इति।**

**परि०**— यदपि जिज्ञासासूत्रावतारिकायां वेदापौरुषेयत्वे किञ्च शब्दस्यैव प्रामाण्यं दुर्घटं अर्थसंस्पर्शशून्यत्वात् वाक्यार्थप्रत्यायनप्रकारानिरूपणादित्यादि चोद्यमुक्तं तद्विवृण्वन् शक्तिश्चेत्येतदवतारयति **ननु तथापीत्यादिना**। किं दुष्यतीति प्रश्नस्योत्तरमाह **न किञ्चिदिति**। तदनुभवस्मृतीनामित्यस्य तदनुभवजन्यस्मृतीनामित्यर्थः।





**वं०प०—** **पदार्थेष्वित्यादि** । तद्विषयकप्रमाजनकमित्यर्थः । **प्रागवगतत्वादिति** । शब्दप्रवृत्तेः प्रागेव प्रत्यक्षादिनाऽवगतत्वादनधिगतार्थगन्तृत्वाभावेनाप्रामाण्यं स्यादित्यर्थः । **अतिप्रसङ्गादिति** । व्युत्पन्नवदव्युत्पन्नस्यापि शब्दाद्बोधप्रसङ्ग इति भावः । **याथार्थ्यमेवेति** । तथा च पदार्थानां प्रागवगतत्वेऽपि यथावस्थितार्थबोधकत्वरूपं प्रामाण्यं वेदस्याक्षतमेवेत्यर्थः । **तथा चेति** । वेदस्यानुपादेयत्वे सतीत्यर्थः ।

**आनन्दः—** ननु मास्त्ववगतिरित्यत आह **अनवगम इति** । ननु पदार्थावगमाभावेऽपि व्युत्पत्त्यभावः । कुत इत्यत आह **व्युत्पत्तेरिति** । **अतिप्रसङ्गादिति** । अव्युत्पन्नस्यापि शब्दश्रवणे व्युत्पन्नवदर्थबोधः स्यादित्यतिप्रसङ्गादित्यर्थः । नन्वस्तु पदार्थावगमः । न चावगतार्थबोधने प्रामाण्यं न स्यादिति वाच्यम् । याथार्थ्यस्यैव प्रामाण्यत्वेन गृहीतग्राहित्वेऽपि अप्रामाण्याभावादित्यत आह **यद्यपीति** ।

**कं०रा०—** **संबन्धज्ञानस्येति** । यद्यपि संबन्धिपदजन्यस्य संबन्धज्ञानस्य संबन्धिज्ञानपूर्वकत्वाभावात्संबन्धज्ञानमात्रस्य न संबन्धिज्ञानपूर्वकत्वनियमः । तथाऽपीदं पदमेतस्य वाचकमिदमेतस्य कारणमित्यादिरूपस्य संबन्धिविशेषोपरक्तत्वेन संबन्धज्ञानस्य संबन्धिज्ञानपूर्वकत्वनियमोऽस्तीत्यत्र तात्पर्यमवगन्तव्यम् ।

**वा०चं०—** ननु शक्तिश्चैवेत्यन्वितशक्तिव्युत्पादनमुक्तासङ्गतमित्यतोऽतःशब्दव्याख्यानान्तरं तदित्याशयेन तत्प्रयोजनं दर्शयन्प्रकारान्तरेण प्रामाण्यानुपपत्तिमाशङ्कते **नन्विति** । पदार्थवाक्यार्थयोरेव शब्दविषयतया प्रसक्तेः पदार्थानां प्रमाणान्तरावगतत्वेन शब्दविषयत्वानुपपत्तेर्वाक्यार्थस्यानवगतत्वेऽप्युपायाभावेन शब्दस्य तद्बोधकत्वानुपपत्तेर्विषयाभावान्न तस्य प्रामाण्यमिति भावः । पूर्वं प्रामाण्यस्वरूपव्युत्पादनमिदानीं तद्विषयबोधोपायविचार इति द्रष्टव्यम् । **तथाऽपीति** । याथार्थ्यमिति प्रमाणलक्षणे यथार्थपदबललब्धनिर्दोषत्वस्य ज्ञेयविषयीकारिविशेषणतयाऽभिमतत्वात्तत्तद्व्यवस्थितदोषाभावस्य च तदर्थतया शब्दे च ज्ञातज्ञापकत्वस्य च दोषत्वात् न ज्ञातज्ञापके सामान्यलक्षणमिति भावः । ननु ज्ञातज्ञापकत्वस्य शब्दप्रवृत्तिप्रयोजकपरप्रयोजनाननुसन्धानादिरूपदोषवत्पुरुषप्रणीतत्वापादकतया दोषत्वादापादनीयासंभवेन वेदे कथं तस्य दोषत्वमित्याशङ्क्तो **नन्विति** । परार्थवाक्यस्य परं प्रत्युपादेयार्थबोधकत्वेनैव प्रमाणत्वात्फलवत एवोपादेयत्वेन फलवत्त्वस्य वाक्यप्रामाण्यव्यापकत्वात्फलाननुसन्धानादेः पुरुषदोषत्वस्यापि तन्निमित्तकत्वात् । ज्ञातज्ञापके च फलवत्त्वनिवृत्तौ तद्व्याप्यवाक्यप्रामाण्यस्यापि निवृत्तिरेवेत्याशयेनाह **अनुपादेयत्वं हीति.** । तदनुभवेत्यत्र तदिति वर्णादीनां त्रयाणामपि परामर्शः । एतच्च वाद्यन्तरोक्तस्फोटाद्युपायनिरासावसरे स्फुटीभविष्यति ।

**वा०र०—** **उक्तासङ्गतमिति** । स्वतःप्रामाण्यसमर्थनपरपूर्वग्रन्थासङ्गतम् । तदुपयुक्तार्थप्रतिपादकत्वाभावादिति भावः । **तत्प्रयोजनमिति** । प्रकारान्तरेणातःशब्दव्याख्यानप्रयोजनमित्यर्थः । प्रकारान्तरेण प्रामाण्यानुपपत्तिपरिहाररूपप्रयोजनस्य व्याख्यानान्तरफलतया प्रतीतेरिति भावः । अत एव दर्शयन्निति हेतौ शतृप्रत्ययः । अर्जयन्वसतीतिवत् । स हि पदार्थेष्वित्यादिमूले अप्रामाण्यप्रसञ्जकं किमुक्तमिति न प्रतीयत इत्यतो





विषयाभावादप्रामाण्यं तत्रोच्यत इति सूचयन्न प्रमाणमिति प्रतिज्ञायां स हीत्याद्युत्तरग्रन्थलब्धनिकृष्टे हेतुमाह **पदार्थवाक्यार्थयोरिति** । प्रामाण्यसमर्थनपरप्रत्यक्षवच्चेत्यादि पूर्वग्रन्थेन गतार्थतां परिहरति **पूर्वमिति** । वेदस्य प्रामाण्यस्वरूपयोरित्यर्थः । यथार्थस्यैव प्रामाण्यरूपत्वे ज्ञातज्ञापकत्वेऽपि तदविघातात् ज्ञातज्ञापकताया न्याय्यत्वाभावोक्त्या न किञ्चित्कृतमित्याशङ्कानिरासाय तदुक्त्या प्रमाणसामान्यलक्षणाभाव एवोक्त इति तदभिप्रायमाह **याथार्थ्यमितीति** । याथार्थ्यमेव मानत्वमिति वक्ष्यमाणं यत्प्रमाणस्य लक्षणं तत्रेति योज्यम् । **बलेति** । अनतिक्रमार्थकयथाशब्देनातिक्रमहेतुदोषाणामभावप्राप्तेरिति भावः । अर्थमनतिक्रम्य वर्तमानमित्यस्य यथावस्थितमेव विषयीकरोति नान्यथेति पद्धतौ तात्पर्यनिरूपणादर्थतो निर्दोषं ज्ञेयविषयीकारीति लाभ इत्याशयेनोक्तं ज्ञेयविषयीकारिविशेषणतयेति साक्षात्परम्परासाधारण्येन विषयीकारित्वस्य विवक्षितत्वाशयेन विषयीकारीत्येवोक्तम् । ज्ञेयविषयीकारित्वविचारो न विलक्षणत्वाधिकरणे भविष्यति । ज्ञातज्ञापकत्वस्य शब्द इव प्रत्यक्षस्वार्थानुमानयोरपि दोषत्वाभावादुक्तं **तत्तदिति** । यत्प्रमाणे ये दोषतया पद्धत्यादावुक्तास्तद्दोषराहित्यमेव निर्दोषपदार्थ इति ज्ञातज्ञापकत्वस्यान्यत्रादोषत्वेऽपि शब्दे दोषत्वमित्यर्थः । **प्रवृत्तिप्रयोजकेति** । प्रयोजकं यत्परप्रयोजनमिति संबन्धः । प्रयोजनाननुसन्धानेत्यत्र प्रयोजनाननुसन्धानाभावादित्यर्थाच्छब्दप्रवृत्तिप्रयोजकं यत्परप्रयोजनानुसन्धानमिति लभ्यत इति वा । **आपादनीयेति** । उक्तविधपुरुषप्रणीतत्वरूपापादनीयेत्यर्थः । अनुपादेयत्वेऽपि प्रामाण्यस्याक्षतेः कथं तस्य दोषत्वमित्यतो वाक्यप्रामाण्यस्य परम्परया फलवत्त्वाधानत्वात्फलवत्त्वाभावप्रयुक्ते उपादेयत्वाभावे प्राप्ते प्रामाण्यमेव हीयत इत्याह **परार्थवाक्यस्येति** । फलवत्त्वस्य वाक्यप्रामाण्यव्यापकता कुतः कल्प्या । फलाननुसन्धानादिदोषाभावे वाक्यस्य प्रामाण्यमित्येव कल्पनीयत्वादित्यत उक्तं **फलाननुसन्धानादेरित्यादि** । युक्तिपादेऽपि वाक्यं प्रयोजकम् । मानत्वमेतीत्यनुव्याख्यानव्याख्यानावसरे स्पष्टमेतदिति द्रष्टव्यम् । तदनुभवेत्यत्र सन्निधानात्तत्पदस्य पदार्थमात्रपरामर्शकत्वभ्रान्तिवारणायाह । **तदनुभवेत्यत्रेति** । पदार्थमात्रपरामर्शकतया अन्यथाख्यातिव्याख्यानं तु वाक्यार्थविनोदे दूषितम् । वर्णादीनामुपायत्वासंभवस्येहानुपपादनादाह **एतच्चेति** । वर्णा हि न प्रत्येकमित्यादौ तच्छब्दार्थतया वर्णादित्रयग्रहणे उपष्टम्भकं चानेन सूचितं भवति।

**विठ्ठ०**— जिज्ञासासूत्रावतारिकायां वाक्यार्थप्रत्यायनोपायाभावादिति यदुक्तं तद्द्वयञ्जयन्नुत्तरानुभाष्यमवतारयति **ननु तथापीत्यादिना** । ननु पदार्थानां प्रागवगतत्वेऽपि तज्ज्ञापकस्याप्रामाण्यं कुतः न हि वयं भाट्टप्रमाणमङ्गीकुर्म इत्यत आह **यद्यपीत्यादिना** । प्रामाण्यविरोधिदोषाभावेऽपि मीमांस्यताविरोधिदोषः संभवतीत्याशयेन मृदूक्त्या परिहरति **न किञ्चिदिति** । वर्णपदेति वर्णपदविषयकानुभावानां पदार्थविषयस्मृतीनां च प्रत्येकमेकैकस्य हेतुत्वे इतरवैयर्थ्यं आशुतरविनाशिनां क्रमिकाणां च समुदायः संभवतीति भावः । यद्यपि पदार्थानामाशुतरविनाशिता नास्ति तथाप्यज्ञातानां तेषां वाक्यार्थज्ञानजनकत्वेऽतिप्रसङ्गादाशुतरविनाशिज्ञानघटितानां समुदायो न संभवतीति ध्येयम् ।

**चषकः**— विधान्तरेण वेदप्रामाण्यस्य दुरुपपादतामाशङ्कते **नन्विति** ।





**६५१ सु०— नापि वाक्यार्थे प्रमाणम्। तद्बोधजननोपायाभावात्। वर्णपदपदार्थतदनुभवस्मृतीनां प्रत्येकं समुदितानां चोपायत्वासंभवात्। स्यान्मतं क्रियापदेन कारकपदेन वा साकाङ्क्षे स्वार्थेऽभिहिते यदेव पदान्तरेण योग्यं प्रतियोगिपदार्थान्तरं सन्निधाप्यते तदेव तस्य संबन्धित्वेनावतिष्ठत इति। सत्यमेवं वस्तुगतिः। अवगतिस्तु तत्संबन्धस्य किंनिबन्धनेति चिन्त्यते। पदं हि स्वार्थं क्रियात्वेन कारकत्वेन वा युक्तं प्रतिपादयतु; तत्संबन्धिताबोधस्तु निर्निबन्धन एव।**

**परि०— उपायत्वासंभवादिति** । प्रत्येकं व्यभिचारान्मेलनायोगाद्वाक्यार्थबोधस्याशाब्दत्वापाताच्चेति भावः।

**यादु०— प्रत्येकं समुदितानां चेति** । वर्णपदविषयकाणामनुभवानां पदार्थविषयकस्मृतीनां च प्रत्येकं हेतुत्वे इतरवैयर्थ्यम्। आशुतरविनाशिनां क्रमिकाणां च न समुदायः संभवतीति भावः। **संबन्धित्वेनावतिष्ठत इति**। संबन्धित्वेन ज्ञायत इत्यर्थः। तथा च पूर्वपदसमभिव्याहृतं साकाङ्क्षं पदान्तरमेव वाक्यार्थबोधकमिति शङ्कितुरभिप्रायः। **किंनिबन्धनेति** । सत्यं साकाङ्क्षपदान्तरेणान्वयो ज्ञायत इति । तथाऽपि तस्य पदस्यान्वये शक्त्यभावात्कथं तदुपस्थापकत्वमसन्निकृष्टस्य करणस्य क्रियाजनकत्वेऽतिप्रसङ्गादिति परिहाराभिप्रायः। एतदेवोपपादयति **पदं हीति**। **प्रतिपादयत्विति**। तत्र शक्तत्वादिति भावः। **तत्संबन्धितेति**। परस्परं क्रियाकारकभावसंसर्गबोधस्तु निर्निबन्धनः। पदस्य स्वार्थ इवात्र शक्त्यभावादिति भावः।

**आनन्दः—** ननूपायाभावोऽसिद्धः। वर्णानां पदानां पदार्थानां वा तदनुभवस्मृतीनां वोपायत्वसंभवादित्यत आह **वर्णेति** । प्रत्येकपक्षे एकस्मादपि तदापत्तिः समुदितपक्षे मेलकाभाव इति **स्यान्मतमिति** । तथाच पदमेव वाक्यार्थज्ञानजननोपाय इति भावः। न चात्र दूषणमुक्तमिति वाच्यम्। एकस्मृत्युपारूढत्वेन तदुपायत्वसंभवादिति। **तत्संबन्धस्येति** । एकपदोपस्थापितपदार्थस्य पदान्तरोपस्थापितार्थेन सह संबन्धस्येत्यर्थः। ननु पदस्यैव तद्बोधोपायत्वमित्यत आह **पदं हीति । तत्संबन्धितेति** । पदान्तरापि तत्संबन्धितेत्यर्थः ।

**श्रीनिधि०— निबन्धनं** निमित्तम्।

**वा०चं०—** नन्वानयेत्यादिक्रियापदेन क्रियात्वेन क्रियायामुपस्थापितायां क्रियायाः कारकसापेक्षत्वात्तदाकाङ्क्षापूरकेण घटमित्यादिकारकपदेन कारकत्वेनोपस्थाप्यमानं कारकमपि तत्क्रियाकारकमेवोपस्थाप्यते । एवं घटमित्यादिकारकपदेनापि कारकत्वेन कारके उपस्थापिते कारकस्य क्रियासाकाङ्क्षत्वादानयेत्यादिपदान्तरेण क्रियात्वेन तत्क्रियैवोपस्थाप्यते । एवञ्च पदार्थान्तरसंबन्धिपदार्थान्तरस्यैव वाक्यार्थत्वात्पदानामेव वाक्यार्थबोधोपायत्वात्कथं तदभाव इत्याशङ्कते **स्यान्मतमिति** । वस्तुत आनयेत्युपस्थापितक्रियायास्तदीयत्वेऽपि





घटमित्युपस्थापितकारकस्य च वस्तुतस्तत्क्रियासंबन्धित्वेऽपि क्रियाकारकपदाभ्यां शक्तिसद्भावेन क्रियात्व-कारकत्वयुक्तक्रियाकारकमात्रबोधनेन क्रियायां तत्कारकसंबन्धित्वस्य कारके च क्रियासंबन्धित्वस्य च वस्तुतो विद्यमानस्याप्यशक्ततयाऽबोधनात्तस्यैव च वाक्यार्थत्वात्तद्बोधोपायो नोक्त एवेत्याह **सत्यमिति** । **क्रियात्वेनेति** । आख्यातप्रत्ययार्थत्वेनेत्यर्थः । **कारकत्वेनेति** । द्वितीयाद्यर्थकर्मत्वादिनेत्यर्थः ।

**वा०र०**— क्रियापदेनेत्यादिकं विवृण्वन्नेवावतारयति **नन्वानयेत्यादिक्रियेत्यादिना** । अत्र क्रियाया भावः क्रियात्वं कारकस्य भावः कारकत्वमिति यथाश्रुत एवार्थः । न तु क्रियात्वेन युक्तं कारकत्वेन युक्तमित्युत्तरवाक्य इव वक्ष्यमाणरीत्या आख्यातप्रत्ययार्थः । क्रियात्वं कारकत्वांशे विशेषाभावेऽपि क्रियांशे तत्सद्भावात् । स्पष्टं चेदमुत्तरत्रेति ज्ञेयम् । आख्यातप्रत्ययार्थत्वेनेति पाठोऽपि शोध्यः । साकाङ्क्षत्वोपपादनं क्रियायाः कारकेत्यादि । संबन्धित्वेनावतिष्ठत इत्यन्तेन को वाक्यार्थतयोक्तः किञ्च तद्बोधोपायतयोक्तमिति न प्रतीयत इत्यतस्तदुभयं स्वयमाह **एवं चेति** । तत्संबन्धिताबोधस्तु निर्निबन्धन एवेति कथम् । पदस्यैव तत्रोपायत्वसंभवात् । अन्यथा क्रियात्वादियुक्तक्रियादि-बोधोपायत्वमपि न स्यादित्यतस्तदभिप्रायं वदन्नुत्तरग्रन्थमवतारयति **वस्तुत इत्यादिना** । शक्तिसद्भावासद्भावाभ्यां वैषम्यान्नोक्तातिप्रसङ्ग इत्युक्तं भवति । **आख्यातेति** । अङ्गीकृत्येत्युत्तरग्रन्थे पदं प्रत्ययार्थेन युक्तं स्वार्थं प्रतिपादयत्वित्यादेरङ्गीकारवादत्वप्रतिपादनादत्राक्रियात्वेनेत्येतदाख्यातप्रत्ययार्थेनेत्येवं व्याख्यातम् । कारकस्य भावः कारकत्वमित्येव नार्थः । किन्तु कारकविशेषकर्मत्वादिकमेव तदर्थ इत्युक्तं **द्वितीयाद्यर्थेति** । तथा चानये-त्यादिक्रियापदं स्वार्थक्रियामाख्यातार्थेन युक्तां प्रतिपादयत् । एवं घटमित्यादिपदं स्वार्थं घटादिरूपं कारकत्वेन द्वितीयाद्यर्थं कर्मत्वादिना युक्तं प्रतिपादयत्विति योजना सूचिता । अनेन प्रकृतिप्रत्ययार्थयोरन्वयबोधः स्वीकृतः । अत एव अङ्गीकृत्येत्युत्तरमूलमिति ज्ञेयम् ।

**स०व्र०**— **प्रत्येकं समुदितानां चेति** । प्रत्येकं हेतुत्वे इतरवैयर्थ्यम् । आशुतरविनाशिनां क्रमिकाणां च न समुदायः संभवतीति भावः । यद्यपि पदार्थेषु समुदायः संभवति । आशुविनाशित्वाभावात् । तथाप्यज्ञातपदार्थानां हेतुत्वेऽतिप्रसङ्गाज्ज्ञातानामेव तद्वाच्यम् । तेषां च न समुदायः संभवतीति ध्येयम् । **स्यान्मतमिति** । वाक्यार्थे ज्ञानोपायाभावादित्युक्तमबुद्ध्वा शङ्केयम् । अन्यथा वाक्यार्थज्ञानोपायस्य वक्तव्यत्वात् तमनुक्त्वा वाक्यार्थ-ज्ञानस्यानुभवसिद्धत्वोक्त्यसङ्गतत्वादिति ज्ञेयम् । एवमेतेनेत्यपि व्याख्येयम् । **तत्संबन्धिताबोध इति** । क्रियाकारकसंबन्धबोध इत्यर्थः ।

**विठ्ठ०**— ननु साकाङ्क्षार्थप्रतिपादकपूर्वपदसमभिव्याहृतमाकाङ्क्षितयोग्येतरपदार्थसन्निधापकमुत्तरोत्तरपदं वाक्यार्थबोधजननोपायभूतं भविष्यतीत्याशयेन शङ्कते **स्यान्मतमिति** । **संबन्धित्वेनावतिष्ठत इति** । संबन्धित्वेन ज्ञायत इत्यर्थः । सत्यमेव पदान्तरेण प्रतिपादितोऽर्थः संबन्धित्वेनावतिष्ठत इति तथापि पदस्यान्वयोपस्थापकत्वं कथमिति चिन्त्यम् । पदस्य पदार्थमात्रे शक्तत्वेनान्वये शक्त्यभावादित्याशयेन परिहरति **सत्यमेवमिति** ।





क्रियाकारकत्वप्रकारकस्वार्थप्रतिपादकं प्रकृतिप्रत्ययात्मकं पदजातमेव संबन्धबोधनिबन्धनमित्यत आह **पदं हीति** । **संबन्धिताबोध इति** । क्रियावाचकपदानां क्रियात्वादिविशिष्टार्थमात्रबोधनोपक्षीणत्वेन क्रियाकारकयोरन्योन्या-न्वितत्वावगमकत्वाभावादिति भावः ।

**चषकः— प्रत्येकं समुदितानां चेति** । आशुतरविनाशिप्रातिस्विकरूपावच्छिन्नानां कार्याव्यवहित-पूर्वक्षणावच्छेदेन सत्त्वासंभवात् । मेलनस्याप्ययोगादिति भावः । **क्रियापदेन** धात्वर्थाभिधायकेन धातुना । कारकपदेन कर्मादिवाचकपदेन । **साकाङ्क्षे** अन्वयिनि । **सन्निधाप्यते** उपस्थाप्यते । **संबन्धित्वेन** संबन्ध-प्रतियोगित्वेन । **उपतिष्ठते** प्राप्नोति । तथा च समभिव्याहाररूपाकाङ्क्षाविशिष्टं पूर्वोत्तरपदद्वयं वाक्यार्थबोधा-न्वयावबोधकमित्याशङ्कितुराशयः । **अवगतिः** प्रतीतिः । **किंनिबन्धनेति** । पूर्वोत्तरपदयोरन्वयांशे शक्तिविरहेण अशक्यस्यान्वयबोधे भानोपगमेऽतिप्रसङ्गादिति भावः । तदेव विशदयति **पदं हीति** । **प्रतिपादयत्विति** । तत्र शक्तत्वादिति हृदयम् । **निर्निबन्धन इति** । तत्र शक्तिप्रतिसन्धानरूपनियामकराहित्यादित्यभिसन्धिः ।

**६५२ सु०— अङ्गीकृत्य चेदमुदितम्; प्रकृतिप्रत्ययार्थसंबन्धबोधनिबन्धनादर्शनात् ।**

**एतेनाकाङ्क्षासन्निधियोग्यतावत्पदैरभिहिताः पदार्था एव वाक्यार्थी(र्था)भवन्तीत्यपि निरस्तम् । वाक्यार्थावगतेः कारणानिरूपणात् ॥**

**यादु०— अङ्गीकृत्येति** । पदं हि स्वार्थं प्रतिपादयत्वित्येतदङ्गीकृत्योक्तम् । वस्तुतस्तु पदस्य प्रकृतिप्रत्ययात्मकत्वेन तदर्थस्य तदुभयार्थसंसर्गत्वेन तेन तद्बोधस्य निर्निबन्धनतया न पदं स्वार्थप्रतिपादकमिति भावः । **वाक्यार्थीभवन्तीति** । तथा च तदवगतिराकाङ्क्षादिमद्भिः समभिव्याहृतैर्भवतीत्येतन्मताशयः । **कारणानिरूपणादिति** । पदानां स्वार्थेष्विव वाक्यार्थीभूतेषु आकाङ्क्षादिविशिष्टेषु स्वार्थेषु शक्त्यनङ्गीकारादिति भावः ।

**वं०प०— इदमुदितमिति** । आनयेति क्रियापदस्य गामिति कारकपदस्य च साकाङ्क्षस्वार्थाभिधायकत्वं यदुक्तं त्वया तदङ्गीकृत्य सत्यमेवमित्यादिना समाधानमुदितमित्यर्थः । **प्रकृतीति** । आनयेत्यादिपदावयवभूत-प्रकृतिप्रत्ययेत्यर्थः ।

**आनन्दः— अङ्गीकृत्य चेदमुदितमिति** । पदं क्रियात्वेन कारकफलत्वेन स्वार्थं प्रतिपादयती-त्येतदङ्गीकृत्योक्तमित्यर्थः । पदार्था एव वाक्यार्थीभवन्तीत्यस्य कोऽर्थः । संबन्धरूपवाक्यार्थवन्तो भवन्तीति वाक्यार्थबोधं जनयन्तीति वा । नाद्य इत्याह **वाक्यार्थावगतेरिति** । न द्वितीयः । प्रत्येकसमुदितविकल्पदोषादिति भावः ।





**वा०चं०**— ननु यदि प्रकृतिप्रत्ययार्थान्वितस्वार्थप्रतिपादकत्वं प्रत्ययप्रकृत्योरभ्युपेतं तर्हि तन्न्यायेनैव पदानामपि परस्परान्वितार्थप्रतिपादकत्वमभ्युपेयमेव अर्धजरतीयानुपपत्तेः। तथाच पदेष्वेव तत्पर्यनुयोगानुपपत्तिरित्यत आह **अङ्गीकृत्य चेति**। प्रकृतिप्रत्ययार्थसंबन्धबोधमङ्गीकृत्य क्रियात्वेन कारकत्वेन वा-युक्तं प्रतिपादयत्वित्युक्तम्। वस्तुतस्तु प्रकृतिप्रत्ययार्थसंबन्धबोधोपायोऽप्येतत्तुल्यतया नास्त्येवेत्यर्थः। **वाक्यार्थीभवन्तीति**। परस्परसंबद्धा भवन्तीत्यर्थः। पूर्वमुत्तरपदोपस्थापितस्य संबन्धित्वमुक्तमिदानीं सर्वपदोपस्थापितानां परस्परसंबन्धित्वमुच्यत इति विशेषः। पदार्थानां वस्तुतः परस्परसंबन्धित्वेऽपि पदैः पदार्थमात्राभिधानात्तत्संबन्धबोधोपायानुक्तिरेवेत्याह **वाक्यार्थेति**।

**वा०र०**— एतेनेत्येतद्ग्रन्थस्य स्यान्मतमित्येतच्छङ्कया गतार्थतां परिहरति **पूर्वमिति**। उत्तरपदोपस्थापितस्येत्यत्र पदान्तरोपस्थापितस्येत्यर्थो विवक्षितः। उक्तं च प्राक्। एवं च पदार्थान्तरसंबन्धिपदार्थान्तरस्यैव वाक्यार्थत्वात्पदानामेव वाक्यार्थबोधोपायत्वादिति। तथाच पदान्तरेण स्वार्थे अभिहिते आकाङ्क्षानुसारेण पदान्तरोपस्थापितं योग्यं पदार्थान्तरं संबन्धित्वेन वर्तत इत्येवं पूर्वोत्तरभावविवक्षोपेतपदानां वाक्यार्थबोधकता शङ्किता। इदानीं तु सर्वैः पदैरभिहिताः समप्रधानाः परस्परसंबन्धाः पदार्था एव वाक्यार्थस्तद्बोधकानि पूर्वोत्तरभावविवक्षाशून्यानि पदानीति शङ्क्यत इति पूर्वोत्तरशङ्कयोर्विशेष इत्यर्थः।

**स०व्र०**— **अङ्गीकृत्य चेदमिति**। पदं स्वार्थं प्रतिपादयतीत्येतदङ्गीकृत्योक्तम्। वस्तुतस्तु पदस्यापि प्रकृतिप्रत्ययात्मकत्वेन पदार्थस्यापि तदुभयार्थसंसर्गरूपत्वेन तद्बोधस्य च निर्निबन्धनतया न पदं स्वार्थपतिपादकमिति भावः।

**विठ्ठ०**— **अङ्गीकृत्येति**। क्रियादिपदं क्रियात्वकर्तृत्वकारकत्वादिरूपप्रकारविशिष्टार्थप्रतिपादकमित्यङ्गीकृत्योक्तम्। वस्तुतस्तु पदस्य प्रकृतिप्रत्ययोभयात्मकत्वेन प्रकृत्यर्थप्रत्ययार्थमात्रप्रतिपादकत्वेन प्रकृतिप्रत्ययार्थयोः संसर्गबोधस्य निर्निबन्धनतया न पदं कारकत्वादिविशिष्टं प्रतिपादयतीति भावः।

**चषकः**— **अङ्गीकृत्येति**। पदस्य स्वार्थप्रतिपादकत्वमङ्गीकृत्यैव तुष्यत्विति पूर्वमुक्तम्। तदपि दुरुपगममेव। पदस्य प्रकृतिप्रत्ययसमुदायात्मकतया तदर्थस्य तदेकतरार्थानुयोगिकापरार्थप्रतियोगिकसंसर्गरूपतया तत्प्रत्यायनस्यापि निःसाधनतया पदमपि न स्वार्थप्रत्यायकमिति भावः। **प्रकृतिप्रत्ययार्थसंबन्धेति**। प्रकृत्यर्थानुयोगिकप्रत्ययार्थप्रतियोगिकसंबन्धप्रतीतिनियामकादर्शनादित्यर्थः। **वाक्यार्थीभवन्तीति**। तथा च तेषामेव संसृष्टलक्षणवाक्यार्थात्मकतया समभिव्याहारविशेषरूपाकाङ्क्षाविशेषिताखिलपदाधीनैव वाक्यार्थप्रतीतिरित्येतन्मततात्पर्यम्। **तत्कारणानिरूपणादिति**। पदानां संसृष्टलक्षणे संसर्गलक्षणे वा वाक्यार्थे शक्त्यनुपगतेरिति भावः।





॥ उत्तरपक्षः (शब्दप्रामाण्यसमर्थनेन तच्छङ्कानिरसनम्) ॥

शब्दानां योग्येतरान्वितस्वार्थे शब्दशक्तिसद्भावः—

**६५३ सु०—** अतोऽनियतनिमित्तकत्वादौत्प्रेक्षिक एव वाक्यार्थबोध इत्यप्रामाण्यं वेदस्येत्यत आह **शक्तिश्चेति** ।

**अनु०— शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते ॥
अतोऽन्विताभिधायित्वम्**

**चशब्दः** 'अतः'शब्दव्याख्यानान्तरसमुच्चयार्थः, यत इत्यर्थे वा । **एवशब्दस्य** 'अन्वित एवे'ति संबन्धः ।

**परि०— अनियतनिमित्तकत्वादिति** । शक्तिरूपनियतनिमित्तकत्वाभावात् इत्यर्थः । औत्प्रेक्षिक एव उत्कटैककोटिकसंशयरूप एवेत्यर्थः । **व्याख्यानान्तरेति** । अन्वितार्थबोधकत्वार्थ-कत्वरूपव्याख्यानान्तरेत्यर्थः ।

**यादु०— अनियतनिमित्तकत्वादिति** । शक्तिरूपनियतनिमित्ताभावादित्यर्थः । **अप्रामाण्यमिति** । संसर्गप्रमितिजनकत्वाभावः प्राप्त उत्प्रेक्षायाः प्रमितत्वादित्यर्थः ।

**वं०प०— औत्प्रेक्षिक एवेति** । मेघसन्देशादाविव वाक्यार्थबोधस्योत्प्रेक्षामूलकत्वमेवेति वेदस्य तत्प्रमापकत्वं नास्तीत्यर्थः ।

**आनन्दः— औत्प्रेक्षित एवेति** । उत्प्रेक्षानिमित्त एवेत्यर्थः । उत्प्रेक्षा नाम मानसश्चिन्ताविशेषः ।

**श्रीनिधि०— औत्प्रेक्षित एवेति** । वस्तुतो यन्नियतं निमित्तं तदभावेन उत्प्रेक्षामूल एवार्थबोधो न तु वाक्यमूल इत्यर्थः ।

**वा०चं०— यत इत्यर्थे वेति** । अस्मिन्पक्षे सन्निहितान्वयलाभ इति द्रष्टव्यम् ।

**वा०र०— सन्निहितेति** । पूर्वार्धगत यत इत्यर्थकशब्दस्योत्तरार्धगतातःशब्देनान्वयलाभ इत्यर्थः । पूर्वयोजनायां प्राकृतव्याख्यानान्तरैरेतद्व्याख्यानस्य समुच्चये व्यवहितान्वयलाभ इत्यप्यनेन सूचितम् ।





**विठ्ठ०— औत्प्रेक्षिक एवेति** । उत्कटकोटिकसंशयरूपोत्प्रेक्षाकल्पित इत्यर्थः । **व्याख्यानान्तरेति** । अतः इतरान्वितस्वार्थबोधने शब्दानां शक्तत्वादिति चशब्दस्यार्थान्तरसमुच्चयार्थः ।

**चषकः— अनियतनिमित्तकत्वादिति** । शक्तिप्रतिसन्धानात्मकनियतनियामकराहित्यादिति भावः । **औत्प्रेक्षिकः** संभावनात्मकः । **विशेषाणां व्यभिचारेण** बन्धनत्वानयनत्वादिविशेषधर्मावच्छिन्नानां व्यभिचारेण । **सामान्यस्य** योग्येतरत्वरूपसामान्यधर्मावच्छिन्नस्य ।

**६५४ सु०— अयमर्थः । वृद्धव्यवहारादिना हि शब्दशक्त्यवधारणम् । न च पदार्थस्वरूपमात्रे व्यवहारादिकं युज्यते, किन्तु पदार्थान्तरान्विते । अतो व्यवहारादिना शब्दशक्तिमवधारयताऽर्थान्तरान्वित एव स्वार्थोऽनुभूयत इत्यङ्गीकरणीयम् । यद्यप्येकस्मिन् प्रयोगे गौरानयनान्वितः प्रतीयतेऽपरस्मिन् बन्धनान्वितोऽन्यस्मिंश्च दर्शनान्वित इति पदार्थान्तरतदन्वयव्यभिचारः; तथाऽप्यव्यभिचारिणि योग्येतरान्विते स्वार्थे शक्तिग्रहणमुपपद्यत एव । न हि विशेषाणां व्यभिचारेण त्यागे सामान्यस्य अव्यभिचारिणो निर्निबन्धनस्त्यागो युज्यते । यत एवं व्युत्पत्तिसमयेऽन्वित एव स्वार्थे शब्दानां शक्तिरनुभूयतेऽतोऽन्वितस्वार्थाभिधायित्वं शब्दानामभ्युपेयम् । शक्तिग्रहणानुरोधित्वादभिधानस्य ।**

**परि०— अनुभूयत इति** । शब्दशक्तिरिति योज्यम् । चशब्दो यत इत्यर्थ इत्युक्तम् । तद्व्यनक्ति **यत एवमिति** ।

**आनन्दः—** नन्वनुभूयत इत्ययुक्तम् । शक्तेरतीन्द्रियत्वेन प्रत्यक्षानुभवासंभवात् । पदार्थेऽपि शक्तिग्रहसंभवेनान्वित एवेत्यवधारणे हेत्वभावाच्चेत्यत आह **अयमर्थ इति** । अत्र व्यवहारशब्देनानयनादिव्यवहार एव गृह्यते । पदार्थान्तरतदन्वयव्यभिचार इति पदार्थान्तरव्यभिचारः पदार्थान्तरान्वयव्यभिचारश्चेत्यर्थः । ननु विशेषव्यभिचारात्सामान्येऽपि व्यभिचार इत्यत आह **न हीति** ।

**वा०चं०—** नन्वन्विते शक्त्यनुभवस्य परं प्रत्यसिद्धतया तदुपन्यासोऽनुचितोऽनुपपन्नश्चान्विते शक्त्यध्यवसायः । व्यभिचारादिपर्यालोचनायां तदसंभवात् । अस्तु वाऽन्वितस्वार्थाभिधायकत्वं पदानाम् । तथाऽपि वाक्यार्थबोधे उपायानुक्त्याऽसङ्गतिश्चेत्यत आह **अयमर्थ इति** । व्यवहारादिना शब्दशक्तिमवधारयताऽनुभवः अकामेनापि स्वीकर्तव्य इत्यर्थः । **यद्यपीति** । तथा च सत्यपि तादृशव्यवहारे परीक्षकैर्व्यभिचारिपदार्थान्तर-





तदन्वयपरित्यागेनाव्यभिचारिणि स्वार्थमात्रे शक्तेः कल्पनीयतया नानुभवोऽसिद्ध इति भावः । ननु किमिति व्यभिचारिणोरपि पदार्थान्तरतत्संसर्गयोरनुगतं रूपमापाद्यानुगतशक्तिकल्पनानिर्बन्ध इत्यत उपस्थितसामान्यस्य परित्यागे विशेषस्येव निमित्तस्य व्यभिचारादेरभाव एव तत्र निमित्तमित्याशयेनाह **न हीति** । उपलक्षणं चैतत् । अन्वयसामान्ये शक्त्यभावे विशेषजिज्ञासानुपपत्तिश्चेत्यपि द्रष्टव्यम् । यतोऽत इत्युक्तं हेतुहेतुमद्भावं घटयति **शक्तीति** ।

**वा०र०**— अन्वितस्वार्थे शब्दशक्तिरनुभूयत इति यथाश्रुतं परित्यज्यानुभूयत इत्यङ्गीकरणीयमित्येवं व्याख्यानं व्यभिचारपरिहारादिरूपोपपादनादि च किमर्थमित्यतस्तद्व्यावर्त्यशङ्काः दर्शयन्नुत्तरग्रन्थमवतारयति **नन्विति** । **व्यभिचारादीति** । आदिपदेन विशेषाणां व्यभिचारे सति तत्प्रयुक्तस्तत्त्यागोऽपि यः प्राप्नोति तस्य ग्रहणम् । **अस्तु वेति** । अन्विते शक्त्यनुभवस्याङ्गीकर्तव्यत्वे व्यभिचाराद्यभावे चान्वितस्वार्थाभिधायित्वप्राप्ते-स्तदस्त्वित्यर्थः । असङ्गतिश्चेत्यत्र चशब्द एवार्थः । **असङ्गतिरेवेति** । अन्विते शक्त्यनुभवस्य तदनिष्टत्वात् कथमङ्गीकर्तव्यतेत्यतः तत्तात्पर्यमाह **व्यवहारादिनेति** । पदार्थान्तरतदन्वयव्यभिचारोक्त्या किं दूषितमिति न प्रतीयतेऽतस्तदभिप्रायमाह **तथा चेति** । प्रथमावगतयोग्येतरान्वितस्वार्थाभिधानेति तत्त्वप्रदीपिकावाक्या-वताररूपे ननु किमित्येवमित्यादि नयनप्रसादिन्यनुसारेण शङ्कामुत्थाप्याभिप्रायकथनपूर्वकमवतारयति **ननु किमितीति** । **सामान्यस्य परित्याग इत्यादि** । अत्र विशेषस्य परित्याग इव सामान्यस्यापि परित्यागे निमित्तस्य व्यभिचारादेरभाव इति योज्यम् । विशेषस्य परित्यागे तस्य व्यभिचारादिकं निमित्तमस्ति । न तथा सामान्यस्य व्यभिचारादिकमस्ति । अतस्तदभावान्न सामान्यस्य त्यागो युक्त इत्यर्थः ।

**विठ्ठ०**— ननु पदानामन्वितस्वार्थे शक्तिरनुभूयत इति कुतः नियामकाभावात् व्यभिचारस्य बहुलमुपलंभेन गवादिपदानां आनयनान्वितस्वार्थे शक्तिरिति नियमासंभवाच्च वाक्यार्थावगतिकारणानिरूपणाच्चेत्याशङ्कापरिहारार्थमाह **अयमर्थ इति** । पदार्थान्तरतदन्वयव्यभिचार इति आनयनबन्धनादिपदार्थान्तरैस्तस्य गोपदस्वार्थस्यान्वयव्यभिचारः संबन्धव्यभिचार इत्यर्थः । **अव्यभिचारिणीति** । गामानय गां बन्धय गां पश्येत्यादिप्रयोगेषु आनयनाद्यर्थ-व्यभिचारित्वेऽपि सामान्यत इतरान्वितस्यार्थे गोपदस्य शक्तिरित्यस्याव्यभिचारित्वादिति भावः ।

**६५५ सु०— यदा च पदैरेवान्वितस्वार्थप्रतिपादनं तदा वाक्यार्थ एवावबुद्ध इति कथं तद्बोधस्य निर्निबन्धनता । गुणप्रधानभावेनान्योन्यान्विताः पदार्था वा तदन्वयो वा वाक्यार्थ इति प्रामाणिकैरङ्गीकृतत्वादिति ।**

**आनन्दः**— एवमपि वाक्यार्थबोधो निर्निबन्धन एवेत्यत आह **यदा चेति** ।

**वा०चं०**— असङ्गतिं परिहरति **यदा चेति** । पदार्थानामेव वाक्यार्थत्वे तेषामनेकत्वाद्वाक्यभेदापत्तिरित्यतः प्रधानपदार्थस्यैकत्वान्नानुपपत्तिरित्याशयेनोक्तं **गुणेति** । वाक्यार्थबोधकरणप्रसङ्गे ध्वन्यादिविलक्षणवर्णसमूहात्मक-





पदग्रहणस्यैव युक्तत्वादिति भावः। यद्यपि शक्तं पदमितिपक्षे प्रकृतिप्रत्यययोरपि पदत्वमस्ति। तथाऽपि सुप्तिङन्तमित्यनुरोधेन तत्र पदव्यवहारस्य प्रायिकत्वाभिप्रायेणैतदिति द्रष्टव्यम्।

**वा०र०— असङ्गतिमिति**। वाक्यार्थबोधे कारणानुक्त्याऽसङ्गतिश्चेति शङ्कितामसङ्गतिमित्यर्थः। गुणेतीत्यनन्तरमत्रेतीति प्रतीकोपादानपाठः। तदभावो लेखकप्रयुक्तः। **प्रकृतिप्रत्यययोरपीति**। तयोरपि स्वस्वार्थे शक्तिमत्वादिति भावः। **तत्रेति**। सुप्तिङन्त इत्यर्थः।

**६५६ सु०— अत्र पदानामित्यनभिधाय शब्दानामिति वदता प्रकृतिप्रत्यययोरप्यन्विताभिधानसामर्थ्यं सूचितम्।**

**विठ्ठ०— सामर्थ्यं सूचितमिति**। गामित्यादौ प्रकृत्यर्थगवादेः कर्मत्वादिसंबन्धस्याप्यनुभवसिद्धत्वादिति भावः।

**६५७ सु०— केचिदाहुरेकमेव पदमन्विताभिधायीतराणि तु पदानि तत्प्रतियोगिसन्निधापनमात्र एव व्याप्रियन्ते, तच्च प्रथमं वा प्रधानं वेति। तन्निरासार्थं शब्दानामिति बहुवचनम्॥ तथा हि। यदेकत्र प्रयोगे प्रथमं तदेवान्यत्राप्रथममन्यत्र तु प्रथममिति न पदानां प्राथम्यनियमोऽस्ति। तथा च प्रथमं पदमिति वदता सर्वाण्यप्यन्विताभिधायीन्यङ्गीकृतानीति किमत्र वक्तव्यम्॥ प्रधानत्वमपि पदस्य किमुच्यते। यदर्थप्रतिपादनपराणि इतरपदानि तत्प्रधानमिति चेत्, तर्हि वाक्यभेदेन प्राधान्यस्याव्यवस्थितत्वात् सर्वपदानामन्विताभिधानसामर्थ्यमेवायातम्। आख्यातपदं प्रधानमिति चेन्न; 'दध्ना जुहोती'त्यादिगुणविधानेष्वनुपपत्तेः, आख्यातपदरहितेष्वप्यन्वयप्रत्ययदर्शनाच्च। न हि 'परिणतिसुरसं पनसफलमि'त्यादावन्वयो न प्रतीयत इति युक्तम्, अनुभवविरोधात्। न च तत्राध्याहारः; स हि लोकप्रतीत्यनुरोधाद्वा आश्रयणीयः, स्वसमयानुरोधाद्वा; नाद्यः लोकप्रतीतेः पर्यवसितत्वात्; न द्वितीयः तस्यैव निर्मूलत्वात्, समयान्तरानुरोधेन तत्परित्यागस्यापि संभवात्।**

**परि०— तर्हि वाक्यभेदेनेति**। गामानयेत्यादिवाक्ये आनयनपदार्थप्रतिपादनपरत्वेऽपि गोपदस्य गौः शुक्ला कुब्जा बहुक्षीरेत्यादिवाक्यान्तरे च गोरूपार्थप्रतिपादनपरत्वमन्येषामित्येवं रूपेण प्राधान्यस्य वक्तृविवक्षाभेदेन अव्यवस्थितत्वादित्यर्थः। **दध्ना जुहोतीत्यादिगुणविधानेष्विति**। गुणो नाम यागसाधनं द्रव्यम्। अग्निहोत्रप्रकरणे श्रुतमिदं वाक्यं जुहोतीत्यनेन प्रकरणप्राप्तहोममनूद्य जुहोतीति





यत् तत् दध्ना दधिरूपद्रव्येणेति गुणं विदधातीत्याख्यातान्तपदस्यानुवादत्वेन गुण एव तात्पर्याद्गुणपदस्यैव प्राधान्यादिति भावः । यवाग्वा जुहोति पयसा जुहोतीत्यादिरादिपदार्थः ।

**गु॰दी॰— यदेकत्र प्रयोगे प्रथमम्** इत्यत्र गामानयेति वाक्ये प्राथमिकस्य गोपदस्य सास्नादिमती गौरित्यत्र प्राथम्यादर्शनादित्युदाहरणं द्रष्टव्यम् । आख्यातपदम् इत्यस्य तिङन्तं क्रियापदमित्यर्थः । **गुणविधानेष्वनुपपत्तेः** इति केन जुहोतीत्याकाङ्क्षायां दध्नेत्यादिहोमसाधनद्रव्ये दधित्वादिगुणविधायकेषु वाक्येषु जुहुयादिति लिङन्त-पदोदितक्रियानुवादकजुहोतीत्याख्यातपदे प्राधान्यायोगादित्यर्थः ।

**यादु॰— आख्यातपदमिति** । क्रियानिष्पत्त्यर्थत्वेनैव कारकापेक्षणात्क्रियापदस्य विधेयपरत्वाच्च प्राधान्यं तस्येत्यभिप्रायः । **दध्ना जुहोतीति** । अत्राग्निहोत्रं जुहोतीति प्राप्तं होममनूद्य दध्याख्यगुणविधानात्क्रियापदस्य दधिलक्षणकारकविधानार्थत्वेनानुवादत्वान्न प्राधान्यमिति भावः । आदिपदादूर्ध्वमाघारयतीत्यादिकं ग्राह्यम् । तत्राप्याघारयतीत्यादिना प्राप्तमाघारादिकमनूद्योर्ध्वतादिगुणो विधीयते ।

**वं॰प॰— दध्नेति** । तत्र जुहोतीति यत् तत् दध्नेत्येवं जुहोतीत्यनुवादेन दधिरूपगुणविधानादाख्यातपदं न तत्र प्रधानमिति भावः । तदेव दर्शयति **न हीति** ।

**कं॰रा॰— दध्नेति** । दध्ना जुहोतीत्यादिषु गुणविधायकेषु जुहोतीत्याद्याख्यातपदस्य गुणविधानार्थ-माश्रयसमर्पकतया परार्थत्वेन प्राधान्यानुपपत्तेरित्यर्थः । न च वाच्यमाख्यातपदत्वप्रयुक्तं प्राधान्यवादिनं प्रति दध्ना जुहोतीत्यदिष्वाख्यातपदस्य प्राधान्यानुपपत्तिरसिद्धेति । उक्तरीत्या परार्थस्यापि जुहोतीत्याद्याख्यातपदस्य प्राधान्याङ्गीकारे दोषः पदार्थत्वादिति जैमिनीयन्यायविरोधापत्त्या तदनुपपत्तेः सिद्धत्वात् । **अध्याहार इति** । आख्यातपदस्येति शेषः ।

**श्रीनिधि॰— यदर्थप्रतिपादनपराणि इति** । सास्नादिमती गौः घटमानयेत्यादि वाक्येष्विति शेषः । तत्राद्ये तत्सजातीये च वाक्ये इतरपदानां गवादिपदार्थप्रतिपादनपरत्वं स्पष्टम् । द्वितीये तु विधेयार्थप्रतिपादन-परत्वमितरपदानां द्रष्टव्यम् । क्रिया हि विधेया । तन्मात्रप्रतिपादनं च न प्रवृत्त्याद्युपयोगी किन्तु कर्मविशेषावच्छिन्नैव तत्प्रतिपादनं च न पदान्तरमन्तरा संभवतीति भावः । **वाक्यभेदेनेति** । सास्नादिमान् गौः गां पश्येत्यादिभेदेनेत्यर्थः । प्राधान्यव्यवस्था नास्तीति शङ्कते **आख्यातपदमिति** ।

**वा॰चं॰— बहुवचनमिति** । अन्यथा 'स्वत एवागमस्य हि, वाक्यं प्रत्यक्षवत्प्रमे'त्यादाविवात्रापि प्रथमप्राप्तैकवचनमेव प्रयुञ्जीतेति भावः । प्राथम्यप्राधान्ययोरन्विताभिधायकतानियामकत्वे तयोः प्रयोगपर्यायेण





बहुशब्देष्वपि सत्त्वात्सर्वेषामन्विताभिधायकत्वं प्राप्तमिति बहुवचनेन सूचितां युक्तिमुपपादयति **तथा हीति** । प्राथम्यानियमस्येव प्राधान्यानियमस्य परं प्रत्यसिद्धतया तमुपपादयितुं प्राधान्यस्वरूपं पृच्छति **प्रधानत्वमपीति** । अरुणयेत्यादौ सकलकर्मकरणावच्छिन्नक्रयस्यैव प्राधान्येन प्रतिपादनादारुण्यादीनां तदन्वयितया प्रतिपादनादाख्यातपदं प्रधानमिति शङ्कते **आख्यातपदमिति** । आख्यातोपेतक्रियापदमित्यर्थः । **दध्नेति** । क्रियापदस्य गुणाश्रयसमर्पकतया गुणवाचकदध्यादिपदापेक्षयाऽप्राधान्यमिति भावः ।

**वा०र०— पृच्छतीति** । अनेन प्रथमस्य व्यवस्थया दूषणवत्प्राधान्यस्याप्यव्यवस्थयैव दूषणं कुतो न कृतमिति शङ्का निराकृता भवति । आख्यातपदस्य प्राधान्यप्रकाराप्रतीतेस्तमुपपादयन्नवतारयति **अरुणयेत्यादाविति** । अरुणया पिङ्गाक्ष्यैकहायन्या क्रीणातीति वाक्ये सकलानि यानि कर्मकरणानि । साकल्यं सामर्थ्यात्करणेष्वन्वीयते । सोमारुण्यादीनि तदवच्छिन्नक्रमस्यैवेत्यर्थः । **आख्यातपदमिति** । प्राधान्येन प्रतिपादितक्रयसमर्पकमाख्यातपदं प्रधानमित्यर्थः । लडादिरूपाख्यातमात्रस्य क्रयादिप्रतिपादकत्वाभावादाह **आख्यातोपेतेति** । **क्रियापदस्येति** । जुहोतीति क्रियापदस्य दध्यादिरूपगुणाश्रयहोमसमर्पकतयेत्यर्थः ।

**स०व्र०— आख्यातपदं प्रधानमिति चेदिति** । क्रियानिष्पत्त्यर्थत्वेनैव कारकापेक्षणात् क्रियापदस्यैव विधेयपरत्वाच्च तस्येत्यभिप्रायः । **दध्ना जुहोतीत्यादीति** । अत्र जुहोतीति यत्तद्दध्नेत्यर्थस्य विवक्षितत्वेन क्रियापदस्य दधिलक्षणगुणभूतकारकविधानार्थत्वेन अनुवादपरत्वान्न प्राधान्यमिति भावः ।

**विठ्ठ०— तर्हि वाक्यभेदेनेति** । तर्हि गामानयेत्यादावानयनरूपार्थस्य प्राधान्यं शुक्ला कुब्जा संपन्नक्षीरतमा साध्वी गौरित्यादिवाक्यान्तरेषु गोरूपार्थप्राधान्यमित्येवं प्राधान्यस्याव्यवस्थितत्वादित्यर्थः । **आख्यातपदमिति** । क्रियानिष्पत्त्यर्थमेव कारकान्तरापेक्षणात्पुरुषप्रवृत्तिजनकत्वादिना च क्रियापदं प्रधानमिति भावः । **दध्ना जुहोतीत्यादीति** । अग्निहोत्रप्रकरणे जुहोतीति प्राप्तं होममनूद्य जुहोतीति यत्तद्दध्नेत्यस्यार्थस्य विवक्षितत्वेनाख्यातपदस्य यागसाधनतया प्राप्तगुणभूतदधिलक्षणकारणविधानार्थत्वेनानुवादरूपत्वात्प्राधान्यानुपपत्तेरित्यर्थः । आख्यातपदाभावेऽप्यन्वयानुभवं दर्शयति **न हि परिणतीति** । पनसफलं परिणतौ तदवस्थायां समीचीनरसोपेतमित्यन्वयावबोधस्यानुभवसिद्धत्वादिति भावः। अत्र भवतीत्यादिक्रियापदाध्याहारं कुर्म इत्यत आह **न चेति** ।

**चषकः— सन्निधापनमात्र एव** उपस्थापनमात्र एव । **आख्यातपदमिति** । लकारप्रकृतित्वापन्नमित्यर्थः । अरुणयेत्यादौ कर्मकरणादिनिखिलकारकावच्छिन्नक्रमस्यैव प्राधान्येन प्रतिपादनादारुण्यादीनां तदन्वयितया प्रतिपादनाल्लुकारप्रकृतित्वापन्नस्यैव प्राधान्यमिति भावः । **दध्नेति** । गुणीभूतदध्यादिरूपविधेयबोधकपदस्य तत्र प्राधान्येन अग्निहोत्रं जुहोतीति वाक्यविहितोद्देश्यभूततदाश्रयावगमकक्रियापदस्येति भावः।

**६५८ सु०— ये तु विशेषान्वय एव शक्तिः पदानामित्यास्थिषत, तन्मतनिरासायान्वित इति सामान्येनोक्तम्। उपपत्तिं तु वक्ष्याम इति।**

**परि०— वक्ष्याम इति।** भक्तिपादे उभयव्यपदेशादित्यस्यानुषङ्गिकार्थोक्तिप्रस्तावे। 'कर्तृशब्दे ह्यभिहिते धर्मसामान्यवेदनात्। विशेषधर्ममन्विच्छन् किमित्येव हि पृच्छति। गुणक्रियादिधर्माणां विशेषे कथिते पुनः। निराकाङ्क्षो भवेद्यस्माच्छब्दा अन्वितवाचकाः।' इत्यत्रेति भावः।

**यादु०— वक्ष्याम इति।** अनुपदमेवेति शेषः।

**वा०चं०—** एवं शब्दानामिति प्रकृतिप्रत्ययसूचितभावमभिधायान्वित इत्यस्य ससंबन्धिकशब्दतया संबन्धिविशेषोपादाने कर्तव्ये तदकरणेन सूचितं भावमाह **ये त्विति । उपपत्तिं त्विति ।** पदान्तरवैयर्थ्यपरस्पराश्रयत्वानन्त्यप्रयुक्तशक्तिग्रहाशक्यतादिरूपानुपपत्तिमनुपदमेव तदीयतत्समाधाननिरासपूर्वकस्वीयतत्समाधानकथनावसरे वक्ष्याम इत्यर्थः।

**वा०र०— प्रकृतिप्रत्ययेति।** पदपदस्थाने शब्दपदरूपा प्रकृतिः। एकवचनस्थाने बहुवचनरूपः प्रत्ययश्च तदुभयसूचितमभिप्रायमित्यर्थः।

**विठ्ठ०— वक्ष्याम इति।** अहिकुण्डलाधिकरण इति शेषः।

**चषकः— आस्थिषतेति।** प्रत्यज्ञासिषुरित्यर्थः। आङः स्थः प्रतिज्ञान इति स्मृतेः। **वक्ष्याम इति।** समनन्तरमित्युपस्कर्तव्यम्।

**६५९ सु०— ननु यदि 'गामानये'त्यादिवाक्ये गामिति पदेनैवानयनान्वितः स्वार्थोऽभिहितस्तदा आनयेति पदं व्यर्थमुक्तार्थत्वात्। आनयेति पदेनानयत्यर्थेऽभिहिते सत्यानयत्यर्थान्वितः स्वार्थो गोपदेनाभिधीयते तेनानयेति पदस्य न वैयर्थ्यमिति चेत्, तर्ह्यानयेति पदं केवलं स्वार्थमात्रमाचक्षाणमनन्विताभिधायि प्राप्तम्। यथा चेदमनन्विताभिधायि तथा पदान्तरमपि स्यादिति दत्तजलाञ्जलिरन्विताभिधानवादः। अथानयेति पदेनापि गोपदेनाभिहितेनार्थेनान्वितः स्वार्थः अभिधीयते तदा यावत्पूर्वं पदं स्वार्थं नाभिधत्ते तावत्तदुत्तरपदस्य पूर्वपदार्थान्वितस्वार्थाभिधानं नास्ति, यावच्चोत्तरपदं स्वार्थं नाभिधत्ते तावत्पूर्वपदस्योत्तरपदार्थान्वितस्वार्थप्रतिपादनं न संभवतीत्यन्योन्याश्रयत्वम्। न च वाच्यं परस्परनिरपेक्षाणि पदानि प्रथमं पदार्थाननन्वितानभिधाय पश्चादन्योन्यान्वितांस्तानेवाभिदधतीति**





**क्वेतरेतराश्रयत्वमिति । द्विरभिधानकल्पनाया अप्रामाणिकत्वात्, अचेतनेषु विरम्य व्यापारानुपपत्तेश्च ॥ किञ्च पदानामन्वितेष्वर्थेषु शक्तिर्गृहीता चेत्तथाविधानेव प्रथममभिदध्युः, न चेत्पश्चादपि कथमभिदध्युरिति ।**

**परि०— न च वाच्यमि**त्यस्य क्वेतरेतराश्रयत्वमित्यनेनान्वयः ।

**वं०प०— उक्तार्थत्वादिति** । आनयेत्यर्थस्य गोपदेनैवोक्तत्वादित्यर्थः । नन्वानयेति पदेनानयेत्यर्थमात्रं नाभिधीयते । येनान्विताभिधानवादस्य दत्तजलाञ्जलित्वं स्यादित्याशङ्कते **अथानयेति पदेनापीति** । आनयेति पदं केवलं स्वार्थमाचक्षाणमनन्विताभिधायिप्राप्तमित्युक्तमसदिति भावः । **पूर्वं पदं** गोपदम् । **स्वार्थम्** आनयनान्वितस्वार्थम् । **उत्तरपदम्** आनयेति पदम् । **स्वार्थं** गवान्वितस्वार्थम् । तथा च गोपदस्यानयनान्वितस्वार्थाभिधायकत्वसिद्धौ आनयेति पदस्य गवान्वितस्वार्थाभिधायकत्वसिद्धिः तत्सिद्धौ च तत्सिद्धिरिति अन्योन्याश्रय इत्याशयः । **विरम्य व्यापारेति** । स्थित्वा स्थित्वा प्रतिपादनरूपविरम्यव्यापारस्य चेतनधर्मत्वादित्यर्थः । **गृहीतेति** । अनुभूतेत्यर्थः ।

**आनन्दः— विरम्येति** । आदौ पदार्थमात्रं बोधयित्वा पश्चात्क्षणमात्रं स्थित्वा अनन्तरमन्वितपदार्थाभिधानमिति विरम्यव्यापारो न युज्यते । शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वादित्यर्थः ।

**श्रीनिधि०— आनयत्यर्थेऽभिहिते सतीति** । प्रतियोगिने अज्ञाते तदन्वयबोधस्याशक्यत्वात् इति भावः । **दत्तजलाञ्जलिः** । अत्रार्थद्वयं लक्ष्यते । धाराकर्तव्यस्व(?)स्य तत्प्रत्याशनोऽस्तीति । तस्य तर्पणं कर्तव्यम् । तस्य निवृत्तत्वादिति च । **यावत्पूर्वपदमिति** । अन्यथा प्रतियोगिनो अज्ञानादेव तत्तदन्वितार्थबोधासंभव इति भावः । **अचेतनेष्विति** । विरम्य व्यापारस्य इच्छायत्तत्वादिति भावः ।

**वा०चं०—** अत एव विशेषान्विताभिधाने एतद्दोषप्रसरेऽपि सामान्यान्विताभिधाने न तत्प्रसर इति वक्तुं सामान्यविशेषान्विताभिधानयोः साधारणशङ्कां दर्शयति **नन्विति** । ननु गामानयेत्यत्रानयेत्यनेनानयत्यर्थेऽनभिहितेऽपि गोपदमानयत्यर्थान्वितं स्वार्थमभिधत्तेऽभिहित एव वा । नाद्य इत्याह **यदीति** । **उक्तेति** । आनयेतिपदबोधनीयानयत्यर्थस्यान्वयप्रतियोगितया गोपदेनैव बोधनादित्यर्थः । न च सामान्यान्विताभिधानपक्षे एवं न पदेन योग्येतरान्वितस्वार्थमात्राभिधानेऽपि विशिष्टानयेत्यर्थान्वितस्वार्थानभिधानात्तदभिधानाय पदान्तरसार्थक्यात्कथं तत्पक्षेऽयं दोष इति वाच्यम् । पदान्तरसार्थक्यायावश्याङ्गीकर्तव्यविशेषान्विताभिधानेऽपि पदान्तरेण विशेषेऽभिहित एवान्येन तदन्वितमभिधीयतेऽनभिहिते वेत्याभिहितानभिहितविकल्पदोषयोस्समत्वादिति भावः । द्वितीयं शङ्कते **आनयेतीति** । आनयेति पदं केवलं स्वार्थं बोधयत्युत गवान्वितम् । आद्य आह **तर्हीति** । द्वितीयं शङ्कते **अथेति** । गोपदाभिहितेनेति विशेषणमन्योन्याश्रयस्फुटीकरणायेति ध्येयम् । ननु प्रथमं पदानां परस्परनिरपेक्षाणां





केवलस्वार्थाभिधायकत्वात् नेतरेतराश्रयत्वम् । पश्चादन्विताभिधायकत्वात् नापसिद्धान्तश्चेत्याशङ्क्ते **न चेति** । **द्विरभिधानेति** । पदत्वप्रयोजकाभिधायकत्वस्यैकवाराभिधानेनैवोपपत्तेरिति भावः । न केवलं द्विरभिधानं प्रमाणशून्यमुपपत्तिविरुद्धं चेत्याह **विरम्येति** । ननूभयशक्तियुक्तस्यापि पुरुषस्यैकानन्तरमन्यकार्यस्येवोभयाभिधान-शक्तानामपि पदानामेकानन्तरमन्याभिधानाङ्गीकारे न कोऽप्युपपत्तिविरोध इत्यतः पुरुषस्य चेतनत्वादिच्छाक्रमेण कार्यक्रमसंभवेऽपि नाचेतनपदेषु तत्संभव इत्याशयेनोक्तं **पदानामिति**। अचेतनेष्वित्येव क्वचित्पाठः।

**वा०र०— अत एवेति** । परकीयसमाधाननिरासपूर्वकस्वीयसमाधानकथनप्रसक्त्यर्थमेवेत्यर्थः । ननु गामानयेत्यत्रेति वाक्ये नन्विति शङ्कानुवादरूपम् । तथैव वाक्यन्यासरीतिरपि ग्रन्थकर्तॄणामस्तीति वा । **अयं दोष इति** । पदान्तरवैयर्थ्यरूप इत्यर्थः । **विशेषान्विताभिधानेऽपीति** । योग्येतरान्वितस्वार्थाभिधानोत्तरं तेनैव पदेन विशिष्यानयत्यर्थान्वितस्वार्थाभिधानस्य पदान्तरसार्थक्यायाङ्गीकर्तव्यत्वात्तत्रैव विशेषेऽभिहितेऽनभिहिते वेत्यादिविकल्पादेः समत्वादित्यर्थः । अत्र मध्ये मध्ये तत्त्वप्रदीपिकानुसारी तन्नयनप्रसादिन्यनुसारी च मूल-टीकाग्रन्थः । पदानां विरम्यव्यापारानुपपत्तेश्चेति पाठे विरम्यव्यापारानुपपत्तौ हेतुः पदानामित्यनेन कोऽभिप्रेयत इत्यतः पदानामिति पदेन सूचितं हेतुं दर्शयति **पुरुषस्य चेतनत्वादित्यादिना** । अचेतनेषु विरम्यव्यापारेति पाठान्तरेत्याह **अचेतनेष्वित्येवेति** ।

**स०व्र०—** नात्र परस्पराश्रयावतारः परस्परनिरपेक्षाणि प्रथमं पदानि पदार्थानसंसृष्टानभिधाय पश्चा-दन्योन्यान्वितांस्तानेव पदार्थानभिदधतीत्याह **न च वाच्यमिति** । न केवलं द्विरभिधानकल्पनायां मानाभावः अपि तु प्रमाणविरोधश्चेत्याह **पदानामिति** ।

**विट्ठ०—** यथा गोपदस्यानयनान्वितस्वार्थाभिधायकत्वमेवमानयेति पदस्य गोपदाभिहितार्थान्वित-स्वार्थबोधकत्वमङ्गीक्रियते न स्वार्थमात्राभिधायकत्वं नापि वैयर्थ्यं गोपदेनानयनान्विताथाभिधाने सत्येवानयेतिपदेन तदन्वितस्वार्थबोधनात् एवमानयेतिपदेन गवान्वितस्वार्थबोधने सत्येव गोपदेनानयनान्वितस्वार्थबोधनादित्याशङ्क्य परिहरति **अथेति** । **अचेतनेष्विति**। बुद्धिपूर्वप्रवृत्तावेव विरम्यव्यापारदर्शनादिति भावः।

**६६० सु०— अत्र विशेषान्विताभिधानवादिनः परिहारमाहुः— प्रथमं पदानि साहचर्य-वशादनन्वितस्वार्थान् स्मारयन्ति, पश्चादितरेतरस्मारितेनार्थेनान्वितस्वार्थानभिदधतीति न पदान्तरवैयर्थ्यम्, नापीतरेतराश्रयत्वमिति ॥ एतदप्यसारम् । सर्वदैव हि पदान्यन्वितेनैव स्वार्थेन गृहीतसाहचर्याणि न केवलेन । तानि कथं केवलं पदार्थमात्रं स्मारयितुमीशते । यथानुभवं हि स्मरणेनोत्पत्तव्यम्, न तु परीक्षकप्रयोजनमनुसृत्य । न हि पदं पदार्थमात्र-प्रतिपत्तये प्र(युञ्ज)युज्यते, किन्तु व्यवहाराय । स चान्वित एवेत्यन्वितानामेव पदार्थानां**





**पदेभ्यः स्मरणं स्यात् । तथा च 'गां पश्ये'ति प्रयोगे गोपदेन पूर्वानुभूतानयनान्वितस्यार्थस्य स्मारितत्वात् पश्येति पदमनाकाङ्क्षितार्थमसङ्गतं स्यात् । एवं प्रासादं पश्येत्यत्र प्रासादान्वितस्वार्थाभिधायकत्वात्पश्येति पदस्य, न गोपदं तेन संबध्येत । तथा च वाक्यार्थः क्वापि परिनिष्ठितो न सिध्येत् ॥ न च वक्तव्यमव्यभिचाराद् गोपदं स्वार्थमात्रं स्मारयति नार्थान्तराणि तेषां व्यभिचारित्वादिति, पट्वभ्यासादरप्रत्ययैराहितस्य संस्कारस्य प्रबोधव(य)तः स्मरणहेतुत्वात् । तत्प्रबोधस्य च व्यभिचारिण्यप्यर्थान्तरे प्रणिधानसाहचर्यादिजन्मनोऽविशेषात् । न हि स्मरणमनुमानमिव साहचर्यनियममपेक्ष्योत्पद्यते । धूमदर्शनादग्निवद्रसवत्पाकादिप्रदेशस्य स्मरणदर्शनात् ।**

**परि०—** नन्वित्यादिना कृतचोद्यस्य वयं त्वित्यादिना परिहारमग्रे विवक्षुर्मतान्तरमनूद्य निराह **अत्र विशेषेति** । **साहचर्यवशादिति** । स्वस्ववाच्यपदार्थसाहचर्यवशादित्यर्थः । **स्वार्थमात्रमिति** । पदार्थान्तरानन्वितं स्वार्थमित्यर्थः । **नार्थान्तराणीति** । आनयनबन्धनादिरूपार्थान्तराण्यन्वयप्रतियोगिभूतानि नोपस्थापयति । गवादिपदप्रयोगवेलायामानयनपदप्रयोगस्य बन्धनादिपदप्रयोगस्य वा नैयत्याभावेन तेषां व्यभिचारित्वादित्यर्थः । व्यभिचारिणि संस्कारोद्बोधो वा कथमित्यत आह **तत्प्रबोधस्य चेति** ।

**गु०दी०—** **रसवत्यादिप्रदेशस्य** इत्यत्र रसवतीपदेन महानसमुच्यते ।

**यादु०—** **साहचर्यवशादिति** । पदानां यद्यप्यर्थैर्न सामानाधिकरण्यरूपं साहचर्यं संभवति । तथाऽपि स्ववाच्यैकदेशत्वरूपं संबन्धमात्रं साहचर्यपदेनात्र विवक्षितमिति ज्ञातव्यम् । तथा च पदानां स्वार्थस्मारकत्वमुक्तसंबन्धवशादेव न शक्तिवशादतो न द्विरभिधानमिति भावः । **नापीति** । अन्वितार्थाभिधायकत्वादिति भावः । **तथा च गां पश्येतीति** । येन गामानयेति प्रासादं पश्येति च पूर्वमन्वयो गृहीतस्तं प्रति यदि गां पश्येतिप्रयोगस्तदा तत्पदद्वयं परस्परमनाकाङ्क्षितार्थं स्यादिति समुदायार्थः । **क्वापीति** । पूर्वगृहीतसङ्गतिकपदोपेतेषु पूर्वगृहीतार्थकभिन्नवाक्येष्वित्यर्थः । **अव्यभिचारादिति** । यद्गोपदं तदुक्तसंबन्धेन स्वार्थवदिति न्यायादन्यथा पदत्वस्यैवानुपपत्तेरित्यर्थः । **पट्वभ्यासेत्यादि** । पटुर्योऽभ्यासस्तस्य योऽतिशयस्तत्प्रत्ययैरित्यर्थः । यद्वा सकृदेवोत्पन्नो विद्युदादिप्रत्ययः पटुप्रत्ययः कुण्डिकादिप्रत्ययोऽभ्यासप्रत्ययोऽद्भुतप्रत्यय आदरप्रत्ययस्तैरित्यर्थः । **प्रणिधानेति** । प्रणिधानं मनोऽवधानम् । आदिपदेन गौतमसूत्रोक्ताभ्यासलिङ्गलक्षणसादृश्यादिसङ्ग्रहः । **रसवत्पाकादिप्रदेशस्येति** । महानसादिप्रदेशस्येत्यर्थः ।





**वं०प०— यथानुभवमिति** । अन्वितेनैव स्वार्थेन साहचर्यस्य गृहीतत्वात्तदनुसारेणैव स्मरणेनोत्पत्तव्य-मित्यर्थः । **परीक्षकप्रयोजनमिति** । पदान्तरवैयर्थ्यपरिहारान्योन्याश्रयपरिहाररूपं प्रयोजनमित्यर्थः । तानि कथं केवलं पदार्थमात्रं स्मारयितुमीशत इत्युक्तमुपपादयति **न हीति** । **अन्वितानामेवेति** । अन्वितत्वेनानुभूतानामेवेत्यर्थः । **स्वार्थमात्रमिति** । तथाच गोपदेन पूर्वानुभूतानयनान्वितस्वार्थस्य स्मारितत्वादित्युक्तमसदिति भावः । **प्रत्ययैराहितस्येति** । अनुभवैर्जन्यस्येत्यर्थः । **प्रबोधवत इति** । उद्बुद्धस्येत्यर्थः । प्रणिधानं चिन्ता । 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका' इति वचनादिति भावः । **अविशेषादिति** । अव्यभिचारिणि स्वार्थे व्यभिचारिण्यप्यर्थान्तरे समानत्वादित्यर्थः । तथा च व्यभिचरितार्थान्तरस्मरणमपि भविष्यत्येवेति भावः । ननु स्मरणस्यानुमानवत् साहचर्यनियममपेक्ष्योत्पद्यमानत्वाद्गोपदस्य च स्वार्थमात्रेण नियतसाहचर्यसद्भावात् तत्स्मारकत्वमेव । न तु आनयनादिरूपव्यभिचरितार्थस्मारकत्वम् । तेनार्थेन गोपदस्य नियतसाहचर्याभावादित्यत आह **न हि स्मरणमनुमानमिवेति** । कुतो न हीत्यत आह **धूमेति** । धूमस्य महानसप्रदेशेनाविनाभावाभावात् धूमदर्शनान्तरं तत्स्मरणमनुभवसिद्धं न स्यादिति भावः । अभ्यासातिशयो नाम वारं वारं पदेन तदर्थानुभवः ।

**आनन्दः**— अस्त्वन्वितेऽर्थसाहचर्यग्रहः तथापि पदेन पदार्थमात्रस्मारणं कुतो नेत्यत आह **यथानुभवं हीति** । ननु युज्यते पदेन पदार्थमात्रस्मारणम् । तन्मात्रप्रतिपत्तये तस्य प्रयुक्तत्वादित्यत आह **न हि पदमिति** । **परिनिष्ठित इति** । अबाधित इत्यर्थः । प्रबोधवतः प्रबोध्यस्य । ननु व्यभिचार्यंशेन संस्कारोद्बोध इत्यत्राह **तत्प्रबोधस्येति** । प्रणिधानं सावधानता । ननु व्यभिचार्यंशे साहचर्यनियमाभावान्न तत्स्मरणमित्यत आह **न हीति** ।

**कं०रा०— स चेति** । व्यवहारश्चान्वित एवेत्यन्वितार्थविषयकव्यवहारेण तत्रैव पदानां संबन्धिग्रहणा-दन्वितानामेव पदार्थानां पदेभ्यः स्मरणं स्यादित्यर्थः । **पूर्वानुभूतेति** । गामानयेति प्रयोजकवृद्धवाक्यप्रयोगसम-नन्तरभाव्यानयनान्वितगोपदार्थविषयकप्रयोज्यवृद्धव्यवहारेण यदा व्युत्पद्यते तदा गोपदार्थस्यानयनान्वितत्वेन तेनानुभूतत्वात्तथैव स्मरणमावश्यकमिति भावः । **पट्वभ्यासादरप्रत्ययैरिति** । क्वचित्सकृदनुभूतेऽर्थे स्मरणानुत्पत्तेः संस्काराभावस्य सिद्धत्वाद्बहुवारानुभवरूपपट्वभ्यासस्य संस्काराधायकत्वं सकृदनुभूतेऽप्यर्थे सतोरादरविश्वासयोः स्मरणदर्शनात् तयोरपि संस्काराधायकत्वमिति भावः । अथवा । अनुभवावृत्तिरूपाभ्यासाभावे संस्कारानुदयेन स्मरणाभावदर्शनादनादरणीयेऽर्थे तदनुदयप्रयुक्तस्मृत्यभावदर्शनाच्च पट्वभ्यासादरप्रयुक्तानुभवानां तदाधायकत्वमिति भावः ।

**श्रीनिधि०— नापि इतरेतराश्रयत्वमिति** । द्विरभिधानकल्पना तु नास्त्येवेति भावः । **परीक्षकप्रयोजनं** पदान्तरावैयर्थ्यादिकम् । शक्त्यनुभवोऽपि पदार्थमात्र एवेति नानुभवातिक्रम इत्यत आह **न हि पदं पदार्थमात्रेति** । **पूर्वानुभूतानयनान्वितेति** । गामानयेति प्रयोग इति भावः । **न गोपदं तेन संबध्येतेति** । गां पश्येति प्रयोग इति भावः । **परिनिष्ठितः** व्यवस्थितः ।



**वा०चं०— साहचर्येति** । स्वार्थैः सहेति शेषः । स्मारयन्तीत्युक्त्या द्विरभिधानकल्पनाऽपि नेति सूचयति । प्रथमं स्वार्थमात्रेण साहचर्यग्रहोऽनन्तरमन्वितेनेति साहचर्यग्रहक्रमात्स्मरणाभिधानयोः क्रम इति शङ्कानिरासाय सर्वदैव हीत्युक्तम् । नन्वस्तु प्रथममन्वितेनैव साहचर्यग्रहस्तथाऽपि तथा स्मारकत्वे पदान्तरवैयर्थ्यापातेन स्वार्थमात्रस्मारकत्वं तेषां विचारे सत्यवसीयत इत्यत आह **यथानुभवं हीति** । अन्वितेनैव स्वार्थेन गृहीतसाहचर्याणीत्युक्तमुपपादयति **न हि पदमिति** । नन्वस्त्वन्वितपदार्थस्मारकत्वं तथाऽपि को दोष इत्यतस्तर्हि त्वदुक्तकेवलस्मारकत्वहानिरिति दूषणे स्थित एव दूषणान्तरमाह **तथा चेति** । यद्यप्यत्रैकेनैव पदेन यथास्मरणमन्वितस्वार्थाभिधानात्पदान्तरवैयर्थ्यं स्यादित्यपि दूषणं वक्तुमुचितं तथाऽपि तस्याभिधानमुखेन प्राप्त्या स्मारकत्वपक्षासाधारणदूषणेन तान् पक्षान् प्रदूष्याभिधायकत्वपक्षमेव परिशेष्य तत्र पूर्वोक्तवैयर्थ्यान्योन्याश्रयत्वादितादवस्थ्यव्युत्पादने तात्पर्यान्न तथोक्तमिति द्रष्टव्यम् । पूर्वानुभूतेत्यतःपूर्वं गामानयेति प्रयोग इति शेषः । एवमित्यतःपरं तस्मिन्नेव गां पश्येति प्रयोग इति शेषः । एवं च गामानयेति प्रयोगे गोपदस्यानयनान्वितगोत्वेन साहचर्योपलम्भाद्गां पश्येति प्रयोगेऽपि कारकाभिधायिगोपदमानयनान्वितमेव स्वार्थं स्मारयेदिति पश्येति पदमनाकाङ्क्षिताभिधानमसङ्गतं स्यात् । एवं तस्मिन्नेव प्रयोगे गोपदमपि पश्येत्यनेन क्रियावाचिनाऽनाकाङ्क्षितार्थस्मारकमसङ्गतं स्यात् । पश्येति पदस्य प्रासादं पश्येति प्रयोगान्तरे प्रासादान्वितस्वार्थसाहचर्यदर्शनादिति भावः । उक्तामव्यवस्थां सर्ववाक्येष्वतिदिशति **तथा चेति** । ननु न साहचर्यमात्रं स्मारकत्वे तन्त्रमपि त्वव्यभिचरितं तत् । एवं च स्वार्थेनैव पदार्थान्तरेणाव्यभिचरितसाहचर्याभावान्न तत्स्मारकत्वं किन्तु स्वार्थमात्रस्मारकत्वमिति नाव्यवस्थेति शङ्कते **न चेति** । भूयोदर्शनाद्याहितसंस्कारोद्बोधादिस्वसामग्रीप्राप्तस्मरणे व्यभिचारादिकमकिञ्चित्करमित्याह **पटु इति** । सकृद्गृहीते तडिदादौ पटुप्रत्ययः कुण्डिकादावभ्यासप्रत्ययः । अद्भुतेष्वादरप्रत्ययः । अभ्यासादरोऽभ्यासातिशय इति कश्चित् । तथाऽप्यबुद्धस्य न स्मृतिजनकत्वमित्यतः **प्रबोधवत इति** । ननु व्यभिचारिणि स्मरणसामग्र्येव नास्तीत्यत आह **तत्प्रबोधस्य चेति** । **प्रणिधानं** मनोऽवधानम् । साहचर्यमेकदेशकालसंबन्धः । आदिपदेन लिङ्गलक्षणाभ्याससादृश्यादिग्रहणम् ।

**वा०र०— दूषणे स्थित एवेति** । अनेन तद्दूषणे सति तत्परित्यागेन दूषणान्तरं कुत उक्तमिति शङ्का निरस्ता । सत्येव तस्मिन्दूषणे तदविहायैव दूषणान्तरदानस्यात्राभिप्रेतत्वात् । **अभिधानमुखेनेति** । अभिधायकत्वस्मारकत्वपक्षयोर्मध्ये अभिधायकत्वपक्षाश्रयणेनेत्यर्थः । पट्वभ्यासादरप्रत्ययैराहिताया भावनायाः प्रबोधवत्या इत्येतत्तत्त्वप्रदीपिकाव्याख्यानानुसारेणाह **सकृद्गृहीत इत्यादि** । **अद्भुतेष्विति** । आश्चर्येष्वित्यर्थः । **कश्चिदिति** । .................. । परिगणिता हि स्मृतिहेतवः । प्रणिधानाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रिताश्रयिसंबन्धानन्तर्यवियोगैककार्यविरोधातिशयव्याप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्माः प्रामाणिकैः इति तत्त्वप्रदीपिकामनुसृत्यादिपदार्थमाह **आदिपदेनेति** । एतेषामुदाहरणानि नयनप्रसादिन्यां द्रष्टव्यानि ।

**स०व्र०— साहचर्यवशादिति** । पदानां स्वार्थसाहचर्यवशादेव तत्स्मारकत्वं न शक्तिवशादतो न द्विरभिधानमिति भावः । केचित्तु । ननु न प्रथममभिधायकानि येन द्विरभिधानं प्रसज्येत किन्तु प्रथमं पदार्थेषु





स्मृतिरेव जायते । साहचर्यदर्शनात् । सहचरितानि हि प्रथमं पदार्थैः पदानि अनुभूतानि देवदत्तदर्शनादिव यज्ञदत्ते । अनन्तरं तु संसृष्टदशायां स्मारितानां पदार्थानां अभिधानमित्येतंदाशङ्क्य परिहरति । अत्र विशेषान्विताभिधानवादिन इत्यादिनेत्याहुः । अन्वितपदार्थे साहचर्यमेवोपपादयति **न हि पदमिति** । व्यवहारसमर्थसंसृष्टपदार्थैः साहचर्यात्तादृगर्थस्मारकपदानां पदार्थमात्रस्मारकत्वमसिद्धमित्युक्तम् । अङ्गीकारे च दूषणान्तरमाह **तथा चेति** । यदा गामानयेति प्रासादं पश्येति च पूर्वमन्वयो गृहीतः तदनन्तरं यदि तं प्रति गां पश्येति प्रयोगः तदा अत्रत्यपदद्वयं परस्परमनाकाङ्क्षितार्थं स्यादिति समुदायार्थः । उक्तामव्यवस्थां सर्ववाक्येष्वतिदिशति **तथा चेति** । साहचर्याविशेषेऽपि पदार्थान्तरवैषम्यं शङ्कते **न च वक्तव्यमिति** । **व्यभिचारादिति** । भूयोदर्शनाद्याहितसंस्कारोद्बोधात्तु उत्पद्यमाना स्मृतिर्नान्वितपदार्थयोर्विशिष्यत इत्याह **न त्वभ्यासेति** । सकृद्गृहीतेऽपि तटिदादौ पटुप्रत्ययः । घटादावभ्यासप्रत्ययः । अद्भुतेष्वादरप्रत्ययः । तथाप्यनुद्बुद्धस्य न स्मृतिजनकत्वमिति । **अतः प्रबोधवत इति** । ननु भावनोद्बोधो न तथा व्यभिचारिणि यथा अव्यभिचारिणि पदार्थमात्र इत्यत आह **तत्प्रबोधस्येति** । प्रणिधानसाहचर्यादिभ्यो जन्म यस्य तस्येत्यर्थः । आदिपदेनाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रयिसंबन्धानन्तर्यवियोगैककार्यविरोधातिशयव्याप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्माणां संग्रहः । अयमर्थः । **प्रणिधानं** मनोऽवधानम् । **साहचर्यं** हस्तिहस्तिपकादौ । अभ्यासो घटादौ लिङ्गाद्व्याप्तिसंस्कारस्य प्रबोधः । लक्षणं धवलछत्रादिचिह्ने राजादिसंस्कारोद्बोधकं सादृश्यं शुक्तिरजतादौ परिग्रहः स्वीकारः कलत्रादिसंस्कारस्य एवमाश्रयाश्रयिणावपि परस्परसंस्कारस्य, संबन्धः सहचारः । आनन्तर्ये पूर्वतनपदार्थसंस्कारस्य वियोगः । कामिन्यादौ एकस्मादुत्पन्नकार्याणां अन्यतमदन्यसंस्कारस्य विरोधः सर्पनकुलादौ अतिशयेनातिशयिनोः व्याप्यव्यापकयोः व्यवधानं प्रियतमान्यव्यवहिते सुखदुःखादि तज्जातीयस्य तद्धेतोश्च । अर्थित्वमर्थनीये । क्रियारागः क्रियाशक्तिः स्वविषयस्या धर्माधर्मौ । शुभाशुभविषयसंस्कारोद्बोधकौ इति । **रसवत्पाकादिप्रदेशस्येति** । महानसचत्वरादिप्रदेशस्येत्यर्थः ।

**विठ्ठ०**— नन्वित्यादिना कृतचोद्यस्य वयं त्वित्यादिना परिहारमग्रे विवक्षुः तत्स्थेम्ने प्राभाकराणां परिहारप्रकारमनूद्य निराचष्टे **अत्र विशेषेत्यादिना** । **साहचर्यवशादिति** । पदानां वाच्यवाचकयोः साहचर्यवशादेव तत्स्मारकत्वं न शक्तिवशात् अतो न द्विरभिधानमिति भावः । पदानामन्वितस्वार्थेन साहचर्यग्रहणेऽपि परीक्षकाणां वाक्यार्थबोधसिद्धये केवलं पदार्थमात्रस्मारकत्वमङ्गीक्रियत इत्यत आह **यथानुभवं हीति** । पदानामन्वितस्वार्थेनैव शक्तिग्रहणमिति कुत इत्यतस्साहचर्यग्रहणरूपव्युत्पत्तेः वृद्धव्यवहाराधीनत्वात्तस्य चानन्वितार्थनिष्ठत्वादन्वितार्थ एव शक्तिग्रहणम् । अतस्तेभ्यः पदेभ्योऽन्वितानामेव पदानां स्मरणं युक्तमित्याशयेनाह **न हीति** । **प्रयुज्यते** वृद्धेन । **व्यवहाराय** आदानादिव्यवहाराय । **स चान्वित एवेति** । अनन्विते कुण्डमजाजिनमित्यादिपदाभिहितार्थे व्यवहारादर्शनादिति भावः । **इति** इत्यस्येति हेतोरित्यर्थः । नन्वस्त्वेवं पदानामन्वितपदार्थस्मारकत्वं साहचर्यवशात्पदैरन्वितस्यार्थेषु स्मृतेषु पश्चादाकाङ्क्षावशेनान्वितार्थाभिधायकत्वं संभवतीति न पदान्तरवैयर्थ्यादिकमित्यत आह **तथा चेति** । यदा गामानय प्रासादं पश्येति च वाक्यद्वये गोपदेन पूर्वानुभूतानयनान्वितस्यार्थस्य स्मारितत्वात्पश्येतिपदेन च प्रासादान्वितस्वार्थस्य स्मारितत्वाद्गां पश्येति पदद्वयमन्योन्य-





मसङ्गतं भवेत् । तथा च अस्य वाक्यस्यन्योन्यान्वितार्थावगमकत्वाभावेन वाक्यार्थनिश्चयो न स्यात् प्रयोगान्तरेष्वप्येवमिति वाक्यार्थः क्वापि न सिद्ध्येत् । तस्मात्पदानां विशेषतोऽन्वितस्वार्थाभिधायकत्वे पदान्तर-वैयर्थ्यादिकं स्यादेवेति भावः । ननु यद्यप्यानयनान्वितेन स्वार्थेन गवादिपदादिगृहीतसाहचर्याणि तथापि अन्वयप्रतियोगिभूतानयनादिरूपार्थान्तराणि न स्मारयन्ति कुत इति चेत् गवादिपदप्रयोगवेलायां क्वचिदानयन-पदप्रयोगस्य कुत्रचिद्दर्शनार्थकपदप्रयोगस्य क्वापि बन्धनप्रयोगस्य दर्शनैनैकपदप्रयोगनैयात्याभावेन व्यभिचारित्वात् । किन्तु व्यभिचारशून्यं पदार्थान्तरानन्वितं स्वार्थमात्रं स्मारयन्ति । तथाच पश्चाद्गीतरेतरस्मारितेनार्थेनान्वितस्वार्था-नभिदधतीति न पदार्थान्तरवैयर्थ्यादिकमित्याशङ्क्य गवादिपदानुभवेन संस्काराद्बोधेन स्वार्थस्मरणवदत्यन्त-दृढतमेन उद्बुद्धेन संस्कारेण गवादिपदान्वयप्रतियोगिभूतपदार्थान्तरस्मरणस्यावर्जनीयत्वादुक्तदोषतादवस्थ्यमित्या-शयेन परिहरति **न च वक्तव्यमिति** । पद्वभ्यासेति पटुतराभ्यासादरानुभवैरित्यर्थः । **अविशेषादिति** । यथा अव्यभिचारिणि स्वार्थे मनःप्रणिधानादिना संस्कारप्रबोधस्तथा व्यभिचारिण्यप्यानयनादिरूपस्वार्थान्वितार्थान्तरे पद्वभ्यासाद्याहितसंस्कारप्रबोधस्यापि मनःप्रणिधानादिना जननस्याविशिष्टत्वादित्यर्थः । प्रणिधानमिह चिन्ता आदिशब्देनादृष्टादिग्रहणम् । 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका' इत्युक्तेः व्यभिचारित्वेन साहचर्यनियमा-भावेन स्मरणानुपपत्तिरित्युक्तमित्यत आह **न हीति** । **रसवत्पाकप्रदेशस्येति** । महानसस्येत्यर्थः ।

**चषकः— साहचर्यवशादिति** । स्वबोध्यैकदेशसंबन्धादित्यर्थः । अर्थनिरूपितसामानाधिकरण्यस्य शब्देषु बाधात् । तथा च पदानां स्वार्थस्मृतिजनकत्वं दर्शितसंसर्गाधीनमेव न शक्त्यधीनमिति न द्विरभिधानप्रसङ्ग इति भावः । **क्वापीति** । प्राक्तनसंसर्गग्रहविषयीभूतपदघटितेषु प्राग्गृहीतार्थकवाक्यभिन्नवाक्येष्वित्यर्थः । **अव्यभि-चारादिति** । तादात्म्येन गोपदत्वावच्छिन्नस्य शक्तिसंबन्धेन स्वार्थव्याप्यत्वादिति भावः । **प्रणिधानं** मनोऽवधानम् । **साहचर्यम्** एकदेशकालसंबन्धः । **आदिपदं** सादृश्यादिग्राहकम् ।

**६६१ सु०— एतेनैतदपि निरस्तम् । यथा पदानां स्वार्थेष्वभ्यासातिशयो न तथा अर्थान्तरेषु । तेषां व्यभिचारित्वात् । तथा च स्वरूपमात्रेणैव पदेभ्यः स्मारिताः पदार्था आकाङ्क्षादिमन्तः पदैरन्विता अभिधीयन्त इति न परस्पराश्रयत्वम् । नापि पदान्तराना-काङ्क्षेति । स्मरणस्यानुभववारनियमानपेक्षत्वात् । अन्यथा धूमदर्शनान्महानसादिस्मरणा-नुपपत्तिप्रसङ्गः । न हि यावान् धूमस्याग्नावभ्यासातिशयस्तावान् महानसे । तस्मादपरि-हार्यमितरेतराश्रयत्वमिति ।**

**परि०—** इत्येतत्परास्तमित्यत्रैतेनेति परामृष्टं हेतुं व्यनक्ति **स्मरणस्येति** । **वारेति** । द्विवारं त्रिवारमित्येवमावृत्तिनियमेत्यर्थः । तथाच सकृदनुभवेऽप्यर्थान्तरस्मृतिर्भवत्येवेति भावः ।





**गु०दी०— स्मरणस्यानुभववारे**त्यत्र वारंवारं अनुभवः अनुभववारमित्यर्थः।

**वं०प०— स्वरूपमात्रेणेवेति**। स्मारिता इत्यन्वयः। न पूर्वमत इव साहचर्यवशात्पदानां पदार्थस्मारकत्वमुच्यते। किं नाम पदानामभ्यासवशादेव स्वरूपमात्रेणैव परस्परमन्वितत्वेनैव पदार्थस्मारकत्वमुच्यत इति पूर्वमतभेदो द्रष्टव्यः। एतेनेत्युक्तं विषदयति **स्मरणस्येति**। **अनुभववारनियमेति**। अनुभवावृत्तिनियमेत्यर्थः। अभ्यासातिशय इति यावत्। **तस्मादिति**। गवादिपदानां साहचर्यवशादभ्यासवशाच्च केवलार्थस्मारकत्वरूपपक्षद्वयस्यानुपपन्नत्वादानयपदान्वितस्वार्थस्मारकत्व एव वाच्ये गां पश्येति वाक्यार्थपरिनिष्ठाया असंभवेन पदानामन्वितस्वार्थाभिधायकत्वमेव वाच्यम्। तथा च अपरिहार्यमेवान्योन्याश्रयत्वं पदान्तरवैयर्थ्यं चेत्यर्थः।

**आनन्दः— स्वरूपमात्रेणैवेति**। घटत्वादिरूपेणेत्यर्थः। एतेनेत्यतिदेशार्थमाह **स्मरणस्येति**। **अनुभव(वार)बाहुल्यनियमेति**। अनुभवबाहुल्यनियमस्येत्यर्थः। अनुभवमात्रस्यैव स्मरणप्रयोजकत्वे बाहुल्यमप्रयोजकमिति भावः। अनुभवबाहुल्यं च पूर्वपक्षेऽभ्यासातिशय इत्यनेनोक्तम् **अन्यथेति**। अनुभवबाहुल्यस्य आवश्यकत्वे इत्यर्थः।

**कं०रा०— अभ्यासातिशय इति**। गामानय गां बधानेत्यादौ यत्र यत्र गोपदमनुभूतं तत्र तत्र गोरूपार्थस्याप्यनुभूततया पदस्य स्वार्थे बहुवारानुभवलक्षणोऽभ्यासातिशयोऽस्तीति भावः।

**वा०चं०— एतेनेति**। संस्कारोद्बोधप्रयोजकाभ्यासेऽप्यतिशयितः स्वार्थ एवेति तन्मात्रस्मरणमिति भावः।

**वा०र०—** स्वार्थमात्रस्मारकत्वोपपादनाय प्रवृत्तेनाभ्यासातिशयसद्भावः कुत उच्यत इत्यतः स्मरणहेतुसंस्कारोद्बोधहेतुतया तदुक्तिरत्राभिप्रेतेति स्वार्थमात्रस्मरणमेवानेनोपपादितमतो नासङ्गतिरित्याह **संस्कारोद्बोधेति**।

**विट्ठ०— एतेन** इत्युक्तं हेतुं व्यञ्जयति स्मरणस्यानुभवसहचारनियमेति द्विवारं त्रिवारमित्यनुभवावृत्तिनियमानपेक्षणात्। सकृदनुभवेनापि स्मरणोपपत्तेः। अतो अर्थान्तरेषु साहचर्यनियमाभावे स्मरणमुपपद्यत इत्याशयः।

**६६२ सु०— वयं तु ब्रूमः। स्यादिदं विशेषान्विताभिधानवादिनां दूषणम्। सामान्यान्विताभिधाने तु नायं दोषः। प्रत्येकं हि पदान्याकाङ्क्षितसन्निहितयोग्येतरान्वितस्वार्थाभिधानसमर्थानि न पदान्तरमपेक्षन्त इति नेतरेतराश्रयत्वम्। विशेषान्वयप्रतिपत्त्यर्थं च पदान्तरसमभिव्याहारोपयोगः। अत एव सामान्यान्विताभिधानवादे वाक्यार्थविशेषाप्रतिलंभ इति निरस्तम्, पदान्तरसमभिव्याहाराद्विशेषप्रतिपत्त्युपपत्तेः। येऽपि विशेषान्विताभिधानमाचक्षते तैरपि प्रतियोगिनां तदन्वयानां चाऽऽनन्त्यात्सङ्गतिग्रहण एव**





**पुरुषायुषपर्यवसानभयात् सामान्योपाधौ शक्तिग्रहणमङ्गीकरणीयम् ॥ नन्वेवं तर्हि किमनया सामान्यान्विताभिधानशक्त्याऽपि । पदानि स्वार्थमात्रे शक्तिमन्ति पदान्तरसमभिव्याहारवशाद्विशेषान्वितमेव बोधयन्तीत्यङ्गीकारोपपत्तेरिति चेन्न, सङ्गतिग्रहणसमये सामान्यान्विताभिधानशक्तेर्गृहीतत्वात् । पदान्तरसमभिव्याहारो हि सामान्यस्य विशेषपर्यवसान एव हेतुर्न पुनरविद्यमानशक्त्याधान इति ॥ ननु तथाप्यन्विताभिधाने समभिव्याहृतपदानां पुनरुक्तिदोष इति चेन्न, अन्वयभेदात् । आनयनान्वितो गौर्गवान्वितमानयनमित्यनयोर्हि स्फुटो भेदः ॥ आर्थिकी तु पुनरुक्तिरदूषणम् । 'यश्चार्थादर्थो न स चोदनार्थ' इति न्यायात्, विशेषप्रतिपत्त्यङ्गतयोपयोगाच्चेति ।**

**परि०— पुरुषायुषेति** । पञ्चमान्त्यपादे अचतुरविचतुरसुचतुरस्त्रीपुंसेत्यादिना पुरुषायुषेतिनिपातनात्साधुः । **न पुनरविद्यमानशक्त्याधान इति** । हेतुरित्यनुकर्षः । ननु पद्धतौ प्रत्येकं सामान्यतो योग्यान्वितस्वार्थाभिधानशक्तीनि पदानि पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोऽप्यन्वितान्स्वार्थानभिदधतीत्युक्तत्वात् तद्विरोध इति चेन्न । पदान्तरसन्निधानमेवाहितशक्त्यन्तरं लब्धसहकार्यन्तरं येषामिति पद्धतिवाक्यस्यार्थकथनेन विरोधपरिहारस्य तर्कताण्डवे द्वितीयपरिच्छेदेऽन्विताभिधानबाधकोद्धारग्रन्थे कृतत्वात् । **चोदनार्थो वाक्यार्थः** । आर्थिकपुनरुक्तेरदोषत्वेऽपि पदान्तरं व्यर्थं तु स्यादित्यत आह **विशेषेति** । तत्तद्विशेषोपस्थापनरूपप्रयोजनान्तरेण पदान्तरस्योपयुक्तत्वादित्यर्थः । यानि तु घटं नयतीत्यादौ कारकपदेनान्वयप्रतियोगितयाक्रियायाः क्रियापदेनापि तत्प्रतियोगितया कारकस्याभिधानात्पर्यायता स्यादित्यादीन्यन्विताभिधानबाधकानि तानि बाधकदशकोद्धारग्रन्थे तर्कताण्डवे निरस्तानि ॥ **अन्विते शक्तिः इति ॥**

**गु०दी०— अविद्यमानशक्त्याधान** इत्यत्र सर्वथाऽविद्यमानशक्तयाधाने इत्यर्थः ।

**यादु०**— नन्वेवं पदान्तरसमभिव्याहारो व्यर्थः । न च विशेषान्वयप्रतिपत्त्यर्थं सः । पदान्तरसमभिव्याहारेण विशेषान्वयप्रतिप्रत्त्यनुकूलशक्त्यन्तराधानाङ्गीकारे विशेषान्विताभिधानवादस्यान्तत आश्रयणीयत्वप्रसङ्गेन प्रथमत एव किमिति तदनङ्गीकार इत्यत आह **पदान्तरसमभिव्याहार इति** । नन्वेवं पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोऽप्यन्वितान्स्वार्थानभिदधतीति पद्धत्या विशेषतः अन्वितार्थप्रतीतिस्तु परस्परसन्निधानाहितशक्तिभिः पदैर्भवतीत्यहिकुण्डलाधिकरणीयसुधया च विरोधः । तत्रोभयत्र पदान्तरसमभिव्याहारेण शक्त्यन्तराधानस्योक्तत्वादिति चेन्न । अभ्युपगमवादेनैव तत्र तथोक्तत्वात् । न चैवमन्ततो विशेषान्विताभिधानवादाङ्गीकारप्रसङ्गः । प्राभाकरमत इव तत्र स्वाभाविकशक्तेरनङ्गीकारात् पश्चादाहितां शक्तिमुपेत्यापि विशेषान्वयप्रतिपत्तिरुपपादनीया ।





न तदर्थं तत्र प्रथमत एव स्वाभाविकी शक्तिः कल्पनीया । अन्योन्याश्रयत्वादतिप्रसङ्गादिति तद्ग्रन्थाभिप्रायः । वस्तुतस्तु शक्तिद्वयाङ्गीकारे कल्पनागौरवस्य वक्ष्यमाणत्वात्स्वाभाविक्याः सामान्यान्वयशक्तेरेव विशेषान्वय-पर्यवसानाङ्गीकारेणैव विशेषान्वयप्रतिपत्त्युपपादनं युक्त्यन्तरमित्येतद्ग्रन्थाशय इति न कोऽपि विरोधः । अन्ये तु पदान्तरसन्निधानमेवाहितशक्त्यन्तरं लब्धसहकार्यन्तरं येषामित्यर्थकत्वात्पद्धतिवाक्यस्य परस्परसन्निधानरूप-लब्धसहकारिभिरित्यर्थकत्वाच्चाहिकुण्डलाधिकरणीयसुधावाक्यस्येति न कोऽपि विरोध इत्याहुः । **अन्वयभेदा-दिति** । न चैवं वाक्यभेदप्रसङ्गः । पदार्थस्थानीयान्वयभेदेऽपि तद्बोधमात्रेण नैराकाङ्क्ष्याभावेन गोकर्मकानयनानुकूला कृतिरिष्टसाधनमिति वाक्यार्थीभूतान्वयस्याभेदेनैकवाक्यत्वसंभवात् । ननु गोपदेनानयनान्वितो गौरित्युक्त्यैव गवान्वितमानयनमित्यर्थस्य लब्धत्वेन पुनः गवान्वितमानयनमित्यनेनाभिधाने आर्थिकी पुनरुक्तिः स्यादित्यत आह **आर्थिकी त्विति** । नन्वथाऽपि वैयर्थ्यमित्यत आह **विशेषप्रतिपत्तीति** । पदान्तरसमभिव्याहाराभावे विशेषान्वयप्रतिपत्त्ययोगस्य पूर्वमुक्तत्वेन तदर्थकतयोपयोगान्न वैयर्थ्यं पदान्तरस्येत्यर्थः । विस्तरस्तु तर्क ताण्डवे द्रष्टव्यः ।

वं०प०— **स्यादिदमिति** । अन्योन्याश्रयत्वं पदान्तरवैयर्थ्यं चेति दूषणद्वयं विशेषान्विताभिधानवादि-नामेव स्यादित्यर्थः । **सामान्योपाधाविति** । अस्मदभिहिते योग्येतरान्वितस्वार्थरूप इत्यर्थः । **पुनरुक्तीति** । गोपदेनानयनान्वितो गौरित्युक्तेर्गवान्वितमानयनमित्यस्यापि तयैव लब्धत्वादानयेत्यनेनापि पुनर्गवान्वितमानयन-मित्यभिधाने पुनरुक्तिदोष इत्यर्थः । अत्र पुनरुक्तिः किं शब्दतोऽर्थतो वा । नाद्य इत्याह **अन्वयभेदादिति** । तमेवोपपादयति **आनयनेनान्वित इति** । द्वितीये त्वाह **आर्थिकी त्विति** । अदूषणत्वेऽपि वैयर्थ्यं तु स्यादेवेत्यत आह **विशेषप्रतिपत्तीति** । स्पष्टप्रतिपत्तीत्यर्थः । पदान्तराणामिति शेषः ।

आनन्दः— **प्रत्येकं हीति** । तथा चैकेन पदेनान्वितस्वार्थप्रतिपादने पदान्तरं नापेक्ष्यत इत्यर्थः । पदान्तरवैयर्थ्यं परिहरति **विशेषेति** । ननु यदि सामान्यान्वितयुक्तिस्तर्हि विशेषान्वये शक्त्यभावेन तद्बोध-जननोपायाभावेन तद्बोधो न स्यादित्यत आह **अत एवेति** । अस्यैवार्थमाह **पदान्तरेति** । सामान्यान्विते शक्तिरित्येतत्परैरपि अवश्यस्वीकर्तव्यमित्यत आह **येऽपीति** । **सामान्योपाधौ** सामान्यान्वितौ । अन्विते शक्तिः किं बाधकसद्भावाद्वा नाङ्गीक्रियते साधकाभावाद्वा । नाद्यः । तेषां परिहृतत्वात्परिहरिष्यमाणत्वात् । नान्त्य इत्याह **सङ्गतीति** । ननु तथाप्यन्विते शक्तिग्रहः कुतः लाघवेन पदार्थमात्रशक्तेरेव समञ्जसत्वात् । अन्वितशक्तौ हि अन्वितघटत्वं अवच्छेदकं पदमात्रशक्तौ घटत्वं अवच्छेदकम् । तथाच लाघवात्पदार्थमात्र एव शक्तिरस्तु । अन्वयबोधस्य समभिव्याहारेण लाभोपपत्तेः । न च सङ्गतिग्रहणकालेऽन्वितपदार्थस्योपस्थितत्वादन्विते शक्तिग्रह इति वाच्यम् । तर्हि तदा विशेषान्वितस्योपस्थितत्वेन तत्रैव शक्तिग्रहोपपत्तेरित्यत आह **पदान्तरेति** । सर्वथान्वयस्याशक्यत्वे पदान्तरसमभिव्याहारेणापि तद्बोधासंभवेन तत्र शक्तेरावश्यकत्वात् । तत्समभिव्याहारस्तु सामान्यस्य विशेषे पर्यवसानार्थ एव । यदि च शक्त्यभावेऽपि समभिव्याहारेणैव तल्लाभ इति तर्हि नानार्थोच्छेदः तत्रापि





सैन्धवपदस्याश्व एव शक्तिर्लवणरूपार्थप्रतीतिस्तु प्रकरणबलादिति शक्तिव्यवच्छेद एव स्यादिति । **ननु तथापीति** । इतरान्वितो घट इतरान्वितमानयनमिति हि पदद्वयेन बोधो जननीयः । तत्र च एकत्र इतरशब्देनानयनस्यापरत्रेतरशब्देन घटस्याभिप्रेततया तद्बोधितार्थानवच्छिन्नार्थाबोधकत्वात्पुनरुक्तिः स्यादिति भावः । **अन्वयभेदादिति** । नन्विदमयुक्तं घटपदेनेतरान्वितघटे बोधिते आनयनपदात् तदर्थोपस्थितिकाल एवान्वयबोधस्यैव जायमानत्वेन क्वान्वयबोध इति । मैवम् । यत्र सामग्रीकैवल्यवशेनैवमन्वयबोधो न जातस्तादृशस्थलाभिप्रायेणैव मुक्तत्वादिति । **आर्थिकी त्विति** । अर्थादनुमानेनेत्यर्थः । गोपदेन ह्यानयनान्वितगवाभिधाने गवान्वितानयनमपि तैनेव बोधितं भवति । तथा चानुमानं गोपदं गवान्वितानयनप्रतिपादकं आनयनान्वितगोप्रतिपादकत्वात्संप्रतिपन्नवदिति । किञ्च पुनरुक्तिर्हि वैयर्थ्यमापादयति । न च प्रकृते वैयर्थ्यं संभवति विशेषान्वयबोधोपयुक्तत्वादित्याह **विशेषेति**।

कं०रा०— **पदान्तरसमभिव्याहारो हीति** । यद्यपि पद्धतौ प्रत्येकं सामान्यतो योग्येतरान्वितस्वार्थाभिधानशक्तीनि पदानि पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोऽप्यन्वितान्स्वार्थानभिदधतीति पदान्तरसमभिव्याहारस्य शक्त्याधानहेतुत्वोक्तेः पदान्तरसमभिव्याहारो हि सामान्यस्य विशेषपर्यवसान एव हेतुर्न पुनरविद्यमानशक्त्याधान इत्येतद्विरुद्धमिवाभाति । तथाऽपि पदान्तरसन्निधानाहितशक्त्यन्तराणीत्यस्य पद्धतिवाक्यस्य पदान्तरसन्निधानमेवाहितशक्त्यन्तरं लब्धसहकार्यन्तरं येषामित्यर्थः । न तु पदान्तरसन्निधानेनाहितं शक्त्यन्तरमाधेया शक्तिर्येषामित्यर्थः । अतो न विरोध इति द्रष्टव्यम् । अथवा । न पुनरविद्यमानशक्त्याधान इत्येतद्वाक्यं पदान्तरसमभिव्याहारात्पूर्वमन्वयसामान्येऽपि शक्तिर्नेत्येतन्निषेधपरम् । अतो न विरोधः । अस्मिन्पक्षे एकैकशः पदैः सामान्यतोऽन्विततया ज्ञातो भवेदर्थः । पुनः पदान्तरसन्निधानाहितिबलाद्विशेषतोऽन्वितत्वेन ज्ञातो भवेत् । पदानि सामान्यतोऽन्विताभिधायीनि विशेषतोऽन्वितार्थप्रतीतिस्तु परस्परसन्निधानाहितशक्तिभिः पदैर्भवतीत्यहिकुण्डलाधिकरणस्थवाक्यद्वयस्याप्यर्थान्तरं न कल्प्यमिति बोध्यम् । ननु वाक्यस्थानां सर्वेषां पदानामन्विताभिधायित्वे गामित्यादिपूर्वपदेनोक्तस्यैवान्वयस्यान्वयेत्याद्युत्तरपदेनाप्युक्तेः समभिव्याहृतपदानां पुनरुक्तिदोष आपततीत्याशयेन शङ्कते **ननु तथाऽपीति** । समभिव्याहृतपदानां भिन्नभिन्नाभिधायकत्वान्न पुनरुक्तिरिति परिहरति **नेति** । ननु गोपदेनानयनान्वितगोप्रतीतावानयनान्वितत्वमानयनस्य गवान्वितत्वं विना नोपपद्यत इत्यर्थात्तदपि प्रतीतमित्यार्थिकी पुनरुक्तिरित्यत आह **आर्थिकीति** । चोदनार्थो वाक्यार्थः । **विशेषेति** । सामान्यान्वितेतरान्वितस्वार्थाभिधायिना गोपदेनेतरान्वितगोप्रतीतौ गोरितरान्वितत्वमितरस्य गवान्वितत्वं विना नोपपद्यत इत्यर्थादितरसामान्यस्य गवान्वितत्वप्रतीतावप्यानयनादिरूपसंबन्धिविशेषस्य तदप्रतीतेस्तत्प्रतिपत्त्यङ्गतया आनयेत्यादिपदान्तरस्योपयोगात् । पुनरुक्तेश्च वैयर्थ्यापादकत्वेनैव दोषत्वात् । प्रकृते च तदभावान्न पुनरुक्तिर्दूषणमित्यर्थः।

श्रीनिधि०— **सामान्योपाधौ** प्रतियोगिसामान्यान्विते सामान्यधर्मवतीत्यर्थः । नन्वन्वयस्यान्यतो लाभे वा तत्र शक्तिग्रह एव किमर्थ इत्यत आह **पदान्तरसमभिव्याहारो हीति** । **स्फुटो भेद इति** । धर्मिप्रतियोगिनोर्भेदेन

तदन्वयस्यापि भिन्नत्वादिति भावः । **आर्थिकीति** । आनयनान्विता गौरित्याद्युक्ते अर्थात् गवान्वितमानयनमित्याद्यपि प्रतीयत इत्यर्थः । चोदनार्थो वाक्यार्थः । अस्तु वा पुनरुक्तिः । किं तावता । वैयर्थ्यमापद्येतेति चेन्न । तन्नास्तीत्याह **विशेषप्रतिपत्त्यङ्गतयेति** ।

**वा०चं०**— ननु विशेषान्वयप्रतिपत्त्यर्थं पदान्तरोपयोग इतरेतराश्रयत्वाभावप्रयोजकपदान्तरनिरपेक्षतायै सामान्यान्विताभिधायकत्वं च त्वयाऽपि कल्पनीयम् । मया चाव्यभिचारात्स्वार्थमात्रस्मारकत्वं परस्परसमभिव्याहाराद्विशेषान्विताभिधायकत्वं कल्प्यत इति कल्पनायां न कोऽपि विशेष इत्यतः सामान्यशक्तिग्रहणप्राप्तसामान्यान्विताभिधानस्य त्वां प्रत्यावश्यकत्वात्तव कल्पनाधिक्यमेवेत्याह **येऽपीति** । यद्यप्यव्यभिचारात्स्वार्थमात्रस्मारकत्वं परोक्तमनुपदमेव निरस्तं सामान्यान्विताभिधानं चानुभवसिद्धमित्यप्युक्तं तथा च न साम्यप्रसक्तिः तथाऽप्यस्मदभिमतसामान्यान्विताभिधानप्रयोजकसामान्यशक्तिग्रहणं तवाप्युपजीव्यमिति कल्पनायामपि न साम्यमित्याशयेनैतदुक्तमिति ध्येयम् । यद्वा ननु शक्तिग्राहकप्रमाणस्य वृद्धव्यवहारादेर्विशेषविषयकतया सामान्यान्विते शक्तिग्रहानुपपत्तेः कथं तच्छक्त्यभ्युपगमेनोक्तदूषणपरिहार इत्यतः शक्तिग्राहकप्रमाणस्य विशेषविषयत्वेऽप्यावापोद्वापादिना व्यभिचरितविशेषानपहायाव्यभिचरितसामान्यान्वित एव शक्तेः परीक्षकैर्व्यवस्थापनात् । एवंभावो विशेषान्विताभिधानवादिनाऽप्यङ्गीकार्य एव । अन्यथा विशेषान्विते शक्तिग्रहानुपपत्तिरित्याह **येऽपीति** । ननु पदान्तरसमभिव्याहाराद्विशेषान्वयप्रतिपत्त्यङ्गीकारे पदार्थशक्तिमात्रं किं नाभ्युपेयेतान्वितशक्तिकल्पनापेक्षया केवलपदार्थशक्तिपक्षस्य लघुत्वात् । पदान्तरसमभिव्याहारानुसरणस्य चोभयत्राविशेषादित्याशङ्कते **नन्विति** । प्रथमं गृहीताऽपि गौरवात्कार्यान्वितशक्तिरिवान्यलभ्यत्वबाधकादन्वितशक्तिः परित्यज्यतामित्यत आह **पदान्तरेति** । स्वार्थमात्रशक्तानां पदानां पदान्तरसमभिव्याहारो विशेषत एवान्वयबोधकत्वोपयुक्तं शक्त्यन्तरमुत्पादयतीति मन्यसे आहोस्वित्तेन शक्त्यन्तरानुत्पादे पदार्थमात्रशक्तानां पदानां सर्वथाऽन्वये शक्तिशून्यानामपि पदान्तरसमभिव्याहाररूपसहकारिवशादन्वयबोधकत्वमिति । नाद्य इत्याह **पदान्तरेति** । हीत्यस्य न्यायस्य प्रसिद्धतां सूचयति । द्वितीयेऽप्येतदेवोत्तरं पदान्तरेति । तदा सामान्यस्य सामान्यविषयकशक्तेर्विशेषविषयकत्वरूपे विशेषपर्यवसान एव पदान्तरसमभिव्याहारो हेतुर्न पुनरविद्यमानशक्त्याधाने सर्वथाऽन्वये शक्त्यभावेऽपि विशेषान्वयबोधकत्व इत्यर्थः । अत एव पदान्तरसन्निधानाहितशक्त्यन्तराणीति पद्धतिरपि पदान्तरसन्निधानेनाहितं पर्यवसितं शक्त्यन्तरं शक्तिविशेषो येषां तानि पदान्तरसन्निधानप्राप्तविशेषविषयताकसामान्यशक्तीनीति यावदिति व्याख्येया । तर्कताण्डवे तु पदान्तरसन्निधानमेवाहितशक्त्यन्तरलब्धसहकार्यन्तरं येषामित्यर्थ इत्युक्तम् । केचित्तु पद्धत्यनुसारात्पदान्तरसमभिव्याहारस्य शक्त्यन्तराधायकत्वमेव; सुधा तु पदान्तरसमभिव्याहारात्पूर्वमन्वयसामान्ये शक्तिर्नेत्येतन्निषेधपरेति न विरोध इत्याहुः । तन्न । शक्तिद्वयाङ्गीकारे गौरवाद्विशेषपर्यवसान एव हेतुरित्यस्वारस्याच्चेति द्रष्टव्यम् । नन्वन्विताभिधानपक्षे गोपदेन गोरिव आनयनस्यानयेति पदेनानयनस्येव गोरप्यभिधानात्पुनरुक्तिरिति शङ्कते **नन्विति** । पदद्वयेनोभयोपस्थापनेऽपि गोपदेनानयनप्रतियोगिकगोधर्मिककर्मत्वस्यानयेति पदेन च गोप्रतियोगिकानयनधर्मिकक्रियात्वस्योपस्थापनात्तयोश्च भिन्नभिन्नप्रतियोगिकानुयोगिककर्मत्वक्रियात्वयोरेकैकेनेवान्येना-





नुपस्थापनेनोपस्थापनीयान्वयभेदेनापौनरुक्त्यमित्याह **अन्वयेति** । एतदेव विशदयति **आनयनेति** । नन्वन्वयद्वयस्यैकैकेनोपस्थापनेऽपि कारकपदोपस्थापितक्रियाप्रतियोगिककर्मत्वादेः क्रियायां कारकप्रतियोगिकक्रियात्वेन विनाऽनुपपत्त्या तथा क्रियापदोपस्थापितकारकप्रतियोगिकक्रियात्वस्य कारके क्रियाप्रतियोगिककर्मत्वादिना विनाऽनुपपत्त्यैकैकपदेनैकैकोक्त्यैवान्यथाऽनुपपत्त्याऽन्यस्यापि सिध्या पदान्तरेणापि पुनस्तदभिधाने पौनरुक्त्यं स्यादेवेत्यतोऽन्यथाऽनुपपत्तिबललब्धस्य अशाब्दतया न शाब्दपौनरुक्त्यमित्याह **आर्थिकी त्विति** । ननु तथाऽप्यन्यथाऽनुपपत्तिलब्धेऽप्यर्थेऽपूर्वत्वाभावेनानुपादेयता पदान्तरस्य स्यादेवेत्यतः सप्रयोजनत्वान्नानुपादेयतेत्याह **विशेषेति** ।

**वा०र०— उपयोग इति** । कल्पनीय इति लिङ्गविपरिणामेन संबन्धः । **यद्यपीति** । अव्यभिचाराद्यत्स्वार्थमात्रस्मारकत्वं परोक्तं तदिति योज्यम् । **इति कल्पनायामिति** । इत्येवंरूपेण कल्पनायां कोऽपि विशेषो नास्ति । पक्षद्वयेऽपि कल्पयोर्द्वित्वाविशेषादित्यर्थः । **कल्पनाधिक्यमेवेति** । उक्तकल्पद्वयातिरिक्तस्य तृतीयस्यास्मदभिमतसामान्यान्विताभिधानप्रयोजकसामान्यशक्तिग्रहणस्य त्वत्पक्षे कल्प्यतया प्राप्तेः कल्पनात्रयप्राप्तिरित्यर्थः । पदान्तरसमभिव्याहारोपयोगस्य विशेषप्रतिपत्त्यर्थतया पक्षद्वयेऽपि कल्प्यत्वेऽपि परपक्षे द्वितीयस्य कल्पितस्याव्यभिचारात्स्वार्थमात्रस्मारकत्वस्य व्यभिचारिसाधारण्येन प्राग्दूषणात्स्वाभिमतसामान्यान्विताभिधानरूपद्वितीयस्यानुभवसिद्धतोक्तेः कल्पनाभावान्न कल्पनाद्वयवत्त्वेन साम्यम् । तत्कथं तदङ्गीकारेण साम्याभ्युपगम इति शङ्कते **यद्यपीति** । **कल्पनायामपीति** । यद्यपि परपक्षे कल्पितं द्वितीयमप्रामाणिकं स्वपक्षे द्वितीयं त्वनुभवसिद्धमेवेति न कल्पनास्ति । तथापि परकीयकल्पनासाधुत्वमविचार्य स्वपक्षे च कल्पनामङ्गीकृत्यापि साम्यविचारे परपक्षे कल्पनाधिक्यान्न साम्यमित्याशयेनेत्यर्थः । एवं तैरपि शक्तिग्रहणमधिकमङ्गीकरणीयं कल्पनीयमिति योजनामङ्गीकृत्य तदुपपादनं कृतम् । अधुना अस्माभिरिव तैरप्यङ्गीकरणीयमिति नास्मान्प्रति तथा पर्यनुयोगो युक्त इति योजनामभिप्रेत्य प्रकारान्तरेणावतारयति **यद्वेति** । व्यवस्थापनादित्यतःपरं युक्तस्तच्छक्त्यभ्युपगम इति पाठः । तदभावे तथा शेषो वा पूरणीयः । न केवलमेवमुपपादनमस्माभिरेव स्वीक्रियते । अपि तु परैरपीत्याह **एवंभाव इति** । **अनुपपत्तेरिति** । पदान्तरवैयर्थ्यादिप्रागुक्तदोषादिति भावः । **कार्यान्वितशक्तिरिवेति** । प्रथमं गृहीतापि कार्यान्विते शक्तिरिष्टे व्युत्पत्तिरिष्यत इत्याद्युक्तरीत्या गौरवस्य प्राप्तेर्यथा परित्यज्यते एवं प्रथमगृहीताप्यन्विते शक्तिः पदान्तरसमभिव्याहाररूपान्यलभ्यत्वबाधकात्परित्यज्यतामित्यर्थः । अत्र परित्यज्यतामित्यत इत्यनन्तरमेव स्वार्थमात्रशक्ताना-मित्यादिर्ग्रन्थः । मध्ये आह पदान्तरेतीत्येतदधिकं मूलकोशे नाशितमपि लेखकागतम् । अतः प्रतीकोपादानं द्वेधा प्राप्नोतीति शङ्कानवकाशः । केचित्तु यथाश्रुतपाठेऽपि स्वार्थेत्यतः प्रागयमर्थ इति पूरणीयम् । पूरणाभावे वा प्रथमगृहीताप्यन्वितशक्तिः परित्यज्यतामिति शङ्कानिवर्तकतया सांमुग्ध्येन पदान्तरेति वाक्यमवतार्य पश्चान्निरासप्रकारव्यक्तये विकल्पनिरासक्रमेण पुनर्द्वेधोपात्तमिति न दोष इत्याहुः । हीत्यस्य न्यायप्रसिद्धतामिति पाठः । गामानय शुक्लामित्यादौ गोशब्दस्य विशेषे पर्यवसानदृष्टान्तेन तेजोवैधृतमित्यर्थवादस्य पदैकवाक्यत्वादक्ताः शर्करा इत्यत्राक्ता इत्यनेनोक्ताञ्जनक्रियाक्षिप्तस्नेहनसमर्थद्रव्यस्य घृते पर्यवसानस्याक्ताधिकरणे निर्णीतत्वात्तथा 'छागोवामन्त्रवर्णादि'ति





षष्ठान्ते पशुमालभेतेति ब्राह्मणवाक्यस्थपशुशब्दस्य 'छागस्य वपाया मेदसोऽनुब्रूही'ति मन्त्रवर्णाविति विशेषे पर्यवसानस्य प्रतिपादितत्वात्तद्रूपन्यायेत्यर्थः। अस्य न्यायस्येति षष्ठ्यन्तपाठे तु यत्र पदान्तरसमभिव्याहारस्तत्र विशेषपर्यवसानहेतुरेव स इति न्यायो व्याप्तिवाक्यम्। तत्प्रसिद्धम्। गामानय शुक्लामित्याद्युदाहरणसत्त्वादिति ोज्यम्। प्रथमकल्प इव यथाश्रुतवाक्यस्य द्वितीयकल्पेऽप्युत्तरत्वस्यायोगात्तत्र विवक्षितमर्थमाह **तदेति**। द्वितीयकल्पान्तरत्वेन योजनापक्ष इत्यर्थः। पदान्तरसमभिव्याहारस्य शक्त्यन्तराधानहेतुत्वाभावप्रतिपादकैतन्मूलस्य पद्धतिविरोधपरिहाराय तद्वाक्यार्थमाह **अत एवेति**। अविद्यमानशक्त्याधाने पदान्तरसमभिव्याहारस्य हेतुताया अत्र मूले निषेधादेवेत्यर्थः। **व्याख्येयेति**। ततो न ग्रन्थयोः परस्परविरोध इति शेषः। उपलक्षणं चेदं विशेषतोऽन्वितार्थप्रतीतिस्तु परस्परसन्निधानाहितशक्तिभिरित्यहिकुण्डलाधिकरणीयमूलं च उक्तरीत्या व्याख्येयमिति ज्ञेयम्। देशान्तरस्य स इत्युपाधिखण्डनटीकायामन्तरशब्दो विशेषवचन इत्युक्तेरत्र विशेषार्थतया व्याख्यानं युक्तम्। तर्कताण्डवे विरोधपरिहारः प्रकारान्तरेण कृतस्ततो न तेन स्वोक्तार्थस्य विरोध इत्याशयेनाह **तर्कताण्डवे त्विति**। ............अनूद्य दूषयति **केचित्त्विति**। **शक्त्यन्तरेति**। अन्वयविशेषे शक्तिरूपं शक्त्यन्तरेत्यर्थः। **अन्वयसामान्य इति**। न पुनरविद्यमानशक्त्याधान इति सुधा तु पदान्तरसमभिव्याहारात्पूर्वं सर्वथाऽन्वयसामान्ये शक्तिरविद्यमानासन्निधानेन त्वाहितेति न भवतीति व्याख्येयेत्यतो न विरोध इत्यर्थः। **शक्तिद्वयेति**। समभिव्याहारात्पूर्वं सामान्यान्वये शक्तिस्तदुत्तरं तु विशेषान्वयशक्तिरिति शक्तिद्वयकल्पनापातादित्यर्थः। **विशेषेति**। पर्यवसान एव हेतुरित्युक्त्या शक्त्यन्तरनिषेधादिति भावः। **आनयनस्येति**। अभिधानादित्युत्तरेणान्वयः। **गोपदेनेति**। गामितिपदेनेत्यर्थः। वक्ष्यति चानयेति पदेनेति। तयोश्चेति आनयनप्रतियोगिकेत्यादिनोक्तयोरित्यर्थः। **एकैकेनेवेति**। उक्तकर्मत्वस्यैकेन गामिति पदेनेव। तथोक्तक्रियात्वस्यैकेन आनयेति पदेनेवेत्यर्थः। अन्येन गामित्यपेक्षया अन्येन आनयेत्यनेन। तथानयेत्यपेक्षया अन्येन गामित्यनेनेत्यर्थः। तत्र हेतुर्भिन्नभिन्नेत्यादि। अत्र भिन्नभिन्नप्रतियोग्यनुयोगिकेति पाठः। भिन्नभिन्नेति प्रतियोग्यनुयोगिनोर्विशेषणम्। भिन्नभिन्नौ प्रतियोगिनौ ययोस्ते तथोक्तेति च ते कर्मत्वक्रियात्वे चेति विग्रहः। भिन्नभिन्नप्रतियोगिकेति मध्ये कप्रत्ययपाठे तु भिन्नभिन्नौ प्रतियोगिनौ ययोस्तौ तथोक्तौ। तादृशावनुयोगिनौ ययोस्ते तथोक्ते। कर्मत्वक्रियात्वे प्रति कौचित्प्रतियोगिनौ कौचिदनुयोगिनौ। तयोश्च प्रतियोग्यनुयोगित्वरूपसंबन्धाश्रयणेन कर्मत्वं प्रति कश्चनानुयोगी क्रियात्वप्रतियोगिभिन्नप्रतियोगिक इत्यादिरूपेण सामर्थ्यात् प्रतियोग्यनुयोगिनोरुभयोरपि भिन्नभिन्नत्वं लभ्यत इत्याहुः। भिन्नभिन्नप्रतियोगिकभिन्नभिन्नानुयोगिकेति पाठस्तु स्पष्ट एव। **अन्वयद्वयस्यैकैकेनेति**। आनयनान्वितो गौरित्यादिनोक्तान्वयद्वयस्य। द्वयोरन्वययोरिति यावत्। एकैकेनेत्यस्यैकेन गामित्यनेनेत्यादिरर्थः। आद्यान्वयस्य द्वितीयस्येत्यादि योज्यम्। एकैकेन विशिष्टैकैकान्वयमात्रस्योपस्थापनेऽपीति फलितम्। एवमेकैकपदेनैकैकोक्त्यैवेत्युत्तरत्रापि ज्ञेयम्। **यश्चार्थादर्थ** इति मूलम्। यश्चार्थाच्छ्रुतार्थेनान्तरीयकतया लभ्यते न सः चोदनार्थः वेदार्थ इति शबरस्वामिवाक्यार्थः।

**स०व्र०— सामान्यस्य विशेषपर्यवसान एव हेतुरिति**। नन्वेवं पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोऽप्यन्वितान् स्वार्थानभिदधतीति पद्धतिविरोध इति चेत्। न। पदान्तरसन्निधानमेवाहितशक्त्यन्तरं





लब्धसहकार्यन्तरं येषामित्यर्थकत्वात्तद्वाक्यस्य अनयैव रीत्याऽहिकुण्डलाधिकरणीयमपि विशेषतोऽन्वितार्थ-प्रतिपत्तिस्तु परस्परसन्निधानाहितशक्तिभिः पदैर्भवतीति वाक्यमपि व्याख्येयम् । शक्तिद्वयाङ्गीकारे गौरवस्य वक्ष्यमाणत्वादिति द्रष्टव्यम् । यद्वा सुधाया एव पदान्तरसमभिव्याहारात्पूर्वं अन्वयसामान्ये शक्तिर्नेत्येतन्निषेधपरत्वेन तद्विरोधाभावादिति ध्येयम् । नन्वन्विताभिधाने घटमानयतीत्यादौ कारकपदेनान्वयप्रतियोगितया क्रियायाः क्रियापदेनापि तत्प्रतियोगितया कारकस्याभिधानात् पौनरुक्त्यमिति शङ्कते **ननु तथापीति** । आनयनान्वितो गौरित्युक्त्यैव गवान्वितमानयनमित्यर्थस्य लब्धत्वेन पुनर्गवान्वितमानयनमित्यभिधाने आर्थिकी पुनरुक्तिरित्यत आह **आर्थिकी त्विति** । नन्वेवमपि पदान्तरवैयर्थ्यं एकेनैवोत्तरान्वितस्वार्थोपस्थापनात् विशेषणविशेष्यविपरिवर्तमात्रेण अवैयर्थ्ये दण्डो पुरुषः पुरुषस्य दण्ड इत्यत्राप्येकस्य वैयर्थ्यं न स्यादित्यत आह **विशेषप्रतिपत्त्यङ्गतयेति** । पदान्तरसमभिव्याहाराभावे विशेषान्वयप्रतिपत्त्ययोगस्य पूर्वमुक्तत्वेन तदर्थतयोपयोगाच्च न वैयर्थ्यं पदान्तरस्येत्यर्थः ।

**विठ्ठ०— न पदान्तरमपेक्षन्त इति** । सामान्यतो योग्येतरान्वितस्वार्थप्रतिपादने न पदान्तरमपेक्षन्ते । न ते तस्य पदस्येतरान्वितस्वार्थप्रतिपादने पदान्तरमपेक्षन्ते । पदान्तरस्यान्वितस्वार्थप्रतिपादने एतत्पदापेक्षेति नान्योन्याश्रयत्वमिति भावः । तर्हि पदान्तरवैयर्थ्यमित्यत आह **विशेषान्वयप्रतिपत्त्यर्थमिति** । ननु विशेषा-न्वयबोधेनैव प्रवृत्तिदर्शनाद्विशेषान्वितार्थ एव व्युत्पत्तेरावश्यकत्वाद्व्युत्पत्त्यनुसारेणार्थं बोधयतां पदानां कथं सामान्यान्वितार्थाभिधायकत्वमित्यतो व्युत्पत्तिः सामान्यान्वितार्थ एवेति विशेषान्वयवादिनाप्यङ्गीकार्यमित्याह **येऽपीति** । तर्हि पदान्तरसमभिव्याहारेण विशेषान्वयशक्तिर्भवतीत्येकैकपदस्य शक्तिद्वयकल्पने गौरवमित्यत आह **पदान्तरसमभिव्याहारो हीति** । ननु प्रत्येकं सामान्यतो योग्येतरान्वितस्वार्थाभिधानशक्तीनि पदानि पदान्तरसन्निधानाहितशक्त्यन्तराणि विशेषतोऽप्यन्वितान् स्वार्थानभिदधतीति पद्धतिविरोधः । तत्र पदान्तर-समभिव्याहारेण शक्त्यन्तराधनस्योक्तत्वात् अत्र न पुनरविद्यमानशक्त्याधान इत्युक्तेरिति चेन्न । पदान्तर-सन्निधानाहितं शक्त्यन्तरं सहकार्यन्तरमेषामिति पद्धतिवाक्यस्यार्थकथनेन तर्कताण्डवे विरोधपरिहारस्य कृतत्वात् एतेन विशिष्यान्वितार्थप्रतिपत्तिस्तु परस्परसन्निधानाहितशक्तिभिः पदैर्भवतीत्यहिकुण्डलाधिकरणीयसुधातो विरोध इत्यपि निरस्तम् । एवमेव परस्परसन्निधानरूपशब्दसहकारिभिरित्यर्थकत्वात् शक्तिद्वयाङ्गीकारे कल्पनागौरवस्य वक्ष्यमाणत्वाद्ग्रन्थद्वयस्याप्येवमेवार्थ इति । ननु पदान्तरसमभिव्याहारबलेनैकैकपदस्य विशेषान्वयबोधकत्वे गामानयेत्यत्र गोपदस्यानयनान्वितगोरूपार्थबोधकत्वेन तेन गोपदेनैव गोकर्मकानयनक्रियासंसर्गबोधस्य जातत्वेन पुनरानयेति पदेनापि गवान्वितानयनार्थकेनापि तद्बोधस्यैव जायमानत्वेन समभिव्याहृतपदानां पौनरुक्त्यमित्याशयेन शङ्कते **ननु तथापीति** । **स्फुटो हि भेद इति** । एवमर्थभेदः स्फुटः । हि यस्मादतो न पुनरुक्तिदोष इत्यर्थः । ननु शब्दतः पुनरुक्तिर्न मदभिप्रेता किन्तु आनयनान्वितो गौरित्यनेनैव गवान्वितमानयनमित्यर्थस्य लब्धत्वेन पुनर्गवान्वितमानयनमित्यभिधाने आर्थिकी पुनरुक्तिः स्यादित्येवेत्यत आह **आर्थिकी त्विति** । चोदनार्थो वाक्यार्थः । पुनरुक्त्यभावेऽपि वैयर्थ्यं स्यादित्यत आह **विशेषेति** । विशेषान्वयप्रतिपत्त्यङ्गतयोपयोगस्य सत्त्वेन न पदान्तर-समभिव्याहारवैयर्थ्यमिति भावः ।





**चषकः—** **पुरुषायुषेति** । **अचतुरविचतुरेति**सूत्रेऽजन्ततया निपातनात्साधुताऽवसेया । ननु गामानयेत्यादौ गोपदप्रत्यायितान्वय एवानयपदेनापि प्रत्येतव्य इति पुनरुक्तिरित्याशङ्कायामानयनप्रतियोगिकान्वयस्य गोपदेन लाभः । गोप्रतियोगिकस्य त्वानयनपदेनेति न क्षतिरित्याह **अन्वयभेदादिति** । नन्वानयनान्विता गौरित्युक्त्यैव गवान्वितमानयनमित्यर्थस्य लब्धतया पुनरानयेत्यनेनाभिधाने पौनरुक्त्यं तदवस्थमित्यत आह **आर्थिकी त्विति** । **विशेषप्रतिपत्तीति** । पदान्तरसमभिव्याहारमन्तरेण विशेषरूपावच्छिन्नप्रतियोगिकान्वयप्रतिपत्त्ययोगस्य प्रागभिहिततया न पदान्तरनैरर्थक्यमित्यर्थः ।

॥ अन्यथाकल्पने दोषाः ॥

स्फोटवादनिराकरणम्—

**६६३ सु०— एवं स्वमतेन परिहारमभिधाय ये तु प्रत्यस्तमितवर्णपदविभागं वाक्यमेव स्फोटाख्यं वाक्यार्थप्रतिपादकमित्याहुः । तन्मतं निराकरोति गौरवमिति ।**

**अनु०—　　गौरवं कल्पनेऽन्यथा ॥**

**अन्यथा कल्पने** निरवयवं वाक्यं वाक्यार्थस्य बोधकमिति कल्पने **गौरवं** स्यात् । वाक्यमेव खल्वेवंविधं विना प्रमाणेन कल्पनीयम्, तस्य च वाक्यार्थप्रत्यायनशक्तिरपि कल्पनीयेति ।

**परि०—** **प्रत्यस्तमितेत्यादि** बहुव्रीहिः । गगनवदखण्डमिति यावत् । वाक्यशब्दितं **स्फोटाख्यं** विभुद्रव्यं पदाभिव्यङ्ग्यमिति ज्ञेयम् । **वाक्यमेवेति** । वाक्यशब्दितं स्फोटरूपद्रव्यमेव धर्मि कल्पनीयमित्यर्थः ।

**यादु०—** **प्रत्यस्तमितेति** । अपगतवर्णपदविभागमित्यर्थः । अखण्डमिति यावत् । वर्णपदविभागस्तु तत्राविद्यया कल्पित एवावभासत इत्याशयः । **वाक्यमेवेति** । पदसमुदायाभिव्यङ्ग्यं वाक्यरूपं स्फोटाख्यं तत्त्वमेकमस्ति । तदेव वाक्यार्थप्रतिपादकमित्याशयः ।

**आनन्दः—** **प्रत्यस्तमितेति** । प्रत्यस्तमितो निरस्तः । तथाच तादृशवर्णविभागं पदं पदस्फोटः तादृशपदविभागं वाक्यं वाक्यस्फोट इति भावः ।





**कं०रा०— प्रत्यस्तमितेति** । प्रत्यस्तमितोऽपगतो वर्णपदविभागो यस्य तत्प्रत्यस्तमितवर्णपदविभागमखण्डमिति फलितोऽर्थः । **वाक्यमेवेति** । उपलक्षणं चैतत् । स्फोटाख्यमखण्डं पदमेव पदार्थप्रतिपादकमित्याहुरित्यपि द्रष्टव्यम् । एवमुत्तरत्रापि वाक्यपदमुपलक्षकमिति ज्ञातव्यम् ।

**श्रीनिधि०— प्रत्यस्तमितेति** । निरस्तेत्यर्थः । वाक्यमेव स्फोटाख्यमित्युपलक्षणम् । पदमेव स्फोटाख्यं पदार्थस्मारकमिति द्रष्टव्यम् ।

**वा०चं०—** ननूत्तरत्रान्यथाकल्पने गौरवाभिधानमनुपपन्नम् । उपायान्तरेण वाक्यार्थबोधं वदन्तं प्रति तत्संभवेऽप्यनियतनिमित्तकत्वादौत्प्रेक्षिको वाक्यार्थबोध इत्यप्रामाण्यं वेदस्येति ब्रुवाणं मां प्रत्यन्वितार्भिधानानङ्गीकारेऽपि गौरवाप्रसरादित्यतो नेदं गौरवाभिधानं पूर्वपक्षिणं प्रति येनोक्तदोषः स्यादपि तूपायान्तरवादिनो वादिनः प्रतीत्याशयेनोत्तरवाक्यमवतारयति **एवमिति** । यद्यपि परमते वर्णपदवाक्याखण्डपदवाक्यस्फोटभेदेन पञ्चव्यक्तिस्फोटाः वर्णपदवाक्यस्फोटभेदेन त्रयो जातिस्फोटा इत्यष्टौ स्फोटाः । अत एवोत्तरत्र पदार्थेत्यादिना पदस्फोटमपि व्युत्पादयिष्यति । तथाऽपि वाक्यार्थप्रतिपत्तिहेतोरेव प्रस्तुततया वाक्यस्फोटस्यैव तादृशत्वात् तस्यैवोपादानम् उत्तरत्र पदस्फोटव्युत्पादनं च प्रसङ्गात् इत्यवधेयम् । यद्यपि ताल्वादिस्थानोद्भववायवीयध्वनिविशेषाभिव्यक्तवर्णात्मकपदैः स्वसमवेतवाक्यस्फोटोऽभिव्यज्यते । स च व्यक्तौ वाक्यार्थं प्रत्यापयतीति खण्डवाक्यस्फोटोऽपि पराभिमतस्तथाऽप्यखण्डवाक्यस्फोटपक्षस्य मुख्यतया तदभिमतत्वात्तदुपादानम् । प्रत्यस्तमितेत्यारोपितवर्णपदविभागं निरवयवमिति यावत् । यथा चैतत्तथा वक्ष्यते ।

**वा०र०— तत्संभवेऽपीति** । गौरवाभिधानसंभवेऽपीत्यर्थः । यद्वा गौरवसंभवेऽपि तत्प्रसरेऽपीत्यर्थः । वक्ष्यति च **गौरवाप्रसरादिति** । ब्रुवाणं वादिनं प्रतीति पाठः स्वरस एव । मां प्रतीति पाठे प्राचीनपूर्वपक्षिण एवासङ्गतिशङ्कितृत्वेन मां प्रतीति तदुक्तिरियम् । अत्र पाठे पूर्वपक्षिणं प्रतीत्यत्र त्वां प्रतीति योज्यम् । औत्प्रेक्षिको वाक्यार्थ इति वादी पूर्वपक्षितयाऽभिप्रेतः । **उपायान्तरेति** । उपायान्तरं वदन्तीति उपायान्तरवादिनो नैकयोजनास्तादृशवादिनः प्रतीति योज्यम् । **वर्णपदवाक्याखण्डपदवाक्येति** । एतत्तर्कपादशास्त्रदीपिकादौ .................. । अथशब्दानुशासनमिति भाष्यवाक्यं स्वयमेव व्याकुर्वता भाष्यकारेण गौरित्यत्र कः शब्द इत्यादिना गौरिति विज्ञाते प्रतिभासमानवस्तुषु कः शब्द इति प्रश्नपूर्वकं सास्नादिपदार्थानां द्रव्यत्वात् इङ्गितचेष्टितादेश्च क्रियात्वात् । शुक्लो नील इत्यादेश्चाकृतित्वान्न द्रव्यादिकं शब्द इत्युक्त्वा कस्तर्हि शब्दः । येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणानां संप्रत्ययो भवति सशब्द इत्यनेन येन व्यञ्जकैः प्रकाशितेन सास्नादिप्रत्ययो भवतीत्युक्त्यार्थप्रत्यायकः स्फोटोऽभिहितः । अथ प्रतीतपदार्थको लोके ध्वनिः शब्द उच्यत इति मतान्तरं चोक्तम् । तत्कैयटे च वैयाकरणाः वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्तीत्याद्युपक्रम्य तद्व्यतिरिक्तस्फोटो नादाभिव्यङ्ग्यो वाचको विस्तरेण वाक्यपदीये व्यवस्थापितत्वेत्यादिकमुक्तम् । तथा किं पुनर्नित्यः शब्दः आहोस्वित्कार्य इत्येतद्भाष्यकैयटे





विप्रतिपत्त्या संशयः । केचिद् ध्वनिव्यङ्ग्यं वर्णात्मकं शब्दं नित्यमाहुः । अन्ये वर्णव्यतिरिक्तं पदस्फोटमिच्छन्ति । वाक्यस्फोटमपरे सङ्गिरन्त इति चोक्तम् । मञ्जरीकुसुमविकासादावुक्तिश्चास्ति तदेतन्मनसि निधाय प्रत्यस्तमितेत्यादिकं मूलं प्रवृत्तम् । तत्र स्फोटानां वैयाकरणरीत्या अनेकत्वात्कोऽत्रानूदित इति न ज्ञायत इत्यतो विवेकमाह **यद्यपि परमत इति** । वैयाकरणोऽत्र परः । **पदवाक्यस्फोटावित्यादि** । उक्तं च किं पुनराकृतिः पदार्थः आहोस्वित् द्रव्यमुभयमित्याहेत्यादिभाष्यकैयटे केचित् ध्वनिव्यङ्ग्यं वर्णात्मकं शब्दं नित्यमाहुः । अन्ये वर्णव्यतिरिक्तं पदस्फोटमिच्छन्ति । वाक्यस्फोटमपरे सङ्गिरन्त इत्यादि । तथा तत्र नित्यः शब्दः जातिस्फोटलक्षणो व्यक्तिस्फोटलक्षणो वेत्यादि । उक्तं च तद्व्याख्याने । अन्य इति वैयाकरणाः । अपर इति त एवेति केचिदितीति । गूढार्थदीपिकायां त्वपरे प्राचीनवैयाकरणा इत्युक्तम् । पाणिनिनाप्यवङ्स्फोटायनस्येत्यत्र स्फोटः अयनं परायणं यस्य सः स्फोटायनः स्फोटप्रतिपादनपरो वैयाकरण इत्येवं स्फोटस्य सूचनं कृतमस्ति । शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्परिभागसङ्गमात्सर्वं भूतज्ञानमिति पातञ्जलसूत्रव्याख्यावसरे वृत्तिकारेण यदि वा क्रमरहितः स्फोटात्मा ध्वनिसंस्कृतबुद्धिग्राह्य इत्यादिना महता प्रबन्धेन स्फोट उपपादित इति विश्वकर्म्यामुक्तमित्यादि द्रष्टव्यम् । अत्र प्रकृतवाक्यस्फोटातिरिक्तः स्फोटो मूलेऽपि संमत इति स्फोटान्तरसिद्धिरिति भावेनाह **अत एवोत्तरत्रेति** । इदमत्र ज्ञेयम् । सत्स्वप्यनेकस्फोटेषु पदार्थप्रत्ययान्यथानुपपत्त्या पदस्फोटस्य वाक्यार्थप्रत्ययान्यथानुपपत्त्या वाक्यस्फोटस्य च सर्वैरुपपादनादुदाहृतकैयटादौ पदस्फोटं केचिदिच्छन्ति । वाक्यस्फोटमपर इत्यादि प्रतिपादनाचेह मूले द्वयोरेव प्राधान्याप्राधान्याभ्यामुपन्यास इति । अत एव पदस्फोटमपि व्युत्पादयिष्यतीत्येकमात्रांशे मूले संमनिरुक्तेति मुख्यतयेति । निरवयवाखण्डब्रह्मतुल्यतया नित्यनिरवयवाखण्डस्फोटस्योत्तरत्र मूलेऽपि स्पष्टत्वादिति भावः ।

**विठ्ठ०— प्रत्यस्तमितेति** । निवृत्तवर्णपदविभागोपेतं गगनवदखण्डमिति यावत्, वाक्यं वाक्यशब्दवाच्यं पदस्फोटविवक्षया पदं च न वर्णातिरिक्तमित्युक्तम् ।

**चषकः—** वाक्यस्फोटस्यैव वाक्यार्थप्रत्यायकतामुपगच्छतां वैयाकरणानां मतनिरासपरतयाऽपि योजयति **एवमिति** । **प्रत्यस्तमितेति** । द्वन्द्वगर्भतत्पुरुषगर्भबहुव्रीहिः । वर्णपदविभागविनिर्मुक्तमित्यर्थः । तद्विभागादिकं अखण्डस्फोटाख्यब्रह्मण्यध्यस्तमिति भावः । वैयाकरणमते वर्णपदवाक्याखण्डपदवाक्यस्फोटभेदेन व्यक्तिस्फोटपञ्चकस्य वर्णपदवाक्यस्फोटभेदेन जातिस्फोटत्रिकस्य चोरीकारेण स्फोटाष्टकं तत्सिद्धान्तस्तथापि वाक्यार्थप्रत्यायनौपयिकतया वाक्यस्फोट एवानूदितः । उपरिष्टात्पदस्फोटव्युत्पादनं तु प्रासङ्गिकमिति स्थितम् ।

**६६४ सु०— ननु कथं स्फोटस्याप्रामाणिकत्वं पदार्थवाक्यार्थप्रतिपत्त्यन्यथाऽनुपपत्त्या पदवाक्यस्फोटयोः प्रतिपन्नत्वात् ॥ तथा हि ॥ यदि हि न पदातिरिक्तं वाक्यम्, पदं च न वर्णातिरिक्तं तदाऽर्थप्रत्यय एव न स्यात् । वर्णा हि न प्रत्येकमर्थप्रत्ययमुपजनयन्ति तथाऽननुभवात्, शेषवर्णवैयर्थ्यप्रसङ्गाच्च । समुदायश्च तेषां न संभवति एकवर्णसमये-**





**ऽन्यस्याभावात् । नित्यत्वेऽपि न तेषां प्रतीतिरनुवर्तते । अप्रतीयमानानां प्रत्यायकत्वे सर्वदा पदार्थप्रतीतिप्रसङ्गः । न हि प्रतीत्याऽप्रतीयमानानां सर्वथाऽप्रतीयमानानां च कश्चिद्विशेषः ॥ न च पूर्वानुभूता वर्णाः स्मृत्यारूढा अर्थप्रतीतिहेतव इति वाच्यम्; स्मृतीनामप्यनुभवानुसारेण क्रमिकत्वात् ज्ञानयौगपद्यप्रतिषेधाच्च । अथ पूर्वपूर्वसंस्कारसहितोत्तरोत्तरानुभवैराहितोऽतिपटीयान्संस्कारो निखिलवर्णविषयामेकामेव स्मृतिमुपजनयतीति मतम् तदा क्रमो न स्यात् । पौर्वापर्यलक्षणः क्रमो हि प्रतीत्यङ्गम् । स च देशतः कालतो वा वर्णेषु सर्वगतेषु नित्येषु न संभवति । बुद्धिक्रमस्तु वाच्यः । स चैकस्मृतिसमारूढानां वर्णानां नास्तीत्यर्थप्रत्ययानुपपत्तिः । क्रमस्यानङ्गत्वे च सरो रसो, नवं वनं, राजा जारा, नदी दीनेत्यादावर्थभेदप्रत्ययो न स्यात् । अतो वर्णेभ्योऽनुपपद्यमानोऽर्थप्रत्ययस्तदतिरिक्तं स्फोटमवस्थापयति । स च स्वरूपग्राहकेण प्रमाणेनार्थप्रत्यायनशक्तिमानखण्ड एवावगत इति कथं कल्पनागौरवमिति ।**

**परि०**— अनित्यत्वमुपेत्याह **एकवर्णसमय इति** । **न प्रतीतिरनुवर्तत इति** । क्षणिकत्वात्प्रतीतीनामुत्तरवर्णोच्चारण काल एव पूर्वपूर्वप्रतीतेर्नष्टत्वादिति भावः । ननु प्रतीतिनाशेऽपि प्रतीतानां बोधकत्वोक्तौ कथमतिप्रसङ्ग इत्यत आह **न हीति** । प्रतीत्येति ल्यबन्तम् । अप्रतीयमानानामिति विभागः । **ज्ञानयौगपद्येति** । ज्ञानानामात्मविशेषगुणतया पूर्वपूर्वज्ञानानामुत्तरोत्तरात्मविशेषगुणनाश्यत्वेन निवर्त्यनिवर्तकभावापन्नत्वेन क्षणिकत्वेन च यौगपद्यस्य प्रतिषिद्धत्वाच्चेत्यर्थः । **अर्थभेदप्रत्ययो न स्यादिति** । वर्णानामविशिष्टत्वे तद्भेदेनार्थभेदायोगादिति भावः । धर्मिधर्मयोरन्यतरकल्पनमपि नेत्याह **स चेति** ।

**यादु०**— **पदवाक्यस्फोटयोरिति** । अत्र पदस्फोटोपादानं प्रसङ्गात्तस्यापि निराकरणायेति ज्ञातव्यम् । नन्वप्रतीयमानानां ज्ञापकत्वेऽतिप्रसङ्गात्कदाचित्प्रतीतिरङ्गीकार्या । तेषां प्रतीत्यनुवृत्तिस्तु शाब्दबोधसमये कुत इत्यत आह **न हि प्रतीत्येति** । पूर्वं प्रतीत्य पश्चादप्रतीयमानानामित्यर्थः । तथा चातिप्रसङ्गस्तदवस्थ एव स्यादिति भावः । एवं वाक्यमेव खल्वेवंविधं विना प्रमाणेन कल्पनीयमित्युक्तदोषं परिहृत्येदानीं तस्य च वाक्यार्थप्रत्यायनशक्तिरपि कल्पनीयेत्युक्तदोषं परिहरति **स च स्वरूपग्राहकेणेति** । ननु स्फोटस्यापि वर्णपदादिविभागोपेतत्वे उक्तदोषसाम्यमित्यत उक्तम् **अखण्ड एवेति** । प्रत्यस्तमितवर्णपदविभाग एवेत्यर्थः । अतो नास्मन्मते उक्तदोष इति भावः ।





**वं०प०**— अनेकवर्णस्मृतीनां यौगपद्याङ्गीकारे त्वाह **ज्ञानेति** । सजातीयात्मगुणानां यौगपद्यायोगादिति भावः । **तदेति** । एकस्मृतिविषयत्व इत्यर्थः । **नास्तीति** । स्मृतिरूपाया बुद्धेरेकत्वेन तत्र क्रमाभावादिति भावः । **प्रमाणेनेति** । अर्थप्रत्यायकत्वान्यथाऽनुपपत्त्यैव स्फोटस्य कल्प्यमानत्वेन प्रतीतौ बहुमानाङ्गीकारादिति भावः ।

**आनन्दः**— **तथाऽननुभवादिति** । प्रत्येकमर्थप्रत्यायकत्वस्याननुभवादित्यर्थः । **नित्यत्वेऽपीति** । उच्चारणव्यंग्यत्वाद्वर्णानां तस्य वक्त्राकल्यात्प्रतीतेरपि क्रमिकत्वादिभावः । ननु भवत्विदानीं तदनुवृत्तिः । तद्यथापि कदाचित्तस्याः सत्त्वादर्थप्रत्ययः स्यादित्यत्राह **न हीति** । स्मृत्यारूढा इति स्मृतेर्न क्रमिकत्वमिति भ्रमः । अनेकवर्णविषयिणी एकैव स्मृतिरिति वा एकदानेकविषयिणी पृथक्स्मृतिरिति वा । आद्येनेत्याह **स्मृतीनामिति** । द्वितीय आह **ज्ञानेति** । **अथेति** । अन्त्यवर्णानुभवजनितसंस्कारस्योत्तरोत्तरसंस्कारे अस्य विषयस्य तस्मिन्विषयत्वसंपादनमेवेति भावः । तथापि क्रमविशिष्टवर्णेभ्योऽर्थप्रत्यय उत केवलवर्णेभ्योऽर्थप्रत्ययः । न द्वितीयः । अतिप्रसङ्गात् आद्य आह **तदा क्रम इति** । स्वरूपेणाप्रतीतस्फोटस्य प्रत्येकपक्षे पदान्तरवैयर्थ्यसमुदायस्तु विनाशित्वान्न संभवतीत्याशयः ।

**श्रीनिधि०**— **वाक्यमिति** । वाक्यस्फोटमित्यर्थः । **पदं चेति** । पदस्फोट इत्यर्थः । **स्वरूपग्राहकप्रमाणेन** अर्थापत्तिरूपेण ।

**वा०चं०**— **एकेति** । शान्तः कोलाहलः श्रुतपूर्वो गकारो नास्तीति प्रत्यक्षेण वर्णोऽनित्यो भावत्वे सति कृतकत्वादित्याद्यनुमानेन सर्वदाऽनुपलब्ध्योच्चारणे सत्येवोपलब्ध्या च वर्णानामनित्यत्वादिति भावः । शान्तः कोलाहल इति प्रतीतेर्ध्वनिविषयत्वाच्छ्रुतपूर्वगकारो नास्तीति प्रतीतिस्वरूप एव विप्रतिपत्तेः । अनुमानस्य च स एवायं गकार इति प्रत्यभिज्ञाबाधितत्वाच्छ्रोत्रं नित्यद्रव्यग्राहकं निरवयवेन्द्रियत्वान्मनोवदिति प्रतिपक्षितत्वात् सर्वदाऽनुपलब्धेश्च व्यञ्जकाभावेनोपपत्तेर्वर्णानां नित्यत्वमेवेत्यत आह **नित्यत्वेऽपीति** । वर्णव्यञ्जकोच्चारणस्य प्रतिनियतत्वेनाशुतरविनाशित्वेन क्रामिकत्वेन च तज्जन्यप्रतीतेरपि तादृशत्वेनैकप्रतीतिकालेऽपरप्रतीत्यभावादर्थप्रतीतिपर्यन्तरमननुवृत्तेश्चेति भावः । ननु माऽस्त्वेकप्रतीतिकालेऽपरप्रतीतिर्मा च भूदर्थप्रतीतिपर्यन्तमनुवृत्तिः । तथाऽपि पूर्वं प्रतीतेर्जातत्वमात्रेणार्थप्रतीत्युपपत्तिरित्यत आह **अप्रतीयमानानामिति** । ननु पूर्वं सर्वदा वर्णप्रतीतेरभावात्कथमेतदापादनं कथं च पूर्वं प्रतीतिसत्त्वेऽप्रतीयमानत्वोक्तिरित्यत आह **न हीति** । अर्थप्रतीत्यव्यवहितपूर्वकालासत्त्वे पूर्वं जाताया अप्यकिञ्चित्करत्वमेवेति भावः । एकैकवर्णानुभवजन्यसंस्काराणां निरपेक्षाणामेव तत्तत्स्मृतिकारणतया यावन्तो वाक्यस्थितवर्णास्तावत्स्मृतिजनकत्वम् । तत्रापि क्रामिकानुभवजन्यत्वात् क्रामिकतावत् स्मृतिजनकत्वमेवोचितमिति पुनर्व्यवधानमेवेत्याशयेनाह **स्मृतीनामपीति** । क्रमावधारणेऽपि युगपत्तावत्स्मृतिजनकत्वं वा प्रसज्येतेत्याशयेनाह **ज्ञानेति** । चक्षुरादिनिरपेक्षसंस्कारस्य स्मृतिकारणत्वेऽपि संस्कारनिरपेक्षचक्षुरादेरवलोकनकारणत्वेऽपि मिलितयोः प्रत्यभिज्ञानजनकत्ववन्मिलितानां संस्काराणामेकस्मृतिजनकत्वं न विरुद्धमित्याशयेन शङ्कते **अथेति** । यद्यपि पूर्वपूर्ववर्णानुभवजन्यसंस्कारसचिवान्त्यवर्णसन्निकृष्ट-





श्रोत्रेणाखिलवर्णविषयकैकानुभवजननसंभवात्तदाशङ्काप्युचिता । तथाऽपि संस्काराणां स्मरणप्रत्यभिज्ञाने प्रत्येव कारणत्वेऽप्येतादृशानुभवं प्रति न कारणतेति पराशयाद्वा तदनुभवस्यापि शक्तिस्मरणादिना व्यवहितत्वाद्वा अनाशङ्कनमिति द्रष्टव्यम् । ननु समूहालम्बनप्रतीतिविषयाणामप्येकपंक्त्युपविष्टानां क्रमवत्किं न स्यादित्यत आह **पौर्वापर्येति** । एवं कल्पनागौरवपरिहाराय स्फोटस्य प्रामाणिकत्वमुपपाद्य तदीयार्थप्रत्यायनशक्तेरपि तदुपपादयति **स चेति** ।

**वा०र०**— वर्णनित्यत्वादिरीत्योपपादयति **शान्त इत्यादि** । सिद्धान्तिरीत्या नित्यत्वमुपस्थापयति **शान्तः कोलाहल इति प्रतीतेरित्यादि** । **मा च भूदिति** । मा भूच्चेति योज्यम् । **प्रतीत्याऽप्रतीयमानानामिति** मूलम् । प्रतीत्या अविषयीकृतानामित्यर्थः । गृहीतग्राहिणामित्यादिवदिदम् । अन्यथाख्यातौ तु प्रतीत्येति ल्यबन्त-माश्रितम् । **क्रमावधारणेऽपीति** । क्रमानादरेऽपीत्यर्थः । धृङ् अनादरण इत्यस्येदं रूपम् । **संस्काराणामेक-स्मृतीति** । निखिलवर्णविषयकेति मूलानुसारेण पूरणीयम् । संस्काराणामिति बहुवचनं प्रयुञ्जानेनेदं सूचितम् । **अतिपटीयान् संस्कार इति** मूले जातावेकवचनम् । अनुभवैरेकस्य संस्कारस्य जन्मायोगात् । अन्योन्यासहाये-नातिपटुत्वसंभवाच्चेति । **तदीयार्थप्रत्यायनेति** । अत एव स्फोट्यते व्यज्यते वर्णैरिति स्फोट इतिवत्स्फुटति स्फुटीभवत्यस्मादर्थ इति स्फोट इत्यपि निर्वचनं टीकाकारैः क्रियत इति ज्ञेयम् ।

**स०व्र०**— नन्वप्रतीयमानानां प्रत्यायकत्वेऽतिप्रसङ्गात्कदाचित्प्रतीतिरङ्गीकर्तव्या तेषां प्रतीत्यनुवृत्तिस्तु शाब्दबोधसमये कुत इत्यत आह **न हि प्रतीत्याऽप्रतीयमानानामिति** । पूर्वं प्रतीत्य पश्चादप्रतीयमानानां सर्वथाऽप्रतीयमानानां च को विशेषः । न कोऽपि । अतोऽतिप्रसङ्गस्तदवस्थ एव स्यादिति भावः । **अखण्ड एवेति** । प्रत्यस्तमितवर्णपदविभाग इत्यर्थः । तेन नास्माकमुक्तप्रत्येकसमुदायविकल्पतद्दोषावकाश इति सूचयति ।

**विठ्ठ०**— ननु प्रतीतानामेव वर्णानामर्थप्रत्यायकत्वं प्रतीतेराशुतरविनाशित्वेनाननुवृत्तावपि पूर्वप्रतीतत्वा-दर्थप्रत्यायकत्वमुपपद्यत इत्यत उत्तरोत्तरवर्णप्रतीतिकाले पूर्वपूर्ववर्णप्रतीत्यभावेन कादाचित्कप्रतीतेः समुदाया-घटकत्वेनाप्रयोजकत्वादित्याशयेनाह **न हि प्रतीत्येति** । प्रतीतिविषयत्वं प्राप्येत्यर्थः । **ज्ञानयौगपद्येति** । क्षणिकात्मविशेषगुणानां यौगपद्यासंभवेन तस्य विप्रतिषिद्धत्वादित्यर्थः । **आहितः** संपादितः । निखिलवर्णाना-मेकस्मृतिविषयत्वे क्रमासंभवः कुत इत्यर्थमुपपादयन्नस्तु क्रमाभावः । तथात्वे किं नश्छिन्नमित्याशङ्क्य क्रमाभावेऽर्थप्रतीतिरेव न स्यात्क्रमस्यार्थप्रतिपत्त्यङ्गत्वादिति परिहरति **पौर्वापर्येत्यादिना** । न क्रमः प्रतीत्यङ्गं येन तदभावे प्रतीत्यनुपपत्तिरित्यत आह **क्रमस्येति** । क्रमस्य प्रत्ययानुपायत्वे क्रमविपर्यासेऽपि त एव वर्णा इति वनं नवमित्यादीनामेकार्थप्रतीतिरेव भवेन्नत्वर्थभेदप्रत्यय इति भावः । एवमन्यथानुपपत्त्या स्फोटस्य प्रमितत्वमभिधाय तस्यार्थप्रत्यायकत्वमखण्डत्वं च प्रमितमिति न कल्पनागौरवमित्याशयेनाह **स चेति** । सखण्ड एवेत्यस्य प्रत्यस्तमितपदवर्णविभाग इत्यर्थः । तेन स्फोटस्याखण्डत्वान्न प्रत्येकसमुदितविकल्पदोषाव-काशोऽत्रेति सूचयति ।





**६६५ सु०— तत्र ब्रूमः । किमयं स्फोटः स्वयं प्रतीतो वाक्यार्थपदार्थप्रत्यायकः किंवा स्वरूपेण ।**

**आद्ये किमनयाऽर्थापत्त्यैव तत्प्रतीतिरुत प्रमाणान्तरेण । नाद्यः । इतरेतराश्रयप्रसङ्गात् । प्रतीते हि स्फोटेऽर्थप्रतीतिस्तस्यां च सत्यां तदन्यथाऽनुपपत्त्या स्फोटप्रतीतिरिति । न द्वितीयः तदभावात् ॥ नन्वेकं पदमेकं वाक्यं शब्दादर्थं प्रत्येमीत्येकार्थावलम्बिनी प्रत्यक्षप्रतीतिरस्तीति चेत् । इयमेव विचार्यताम् । किमेषा प्रत्यस्तमितवर्णपदविभागमेकं शब्दतत्त्वमवगाहते किंवा वर्णादिभेदमपि । आद्यस्तु प्रतीतौ बहुमानवता नाङ्गीकर्तुमुचितः । द्वितीयेऽपि किं वर्णादयस्तस्यारम्भका उत व्यञ्जकाः । नाद्यः नित्यत्वाभ्युपगमात् । द्वितीये किं ते प्रत्येकं तस्य व्यञ्जकाः किंवा समुदिता इति पूर्ववद्दोषः(षा)ः । यस्त्वत्र प्रतीकारः सोऽर्थ एव कल्प्यतामिति पुनर्गौरवमेव । पूर्वपूर्ववर्णाभिव्यक्तं शब्दतत्त्वमुत्तरोत्तरैर्विशदं व्यज्यते नैवमर्थे कल्पना युक्तेति चेन्न, एकरसे वैशद्यावैशद्ययोरर्थगतयोरयोगात्, ज्ञानगतयोश्चाननुभवात् ॥ अथ वर्णादयस्तत्र कल्पिताः प्रतिभान्तीति मतम् ॥ तदिदमायातम् 'अप्रतीतं शशविषाणं तत्त्वं गवादिविषाणानि तु तत्र कल्पितानि प्रतिभान्ती'ति । ऐक्यप्रतीतिबलादित्थमास्थीयत इति चेन्न । भेदप्रत्ययस्य बलाद्वनादिप्रत्ययवदैक्यप्रत्यय(स्यौ)स्यैवौपाधिकत्वोपपत्तेः । उपाधिश्चैकार्थप्रत्यायकत्वम् । न चैकार्थप्रत्यायकत्वेनैकत्वप्रत्ययः । ततश्चैकार्थप्रत्यय इति परस्पराश्रयत्वम् । एकार्थ-प्रत्यायनस्य समयग्राहकप्रमाणादेव सिद्धत्वात् ।**

**परि०— प्रतीतौ बहुमानवतेति** । एतावद्वर्णसमूहात्मकमिदमेकं पदं एतावत्पद-कदम्बात्मकमेकं वाक्यमिति वर्णपदादिविभागस्यानुभवसिद्धत्वादिति भावः । **यस्त्वत्र प्रतीकार इति** । पूर्वपूर्ववर्णाद्यनुभवजनितसंस्कारसहकृतान्त्यवर्णेनानुभूयमानेन स्फोटोऽभिव्यज्यत इति त्वयोक्तदोष-प्रतीकार इति वाच्यम्, तादृशोऽन्त्यवर्ण एवार्थावबोधहेतुः कल्प्यतामित्यर्थः । शब्दतत्त्वं स्फोटाख्यम् । तद्वैशद्यादिकं स्फोटरूपार्थे कल्प्यते अथ तज्ज्ञानेन द्वयमपीति क्रमेण निराह **एकरस इत्यादिना** । **तत्रेति** । स्फोटाख्यशब्दे । **ऐक्येति** । एकं पदमेकं वाक्यमिति पदादावैक्यप्रतीतीत्यर्थः । स्फोटस्येक-त्वात् । वर्णानां पदे पदानां च वाक्येऽनेकत्वेनैक्यप्रत्ययस्याधिष्ठानगतैक्यारोपेण विनाऽयोगादिति भावः । **समयग्राहकप्रमाणादिति** । पदपदार्थसङ्केतग्राहकवृद्धव्यवहारादिरूपप्रमाणादेवेत्यर्थः ।





**गु०दी०— नन्वेकं पदम्** इत्यत्र एकं पदमिति एकं वाक्यमिति शब्दादर्थं प्रत्येमीति चशब्दस्य प्रत्येकं संबन्धः । **ऐक्यप्रतीतिबलादित्यत्र** एकं पदमित्येकत्वप्रत्ययबलादित्यर्थः । **शक्तिद्वयम्** इत्यत्र पदार्थानामन्वयबोधकत्वशक्तिः पदानां च पदार्थेष्वन्वयबोधकत्वशक्त्याधानशक्तिश्चेति शक्तिद्वयमित्यर्थः ।

**यादु०— एकार्थावलम्बिनीति** । अनेकेषु वर्णेष्वेकं पदमिति तथाऽनेकेषु पदेष्वेकं वाक्यमिति प्रतीतवर्णातिरिक्तं पदातिरिक्तं वैकमर्थमवगाहत इत्यर्थः । ननु न वर्णादयस्तात्त्विका येनारम्भका अभिव्यञ्जका वेति विकल्पदोषप्रसक्तिः । किं त्वविद्यमानास्तत्रारोपिता एव प्रतिभान्तीत्याशयेन शङ्कते **अथ वर्णादयस्तत्रेति** । **ऐक्यप्रतीतिबलादिति** । एकं पदमेकं वाक्यमिति प्रतीतिबलादित्यर्थः । **भेदप्रत्ययस्येति** । वर्णानां बहुत्वेन भेदस्यानुभवसिद्धत्वादिति भावः । **वनादिप्रत्ययवदिति** । यथाऽनेकेषु तरुष्वेकं वनमिति प्रत्यय एकस्थानस्थितत्वरूपोपाधिनिमित्तकस्तद्वदित्यर्थः ।

**वं०प०— नाङ्गीकर्तुमुचित इति** । स्फोटत्वेन रूपेणाप्रतीयमानत्वादित्यर्थः । **अर्थ एवेति** । यथा प्रत्येकं समुदितविकल्पेन वर्णानां स्फोटव्यञ्जकत्वं न संभवतीति स्फोटोऽस्मदुक्तदोषस्य यः प्रतीकारः क्रियते स प्रतीकारो 'वर्णा न प्रत्येकमर्थप्रतीतिमुपजनयन्ति, नापि समुदिता' इत्युक्तदोषपरिहारार्थ एव क्रियतामित्यर्थः । स प्रतीकारोऽर्थे कल्पयितुं न शक्यत इत्याशङ्कते **पूर्वपूर्वेति** । **ऐक्यप्रत्ययेति** । अनेकेषु वर्णेष्वेकं पदमनेकेषु पदेष्वेकं वाक्यमिति प्रतीतिबलादेकस्मिन्स्फोटे वर्णादय आरोपिताः प्रतिभान्तीत्याश्रीयत इत्यर्थः । **अप्रतीतमिति** । स्फोटत्वेन रूपेणाप्रतीयमानस्य तस्य शशविषाणतुल्यत्वादिति भावः । **भेदप्रत्ययबलादिति** । वर्णानां पदानां च बहुत्वस्यानुभवसिद्धत्वेन तद्बलादित्यर्थः । **समयग्राहकप्रमाणादेवेति** । पदपदार्थसङ्केतग्राहकवृद्धव्यवहाररूपप्रमाणादेवेत्यर्थः ।

**आनन्दः— ऐक्यप्रतीतिबलादिति** । एकं पदमित्याद्यैक्यप्रतीतिबलादित्यर्थः । नन्वेव वर्णमित्यादावेकस्थानस्थितत्वाधिरूपौपाधिकधर्माणां सत्स्वादस्त्वेवं प्रकृते तु न तादृश उपाधिरित्यत आह **उपाधिश्चेति** ।

**कं०रा०— यस्त्वत्रेति** । वर्णाः किं प्रत्येकं स्फोटस्य व्यञ्जकाः किंवा समुदिताः । नाद्यः । प्रत्येकविशेषणवैयर्थ्यप्रसङ्गात् । न समुदितास्तेषां समुदायासंभवादित्यत्र दोषे समूहालम्बनस्मृत्युपारूढत्वेन बौद्धसमुदायवतां वर्णानां तदभिव्यञ्जकत्वमिति यः प्रतीकारः सोऽर्थप्रत्यायकत्व एव कल्प्यतामिति गौरवमेवेत्यर्थः । **एकरस इति** । निरवयव इत्यर्थः । **ऐक्येति** । एकं पदमित्याद्यैक्यप्रतीतिबलादित्यर्थः । **भेदेति** । अनेकेषु वृक्षादिष्वेकं वनमित्याद्यैक्यप्रत्ययस्यैकदेशस्थत्वाद्युपाधिनिबन्धनत्ववद्वर्णभेदप्रत्ययबलादनेकेषु वर्णेष्वेकं पदमित्यैक्यप्रत्ययस्योपाधिनिबन्धनत्वोपपत्तेरित्यर्थः । तमेवोपाधिमाह **उपाधिश्चेति** । नन्वेकया समूहालम्बनस्मृत्या विषयीक्रियमाणेषु वर्णेषु तज्ज्ञानानन्तरभाविज्ञानविषयत्वरूपक्रमाभावेन क्रमविशिष्टत्वेन वर्णानां तयाऽनवगाहनात्कथं तेषामर्थप्रत्यायकत्वम् ।





**श्रीनिधि॰— प्रतीकारः** परिहारः।

**वा॰चं॰— पूर्ववदिति**। प्रत्येकपक्षे वर्णान्तरवैयर्थ्यं समुदायस्तु न संभवतीति दोष इत्यर्थः। यथा रत्नपरीक्षकस्य पुनः पुना रत्नतत्त्वं वीक्षमाणस्य पञ्चषाणि रत्नदर्शनानि प्रत्येकं रत्नस्वरूपमवगाहमानान्यपि न सहसैव समानासमानजातीयव्यावृत्तरत्नतत्त्वमवभासयन्ति किन्तु पूर्वपूर्वदर्शनजनितभावनासचिवचेतोलब्धजन्मनि चरमे चेतसि चकास्ति रत्नतत्त्वं तथा व्यञ्जयन्तोऽपि प्रत्येकमिमे वर्णा न द्रागेव स्फुटतरं स्फोटमवभासयितुमीशतेऽपि त्वल्पं पूर्वपूर्वाभिव्यक्तिजनितसंस्कारसचिवोत्तरोत्तराभिव्यक्तिक्रमेणान्योऽन्यो वर्णः स्फुटतरं स्फोटज्ञानमाधत्त इति न वैयर्थ्यं द्वितीयादीनाम्। नापि पूर्वेषाम्। तदभावे तदभिव्यक्तिजनितसंस्काराभावेनान्त्यवर्णस्यासहायतया व्यक्तावाभास-हेतुत्वासंभवात्। इयं च कल्पना स्फोट **एव** युक्ता नार्थे स्फोटस्य शब्दत्वेन श्रावणप्रत्यक्षतया प्रत्यक्षगोचरस्य व्यक्तितारतम्यभाक्त्वेन दृष्टत्वात्। मानान्तरगम्यार्थस्य तु शब्दाद्व्यक्तमेव वा प्रतीतिरप्रतीतिरेव वेति न साम्यमि-त्याशङ्क्ते **पूर्वपूर्वेति**। तन्मते ध्वनीनामेव स्फोटव्यञ्जकत्वेऽपि वर्णादयस्तस्यारम्भका व्यञ्जका वेति विकल्पमुखेन प्रवृत्तेस्तदनुसारेण वर्णाभिव्यक्तमित्युक्तमिति द्रष्टव्यम्। सामान्यविशेषतत्त्वानां सर्वांशानां वाऽनुभूयमानता हि वैषद्यम्। सामान्यमात्रस्य किञ्चिदंशानां वाऽनुभवो ह्यवैशद्यम्। न च निखिलसामान्यविशेषविरहिणो निरंशस्य स्फोटस्य तादृशवैशद्यावैशद्ये संभवतः। नापि पूर्वपूर्ववर्णैरस्फुटमुत्तरोत्तरैर्विशदं तज्ज्ञानं कस्याप्यनुभवसिद्धम्। अतो नेदं वैलक्षण्यं युक्तमित्याशयेनाह **एकरस इति**। ननु वर्णादिविभागो न प्रतीयत इति नोच्यते येन प्रतीतिविरोधः स्यात्। नापि वर्णादीनां स्फोटोत्पादकव्यञ्जकत्वे येन तत्पक्षोक्तदोषः। अपि त्ववश्यं किलार्थप्रतिपत्त्यर्थं क्षणभङ्गुर-वर्णव्यतिरिक्तस्फोटोऽभ्युपगन्तव्यः। स च केनचिदभिव्यङ्ग्यः। तत्राभिव्यञ्जकत्वं तावत् ध्वनिषूभयसम्प्रतिपन्नम्; तव तद्वर्णानां मम तु स्फोटस्येत्येव विशेषः। न च ध्वनिभिरेव स्फोटाभिव्यक्तिसिद्धावतिरिक्तवर्णकल्पनया किञ्चिदस्ति प्रयोजनम्। प्रत्युत कल्पनागौरवमेवाधिकम्। ततो यथा नित्यनिरतिशयचिदानन्दैकरसे ब्रह्मण्यसदप्यनाद्यनिर्वाच्या-विद्यावशात्सदिवाभाति तथाऽनवयवे नित्ये स्फोटाख्ये शब्दब्रह्मण्यशेषमिदं जगदसदप्यनाद्यविद्यया सन्नपि वर्णपदविभागः प्रतीयते। तदभिव्यक्तिः पुनर्वृत्त्या चैतन्याभिव्यक्तिरिव ध्वनिभिराश्रीयत इति सिद्धान्तरहस्यमिति नानुपपत्तिरित्याशङ्क्ते **अथेति**। अप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्च मतद्वयमप्यनुपपन्नमित्याशयेनार्थान्तर-न्यासेनाभाससमानयोगक्षेमतामाह **तदिदमिति**। एकं पदमेकं वाक्यमित्यबाधितप्रतीतेः स्फोटं विनाऽनुपपत्त्या स्फोटस्य प्रामाणिकत्वात्तद्बलायत्तकल्पनायां नाभाससाम्यमित्याशङ्क्ते **ऐक्येति**। सर्वत्रैक्यप्रत्ययस्यैवमन्यथा-सिद्ध्या तद्बलात्क्वाप्यैक्यं न सिध्येदिति शङ्कापरिहाराय भेदप्रत्ययबलादित्युक्तम्।

**वा॰र॰—** ......... अनुसारेण शङ्कार्थमाह **यथा रत्नेत्यादि**। **पञ्चषाणीति**। द्वौ त्रयो वा द्वित्रा इतिवत् पञ्च षड् वेति विगृह्य बहुव्रीहौ संख्येयेडजबहुगणादित्यनेन डच्प्रत्यये डित्वाट्टिलोपे पञ्चषप्रातिपदिकम्। पञ्चषेषु स्थलेष्वित्यानन्दमयाधिकरणमूलमप्युपपादयिष्यते। **समानासमानेति**। सजातीयविजातीयेत्यर्थः। किन्तु रत्नतत्त्वं चकास्तीति संबन्धः। भावनया संस्कारेण सचिवं सहकृतं यच्चेतस्तेन लब्धं जन्म यस्यैवंभूते चरमे चेतसि चरमबुद्धावित्यर्थः। **द्रागेव** शीघ्रमेव। इत्यतो द्वितीयादीनां न वैयर्थ्यमिति योजना। **पूर्वेषामिति**। वैयर्थ्यमिति





वर्तते । **ध्वनीनामेवेति** । नादाभिव्यङ्ग्य इत्यादिरूपकैयटाद्युक्तेरिति भावः । **इत्युक्तमिति** । वर्णेष्वपि व्यञ्जकत्वस्य विकल्पमुखेन निराकरणार्थमुपक्षेपोह्य कृत इति भावः । सामान्यविशेषतत्त्वानामित्यत्र तत्त्वपदमनारोपितपरम् । तथाच सामान्यविशेषधर्माणामनारोपितानामिति सिध्यति । **निरंशस्येति** । चशब्दोऽध्याहार्यः । **तद्वर्णानामिति** । कर्मणि षष्ठीयम् । वर्णाभिव्यञ्जकत्वं ध्वनिष्विति वर्णा व्यङ्ग्या ध्वनयो व्यञ्जका इति यावत् । एवं स्फोटस्येत्यत्रापि कर्मणि षष्ठी । आनन्दैकरसे ब्रह्मणीत्यतःपरमशेषमिदं जगदसदप्यनाद्यनिर्वाच्याविद्यावशात्सदिवाभाति । तथा अनवयवनित्ये स्फोटाख्ये शब्दब्रह्मण्यनाद्यविद्ययाऽसन्नपि वर्णपदविभागः प्रतीयत इति पाठः । आनन्दैकरसे ब्रह्मणीत्यतःपरमशेषमित्यादेरभावोऽसदपीत्यादि ग्रन्थभावश्च लेखकेन शोधापरिज्ञानेन लिखनादिति ज्ञेयम् । **सिद्धान्तरहस्यमिति** । ................. अत्रेदमुक्तं .............. । **मतद्वयमिति** । पदस्फोटमिति वाक्यस्फोटमतं चेति मतद्वयमित्यर्थः । मतद्वयदूषणस्य समानरूपत्वाभावः । शशविषाणादिति तत्त्वमित्यादिकस्य प्राप्तत्व-वर्णनमसङ्गतमित्यतस्तदुक्तिव्याजं फलमुक्तम् **अर्थान्तरन्यासेनेत्यादि** । अर्थान्तरोक्तिव्याजेनेत्यर्थः ।

**स०व्र०— एकार्थावलम्बिनीति** । नैकेषु वर्णेष्वेकं पदमिति तथाऽनेकेषु पदेष्वेकं वाक्यमिति च प्रतीतिस्तदतिरिक्तमेकमर्थमवगाहत इत्यर्थः । **आद्यस्तु प्रतीतौ बहुमानवता नाङ्गीकर्तुमुचित** इति । एतावत्पदसमूहात्मकमिदमेकं वाक्यं एतावद्वर्णसमूहात्मकमिदमेकं पदमिति पदविभागस्य वर्णविभागस्य च अनुभवसिद्धत्वादिति भावः । ननु न वर्णादयस्तात्विकाः येनारम्भका अभिव्यञ्जका वा इति विकल्पदोषप्रसक्तिः । किन्त्वविद्यमानास्तत्रारोपिता एव प्रतिभान्तीत्याशयेन शङ्कते **अथ वर्णादयः तत्रेति** । **ऐक्यप्रतीतिबलादिति** । एकं पदमित्याद्येकप्रतीतिबलादित्यर्थः ।

**विठ्ठ०— अर्थापत्त्येति** । वाक्येन प्रतीतोऽर्थः स्फोटेन विनानुपपद्यमानस्तं गमयतीत्यर्थापत्त्येत्यर्थः । कथं मानाभावः अनेकेषु वर्णेष्वेकं पदमित्यनेकेषु पदेष्वेकं वाक्यमिति प्रत्यक्षप्रतीतिरस्ति तथा शब्दादर्थं प्रत्येमीति शब्दादित्येकवचनव्यवहारानुसारेण मूलभूतशब्दस्यैकत्वावलम्बिनी अनुव्यवसायरूपप्रत्यक्षप्रतीतिस्फोटेऽस्तीति शङ्कते **नन्वेकमिति** । प्रतीतौ बहुमानवतेति एतावद्वर्णसमूहात्मकमिदमेकं पदम् । एतावत्पदसमुदायात्मकमिदं वाक्यमिति वर्णपदविभागस्यानुभवसिद्धत्वादिति भावः । **पूर्ववद्दोष इति** । **प्रत्येकमित्युक्ते** द्वितीयवर्णादिवैयर्थ्यं उत्तरवर्णाद्युच्चारणकाल एव पूर्ववर्णपदानां नादान्नापि समुदाय इति दोष इत्यर्थः । **नन्वेतद्दोषं** पूर्वपूर्ववर्णानुभवजनित-संस्कारसचिवेनान्त्यवर्णादिनानुभूयमानेन स्फोटो व्यज्यत इति परिहरिष्यामीत्यत आह **यस्त्वत्रेति** । विस्फोट एव वैशद्यावैशद्ये कल्प्येते स्फोटविषयकज्ञाने वेति विकल्पं मनसि निधाय क्रमेण दूषयति **एकरसेति** । ननु न वर्णादय-स्तात्त्विकाः येनारम्भकाभिव्यञ्जका वेति विकल्पदोषप्रसक्तिः किन्त्वविद्यमानास्तत्रारोपिता एव प्रतिभान्तीत्याशयेन शङ्कते **अथ वर्णादय इति** । **समयग्राहकप्रमाणादिति** । घटादिपदमेतद्वाचकमिति वाच्यवाचकसंबन्धग्रहण-प्रमाणादेवेत्यर्थः ।

**चषकः— अनूदितं मतं प्रतिविधत्ते अत्र ब्रूम इति** । **एकरस इति** निरवयव इत्यर्थः ।

**६६६ सु०— एकार्थप्रत्यायनं च नानुपपन्नम् एकस्मृतिसमारूढानां तदुपपत्तेः । अनुभवक्रमोपहितानामेव तेषां स्मृत्याऽवगाहनान्न क्रमव्युत्क्रमयोरविशेषापत्तिः । अत एवार्थापत्तिरपि परास्ता वेदितव्या । अन्यथोपपत्तेरुक्तत्वात् ।**

**अप्रतीतस्य तु प्रत्यायकत्वेऽतिप्रसङ्गः ।**

**तस्मात्सुष्ठूक्तं गौरवं कल्पनेऽन्यथेति ।**

**परि०—** प्रागुक्तदोषान्निराह **एकार्थेत्यादिना** । **अर्थापत्तिरपीति** । ऐक्यप्रतीत्यन्यथानुपपत्तिरूपार्थापत्तिरपि । अत एवेत्युक्तं व्यनक्ति **अन्यथेति** । ऐक्यप्रत्ययस्यौपाधिकत्वोपपत्तेरित्युक्तत्वादित्यर्थः । यद्वा पदार्थवाक्यार्थप्रतीत्यन्यथानुपपत्तिरूपार्थापत्तेरपि । शक्तिश्चैवान्विते स्वार्थ इति त्रिपाद्यामन्विताभिधानकथनेन अन्यथोपपत्तेरुक्तत्वादित्यर्थः । किं वा स्वरूपेणेति प्राग्विकल्पितद्वितीयपक्षे दोषमाह **अप्रतीतस्येति** । स्फोटस्येति योज्यम् । सर्वदार्थप्रतीतिरूपातिप्रसङ्ग इत्यर्थः ।

**यादु०—** तदा क्रमो न स्यादित्युक्तदोषं परिहरति **अनुभवक्रमेति** । अनुभवक्रमोपहितक्रमाणामेवेत्यर्थः । अनुभवानां क्रमिकत्वात्तदुपाधिकः क्रमो वर्णेषु प्रतिभासत इति भावः । तेनानुभवक्रमस्य कथं वर्णधर्मत्वेन भानमिति शङ्काऽनवकाशः । न च क्रमः पूर्वमननुभूतः कथं स्मृतिविषय इति वाच्यम् । क्रमोत्पन्नानुभवाहितक्रमिकसंस्कारबलादननुभूतस्यापि वर्णक्रमस्य प्रतिभासाङ्गीकारात् । न ह्यनुभूतमेव स्मर्यत इति नियमः । तथा सत्यतीतत्वस्यापि स्मृतावप्रतिभासप्रसङ्गात् । यद्यपि वर्णेषु न दैशिकः कालिको वा क्रमः संभवति । व्याप्तत्वान्नित्यत्वाच्च । नापि वस्तुनिबन्धनः । एकदैव जारा राजेति प्रयोगे जकारस्य पौर्वापर्यायोगात् । नापि बुद्ध्यादिगत एव क्रमो वर्णेष्ववभासत इति युक्तम् । वर्णपदादिगतस्य क्रमस्य श्रावणत्वानुभवाद् बुद्धिक्रमस्य चातथात्वात् । न चारोपित एव वर्णेषु क्रम इति युक्तम् । पदवाक्यादेरत्यन्तासत्त्वापत्तेः । तथाऽपि बुद्धिक्रमजन्यो वर्णेष्वौपाधिकः कश्चन क्रमोऽस्त्येव । क्रमस्तु वर्णधर्म इति स्पष्टं पूर्वोक्तत्वात् । न च स कीदृश इति वाच्यम् । यथा कालनिबन्धनक्रमापेक्षया देशनिबन्धनस्तत्तद्वस्तुगतः क्रमो विलक्षणोऽनुभूयमानो विशिष्य वक्तुमशक्योऽपि कैश्चिदङ्गीक्रियते तथा बुद्धिक्रमनिबन्धनो वर्णपदादिगतानुपूर्वीरूपः श्रोत्रेणानुभूयमानो वक्तुमशक्योऽप्यङ्गीकार्यः । न हि सर्वत्र क्रमशब्द एकार्थक इति प्रतिभाति । अन्ये तु तत्तद्वर्णादिविषयकबुद्धिक्रम एव वर्णपदादिक्रमो नातिरिक्तः । न चैवं क्रमस्य श्रावणत्वासंभवः । साक्ष्युपनीतस्यैव तस्य तत्र भानाङ्गीकारादित्याहुः । **अर्थापत्तिरपीति** । अर्थप्रत्ययान्यथाऽनुपपत्तिरित्यर्थः । **अन्यथोपपत्तेरिति** । अनुभवक्रमोपहितक्रमवद्भ्य एकस्मृतिसमारूढेभ्यो वर्णादिभ्योऽर्थप्रत्ययोपपत्तेरुक्तत्वादित्यर्थः । किंवा स्वरूपेणेति प्राग्विकल्पितं द्वितीयपक्षनूद्य दूषयति **अप्रतीतस्य त्विति** । अतिप्रसङ्गो बधिरस्यापि शाब्दबोधप्रसङ्गलक्षणः ।





**वं०प०**— ननु शब्दादर्थं प्रत्येमीत्येकार्थप्रत्यायकत्वान्यथाऽनुपपत्त्या स्फोटः सिद्धः । तदभावे एकार्थप्रत्यायनस्यैवानुपपत्तेरित्यत आह **एकार्थप्रत्यायनं चेति** । येन तदन्यथाऽनुपपत्त्या स्फोटः कल्प्येतेत्याशयः । तथाच स्फोटाभावेऽप्यस्मन्मते नानुपपन्नं किं तूपपन्नमेवेत्यर्थः । तदुपपादयति **एकस्मृतीति** । समारूढानाम् । तदुपपत्तेरेकार्थप्रत्यायकत्वोपपत्तेः । नन्वेकस्मृतिविषयत्वे तद्विषयकस्मृतिरूपायां बुद्धौ क्रमाभावेन वनं नवमित्यादौ वर्णानां क्रमव्युत्क्रमयोरर्थविशेषबोधायोगेनाविशेषेणैकार्थबोध एव स्यादित्यत आह **अनुभवक्रमोपहितानामिति** । तदुपहितक्रमवतामित्यर्थः । **न क्रमव्युत्क्रमयोरिति** । स्मृतौ क्रमाभावेऽपि तज्जनकपूर्वानुभवे वर्णेषु क्रमस्योत्पन्नत्वादिति भावः ।

**आनन्दः**— **अनुभवक्रमोपहितानामिति** । नन्वत्र स्मृतिः किं केवलवर्णविषयिणी वा क्रमविशिष्टतद्विषयिणी वा । नाद्यः तथा सति क्रमव्युत्क्रमयोरविशेषप्रसङ्गात् । न द्वितीयः क्रमस्यानुभवाविषयत्वेन स्मृतेस्तद्विशिष्टवर्णविषयत्वासंभवात् । तयोः समानविषयत्वादिति । मैवम् । अनुभवस्य यः क्रमः आद्यज्ञानानन्तरज्ञानविषयत्वमित्येवंरूपः तस्यानुमानादिरूपमानान्तरेण साक्षिणा वा उपनये सति तत्सहकारेण क्रमविशिष्टवर्णविषयत्वोपपत्तेः । यद्वा क्रमो वर्णधर्म एव तथाच स्मृत्या क्रमरूपधर्मविशिष्टवर्णरूपधर्मिविषयत्वोपपत्तेरिति स न पदार्थान्तरमिति । अप्रतीतस्फोटः पदार्थवाक्यार्थप्रत्यायक इति द्वितीयं दूषयति **अप्रतीतस्येति** । तदर्थप्रतीतिप्रसङ्ग इति भावः ।

**कं०रा०**— क्रमस्य चानङ्गत्वे नववनं राजाजारेत्यावर्थविशेषप्रत्ययानुपपत्तिरित्यत आह **अनुभवेति** । पूर्वं वर्णानां क्रमेणानुभवात्तत्क्रमोपहितानामेव तेषां स्मृत्यावगाहनेन क्रमस्याङ्गत्वाङ्गीकाराद्राजाजारेत्यादौ क्रमव्युत्क्रमयोरविशेषोपपत्तिर्नेत्यर्थः । किमयं स्फोटः स्वयं प्रतीतो वाक्यार्थपदार्थप्रत्यायक उताप्रतीत इति प्राग्विकल्पितमप्रतीतस्य स्फोटस्य प्रत्यायकत्वमिति द्वितीयपक्षं दूषयति **अप्रतीतस्य त्विति** । अप्रतीतस्य स्फोटस्यार्थप्रत्यायकत्वे तस्य सदा सत्त्वात्सर्वदाऽर्थप्रतीतिप्रसङ्ग इत्यर्थः ।

**श्रीनिधि०**— **अनुभवक्रमोपहितानामिति** । वर्णेष्वनुभूयमानेषु अनुभवक्रमस्तावत् साक्षिणा गृह्यते स च क्रमः वर्णेषु स्मर्यमाणेषु उपनीतो भासत इति भावः ।

**वा०चं०**— यद्यपि पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतान्त्यवर्णविषयकश्रोत्रजन्यसदसदनेकवर्णविषयकैकानुभव एवार्थप्रत्यायनाय पद्धत्युक्तरीत्या वक्तुं युक्तः । तथाऽपि मौनिश्लोकलिप्यादिदर्शनादिस्थले समूहालम्बनस्मृतेरेव वक्तव्यतया सर्ववर्णविषयकैकानुभवस्थले च तस्य शक्तिस्मृतिव्यवहिततयाऽर्थप्रत्यायनाव्यवहितसमूहालम्बनस्मृतेरेव वक्तव्यतया तदुपारूढताभ्युपगमेनैव परिहारमाह **एकस्मृतीति** । वर्णानामेकबुद्ध्यारोहाङ्गीकारे क्रमस्यानङ्गत्वमुक्तं स्यात् । तथा च राजा जारेत्यादावर्थभेदो न प्रतीयेतेत्युक्तदोष इत्यत आह **अनुभवेति** । न चानुभवक्रमरूपोपाधेः पूर्वमननुभवान्न स्मृतिविषयत्वमिति वाच्यम् । क्रमिकतत्तद्वर्णानुभवानन्तरं





क्रमविशिष्टानुभवानामेव साक्षिणाऽनुभवोपपत्तेः । केचित्तु स्मृतिरनेकवर्णमात्रविषयिणी वर्णेषु च न स्वतः क्रमः किन्तु क्रमिकानुभवविषयत्वमेव क्रमः । तथा च वर्णस्मृतिवत्तेषु क्रमिकानुभवविषयत्वमपि स्वरूपेणार्थप्रत्यायने निमित्तम् । न च निमित्तकारणस्यापि ज्ञानं कारणमिति न तदनुभवापेक्षा । वस्तुतः क्रमिकानुभवविषयवर्णानां स्मृतेरर्थप्रत्यायनाङ्गत्वाभ्युपगमात् । न च क्रमव्युत्क्रमयोरविशेषोऽपीत्याहुः । तन्न उक्तरीत्या वर्णानामिव तन्निष्ठक्रमिकानुभवविषयत्वस्यापि साक्ष्यनुभूतस्य स्मृतिविषयत्वोपपत्तेः । स्वरूपेण स्फोटोऽर्थप्रत्यायक इति द्वितीयं निराकरोति **अप्रतीतस्येति** ।

**वा०र०— तथापि मौनीति** । तर्कताण्डवानुसारेण ..................... । राजा जारेत्यादावित्यादिपदेन सरो रसः वनं नवमिति मूलोक्तस्येव नदीदीनरमामारेत्यादेः सङ्ग्रहः । केचित्तु स्मृतिरनेकेति पक्षः । .......... । पूर्ववर्णसंस्कारोऽन्यवर्णमात्रस्मरणं चेति चशब्दयुक्तः पाठः । अत्रान्त्यवर्णस्मरणोपादानेन संस्कार एवेत्येवकारो मूलस्थोऽनभिमतव्यावर्तक इति सूचितम् । अन्यथैवकारविरोधापत्तेः । मात्रपदं च पूर्ववर्णस्मृतिव्यावृत्त्यर्थः । सर्ववर्णेति वक्ष्यमाणत्वात् । न तु संबन्धस्मरणस्यापि । तदङ्गीकारेण तच्छङ्काप्रवृत्तेः । अत एव तदभावापादनेनोत्तरवाक्ये तद्दूषणमिति ज्ञेयम् ।

**स०व्र०—** तदा क्रमो न स्यादित्युक्तं दोषं परिहरति **अनुभवक्रमोपहितानामेवेति** । अनुभवक्रमोपहितक्रमानामेवेत्यर्थः । अनुभवक्रमजन्यो वर्णक्रमः प्रतिभासत इति भावः । तेनानुभवक्रमस्य कथं वर्णधर्मत्वेन भानमिति शङ्काऽनवकाशः । ननु क्रमः पूर्वमननुभूतः कथं स्मृत्या विषयीक्रियत इति चेत् । क्रमोत्पन्नानुभवाहितक्रमिकसंस्कारबलादननुभूतवर्णक्रमस्यापि प्रतिभासाङ्गीकारात् । न ह्यनुभूतं एव स्मर्यत इति नियमस्तथा सत्यतीतत्वस्यापि स्मृतावप्रतिभासप्रसङ्गादिति । **अर्थापत्तिरपीति** । अर्थप्रत्ययान्यथानुपपत्तिरित्यर्थः । **अन्यथोपपत्तेरिति** । एकस्मृतिसमारूढेभ्यो वर्णादिभ्योऽर्थप्रत्ययोपपत्तेरुक्तत्वादित्यर्थः । **किं वा स्वरूपेणेति** । प्राग्विकल्पितं द्वितीयपक्षमनूद्य दूषयति **अप्रतीतस्य त्विति** । अतिप्रसङ्गो बधिरस्यापि शाब्दबोधलक्षणः ।

**विठ्ठ०—** वर्णादीनां समुदायासंभवान्नैकार्थप्रत्यायकत्वमिति दोषं परिहरति **एकार्थेति** । नन्वेकस्मृतिसमारूढत्वे क्रमासंभवात्तस्य चानङ्गत्वे सरोरस इत्यादिक्रमविपर्यासेनार्थविशेषो न स्यादित्यत आह **अनुभवक्रमेति** । स्मृतौ क्रमाभावेऽप्यनुभवानां क्रमिकत्वात्तदुपाधिकः क्रमो वर्णेषु स्मृतौ प्रतिभासते तथाचानुभवोपहितक्रमविशिष्टानां वर्णानामेकस्मृत्यावगाहनान्नोक्तदोष इति भावः । न च वाच्यं पूर्वं क्रमविषयकानुभवस्याजातत्वात्स्मृतौ कथं क्रमप्रतिभास इति क्रमेणोत्पन्नैराहितो यः संस्कारस्तद्बलादननुभूतस्यापि वर्णक्रमस्य प्रतिभासाङ्गीकारात् न ह्यनुभूतमेव स्मर्यत इति नियमोऽस्ति । तथा सति स्मृतावतीतत्वप्रतिभासो न स्यात् । तस्मादननुभूतोऽप्यनुभूतार्थगतप्रकारविशेषसहकारिसामर्थ्यात्स्मर्यत इति वक्तव्यमिति न दोष इति । **अर्थापत्तिरपीति** । पदार्थवाक्यार्थप्रतिपत्त्यन्यथानुपपत्तिलक्षणार्थापत्तिरपीत्यर्थः । **अन्यथोपपत्तेरिति** । एकस्मृतिसमारूढेभ्यो वर्णादिभ्योऽर्थप्रत्ययोपपत्तेरुक्तत्वादित्यर्थः । किं स्वरूपेणेति प्राग्विकल्पितं द्वितीयं पक्षमनूद्य दूषयति **अप्रतीतत्वस्य त्विति** । **अतिप्रसङ्गः** बधिरादेरपि प्रतीतिप्रसङ्गः ।





मीमांसकैकदेशिमतदूषणम्—

**६६७ सु०— अन्ये त्वाहुः 'स्मर्यमाणा वर्णमालैव वाक्यार्थबोधजननी'ति ॥ तदप्यसत् । सा हि व्युत्पत्तिसहाया वा तथा स्यादन्यथा वा । अन्यथा चेदतिप्रसङ्गः । आद्ये पदतदर्थावबोधस्याश्रितत्वात् किं तयेति गौरवमेव ।**

**परि०— अन्यथा चेदतिप्रसङ्ग इति** । अव्युत्पन्नस्याप्यर्थबोधप्रसङ्ग इत्यर्थः ।

**यादु०—** मीमांसकैकदेशिनां मतमनूद्य दूषयति **अन्ये त्वाहुरित्यादिना** । **पदतदर्थावबोधस्येति** । अन्यथा व्युत्पत्तिरेव न संभवतीति भावः ।

**वं०प०— सा** वर्णमाला । **तथा** वाक्यार्थबोधजननी । **पदतदर्थावबोधस्येति** । पदानां तदर्थानां चानवगमे वर्णमालासहायभूताया वाच्यवाचकभावसंबन्धरूपाया व्युत्पत्तेरेवायोगेन केवलायाः स्मर्यमाणवर्णमालाया वाक्यार्थबोधजनकत्वायोगात्तदर्थं व्युत्पत्तिरूपसहायाङ्गीकारे पदतदर्थावबोधस्याश्रितत्वादन्वितस्यैव पदार्थत्वेन वाक्यार्थावबोधस्यावबुद्धत्वात्किं तया स्मर्यमाणवर्णमालयेत्यर्थः ।

**आनन्दः— सा हीति** । वर्णमालेत्यर्थः । **अतिप्रसङ्ग इति** । अव्युत्पन्नस्यापि बोधः स्यादित्यतिप्रसङ्ग इत्यर्थः । **पदतदर्थावबोधस्येति** । पदावबोधस्य पदार्थावबोधस्य चेत्यर्थः । पूर्ववर्णस्मरणेन शक्तिरूपसंबन्धस्मरणेन वेत्यर्थः ।

**कं०रा०—** मीमांसकैकदेशिनां मतमनूद्य दूषयति **अन्ये त्वाहुरिति** ।

**श्रीनिधि०— व्युत्पत्तिर्हि** नैकैकवर्णमात्रे किन्तु तत्समूहे । तदेव च पदमिति । व्युत्पत्त्यपेक्षायां पदात् तदर्थावबोध आश्रित इति भावः । **पदतदर्थावबोधस्येति** । तस्यार्थावबोधः तदर्थावबोधः । पदात्तदर्थावबोधः पदतदर्थावबोधः ।

**वा०चं०—** एवं वैयाकरणाभिमतं पक्षं निराकृत्य मीमांसकैकदेशिमतं निराकर्तुमनुवदति **अन्ये त्विति** । **अन्यथा चेदिति** । व्युत्पत्त्यनपेक्षायां पदतदर्थानुसन्धानाभावेन संबन्धिरूपपदार्थज्ञानाभावेऽपि तत्संसर्गरूपवाक्यार्थज्ञानाभ्युपगमेऽतिप्रसङ्ग इत्यर्थः । यद्वा व्युत्पन्नवदव्युत्पन्नस्यापि वर्णमालास्मरणाविशेषाद्वाक्यार्थबोधप्रसङ्ग इत्यर्थः । **आद्य इति** । तत्तत्पुरुषप्रयुक्ततत्तदभिप्रायानुसारिवाक्यानामानन्त्याद्वाक्यार्थस्यापूर्वत्वाच्च तत्तद्वाक्यस्थवर्णमालाया वाक्यार्थेषु व्युत्पत्तेरसंभवेन व्युत्पत्त्यपेक्षां वदता तन्मालान्तर्गततत्तद्वर्णेषु पदत्वानुसन्धानस्य ततस्तत्तत्पदार्थानुसन्धानस्यावश्याश्रयणीयतया तत एव वाक्यार्थबोधोपपत्तौ वर्णमालायास्तद्बोधकत्वकल्पने गौरवमित्याशयः ।





**विठ्ठ०— अन्यथा चेदिति** । व्युत्पत्त्यसहाया वर्णमाला अर्थबोधजननीत्यङ्गीकारे अव्युत्पन्नस्याप्यर्थबोधप्रसङ्ग इत्यर्थः । **आद्य इति** । वाचकत्ववाच्यत्वप्रकारकपदपदार्थज्ञानस्यैव व्युत्पत्तित्वादित्यर्थः ।

**चषकः**— मीमांसकैकदेशिमतं प्रत्याचिख्यासुरनुवदति **अन्ये त्विति** ।

**६६८ सु०— किञ्च क्रमोपेतानां द्वित्राणां पञ्चषाणां वा वर्णानां स्मरणमुपपद्यते । महावाक्यस्थानां शतसहस्रसङ्ख्यानां तु स्मरणं दुःश(शं)कमेव । किमभ्यासस्य दुष्करमिति चेन्न । गत्यन्तराभावे त्वेवमेतत् । सति तु सुखोपाये न प्रयासगौरवकल्पना युक्तेति । एतदप्युक्तं गौरवं कल्पनेऽन्यथेति ॥**

**परि०— सति तु सुखोपाय इति** । अन्विते शक्त्युपेतपदरूपोपाये सतीत्यर्थः ।

**वं०प०— सुखोपाये (लघूपाये)** पदेनैवान्वयबोधरूपे उपाये ।

**वा०चं०**— वाक्यस्थवर्णमालास्मरणमभ्युपेत्य दूषणमुक्तम् । वस्तुतस्तु तदेवाशक्यमित्याह **किञ्चेति** ।

**विठ्ठ०— सति तु सुखोपाय इति** । अन्वितार्थे शक्तपदरूपोपाये सतीत्यर्थः ।

जरन्नैयायिकमतनिराकरणम्—

**६६९ सु०— अपरे तु वाक्यान्त्यवर्णं वाक्यार्थस्य प्रतिपादकमाचक्षते ॥ तदप्ययुक्तम् । स हि केवलो वा तथा स्यात्, पूर्ववर्णसंबन्धस्मरणेनानुगृहीतो वा ॥ आद्ये पूर्ववर्णोच्चारणवैयर्थ्यम्, अतिप्रसङ्गश्च ॥ द्वितीयेऽनुभूयमानः, स्मर्यमाणो वा । नाद्यः; संबन्धस्मृतिव्यवहितस्य अनुभवस्य तदाऽनवस्थानात् । द्वितीये तु किमनेन प्रयत्नगौरवेण, स्मृतिस्था वर्णाः पदत्वेनानुसंहिताः वाक्यार्थमवगमयन्तीत्येव वक्तव्यम् ॥ तदिदमुक्तम् गौरवं कल्पनेऽन्यथेति ॥ पूर्ववर्णसंस्कार एवोपयोगी न स्मृतिरिति चेन्न । तथा सति पदानुसन्धानासंभवेन संबन्धस्य स्मरणाभावप्रसङ्गादिति ॥**

**यादु०**— जरन्नैयायिकमतमनूद्य निराकरोति **अपरे त्वित्यादिना** । **पूर्ववर्णस्मरणसंबन्धेनेति** । पदत्वानुसन्धानेनेत्यर्थः । **पूर्ववर्णसंस्कार एवेति** । तथा च स्मृतिस्था वर्णा इत्येतन्न युक्तमिति भावः । **संबन्धस्मरणस्येति** । शक्तिस्मरणस्येत्यर्थः ।



**वं०प०— पूर्ववर्णसंबन्धस्मरणेनेति** । पूर्ववर्णानां पदत्वानुसन्धानानन्तरं तच्छक्तिस्मरणेनेत्यर्थः । **अतिप्रसङ्ग इति** । अन्त्यवर्णश्रोतृणां सर्वेषामपि वाक्यार्थबोधः स्यादित्यर्थः । **अनुभूयमान इत्यादि** । वाक्यान्त्यवर्णः स्वयमनुभूयमानः पूर्ववर्णसंबन्धस्मरणेनानुगृहीतः सन् वाक्यार्थप्रतिपादक इत्यर्थः । **संबन्धस्मृतीति** । शक्तिस्मरणेत्यर्थः । **अनवस्थानादिति** । अन्त्यवर्णानुभवानन्तरं पूर्वानुभूतवर्णस्मरणेन भाव्यम् । तेन तेषु पदत्वानुसन्धानेन तस्य पदस्य शक्तिस्मरणेन भवितव्यम् । तथाच वर्णस्मरणपदत्वानुसन्धानतच्छक्तिस्मरणैरन्त्यवर्णानुभवस्य नष्टत्वेन वाक्यार्थबोधसमयेऽन्त्यवर्णानुभवानवस्थानान्नानुभूयमानोऽन्त्यवर्णो वाक्यार्थप्रतिपादक इत्यर्थः । **प्रयत्नगौरवेणेति** । पूर्ववर्णसंबन्धस्मरणानुगृहीतान्त्यवर्णस्मरणस्य वाक्यार्थबोधकत्वाङ्गीकारे गौरवमित्यर्थः । तर्हि लाघवं कथमित्यत आह **स्मृतिस्था इति** । अनुभवक्रमोपहितक्रमवन्त इति शेषः । **संस्कार एवेति**। तथा च स्मृतिस्था वर्णा इत्युक्तमसदिति भावः। **पदेति**। पदत्वेत्यर्थः। **संबन्धः** शक्तिः।

**आनन्दः— अतिप्रसङ्गश्चेति** । अव्युत्पन्नस्यापि बोधः स्यादित्यर्थः । तथाच वाक्यार्थबोध एव न स्यादिति भावः ।

**कं०रा०—** जरन्नैयायिकमतमनूद्य निराकरोति **अपरे त्वित्यादिना । पूर्वेति** । पूर्ववर्णानां संबन्धस्य च स्मरणेनेत्यर्थः । **अनुभवस्येति** । अन्त्यवर्णानुभवस्य तदनन्तरभाविपूर्ववर्णस्मरणोत्तरकालीनसंबद्धस्मृतिव्यवहितत्वेन वाक्यार्थपूर्वप्रतीतिकालेऽनवस्थानान्नानुभूयमानस्यान्त्यवर्णस्य तत्प्रतिपादकत्वं संभवतीति भावः । ननु पूर्ववर्णविषयकसंस्कार एवोपयोगी न तु तत्स्मृतिः । तथा चान्त्यवर्णानुभवानन्तरभाविसंबन्धस्मरणक्षणे वाक्यार्थप्रतीतिपूर्वक्षणरूपेऽन्त्यवर्णानुभवस्यावस्थानादनुभूयमानस्यान्त्यवर्णस्य वाक्यार्थप्रतिपादकत्वं संभवतीत्याशयेन शङ्कते **पूर्ववर्णेति**।

**श्रीनिधि०—** ननु भवत्पक्षेऽपि महावाक्यार्थानुभवः कथं अवान्तरवाक्यानां एकार्थप्रत्यायकत्वेन एकवाक्यत्वं वक्तव्यम् । एकार्थप्रत्यायकत्वं च एकस्मृतिसमारूढानामिति भवद्भिरेवोक्तत्वेन तावत् वाक्यस्मृतेः दुःशकत्वात् । यस्त्वत्र प्रतीकारः स ममापि तुल्य इति चेन्न । अवान्तरवाक्य एव एकस्मृतिसमारूढानां एकार्थप्रत्यायकत्वं महावाक्ये तु पूर्वपूर्ववाक्यानुभवजनितसंस्कारसहकृतान्यवाक्यार्थानुभवः वाक्यार्थप्रत्यायकः । सर्वं च एतद् अनुभवसिद्धमिति । अवान्तरवाक्येऽपि न सर्वत्र पुनर्वर्णस्मृतिनियमः । किन्तु यत्र विमर्शानन्तरमर्थप्रतीतिस्तत्रैव । तत्रापि न वा यत् स्मृतिः । यत्र झटित्येवार्थप्रतीतिस्तत्रानुभव एवेति निष्कर्षो द्रष्टव्यः । **इत्येव वक्तव्यमिति** । अस्मत् पक्षे अन्त्यवर्णस्यानुभव एव न स्मृतिः त्वत्पक्षे तु सर्वेषामपि वर्णानां स्मृतिरिति प्रयत्नगौरवमिति भावः । ननु मया पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतान्यवर्णस्मृतिर्वाक्यार्थबोधिकेत्युच्यते । भवद्भिस्तु पूर्वपूर्ववर्णानां स्मृतिः अन्यवर्णस्यानुभवश्चेति । एवं च पूर्ववर्णानां पुनः स्मृत्यङ्गीकारे प्रयत्नगौरवं तुल्यमित्याशङ्क्य समाधत्ते **पूर्ववर्णसंस्कार एवेति** ।

**वा०चं०**— जरन्नैयायिकमतं निराकर्तुमनुवदति **अपरे त्विति** । **अनुगृहीत इति** । सहकृत इत्यर्थः । **अतिप्रसङ्गश्चेति** । अन्त्यवर्णश्रवणमात्रेण वाक्यार्थबोधप्रसङ्ग इत्यर्थः । **तदा** वाक्यार्थबोधसमये । तत्तद्वर्णानुभवजनितसंस्कारैस्तत्स्मरणं ततः पदानुसन्धानं ततः पूर्ववर्णसंबन्धस्मरणमेवं पूर्वपूर्वपदानुभवजनितसंस्कारैस्तत्पदस्मरणं ततः पूर्वपदसंबन्धस्मरणं ततः पदार्थस्मृतिरित्याद्यनेककल्पनाया एकस्मृत्युपारूढानां सर्ववर्णानां पदत्वेनानुसहितानां वाक्यार्थबोधकत्वकल्पनापेक्षयाऽतिगुरुत्वमित्याह **किमनेनेति** । ननु पूर्ववर्णसंस्कारोऽन्त्यवर्णमात्रस्मरणं वाक्यार्थबोधोपयोगितयाऽभ्युपगम्यतेऽतो न गौरवमिति शङ्कते **पूर्ववर्णेति** । सर्ववर्णविषयैकस्मृत्यनभ्युपगमे संस्कारस्य स्मृतिमात्रजनकतया पूर्ववर्णसंस्कारमात्रेण तेषु पदत्वानुसन्धानासंभवेन पूर्ववर्णसंबन्धस्मरणरूपस्य त्वदुक्तस्यान्त्यवर्णसहकारिणोऽप्यभावप्रसङ्ग इत्याह **तथा सतीति** । उपलक्षणं चैतत् । उक्तरीत्या पूर्ववर्णसंस्कारस्य वैयर्थ्यात् तदर्थस्य पूर्ववर्णोच्चारणस्य वैयर्थ्यमित्यपि द्रष्टव्यम् ।

**विठ्ठ०**— **पूर्ववर्णसंबन्धस्मरणेति** । पदत्वानुसन्धानेनेति यावत् । **अतिप्रसङ्ग इति** । अन्त्यवर्णमात्रोच्चारणेऽपि समग्रवाक्यार्थप्रतीतिप्रसङ्ग इत्यर्थः । यद्वा एकस्यैव वर्णस्य बहुवाक्येष्वप्यन्तिमत्वसंभवेनैकवर्णोच्चारणेनैकवाक्यार्थप्रतीतिप्रसङ्ग इत्यर्थः । **संबन्धस्मृतीति** । अन्त्यवर्णानुभवानन्तरं खलु पूर्ववर्णस्मरणं भवति । तथा च ज्ञानयौगपद्यासंभवेन पूर्ववर्णस्मरणकालेऽन्त्यवर्णानुभवापगमेन पूर्ववर्णसंबन्धस्मरणानुगृहीतोऽन्त्यवर्णानुभवो वाक्यार्थप्रतिपत्तिजनक इत्यनुपपन्नमित्यर्थः । पूर्ववर्णसंबन्धस्मरणेनानुगृहीतमन्त्यवर्णस्मरणं वाक्यार्थप्रत्ययजनकमित्यङ्गीकारे किमनेन स्मरणद्वयकल्पनेन कल्पनागौरवापत्तेः किन्तु एकस्मृतिसमारूढा एव वर्णाः पदत्वेन वाक्यार्थप्रत्यायका इति किं नोच्यत इति भावेनाह **द्वितीये त्विति** । अत्रैकस्मृतिस्था वर्णाः पदत्वेनानुसंहिता इत्यभ्युपगम्योक्तम् । वस्तुतस्तु पूर्ववर्णानुभवजनितसंस्कारादिसहकृतेन श्रोत्रेणान्त्यवर्णसंबन्धेन सर्ववर्णविषयिण्येका पदबुद्धिरुपजायते । आकाङ्क्षितसन्निहितयोग्येतरान्वितस्वार्थाभिधानसमर्थानि पदान्येव वाक्यार्थमवगमयन्तीति पदाभिहितपदार्थान्वयस्यैव वाक्यार्थत्वात् उक्तं च पद्धतौ पूर्ववर्णानुभवजनितसंस्कारसहितं वाच्यवाचकभावसंबन्धग्रहणसंस्कारानुगृहीतमन्त्यवर्णसन्निकृष्टं श्रोत्रमनेकेष्वपि वर्णेष्वेकां पदबुद्धिमुपजनयति । तथा पूर्वपूर्वपदानुभवजनितसंस्कारसहकृतमन्त्यपदविषयं श्रोत्रमनेकेषु पदेष्वेकवाक्यबुद्धिमाकाङ्क्षानुसारेण जनयति । तेन वर्णानां च सहानवस्थितप्रतीतानामपि समुदायो युज्यत इति पदान्येवान्वितस्वार्थाभिधायिनीति च । ननु स्यादेतत् गौरवं यदि पूर्ववर्णस्मृतिरन्त्यवर्णस्मृतेरनुग्राहकेति स्मृतिद्वयं कल्पयामः । किन्तु पूर्ववर्णसंस्कार एवानुग्राहक इत्याशयेन शङ्कते **पूर्ववर्णेति** । **संबन्धस्मरणस्येति** । प्रतिपाद्यप्रतिपादकभावरूपसंबन्धस्मरणस्येत्यर्थः ।

**चषकः**— प्राचीननैयायिकमतमपाचिकीर्षुरनुवदति **अपरे त्विति** ।





वैशेषिकपक्षनिराकरणम्—

**६७० सु०— केचिदाहुः— यो यानि पदानि प्रयुंक्ते स तत्पदार्थसंसर्गप्रतिपादनाभिप्रायवानिति सामान्येन स्वात्मनि नियमे प्रतीते पश्चात्पदसमूहप्रयोगाद्वक्तुस्तत्पदार्थसंसर्गप्रतिपादनाभिप्रायावगतिद्वारेण पदेभ्यो वाक्यार्थानुमानमिति ॥ इदमप्यनुपपन्नम् ॥ तथा हि । पदसमुदायमात्रप्रयोगाद्वा संसर्गज्ञानानुमानम् उताकाङ्क्षादिमत्त्वे सति । नाद्यः व्यभिचारात् । द्वितीये तु तथाविधपदैरेव वाक्यार्थावगतेर्वक्तृज्ञानानुमाने बकबन्धरीतिप्रयास एवेति ॥ तददिमप्याह गौरवं कल्पनेऽन्यथेति ।**

**परि०— नाद्यः व्यभिचारादिति** । गौरश्वः पुरुषो हस्तीत्यादिवाक्ये । **बकबन्धरीतीति** । बको नाम पक्षी मया कथं ग्राह्य इति केनचित्पृष्टे अन्यो वदति क्वचिदुपविष्टस्य बकस्य शिरसि नवनीते स्थापिते सति आतपेन द्रवीभूतेन चक्षुरन्तःप्रविष्टेन तेन चक्षुषो निमीलने सति बको बन्धनीय इति । इयं बकबन्धनरीतिः । नवनीतस्थापनकाल एव बकबन्धनसंभवे तदुक्तरीतिर्यथा प्रयासस्तथाऽयमपीत्यर्थः ।

**यादु०—** वैशेषिकादिमतं निराकर्तुमनुवदति **केचिदाहुरिति** । **अभिप्रायावगतिद्वारेणेति** । अभिप्रायानुमितौ वाक्यार्थस्तदवच्छेदकतयैवावभासते न साक्षादित्यर्थः । **पदेभ्य इति** । तत्प्रयोगादित्यर्थः । तथा च विमतो वक्ता एतत्पदार्थसंसर्गप्रतिपादनाभिप्रायवान् एतत्समुदायप्रयोक्तृत्वादित्यनुमानमत्र विवक्षितमित्यवधेयम् । इदमुपलक्षणम् । एतत्पदार्थसंसर्गज्ञानवानित्यपि साध्यमत्र विवक्षितम् । अत एव संसर्गज्ञानानुमानमित्यग्रे व्यवहारः । तत्र चाभिप्रायानुमानमित्यस्याप्युपलक्षणमतो न विरोध इत्यवधेयम् । **उक्ताकाङ्क्षादिमत्त्व इति** । आकाङ्क्षादिमत्त्वविशिष्टपदसमुदायप्रयोगाद्वा इत्यर्थः । **व्यभिचारादिति** । आकाङ्क्षादिशून्यपदसमुदायप्रयोक्तरीति शेषः । तथा च यो यानि पदानि प्रयुङ्क्ते इत्युक्तसामान्यनियमो व्यभिचारेण दुष्ट इति भावः । **बकबन्धरीतीति** । बकबन्धरीतिमेवमाहुः । कथं बको धार्य इति पृष्टः कश्चिदाह । बकशिरसि नवनीतं स्थापनीयं, तस्य च तपनकिरणसन्तप्तस्य बकचक्षुःप्रवेशोऽनन्तरं बको धार्य इति । अत्र यथा नवनीतस्थापनार्थं गतेनैव बकस्य धत शक्यत्वान्नवनीतस्थापनानन्तरं बकधारणे प्रयासगौरवं तथा प्रकृतेऽपीत्यर्थः ।

**वं०प०— वाक्यार्थानुमानमिति** । एतानि वैदिकानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्वकाणि । आकाङ्क्षादिमत्पदकदम्बकत्वाद्गामानय शुक्लां दण्डेनेत्यादिपदवदित्यनुमानेन वक्तृज्ञानावच्छेदकतया संसर्गसिद्धेः । पदानामनुमानविधयैव संसर्गबोधकत्वं न तु शब्दत्वेनेत्यर्थः । तथा च वाक्यार्थो न शाब्द इत्याशयः । **प्रयास एवेति** । तथा च हेतुज्ञानसमय एव वाक्यार्थस्यावबुद्धत्वात्तेनाभिप्रायमनुमाय तदवच्छेदकत्वेन पुनरनुमानेन संसर्गबोधाङ्गीकारे बकबन्धरीतिप्रयासतुल्यः प्रयासः प्राप्त इत्यर्थः ।





**आनन्दः— यो यानीति** । अयं वक्ता स्वप्रयुक्तपदार्थसंसर्गप्रतिपादनाभिप्रायवान् विशिष्टपदप्रयोक्तृत्वादिति प्रयोग इत्यर्थः । **व्यभिचारादिति** । गौरश्वः पुरुषो हस्तीत्यादिपदप्रयोक्तरि व्यभिचार इत्यर्थः । **बकबन्धेति** । बको यथा वक्रमार्गेण बध्यते तथा प्रकृते ऋजुसंभवे वक्रमार्गानुसरणमयुक्तमित्यर्थः ।

**कं०रा०— उतेति** । उताकाङ्क्षादिमत्पदसमुदायप्रयोगादित्यर्थः । **व्यभिचारादिति** । उक्तसाध्यरहिते गौरश्वः पुरुषो हस्तीत्यादिनिराकाङ्क्षवाक्यप्रयोक्तरि पदसमुदायमात्रप्रयोगरूपहेतोः सत्त्वेन व्यभिचारादित्यर्थः । **बकबन्धरीतिः** । बको नाम पक्षी मया कथं ग्राह्य इति पृष्टेऽन्यो वदति । क्वचिदुपविष्टस्य बकस्य शिरसि नवनीते स्थापिते सत्यातपेन द्रवीभूतेन तेन तच्चक्षुषो निमीलने सति बको बन्धनीय इति बकबन्धरीतिः । विमतो वक्ता एतत्पदार्थसंसर्गप्रतिपादनाभिप्रायवान् एतत्समुदायप्रयोक्तृत्वादित्यनुमानमत्र विवक्षितमिति ध्येयम् ।

**वा०चं०—** वैशेषिकपक्षं निराकर्तुमनुवदति **केचिदिति** । **द्वितीये त्विति** । एवेत्यस्य साक्षादित्यर्थः । **बकबन्धरीतिप्रयास इति** । बकबन्धन्यायसाम्यमित्यर्थः । बकग्रहणे क उपाय इति केनचित्पृष्टे खरतरदिनकरसंपर्कद्रुततन्मस्तकनिहितनवनीतबिन्दुभिर्नयनयोः पूर्णतायां तद्ग्रहणं सुकरमिति कश्चित्प्रवदति । न च तदुपपद्यते । बकग्रहणमन्तरेण तन्मस्तके नवनीतप्रक्षेपानुपपत्तेस्तस्मिन्स्वयं गृहीते च तत्प्रक्षेपोऽपि मुधैवेति न्यायाभिप्रायः । बकबन्धरीतिव्युत्पादनाय वक्तृज्ञानानुमान इत्युक्तम् ।

**वा०र०—** ................ त्यनुसारेण न्यायप्रकारं दर्शयति **बकग्रहण इत्यादि** । खरतरो मध्याह्नकालीनात्युष्णरश्मिमान् यो दिनकरः सूर्यस्तत्संपर्केण द्रुतं यत्तस्य बकस्य मस्तके निहितं नवनीतम् । तद्बिन्दुभिरिति संबन्धः ।

**स०व्र०— पदेभ्यो वाक्यार्थानुमानमिति** । संसर्गाभिप्रायकपदेभ्य इत्यर्थः । तथा चैतानि पदानि स्वस्मारितार्थसंसर्गज्ञानपूर्वकाणि । तदभिप्रायकपदकदम्बकत्वादित्यनुमाने वक्तृज्ञानावच्छेदकतया वाक्यार्थसिद्धिरिति भावः । एतदनुमानेऽसिद्धिवारणाय पूर्वानुमानमत एवाभिप्रायावगतिद्वारेणेत्युक्तमिति द्रष्टव्यम् । **बकबन्धरीतिप्रयास इति** । बकबन्धरीतिमेवमाहुः । बको धार्य इति पृष्टः कश्चिदाह, बकशिरसि नवनीतं स्थापनीयं तस्य च तपनकिरणततस्य बकचक्षुःप्रवेशेन तदनन्तरं बको धार्य इति । अत्र यथा नवनीतस्थापनार्थं गतेनैव बकस्य धर्तुं शक्यत्वान्नवनीतस्थापनान्तरं बकधारणे प्रयासगौरवं तथा प्रकृतेऽपीत्यर्थः ।

**विठ्ठ०— नियमे** व्याप्तौ । **संसर्गप्रतिपादनाभिप्रायावगतिद्वारेणेति** । नद्यास्तीर इत्यादि वक्ता तत्परार्थसंसर्गबोधनाभिप्रायवान् तादृशपदसमूहप्रयोक्तृत्वादहमिवेत्यनुमितिद्वारेणेत्यर्थः । **पदेभ्य इति** । संसर्गाभिप्रायकपदेभ्य इत्यर्थः । तथा चैतानि पदानि पदार्थसंसर्गबोधकानि । तदभिप्रायकपदसमुदायरूपत्वादित्यनुमानेन वक्तृज्ञानावच्छेदकपदार्थसंसर्गरूपवाक्यार्थसिद्धिरिति भावः । एतदनुमाने असिद्धिवारणायैव पूर्वानुमानम् । अत एवाभिप्रायाव-





गतिद्वारेणेत्युक्तमिति ज्ञेयम् । **व्यभिचारादिति** । आकाङ्क्षादिशून्ये गौरश्वा इत्यादिपदसमूह इति शेषः । **तथाविधपदैरेवेति** । आकाङ्क्षासन्निधियोग्यतावद्भिः पदैरेव वाक्यार्थावगमोपपत्तेः । यदेभ्यो वक्तृज्ञानावच्छेदकतया वाक्यार्थानुमाने बकबन्धनरीतिवदपहासास्पदत्वमेवेति भावः । बकबन्धनकुसृष्टिर्लोके प्रसिद्धा ।

**चषकः**— वैशषिकमतं प्रतिविधित्समानोऽनुवदति **केचिदाहुरिति** ।

भाट्टमतदूषणम्—

**६७१ सु०— अभिहितान्वयवादिनो वदन्ति— पदाभिहिताः पदार्था एव आकाङ्क्षादिवशात् अन्योन्यान्वयं बोधयन्तीति ।**

**तैरपि हि पदार्थानामन्वयबोधकत्वं क्वाप्यनुपलब्धं तावत्कल्पनीयम् । ननु 'पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः । खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीः ॥' इत्युक्तन्यायेनास्त्येव पदार्थानामन्वयबोधकत्वमिति चेन्न, अनुमानादर्थापत्तेर्वा तत्रान्वयप्रतीतेः ॥ तथा हि । एतेषां पदार्थानामेकाधिकरणतयाऽवगतानां वा प्रत्यायकत्वं, विशकलिततया वा । आद्येऽनुमानत्वम् । द्वितीये तत्रार्थान्तराभावो निश्चितो न वा । आद्येऽर्थापत्तिर्भवतामस्माकमनुमानमेव । द्वितीये त्वनध्यवसाय एव । प्रमाणान्तरावगतानां पदार्थानामन्वयबोधकत्वादर्शनेऽपि पदैरभिहितानां तत्किं न स्यादिति चेत् । तर्हि न केवलं पदार्थानामन्वयबोधकत्वशक्तिकल्पनम् किन्तु पदानां पदार्थाभिधानशक्तिः तेष्वन्वयबोधकत्वाधानशक्तिश्च कल्पनीया । पदानां पदार्थेषु साहचर्यमात्रेण स्मारकत्वाङ्गीकारेऽपि शक्तिद्वयं कल्पनीयमेव ॥ तदिदमुक्तम् गौरवं कल्पनेऽन्यथेति ।**

**परि०**— भट्टमतमनूद्य निराह **अभिहितेति** । पदानामभावेऽपि पदार्थानामेव ज्ञातानामन्वयबोधकत्वमुपलब्धमिति नानुपलब्धकल्पनादोष इति शङ्कते **नन्विति** । श्वेतम् आरूपमिति विभागः । किञ्चिच्छ्वेतं रूपं पश्यत इत्यर्थः । अन्धकारावृतप्रदेश इति ध्येयम् । **हेषेति** । अश्वध्वनेर्हेषेति नाम । हेषाख्यशब्दमित्यर्थः । **खुरनिष्पेषशब्दं चेति** । शृण्वत इत्यन्वयः । खुरनिष्पेषशब्दरूपोऽर्थो धावनान्वयस्य हेषाशब्दरूपोऽर्थोऽश्वान्वयस्य श्वेतरूपपदार्थो रूपान्वयस्य बोधक इति श्वेतोऽश्वो धावतीति धीर्जायत इति पदार्थानामेव स्वज्ञानरूपव्यापारद्वाराऽन्वयबोधकत्वमित्यर्थः । स्वमतेनाह

**अनुमानादिति** । परमतेनाह **अर्थापत्तेर्वेति** । **आद्ये अनुमानत्वमिति** । अयं श्वेतः धावदश्वः हेषाखुरनिष्पेषशब्दवत्त्वात् । संमतवदितिप्रयोगप्रसङ्गादिति भावः । **अर्थापत्तिर्भवतामिति** । अर्थान्तराभावे सति श्रूयमाणहेषाखुरनिष्पेषशब्दान्यथानुपपत्तिरूपार्थापत्त्या तत्रत्यश्वेतस्य धावदश्वत्वप्रतीतिर्भाट्टानामित्यर्थः । **तदिदमुक्तमिति** । अन्यथाकल्पने पदाभिहितपदार्थानामेवान्वयबोधकत्वकल्पने शक्तिद्वयाङ्गीकारगौरवमिति मूलार्थ इति भावः । विवृतमेतदभिहितान्वयभङ्गे तर्कताण्डवे ।

**यादु०**— भाट्टमतं दूषयितुमनुवदति **अभिहितान्वयवादिन इति** । पदार्थानामन्वयबोधकत्वं क्वाप्यनुपलब्धं कल्पनीयमित्येतदसहमानः शङ्कते **ननु पश्यत इति** । श्वेतरूपं आ ईषत्पश्यत इत्यर्थः । श्वेतरूपमेव पश्यति न व्यक्तिविशेषसंसृष्टतयेति दर्शयितुमिदमिति ज्ञातव्यम् । यद्यपि पूर्वमुपस्थितानां प्रतीयमानान्वयप्रतियोगिनामेव पदार्थानामन्वयबोधकत्वमत्र प्रदर्शनीयम् । न येषांकेषाञ्चित् । अतिप्रसङ्गात् । हेषाखुरनिष्पेषशब्दौ च न श्वेतोऽश्वो धावतीति प्रकृतान्वयप्रतियोगिनौ । तथाऽपि पदार्थानामन्वयबोधकत्वे प्रतीयमानान्वयप्रतियोगित्ववत्तादृशान्वयप्रतियोगितावच्छेदकसामानाधिकरणत्वमपि तन्त्रमतो नातिप्रसङ्ग इत्यभिप्रेत्याश्वत्वसमानाधिकरणस्य हेषाशब्दस्य धावनकर्तृत्वसमानाधिकरणस्य खुरनिष्पेषशब्दस्य चान्वयबोधकत्वमात्रं प्रदर्शितमित्यवधेयम् । **उक्तन्यायेनेति** । उक्तनिदर्शनेनेत्यर्थः । तथा च यथा वाक्याभावेऽपि प्रमाणान्तरोपस्थितानां श्वेतादिपदार्थानामन्वयबोधे कारणत्वमुपलब्धं तथा पदोपस्थापितानामपि पदार्थानामन्वयबोधकारणत्वमस्तु न पदार्थानामिति भावः । **अनुमानादिति** । तथा च तत्रार्थानामन्वयबोधकारणत्वमनुमानादितयैव न पदार्थतयाऽनुमानमात्रोच्छेदप्रसङ्गात्ततश्च पदार्थानामन्वयबोधकरणत्वे नेदं निदर्शनमिति भावः । **एतेषामिति** । श्वेतरूपहेषाशब्दखुरनिःष्पेषशब्दरूपार्थानामित्यर्थः । विशकलिततयेत्यत्र समानाधिकरणतयाऽनवगममात्रं विवक्षितं न तु व्यधिकरणतयाऽवगमोऽपि । तथा सति वक्ष्यमाणार्थापत्तेरनुमितेर्वाऽसंभवादित्यवधेयम् । **आद्येऽनुमानत्वमिति** । उभयमतेऽपीति शेषः । सामानाधिकरण्यावगमेन हेतूकर्तुं शक्यत्वादिति भावः । अत एव सामानाधिकरण्यावगमाभावेऽर्थापत्तिर्भवतामिति वक्ष्यति । अनुमानं चेत्थम् । अयं श्वेतो धावदश्वो भवितुमर्हति । हेषाखुरनिष्पेषवत्त्वात् संप्रतिपन्नवदिति । अत्र धावति गर्दभे बद्धेऽश्वे च व्यभिचारवारणाय हेतौ क्रमेण विशेषणद्वयम् । **आद्येऽर्थापत्तिरिति** । प्रमाणद्वयविरोधादिति भावः । **अनुमानमेवेति** । यद्यप्यत्र हेषाखुरनिष्पेषयोः सामानाधिकरण्यानवगमादुक्तहेतुरसिद्धस्तथाऽपि एते श्वेतादयः पदार्था धावदश्वधर्मिकाः निश्चिततद्भिन्नाश्रयाभावकत्वे सत्याश्रितत्वात् । यद्यद्भिन्नाश्रयाभावकत्वेन निश्चितमाश्रितं च तत्तदाश्रितं यथा घटत्वमित्यनुमानं विवक्षितमतो न दोषः । **अनध्यवसाय एवेति** । श्वेतोऽश्वो धावतीत्यध्यवसायो न भवत्येवेत्यर्थः । **शक्तिद्वयमिति** । पदानां पदार्थेष्वन्वयबोधकत्वाधानशक्तिः पदार्थानामन्वयबोधकत्वशक्तिश्चेति शक्तिद्वयमित्यर्थः ।

**वं०प०**— **अर्थापत्तिर्भवतामिति** । श्वेतरूपहेषादयः पदार्था विशकलिततयाऽवगम्यन्ते । तत्र च खराश्वतर्यादिपदार्थान्तराभावश्च निश्चितः । तदन्यथाऽनुपपत्त्या धावदश्वधर्मिका एवैते पदार्था इत्यर्थापत्तिर्भवतां भाट्टानां





मते; अस्मन्मते त्वनुमानमेवेति न पदार्थानां तत्रान्वयबोधकत्वमित्यर्थः । अनुमानप्रकारस्त्वित्थम् । अयं श्वेतो धावमानाश्वो भवितुमर्हति हेषाखुरनिष्पेषशब्दवत्त्वात् संप्रतिपन्नधावदश्ववदिति । अत्र खुरनिष्पेषशब्दवत्त्वमात्रं धावति गर्दभे व्यभिचारि । तत्र धावमानत्वे सत्यप्यश्वत्वरूपविशेष्याभावेन विशिष्टाभावरूपसाध्याभावात् । अतो हेषेत्युक्तम् । हेषा स्यात्तुरगध्वनिरित्यभिधानान्न व्यभिचारः । हेषावत्त्वमात्रं बद्धेऽश्वे व्यभिचारि । तत्राश्वत्वे विद्यमानेऽपि धावमानत्वरूपविशेषणाभावेन विशिष्टाभावरूपसाध्याभावात् । अत उक्तं खुरनिष्पेषशब्दवत्त्वादिति । यद्यपि बद्धेऽश्वेऽपि खुरनिष्पेषशब्दोऽस्ति । तथाऽपि धावदश्वनिष्ठखुरनिष्पेषशब्दविशेष एव विवक्षित इत्यदोषः । **पदैरभिहितानामिति** । तथा च परम्परया शाब्दत्वमिति भावः । **अन्वयबोधकत्वाधीनशक्तिरिति** । केवल-पदार्थानामन्वयबोधकत्वाभावेऽपि पदैरभिहितानां तु पदार्थानां भविष्यतीत्युक्त्या पदार्थेष्वन्वयबोधकत्वाधानशक्तिः पदानां प्राप्तेत्यर्थः । **स्मारकत्वाङ्गीकारेऽपीति** । तथा च पदानां न स्वार्थे शक्तिरिति शक्तित्रयं न कल्प्यत इत्यर्थः ।

**आनन्दः— तैरपीति** । न च पदस्याप्यन्वयबोधकत्वं क्वोपलब्धमिति वाच्यम् । अन्वयपदस्यान्वय-बोधकस्यानुभवसिद्धत्वात्तदनुसारेणान्यत्रापि पदस्यान्वयबोधकत्वं कल्प्यत इति भावः । **अनुमानमिति** । धावन् श्वेतः अश्वो भवितुमर्हति खुरनिष्पेषशब्दवत्त्वे सति हेषाशब्दकारकत्वादित्यनुमानादित्यर्थः । **न केवलमिति** । तथाच शक्तित्रयस्वीकारः स्यादिति भावः । **शक्तिद्वयमिति** । पदार्थानामन्वयबोधकत्वशक्तिः पदार्थानां पदार्थे-ष्वन्वयबोधकत्वाधानशक्तिश्चेति शक्तिद्वयमित्यर्थः ।

**कं०रा०— पश्यतः श्वेतमारूपमिति** । आ ईषच्छ्वेतं रूपं पश्यत इत्यर्थ इत्येके । आपश्यत इति व्यवहितोपसर्गसंबन्ध इत्यन्ये । आरूपशब्दोऽस्पष्टार्थक इत्यप्याहुः । **अनुमानत्वमिति** । अयं श्वेतो धावदश्वो भवितुमर्हति हेषाखुरनिष्पेषवत्त्वादित्यनुमानत्वमित्यर्थः । खुरनिष्पेषशब्दवत्त्वमात्रं गवादावनैकान्तिकमिति तन्निरा-साय हेषापदम् । तावन्मात्रं चाधावत्यश्वे व्यभिचरितमिति तन्निरासाय खुरनिष्पेषशब्दपदम् । **तेष्विति** । पदार्थेषु यदन्वयबोधकत्वाधानं तच्छक्तिः श्वेतादिपदानां कल्पनीयेत्यर्थः । **शक्तिद्वयमिति** । पदार्थानामन्वयबोधशक्तिः पदानां तदाधानशक्तिश्चेति शक्तिद्वयमित्यर्थः ।

**श्रीनिधि०— इत्युक्तन्यायेन** । उक्तरीत्या । **अनध्यवसायः** अनिश्चयः । **साहचर्यमात्रेणेति** । संबन्ध-मात्रेणेत्यर्थः ।

**वा०चं०—** प्रमाणान्तरावगतेषु पदार्थेषु क्लृप्तमन्वयबोधकत्वं पदाभिहितेष्वप्यास्थीयते वा पदाभिहितेष्वेव वा तत्कल्प्यते । नाद्य इत्याह **तैरपीति** । ननु मानान्तरावसेयानां पदार्थानामन्वयबोधकत्वं क्लृप्तमेव । अनवधारि-ताश्रयविशेषस्य प्रत्यक्षदृष्टश्वेतस्याप्रतिपन्नगुणविशेषस्य हेषाशब्दानुमितस्याश्वत्वस्य खुरनिष्पेषशब्दानुमितधावन-स्येत्येतेषां प्रत्यक्षानुमानरूपप्रमाणान्तरसिद्धानां गुणक्रियाजातिरूपाणामर्थान्तरसाकाङ्क्षाणां योग्यानां पदार्थाना-मन्वयबोधकत्वदर्शनादिति शङ्कते **नन्विति** । आरूपं श्वेतं कञ्चित्पदार्थमव्यक्तमगवाश्वादिरूपम् । पदार्थाना-





मित्यतःपूर्वं दर्शनसिद्धरूपस्य श्रवणश्रुतहेषाखुरनिष्पेषशब्दानुमिताश्वत्वजातिगतिरूपक्रिययोश्वेति शेषः । किं येनैव पुरुषेण श्वैत्यसमानाश्रयौ हेषाध्वनिखुरनिष्पेषशब्दाववगतौ तस्यैवेयं श्वेतो धावतीति संसर्गधीरुत यस्य तथाऽनध्यवसायस्तस्यापीति । यदि तावदप्रत्याकलितहेषाध्वनिपादविहारनिर्घोषापादनस्यैतदुच्यते । तदपि तस्यार्थान्तराभावस्यानिश्चयो यदि तदा विशिष्टासंसर्गप्रतीत्यभ्युपगमे प्रतीतिविरोधः । स ह्येवं प्रतिपद्यते । भवितव्यमस्मिन्देशे नूनमश्वेन भाव्यं च केनचिद्धावतेति । न पुनः श्वेतोऽश्वो धावतीति । अथाश्वसंबन्धिनमेव खुरपुटटङ्कारवमभ्यासपाटववशादवैति । तदाऽसावश्वसंबन्धिनीमेव वेगवर्ती गतिमनुमिनोति न पुनः केवलामेवा-वगम्यान्वयं पदार्थसामर्थ्येनावबुध्यते । योऽप्यस्मिन्देशेऽश्वादन्यो नास्तीति निश्चित्य पारिशेष्याच्छाब्दा-पादानानध्यवसायेऽपि हेषादिध्वनेः श्वैत्यसामानाधिकरण्यमध्यवस्यति । तस्यापि गृहादर्शन इव बहिर्भावावगतौ प्रमाणद्वयविरोधरूपार्थापत्तिरेव । योऽयं श्वेतः स एवाश्व इत्यत्र तव मानम् । मम तु विशिष्टहेतुरूपमनुमानमेव तत्र मानम् । यस्तु श्वैत्यसमानाधिकरणौ हेषाध्वनिखुरपुटटङ्कारवावध्यवस्यति तस्य श्वेतद्रव्यवर्तिनि वेगव-द्गमनसमानाधिकरणाश्वत्वे श्वेतोऽयं धावदश्वो भवितुमर्हति हेषाध्वनिखुरनिष्पेषशब्दवत्त्वादित्यनुमानमेवावयोरिति प्रमाणान्तरासंबद्धावगतपदार्थानां न कदाचिदन्योन्यसंबन्धबोधकत्वमनुमानार्थापत्तिव्यतिरेकेण प्रतीतमित्याशयेनाह **तथा इति** । **एतेषामिति** । प्रत्यक्षज्ञाप्याव्यक्तश्वेतरूपजातिक्रियाज्ञापकहेषाखुरनिष्पेषशब्दलक्षणानामित्यर्थः । **विशकलिततयेति** । स्वरूपमात्रेणावसितानामित्यर्थः । **आद्य इति** । यत्र तत्त्रितयं तत्राश्वत्वमिति व्याप्तिमपेक्ष्य गमकत्वादित्यर्थः । **आद्य इति** । अर्थान्तराभावैतदन्यतरग्राहकप्रमाणद्वयविरोधेन तवार्थापत्तिः । अर्थान्तराभाव-विशिष्टैतदन्यतरस्याश्वत्वाविनाभावेन ममानुमानमित्यर्थः । **अनध्यवसाय एवेति** । विशिष्टपदार्थान्वयाबोध एवेत्यर्थः । द्वितीयं शङ्कते **प्रमाणान्तरेति** ।

**वा०र०— अनवधारितेति** । न अवधारितो निश्चितः आश्रयविशेषो यस्यैवंविधं प्रत्यक्षेण दृष्टं च यच्छ्वेवं रूपं तस्येत्यर्थः । वक्ष्यमाणरीत्या रूपग्रहणम् । अप्रतिपन्नो गुणविशेषः नीलश्वेतादेर्यस्याश्वस्येति संबन्धः । **खुरनिष्पे-षेति** । अत्राप्यप्रतिपन्नाश्रयस्येति पूरणीयम् । **गुणक्रियेति** । गुणजातिक्रियेति पाठः । दर्शनसिद्धेत्याद्युत्तरग्रन्थानु-सारात् । क्रियाजातीति पाठेऽपि यथायोग्यं संबन्धः । **अर्थान्तरेति** । धर्मिरूपार्थान्तरेत्यर्थः । श्वेतं रूपमापश्यत ईषत्पश्यतः श्वेतं रूपमेव पश्यति न व्यक्तिविशेषसंसृष्टतयेत्याद्यन्यथाख्यात्याद्युक्तप्रकारेणार्थप्रतीतिनिरासाय श्वेतपदं धर्मिपरं स्वीकृत्योपसर्गस्य यथाश्रुतसंबन्धं चाश्रित्य व्याचष्टे **आरूपं श्वेतमिति** । आरूपमित्यस्य विशेषणत्व-व्यक्त्यर्थमारूपमित्यस्य पूर्वनिर्देशः । एवं संबन्धं प्रदर्श्यारूपमिति विशेषणपदार्थमाह **कश्चित्पदार्थमव्यक्तगवा-श्वादिरूपमिति** । अत्राव्यक्तगवाश्वादिरूपमित्येव पाठः । मध्ये मकारो लेखकागतः । मूलपुस्तके शोधलेखनकाले मध्ये मकारलेखानन्तरं प्रकारान्तरलेखनेन मकारस्य त्यागात् । श्वेतमिति पूरणीयम् । अनुवर्तते वा । तथा चाङोऽनेकार्थत्वादा अव्यक्तं रूपं गवाश्वादिकम् आकारविशेषो यस्यैवंविधं श्वेतं श्वेतरूपयुक्तं कञ्चित्पदार्थं पश्यत इति योजनोक्ता भवति । कश्चित्पदार्थमव्यक्तगवाश्वादिरूपमित्युक्ते धर्मिणं विना रूपमात्रप्रतिभासो नेति सूचनात् । दर्शनसिद्धरूपेत्युत्तरत्र तु किञ्चिद्धर्मिनिष्ठत्वेनावगतरूपलक्षणधर्मस्यैव पुरस्कारान्न कश्चिद्दोषः । प्रत्यक्षज्ञाप्याव्यक्तश्वेतरूपेत्युत्तरवाक्यस्य तु





प्रत्यक्षेण ज्ञाप्यं यदव्यक्तगवाश्वाद्याकारस्य कस्यचित्पदार्थस्य श्वेतं रूपं तदिति योजनेत्यादि ज्ञेयम् । एतच्चारूपमीषद्रूपमिति निबन्धव्याख्यानात्तत्रोपात्तपाठानुसारेण । श्वेतिमारूपमिति तत्त्वप्रदीपिकादिगतपाठपक्षे तु श्वेतिम्नोरूपं तत्स्वरूपमिति वा श्वेतिमाख्यं रूपमिति वा व्याख्येयम्। एतत्तर्कपादीयशास्त्रदीपिकानिबन्धाद्यनुसारेण स्पष्टनीयमस्ति। रूपस्येव हेषादिशब्दयोरर्थान्तराकाङ्क्षाया अन्वयबोधकत्वायोगादाह **हेषाखुरनिष्पेषशब्दानुमितेति** । क्रिययोश्वेति शेष इत्यत्रेति शब्द आवर्तनीयः । तथाच क्रिययोश्वेतीति शेष इति लाभः । तथैव पाठस्तु स्वरस एव । तथा चेति पदार्थानामन्वयबोधकत्वमस्त्येवेति योजना । **श्वैत्यसमानाश्रयाविति** । श्वैत्यपदं श्वेतरूपपरम् । समानाश्रयत्वं च निर्घोषापादनस्येत्युत्तरवाक्यानुसाराज्जातिक्रियाज्ञापकेत्युत्तरानुसाराच्च हेषाध्वनिखुरनिष्पेषशब्दावगताश्वत्वजातिगतिक्रियापेक्षया परम्परयैव विवक्षितमिति न दोषः । तथाहि एतेषामित्युत्तरग्रन्थमपेक्षितपूरणेन व्याकुर्वन्नवतारयति **किं येनैवेत्यादिना** । एतेषां पदार्थानामिति पदार्थपुरस्कारस्यैव प्रतीतावपि केनचिदवगतानां तेषामन्यं प्रत्यन्वयबोधकत्वमिति प्रतीतिवारणाय पुरुषपुरस्कारेण विकल्पो वर्णितः । तत्र येनेत्येतावतैव पूर्णे एवकारस्याधिकस्य प्रयोगस्तदन्यनिषेधस्य दृढीकरणार्थः । येनैव ज्ञानं गृह्यते तेनैवेत्यत्र यथा । येनैव च प्रकारेणासिद्धमनुमीयते । तैनैव शशशृङ्गादेरिति वैशेषिकाधिकरणीयभाष्येऽपि । श्वैत्यसमानाश्रयावित्यादिकमुपलक्षणम् । हेषाध्वनिसमानाश्रयौ श्वैत्यखुरनिष्पेषशब्दावित्यादिकमपि ज्ञेयम् । प्रत्यक्षज्ञाप्याव्यक्तश्वेतस्येत्याद्युत्तरटीकानुसारेणात्रापि प्रत्यक्षेत्यादि पूरणीयम् । **तथानध्यवसाय इति** । श्वैत्यसमानाश्रयतयोक्तयोरध्यवसायाभावः । येन पुरुषेण तौ तथा नावगताविति यावत् । **विशकलिततया वेति** मूले विशकलिततयावगतानामित्येवार्थपक्षेऽनध्यवसायरूपदूषणायोगः । अश्वत्वादेर्भिन्नाधिकरणतयाऽवगमेऽश्वान्यो धावतीत्यादिबोधस्यैवापादनीयतया निर्णयायोगपर्यन्तगमनानुपपत्तेः । अर्थापत्त्यादिमानत्वोक्त्ययोगप्रसङ्गाच्च । अतः स्वरूपमात्रेणावगतानामिति व्याकरिष्यति । तदनुसारेणोत्तरमूलानुवादं विहायानध्यवसाय इत्येवोक्तम् । तस्येत्येव वक्तव्ये तस्यापीति वचनं तादृशस्य संसर्गधीप्राप्तौ समानाश्रयत्वज्ञानवतः संसर्गधीरवर्जनीयतया प्राप्नोतीति पूर्वकल्प इव नात्र कल्पेऽन्यनिषेधे तात्पर्यमिति द्योतनाय । तस्यापि संसर्गधीरित्यनुवृत्तेन संबन्धः । कल्पद्वयेऽपि इत्युच्यत इति पूरणीयम् । तथैवोत्तरत्रानुवादादेः । द्वितीयनिराकरणस्य बहुत्वात्तमेवादावनूद्य दूषयति **यदि तावदिति** । तावदित्यनेन यदि च श्वैत्यसमानाश्रयावित्याद्युच्यत इत्येवं यस्तु श्वैत्येत्युत्तरत्र योज्यमिति सूचयति । तदा अर्थान्तराभावो निश्चितो न वेति विकल्पं मनसि कृत्वा तदापीत्यादिरूपेण पक्षद्वयनिराकरणमिति ज्ञेयम् । अत्राप्यनिश्चयपक्षस्य प्रथमं निराकरणमनध्यवसायदण्डभयेन कथञ्चित्प्रमाणप्रवृत्त्युपपत्तिर्यत्पक्षे तत्पक्षमङ्गीकारयितुमिति न दोषः । प्रतीतिविरोध इत्यनेन तथा संसर्गाध्यवसायाङ्गीकारे प्रतीतिविरोध इति सूचितम् । **अप्रत्याकलितेति** । न प्रत्याकलितम् । नावगतं हेषाध्वनिपादविहारनिर्घोषयोरपादानं येनेति विग्रहः । प्रतीतिविरोधमेव दर्शयति **स हीति** । धावतीत्यस्येति शब्दस्य प्रतिपद्यत इति पूर्वेण संबन्धः । धावतीतीत्यनन्तरं प्रतिपद्यत इति वर्तते । अर्थान्तरस्याभावो यद्यपि न निश्चितः यद्यपि च हेषाध्वन्यपादानप्रत्याकलनाभावस्तथापि खुरपुटटङ्कारवापादानज्ञानमात्रेण श्वेतोऽश्वो धावतीति धीः संभवतीत्याशङ्क्ते **अथेति** । अवैतीत्यत्रावेत्यस्य एतौ परतः प्राप्तमेङि पररूपं बाधित्वा एत्येधत्यूठ्स्वित्यनेन वृद्धिरिति द्रष्टव्यम् । अप्रत्याकलितेत्युक्तपक्षेऽर्थान्तरस्याभावनिश्चयोऽस्तीति द्वितीयपक्षं दूषयितुमनुवदति **योऽप्यस्मिन्निति** । परिशेष एव

पारिशेष्यं तस्मादित्यस्य हेषाध्वनेरित्यनेन संबन्धः। **तस्यापीति**। तस्यापि योऽयं श्वेतः स एवाश्व इत्यत्रेत्यर्थ-प्रतिपत्तावर्थान्तराभावैतदन्यतरग्राहकेति वक्ष्यमाणद्वयविरोधरूपार्थापत्तिरेव तद्रीत्या प्रमाणम्। तत्र दृष्टान्तो **गृहेति**। जीवतश्चैत्रस्य गृहेऽदर्शने सति तस्मिन् बहिर्भावोऽवगम्यते किल। तदवगतौ जीवनप्रमाणगृहासत्त्वप्रमाणरूप-प्रमाणद्वयविरोधरूपार्थापत्तिर्यथा प्रमाणमिति योजना। इदं च प्रमाणद्वयविरोधोऽर्थापत्तिरिति लक्षणं परेणाङ्गी-कृतत्वादुपन्यस्तम्। स्वपक्षे तल्लक्षणस्यार्थापत्तिस्वरूपनिरूपणावसरे तत्र तत्र निराकृतत्वात्। **विशिष्टेति**। परिशेषाद्धेषादिध्वनेः श्वैत्यसामानाधिकरण्यानुभवसत्त्वे श्वैत्यादीनामेकाधिकरणनिष्ठतया ज्ञानवत इति श्वेतोऽयं धावदश्वो भवितुमर्हतीत्यादिवक्ष्यमाणरीत्याऽनुमानमित्यर्थः। येनैव पुरुषेण श्वैत्येति प्रथमपक्षमनूद्य दूषयति **यस्तु श्वैत्येति**। समानाधिकरणाश्वत्वे। तद्रूपवाक्यार्थ इत्यर्थः। श्वेतोऽयं पक्षः। धावंश्चासावश्वश्च धावदश्व इति साध्यम्। आवयोर्मते मानमिति वर्तते। **प्रमाणान्तरेति**। श्वेताश्वत्वधावनक्रियारूपपदार्थानां प्रत्यक्षादिना असंबद्धावगतानां प्रत्येकमवगतानामन्योन्यान्वयबोधकत्वं कदाचिदपि नास्ति। यत्र च तत्पदार्थावगमनानन्तर-मन्वयप्रतीतिर्भवति। तत्रानुमानार्थापत्तिरूपप्रमाणाभ्यामेव। न तु पदार्थैरेवेत्यर्थः। विशकलिततयेत्यस्य भिन्नभिन्नाधिकरणनिष्ठतयेत्यर्थः प्रतीयते। तत्र च वक्ष्यमाणार्थापत्त्यनुमानयोरुत्तययोग इत्यादि बाधकमायाती-त्यतोऽत्र विवक्षितमर्थमाह **स्वरूपमात्रेणेति**। **अर्थान्तराभावैतदिति**। अर्थान्तराभावश्च श्वैत्यादित्रयं च एतयो-र्यदन्यतरत् तद्ग्राहकप्रमाणद्वयेति योज्यम्। एतेनान्यतमेति वक्तव्यमिति शङ्कानवकाशः। अर्थान्तराभावग्राहकं प्रमाणम्। एतत्त्रितयग्राहकं च प्रमाणमित्येवं प्रमाणद्वयेत्युक्तं भवति। अन्यतरेत्यत्रान्यतमेत्यर्थ इति वा। तद्धिता इति बहुवचनेन तमबर्थस्थलेऽपि तरप्प्राप्तेः। तथाविधप्रयोगाणां तत्र ......................उपलम्भात् अर्थान्तराभाव-विशिष्टेत्युत्तरवाक्यमप्यस्मिन्पक्षे सुघटम्। पूर्वपक्षे तु तत्रार्थान्तरकल्पना ज्ञेया। अर्थान्तराभावेन विशिष्टं यदेतत् इति विग्रहः। तथा चार्थान्तराभावविशिष्टे जातिगुणौ क्रिया च गुणक्रिये जातिश्च एतयोरन्यतरादित्यादिरूपेण कथञ्चिदर्थसंभवादिति ज्ञेयम्। **विशिष्टपदार्थेति**। श्वेतोऽश्वो धावतीति गुणक्रियाजातिविशिष्टरूपो यः पदार्थाना-मन्वयस्तस्येत्यर्थः।

**स०व्र०**— यद्यप्यन्योन्याश्रयादिदोषो नास्ति तथापि अभिहितपदार्थेभ्य एव संसर्गसिद्धौ पदानामपि सामर्थ्यकल्पनाया गौरवदूषणमित्यभिहितान्वयवादी शङ्कत इत्याह **अभिहितान्वयवादिन इति**। यदि हि पदार्थानां संसर्गबोधकत्वं स्यात् तर्हि तदपहाय पदानामपि सामर्थ्यकल्पनायां गौरवं स्यादेव। न तु तदस्ति प्रमाणा-न्तरगृहीतपदार्थेष्वदर्शनादित्याह **तैरपीति**। उक्तं च नाथेन। किन्तु ये तेषां न दृष्टैषा शक्तिः मानान्तरागतौ। कल्प्याविशिष्टार्थपरपदसंस्पर्शभावितेति। प्रमाणान्तरगृहीतानामप्यस्त्येव संसर्गबोधकत्वमिति शङ्कते **ननु पश्यतः श्वेतमारूपमिति**। अत्र हि दृश्यमानं श्वेतरूपं श्रूयमाणौ ह्रेषाखुरनिष्पेषशब्दौ वाक्याभावेऽपि श्वेतोऽश्वो धावतीति संसर्गबुद्धिं जनयन्ति। तेन ज्ञायते प्रतीतानामर्थानामेवान्वयबोधकत्वं न पदार्थानामिति। अत एव क्वाप्यनुप-लब्धमित्यसदिति भावः। **आद्येऽनुमानत्वमिति**। अयं श्वेतः धावदश्वः ह्रेषाखुरनिष्पेषवत्त्वादित्यनुमानत्वमित्यर्थः। एवमग्रेऽपि। **द्वितीये त्वनध्यवसाय एवेति**। श्वेतोऽश्वो धावतीत्यध्यवसायो न भवत्येवेत्यर्थः। यत्र





तत्त्रयमेकत्रावगतं तत्राश्वत्वं दृष्टमिति व्याप्त्या बोधकत्वादनुमानत्वमित्यर्थ इत्यप्याहुः। **शक्तिद्वयं कल्पनीयमेवेति**। पदार्थानामन्वयबोधकत्वशक्तिः तेषामन्वयबोधकत्वाधानशक्तिश्चेति शक्तिद्वयं कल्पनीयमित्यर्थः।

**विठ्ठ०**— अभिहितान्वयवादिनो भाट्टाः तत्पक्षमपि कल्पनागौरवेण निराकरोति **तैरपीति** । ननु पदार्थानामन्वयबोधकत्वस्य दृष्टत्वात्कथं कल्पनीयमित्युच्यत इत्याशेयन शङ्कते **नन्विति** । श्वेतमारूपमित्यत्र श्वेतिमानं श्वेतं आरूपं अवदातरूपं चेति विग्रहः । क्वचिच्छ्वेतमारूपमिति पाठः । पक्षद्वयेऽपि ईषद्रूपं पश्यत इत्यर्थः । ईषदन्धकाराद्यावृतप्रदेश इति ध्येयम् । हेषेत्यश्वध्वनेर्नाम । श्वेतरूपपदार्थरूपान्वयस्य हेषाशब्दो अश्वान्वयस्य खुरनिक्षेपशब्दरूपोऽर्थो धावनान्वयस्य बोधक इति । श्वेताश्वो धावतीति धीर्जायत इति पदार्थानामेवान्वयबोधकत्वमिति भावः । **अनुमानादर्थापत्तेरिति** । तथा च पदार्थानामन्वयबोधकत्वं भग्नमिति भावः । **अनुमानत्वमिति** । अयं धावदश्वो भवितुमर्हति हेषाखुरनिष्पेषशब्दवत्त्वात् संमतवदित्यनुमानत्वमित्यर्थः । अश्वातिरिक्तपदार्थान्तराभावे सत्यपि हेषादिकमश्वेन विनानुपपद्यमानं तद्गमयतीत्यर्थापत्तिरित्यर्थः । भाट्टैरर्थापत्तेः पृथक्प्रमाणत्वाभ्युपगमाद्भवतामित्युक्तम् । स्वमते त्वाह **अस्माकमिति** । द्वितीये त्वनध्यवसाय एवेति श्वेतोऽश्वो धावतीत्यध्यवसायो न भवतीत्यर्थः । प्रायेणानेन श्वेताश्वेन भवितव्यमित्यनध्यवसायः संशयविशेष एवेति । ननु मास्तु तर्हि प्रत्यक्षादिप्रतीतानां पदार्थानां केवलमन्वयबोधजनकत्वं किन्तु पदानि पदाभिहितेष्वन्वयबोधसामर्थ्यमादधति । ततश्च परैराहितशक्तयः पदाभिहिताः पदार्थाः अन्वयबोधजनका भवन्तीत्याशयेन शङ्कते **प्रमाणान्तरेति** । **कल्पनीयेति** । एवमप्रामाणिकत्रयकल्पना कल्पनागौरवमिति भावः । न पदानां पदार्थाभिधानशक्तिरङ्गीक्रियते येन कल्पनागौरवं स्यात् । किन्तु पदानां पदार्थेषु वाच्यवाचकभावरूपसाहचर्यस्य सत्त्वेन तन्मात्रेणैव संबन्धिदर्शनादिन्यायेन पदार्थस्मारकत्वमेवेत्यत आह **पदानामिति** । तथा च शक्तित्रयकल्पनाभावेऽपि पदार्थानामन्वयबोधकत्वशक्तिः । पदानामर्थेष्वन्वयबोधकत्वाधानशक्तिश्चेति शक्तिद्वयं विना प्रमाणेन कल्पनीयमिति स्यादेव कल्पनागौरवमिति भावः ।

**चषकः**— पदाभिहितपदार्थकरणकान्वयबोधवादिना भाट्टानां मतमपनिनीषुरनुवदति **अभिहितान्वयवादिन इति**।

पदस्मारितपदार्थानां वाक्यार्थप्रत्यायकत्वस्य निरासः—

**६७२ सु०— ननु चान्विताभिधानवादिनोऽपि पदार्थेऽन्वये च शक्तिकल्पनाद्गौरवं समानमिति चेन्न; एकयैव शक्त्याऽन्वितार्थस्यैवाभिधानाङ्गीकारात् । तथाऽपि सामान्यान्विताभिधानवादे पदानामौत्सर्गिकी सामान्यान्वये शक्तिः, पदान्तरसन्निधानाच्चागन्तुकी विशेषविषया शक्तिः, पदान्तरे च तदाधानशक्तिरिति शक्तित्रयं कल्पनीयमिति चेन्न;**

**आकाङ्क्षितसन्निहितयोग्यान्विताभिधानशक्तेः एकस्या एव पदान्तरसमभिव्याहारबलेन विशेषपर्यवसानस्योक्तत्वात् ॥ ननु च पदकदम्बकश्रवणसमनन्तरं कुतश्चिन्मानसापराधादनुपजनितपदार्थस्मृतेः वाक्यार्थप्रत्ययानुदयाद् उदयाच्चोपजातपदार्थस्मृतेरन्वयव्यतिरेकाभ्यां पदस्मारितपदार्थानां वाक्यार्थप्रत्यायकत्वमवसीयत इति । मैवम् । सङ्गतिस्मरणभावाभावाभ्यामन्यथोपपत्तेः । पदनिचयश्रवणवाक्यार्थबोधावन्तरा पदार्थस्मृतीनामेवानभ्युपगमात् । एकैकपदश्रवणे पदार्थस्मृतिरस्ति तावदिति चेत् । किं तावता । किं सहकारिविरहिणो यत्कार्यं तदेव सहकारिलाभेऽपि । तथात्वे संस्कारस्येन्द्रियसहकारिलाभेऽपि प्रत्यभिज्ञानुभवजनकत्वं न स्यात् । किञ्च पदार्थबोध्यत्वे वाक्यार्थस्यानुमेयस्येव अशाब्दत्वम् । पदार्थाख्यसप्तमप्रमाणाङ्गीकारे गौरवं च स्यादिति ।**

तदेतदाह **गौरवं कल्पनेऽन्यथेति ।**

**परि०— उक्तत्वादिति** । शक्तिश्चैवेत्यादित्रिपादीव्याख्यावसरे उक्तत्वादित्यर्थः । **तदेतदाहेति** । अन्यथाकल्पने पदार्थानामेवान्वयबोधकत्वकल्पने । प्रत्यक्षानुमानोपमानागमार्थापत्त्यभावरूपप्रमाणषट्कादपि पदार्थाख्यसप्तमप्रमाणाङ्गीकारे गौरवं स्यादिति मूलार्थ इति भावः ।

**गु०दी०— विशेषपर्यवसानस्योक्तत्वात्** इत्यत्र सामान्यतः शक्तौ सत्यां तस्यामेव विशेषशक्तित्वमाधीयते, न तु सामान्यतोऽपि शक्तिरहिते विशेषशक्तिराधीयते, अयोग्येऽपि शक्त्याधानप्रसङ्गात् । अतः सामान्यविशेषभावावलम्बिन्याः शक्तेरेकत्वान्न कल्पनागौरवमिति भावः ।

**यादु०— एकैकपदश्रवण इति** । अवाक्यस्थपदश्रवण इत्यर्थः । **प्रत्यभिज्ञानुभवेति** । प्रत्युत तदपि स्मृतिजनकत्वमेव स्यादिति भावः ।

**वं०प०—** ननु पदस्मारितपदार्थानामेवान्वयबोधकत्वमङ्गीकार्यमन्वयव्यतिरेकाभ्यां तथाऽवगमादित्याशङ्कते **ननु चेति** । मानसापराधो विषयान्तरसञ्चाररूपः । **सङ्गतिस्मरणेति** । पदनिचयस्मरणानन्तरं शक्तिस्मरणे सति वाक्यार्थबोधस्य जायमानत्वेन पदार्थस्मृतिं विनाऽन्यथाशक्तिस्मरणेन वाक्यार्थबोधस्योपपत्तेर्न पदार्थस्मृतिस्तदर्थं कल्प्येत्यर्थः । तदेवोपपादयति **पदनिचयेति** । **अस्ति तावदिति** । अवाक्यस्थपदश्रवणे पदार्थस्मृतिरेव भवति । न वाक्यार्थबोध इत्यनुभवसिद्धम् । तथा च पदार्थस्मृतीनामेवानभ्युपगमादित्युक्तमसदिति भावः । ननु सहकारिविरहिणः साधनस्य सकाशाद्यत्कार्यं तदेव सहकारिलाभेऽपि कुतो न भवतीत्यत आह **तथात्व इति** । इन्द्रियसंन्निकर्षादिरूपसहकार्यभावदशायां संस्कारस्य स्मृतिमात्रजनकत्वेऽपीन्द्रियसन्निकर्षादिरूपसहकारिलाभे प्रत्यभिज्ञानजनकत्वं दृष्टं तन्न स्यात् । किं नाम तदानीमपि स्मृतिमात्रजनकत्वमेव स्यात् । न ह्येवमस्त्यतः





प्रकृतेऽपि शक्तिस्मृतिरूपसहकार्यभावदशायामवाक्यस्थैकपदश्रवणस्य पदार्थस्मृतिमात्रजनकत्वेन वाक्यार्थबोधजनकत्वाभावेऽपि शक्तिस्मृतिरूपसहकारिसंपत्तौ सत्यां वाक्यार्थबोधजनकत्वमेव भविष्यति । न पदार्थस्मृतिजनकत्वमिति भावः ।

**कं०रा०— पदान्तरेति** । पदान्तरसन्निधानाद्याधेया विशेषान्वयशक्तिरित्यर्थः । **अशाब्दत्वमिति** । न च वाच्यं शब्दोपस्थापितपदार्थबोध्यत्वाद्वाक्यार्थस्याशाब्दत्वमुपपन्नमिति । शब्दोपस्थापितलिङ्गबोध्यस्यानुमेयस्यापि शाब्दत्वापत्तेः । शब्दोपस्थापितपदार्थमात्रस्यान्वयबोधकत्वे कारणत्वादिसंबन्धेन शब्दोपस्थापितस्याकाशादेरप्यन्वयबोधकत्वप्रसङ्गाच्च । न च वृत्त्या पदोपस्थापितपदार्थस्यान्वयबोधकत्वाङ्गीकारान्नातिप्रसङ्ग इति वाच्यम् । घटः कर्मत्वमानयनं कृतिरित्यादिशब्दोपस्थापितपदार्थस्याप्यन्वयबोधकत्वापातात् । न च वाच्यं वृत्त्या पदविशेषोपस्थापितपदार्थस्यान्वयबोधकत्वमतो नातिप्रसङ्ग इति । आवश्यकपदविशेषस्यैव सङ्गतिस्मरणसहितस्य अन्वयबोधकत्वसंभवे तदुपस्थापितपदार्थस्यान्वयबोधकत्वकल्पनाया अयोगादिति । **पदार्थाख्येति** । यद्यपि शाब्दस्थले शब्दोपस्थितपदार्थस्यैव वाक्यार्थप्रमितिकरणतया भाट्टैरङ्गीकृतत्वान्न पदार्थाख्यसप्तमप्रमाणाङ्गीकारोऽस्ति । तथाऽपि व्युत्पत्तिकाले शब्दस्यैवान्वयप्रमितिकरणत्वग्रहणेन शब्देनायमर्थो ज्ञात इत्यनुभवेन च सिद्धं शब्दस्यान्वयप्रमितिकरणत्वं त्यक्त्वाऽप्रसिद्धस्य पदार्थनिष्ठान्वयप्रमितिकरणत्वस्याङ्गीकारे गौरवं स्यादित्यत्र तात्पर्यमिति ध्येयम् ।

**श्रीनिधि०— अन्यथोपपत्तेः** । वाक्यार्थानुवादस्येति शेषः । एवं च न पदार्थस्मृतेस्तत्र हेतुत्वकल्पकमिति भावः । **सहकारिविरहिण इति** । प्रकृते च पदान्तं सहकारी । अस्मिन् सत्यन्वयबोध एव भवेत् । न तु पदार्थस्मृतिरिति भावः । अर्थवशात् प्रतिपादनलक्षणप्रयोजनस्यान्यथानुपपत्तेः ।

**वा०चं०— एकयैवेति** । न च केवलपदार्थशक्तिकल्पनापेक्षया विशिष्टशक्तिकल्पने गौरवमेवेति वाच्यम् । त्वद्वच्छक्तिद्वयकल्पनाभावादित्यत्र तात्पर्यात् । **आकाङ्क्षितेति** । आगन्तुकविशेषविषयकशक्तेरेवाभावे आधेयशक्तेरेवाभावेन पदान्तरे तदाधायकत्वशक्तेरप्यभाव इति भावः ॥ ० ॥ नन्वन्वयव्यतिरेकाभ्यां पदार्थस्मृतेरन्वयबोधकत्वे सिद्धे प्रमाणान्तरावगतानां तेषां तदभावात्पदैरभिहितानामेव तत्कल्पनेति प्रमाणसिद्धेऽर्थे गौरवं न दोषायेति शङ्कते **नन्विति** । **सङ्गतीति** । तथा चान्वयव्यतिरेकयोरन्यथासिद्ध्या न तद्बलात्पदार्थानां वाक्यार्थप्रत्यायकतानिश्चय इत्यर्थः । तर्हि मध्ये पदार्थस्मृतेर्वैयर्थ्यमित्यत आह **पदेति** । यद्वाऽङ्गीकृत्येदमुदितम् । वस्तुतस्तु मध्ये पदार्थस्मृतेरेवाभावादन्वयव्यतिरेकौ दूरोत्सारितावित्याह **पदेति** । अथवा सङ्गतिभावाभावाभ्यां वाक्यार्थप्रत्ययस्यान्यथोपपत्तेः । पदनिचयश्रवणवाक्यार्थबोधावन्तरा पदार्थस्मृतीनामेवाभावात्तदन्वयव्यतिरेकौ दूरोत्सारितावित्येकवाक्यतया योजना द्रष्टव्या । **एकैकेति** । एवं चात्र क्लृप्ततया पदनिचयश्रवणस्थलेऽपि सा कल्प्यत इति भावः । **किं तावतेति** । कल्पकाभावान्न कल्पना युक्तेत्यर्थः । गौरवाशाब्दत्वादिदोषपरिजिहीर्षया पराभिहितो यः परिहारस्तन्निरासकतया न चाशक्त्येत्यादिभाष्यं योजयितुं तद्दोषमाह **किञ्चेति** ।





**स०व्र०**— ननु सङ्गतिस्मरणभावाभावाभ्यामन्यथोपपत्तेरित्ययुक्तम् । यत्र व्यासङ्गदशायां वाक्यार्थबोधो न जायते तत्र पदार्थस्मरणाभावादेव तदभाव इति मयाऽपि वक्तुं शक्यत्वादित्यत आह **पदेति** । पदनिचयश्रवणेत्यत्र शक्तिस्मरणमपि विवक्षितम् ।

**विट्ठ०**— ननु पदानामितरान्वितस्वार्थाभिधा शक्तिः पदार्थगतान्वयप्रतिपादनशक्तिश्चेति शक्तिद्वयं कल्पनीयमिति गौरवं सममित्याशङ्क्य न शक्तिद्वयं कल्प्यते किन्तु अन्योन्यान्वयविशिष्टपदार्थाभिधानशक्तिरेकैव अङ्गीक्रियते । अतो न गौरवमिति परिहरति **ननु चेति** । ननु तथापि प्रथममेव प्राभाकरमत इव विशेषान्वयबोधकत्वानङ्गीकारात् पदानां सामान्यान्वयशक्तिः पदान्तरसंबन्धाल्लब्धापि दोषान्वयशक्तिः तथा पदान्तरसन्निधानेनास्मिन्पदे आगन्तुकी शक्तिर्भवतीत्यभ्युपगमेन सर्वपदस्यापि स्वसन्निहितपदान्तरे विशेषान्वयशक्त्याधायकत्वरूपा शक्तिश्चेति शक्तित्रयं कल्पनीयमिति गौरवमिति शङ्कते **तथापीति** । नास्माभिः शक्तित्रयमभ्युपगम्यते । किन्तु आकाङ्क्षाप्रतियोगिसन्निहितयोग्येतरपदार्थान्वितस्वार्थाभिधानशक्तिरेकैव । परन्तु पदान्तरसमभिव्याहारे सति सैव शक्तिर्विशेषान्वये पर्यवस्यति । न पुनरविद्यमानशक्त्यन्तरमुत्पद्यते इति प्रागेवोक्तत्वान्न कल्पनागौरवशङ्का युक्ता । नापि पदान्तरे विशेषशक्त्याधायकत्वरूपा शक्तिरङ्गीक्रियते । प्राचीनस्वाभाविकशक्तेरेव विशेषपर्यवसानस्योक्तत्वेन शक्त्यन्तरस्यैवाभावादित्याशयेन परिहरति **आकाङ्क्षितेति** । तथापि पदानामेवान्वयरूपवाक्यार्थप्रत्यायकत्वं युक्तम् । पदार्थस्मरणान्वयव्यतिरेक्यनुविधायित्वाद्वाक्यार्थबोधस्येति शङ्कते **ननु चेति** । वाक्यार्थज्ञानस्य वाच्यवाचकभावरूपसङ्गतिस्मरणान्वयव्यतिरेकानुविधायित्वमेव पदार्थस्मरणान्वयव्यतिरेकानुविधायित्वमसिद्धमिति परिहरति **मैवमिति** । सत्यपि सङ्गतिस्मरणे व्यासङ्गदशायां वाक्यार्थबोधाभावेन सङ्गतिस्मरणान्वयव्यतिरेकानुविधायित्वं नास्ति किन्तु पदार्थस्मरणाभावादेव तदभाव इति पदार्थस्मरणान्वयव्यतिरेकित्वमेवेत्यत आह **पदनिचयेति** । स्यादेतदेवं यदि पदकदम्बकश्रवणसमनन्तरं सङ्गतिस्मरणवतो वाक्यार्थबोधाभावः । न चैवं पदनिचयश्रवणवतः सङ्गतिस्मरणे सति तदैव वाक्यार्थबोधस्य जायमानत्वेन मध्ये पदार्थस्मृतीनामेवाभावेन तदन्वयव्यतिरेकानुविधायित्वप्रसक्तिरेव नास्तीति भावः । ननु पदश्रवणेन पदार्थस्मृतिरेव नास्तीत्ययुक्तम् । अवाक्यस्थविशकलितैकैकपदश्रवणेन पदार्थस्मृतेरनुभवसिद्धत्वादिति शङ्कते **एकैकेति** । अस्तु तत्र तथा एवमपि वाक्ये पदेभ्यो वाक्यार्थज्ञानव्यतिरेकेण न पदार्थस्मृतिरुत्पद्यत इत्याशयेन समाधत्ते **किं तावतेति** । ननु पदत्वाविशेषादवाक्यस्थानामेवैकैकपदानां पदार्थस्मारकत्वं न तु वाक्यगतपदानामिति वैषम्यमनुपपन्नमिति चेन्न । पदान्तरसमभिव्याहारलक्षणसहकार्यभावादेकैकपदानां भवति पदार्थस्मारकत्वं वाक्यगतानां तूक्तसहकारिलाभात् केवलवाक्यार्थज्ञानजनकत्वमिति वैषम्योपपत्तेः । अङ्गीकृतं हि संस्कारस्य सहकार्यलाभे केवलं स्मृतिजनकत्वं इन्द्रियलक्षणसहकारिलाभे तु प्रत्यभिज्ञानुभवजनकत्वमिति । तस्मात्पदेभ्यः पदार्थस्मृतिः ततश्च वाक्यार्थबोध इत्यनुपपन्नमिति तदेतदाह **किं सहकारिविरहिण इति** । किञ्च गवादिपदार्थबोध्यत्वे गामानयेति वाक्यार्थस्य धूमादिपदार्थबोध्यवह्न्यादेरिव शब्दरूपप्रमाणवेद्यत्वं न स्यात् । तस्य च प्रमाणषट्कानन्तर्भावात्सप्तमप्रमाणाङ्गीकारश्च स्यात् तथा च कल्पनागौरवमित्याशयेनाह **किञ्चेति** । भाट्टस्य प्रमाणषट्कवादित्वात् सप्तमेत्युक्तम् ।





अशक्त्या अभिधायित्वाभावः—

**६७३ सु०— नायं दोषः। पदानामेव पदार्थप्रतिपादनावान्तरव्यापाराणामन्वयप्रतिपादकत्वाङ्गीकारात्। न ह्यवान्तरव्यापारस्य व्यवधायकत्वमस्तीति चेत्। किमन्वयेऽप्यर्थवत्पदानां शक्तिरस्ति न वा। नास्तीति चेत्तत्राह न चाशक्त्येति।**

## अनु०— न चाशक्त्याभिधायित्वम्

**न च तत्राशक्तं तदभिधत्त इति संभवति व्याघातादतिप्रसङ्गाच्च। तथा च तदवस्थं वाक्यार्थस्याशाब्दत्वं सप्तमप्रमाणापत्तिश्चेति भावः।**

**परि०— अतिप्रसङ्गाच्चेति**। घटोऽस्तीत्यस्य पटोऽस्तीत्याद्यर्थाभिधायकत्वप्रसङ्गादित्यर्थः।

**वं०प०— नायं दोष इति**। शक्तिद्वयकल्पनारूपो दोषोऽशाब्दत्वरूपो दोषः पदार्थानां प्रमाणान्तरत्वरूपो दोषश्च नेत्यर्थः। **व्याहतत्वादिति**। अभिधत्त इत्युक्त्या शक्तेरेव प्राप्तत्वादित्यर्थः। **अतिप्रसङ्गाच्चेति**। घटपदेन पटावबोधोऽपि स्यादित्यर्थः।

**आनन्दः— व्याघातादिति**। अभिधत्त इत्युक्त्या हि शक्तिः प्रतीयते पुनरशक्तमित्युक्तव्याघात इत्यर्थः। **अतिप्रसङ्गादिति**। अशक्तस्यापि बोधकत्वे शक्तिः कुत्रापि न स्वीकर्तव्येति तदुच्छेदलक्षणोऽतिप्रसङ्ग इत्यर्थः।

**कं०रा०**— ननु पदार्थप्रतिपादनावान्तरव्यापाराणां पदानामेवान्वयप्रतिपत्तिकरणत्वमङ्गीक्रियते। अतो नान्वयस्याशाब्दत्वं नाप्यप्रसिद्धपदार्थाख्यप्रमाणाङ्गीकारे गौरवमित्याशयेन शङ्कते **नायमिति**। ननु पदार्थप्रतिपादनव्यवहितानां पदानां कथमन्वयप्रतिपत्तिजनकत्वमित्यत आह **न हीति**। **अर्थवदिति**। पदार्थ इवेत्यर्थः। न चाशक्त्याभिधायित्वमिति मूलस्याशक्त्यान्वये शक्त्यभावेन पदानां तदभिधायित्वं न संभवतीत्यक्षरार्थं मनसि निधाय तत्र शक्त्यभावेन तदभिधायित्वं न संभवतीत्येतदुपपादयति **न च तत्रेति**। असति वृत्त्यन्तरे तत्राशक्तं पदं तत्प्रतिपादयतीति न हि संभवति। वृत्त्यन्तररहितत्वे सति तत्राशक्तस्य पदस्य तत्प्रतिपादकत्वाभावस्यैव दर्शनेन व्याघातादित्यर्थः। न चाशक्त्याऽभिधायित्वमिति पाठे त्वशक्यो योऽन्वयस्तदभिधायित्वं शब्दानां न संभवतीत्यक्षरार्थं मनसि निधायान्वयस्याशक्यत्वोक्त्या पदानां तत्र शक्त्यलाभात्तत्राशक्तस्य तदभिधायित्वं नास्तीत्यर्थलब्धं प्रमेयमुपपादयति न चेतीत्यवतारिका द्रष्टव्या। यथा चान्वये वृत्त्यन्तराभावस्तथाऽग्रे वक्ष्यते। यद्वा। तत्राशक्तं तत्प्रतीतिजननासमर्थं तदभिधत्ते। तत्प्रतीतिं जनयतीति न च संभवति व्याघातादित्यर्थः। न च वाच्यं





पदानामन्वये शक्तिर्नास्तीति वदता तत्र तेषामभिधारूपवृत्त्यभावपक्षे ज्ञानकरणस्य पदस्य ज्ञेयेनान्वयेन सह शक्तिरूपसन्निकर्षाभावेन तत्प्रतिपत्तिजननासामर्थ्यस्यैव प्राप्तत्वात् । न ह्यसन्निकृष्टं करणं कुत्रापि ज्ञानजनकमुपलब्धम् । न चान्वयस्य पदशक्यत्वेन शक्तिरूपसाक्षात्सन्निकर्षाभावेऽपि शक्यपदार्थसंबन्धित्वरूपपरम्परासंबन्धः पदेन सहास्तीति तस्य तत्प्रतिपत्तिजनकत्वं युक्तमिति वाच्यम् । प्राथमिकव्युत्पत्तिहेतुनाऽन्वितविषयकेण व्यवहारेण पदानां योग्येतरान्वितस्वार्थे शक्तेर्गृहीततयाऽन्वयांशेऽपि शक्तिरूपसाक्षात्सन्निकर्षसंभवे परम्परासंबन्धाश्रयणस्य गौरवकरत्वात् । **अतिप्रसङ्गादिति** । तत्राशक्तस्यापि तदभिधायित्वे घटादिशब्दस्य पटाद्यभिधायित्वप्रसङ्गादित्यर्थः । **तथा चेति** । पदस्यान्वये शक्त्यभावेन तदनभिधायित्वे सत्यन्वयस्याशाब्दत्वं तदवस्थमप्रसिद्धपदार्थाख्यप्रमाणापत्तिश्चेति भाव इत्यर्थः ।

**श्रीनिधि०— व्याघातादिति** । अभिधानं नाम शक्त्या बोधनमेवेति भावः ।

**वा०चं०—** ननु चक्षुषो ज्ञानजननेऽर्थसन्निकर्षस्येव पदानामन्वयबोधजनने पदार्थप्रतिपादनमवान्तरव्यापार इत्येव कल्प्यते न त्वन्वयबोधकरणानां पदार्थानां पदबोधितत्वमात्रम् । येन प्रत्यक्षदृष्टधूमाद्यनुमितवन्ह्यादेरप्रत्यक्षत्ववदन्वयस्याशाब्दत्वं पदार्थानां प्रमाणान्तरत्वं च स्यात् । पदानां च कारणत्वस्य क्लृप्तत्वात्कल्पनागौरवं च नेत्याशयेन शङ्कते **नायमिति** । गौरवाशाब्दत्वादिरूपः । शक्त्यनङ्गीकाराङ्गीकारविषययोर्वाक्ययोरेकविषयकत्वासंभवाद्विकल्पमुखेनोत्थापयति **किमन्वय इति** । उभयत्र शक्तिपक्षे दोषं दृष्ट्वाऽन्वयपरत्वं वदतस्तन्मात्रे शक्तिरित्याशयः ।

**वा०र०—** अन्वयपराणीत्युक्ते पदार्थे शक्तिर्नास्तीत्यस्य लाभाभावात्पदार्थाविषयाणामित्येतत्कथं दूषणमित्यतः पदार्थे शक्त्यभावलाभं तदुक्त्या दर्शयन्नेवावतारयति **उभयत्रेति** । **अन्वयपरत्वमिति** । उपलक्षणं चैतत् । साहचर्यात्स्मारकत्वं वदत इत्यपि ज्ञेयम् । तर्हीत्युत्तरमूलानुसाराच्च ।

**स०व्र०— नायं दोष इत्यादि** । यथोक्तम् । 'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् । वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले'ति । 'वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् । पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनमि'ति । एतदप्युक्तम् **न चाशक्त्येत्यादि** । अशक्त्यासाहचर्यात्स्वार्थस्मारकत्वेन तत्र पदानां शक्त्यभावेऽपि अन्वयपरत्वरूपं वाऽन्वयलक्षकत्वरूपं वाभिधायित्वमुक्तरीत्या नेत्यनुव्याख्यानयोजना द्रष्टव्या ।

**विट्ठ०—** ननु न वाक्यार्थप्रत्यायकत्वं स्वातन्त्र्येण पदार्थानामित्युच्यते तथा सति शब्दरूपप्रमाणाभावः स्यात्, पदानां वाक्यार्थप्रतिपादने पदप्रतिपादितपदार्थानामवान्तरव्यापारत्वोरीकरणादित्याशङ्क्य तन्निरासपरतयोत्तरमूलं सङ्गमयति **पदानामेवेति** । अर्थवत्पदानामित्यत्र पदानां यथा अर्थेषु शक्तिस्तथान्वयेऽपि शक्तिरस्ति न वेत्यर्थः । **अतिप्रसङ्गादिति** । तत्राशक्तस्य तद्बोधकत्वे घटोऽस्तीति वाक्यस्य पटसद्भावबोधकत्वं स्यादित्यर्थः । **तथा च** इत्यतःपरमेवमुक्तरीत्या पदानामन्वये शक्त्यभावे पदार्थानामेवान्वयबोधकत्वप्राप्तेरिति शेषः ।





**चषकः— अतिप्रसङ्गादिति** । घटपदस्यापि घटगगनपदयोराधाराधेयभावसंबन्धस्मृतिसाचिव्येन गगन-स्मारकतया तदभिधायकत्वप्रसङ्गादित्यर्थः ।

**पदार्थे अन्वये च पदानां शक्तौ दोषः—**

**६७४ सु०— अथ पदार्थेष्वन्वये चास्ति पदानां शक्तिः, तदा पदार्थानन्वयं च युगपत् प्रतिपादयन्ति उत क्रमेण । नाद्यः अन्विताभिधानप्रसङ्गात्, पदार्थप्रतिपादनस्य अवान्तर-व्यापारत्वानुपपत्तेश्च । द्वितीये दोषमाह प्रवृत्तिश्चेति ।**

**अनु०— प्रवृत्तिश्च द्विधाऽन्यथा ॥**

**द्विधा प्रवृत्तिः विरम्य व्यापारः । प्रसज्यत इति शेषः ।**

**साहचर्यात् स्वार्थान् स्मारयन्ति अन्वयपराणि पदानि अतो न दोष इति चेन्न पदार्थाविषयाणां केवलतदन्वयपरत्वानुपपत्तेः ।**

**परि०— द्विधा प्रवृत्तिः** इत्यस्यार्थो विरम्यव्यापार इति । अन्यथेति मूलपदस्य क्रमेण प्रतिपादयन्ति चेदित्यर्थोऽवतारिकायामेव व्यक्तोऽतो नोक्तः । **साहचर्यादिति** । हस्तिहस्तिपयोः साहचर्यादन्यतरदर्शने अन्यतरस्मृतिरेवं पदानि पदार्थे शक्तिविधुराण्यपि साहचर्यादर्थान्स्मारयन्तीति कारकपदम् । पदार्थाविषयाणां शक्त्या पदार्थप्रतिपादकानामित्यर्थः ।

**यादु०— अतो न दोष इति** । द्विरभिधानाभावान्न विरम्यव्यापाररूपो दोष इति भावः । **पदार्थाविषयाणामिति** । तदभिधायिनामित्यर्थः । **केवलतदन्वयेति** । तथाऽनुभवाभावादतिप्रसङ्गाच्चेति भावः ।

**वं०प०—** युगपत्प्रतिपादने दोषान्तरमाह **पदार्थेति** । पदार्थानामन्वयस्य च शक्त्या क्रमेण प्रतिपादकत्वे खलु विरम्यव्यापारः स्यान्न चैवमस्तीत्याशङ्कते **साहचर्यादिति** । हस्तिहस्तिपयोः साहचर्यादन्यतरदर्शनेनान्यतर-स्मृतिरेवं पदानि पदार्थशक्तिविधुराण्यपि साहचर्यादर्थान् स्मारयन्तीति (कारकपदम्) । **अन्वयपराणीति** । अन्वये शक्त्या तात्पर्यवन्तीत्यर्थः ।

**आनन्दः— पदार्थेति** । अन्वयबोधस्य पदार्थानां चैककाल एव बोधनादिति भावः । **पदार्थेति** । अन्वयस्य संसर्गरूपतया तस्य च ससंबन्धिकतया संबन्धिरूपपदार्थप्रतिपादनाभावे तत्प्रतिपादनमशक्यमिति भावः ।





**कं०रा०— प्रतिपादयन्तीति** । पदानीति शेषः । प्रवृत्तिश्च द्विधाऽन्यथेति मूलेऽन्यथा पदानामन्वयेऽपि शक्त्यङ्गीकारे तत्रापि क्रमेण पदार्थतदन्वयाभिधायित्वे इत्येवमन्यथाशब्दस्यार्थः स्पष्ट इति मनसि निधाय द्विधा प्रवृत्तिरित्यस्यार्थमाह **द्विधेति** ।

**श्रीनिधि०— अन्वयपराणि** । अन्वये शक्तानि । **केवलतदन्वयपरत्वानुपपत्तेरिति** । अन्वयस्य ससंबन्धी पदार्थत्वादिति भावः ।

**वा०चं०**— स चानुपपन्न इत्याह **पदार्थेति** ।

**विट्ठ०— अवान्तरव्यापारत्वानुपपत्तेश्चेति** । तज्जन्यस्तज्जन्यजनको अवान्तरव्यापार इत्युक्तेरिति भावः । **द्विधाप्रवृत्तिः** इत्यनूद्य **विरम्यव्यापार** इत्यर्थकथनम् । **अन्यथेति** मूलस्य युगपत्प्रतिपादनानङ्गीकारे इत्यर्थः । क्रमेण प्रतिपादनाङ्गीकार इति यावत् । न ह्यचेतनस्य विरम्यव्यापारो युज्यत इति मूलाभिप्रायः । तथैव सन्न्यायरत्नावल्युक्तेः । साहचर्यादिति हस्तिहस्तिपकयोः साहचर्यात्स्मारकत्ववत् साहचर्यादेव पदार्थान् स्मारयन्ति पदानि पश्चादन्वयमात्रबोधकानीति नोक्तदोष इति शङ्कते **साहचर्यादिति** । पदानां पदार्थस्मारकत्वमेव न तु पदार्थप्रतिपादकत्वमित्यङ्गीकारे सर्वथा पदार्थाविषयाणां पदानामन्वयबोधकत्वमपि न संभवति अन्वयस्य पदार्थसंबन्धरूपत्वात् संबन्धिधर्मिबोधमपहाय केवलसंबन्धमात्रस्य बुद्ध्यावनारोहादित्याशयेन समाधत्ते **पदार्था-विषयाणामिति** ।

**पदे अन्वयो लक्ष्यते इति पक्षे दोषः—**

**६७५ सु०— अन्वयो लक्ष्यत इति चेत् । तर्हि पदार्थेषु साहचर्यात्स्मारकत्वमात्रमन्वये तु लक्षणैवेति पदानां न कुत्राप्यभिधानवृत्तिरिति स्यात् । तदभावे च न लक्षणापि संभवति, तद्वारत्वात्तस्याः । एतदप्युक्तं न चाशक्त्याभिधायित्वमिति । स्मारकत्वमेवाभिधायकत्व-मिति चेन्न अतिप्रसङ्गादिति ।**

**तस्मात्पदैरेव वाक्यार्थप्रत्ययसंभवाद्युक्तं वेदप्रामाण्यमित्यतो युक्ता ब्रह्मजिज्ञासेति सिद्धम् ।**

**परि०**— ननु मास्त्वभिधावृत्तिः किमनिष्टमित्यत आह **तदभावे चेति** । **तद्द्वारत्वादिति** । मुख्यार्थसंबन्धद्वारत्वाल्लक्षणाया इत्यर्थः । **एतदपीति** । अशक्त्या साहचर्येणाभिधायित्वं पदार्थ-स्मारकत्वं तथाऽशक्त्या लक्षणयाऽभिधायकत्वं न चेति मूलार्थ इति भावः । नन्वशक्तस्याभिधायकत्वे





व्याघात इत्युक्तमयुक्तमिति भावेन शङ्कते **स्मारकत्वमेवेति** । **अतिप्रसङ्गादिति** । हस्तिशब्दस्यापि हस्तिपस्मारकत्वेन तदभिधायकत्वं स्यादित्यर्थः । शक्तिश्चैवेत्यादेः प्रकृतोपयोगं दर्शयन्नुपसंहरति **तस्मादिति** । तस्यैव विवरणं पदैरेव वाक्यार्थप्रत्ययसंभवादिति ॥ **(अभिहितान्वयादिपक्षखण्डनम् ॥ अतःशब्दव्याख्यानं समाप्तम् ॥)**

**यादु०**— ननु पदार्थाविषयाणां पदानां केवलान्वयाभिधायकत्वरूपतत्परत्वानुपपत्तावपि तल्लक्षकत्वरूपं तत्परत्वमुपपद्यत एवेत्याशङ्कते **अन्वयो लक्ष्यत इति** । कथञ्चिद्वृत्तिविषयत्वान्न वाक्यार्थस्य शाब्दत्वापत्तिरिति भावः । **एतदप्युक्तमिति** । अत्राशक्यसाहचर्यात्स्वार्थस्मारकत्वेन तत्र पदानां शक्त्यभावेऽपि केवलान्वयवाचकत्व-रूपं वाऽभिधायित्वमुक्तरीत्या नेत्यनुव्याख्यानयोजना द्रष्टव्या । ननु स्वार्थाभिधायकानामेव पदानां तदन्वय-लक्षकत्वम् । अतो नोक्तदोष इति चेत् । अत्र प्रष्टव्यम् । पदानां स्वार्थाभिधायकत्वं किं तत्र शक्तत्वरूपं विवक्षितमुत पूर्वोक्तं तत्स्मारकत्वरूपमेवेति । नाद्यः । उक्तरीत्याऽन्वयेऽपि शक्तिसंभवे वृथा वृत्तिद्वयकल्पनायां गौरवात् । द्वितीयमाशङ्कते **स्मारकत्वमेवेति** । **अतिप्रसङ्गादिति** । धूमादिपदस्य स्वार्थसाहचर्यवशाद्वह्न्यादिस्मारकत्वेन तदभिधायकत्वप्रसङ्गादित्यर्थः ।

**आनन्दः**— **अतिप्रसङ्गादिति** । हस्तिपकदर्शने हस्तिस्मरणस्य जायमानतया तस्यापि तदभिप्रायकत्वं स्यादित्यर्थः ।

**कं०रा०**— **तदभाव इति** । कुत्राप्यभिधारूपवृत्त्यभावे पदानामन्वये लक्षणाऽपि न संभवतीति शक्यार्थसंबन्धिन्येव लक्षणाया दृष्टत्वेन तस्या अभिधाद्वारकत्वादित्यर्थः । इदं चोपलक्षणम् । अन्वयस्य प्रागनुपस्थितत्वेन लक्ष्यत्वासंभव इत्यपि द्रष्टव्यम् । न चाशक्त्याभिधायित्वमिति मूलस्याशक्त्या शक्तिभिन्नया लक्षणया शब्दानामन्वयाभिधायित्वमन्वयप्रतिपादकत्वं न संभवतीत्युक्तरीत्या लक्षणाया अयोगादित्यर्थान्तरं मनसि निधायोक्तं प्रमेयं मूलारूढं करोति **एतदप्युक्तमिति** । यदुक्तं तर्हि पदार्थेषु साहचर्यात्स्मारकत्वमात्रं पदानामन्वये तु लक्षणैवेति न कुत्राप्यभिधानवृत्तिरिति स्यादिति । तदयुक्तम् । स्मारकत्वस्यैवाभिधायित्वरूपत्वेन यथा-कथञ्चित्पदार्थस्मारकाणां पदानामभिधानवृत्तेः प्राप्तत्वादित्याशयेन शङ्कते **स्मारकत्वमिति** । **अतिप्रसङ्गादिति** । लक्षणीयार्थस्मारकस्य लक्षकपदस्याप्यभिधायित्वप्रसङ्गादित्यर्थः । यद्वा । कारणत्वादिसंबन्धेनाकाशस्मारकस्य घटादिशब्दस्याप्याकाशाभिधायित्वप्रसङ्गादित्यर्थः । **तस्मादिति** । पदानामन्विताभिधायित्वादित्यर्थः ।

**श्रीनिधि०**— **स्मारकत्वमेवेति** । अनेन न कुत्राप्यभिधानवृत्तिः स्यादिति दूषणमुद्धृतं वेदितव्यम् । **अतिप्रसङ्गादिति** । पूर्वपदस्य उत्तरपदस्मारकत्वेन तत्र तस्य शक्तिप्रसङ्गादित्यर्थः ।





**वा०चं०**— ननूभयत्रैकत्र वा शक्त्यङ्गीकारे उक्तदूषणप्राप्तावपि न मन्मते तदवकाशः । विशिष्टार्थप्रत्यायनार्थप्रयुक्तपदकदम्बसमभिव्याहारान्यथाऽनुपपत्त्या पदस्मारितानामर्थानामन्योन्यान्वितानां पदलक्ष्यतयाऽङ्गीकारादित्याशङ्क्ते **अन्वय इति** । पदार्थान्वये शक्त्यङ्गीकारे पदार्थेषु शक्तिप्राप्तेरनिष्टत्वेऽप्यन्वये लक्षणायां पदार्थेष्वपि लक्षणापत्तिर्नानिष्टेति भावः । नन्वभिधायकत्वं नाम न शक्यार्थप्रतिपादकत्वं किन्तु स्मारकत्वमात्रम् । तथा चाभिधानवृत्तेरभावेऽपि नानुपपत्तिः । न च शक्त्यार्थप्रतिपादकत्वरूपाभिधानवृत्तेर्वाच्यार्थानुपपत्तिवाच्यार्थसंबन्धद्वारा लक्षणोपयोगात्तदभावे लक्षणैव न स्यादिति वाच्यम् । 'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः । शूरश्च कृतविद्यश्च यश्च जानाति सेवितुमि'त्यादौ लोके, 'वायुर्वै क्षेपिष्ठा देवते'त्यादौ वेदे चान्वयानुपपत्त्यादेरभावेऽपि निष्प्रयोजने वाक्यप्रामाण्यानुपपत्त्या प्रतीयमानवाक्यार्थत्यागेन शूरादित्वं संपदो हेतुरित्याद्यर्थस्य लक्षणादर्शनेन वाच्यार्थानुपपत्त्यादेर्लक्षणायामतन्त्रत्वात् तस्माद्वाक्याप्रामाण्यापत्तिरेव लक्षणाबीजम् । तस्याश्च विशिष्टार्थप्रयुक्तसमभिव्याहृतानां पदानां स्मारितार्थमात्रपरत्वे प्राप्ते स्मरणरूपाभिधानवृत्तेरेव लक्षणाबीजत्वान्न शक्तिः प्रयोजिकेत्याशयेन शङ्कते **स्मारकत्वमेवेति** । नेति पदवदर्थानामपि पदस्मारकत्वादभिधायकत्वापत्तिरित्यर्थः । न च शब्दज्ञानमभिधाव्यापारः । अर्थस्मृत्यर्थमेव पदप्रयोगात् । न ह्यर्थज्ञानं तथा । तत्तत्कार्यार्थमप्यर्थोपादानात् । तथा चाभिधाव्यापारोपेतानां पदानामेवाभिधायकत्वं नार्थानामिति वाच्यम् । मध्येऽर्थस्मृतेरनभ्युपगमेन पदप्रयोगस्य तदर्थत्वासंमतेः । अर्थस्मृत्यर्थमेव लौकिकानां पदप्रयोगेऽपि नियामकत्वेन शक्तेरङ्गीकर्तव्यत्वाच्च । एतेन पदेष्वेव लौकिकानामभिधायकत्वव्यवहारान्नार्थानामभिधायकत्वमिति निरस्तम् । तन्मूलतयैव शक्तेरङ्गीकार्यताया उच्यमानत्वादिति भावः ।

**वा०र०**— पदार्थशक्तिमङ्गीकृत्येयं शङ्केति प्रतीतिनिरासायाशयमाह **नन्विति** । **मन्मत इति** । अनेन पूर्ववादिभिन्नस्येयं शङ्केति न व्याघात इति सूचितम् । तत्र तत्र व्याख्येयमस्ति । तत्त्वप्रदीपिकायां वाच्यार्थानुपपत्त्यभावेऽपि लोकवेदयोर्लक्षणादर्शनादिति प्रतिज्ञाय लोके सुवर्णपुष्पामित्याद्युदाहृतम् । तदनुसारेणाह **सुवर्णपुष्पामित्यादि** । पृथिवीं सुवर्णपुष्पां चिन्वन्ति विचिन्वन्ति । पृथिव्येव सुवर्णपुष्पा । यथा भवति तथा विचिन्वन्ति । तथा संपादयन्ति । बहु सुवर्णमुपार्जयन्तीति पर्यवसितोऽर्थः । तांश्च त्रीनाह **शूरश्चेति** । **निष्प्रयोजन इति** । इदं लोकविषये स्पष्टमेव । वेदेऽपि कैमर्थ्यवशेनेति तत्त्वप्रदीपिकोक्तमनेनैव संगृहीतम् । न हि वायोः क्षैपिष्ठ्यं प्रमाणान्तरेण विरुध्यते । अविरुद्ध एव तु तस्मिन् तावति निष्प्रयोजनतया पर्यवसानाभावात्किमर्थमिदमित्यपेक्षावशेन रक्तपटन्यायेन नष्टाश्वदग्धरथन्यायेन वा देवताप्राशस्त्यलक्षणया कर्मप्राशस्त्यं वाक्यार्थ. इति नयनप्रसादिन्यनुसारेण वेदेऽपि वाक्यप्रामाण्यानुपपत्तेर्बोध्यत्वाभिप्रायात् । इत्यादीत्यादिपदेन देवताप्राशस्त्यप्राप्तं कर्मप्राशस्त्यं ग्राह्यम् । एतत्सर्वमित्यादि इत्येतत्पर्यन्तं मध्ये मध्ये टीका व्याख्येयास्ति । ........... ।

**स०व्र०**— ननु पदार्थस्मारकत्वमेव तदभिधायकत्वमतो न कुत्राप्यभिधानवृत्तिः स्यादित्युक्तमयुक्तमित्याशयेन शङ्क्ते **स्मारकत्वमेवेति** । **अतिप्रसङ्गादिति** । धूमादिपदस्य साहचर्यवशान्महानसादिस्मारकत्वसंभवेन तदभिधायकत्वप्रसङ्गादित्यर्थः ।





**विठ्ठ०**— नान्वयः पदाभिधेयः अतो नोक्तदोष इति शङ्कते **अन्वयो लक्ष्यत इति** । मास्त्वभिधानवृत्तिरित्यत आह **तदभावे त्विति** । तद्वारत्वादिति केनचित्पदेनाभिधेयस्यैव पदान्तरेण लक्ष्यत्वस्येक्षत्यधिकरणे वक्ष्यमाणत्वादिति भावः । **एतदप्युक्तमिति** । अशक्त्या पदानामन्वये शक्त्यभावेन अभिधायित्वं अभिधानवृत्त्या लक्षणाया वान्वयपरत्वं न संभवतीत्यनुव्याख्यार्थः । ननु पदार्थस्मारकत्वातिरिक्तमभिधायकत्वमेव नास्ति अतो न कुत्रापि अभिधावृत्तिः स्यादित्युक्तमयुक्तमिति शङ्कते **स्मारकत्वमेवेति** । स्मारकत्वस्यैवाभिधायकत्वे हस्तिशब्दस्यापि हस्तिपकस्मारकत्वेन तदभिधायकत्वं स्यादित्यतिप्रसङ्ग इत्याह **अतिप्रसङ्गादिति** ॥

**चषकः**— **युक्ता ब्रह्मजिज्ञासेति सिद्ध(स्थित)मिति** । वेदप्रामाण्यस्य निरवग्रहं समर्थितत्वादिति भावः ।

**॥ सौत्र "अतः"शब्दस्य उक्तहेतुपञ्चकपरामर्शित्वानुपपत्तिनिरासः ॥**

**पौनरुक्त्यादिनिरसनम्**—

**६७६ सु०— एवं तावद् ब्रह्मजिज्ञासाकर्तव्यत्वोपयुक्तं युक्तिजातमतःशब्दार्थत्वेन व्याख्यातम् । तेन अथशब्दार्थमेव अतःशब्दार्थतया हेतुत्वेन व्याख्यातवतां वृत्तिकाराणामिव नास्माकं पुनरुक्तिदोष इत्युक्तं भवति ।**

**परि०**— इतःपरं स्वयं भगवतेति पर्यन्तं अतःशब्दस्योक्तहेतुपञ्चकपरामर्शित्वानुपपत्तिनिरासः क्रियते । **युक्तिजातमिति** । मोक्षजनकप्रसादहेतुज्ञानोत्पादकत्वबन्धसत्यत्ववेदादिशब्दगतसिद्धार्थपरत्वप्रामाण्यान्विताभिधायित्वरूपयुक्तिजातमित्यर्थः । **अथशब्दार्थमेवेति** । अथाधिकारादिसाधनसंपत्त्यनन्तरम् । अतः अधिकारादेः संपन्नत्वादिति व्याकुर्वतामित्यर्थः ।

**यादु०**— **अथशब्दार्थमेवेति** । अधिकारिविशेषणतया पूर्ववृत्तस्य शमादेर्ब्रह्मविचारहेतुत्वमेवेत्यर्थः । अतः शब्दार्थतयेत्युक्तं विशदयति **हेतुत्वेनेति** । आनन्तर्याभिधानमुखेनाथशब्दप्रतिपादितहेतुत्वस्फुटीकरणार्थोऽतःशब्दः । अन्यथा स्फुटीकरणार्थमतःशब्दाभावेऽथशब्दस्य मङ्गलाद्यर्थान्तरपरताशङ्काऽपि स्यादिति तेषां भावः ।

**वं०प०**— **हेतुत्वेनेति** । अथाधिकार्यादिसंपत्त्यनन्तरमतोऽधिकार्यादिसंपत्तेर्विद्यमानत्वादित्येवं हेतुत्वेनेत्यर्थः ।

**आनन्दः**— एवमतःशब्दव्याख्यानेन फलितमाह **एवं तावदिति** ।





**कं०रा०—** **ब्रह्मजिज्ञासाकर्तव्यत्वोपयुक्तमिति** । न च वाच्यमधिकारादेरपि जिज्ञासाकर्तव्यत्वोपयुक्तत्वेनातःशब्देनैव ग्रहणसंभवादथशब्दादिवैयर्थ्यमिति । शमादिरूपस्याधिकारस्य प्राक् सिद्धस्यैव जिज्ञासाप्रवृत्त्यङ्गत्वं, प्रयोजनादेस्त्वसिद्धस्यापि बुद्धिस्थत्वमात्रेण तदङ्गत्वम् । तत्रापि विषयस्य नासिद्धत्वनियमः प्रयोजनस्य तु तन्नियम इत्यादिविशेषज्ञापनार्थं पृथग्ग्रहणस्यावश्यकत्वात् । **अथशब्दार्थमेवेति** । अथ पूर्ववृत्तात्कर्माधिगमादनन्तरमतः कर्मस्वरूपस्याधिगमाद्धेतोर्ब्रह्म ज्ञातव्यमित्यानन्तर्यप्रतियोगितयाऽथशब्दनिर्दिष्टं कर्माधिगममेव हेतुत्वाकारेणातःशब्दार्थतया व्याख्यातवतामित्यर्थः । तदुक्तं वृत्तिकारैः । पूर्ववृत्तात्कर्माधिगमानन्तरं ब्रह्म विविदिषेति ।

**वा०चं०—** एतत्सर्वमित्याद्युत्तरग्रन्थे भाष्यकारेणातःशब्दस्योक्तार्थत्वेऽनुपपत्तेः परिहारादेतेन चोपलक्षणतया न्यायानुपपत्तिपरिहारस्यापि सूचनाद्वृत्तिकारान्तरोक्तार्थपरित्यागेन किमित्यर्थान्तरकल्पनेत्यनुपपत्तिं तावत्परिहर्तुं पूर्वप्रकरणार्थानुवादमुखेन भूमिमारचयति **एवं तावदिति** । यद्वैतत्सर्वमित्युत्तरग्रन्थेऽप्रकृतानामेषां हेतूनां न प्रकृतपरामर्शकातःशब्दार्थत्वं युक्तमित्याशङ्कायाः परिहारात्प्रकृतत्वादिधर्मविषयकतच्छङ्कायाश्चातःशब्दस्योक्तार्थत्वे सिद्ध एव प्रसराद्वृत्तिकारान्तरोक्तार्थसंभवेनाप्रसिद्धार्थकल्पनं युक्तम् । पौनरुक्त्येन तदनुपपत्तौ च वेदप्रामाण्यविषये तवापि तत्साम्यमिति नोक्तार्थत्वं युक्तमिति धर्मिस्वरूपविषयशङ्क्या प्रतिबन्धेन प्रथमत एवानवसरग्रस्ततया अनुपपत्तिपरिहारावसरे भाष्योक्तानुपपत्तिपरिहारात्पूर्वं वृत्तिकारान्तरैरतःशब्दार्थोक्तावपि भाष्यकारैरर्थान्तरोक्त्या पौनरुक्त्येन परोक्तार्थानुपपत्तेः सूचनात्प्रकारान्तरेण स्वपक्षेऽपि पौनरुक्त्यापत्तौ पौनरुक्त्येन परोक्तार्थत्यागानुपपत्तेस्तदन्यथाऽनुपपत्त्या प्रकारान्तरप्रसक्ततत्परिहारस्यापि सूचनात्सूचितमर्थं प्रतिपादयितुं भूमिमारचयति **एवं तावदिति** । अत्र वृत्तिकाराणामिति न केवलं भास्करादीनामेव ग्रहणं किन्तु तथा व्याख्याने पुनरुक्तिमुद्भाव्यापवादशङ्कानिरासकत्वेन तत्परिहारमभिदधतां विवरणकारादीनामपीति ज्ञेयम् । अथशब्दार्थे विरागादौ हेतुसमर्पकतयाऽतःशब्दं व्याचक्षाणस्य भामत्यादेश्चैतदुपलक्षणम् । अथशब्दार्थानधिकाभिधायिनाऽप्यतःशब्देनाभ्यधिकाशङ्कानिरासे अथशब्देनैव तन्निरासंभवात् पौनरुक्त्यतादवस्थ्यमित्याद्यदूषणमतःशब्देनेव विरागादिस्वरूपोपस्थापकाथशब्देनैव तद्बोधकप्रमाणोपस्थापनसंभवेन साधनस्वरूपालाभशङ्कापरिहारादतःशब्देनापि तत्परिहारे पौनरुक्त्यतादवस्थ्यमिति द्वितीयदूषणमपि पौनरुक्त्योपपादनेनैव सूचितम् । धर्मजिज्ञासानन्तर्यविशिष्टे ब्रह्मजिज्ञासाकर्तव्यत्वरूपे विशिष्टे साध्ये कर्मणामल्पास्थिरफलकत्वसहितो ब्रह्मज्ञानस्यानन्तस्थिरफलकतापातप्रतीतिरूपो विशिष्टो हेतुरतःशब्देन बोध्यत इति रामानुजीयव्याख्यानं त्वेतत्सर्वमिति मूलवाक्यावतारिकारूपे स्यादिति ग्रन्थेऽतःशब्दो हि प्रकृतस्य हेतुतामाहेत्यत्रातःशब्दस्याप्रकृतपरामर्शकत्वासंभवसूचनेन निरस्तप्रायमिति न वृत्तिकारान्तरपक्षानिरासप्रयुक्ता न्यूनतेति द्रष्टव्यम् ।

**वा०र०—** एवं तावदित्याद्युत्तरग्रन्थस्योद्ग्राह्यत्वादसङ्गतत्वमित्याशङ्कापरिहाराय भाष्यसूचितार्थकथनपरत्वान्नासङ्गतिरिति वदन्नुत्तरमूलमवतारयति **एतत्सर्वमित्यादीति** । अन्यानुपपत्तिपरिहारस्योपलक्षणया भाष्य-





सूचितत्वमसहमानः भाष्यकारीयविचाराक्षिप्ततयाऽन्यानुपपत्तिपरिहारस्य सङ्गतिं वदन् भाष्यकारोक्तानुपपत्तिपरिहारानन्तरमेव तदाक्षिप्तानुपपत्तिपरिहारस्य सङ्गतत्वात्तस्य प्राथमिकत्वायोग इत्याशङ्कां च परिहरन् प्रकारान्तरेणोत्तरमूलमवतारयति **यद्वेति** । प्रकृतत्वादीत्यादिपदेन विस्तरेण वक्तव्यत्वपरिग्रहः । प्रकृतत्वधर्मविषयकशङ्का च प्रकृतत्वाभावादित्येवंरूपेति ज्ञेयम् । **तच्छङ्कायाः** अप्रकृतानामित्याद्युक्तशङ्कायाः । तच्छङ्कायाश्चेत्यस्य प्रतिबन्धेनेत्यनेन संबन्धः । एतच्छङ्कायास्तच्छङ्कया प्रतिबन्धमुपपादयितुं धर्मविषयकत्वधर्मिविषयकत्वयोः कीर्तनम् । तदुभयविषयकत्वेऽपि कुतः प्रतिबध्यप्रतिबन्धकभाव इत्यत उक्तम् **अतःशब्दस्योक्तेति** । सति धर्मिणि धर्मचिन्तेति न्यायादिति भावः । **संभव** इति सप्तमी । अनवसरग्रस्ततयेत्यनन्तरं प्रथमत एव तदुत्थापनतत्परिहारयोरसंभवेनेति पूरणीयम् । अतो भाष्यकारोक्तानुपपत्तिपरिहारात्पूर्वं प्रकारान्तरप्रसक्ततत्परिहाररूपं भाष्यकारसूचितमर्थं प्रतिपादयितुमिति संबन्धः । मास्त्वनुपपत्त्यन्तरपरिहार इत्यत उक्तम् **अनुपपत्तिपरिहारावसर इति** । अर्धजरतीयानुपपत्तेः इति भावः । उद्भाष्यत्वपरिहारायोक्तं सूचितमित्येतस्योपपादनं वृत्तिकारान्तरैरित्यादि । वृत्तिकारान्तरैरर्थान्तरे उक्तेऽपि भाष्यकारेण या अर्थान्तरोक्तिः कृता तयेत्यर्थः । परोक्तानुपपत्तिसूचनार्थमेव भाष्यकृता परोक्तार्थे सत्यपि तत्परित्यागेनार्थान्तरमुक्तमिति फलितम् । **प्रकारान्तरेण** वृत्तिकारोक्तार्थे भाष्योक्तपौनरुक्त्यापेक्षया प्रकारान्तरेण त्यागानुपपत्तेः । अविशेषादिति भावः । **तदन्यथेति** । वृत्तिकारान्तरोक्तार्थत्यागहेतुतया पौनरुक्त्याभिधानान्यथानुपपत्त्येत्यर्थः । **प्रकारान्तरेति** । प्रकारान्तरप्रसक्ता सा अनुपपत्तिस्तत्परिहारस्येति योज्यम् । विवरणकारादीनामुपलक्षणया ग्रहणम् । कुतः भास्करादेर्ग्रहणे नियामकतया अथशब्दार्थमेवेत्यादिमूलोक्तव्याख्यानस्य तैरपि कृतत्वे तद्ग्रहणस्यापि मुखत एव संभवादित्यतस्तदसंभवोपपादनायोक्तम् । **तथा व्याख्यान इत्यादि** । **अपवादशङ्केति** । अथशब्दगृहीताया एव साधनकलापस्य ब्रह्मविचारहेतुताया अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतमित्यादिना अपवादाशङ्कायामित्येतच्चन्द्रिकाव्याख्यानरूपनाथशब्दगृहीताविरागादिसाधनेत्यादिटीकोक्तरीत्या अपवादशङ्काप्रकार ऊह्यः । विवरणकारादिव्याख्यानविलक्षणव्याख्यानवतो भामत्यादेरपि ग्रहणमुपलक्षणयाह **अथशब्दार्थ इति** । चन्द्रिकानुसारेणोपलक्षितविवरणकारादेर्भामतीकारादेश्च व्याख्याने मूलोक्तपुनरुक्तिरेव दोष इति सूचयन्प्रकारान्तरेण पुनरुक्तिं पक्षद्वयेऽप्युपपादयति **अथशब्दार्थेति** । तथापि रामानुजरूपवृत्तिकारान्तरोक्तव्याख्यानादूषणान्न्यूनत्वमेवेत्यतस्तस्यान्यथासिद्धिमाह **धर्मजिज्ञासेति** । वृत्तिकारान्तरोक्तपक्षाणां निरासस्य भाष्यसूचितत्वोपपादनफलमाह **इति न वृत्तिकारेति** ।

**स०व्र०— अथशब्दार्थमेव** अधिकारिविशेषणस्य शमदमादेर्विचारहेतुत्वमेवेत्यर्थः । अतःशब्दार्थतयेत्युक्तं विशदयति **हेतुत्वेनेति** । शमादेर्विचारहेतुत्वेनेत्यर्थः । **वृत्तिकाराणां** भास्करादीनाम् ।

**विठ०— युक्तिजातमिति** । मोक्षजनकप्रसादहेतुज्ञानोत्पादकत्वबन्धसत्यत्ववेदादिशब्दगतसिद्धार्थपरत्वप्रामाण्यान्विताभिधायकत्वादिरूपयुक्तिजातमित्यर्थः । **अथशब्दार्थमेवेति** । अथाधिकारादिसाधनसंपत्त्यनन्तरमतो अधिकारादेः संपन्नत्वादिति व्याकुर्वतां भास्करादीनामित्यर्थः ।

**६७७ सु०— तथा हि। अथशब्दस्तावदानन्तर्याभिधानमुखेन हेतुतयैव पूर्ववृत्तमवगमयति। आनन्तर्यमात्रस्य विफलत्वात् अतोऽथशब्देनैव प्रकृतस्य हेतुत्वसिद्धेर्नातःशब्दोऽपेक्षितः ॥ अथशब्दस्य हेतुत्वमार्थिकं नाभिधेयमिति चेत्, सत्यम्; तथाऽप्यार्थिके तात्पर्यात्, तस्यैव च वाक्यार्थेऽन्वयात् । पूर्वमीमांसाव्याख्यातृभिरप्येवमेव व्याख्यातमिति चेत्, किमेतावता; न हि पराङ्गं दग्धमिति स्वाङ्गदाहदुःखं निवर्तते ॥ न चायमस्माकमस्ति दोषः। अथशब्दो हि जिज्ञासाजनकमधिकारि(त्वं)स्थं धर्ममनधिकारित्वशङ्कानिरासायानुवदति, अतःशब्देन तु विषयप्रयोजनसिध्यङ्गभूतं न्यायकलापं सूत्रकारः स्वयमाचष्टे इति कुतः पौनरुक्त्यम् ॥ अत एव पुनरुक्तिभयादथात इत्येकमेव पदं येऽभ्युपगतवन्तस्तेऽपि निरस्ता भवन्ति, अर्थभेदसंभवे अप्रसिद्धकल्पनानुपपत्तेः ।**

**परि०—** कथं तेषां पौनरुक्त्यमित्यत आह **अथशब्दस्तावदिति**। **पूर्ववृत्तमिति**। यदनन्तरं ब्रह्मजिज्ञासा कर्तव्येत्युच्यते तत्पूर्वसंपन्नमानन्तर्यप्रतियोगिभूतं वस्तु जिज्ञासाकर्तव्यतायां हेतुत्वेनावगमयति। अन्यथा यत्किञ्चिदानन्तर्यस्य कार्यमात्रेऽपि संभवेनाथानन्तरमिति न वक्तव्यमेव स्यात्फलाभावादिति भावः । **तस्यैवेति** । तात्पर्यविषयस्येत्यर्थः । **वाक्यार्थे** जिज्ञासाकर्तव्यत्वादिरूपार्थे । **एवमेवेति** । अथाध्ययनानन्तरं अतः अध्ययनस्य निर्वृत्तत्वाद्धर्मजिज्ञासा कर्तव्येत्यर्थः । **अनधिकारिकत्वशङ्कानिरासायेति** । यद्यपि ब्रह्मादिपदेन चिदचिद्विलक्षणविषयसिद्ध्यैव तज्ज्ञानादिद्वारा मोक्षफलसिद्ध्या मुमुक्षुरधिकारी सिद्ध इत्यनधिकारिकत्वशङ्काविषयार्पकब्रह्मपदादिनैव निरस्ता तथापि मुमुक्षुमात्रस्याधिकारित्वे स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरेत्यादिविरोधेन प्राप्ताया पुनर्निरधिकारिकत्वशङ्का तस्याः निरासाय मुक्तियोग्यत्वाध्ययनशमादिरूपासाधारणधर्मरूपमधिकारिस्थं धर्मविशेषं 'मन्दमध्योत्तमत्वेन त्रिविधा ह्यधिकारिण' इत्यादिभाष्योक्तवचनजातेनापशूद्राधिकरणन्यायेन च अध्ययनमात्रवत इति ज्ञानपादीयाधिकरणोक्तन्यायेन च प्राप्तमनुवदतीत्यर्थः । **विषयप्रयोजनेति** । अतःपदस्य हि मोक्षहेतुप्रसादजनकज्ञानकारणत्वात्, बन्धस्य सत्यत्वात्, वेदस्य सिद्धार्थवस्तुपरत्वात्, वेदस्य प्रामाण्यात्, अन्विताभिधायकत्वाच्चेत्येवं युक्तिपञ्चकपरत्वेनातःशब्दः पञ्चधा व्याख्यातः । तत्राद्यद्वयं प्रयोजनसिद्ध्यङ्गभूतम् । अन्त्यत्रयं तु विषयसिद्ध्यङ्गभूतमिति विषयप्रयोजनसिद्ध्यङ्गभूतन्यायकलापमित्युक्तम् । **तेऽपि निरस्ता इति** । एवमत इति भिन्नं पदमुपेत्याप्यपौनरुक्त्यायार्थान्तरं वदन्तो वाचस्पतिप्रभृतयोऽपि चन्द्रिकायां निरस्ता ध्येयाः ।





**यादु०—** इममेव पराभिप्रायं पौनरुक्त्योपपादनाय विशदयति **तथा हीत्यादिना । नातःशब्दोऽपेक्षित इति** । तथा च तदुक्तौ पौनरुक्त्यमिति भावः । अथशब्दस्यानन्तर्यमात्राभिधायित्वादतःशब्दस्य च हेतुत्वाभिधायित्वान्न पौनरुक्त्यमिति शङ्कते **अथशब्दस्येति** । अनभिधेयत्वमङ्गीकरोति **सत्यमिति** । तर्हि न पौनरुक्त्यं तत्राह **तथाऽप्यार्थिक इति** । अभिधेये आनन्तर्यमात्रे तात्पर्यस्य वैफल्यप्रसङ्गेनासंभवादिति भावः । आर्थिकार्थे तात्पर्येऽपि तस्यानभिधेयत्वान्न पौनरुक्त्यमित्यत्राह **तस्यैव चेति** । तात्पर्यविषयस्यैवेत्यर्थः । तथा च तात्पर्यविषयीभूतप्रमेयैक्यात्पौनरुक्त्यं स्यादेवेति भावः । न च मङ्गलाद्यर्थान्तरपरताशङ्कानिरासरूपप्रयोजनसद्भावान्न पौनरुक्त्यमित्याशङ्कनीयम् । वाक्यार्थे समन्वयाभावादिना तच्छङ्काया अत्रानवतारादिति पूर्वमेवोक्तत्वात् । अन्यथा ब्रह्मादिशब्देष्वपि जात्यादिपरताशङ्कापरिहाराय पदान्तरप्रयोगप्रसङ्गादिति । **एवमेवेति** । आनन्तर्याभिधानमुखेन स्वाध्यायाध्ययनस्य धर्मजिज्ञासाहेतुत्वमथशब्देनोक्तमतःशब्देन स्फुटीक्रियत इति व्याख्यातमित्यर्थः ।

**वं०प०— आनन्तर्यमात्रस्येति** । अकारणानन्तर्यस्येत्यर्थः । **अत इति** । कारणानन्तर्यस्यैव वक्तव्यत्वादित्यर्थः ।

**आनन्दः—** नन्वथशब्देन उक्तार्थं प्रति अतःशब्देन हेतुत्वस्योक्तत्वात्तस्य चाथशब्देनानुक्तत्वात्कथं पौनरुत्त्यमत आह **तथा हीति । आर्थिकमिति** । अकारणादानन्तर्यस्यामुख्यत्वान्निष्प्रयोजनत्वाच्च कारणादानन्तर्यस्यैव वक्तव्यत्वादित्यर्थः । **तस्यैव चेति** । हेतुत्वरूपार्थिकत्वस्यैवेत्यर्थः । आनन्तर्यमात्रस्य कारणाकारणसाधारणत्वेन जिज्ञासाकर्तव्यत्वरूपवाक्यार्थे कर्तृत्वेन कर्मत्वेन क्रियात्वेन वान्वयासंभवादार्थिकस्यैव तदन्वयादिति भावः । एवमेवेति अथशब्देनोक्तस्य हेतुत्वमतःशब्दार्थत्वेनैव व्याख्यानमित्यर्थः । **अधिकारिस्थं धर्ममिति** । अधिकारिनिष्ठं शमादिकमित्यर्थः । अत एवेत्यस्यार्थमाह **अर्थभेदेति** ।

**कं०रा०—** नन्वानन्तर्यप्रतियोगितयाऽथशब्देनोक्तस्य पूर्ववृत्तस्य पूर्वाधिगमस्यातःशब्देन हेतुत्वाभिधानात्तस्य चाथशब्देनासिद्धेः कथं वृत्तिकारमते पुनरुक्तिरित्याशङ्क्य तामुपपादयति **तथा हीत्यादिना । तस्येति** । तात्पर्यविषयस्येत्यर्थः । **पूर्वमीमांसेति** । अथातो धर्मजिज्ञासेत्यत्राथाध्ययनानन्तरं यतः पूर्ववृत्तमध्ययनमतस्तद्धेतुको धर्मविचारः कर्तव्य इत्येवमानन्तर्यप्रतियोगितयाऽथशब्दनिर्दिष्टस्याध्ययनस्य हेतुपरत्वेनातःशब्दस्य व्याख्यानं पूर्वमीमांसाव्याख्यातृभिः कृतम् । तथा चानन्तर्याभिधानमुखेनाथशब्देनैव पूर्ववृत्तस्य हेतुत्वलाभादतःशब्दवैयर्थ्यमिति दोषस्तेषामप्यस्तीति भावः । **अप्रसिद्धेति** । अप्रसिद्धस्याथात इत्यत्रैकपदत्वस्य कल्पनानुपपत्तेरित्यर्थः ।

**श्रीनिधि०— आर्थिकमिति** । अधिकारानन्तरं जिज्ञासा कर्तव्येत्युक्तेः पूर्ववृत्तस्य हेतुत्वमवगम्यते । अथादिरवैयर्थ्यान्यथानुपपत्तेः । अन्यथा व्यर्थमेव स्यादिति भावः । **अधिकारिस्थमिति** अधिकारमित्यर्थः । **विषयप्रयोजनसिध्यङ्गभूतमिति** । अथशब्देन सूचितं यत्प्रयोजनं तत्कथं जिज्ञासया भवतीत्याशङ्कायामाह जिज्ञासासाध्यप्रसादसाध्यमोक्षस्य सत्त्वादिति तदुपायः अतश्शब्देन कथ्यते । अन्यत्तु स्पष्टम् ।





**वा०चं०**— नन्वानन्तर्यमात्रवाचकाथशब्दस्य न हेतुत्वसमर्पकत्वमित्यत आह **तथा हीति**। **आनन्तर्यमात्रस्येति**। जिज्ञासापुष्कलकारणास्तित्वप्रतिपत्तौ प्रवृत्तिसंभवादन्यथाऽसंभवादिति भावः। आनन्तर्यमात्रोक्तेर्वैफल्येनाथशब्दार्थतो हेतुत्वलाभेऽप्यथशब्दस्यानन्तर्यमात्राभिधायित्वादतःशब्दस्य हेतुत्वमात्राभिधायित्वादभिधेयार्थभेदान्न पौनरुक्त्यमित्याशङ्क्ते **अथशब्दस्येति**। आनन्तर्यमात्रस्याथशब्दाभिधेयत्वेऽपि तत्र तस्यातात्पर्यादार्थिकार्थे च तात्पर्यात्तदर्थेनैवाथशब्दस्यार्थवत्त्वमित्याह **तथाऽपीति**। तात्पर्यविषयीभूतार्थेनैवार्थवत्त्वे नियामकमाह **तस्यैवेति**। अन्यथा लक्षणास्थलेऽप्यभिधेयेनैवशब्दस्यार्थवत्त्वापत्त्या लक्षणोच्छेदापत्तेरिति भावः। व्याख्यातृसंप्रदायानभिज्ञतावेदकमेतादृशं निराकरणमिति शङ्क्ते **पूर्वेति**। अज्ञानमूलकत्वान्न स संप्रदाय इत्याह **किमिति**। **अथशब्दो हीति**। अत्र जिज्ञासाजनकमित्युत्तरत्र सिद्ध्यङ्गभूतमित्युक्त्याऽथशब्देन च जिज्ञासाकारकस्यातःशब्देन च तत्प्रमाणस्योक्तिरित्यधिकारिस्थं धर्ममनुवदतीति विषयप्रयोजनसिध्यङ्गभूतं न्यायकलापं सूत्रक रः स्वयमाचष्ट इत्युक्त्या च शान्तो दान्त इत्यादिश्रुत्याद्युक्ताधिकारिस्थधर्मानुवादकत्वमात्रमथशब्दस्यातःशब्दस्य तु स्वयमेव विषयादिसिद्ध्यङ्गभूतवेदप्रामाण्यादिरूपन्यायकलापसूचकत्वमिति वैलक्षण्यमित्युक्तं भवति। **अर्थभेदेति**। अनेनास्मन्मतरीत्याऽर्थभेदसंभवेऽथशब्दोक्तहेतुत्वोपपादकत्वेन वाऽथशब्दसमर्पितविरागादिस्वरूपलाभसंपादकत्वेन वा विवरणाद्युक्तातःशब्दव्याख्यानमलग्नकमिति सूचितं भवति।

**वा०र०**— **प्रवृत्तीति**। अथशब्देन जिज्ञासापदोक्तविचारहेतुसाधनकलापानन्तर्याभिधानेन तत्कलापास्तित्वप्रतिपत्तौ विचारे प्रवृत्तिसंभवादित्यर्थः। आनन्तर्यमात्रोक्तेरित्यनुवदता मूले आनन्तर्यपदं तदुपलक्षणमिति व्याख्यातं भवति। मूलेनाभिधेयमित्यन्तशङ्काशेषतया अतःशब्देन तु तदभिधेयमिति सूचितं तदाह **अतःशब्दस्येति**। **न स इति**। व्याख्यातृसंप्रदायत्वेनोक्तः संप्रदाय एव न भवति। येन तद्विरोधः स्यात्। निर्दुष्टव्याख्यानस्यैव संप्रदायतया प्राप्तेरिति भावः। अनेन तेषां व्याख्यानमप्यनुपपन्नमित्येवं किमित्येतन्मूलार्थ उक्तो भवति। **न हि पराङ्गेति** मूलं योज्यमस्ति। ................। जनकमितीत्युक्त्येति संबन्धः। कारकस्योक्तिरिति संबन्धः। उक्तिरिति वैलक्षण्यमिति संबन्धः। अनुवदतीत्युक्त्या चेति संबन्धः। अथशब्दस्येत्यस्येतीति संबन्धः। ततश्च जिज्ञासाजनकमित्युक्त्याऽथशब्देन जिज्ञासाकारकस्योक्तिः सिध्यङ्गभूतमित्युक्त्या अतःशब्देन तत्प्रमाणस्योक्तिरित्येवं वैलक्षण्यमित्युक्तं भवति। तथाऽधिकारिस्थधर्ममनुवदतीत्युक्त्या शान्तोदान्त इत्यादिश्रुत्युक्ताधिकारिस्थधर्मानुवादकत्वमात्रमथशब्दस्यातःशब्दस्य त्वित्यादिसूचकत्वमिति वैलक्षण्यमित्युक्तं भवतीति फलितं ज्ञेयम्। **विवरणादीति**। आदिपदेन भामतीपरिग्रहः।

**स०व्र०**— ननु स्यादेतदेवं यदि भास्करादिभिरित्थं व्याख्यातं स्यात्। नैतदस्ति। किन्त्वथ शमादिसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येत्युक्ते; कुतः, न हि रासभसंपत्त्यनन्तरं घटः कर्तव्य इत्याशङ्कायां नाधिकारिविशेषणतया प्रकृतस्य शमादेः रासभतुल्यता तस्य जिज्ञासाहेतुत्वादित्यतःशब्देनोच्यत इति। सति चैवं क्व पौनरुक्त्यमित्यत आह **तथा हीति**। सत्यमेवं तैर्व्याख्यातमिति तथापि शमाद्यानन्तर्यविचारस्य यदाऽथशब्देनोक्तं





तदा शमादेस्तन्नियतपूर्ववर्तित्वरूपं हेतुत्वं लब्धमेव । अन्यथाऽऽनन्तर्यकथनं व्यर्थमापद्येत । तस्य च पुनरतः-शब्देनाभिधाने कथं न पौनरुक्त्यम् । न चोक्तशङ्कानिरासायातःशब्द इति वाच्यं हेतुत्वस्याथशब्देनैव लाभे शङ्काया एवानुदयादित्याशयः ।

**विठ्ठ०**— कथं तेषां पौनरुक्त्यं कथं वा नास्माकमित्यतस्तदुपपादयितुमाह **तथा हीति** । पूर्ववृत्तमिति यत्संपत्त्यनन्तरं जिज्ञासायाः कर्तव्यता तत्पूर्ववृत्तमानन्तर्यप्रतियोगिभूतं वस्तुजिज्ञासाधिकारप्रयोजकस्य सर्वस्य संपन्नत्वादिति जिज्ञासायाः कर्तव्यतायां हेतुतयैवानन्तर्याभिधानमुखेन अथशब्दो गमयतीत्यर्थः । केवलमानन्तर्यार्थकत्वे दोषमाह **आनन्तर्येति** । यत्किञ्चिदानन्तर्यस्य सर्वत्रापि संभवेन विशिष्यात्र कथनवैयर्थ्यादित्यर्थः । **आर्थिक इति** । अभिधेयानन्तर्यमात्रस्याप्रयोजकत्वेनार्थिके अधिकारिसंपत्तिरूपहेतावपि तात्पर्यात् तस्य तात्पर्यविषयस्यैव वाक्यार्थे मुख्यतः समन्वयविषयत्वादधिकारसंपत्त्यादेर्हेतुत्वम् अथशब्दार्थ इत्यतःशब्देनापि तदभिधाने पौनरुक्त्यं स्यादेवेति भावः । **एव व्याख्यातमिति** । अथ अध्ययनानन्तरं अत एवं अध्ययनस्य वृत्तत्वात् धर्मजिज्ञासा कर्तव्येत्येवमित्यर्थः ।

**६७८ सु०— ननु वेदप्रामाण्यादिकं पूर्वमीमांसायामुपपादितम् अतः किमर्थमत्र पुनः सूत्रितमिति चेन्न तदुपजीवित्वस्याप्रतिज्ञातत्वात् । एतन्मीमांसोपजीविनी खलु सेति पुराणे पठ्यते 'शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णय' इति । तथाऽपि 'न विलक्षणत्वादि'त्यादिना वेदप्रामाण्यादेः समर्थनान्न तदतःशब्दार्थ इति चेन्न एतत्प्रपञ्चत्वात्, क्वचिदर्थनिर्णये तात्पर्याच्च । तथा च वक्ष्यति 'स्वरूपनिर्णयायैवेति', 'यत्र तन्निर्णयमि'ति च ॥ तथापि कार्यपरत्वनिराकरणं नातःशब्दार्थस्तस्यानुपदमेव 'तत्तु समन्वयादि'ति निराकरिष्यमाणत्वादिति चेन्न । जगज्जन्मादिकारणतया शास्त्रयोनित्वस्य तत्र इतरनिरासेन ब्रह्मणि समर्थनात् । न हि कार्यवादिनः कार्यं तथाऽभ्युपयन्ति येन तत्र तन्निराकरणं सङ्गच्छेत ।**

**परि०**— रामानुजप्रक्रियामनुसृत्य शङ्कते **ननु वेदेति** । **पुराण इति** । भाष्योक्तस्कान्दपुराण इत्यर्थः । शब्दजातस्येति कर्तरि षष्ठी । यः शब्दसमूहैः क्रियमाणो निर्णयो यत्प्रमाणः यद्ब्रह्मसूत्रमूलक इत्यर्थः । अन्यार्थं तु जैमिनिरित्याद्युक्तविस्तृतिरूपत्वात् पूर्वतन्त्रस्यैतदुपजीवित्वं ध्येयम् । **क्वचिदिति** । द्वितीयाध्यायतृतीयचतुर्थपादयोः वेदवचसामन्योन्यविरोधपरिहारेण प्रामाण्यसमर्थनं तदर्थनिर्धारणाभिप्रायमित्यर्थः । **वक्ष्यतीति** । वियत्पादोपक्रमे 'अथाशेषसमाम्नायविरोधापाकृतिं प्रभुः । करिष्यन्नधिदैवाधिभूतजीवपरात्मनाम् । स्वरूपनिर्णयायैव वचनानां परस्परम् । पादेनानेनाविरोधं दर्शयत्यमित-





द्युतिरि'ति । तथां द्वितीयस्य चतुर्थपादोपक्रमे च । 'श्रुत्यर्थः श्रुतियुक्तिभ्यां विरुद्ध इव दृश्यते । यत्र तन्निर्णयं देवस्सुविशिष्टोपपत्तिभिः । करोती'ति च वक्ष्यतीत्यर्थः । **तत्रेति** । तत्तु समन्वयादित्यत्रोपक्रमादिबलेन वेदतात्पर्यस्य ब्रह्मणि निर्णेष्यमाणत्वादिति भावः । यद्वा सिद्धार्थबोधने फलाभावात्कार्यपरत्वं वेदान्तानामिति शङ्का तत्त्वित्यत्र निरस्यत इति रामानुजीयशङ्का सिद्धान्तरीत्या परिहार इति ध्येयम् ।

**यादु०— अप्रतिज्ञातत्वादिति** । अथशब्देनाप्रतिपादनादित्यर्थः । यथा रामानुजीयादिभिरथशब्दाभिधेयानन्तर्यावधिभूतकर्मज्ञानस्य पूर्वमीमांसासाध्यत्वेनैतन्मीमांसायास्तदुपजीवित्वमुक्तं न तथाऽस्माभिरुक्तम् । अथशब्दानन्तर्यावधिभूतस्यास्मदभिमतस्याधिकारिविशेषणस्य शमादेः पूर्वमीमांसानपेक्षत्वादिति भावः । **न विलक्षणत्वादित्यादिनेति** । अत्रादिपदेन समस्ताध्यायग्रहणम् । तत्र ह्युक्तार्थे युक्त्यादिविरोधपरिहारेण वेदप्रामाण्योपपादनात् । नाभाव उपलब्धेर्वैधर्म्याच्च न स्वप्नादिवत् पृथगुपदेशादित्यादिना च द्वितीयपादोपात्तस्य प्रपञ्चमिथ्यात्वनिराकरणतत्सत्यत्वजीवेशभेदादेः समर्थनादित्यर्थः । **क्वचिदर्थेति** । तृतीयचतुर्थपादयोरित्यर्थः । स्वरूपनिर्णयायैवेत्यस्य पूर्ववाक्यं 'करिष्यन् अधिदैवाधिभूतजीवपरात्मनाम्' इति । यत्र तन्निर्णयमित्यस्य च पूर्ववाक्यं 'श्रुत्यर्थः श्रुतियुक्तिभ्यां विरुद्ध इव दृश्यत' इति । **निराकरिष्यमाणत्वादिति** । कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यते यावताऽऽम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति क्रियापरत्वं शास्त्रस्य प्रदर्शितम् । अतो वेदान्तानामानर्थक्यं क्रियार्थत्वादिति शङ्कापरिहाराय तत्तु समन्वयादिति सूत्रस्य परेण व्याख्यातत्वात् तदनुसारेणेयमाशङ्केति ध्येयम् ।

**वं०प०— तथाऽभ्युपयन्तीति** । जगज्जन्मादिकारणतया शास्त्रयोनित्वेनेत्यर्थः ।

**आनन्दः— तदुपजीवित्वस्येति** । एतन्मीमांसायाः पूर्वमीमांसोपजीवित्वस्य इत्यर्थः । नन्वस्तु पूर्वमीमांसाया एतन्मीमांसोपजीवित्वमत्राह **एतन्मीमांसेति** । **यत्प्रमाणः** यद्ब्रह्ममीमांसामूलक इत्यर्थः । ननु नविलक्षणत्वादित्यत्र वेदप्रामाण्यस्य समर्थितत्वात् द्वितीयस्योत्तरपादद्वयेन श्रुतीनामन्योन्यविरोधपरिहारेण वेदप्रामाण्यस्य समर्थितत्वात्पौनरुक्त्यमित्याशङ्क्ते **तथापीति** । **एतत्प्रपञ्चत्वादिति** । न विलक्षणत्वादित्यादेरिति शेषः । **क्वचिदर्थनिर्णय इति** । क्वचित् द्वितीयस्य तृतीयचतुर्थयोः यच्छ्रुतिविरोधपरिहारादि क्रियते न तस्य प्रामाण्यव्युत्पादने तात्पर्यं किन्त्वर्थनिर्णये अर्थस्य वियदादेः स्वरूपनिर्णये तात्पर्याच्च न पौनरुक्त्यमित्यर्थः । **वक्ष्यतीति** । द्वितीयस्य तृतीयस्य चतुर्थपादयोरादावित्यर्थः । तत्र **स्वरूपेति** । तृतीयपादादौ **यत्रेति** । चतुर्थस्यादाविति ज्ञातव्यम् । **तथेति** । जगज्जन्मादिकारणतया शास्त्रयोनित्वेनेत्यर्थः ।

**कं०रा०— अप्रतिज्ञातत्वादिति** । अथशब्देनाप्रतिपादनादित्यर्थः । यथा रामानुजादिभिरथशब्दाभिधेयानन्तर्यावधिभूतकर्मज्ञानस्य पूर्वमीमांसासाध्यत्वेनैतन्मीमांसायास्तदुपजीव्यत्वं न तथाऽस्माभिरुक्तम् । अस्मदभि-





मताधिकारिविशेषणशमादेः पूर्वमीमांसाऽनपेक्षत्वात् । **न विलक्षणत्वादित्यादिनेति** । न विलक्षणत्वादस्य तथात्वं च शब्दादित्यनेन तथा श्रुतीनां परस्परविरोधपरिहारकेण न वियदश्रुतेरित्यादिना द्वितीयाध्यायगतपादद्वयेन च वेदप्रामाण्यादेः समर्थयिष्यमाणत्वात्तद्वेदप्रामाण्यादिकं नातःशब्दार्थः । अन्यथा प्रथमसूत्रेऽतःशब्देनोक्तस्य वेद-प्रामाण्यादेरुत्तरत्रापि वचनेन पुनरुक्तिप्रसङ्गादिति भावः । **एतदिति** । न विलक्षणत्वादस्य तथात्वं च शब्दादित्यस्य प्रथमसूत्रस्थातःशब्दोक्तवेदप्रामाण्यादिप्रपञ्चकत्वात् । क्वचिद्द्वितीयाध्यायगतपादद्वये श्रुतीनां परस्परविरोधपरिहार-द्वारा अध्यात्मतदितरस्वरूपनिर्णयमात्रपरत्वेन वेदप्रामाण्यनिर्णयपरत्वाभावाच्च न पुनरुक्तिदोष इति भावः । पाद-द्वयस्यार्थस्वरूपनिर्णयमात्रपरत्वं चाचार्यवचनादेव ज्ञायत इत्यभिप्रेत्याचार्यवचनमुदाहरति **तथा च वक्ष्यतीति** । ''अथाशेषसमाम्नायविरोधापाकृतिं प्रभुः । करिष्यन्नधिदैवादिभूतजीवपरात्मनाम् । स्वरूपनिर्णयायैव वचनानां परस्परम् । पादेनानेनाविरोधं दर्शयत्यमितद्युतिरि''ति तृतीयपादे श्रुत्यर्थः श्रुतियुक्तिभ्यां विरुद्ध इव दृश्यते । यत्र तन्निर्णयं देवः विशिष्टोपपत्तिभिः करोत्यनेन पादेनेति चतुर्थपादे चाचार्यस्तथैव वक्ष्यतीत्यर्थः । **तस्येति** । तत्तु समन्वयादित्यनुपदमेवोपक्रमादिलिङ्गैः कृत्स्नस्यापि शास्त्रस्य ब्रह्मपरतायाः समर्थनेन कार्यपरत्वस्य निराकरिष्य-माणत्वादित्यर्थः । **जगदिति** । तत्तु समन्वयादित्यत्र जगज्जन्मादिकारणत्वाकारेण शास्त्रप्रतिपाद्यत्वस्य हरहिरण्य-गर्भादिनिष्ठत्वे तत्रत्यपूर्वपक्षन्यायेन प्राप्ते तन्निरासेन तस्य ब्रह्मनिष्ठत्वसमर्थनादित्यर्थः । **न हीति** । कार्यवादिनः कार्यं जगज्जन्मादिकारणत्वेन शास्त्रप्रतिपाद्यं न ह्यभ्युपयन्ति । येन समन्वयसूत्रे तन्निराकरणं सङ्गतं स्यात् । तथा च तत्र कार्यपरत्वनिराकरणाभावात्तन्निराकरणस्यातःशब्दार्थत्वं युक्तमिति भावः ।

**श्रीनिधि०— क्वचिदिति** । वियत्पाद इत्यर्थः ।

**वा०चं०—** नन्वेवं पुनरुक्तिपरिहाराय यतमानस्याथशब्देन पुनरुक्त्यभावेऽपि पूर्वमीमांसादिना तदपरिहारात्सर्वमिदं गजस्नानमित्याशङ्कते **नन्वित्यादिना** । अप्रतिज्ञातत्वादित्यनेन तथाप्रतिज्ञातवतामिव नास्माकं मते तादृक्पर्यनुयोगार्हतेति सूचयति । ननु माऽस्तु तथा प्रतिज्ञा । वस्तुतस्तदुपजीवित्वात्पुनरुक्तिस्तदवस्थैवेत्यत आह **एतदिति** । यद्वा तदुक्तार्थस्यात्रोक्तिमात्रेणास्य तेन पौनरुक्त्ये अनेन तस्य पौनरुक्त्यापत्त्याऽस्य तदुप-जीवित्वं वक्तव्यम् । तच्च रामानुजीयानामिवास्मत्प्रतिज्ञानुसारेणोत वास्तवाभिप्रायेणाहोस्वित्तदुपजीवनेनैवोपपत्तौ पुनःसूत्रणमयुक्तमिति । नाद्य इत्याह **तदिति** । न द्वितीय इत्याह **एतदिति** । तृतीयपक्षं च पूर्वमीमांसायां तन्निरूपणस्यातीवसङ्गतिशून्यत्वात्तदुपजीवनं न युक्तमित्याशयेनात एव न तत्रोक्तस्यात्रोपजीवनमित्युत्तरग्रन्थेन निराकरिष्यतीति द्रष्टव्यम् । इत्यादिनेत्यादिपदेनाभिमान्यधिकरणस्य द्वितीयाध्यायीयतृतीयचतुर्थपादयोश्च ग्रहणम् । साधारणं परिहारमभिधाय तृतीयादिपादांशे विशेषेण तमाह **क्वचिदिति** । अर्थनिर्णये वियदाद्युत्पत्त्यादिरूपप्रमेय-निर्णये । अत्र तत्पादद्वयभाष्यं ज्ञापकत्वेनाह **यथेति** । पूर्वपक्षी स्वकृतापव्याख्यानानुसारेण शङ्कते **तथाऽपीति** । तस्यैवासङ्गतत्वान्न तदनुरोधेन पौनरुक्त्यशङ्कोचितेत्याह **न जगदिति** ।





**वा०र०**— तदुपजीवित्वस्येत्येतत्पर्यन्तधावनस्वारस्याय पौनरुक्त्यस्य तदुपजीवित्वे पर्यवसानमाश्रित्य पक्षान्तरमाह **यद्वेति** । **एतदध्यायीयेति** । न विलक्षणत्वाधिकरणं यदध्यायगतं तदध्यायीयेत्यर्थः । अर्थनिर्णय इति सप्तम्यन्तस्य प्रथमान्ततयानुवादपूर्वकं प्रथमान्ततयैव व्याख्यानम् । सप्तम्यन्तत्वमुभयत्रापि वेति ज्ञेयम् । समन्वयसूत्रे कार्यपरत्वनिराकरणस्य स्वरीत्याऽभावादाह **स्वकृतेति** ।

**स०व्र०**— **न विलक्षणत्वादित्यादिनेति** । आदिपदेन समस्ताध्यायग्रहणम् । तत्र ह्युक्तार्थे युक्त्यादि-विरोधपरिहारेण वेदप्रामाण्याद्युपपादनात् । **क्वचिदर्थनिर्णय इति** । तृतीयचतुर्थपादयोरित्यर्थः । स्वरूपनिर्णया-यैवेत्यस्य पूर्ववाक्यं 'करिष्यन्नधिदैवाधिभूतजीवपरात्मनामि'ति । यत्र तन्निर्णयमित्यस्य च पूर्ववाक्यं 'श्रुत्यर्थः श्रुतियुक्तिभ्यां विरुद्ध इव दृश्यते' इति ।

**वि०ट०**— रामानुजमतानुरोधेन शङ्कते **ननु वेदेति** । **अप्रतिज्ञातत्वादिति** । यथा रामानुजादिभिरथ पूर्वमीमांसया कर्मज्ञानसिध्यनन्तरमित्येतन्मीमांसायाः तदुपजीवित्वमथशब्दार्थतया प्रतिज्ञातं प्रतिपादितं तदास्माभिरप्रतिपादितत्वादित्यर्थः । अथवा प्रतिज्ञातत्वात्सर्वथा प्रसक्तत्वाद्विषयप्रयोजनाधिकार्यभावादिना जिज्ञासाया अकर्तव्यत्वे पूर्वपक्षिते ब्रह्मशब्देन विषयसमर्पणमतःशब्देन प्रयोजनादिनिरूपणमथशब्देनाधिकार-निरूपणमित्येवमुक्तत्वेन पूर्वमीमांसोपजीवित्वस्याप्रसक्तत्वादिति भावः । **शब्दजातस्येति** । सर्वैः शब्दसमूहैः पूर्वमीमांसादिभिः क्रियमाणो निर्णयो यत्प्रमाणो यन्मूलकः एवंविधानि सूत्राणीत्युत्तरेणान्वयः । न विलक्षणत्वादी-त्यादिपदेन समस्ताध्यायसङ्ग्रहः । तत्र युक्त्याद्यशेषविरोधपरिहारद्वारा प्रामाण्यदर्शनात् । **क्वचिदिति** । तृतीय-चतुर्थपादयोरित्यर्थः । **वक्ष्यतीति** । 'अथाशेषसमाम्नायविरोधापाकृतिं प्रभुः । करिष्यन्नधिदैवाधिभूतजीवपरात्म-नाम् । स्वरूपनिर्णयायैवे'ति वियत्पादोपक्रमे 'श्रुत्यर्थश्रुतियुक्तिभ्यां विरुद्ध इव दृश्यते । यत्र तन्निर्णयं देवः करोती'ति तुर्यपादोपक्रमेऽपि वक्ष्यतीत्यर्थः । **तत्तु समन्वयादिति** । तत्र सिद्धरूपे ब्रह्मणि सर्ववेदसमन्वयकथनादिति भावः । **न हि कार्यवादिन इति** । न हि जगज्जन्मादिकारणतया शास्त्रप्रतिपाद्यत्वं कार्यस्याभ्युपयन्ति तथाच कार्यनिराकरणं न समन्वयसूत्रसङ्गतमिति भावः ।

**॥ एतद्विरोधपरिहारस्य अत्र अप्रकृतत्वम् इति शङ्कायाः**
**अतःशब्देन संक्षिप्तसूचनायाश्चानुपपन्नत्वमिति शङ्कायाश्च निरासः ॥**
**॥ एतच्छङ्काद्वयस्य साहचर्येण प्रकारद्वयेन परिहारः ॥**

**ब्रह्मतर्कोक्तत्वेन प्रकृतत्वात् अतःशब्देन परामर्शस्य युक्तता पौनरुक्त्यापत्तेः सङ्क्षेपस्य उपपत्तिश्च**—

**६७९ सु०— स्यादेतत् । "तथापि एतदयुक्तम् । अतःशब्दो हि प्रकृतस्य हेतुत्वमाह, न पुनर्वेदप्रामाण्यादिकमेव साक्षात् । न चात्र तत्प्रकृतम् अस्यैव प्रथमवाक्यत्वात् । पूर्वमीमांसाप्रकृतोपजीवनं तु नेष्यत एव । न च कार्यनिराकरणं तत्प्रकृतम् । तत्कथ-**





**मस्यार्थस्यातःशब्दार्थतया व्याख्यानम् । अन्यथोत्सूत्रिताभिधाने भाष्यत्वव्याघातः ॥ किञ्चायमर्थो ब्रह्मजिज्ञासाकर्तव्यतायामत्यन्तोपयुक्तो विस्तरादेव पूर्वमीमांसायामिव वक्तव्यः सूत्रकृतैव । अत इति सङ्क्षेपेण कस्मादुक्तः;'' इत्याशङ्काद्वयं परिहरति एतत्सर्वमिति ।**

**अनु०— एतत्सर्वं तर्कशास्त्रे ब्रह्मतर्के हि विस्तरात् ॥**
**उक्तं विद्यापृथक्त्वात्तु सङ्क्षेपेणात्र सूचितम् ।**

**परि०— एतदिति** । पञ्चधाऽतः शब्दस्य व्याख्यानमध्ये यदाद्यं ज्ञानी प्रियतमोऽतो मे इत्यादिना कृतं मोक्षहेतुप्रसादजनकज्ञानकारणार्थकत्वरूपं व्याख्यानं तस्य 'इत्यादेर्न हरिं विना । ज्ञानस्वभावतोऽपि स्यान्मुक्तिः कस्यापि हि क्वचिदि'त्यत्रोक्तदिशोपपन्नत्वेऽपि बन्धसत्यत्वाद्यर्थ-चतुष्टयपरत्वव्याख्यानमयुक्तमित्यर्थः । **प्रकृतस्य हेतुत्वमाहेति** । अत इति एतच्छब्दस्य पञ्चम्यर्थकतसिलन्तस्य रूपम् । एतस्मादित्यर्थे पञ्चम्यास्तसिलिति पञ्चम्यास्तसिलादेशे एतदोशिति प्रातिपदिकस्याशादेशे अत इति निष्पन्नत्वात् । तथा चात इति प्रातिपदिकाकारेण प्रकृतं परामृश्य तसिल्प्रत्ययेन हेतुत्वं जिज्ञासाकर्तव्यतां प्रति वक्तीत्यर्थः । **न पुनर्वेदप्रामाण्यादिकमिति** । यद्यपि बन्धसत्यत्वादिकमिति वक्तव्यं तथाऽप्यतो यथार्थबन्धस्येत्येतद्व्याख्यानावसरे बन्धमिथ्यात्वमाशङ्क्य सेयमाशङ्काऽतःशब्देनापेक्षितार्थहेतुसूचकेन निराकृतेति ग्रन्थेन बन्धसत्यत्वपरामर्शित्वमुपपादितं मत्वा प्रामाण्यादीत्येवोक्तम् । आदिपदेन वा तस्य संग्रहः । नन्वेवं तेनैव न्यायेन वेदप्रामाण्यादिपरामर्शित्वमपि नानुपपन्नमिति चेत् सत्यम् । प्रकारान्तरेणाप्युक्तार्थपरामर्शित्वोपपादनाय इयमाशङ्केति अदोषः । **तत्प्रकृतमिति** । पूर्वमीमांसा प्रकृतं च नेत्यर्थः । तत्र कार्यपरत्वस्यैव पूर्वमीमांसकैः वर्णनादिति भावः ।

**यादु०—** अभ्युपेत्याह **न च कार्यनिराकरणमिति** । एवमग्रेऽपि । **वक्ष्यतीति** । 'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः । मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम् ।' इत्यत्रेति शेषः ।

**वं०प०— अयमर्थ इति** । वेदप्रामाण्यादिरूप इत्यर्थः ।

**आनन्दः—** ननु सूत्रानुक्तमप्युच्यते ततः को दोष इत्यत्राह **अन्यथेति** । अस्यैव विवरणं **उत्सूत्रिताभिधान इति** । सूत्रार्थो वर्ण्यत इति भाष्यलक्षणाभावाद्भाष्यत्वव्याघात इत्यर्थः । शङ्काद्वयपरिहारं क्रमेणाह **ब्रह्मेति** ।

**कं०रा०— न चेति** । वेदस्य कार्यपरत्वनिराकरणं तत्प्रकृतं पूर्वमीमांसायां प्रकृतं नैव तथा च पूर्वमीमांसाप्रकृतोपजीवनेऽपि कार्यपरत्वनिराकरणस्यातःशब्दार्थत्वं न युक्तमिति भावः ।





**वा०चं०**— उत्तरमूलस्य बुद्ध्या विवेकेन शङ्काद्वयपरिहारकत्वेन योजयितुं शक्यत्वात्तदनुसारेण शङ्काद्वय-मुत्थापयति **स्यादेतदिति**। पूर्वमीमांसायामिवेत्युक्तिरुत्तरत्र तदनौचित्यं प्रदर्शयितुमुपक्षेपायेति द्रष्टव्यम्।

**वा०र०**— **उत्तरमूलस्येति**। एवं भाष्यकारसूचितपरिहारोपेतशङ्काः परिहृत्येति पूरणीयम्। ब्रह्मतर्के एतत्सर्वमुक्तमित्यादिना यदि विस्तरे भारस्तर्हि सङ्क्षेपेण वचनोपपत्तिप्रतिपादनसिध्या तेन विस्तराद्वक्तव्यत्वशङ्का-परिहारसिद्धावपि प्रकृतत्वाभावशङ्कापरिहारो न सिध्यति। एकवाक्यत्वेन विशिष्टार्थस्य द्वितीयशङ्कापरिहारायैव। पर्याप्तिप्रतीतेरित्यतः आपातत एकशङ्कापरिहारस्यैव प्रतीतावपि ब्रह्मतर्क इत्यस्यावृत्त्याश्रयणेन ब्रह्मतर्के एतत्सर्वमुक्तमित्यंशमात्रेण बुध्या विविक्तेनाप्रकृतत्वशङ्कानिरासस्यापि प्रतीत्युपपत्तेर्नानुपपत्तिरित्यर्थः। तदेतदुक्तं योजयितुं शक्यत्वादिति उपजीवनं नेष्यत इति वस्तुगत्योक्तम्। तदुपजीवनमंशविशेषे न संभवति चेत्याह **न च कार्येति** मूलम्। नापीत्यर्थः। **तत्प्रकृतं** पूर्वमीमांसाप्रकृतम्। तत्र वृत्तिकारान्तरैः कार्यस्यैव प्रतिपादनाङ्गीकारादिति भावः। पूर्वमीमांसायामिवेत्यस्याधिक्यशङ्कां वारयितुं तदभिधानप्रयोजनमाह **पूर्वेति**।

**वि०**— **वेदप्रामाण्यादिकमेवेति**। अत्र ब्रह्मतर्कोक्तस्यैवातःशब्दपरामृष्टतया वक्ष्यमाणत्वेन वेदप्रामा-ण्यादिविचारार्थमेव ब्रह्मतर्कशास्त्रप्रवृत्तेः 'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः' इत्यत्र वक्ष्यमाणत्वाच्च बन्धयाथार्थ्यादेः प्राथमिकत्वेऽपि वेदप्रामाण्यस्य स्वपदेन ग्रहणं वेदप्रामाण्यस्यातिविरोधित्वेन तत्प्रतियोगितया वा बन्धसत्यत्वादेरतःशब्दार्थत्वस्यातो यथार्थबन्धस्येत्यस्य परामर्शोपपादनपूर्वकमुक्तत्वात्सिद्धपरत्वस्य ब्रह्मणि वेदप्रामाण्यादेरित्यर्थपर्यवसानेन साक्षादुक्ततया च वेदप्रामाण्यादेरिति ग्रहणं साध्विति ज्ञातव्यम्। पूर्वमीमांसोप-जीवनाङ्गीकारेऽपि नैतद्युक्तमित्याह **कार्येति**। न केवलं कार्यनिराकरणं तत्राप्रकृतमिति। प्रत्युत तद्विरुद्धं च तत्र कार्यताया एवाभिधानादिति ध्येयम्।

**चषकः**— **अतःशब्दो हि प्रकृतस्य हेतुत्वमाहेति**। एतदोऽनिति प्रकृत्यंशस्यानादेशो तत्प्रकृतिक-पञ्चम्याश्च पञ्चम्यास्तसिलिति तसिलादेशे निष्पन्नोऽतःशब्दः। सर्वनामरूपप्रकृत्यंशोपस्थाप्यस्य प्राचीनमते ज्ञापकत्वरूपं हेतुत्वं नव्यमतदिशा ज्ञानज्ञाप्यत्वं वा आहेत्यर्थः। प्रपञ्चितं चैतच्चन्द्रिकाभावदीधितावस्माभिः।

**६८० सु०— यस्मादित्यर्थे हिशब्दः। तुशब्दस्य 'अत्र त्वि'ति संबन्धः, तस्मादित्यर्थे वा। यस्मात् एतत्सर्वं प्रमेयं ब्रह्मतर्काभिधे तर्कशास्त्रे विस्तरादुक्तम् तस्मात् अत्र मीमांसो-पक्रमेऽत इति सङ्क्षेपेण सूचितम् इत्यनेन शङ्काद्वयमपि परास्तम्। 'ब्रह्मतर्कोक्तत्वेन प्रकृतत्वादिदं(दतः)शब्देन परामर्शो युज्यते, तत्रैव विस्तरेणोक्तत्वादत्र सङ्क्षेपकरणं चोप-पद्यते' इति।**





**परि०— अतःशब्देन परामर्शो युज्यत इति** । क्वचिदिदंशब्देनेत्यपि पाठः । स च लेखकदोषमूलो ध्येयः । अयं चासौ शब्दश्च इदंशब्दस्तेन अतःशब्देनेति यावदिति वाऽर्थो ध्येयः ।

**कं०रा०— ब्रह्मतर्कोक्तत्वेनेति** । ब्रह्मतर्कोक्तत्वेन प्रकृतत्वादतःशब्देन परामर्शो युज्यत इति पाठे न काचिदनुपपत्तिः । इदंशब्देन परामर्श इति पाठे तु अयं चासौ शब्दश्चेदंशब्द इदंपदार्थस्य वाचकशब्द इदंशब्द इति वाऽर्थः । तेन 'एतदोन्' इत्यनादेशो निष्पन्नस्यातःशब्दस्येदंशब्दरूपत्वाभावादिदंशब्देनेत्येतदयुक्तम् । इदंशब्दात् तसिल्प्रत्यये हि 'इदमइश्' इतीशादेशे इत इतिरूपेण भाव्यमिति दूषणमलग्नकं बोद्धव्यम् ।

**वा०चं०—** हिशब्दस्य यस्मादित्यर्थकत्वस्यावश्यकत्वाद्धेतुहेतुमद्भावेन व्याख्याने नात्रत्यतुशब्दस्य विशेषप्रयोजनमित्यत आह **तस्मादित्यर्थे वेति** । **इदंशब्देनेति** । यद्यप्येतदोऽनित्युक्तत्वात्- अत इत्येतदोरूप-मित्येतच्छब्देनेत्येव वक्तव्यम् । तथाऽप्येतदोऽनित्यत्रेदम इशित्यत इदम इत्यनुवृत्तिरस्त्वित्याशयेन वाऽयं प्रकृतोऽत इतिशब्द इदंशब्द इत्याशयेन वेदंशब्देनेत्युक्तमिति द्रष्टव्यम् ।

**वा०र०— यद्यप्येतदोशित्यादि** । एतच्चात एव चोपमेत्येतदधिकरणटीकाव्याख्यावसरे अस्माभि-र्विवरिष्यते **अयं प्रकृत इति** । अनेनायं चासौ शब्दश्चेदं शब्द इति समस्तं पदमित्युक्तं भवति । धर्मशास्त्रस्यैव च ग्रहणमिति पाठः ।

**स०व्र०— इदंशब्देन परामर्श इति** । अयं चासौ शब्दश्च इदंशब्दः तेन सौत्रातःशब्देनेत्यर्थो लभ्यते । तेनातःशब्दस्यैतदोऽशित्यनेनैतदोऽशित्यादेशे निष्पन्नतया कथमिदंशब्देनेत्युक्तमिति शङ्काऽनवकाशः । एवमग्रेऽपि । अथवेदम इश् इत्यतः एतदोशितिसूत्रे इदंशब्दस्यानुवृत्तेर्वक्तुमशक्यत्वात् । इदम्शब्दादपि अशुप्रत्ययोपपत्तौ अत इत्यस्येदंरूपत्वसंभवात् इदंशब्देनेति युक्तमिति ।

**विठ्ठ०— इदंशब्देनेति** । अयं चासौ शब्दश्च इदंशब्दः तेन सौत्रातःशब्देनेत्यर्थः । वस्तुतस्तु अत इति नेदमोरूपं किन्तु पञ्चम्यन्तादेतदोरूपं स च स्थ....लिति सूत्रेण स्वार्थिकतसिल्प्रत्यये लकारस्येत्संज्ञायां लोपे प्रकृतेरेतदोऽशादेशे शित्वादनेकाल्शित्सर्वस्येति प्रकृतेः अकारे सति अत इति निष्पत्तौ सुकारस्य रुत्वविसर्गयोः सतोरत इति हि रूपम् । इदमोरूपत्वे इत इति स्यात् । अत इदं चासौ शब्दश्च तेनेत्येव व्याख्यानं युक्तमिति ।

तर्कशास्त्रमीमांसाशास्त्रयोः विद्यापृथक्त्वम्—

**६८१ सु०— ग्रन्थान्तरोक्तस्य कथमत्र प्रकृतत्वम्, तथात्वे वा कुतो न पूर्वमीमांसोक्त-परामर्शोऽयमिष्यत इत्यत उक्तम् तर्कशास्त्र इति । तर्कशास्त्रं हि मीमांसाङ्गमिति वक्ष्यति ॥ ब्रह्मतर्के विस्तरेणोक्तत्वमत्र सङ्क्षेपकरणस्य घटकमात्रं न नियामकम् । तत्र विस्तरेणोक्त-स्यात्रापि विस्तरेणोक्तौ बाधकाभावात्प्रस्थानभेदेन अपुनरुक्तेरित्यत उक्तम् विद्येति ।**





**आनन्दः**— कथमेतावतोक्तशङ्कापरिहार इत्यत आह **तर्कशास्त्रं हीति** । तथा चाङ्गे प्रकृते अङ्गिनि परामर्शो युज्यत इति भावः ।

**कं०रा०— तर्कशास्त्रमिति** । 'मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनमि'त्यत्र तत्सिद्धैस्तर्कशास्त्र-व्युत्पादितमानन्यायैः प्रमेयशोधनरूपा मीमांसा क्रियत इति तर्कशास्त्रं मीमांसाङ्गमित्याचार्य एव वक्ष्यति हीत्यर्थः ।

**श्रीनिधि०— घटकमात्रमिति** । विस्तरेण ज्ञानस्यान्यतोऽपि संभवादिति भावः ।

**वा०चं०**— तर्कशास्त्र इत्यस्य तत्सिद्धैरिति वक्ष्यमाणमीमांसाङ्गत्वयुक्तिसूचकत्वेनोक्तशङ्कापरिहारकत्व-मित्याह **तर्केति** ।

**चषकः— तर्कशास्त्रं हि मीमांसाङ्गमिति वक्ष्यतीति** । 'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः । मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनमि'त्यत्रेत्यादिः ।

**६८२ सु०— एतदुक्तं भवति । अस्ति तावत्तर्कमीमांसाविद्ययोः पृथक्त्वम् । 'वेदाः सर्वाङ्गानि सत्यमायतनमि'ति पृथक् श्रवणात् । वेदाश्चत्वारः, सर्वाङ्गानीति पुराणस्मृति-तर्कशास्त्रसहितानि षडङ्गानि गृह्यन्ते, सत्यमिति मीमांसा । तथा च चतुर्दशविद्या-स्थानान्युक्तानि भवन्ति । तदर्थं च व्युत्पाद्यभेदेनावश्यंभवितव्यम् । ततश्च प्रमेयव्युत्पादनपरे मीमांसाशास्त्रे तर्कशास्त्रव्युत्पाद्यं वेदप्रामाण्यादिकं यदि विस्तराद् व्युत्पाद्येत तदा विद्याभेदो न स्यात् । सङ्क्षेपेण सूचने तु नायं दोषः । प्रायिकत्वाद्विद्याभेदस्य ॥ सर्वथाऽन्योन्यासंस्पर्शे अङ्गाङ्गिभावानुपपत्तेः । अतोऽत्रास्य सर्वस्य सङ्क्षेपकरणमेवोचितमिति ॥ अनेन जैमिनी-यानां प्रमाणलक्षणादिनिरूपणं नातीव मीमांसायां सङ्गतमिति सूचितं भवति । अत एव न तत्रोक्तस्यात्रोपजीवनमिति ।**

**परि०— इति पृथक्श्रवणादिति** । तलवकारोपनिषदि श्रवणादित्यर्थः । कथमत्र मीमांसाया-स्तर्कशास्त्रात्पार्थक्योक्तिरित्यतस्तद्वाक्यं व्यनक्ति **वेदाश्चत्वार इति** । यद्यपि 'ऋग्यजुःस्सामाथर्वाख्याः पञ्चरात्रं च भारतम् । मूलरामायणं चैव पुराणं भगवत्परम् । वेदा इत्युच्यते सद्भिः शिक्षाद्यं स्मृतयस्तथा । अङ्गानि सत्यं मीमांसा तद्विद्यायतनं त्रयमि'ति तलवकारभाष्येऽन्यथा वेदादिस्वरूपमुक्तम् । तर्कशास्त्रं च नोक्तम् । तथापीहानुग्राह्यप्रमाणानां वेदपदेन ग्रहणं वेदोपबृंहकत्वेन तदङ्गत्वात्पुराणादेः अङ्गपदस्वारस्येन सर्वाङ्गानीत्यनेन पुराणादीनां ग्रहणम् । अनुक्तस्यापि तर्कस्योपलक्षकत्वमुपेत्य वा शिक्षाद्यमित्यत्राद्यपदेन





वा ग्रहणमभिप्रेत्य व्याख्यानान्तरमित्यदोषः। षडङ्गानि शिक्षाकल्पो व्याकरणं निरुक्तं छन्दोज्योतिषमिति षडङ्गानि। 'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दशे'ति स्मृतिं हृदि कृत्वाह **तथाच चतुर्दशेति**। **अनेनेति**। ब्रह्मतर्कस्याङ्गत्वकथनेनेत्यर्थः। **प्रमाणलक्षणादि-निरूपणमिति**। तद्धि पद्धत्यादौ व्यक्तम्।

**यादु०**— नन्वत्र कथं मीमांसायास्तर्कशास्त्रात्पार्थक्योक्तिरित्यतस्तद्वाक्यं व्याचष्टे **वेदाश्चत्वार इति**। नन्विदं व्याख्यानं 'ऋग्यजुःसामाथर्वाख्याः पञ्चरात्रं च भारतम्। मूलरामायणं चैव पुराणं भगवत्परम्। वेदा इत्युच्यते सद्भिः शिक्षाद्यं स्मृतयस्तथा। अङ्गानि सत्यं मीमांसा तद्विद्यायतनं त्रयम्' इति तलवकारभाष्योदाहृतप्रमाणविरुद्धम्। तत्र पुराणस्य वेदान्तर्भावकथनात्। तर्कशास्त्रस्याकथनाच्चेत्यत आह **तथा च चतुर्दशेति**। तथा च 'पुराणन्याय-मीमांसाधर्मशास्त्राङ्गमाश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश।' इति प्रमाणान्तरोक्तविद्यास्थान-विवक्षामाश्रित्य प्रकृतोपयोगार्थमित्थं व्याख्यातम्। एवं च प्रमाणद्वयबलाद्विवक्षाभेदेन व्याख्यानद्वयमपि श्रुत्यभि-प्रेतमिति भावः। **प्रायिकत्वादिति**। प्राधान्याभिप्रायकत्वादित्यर्थः। तथा च योऽर्थो यत्र प्राधान्येन प्रतिपाद्यते सा विद्या तदर्थेति भावः। ननु किं प्रायिकत्वाङ्गीकारेण विद्याभेदभङ्गभयात्सङ्क्षेपेणापि सूचनं नाङ्गीकार्यमित्यत आह **सर्वथाऽन्योन्येति**। **जैमिनीयानामिति**। जैमिनीयानामित्युक्त्या प्रमाणलक्षणादिकं सूत्रार्थतया शबरादिभिरेव वर्णितम्। न तत्सूत्रकारस्य जैमिनेरभिप्रेतमिति सूचयति **अत एवेति**। सूत्रे तस्यानुक्तत्वाद्भाष्यादेरसङ्गतार्थत्वादिति भावः।

**आनन्दः**— ननु विरुद्धो हेतुः मया विद्याभेदमाश्रित्यैवापौनरुक्त्यस्योक्तत्वात् तस्यैव च सिद्धान्तेऽपि हेतुत्वस्योक्तत्वात्। फलप्रतिपाद्यभेदेन विद्यापृथक्त्वे प्रमाणाभावाच्चेत्यत आह **एतदुक्तं भवतीति**। **नायं दोष इति**। विद्यैक्यलक्षणो दोषो नेत्यर्थः। कथमित्यत आह **प्रायिकत्वादिति**। ब्रह्ममीमांसायाः प्रायेण प्रमेय-व्युत्पादनपरत्वात्तर्कशास्त्रस्य च प्रामाण्यप्रायेण व्युत्पादनपरत्वाल्लेशेन तत्प्रतिपादकत्वेऽपि भेद एवेत्यर्थः। ननु लेशेनापि तदभावो वक्तव्यः। अन्यथा अभेदः स्यादित्यत्राह **सर्वथेति**। **अनेनेति**। प्रामाण्यादिव्युत्पादनस्य सङ्क्षेपकरणेनेत्यर्थः। **अत एवेति**। पूर्वमीमांसायां प्रामाण्यव्युत्पादनस्यासङ्गतत्वादेवेत्यर्थः।

**कं०रा०**— **आयतनमिति**। आयतनमिति विद्योत्पत्तिकारणमित्यर्थः। **षडिति**। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गानीत्यर्थः। यद्यप्यङ्गत्वेन शिक्षादीनामेव प्रसिद्धत्वात्सर्वाङ्गानीत्यनेन तेषामेव ग्रहणं कर्तुमुचितम्। न पुराणस्मृतितर्कशास्त्रसहितानां तथाऽप्यधिकस्य सर्वशब्दस्य प्रयोगात्पुराणस्मृतितर्कशास्त्राणामपि वेदोपकारकत्वेनाङ्गत्वाच्चतुर्दशविद्यास्थानानां ग्राह्यत्वाच्च सर्वाङ्गानीत्यनेन पुराणस्मृतितर्कशास्त्रसहितानां शिक्षादीनां ग्रहणं कृतमिति द्रष्टव्यम्। **सत्यमितीति**। न च वाच्यं सत्यशब्दस्य मीमांसायां योगरूढ्योरभावात्कथं सत्यशब्देन मीमांसा गृह्यत इत्युक्तिरिति। सदेव सोम्येदमग्र आसीत्। सता सोम्य तदा संपन्नो भवति सति संपद्य न विदुरित्यादिषु

ब्रह्मवाचकत्वेन प्रसिद्धे सच्छब्देऽबाध्यवाचके वा तस्मिन्नुपपदे यातेरन्तर्णीतण्यर्थादातोऽनुपसर्गे क इति कप्रत्ययेऽयस्मयादीनि छन्दसीत्युपपदस्य भसंज्ञाश्रयणेन जश्त्वाभावे आतो लोप इटि चेत्यकारलोपे च सति निष्पन्नस्य सत्यशब्दस्य सद्ब्रह्माबाध्यं वा यापयति ज्ञापयतीति योगस्य मीमांसायां संभवेन सत्यशब्देन मीमांसा गृह्यत इत्युक्तेरुपपत्तेः । वस्तुतस्तु निर्णीयते यतः सम्यगिदं सत्यमिति स्फुटम् । ''श्रुतिस्मृत्युदितं सर्वं व्यक्तं मीमांसयैतया । सत्यमित्युच्यते तस्मान्मीमांसा ब्रह्मनिश्चया'' इति प्रमाणानुसारेण सत्यशब्दस्य मीमांसावाचित्वात् । तेन तद्ग्रहणमिति ध्येयम् । **तथा चेति** । एवं व्याख्याने वेदाः सर्वाङ्गानि सत्यमायतनमित्यनेन ''अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दशे''ति वचनान्तरसिद्धानि चतुर्दशविद्यास्थानान्युक्तानि भवन्तीत्यर्थः । **तदर्थमिति** । तर्कमीमांसाविद्यायाः पृथक्त्वार्थमित्यर्थः । **प्रायिकत्वादिति** । तत्प्रतिपाद्यबाहुल्य-प्रयुक्तत्वात्तत्तद्विद्याभेदस्येत्यर्थः । ननु तर्कशास्त्रव्युत्पादितवेदप्रामाण्यादेः मीमांसायां सर्वात्मनाऽनुक्तिरेव किं न स्यात्तयोर्भेदार्थमित्यत आह **सर्वथेति** । **अनेनेति** । विद्यापृथक्त्वात्तु सङ्क्षेपेणात्र सूचितमिति तर्कमीमांसाविद्ययोर्भेदार्थं मीमांसायां प्रमाणादिनिरूपणे सङ्क्षेपकरणस्यावश्यकत्वकथनेन जैमिनीयानां मीमांसायामतीवविस्तरेणौत्पत्तिक-स्तुशब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशो व्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रामाण्यं बादरायणस्यानपेक्षत्वादित्यादिना यत्प्रमाणलक्षणादिनिरूपणं तन्न सङ्गतमिति सूचितमित्यर्थः ।

**श्रीनिधि०**— **आयतन**मित्यस्यार्थः विद्यास्थानानीति । **प्रायिकत्वादिति** । विस्तरप्रतिपादनसङ्क्षेप-सूचनप्रयुक्तत्वादित्यर्थः । ननु सङ्क्षेपेण सूचनं वा किमर्थं तज्ज्ञानं तत एव संभवतीति चेन्न । तदभावे अन्योन्यनैरपेक्ष्यप्रतीत्या अङ्गाङ्गिभावाभावोऽपि व्यज्ञास्यत तन्मा विज्ञायीति सङ्क्षेपेण सूचनमिति भावेनाह **सर्वथेति** । जैमिनीयानामित्यनेन शबरादीनां व्याख्यानस्यापव्याख्यानतां सूचयति **नातीव सङ्गतमिति** । सूचनमात्रं सङ्गतं विस्तरेण व्युत्पादनं न सर्वथा सङ्गतमिति भावः ।

**वा०चं०**— ननु विद्यापृथक्त्वोक्तेस्तत्रोक्तस्यात्र विस्तरेणोक्तौ बाधकाभावादिति पूर्वोक्तदोषपरिहारा-क्षमत्वमित्येव नापि त्वपौनरुक्त्यासंपादकत्वेन प्रतिकूलत्वमेवेत्यतस्तदभिप्रायं विद्यापृथक्त्वे साधकं वदन्नेवाह **इदमुक्तं भवतीति** । यद्यपि 'ऋग्यजुःसामाथर्वाख्याः पञ्चरात्रं च भारतम् । मूलरामायणं चैव पुराणं भगवत्परम् । वेदा इत्युच्यते सद्भिः शिक्षाद्यं स्मृतयस्तथा । अङ्गानि सत्यं मीमांसा तद्विद्यायतनं त्रयमि'ति तलवकारोपनिषद्भाष्यो-दाहृत एतद्व्याख्यानरूपे प्रमाणे पुराणादीनां वेदंशब्देन ग्रहणमङ्गशब्देन तु शिक्षादीनां स्मृतिशब्दोक्तधर्मशास्त्रस्यैव ग्रहणमित्युक्तं तर्कशास्त्रस्य तु न केनापि । तथाऽपि वेदान्तरङ्गतया वेदशब्देन गृहीतानामपि 'पुराणादीनामितिहास-पुराणाभ्यां वेदं समुपबृंहयेदि'त्युक्तरीत्या वेदार्थप्रतिपत्तिहेतुततया सर्वाङ्गानीत्यत्रत्यसर्वशब्दस्वारस्यानुरोधेन च शिक्षादिवद-ङ्गशब्देनैव ग्रहणं युक्तम् । 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशे'त्युक्तरीत्या न्यायशब्दोक्ततर्कशास्त्रस्याप्युपलक्षणत्वेन प्रमाणे ग्रहणम् । वेदशब्दश्च मुख्यवृत्त्या चतुष्टय-मात्रपर इत्यभिप्रेत्योपनिषद्वाक्यं व्याख्याति **वेदा इत्यादिना** । अत्र पुराणशब्दः प्रमाणानुसारेण भारतपञ्चरात्र-





मूलरामायणानामुपलक्षणमिति बोध्यम् । 'निर्णीयते यतः सम्यगिदं सत्यमिति स्फुटम् । श्रुतिस्मृत्युदितं सर्वं व्यक्तं मीमांसयैतया । सत्यमित्युच्यते तस्मान्मीमांसा ब्रह्मनिश्चया' इति प्रमाणं मनसि निधाय सत्यमिति मीमांसेति भाष्यमनुकरोति । नन्वेषामेव कुतोऽत्रोपपादनं कुतश्च प्रमाणानुक्तस्यापि तर्कशास्त्रस्यात्र संग्रह इत्यत आह **तथा चेति** । अन्यथा यथास्थितप्रमाणानुसारेणाधिक्यस्य वा पुराणस्य भारतादित्रयस्य चैकत्वविवक्षायां त्रयोदशत्वस्य वा प्राप्त्या चतुर्दशविद्यास्थानानि नोक्तानि स्युरिति भावः । नन्वेवं सङ्क्षेपेण सूचनमपि न स्यात् । एवं च प्रायिकत्वस्याप्यनाश्रयणेन मुख्य एव विद्याभेदः सिध्येदित्यत आह **सर्वथेति** ।

वा०र०— **प्रायिकत्वाद्विद्याभेदस्येति** मूलम् । विद्याभेदो हि प्रतिपाद्यभेदेन निर्वाह्यः । तत्र प्रायः प्रतिपाद्यभेदे सति क्वचिदंशे प्रतिपाद्यैकेऽपि प्रायिकप्रतिपाद्यभेदनिमित्तकः प्रायिको विद्याभेदः संभवतीति न विद्याभेदानुपपत्तिरिति भावः । **एवं चेति** । एवं सतीत्यर्थः । **प्रायिकत्वस्याप्यनाश्रयणेनेति** । सर्वांशे प्रतिपाद्यभेदेन विद्याभेदस्य मुख्यत्वादिति भावः । **अनेन जैमिनीयानामिति** मूलम् । ननु न विलक्षणत्वाधिकरणस्थयाथार्थ्यमेव मानत्वमित्यादिना प्रमाणलक्षणादिनिरूपणं करिष्यते । तन्मूलेऽसङ्गतिमाशङ्क्य शिष्यहितैषिणा प्रसङ्गागतमिदं निरूपितम् । यथा पूर्वमीमांसाभाष्यकारेणेत्यदोष इति परभाष्यकारीयं तन्निरूपणं सङ्गतत्वे दृष्टान्तीकृतं तत्कथमत्र तदसङ्गतिप्रतिपादनम् । तथा सति तद्वत्स्वपक्षेऽप्यसङ्गतिरेव स्यात् । प्रसङ्गागतत्वशिष्यहितैषित्वाभ्यां समाधानं तु परभाष्येऽपि सममितीह तदसङ्गतत्वोक्त्ययोग इति चेदत्र ब्रूमः । अत्र हि सूत्रकृता अतःशब्देन वेदप्रामाण्यादेः सूचनमिति व्याख्याने मुखत एव वेदप्रामाण्यादिकं तेन कुतो नोक्तमिति शङ्कापरिहाराय ब्रह्मतर्के तस्योक्तत्वादत्रापि तदुक्तौ विद्यापृथक्त्वाभावापत्तेरतःशब्देन सङ्क्षेपेणैव तत्सूचनमित्याद्युक्त्वा अनेन जैमिनीयानां प्रमाणं लक्षणादिनिरूपणं नातीव मीमांसाया सङ्गतमित्युक्तावेवं ज्ञायते । यदस्मद्भाष्यकारेणातःशब्दसूचिततया वेदप्रामाण्यादेर्व्याख्यातत्वात् विद्यापृथक्त्वार्थं किञ्चित्तन्निरूपणं यत्कृतं तत्सङ्गतं भवति । जैमिनीयैस्तु यथा व्याख्यानमकृत्वा चोदनादेर्लक्षणार्थो धर्म इत्यत्र धर्मे चोदनैव प्रमाणं न प्रत्यक्षादीत्येवं व्याख्याय प्रमाणोपस्थितिमात्रमवलम्ब्य तल्लक्षणनिरूपणादिकं कृतं तदसङ्गतम् । चोदनादिप्रमाणत्वादेः सूत्रसूचितत्वाभावात् । यद्यपि कथञ्चिदुपस्थितिमात्रेणापि तल्लक्षणादिनिरूपणं प्रसङ्गसङ्गत्या शिष्यहितैषित्वेन कर्तुं शक्यम् । तथाप्यस्मद्भाष्यकारस्येवातिसङ्गतं न भवति । अत एव न विलक्षण-त्वाधिकरणे प्रसङ्गसङ्गत्यादिना तन्निरूपणमस्मद्भाष्यकारोऽपि करिष्यति । शास्त्रारम्भसमर्थनार्थसूत्रव्याख्यानावसरे तु सूत्रसूचितं प्रामाण्यस्य स्वतस्त्वादिकमुपयुक्तमेव भाष्यकार उक्तवान् । तत्कस्य हेतोः । सूत्रव्याख्यात्रा सूत्रसूचितार्थस्यैवोपवर्णनीयत्वात् । परभाष्यकारेण तु प्रथमसूत्रे वाऽन्यत्र वा सूत्रसूचितत्वेन वेदप्रामाण्यादे-रव्याख्यातत्वात् तत्सूत्रे वा सूत्रान्तरे वा तल्लक्षणादिनिरूपणं न कर्तुमुचितमिति । अत एवोक्तं **नातीव सङ्गतमिति** मूले । यत्तु युक्तिपादे प्रमाणलक्षणादिनिरूपणस्यासङ्गतिमाशङ्क्य शिष्यहितैषितया प्रसङ्गसङ्गत्या तन्निरूपण-मित्यभिधाय यथा पूर्वमीमांसाभाष्यकारेणेत्यदोष इति पूर्वमीमांसाभाष्यकारीयं निरूपणं सङ्गतत्वेन मूलकृतो-ऽभिहितम् । तदुक्तरीत्या सूत्रसूचितार्थप्रतिपादकत्वाभावेऽतिसङ्गतत्वाभावेऽपि प्रसङ्गसङ्गत्यादिना कथञ्चित्सङ्गत-मित्यभ्युपगमवादेन । न त्वतिसङ्गतत्वाङ्गीकारेणेति न पूर्वोत्तरविरोधः । **यथा भेदविशेषसमर्थनादिस्थले ऐक्य-**





समवायादिदृष्टान्तो ज्ञातत्वाज्ञातत्वादिविरुद्धधर्मोपपादनाय तत्र तत्र मूलादौ स्वीक्रियत इति सूरयो विदांकुर्वन्तु । पूर्वोत्तरयोजनयोर्विद्याभेदार्थं प्रतिपाद्य भेदाश्रयणस्य तुल्यतया योजनाभेदानुपपत्तिरित्यतः पूर्वत्र प्रतिपाद्य भेद उपपादकत्वे नाश्रितः ।

**स०व्र०— अत एव न तत्रोक्तस्येति** । असङ्गतप्रतिपादकत्वादेवेत्यर्थः ।

**वि०ठ०—** ननु विद्यापृथक्त्वमेव कुतः तथापि तर्कशास्त्रे विस्तरेणोक्तमपि विस्तरेण किमिति नोच्यत इत्यत आह **इदमुक्तं भवतीति** । न च 'ऋग्यजुस्सामाथर्वाख्याः पञ्चरात्रं च भारतम् । मूलरामायणं चैव पुराणं भगवत्परम् । वेदा इत्युच्यते सद्भिः शिक्षाद्यं स्मृतयस्तथा । अङ्गानि सत्यं मीमांसा तद्विद्यायतनं त्रयमि'ति तलवकारभाष्ये पुराणस्यापि वेदत्वोक्तेर्विरोध इति वाच्यम् । अत्र वेदोपबृंहकत्वविवक्षया व्याख्यानान्तरत्वात् तत्रोक्तपञ्चरात्रादेरत्र पुराणादेव ग्रहणादत्रानुक्तस्यापि ब्रह्मतर्कस्यात्रोपलक्षणतया ग्रहणमिति वेदितव्यम् । **तदर्थमिति** । विद्यापृथक्त्व-सिध्यर्थमित्यर्थः । ततश्च तर्कशास्त्रं प्रमाणादिस्वरूपपरं मीमांसाशास्त्रं तु प्रमेयव्युत्पादनपरमित्यभ्युपेयमित्यर्थः । पृथग्विद्यात्वादेव सङ्क्षेपेण सूचनमप्ययुक्तमित्यत आह **प्रायिकत्वादिति** । **अत एवेति** । असङ्गतप्रतिपादकत्वेन अमुख्यशास्त्रत्वादेवेत्यर्थः । **एतदेवेति** । शङ्काद्वयनिरासकमेव प्रपञ्चयतीत्यर्थः । विद्यापृथक्त्वादित्युक्तहेतोः अप्रयोजकत्वशङ्कापरिहारार्थत्वेनाप्यवतारयति **अथवेति** । **तच्चैतदित्याहेति** । तद्विद्यापृथक्त्वं चैवमित्याहेत्यर्थः ।

६८३ **सु०—** तदेव प्रपञ्चयति **प्रमाणेति** ।

**अनु०— प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः ॥**
**मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम् ॥**

**अथवा 'विद्यापृथक्त्वादि'त्युक्तम् । तत्रास्तु तर्कमीमांसाविद्ययोः पृथक्त्वम्, तथाऽप्यत्र विस्तरेण वेदप्रामाण्यव्युत्पादने को दोष इत्याशङ्क्य; विद्यापृथक्त्वं च व्युत्पाद्यपृथक्त्वादेव, तच्चैतदित्याह प्रमाणेति ॥ प्रमाणानि प्रत्यक्षादीनि त्रीणि । न्यायः अनुमानाङ्गभूता व्याप्तिः ।**

**वं०प०— तच्चैतदिति** । तच्च विद्यापृथक्त्वम् । एतद्वक्ष्यमाणमित्यर्थः ।

**आनन्दः—** उभयत्र प्रामाण्यस्य विस्तरेण प्रतिपादने विद्यापृथक्त्वमेव न स्यात् । तस्य प्रतिपाद्यभेदे निबन्धनत्वादित्यत आह **विद्यापृथक्त्वमिति** । ननु प्रमाणन्यायपदयोः पौनरुक्त्यं प्रमाणपदोक्तस्य न्यायपदेना-प्युक्तत्वादित्यत आह **प्रमाणानीति** ।





**कं०रा०— तदेवेति** । मीमांसाशास्त्रे वेदप्रामाण्यादिव्युत्पादनस्य सङ्क्षेपकारणमेवोचितमित्येतदेव प्रपञ्चयतीत्यर्थः । प्रमाणन्यायसच्छिक्षेत्यत्र प्रमाणशब्देनैव न्यायशब्दितानुमानस्यापि गृहीतत्वान्न्यायेति पृथगुक्ति-र्व्यर्थेत्यतो व्याचष्टे **न्याय इति** । अध्यायन्यायोद्यावसंहाराश्चेत्यत्र नीयतेऽनेनेति न्याय इति करणार्थे निपातितेन न्यायशब्देन कथं व्याप्तिग्रहणमित्याशङ्कायां न्यायशब्दितानुमानसंबन्धात्तद्ग्रहणमित्यभिप्रेत्य संबन्धं दर्शयति **अनुमानाङ्गभूतेति** । केचित्तु मत्वर्थीयाच्प्रत्ययान्तत्वं संबन्धार्थाण्प्रत्ययान्तत्वं वा न्यायशब्दस्याभिप्रेत्य प्रत्ययार्थभूतं संबन्धं दर्शयति **अनुमानाङ्गभूतेति** इत्याहुः । तन्न । व्याप्तिवाचकस्याजन्तस्य न्यायशब्दस्य टाबन्त-त्वावश्यंभावेनाणन्तस्य च तस्य ङीबन्तत्वावश्यंभावेन मूले प्रमाणन्यायसच्छिक्षेति सुधायां च न्याय इति निर्देशस्य चानुपपत्तेः । न च न्यायोऽनुमानाङ्गभूतानौपाधिकसंबन्ध इति निर्देशोऽस्ति । येन सामञ्जस्यं स्यादिति ।

**श्रीनिधि०— प्रमाणन्यायसच्छिक्षे**त्यत्र प्रमाणानि प्रत्यक्षादीनि त्रीणि । **न्यायपदेन** उपक्रमादयः । तेषां सच्छिक्षा उद्देशलक्षणविभागपरीक्षाभिर्निरूपणमित्यर्थो द्रष्टव्यः । अयं च व्युत्पाद्यभेदो न स्यादित्यस्य विस्तरात् । व्युत्पाद्येते अनन्तरं संबन्धः ।

**वा०चं०**— एवं विद्यापृथक्त्वोक्त्या तदुपपादकस्य प्रतिपाद्यपृथक्त्वस्यार्थतो लाभमभिप्रेत्य तयोरुप-पाद्योपपादकताप्रकारं प्रदर्श्य प्रतिपाद्यपृथक्त्वस्वरूपप्रदर्शनेन तत्प्रपञ्चकतया प्रमाणेति वाक्यं योजितम् ।

**वा०र०**— अत्र तु हेतुत्वेनेत्यादिवैषम्यं योजनयोराह **एवं विद्येति** । न्यायशब्दो हि 'परिन्योर्नीणो-र्द्यूताभ्रेषयोरि'ति सूत्रेण तृतीयतृतीयगतेन व्युत्पादितः उचितार्थकः । परिपूर्वान्नयतेर्निपूर्वादिणश्च घञ् । पूर्वत्र द्यूतेन प्राप्तेऽर्थे विवक्षिते उत्तरत्र यथाप्राप्तकरणरूपः पदार्थानामनपचारो यस्तद्रूपेऽभ्रेष इणर्थे विवक्षिते परिणायेन शारान् हन्तीति प्रथमोदाहरणम् । एषोऽत्र न्यायः उचितमित्यर्थ इति द्वितीयस्येति काशिकादौ प्रतिपादनात् । यस्त्वध्यायन्यायोद्यावसंहाराश्चेति सूत्रे अवहाराधारावायानामुपसंख्यानयुक्ते निपातितो न्यायशब्दः नियन्त्यनेनेति करणे घञन्तः नीयतेऽनेनेति वा सः ज्ञापकार्थकः । उक्तं च काशिकायाम् । ............ सूत्रे अध्यायन्यायो-द्यावसंहाराधारावायाश्चेति निपातनात् करणे निपूर्वादिणो घञिति । इणोघञि अचोञ्णितीति वृद्धौ आयादेशे आयेति धातुप्रत्ययकार्यानन्तरं पश्चान्नीत्युपसर्गधातुकार्ये न्यायेति भवतीत्याश्रयणाद्धातूपसर्गकार्यस्य प्राधान्यमाश्रित्य नायेत्यापत्तिरिति न शङ्क्यम् । तदुभयार्थमध्ये उचितार्थस्य प्रकृतासङ्गतत्वेऽपि ज्ञापकार्थकत्वं न्यायशब्दस्ये-त्याशयेनाह **न्यायो अनुमानेत्यादि** मूलम् । प्रयोजनपदार्थनिरूपणावसरे येन प्रयुक्तः प्रवर्तते तत्प्रयोजनमित्याद्युक्त्वा तदाश्रयश्च न्यायः प्रवर्तते कः पुनरयं न्यायः प्रमाणैरर्थपरीक्षणमित्येतद्वात्स्यायनभाष्यसंबन्धिवाचस्पत्यादौ नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेत्येवं व्युत्पत्तिप्रदर्शनादिकं यत्कृतं तत्राप्युक्तरीत्या नीपूर्वादिणः करणे घञ् धातूपसर्गकार्यं पश्चादित्येवाभिप्रेतं न तु नयतेरेव करणे घञ् विवक्षितः । तथात्वे नायेत्यापत्तेः । एवमेव स्वन्यायैः साधनं कार्यमित्यादिभक्तिपादीयाद्यनुव्याख्यानमूलगतन्यायशब्देन धर्मिलिङ्गव्याप्तीत्यादिन्यायोऽनुमानमिति च व्याख्यान-मुपपाद्यम् । मूलगतचतुर्थपक्षे तु न्यायशब्दस्य काकाक्षिन्यायेनेत्यादावधिकरणन्यायेनेत्यादौ च प्रकारार्थताया अपि संव्यवहारादिसिद्धत्वमाश्रितमिति ज्ञेयम् ।

**६८४ सु०— अथवा न्यायो व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनात्मकस्तर्कः । तस्यानुमानात्मकत्वेऽपि प्रमाणानुग्राहकत्वातिशयवत्त्वज्ञापनाय पृथगुक्तिः ।**

**अथवा प्रमाणे प्रत्यक्षमागमश्च, न्यायः अनुमानं, तस्य मीमांसायामभ्यर्हितत्वाद्भेदेनोपन्यासः ।**

**आनन्दः— मीमांसाया इति** । तस्या युक्तिग्रथनात्मकत्वादित्यर्थः ।

**वा०चं०—** अधुना पूर्ववाक्योक्ते विद्यापृथक्त्वे हेतुत्वेन प्रतिपाद्य पृथक्त्वमभिप्रेत्य तत्स्वरूपं प्रमाणेतिवाक्येनोच्यत इत्युत्तरवाक्यस्वारस्यानुरोधेन पक्षान्तरमाह **अथवेति** । अङ्गिप्रायेऽङ्गोपादानं न स्वरसमित्यत आह **अथवेति** । पृथगुक्तेः प्रयोजनेऽवश्यवक्तव्ये किमनुमानविशेषोपादानेन तत्सामान्यस्यैव ग्रहणमस्तु । एवं च न्यायपदस्वारस्यमधिकम् । पूर्वपक्षे न्यायपदस्य प्रमाणपदस्य चास्वारस्यमित्याशयेनाह **अथवेति** ।

**६८५ सु०— अथवा प्रमाणानां प्रत्यक्षादीनां, न्यायः प्रकारः स्वरूपसङ्ख्याविषयव्यवस्था, तस्य सच्छिक्षोद्देशलक्षणविभागपरीक्षाभिर्निरूपणम् । तर्कशास्त्रत इति तृतीयार्थे तसिः । तुशब्दो 'मीमांसा त्वि'ति संबध्यते । तत्सिद्धैः तर्कशास्त्रव्युत्पादितैः । मेयशोधनं प्रमेयस्यारोपिताकारनिराकरणेन स्वरूपनिरूपणं क्रियते । मीमांसाशास्त्रत इति शेषः ॥ अयं च व्युत्पाद्यभेदो न स्याद्यदि मीमांसाशास्त्रेऽपि वेदप्रामाण्यादिकं विस्तराद् व्युत्पाद्येत । तदभावे च विद्याभेदोऽपि न स्यात् । अतः सङ्क्षेपेणैवास्य सूचनमत्र युक्तमिति भावः ॥ अत्र 'तत्सिद्धैरि'ति वदता तर्कशास्त्रस्य मीमांसाङ्गत्वमुक्तम् । तेन तत्र प्रकृतस्यात्र परामर्शो नानुपपन्न इति सूचितं भवति ।**

**परि०— तृतीयार्थे तसिरिति** । प्रतियोगे पञ्चम्यास्तसिरित्यत्र आद्यादिभ्य उपसंख्यानमित्यत्र सर्वविभक्त्यर्थे तसेरुक्तत्वात् आद्यादेश्चाकृतिगणत्वादिति भावः । आद्यादिभ्यः प्रथमादिभ्य इत्यर्थ इत्येके । मेयशोधनरूपं मीमांसाविचारणं मीमांसाशास्त्रेण क्रियत इति मूलयोजनामुपेत्याह **मीमांसाशास्त्रत इति शेष इति** । मीमांसेति प्रातिपदिकमात्रनिर्देशः । शास्त्रत इत्येव शेष इत्येके ।

**वं०प०—** मीमांसा मेयशोधनमित्यत्र क्रियत इत्यन्वयस्वारस्याय मीमांसापदमनूद्य तदनन्तरमध्याहार्यं दर्शयति **मीमांसाशास्त्रत इति शेष इति** । तथाच मीमांसाशास्त्रतस्त्वित्यन्वयः ।





**आनन्दः**— ननु तर्कशास्त्रत इत्यत्र तसिर्न युक्तः पञ्चम्यन्तात्तद्विधानात्प्रकृते चापादानत्वासंभवेन पञ्चम्यन्तत्वासंभवादित्यत आह **तृतीयार्थ इति** । सार्वविभक्तिकस्तसिरिति वचनादिति भावः।

**वा०चं०**— प्रयोजनोत्प्रेक्षाशून्यमुभयपदस्वारस्योपेतं पक्षान्तरमाह **अथवेति** । अत्र न्यायसच्छिक्षा-शब्दयोरपौनरुक्त्यायार्थभेदमाह **न्याय इत्यादिना** । पञ्चमीतसिलो हेतुत्वमात्रलाभेऽपि कारणत्वं मूलारूढं कर्तुमाह **तृतीयार्थ इति** । मेयशोधनस्य मुख्यस्यासंभवादुपचारेण प्रकृतोपयुक्तमर्थमाह **मेयेति** । तर्कशास्त्रात्प्रतिपाद्य-भेदकथनावसरे प्रमेयान्तरप्रतिपादकत्वे प्रतिपाद्ये मीमांसाया वक्तव्ये स्वप्रतिपाद्याभेदकथनं नोपपद्यत इत्यतः शास्त्रत इत्यस्यानुषङ्गेण व्याख्याति **शास्त्रत इतीति** । तथा च मीमांसाशास्त्रत इति समासैकदेशोक्तिर्भाष्य इति भावः। उक्तस्य प्रतिपाद्यभेदस्य तात्पर्यमाह **अयं चेति**।

**वा०र०**— **पञ्चमीतसिलेति** । अत्र पञ्चमीतसिनेतिपाठस्तु स्वरस एव । क्वचित्पञ्चमीतसिलेति पाठः । तत्र किं यत्तदादिभ्य एव पञ्चम्यास्तसिलादेशविधानेऽपि सर्वप्रातिपदिकान्तात्तसिलिति विहिततसिल्प्रत्यये कृत्स्नत इत्यादाविव प्रकृतेऽपि पञ्चम्यन्तात्तसिलि तद्धितान्ततया प्रातिपदिकसंज्ञायां सुपो धात्विति पञ्चमीलोपे च शास्त्रत इति तसिलन्तं संपन्नमिति तदभिप्रायेण पञ्चमीतसिलेत्युक्तम् । उक्तं च प्रक्रियायां तसिल्प्रकरणे सर्वप्रातिपदिकम् । तत्तसिलिति केचित्। कृत्स्नत इतीति ज्ञेयम्। **स्वप्रतिपाद्येति** । मीमांसाया इति वर्तते। **अनुषङ्गेणेति** । अनेन शेषपदं मूलस्थमनुषङ्गार्थकं व्याख्येयम् । ततश्च बुध्या विविक्तस्य शास्त्रत इत्यस्यानुवृत्त्यैव पूर्तेः शेषपूरणं व्यर्थमिति शङ्कानवकाश इति सूचितम् । **समासैकदेशेति** । एतच्च प्रकृतस्थलं तत्समानस्थलं वाऽभिप्रेत्य । अन्यत्र ब्रह्माण्डे उक्तमिति शेष इत्यादि बहुस्थलेषु समासावयवताया असंभवादिति ज्ञेयम्। **अयं चेतीति** । मूले यदि मीमांसाशास्त्रेऽपि वेदप्रामाण्यादिकं विस्तरात् व्युत्पाद्येत तर्हीति लब्धं संपूर्यायं च व्युत्पाद्य भेदो न स्यादिति योजना। **तदभावे चेति** मूलस्य व्युत्पाद्यभेदाभावे चेत्यर्थः।

**स०व्र०**— **मीमांसाशास्त्र इति शेष इति** । अत्र शास्त्रत इत्येव शेषः । न तु समग्रस्य । मीमांसेत्यस्य श्रवणात् । तथा च मूले मीमांसाशब्दोऽविभक्तिकप्रातिपदिकनिर्देश इति सूचितं भवति । पूर्वं तुशब्दो **मीमांसा त्विति** । संबध्यत इत्युक्तिस्तु यथास्थिताभिप्रायेण । वस्तुतस्तु मीमांसाशास्त्रतस्तु इति तुशब्दसंबन्धो द्रष्टव्यः । यद्वा मेयशोधनं मीमांसेति सामानाधिकरण्यम् । मेयशोधनलक्षणा मीमांसा तु मीमांसाशास्त्रतः क्रियत इति योजना । अस्मिन् पक्षे तुशब्दस्य मीमांसेत्यनेनैव संबन्धः क्रियत इति पदस्यानुवृत्तिः । मीमांसाशास्त्रत इत्येतावतः शेषत्वमिति द्रष्टव्यम्।

**विठ०**— **मीमांसाशास्त्रत इति** । तथा च मेयशोधनं मीमांसा। अन्यथाकारनिराकरणेन स्वरूपनिरूपणम्। मीमांसाविचारस्तु मीमांसाशास्त्रेण क्रियत इति मूलयोजना । अथवा मीमांसेति मूलगतप्रातिपदिकानुवादेन तत्समस्ततया शास्त्रत इत्यन्तस्य दोषोक्तिः । **मीमांसा त्विति** । संबन्ध इत्युक्तिस्तु मूलानुवादेन । वस्तुतस्तु





मीमांसाशास्त्रतस्त्विति वक्ष्यमाणदोषाभिप्रायेणोक्तिरिति । अस्त्वेवं विद्यापृथक्त्वं तथापि किं प्रकृत इत्यतोऽभिप्रायमाह **अयं च व्युत्पाद्यभेद इति** । यदीति वाक्यात्परं तर्हीति संयोज्यैतद्वाक्यं योजनीयम् । एवं सङ्क्षेपकरणानुपपत्तिशङ्कावारकत्वेन विद्यापृथक्त्वस्याप्रयोजकत्वपरिहारतया मूलं व्याख्याय तदेव प्रपञ्चयतीत्यत्राभिप्रेतप्रथमशङ्कापरिहारप्रकारः तत्सिद्धेरित्यनेन लब्ध इति दर्शयति **अत्रेति** ।

**ब्रह्मतर्कस्य बादरायणेनैव कृतत्वेन अङ्गाङ्गिभावस्य उपपत्तिः—**

**६८६ सु०— ननु 'महद्दीर्घवद्वे'त्यादिना तर्कशास्त्रं निराकरिष्यते; तत्कथं तस्य ब्रह्ममीमांसाङ्गत्वम्, विरुद्धयोरङ्गाङ्गिभावस्य व्याहतत्वात् । तथा च कथं तत्रोक्तस्य 'अत्रेदं'शब्देन परामर्शः, कथं च ततो भेदसिद्धये व्युत्पाद्यभेदोपपादनम्, प्रमाणत्वाप्रमाणत्वाभ्यामेव तद्भेदस्य सिद्धत्वादित्यत आह ब्रह्मतर्कं चेति ।**

## अनु०— ब्रह्मतर्कं च भगवान्स एव कृतवान्प्रभुः ॥

**स प्रभुः यो मीमांसासूत्रकृदित्यर्थः । एवशब्देन न कणादाक्षपादादिप्रणीतं तर्कशास्त्रमत्राङ्गतयाङ्गीक्रियते; अतो नोक्तदोष इति सूचयति ।**

**यादु०— इदंशब्देन परामर्श इति** । अयं चासौ शब्दश्चेदंशब्दः । ततश्च सौत्रातःशब्देनेत्यर्थो लभ्यते । तेनातःशब्दस्यैतदोशित्यनेन एतदः अश् इत्यादेशे निष्पन्नतया एतच्छब्देन परामर्श इति वक्तव्यम् । तत्कथमिदंशब्देनेत्युक्तिरिति शङ्कानवकाश इति ध्येयम् ।

**आनन्दः**— ब्रह्ममीमांसाकर्तुरिव तर्कशास्त्रकर्तृत्वमयुक्तं तर्कशास्त्रस्य विष्णुकर्तृत्वप्रसिद्धेरिति शङ्कते **नन्विति** । अत्र वक्तव्यं विष्णुकृतो ब्रह्मतर्कोऽप्रमाणं उत प्रमाणमिति । नाद्य इत्याह **भगवत्कृतस्येति** । विष्णोर्भगवत्वेन तत्कृतस्याप्रामाण्यस्य वक्तुमशक्यत्वादिति भावः । तथापि विष्णुकृतब्रह्मतर्के नाश्वास इत्यत्राह **अत्रापीति** । व्यासकृतेऽपीत्यर्थः । द्वितीयं प्रत्याह **प्रामाण्य इति** ।

**वा०चं०**— ननु ब्रह्मतर्कं चेत्युत्तरवाक्ये सूत्रकृत्प्रणीतत्वेन तर्कशास्त्रस्याङ्गत्वेनोपादानव्युत्पादनमयुक्तम् । अन्यस्याप्रसक्तेः । प्रसक्तौ वा तस्यापि ग्रहणे बाधकाभावादित्यतस्तत्प्रसक्तिं तदुपादाने वक्ष्यमाणनिराकरणानुपपत्तिं निराक्रियमाणस्याप्यङ्गत्वेऽनुपपत्तिं पूर्ववाक्योक्तव्युत्पाद्यभेदे चानुपपत्तिं दर्शयन्नुत्तरवाक्यमवतारयति **नन्विति** । उक्तदूषणपरिहारायैवकारव्यवच्छेद्यं दर्शयति **एवेति** । यदत्राङ्गत्वेन विवक्षितं ब्रह्मतर्काभिधं तर्कशास्त्रं तद्यो





ब्रह्ममीमांसासूत्रकृद्भगवान्स एव प्रभुः कृतवानित्यङ्गत्वेन विवक्षितं सूत्रकृदित्युक्त्या यत्सूत्रकृत्कृतं तदेवाङ्गत्वेनात्र विवक्षितमिति सिध्यति। तथा चेतरव्यावृत्तिलाभ इति भावः।

**६८७ सु०— ननु कथं 'सूत्रकृता कृतो ब्रह्मतर्क' इत्युच्यते 'ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितमि'ति तस्यान्यकृतत्ववचनात्। न च वाच्यं विष्णुकृतोऽप्येकोऽस्तु, अयमपरः किं व्यासकृतो ब्रह्मतर्को न स्यादिति; भगवत्कृतस्य तस्याप्रामाण्ये कारणाभावात्, अत्राप्यनाश्वासप्रसङ्गाच्च। प्रामाण्ये तु व्यर्थं व्यासस्यैकविषये ग्रन्थान्तरनिर्माणमित्यत आह पञ्चाशदिति।**

**अनु०— पञ्चाशत्कोटिविस्ताराान्नारायणतनौ कृतात्।**
**उद्धृत्य पञ्चसाहस्रं कृतवान् बादरायणः॥**

**परि०— वचनादिति**। द्वितीये गीतातात्पर्योक्तनारदीयवचनादित्यर्थः। एवं वादिनस्तव मते विष्णुकृतं तर्कशास्त्रमप्रमाणमुत प्रमाणमिति विकल्पं हृदि कृत्वा आद्ये आह **भगवत्कृतस्येति**। अन्त्ये आह **प्रामाण्ये त्विति**।

**वं०प०—** अन्यकृतत्वेऽपि व्यासभिन्नविष्णुकृतत्ववचनादित्यर्थः। विष्णुकृतब्रह्मतर्कभिन्नस्य ब्रह्मतर्कस्य व्यासकृतत्वे किं विष्णुकृतस्य ब्रह्मतर्कस्याप्रामाण्यं विवक्षितं प्रामाण्यं वा। आद्ये आह **भगवत्कृतस्येति**। विष्णुकृतस्य ब्रह्मतर्कस्येत्यर्थः। **अत्रापि** व्यासकृतब्रह्मतर्केऽपि। उभयोरपि भगवत्कृतत्वेन तत्कृतत्वाविशेषादस्याप्यप्रामाण्यं स्यादिति भावः। द्वितीये त्वाह **प्रामाण्ये त्विति**। विष्णुकृतब्रह्मतर्के विद्यमाने सति वेदप्रामाण्यादिरूपैकप्रमेयविषय एव। पुनर्व्यासस्य ग्रन्थान्तरनिर्माणं व्यर्थमित्यर्थः।

**वा०र०—** विष्णुसमीरितब्रह्मतर्के सत्यपि व्यासस्य तन्निर्मातृत्वं किं विष्णुकृतस्याप्रामाण्यमभिप्रेत्य प्रामाण्यं वेति विकल्पं मनसि निधायाद्यं दूषयति **भगवत्कृतस्येति** मूलम्। द्वितीयं प्रत्याह **प्रामाण्ये त्विति** मूलम्।

**स०व्र०—** विष्णुकृतव्यासकृततर्कशास्त्रद्वयमङ्गीक्रियते चेत् विष्णुकृतस्याप्रामाण्यमङ्गीक्रियते वा उत प्रामाण्यमिति विकल्पौ मनसि निधाय क्रमेण दूषयति **भगवत्कृतस्य तस्येत्यादिना**।

**विठ्ठ०—** ब्रह्मतर्कद्वयमङ्गीकुर्वता किं विष्णुकृतस्याप्रामाण्यमुच्यते उत प्रामाण्यमिति विकल्पं मनसि निधायाद्यं दूषयति **भगवत्कृतस्येति**। द्वितीयं दूषयति **प्रामाण्ये त्विति**।

**६८८ सु०— ननु च कथं विस्तारादिति, 'प्रथने वावशब्द' इति प्रतिषेधात् । मैवम् । पञ्चाशद्भिः कोटिभिः श्लोकैर्विस्तारः प्रपञ्चो यस्यार्थस्य तस्मात्किञ्चिदर्थमुद्धृत्य पृथक्कृत्य तत्प्रतिपादकं, पञ्चसहस्राणि परिमाणमस्येति पञ्चसाहस्रं, ग्रन्थं कृतवानिति व्याख्यानात् । यद्यपि व्यासो न विष्णोरन्य इति परिहारोऽत्र वक्तुं शक्यत एव तथापि वस्तुस्थितिज्ञापनाय भगवतो व्यासस्य पृथग् ग्रन्थरचने प्रयोजनमभिहितमिति ज्ञातव्यम् । अत एव विष्णुनेत्यस्य विवरणाय 'नारायणतनावि'त्युक्तम् । तथा च नारायणावतारे विष्णुना कृतादिति योजना । अथवा 'नञा निर्दिष्टमनित्यमि'ति वचनात्पञ्चाशत्कोटि(ट्यो)विस्तारो यस्य ग्रन्थस्येत्यपि युक्तम् । तथा च कृतादिति मुख्यमेव भवति । अन्यथा लाक्षणिकं व्याख्येयमिति ।**

**परि०— प्रथने वावशब्द इति प्रतिषेधादिति** । तृतीयस्य तृतीयपादे प्रे स्त्रोऽयज्ञ इति पूर्वसूत्रात् स्तृञ् आच्छादन इति धातुमनुवृत्य वौ विशब्द उपपदे स्तृधातोः घञ्प्रत्ययो भवति । प्रथने अशब्दे शब्दाविषयविस्तीर्णत्वे गम्यमाने । शब्दाविषये विस्तीर्णत्वे गम्यमाने तु घञ् न भवति । ॠदोरबित्यप्प्रत्यय एव भवतीत्युक्तत्वेन शब्दविषयप्रथने घञ्प्रत्ययप्रतिषेधादित्यर्थः । **वस्तुस्थिति-ज्ञापनायेति** । वस्तुगत्या व्यासकृतब्रह्मतर्कस्यान्यत्वज्ञापनायेत्यर्थः । **प्रयोजनमभिहितमिति** । सङ्क्षेपेणात्र सूचितमित्यनेनेत्यर्थः । **अत एवेति** । वस्तुस्थितिज्ञापनार्थं प्रवृत्तत्वादेवेत्यर्थः । अन्यथा नारायणतनावित्यस्य प्रयोजनाभावादिति भावः । **विष्णुनेत्यस्येति** । 'ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितमि'ति वाक्यगतस्येत्यर्थः । **नञा निर्दिष्टमिति** । अशब्दे शब्दाविषये, शब्दविषये प्रथने तु नेति नञा निर्दिष्टमित्यर्थः । अनित्यत्वज्ञापकमुक्तं 'तेनानिष्टमि'त्येतद्व्याख्यानावसरेऽस्माभिः । **कृतादिति-मुख्यमेवेति** । शब्दनिष्ठस्यैव कृतत्वस्य लाभादिति भावः । **अन्यथेति** । पूर्वव्याख्याने लाक्षणिकं शब्दनिष्ठं कृतत्वम् । अर्थे कृतत्वासंभवात् कृतादित्येतत् प्रकाशितादिति व्याख्येयमित्यर्थः । उपलक्षणमेतत् । किञ्चिदर्थमुद्धृत्य तत्प्रतिपादकमित्यध्याहारकल्पनापि पूर्वव्याख्यान इति लक्षणया व्याख्येयमित्यर्थः ।

**गु०दी०— प्रथने वावशब्दे** इत्यत्र प्रथनेऽर्थे वर्तमानात् स्तृञ् धातोः वौ वीत्युपसर्गे सति घञि कृते "अचो ञ्णिति" इति वृद्धौ च कृतायां उरण्रपर इति प्रत्याहाररपरत्वे च कृते विस्तार इति शब्दनिष्पत्तिर्भवति । न तु शब्दे इति सूत्रार्थः ।

**यादु०— प्रथने वाविति** । प्रथने गम्यमाने विपूर्वात् स्तृणातेः घञ्प्रत्ययो भवति तच्चेत्प्रथनं शब्दविषयं न भवतीति शब्दाविषयप्रथने घञः प्रतिषेधादित्यर्थः । **वस्तुस्थितिज्ञापनायेति** । वस्तुगत्या व्यासकृतब्रह्मतर्कस्या-





न्यत्वज्ञापनायेत्यर्थः । **अत एवेति** । वस्तुस्थितिज्ञापनार्थं प्रवृत्तत्वादेवेत्यर्थः । अन्यथा नारायणतनावित्यस्य प्रयोजनाभावादिति भावः । **विष्णुनेत्यस्येति** । 'ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितमि'ति वाक्यगतस्येत्यर्थः । **अन्यथा लाक्षणिकमिति** । अर्थे कृतत्वासंभवात्कृतादित्येतत्प्रकाशितादिति व्याख्येयमित्यर्थः । उपलक्षणं चैतत् । किञ्चिदर्थमुद्धृत्य तत्प्रतिपादकमित्यध्याहारकल्पनाऽपि पूर्वव्याख्यान इति ज्ञेयम् ।

**वं०प०— प्रथन इति** । तथाच विपूर्वकात् स्तृधातोरशब्दे प्रथने शब्दविषयप्रथनाविवक्षायामर्थविषयक-प्रथनविवक्षायामिति यावत् । घञ्प्रत्यये घकारञकारयोर्लोपे अकारमात्रे उर्वरिते सति विस्तृ अ इति स्थिते ऋवर्णस्याचोञ्णितीति ञित्वादादिवृद्धौ विस्तार्+अ=विस्तरेति रूपम् । तत्र शब्दविषयप्रथनविवक्षायां घञः प्रतिषेधेन तत्प्रयुक्तवृद्ध्यप्राप्तौ विस्तरादित्येव स्यान्न तु विस्तारादितीति भावः । अत्र शब्दविषयप्रथनं न विवक्षितं किं त्वर्थविषयकमेवातो घञि वृद्धौ विस्तारादिति युक्तमित्याशयेन विग्रहं दर्शयति **पञ्चाशद्भिरिति** । यथोक्तममरकोशे । 'विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तर' इति । **परिहार इति** । ननु कथं सूत्रकृता कृतो ब्रह्मतर्क इत्युच्यते 'ब्रह्मतर्कस्तर्कशास्त्रं विष्णुना यत्समीरितमि'त्यन्यकृतत्ववचनादिति शङ्काया इति शेषः । **नारायणावतार इति** । विष्णुना मूलरूपिणा नरनारायणावतारे कृतादित्यर्थः । **नञा निर्दिष्टमिति** । अशब्द इति नञा निर्दिष्टस्यानित्यत्वेन शब्दविषयप्रथनविवक्षायामपि घञ्प्रत्यये विस्तारादिति युक्तमित्यर्थः ।

**आनन्दः**— ननु विस्तारादित्ययुक्तं प्रथने वावशब्दे, वा उपपदे, शब्दव्यतिरिक्ते प्रथने वाच्ये स्तृणातेर्घञ्प्रत्यय इति सूत्रेण शब्दप्रथने घञो निषेधात्प्रकृते च शब्दप्रथनस्यैव सत्त्वात्कथमेतदिति शङ्कते **ननु चेति** । **प्रयोजनमिति** । मन्दाधिकारिणां सुज्ञानरूपं प्रयोजनमित्यर्थः । **अत एवेति** । व्यासस्य विष्णोरनन्यत्वादेवेत्यर्थः । नन्वेतद्व्याख्यानमयुक्तं कृतशब्दस्य लाक्षणिकत्वापातात् । अर्थस्य कृतकत्वसंभवेन तत्प्रतिपादकग्रन्थस्यैव कृतकत्वं वक्तव्यं इत्यत आह **अथवेति** । तर्हि निषेधस्य का गतिरित्यत्राह **नञा निर्दिष्टमिति** ।

**कं०रा०— प्रथन इति** । प्रथने विस्तीर्णत्वे गम्यमाने विपूर्वात्स्तृणातेर्धातोर्घञ्प्रत्ययो भवति न चेत्प्रथनं शब्दविषयं भवतीति शब्दप्रथने घञो निषेधादित्यर्थः । **अन्यथेति** । पञ्चाशद्भिः कोटिभिः श्लोकैर्विस्तारः प्रपञ्चो यस्यार्थस्येति पञ्चाशत्कोटिविस्तारशब्दस्यार्थपरत्वेन नारायणतनौ कृतादित्यत्र कृतपदं कृतग्रन्थप्रतिपाद्य-परतयौपचारिकं व्याख्येयमित्यर्थः ।

**श्रीनिधि०— पृथग्ग्रन्थरचने प्रयोजनमिति** । सङ्क्षेपकरणलक्षणं प्रयोजनमित्यर्थः । **अत एवेति** । व्यासस्य विष्णुत्वाभिप्रायेणैव इत्यर्थः ।

**वा०चं०**— उत्तरवाक्ये व्यासस्य ग्रन्थान्तरनिर्माणप्रयोजनाभिधानात् तद्व्यावर्त्यशङ्कामुत्थापयितुं प्रसञ्जयति **नन्विति** । **प्रथन इति** । वावुपपदे शब्दाविषयके प्रथने वाच्ये स्तृञो घञिति सूत्रार्थः । तथाच





ऋदोरबित्यपैव भवितव्यमित्याशयः। ( प्रथने वावशब्दे। विपूर्वात्स्तृणातेर्घञ् अशब्दविषये प्रथने। पटस्य विस्तारः। विस्तारस्तिर्यगायतिः। प्रथने किम्। तृणस्य विस्तरः। अशब्दे किं ग्रन्थविस्तरः। ऋदोरप्। नायं तकारः किन्तु दकारः। करः। गरः। शरः। यवः। लवः। स्तवः। पवः। निरभ्योः पूल्वोरित्याद्यारम्भादित्याशयेन दीर्घान्तानप्युदाहृति लवः पव इति। स्तृञ् आच्छादने। स्तृणाति प्वादीनामिति ह्रस्वः। शिति। )। **तत्प्रतिपादकमिति**। योग्यतया संबन्धितमिति द्रष्टव्यम्। **पञ्चसाहस्रमिति**। तदस्य परिमाणमित्यण्। अत्र सङ्ख्यायाः संवत्सरसङ्ख्यस्य चेति सूत्रे सङ्ख्यायाः उत्तरस्य संवत्सरपदस्य सङ्ख्यायाश्च ञिति णिति किति प्रत्यये परतोऽचामादेरचः स्थाने वृद्धिविधानादुत्तरपदवृद्धिरिति द्रष्टव्यम्। ( सङ्ख्यायाः संवत्सरसङ्ख्यस्य च। सङ्ख्याया उत्तरपदस्य वृद्धिः स्यात् ञिदादौ। द्विसांवत्सरिकः। द्वे षष्टी भृते द्विषाष्टिकः। परिमाणान्तस्येत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे काले परिमाणस्याग्रहणार्थम्। तेन द्वैमासिक इत्युत्तरपदवृद्धिर्न। )। **अत एवेति**। वस्तुस्थितिकथनस्य भाष्याभिमतत्वादेवेत्यर्थः। अन्यथा नारायणतनावित्यस्य प्रयोजनान्तराभावाद्वैयर्थ्यमेव स्यादिति भावः।

**वा०र०— वावुपपद इति**। अत्रोपपदत्वमुपोच्चारितपदत्वं ज्ञेयम्। **प्रथनं** विस्तारः। पटस्य विस्तार इत्युदाहरणम्। **पञ्चसहस्राणीति** मूलम्। अनेन सहस्रं परिमाणमस्येति साहस्रं सङ्घः। सहस्रेण क्रीतं साहस्रमित्यादिवत्सहस्रशब्दादेव न प्रत्यय इति सूचितम्। अत एवोत्तरपदस्यादिवृद्धिं टीकाकृद्वक्ष्यति। अत्र च परिमीयतेऽनेनेति परिमाणं परिच्छेदकं संख्यापरिमाणसाधारणं विवक्षितम्। तेन पञ्चसहस्रस्य संख्यात्वात्परिमाणत्वायोग इति शङ्कानवकाशः। तदस्य परिमाणमित्यणिति टीकायामपीदमेव परिमाणं विवक्षितम्। तत्सूत्रीयपरिमाणशब्दस्य परिच्छेदार्थकताया एव मञ्जर्यादावुक्तत्वात्। यथा चैतत्तथा पीता मरीचयो वर्षसाहस्रमित्येतज्ज्ञानपादीयानुव्याख्यान-मूलटीकाप्रपञ्चे अस्माभिरुपपादयिष्यत इति ज्ञेयम्। तदस्य परिमाणमित्यणिति तदिति प्रथमासामर्थ्यादस्येति षष्ठ्यर्थे यथा विहितं प्रत्ययो भवति। तत्प्रथमासमर्थं परिमाणं चेदिति सूत्रार्थः। परिमाणं नाम परिच्छेदकमत्र विवक्षितमिति प्रागेवोक्तम्। शतमानविंशतिकसहस्रवसनादणिति सहस्रशब्दादणो विधानाद्यथा विहितप्रत्ययोऽण् भवतीत्याशयेन अणित्युक्तम्। तेनास्य यथाविहितप्रत्ययविधायकतया ठगादिप्रत्ययप्रसक्तिरिति निरस्तम्। वर्षसहस्रमित्यत्र तु सहस्रशब्दादेवाणमाश्रित्य वर्षाणां साहस्रः सङ्घ इति सङ्घार्थे संख्यायाः संज्ञासङ्घसूत्राध्ययनेष्वित्यनेनाणिति मूलादौ वक्ष्यते। अत एव तत्र तद्धितेष्वचामित्यनेनैवादिवृद्धावपि प्रकृते पञ्चसहस्रशब्दादणि तद्धितेष्वित्यनेन पञ्चपदे आदिवृद्धिप्राप्तिपरिहाराय सहस्रपदे वृद्धिप्रापकसंख्यायाः संवत्सरसंख्यस्य चेति सूत्रमुदाहरिष्यति टीकाकृदिति ज्ञेयम्। उत्तरपदवृद्धिरितीति 'द्वे षष्टी भृतो द्विषाष्टिकः' इत्यत्रेवेति भावः। मूले ग्रन्थमित्युक्त्या ग्रन्थविशेषणत्वात् द्वितीया स्फुटैवेति सूचितम्। वर्षसहस्रमिति वक्ष्यमाणे तु कालाध्वनोरत्यन्तसंयोग इत्यनेन मासमधीत इत्यादाविव द्वितीयेति वक्ष्यामः।

**स०व्र०— प्रथने वावशब्द इति प्रतिषेधादिति**। प्रथने गम्यमाने विपूर्वात् स्तृणातेः घञ्प्रत्ययो भवति। तच्चेत्प्रथनं न शब्दविषयं भवतीति प्रतिषेधादित्यर्थः। **अथवा नञा निर्दिष्टमनित्यमिति**। अशब्द इत्यत्र नञा





निर्दिष्टमित्यर्थः । **अत एव विष्णुनेत्यस्येति** । अत एव वस्तुस्थितिज्ञापनार्थमभिहितत्वादेवेत्यर्थः । अन्यथा नारायणतनावित्यस्य प्रयोजनाभावादिति भावः । अनेन नारायणस्य विष्णववतारत्वकथनेन व्यासस्यापि तत्सूचनाद्यद्यपीत्याद्युक्तं प्रमेयं ज्ञापितं भवतीति ध्येयम् । **लाक्षणिकं व्याख्येयमिति** । कृतादित्येतत्प्रकाशितादिति व्याख्येयमित्यर्थः ।

**विठ्ठ०— प्रथने वावशब्द इति** । वौ विशब्दे उपपदे सति प्रथने विस्तीर्णत्वे गम्यमाने तृणोतेर्धातोः घञ्प्रत्ययो भवति । अशब्दे तत्प्रथनं यदि शब्दविषयं तर्हि घञ् न भवतीति सूत्रार्थः । तथाच प्रस्तुते ब्रह्मतर्करूपशब्दस्यैव प्रकृतत्वात् घञ्प्रत्ययाप्राप्तेरादिवृद्ध्यसंभवेन विस्तरादिति भवितव्यं विस्तारादिति कथमिति भावः । अर्थपरत्वमेवास्य पदस्य अतो घञुपपत्तिरिति परिहरति **मैवमिति** । **वस्तुस्थितीति** । वस्तुतो व्यासकृतस्संक्षिप्तोऽन्यो ब्रह्मतर्कोऽस्तीति ज्ञापनार्थत्वादित्यर्थः । **प्रयोजनमिति** । सङ्क्षेपकरणरूपं प्रयोजनमित्यर्थः । **अत एवेति** । वस्तुस्थितिज्ञापनायैवेत्यर्थः । **विष्णुनेत्यस्येति** । यत्समीरितमिति पुराणवचनतः एव तस्य विष्णुनेत्यस्येत्यर्थः । **नञा निर्दिष्टमिति** । अशब्द इति नञा निर्दिष्टमित्यर्थः । **अन्यथेति** । पूर्वव्याख्याने शब्दनिष्ठं कृतत्वमर्थे लक्षणया कृता ग्रन्थप्रतिपाद्यादिति व्याख्येयमित्यर्थः ।

**चषकः— प्रथने वाविति** । शब्दाविषयके प्रथने गम्यमाने विपूर्वात् स्तृणातेर्घञ् इति सूत्रार्थः ।

**६८९ सु०— शङ्काद्वयपरिहारमुपसंहरति अत इति ।**

## अनु०— अतस्तदर्थं सङ्क्षेपादत इत्यभ्यसूचयत् ॥

**यतोऽयमर्थो ब्रह्मतर्कोक्तो, ब्रह्मतर्कश्च मीमांसाङ्गम्; अतस्तदर्थं प्रकृतत्वात् अत इत्यभ्यसूचयदिति युज्यत इत्याद्यशङ्कापरिहारस्योपसंहारः । यतस्तर्कमीमांसाशास्त्रयोर्भेदः, स च व्युत्पाद्यभेदाधीनः; अतस्तदर्थं तर्कशास्त्रव्युत्पाद्यमेतमर्थम् 'अत' इति सङ्क्षेपात् एव अभ्यसूचयत् न विस्तरेणेति द्वितीयशङ्कापरिहारस्येति ।**

**परि०— शङ्काद्वयेति** । एतत्सर्वमित्यादिग्रन्थावतारिकायां कृतं यच्छङ्काद्वयं तस्य यः परिहारः एतत्सर्वं तर्कशास्त्र इत्यादिना कृतः तमुपसंहरतीत्यर्थः ।

**वं०प०— शङ्काद्वयमिति** । अप्रकृतत्वविस्तराकरणरूपं शङ्काद्वयमित्यर्थः ।





**आनन्दः— तदर्थं** ब्रह्मतर्कार्थभूतवेदप्रामाण्यादिकम्। तदर्थं च व्युत्पाद्यभेदार्थम्, तल्लिङ्गतयैव बुद्धिस्थत्वे लिङ्गतयैव तथा प्रकृतमित्यर्थः। **तदर्थं** मीमांसायाम्।

**कं०रा०— अयमिति**। वेदप्रामाण्यादिरूपोऽर्थ इत्यर्थः। ननु नातिविस्तृतिं चकारेति पुनः साध्याभिधानं व्यर्थम्। यतो भगवान्व्यासो देवैर्निमित्तैस्तत्प्रार्थनया दुर्गमार्थेषु वेदेषु तदर्थमीमांसायां व्यापृतोऽतश्चानवरतया वेदप्रामाण्यादिरूपार्थे सङ्क्षेपादभ्यसूचयदिति प्रकृतेनानुवृत्तेन साध्येनान्वयसंभवादित्याशङ्क्य पुनः साध्याभिधानस्य प्रयोजनमाह **सङ्क्षेपादसूचयदिति**।

**श्रीनिधि०— तदर्थं** तस्यार्थम्।

**वा०चं०—** शङ्काद्वयपरिहारोपसंहारत्वोपपत्तयेऽत इति तत्तद्योग्यपरामर्शविषयोपदर्शकयच्छब्दोपेत-वाक्यमध्याहृत्य निष्कृष्टहेतुस्वरूपं दर्शयन्नेव वाक्यं योजयति **यतोऽयमर्थ इत्यादिना**। सङ्क्षेपादित्युक्तिबला-देवावधारणलाभमभिप्रेत्य तद्व्यावर्त्यं दर्शयति **नेति**।

**विठ्ठ०— शङ्काद्वयेति**। अत इति परामर्शानुपपत्तिरिति एतत्सर्वमित्यस्यावतारिकायां यच्छङ्काद्वयं कृतं तत्परिहारमित्यर्थः।

**प्रकारान्तरेण एतच्छङ्काद्वयस्य परिहारः—**

**६९० सु०— प्रकारान्तरेण शङ्काद्वयं परिहरति यत इति।**

## अनु०— यतोऽनुभवतः सर्वं सिद्धमेतदतोऽपि च ॥

**वक्तृश्रोतृबुद्धौ परिवर्तमानं हि साक्षात्प्रकृतमित्युच्यते। ग्रन्थोक्तत्वं तु तल्लिङ्गतयैव तथा। एतच्च सर्वं प्रपञ्चसत्यत्वादिकं यतोऽनुभवत एव सिद्धमतोऽपि प्रकृतत्वात् 'अत' इति परामृश्य हेतुत्वेन कथनं युज्यत इति। यत** एतद्बन्धसत्यत्वादिकम् **अनुभवसिद्धं** सर्वेषाम् **अतः अतिस्फुटत्वादपि 'अत' इति सङ्क्षेपादेवाभ्यसूचयत् न विस्तरेणेति।**

**वं०प०— तल्लिङ्गतयेति**। बुद्धिप्रकृतत्वज्ञापकतयेत्यर्थः।

**श्रीनिधि०— तल्लिङ्गतया** वक्तृश्रोतृबुद्धिपरिवृत्तिलिङ्गतया तथा प्रकृतमित्युच्यते।





**वा०चं०**— ननु प्रकृतत्वोपपादनाय ग्रन्थोक्तत्वे वक्तव्येऽनुभवसिद्धत्वोक्तिरसङ्गतेत्यत आह **वक्त्रिति**। अत्रात इति परामर्शविषयस्य यतोऽनुभवतः सिद्धमिति मूल एव दर्शितत्वाच्छङ्काद्वयपरिहारोपयुक्तनिष्कृष्टहेतु-स्वरूपमात्रप्रदर्शनम्। **प्रकृतत्वादिति** स्फुटत्वादिति।

**वा०र०**— **प्रकृतत्वादतिस्फुटत्वादिति**। एतच्च सर्वमित्यादिवाक्यद्वयस्य संग्रहोऽयम्। स्फुटत्वादिति चेति चशब्दयुक्तः पाठः स्वरस एव। चशब्दाभावे तु तदध्याहारेण योजनीयम्।

**विठ्ठ०**— नन्वनुभवतः सिद्धमित्यनेन कथमप्रस्तुतत्वादिति शङ्कापरिहारः। तस्य ग्रन्थप्रकृतत्वानुप-पादकत्वादित्यतस्तदुपपादनपरतया व्याख्याति **वक्तृश्रोत्विति**। **लिङ्गतयैवेति**। बुद्धौ परिवर्तमानताज्ञापकतयैव प्रस्तुतमित्युच्यते न साक्षादित्यर्थः। बन्धसत्यत्वादिकमनुभवसिद्धमित्यर्थः।

द्वितीयशङ्कायाः प्रकारान्तरेण परिहारः—

**६९१ सु०— एवं शङ्काद्वयं प्रकारद्वयेन परिहृत्य द्वितीयशङ्कां प्रकारान्तरेणापि परिहरति देवैश्चेति।**

## अनु०— देवैश्च दुर्गमार्थेषु व्यापृतो नातिविस्तृतिम्॥ चकार

**सुगमज्ञानानन्तरं दुर्गमज्ञानं प्राणिनां सुकरमिति सुगमप्रमाणादिस्वरूपं ब्रह्मतर्कादौ व्युत्पाद्येदानीं देवैः निमित्तैः तत्प्रार्थनयेति यावत्। दुर्गमार्थेषु वेदेषु तदर्थमीमांसायां व्यापृतः प्रवृत्तो यतो भगवान् व्यासः अतश्चानवसरतयाऽस्य प्रमेयस्य नातिविस्तृतिं चकार। सङ्क्षेपाद(तइत्य)भ्यसूचयदिति प्रकृतेऽपि पुनर्नातिविस्तृतिं चकारेति साध्याभि-धानं प्रकृतत्वोपपादननिरासार्थम्। अन्यथा साध्यद्वयस्यापि प्रकृतत्वात्तदर्थमप्येतद्वाक्य-योजनायां शिष्याणां मनःखेदः स्यादिति। पूर्वं तु शास्त्रभेदसिद्धये विस्तरो न कृत इत्युक्तम् इदानीं त्वप्रसक्तत्वादिति भेदः।**

**परि०**— **प्रकृतत्वोपपादननिरासार्थमिति**। अप्रकृतपरामर्शित्वं कथमतःशब्दस्येति प्रथमशङ्कानिरासार्थमतःपदपरामृश्यमानस्य प्रकृतत्वं प्रतिपादयितुं यतोऽनुभवतः सिद्धमित्यादिग्रन्थो







यथा प्रवृत्तः तथाऽयमपीति भ्रमनिरासार्थमेव प्रवृत्तमिति दर्शयितुमित्यर्थः । **साध्यद्वयस्यापीति** । अतःपदपरामर्शविषयस्य प्रकृतत्वं सङ्क्षेपेणार्थकथनं चेत्येवंरूपसाध्यद्वयस्यापीत्यर्थः । **पूर्वं त्विति** । एतत्सर्वं तर्कशास्त्र इत्यादौ । **अप्रसक्तत्वादिति** । प्रसङ्गानुकूल्यविरहादित्यर्थः ।

**गु०दी०— प्रकृतत्वोपपादननिरासार्थम्** इत्यत्र पूर्ववत् प्रकृतत्वस्याप्युपपादनमत्र क्रियत इति शङ्कानिरासार्थमित्यर्थः ।

**यादु०— अप्रसक्तत्वादिति** । प्रसङ्गानुकूल्यविरहादित्यर्थः ।

**वं०प०— प्रकृतत्वोपपादनेति** । अप्रकृतत्वात्कथमुक्तार्थजातस्यातःशब्देन परामर्श इति शङ्कापरिहाराय यत्प्रकृतत्वोपपादनं तन्निरासार्थमित्यर्थः । अन्यथा पुनः साध्यानभिधाने । **साध्यद्वयस्यापीति** । प्रकृतत्वोपपादनातिविस्तराकरणरूपसाध्यद्वयस्यापीत्यर्थः । **तदर्थमपीति** । सङ्क्षेपतः सूचने निमित्तोपपादनवत्प्रकृतत्वोपपादनायामपीत्यर्थः ।

**आनन्दः— अन्यथेति** । नातिविस्तृतिं चकारेति साध्यानभिधान इत्यर्थः । पौनरुक्त्यं परिहरति **पूर्वं त्विति** ।

**कं०रा०— प्रकृतेऽपीति** । **प्रकृतत्वेति** । देवैश्च दुर्गमार्थेषु व्यापृत इत्यनेन वेदप्रामाण्यादेः प्रकृतत्वमुपपाद्यत इति प्रतीतिनिरासार्थमित्यर्थः । **अन्यथेति** । पुनः साध्याभिधानाभावे वेदप्रामाण्यादेः प्रकृतत्वं सङ्क्षेपकरणं चेति साध्यद्वयस्य प्रस्तुतत्वात्प्रकृतत्वोपपादनपरतयाऽप्येतद्वाक्ययोजनायां शिष्याणां मनसि खेदः स्यादित्यर्थः ।

**वा०चं०**— अत्र दुर्गमार्थेषु व्यापृत इत्युक्त्या प्रमाणादिस्वरूपं सुगमत्वादनवसराच्च सर्वथा न प्रतिपादितवानिति प्रतीयते । तथा च पूर्वोक्तविरोधो ब्रह्मतर्के विस्तरेण प्रमाणादिप्रतिपादनप्रतिपादकप्रमाणान्तरविरोधश्च । अतः सुगमं ब्रह्मतर्कादौ प्रमाणादिस्वरूपं विस्तरेण प्रतिपाद्येदानीं दुर्गमार्थेषु व्यापृत इति व्याख्येयमित्यभिप्रेत्य सुगमस्यादौ व्युत्पादने निमित्तं दर्शयन्वाक्यं योजयति **सुगमेति** । देवप्रेष्यत्वशङ्कां व्यावर्तयितुं देवैरिति व्यापृत इति च व्याख्याति **देवैरित्यादिना** । दुर्गमार्थवेदेषु प्रवृत्तिर्न ब्रह्ममीमांसायां विस्तरेण प्रमाणादिस्वरूपानिरूपणे निमित्तमित्यतस्तच्छब्देनात्र मीमांसैवाभिप्रेतेत्याह **तदर्थेति** । ननु देवप्रार्थनया दुर्गमार्थमीमांसाव्यापृतत्वोक्त्या न कोऽपि विस्तराकरणे हेतुरुक्तः । न चानवसरत्वोक्तिरिति वाच्यम् । प्रमाणादिस्वरूपस्यापि मीमांसाप्रमेयोपपादनोपयुक्तत्वेन प्रतिबन्धकत्वाभावात् । प्रतिपाद्यभेदसिद्ध्यर्थत्वोक्त्याऽप्यर्थादनवसरत्वस्यैव लाभाच्च । न च पूर्वोक्तहेतावेव तात्पर्यमिति वाच्यम् । पौनरुक्त्यापत्तेरित्यत आह **पूर्वं त्विति** । तथा च विस्तरेणात्र प्रमाणादि-





प्रतिपादने पूर्वं शास्त्रभेदासिद्धिरुक्ता । इदानीं तु श्रोतृप्रयोजनोद्देशविरोध इति स्फुटोऽर्थभेदः । अत्राप्रसक्तत्वं देवैर्व्यापृत इत्यनेन सूचितमिति द्रष्टव्यम् ।

**वा०र०— न हेतुरुक्त इति** हेतोरुक्तिर्निषिद्धा । तामाक्षिपति **न चानवसरत्वेति** । अनवसरत्वहेतोरुक्तिरस्तीत्यर्थः । **प्रतिबन्धकत्वाभावादिति** । प्रमाणादिजिज्ञासाया इति शेषः । प्रतिबन्धकजिज्ञासापगमस्यैव अवसरत्वादिति भावः । यद्वा जिज्ञासाद्वारकं प्रमाणादिस्वरूपस्यैव प्रतिबन्धकत्वं बोध्यम् ।

**स०व्र०— प्रकृतत्वोपपादननिरासार्थमिति** । पूर्ववत्प्रकृतत्वस्यापि उपपादनमत्र क्रियत इति शङ्कानिरासार्थमित्यर्थः । ननु 'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रत' इत्यादिना अस्य मीमांसाशास्त्रस्य प्रमेयपरत्वेन यदि प्रमेयपरेऽपि प्रमाणस्वरूपं विस्तरेण प्रतिपाद्येत तर्हि भेदो न स्यात् । अतः तदर्थं सङ्क्षेपेणोक्तमित्युक्तम् । इदानीमपि देवैश्च दुर्गमार्थेष्वित्यर्थपरत्वेनैव भेदस्योच्यमानत्वेन पौनरुक्त्यमित्यत आह **पूर्वं त्विति** । नात्रार्थेष्वित्यत्र भारः किन्तु व्यापृत इत्यत्रैव भारः ।

**वि०ठ०— प्रकृतत्वोपपादननिरासार्थमिति** । अतःशब्दस्य अप्रकृतपरामर्शित्वरूपाद्यशङ्कानिरासाय प्रकारान्तरप्रस्तुतत्वोपपादनमत्र क्रियत इति भ्रमनिरासार्थमित्यर्थः । ननु विद्यापृथक्त्वादित्यत्र पृथग्विद्यात्वादिव्युत्पाद्य भेदसिद्धये सङ्क्षेपेण कृतमित्युक्तं तदेवात्रोच्यते वेदार्थमीमांसायां प्रवृत्तत्वान्नातिविस्तृतिं चकारेति । तथा च प्रकारान्तरेणेति कथमुक्तमित्यत आह **पूर्वं त्विति** ।

**द्वितीयशङ्कायाः कारणान्तरेणापि परिहारः—**

**६९२ सु०— विस्तराकरणे कारणान्तरमप्याह एता इति ।**

**अनु०— एता ह्यवज्ञेया युक्तयः प्रतिपक्षगाः ।**

**यस्मात् एताः प्रतिपक्षगा बन्धमिथ्यात्वादौ प्रतिवादिनोपन्यस्ता युक्तयः अवज्ञेयाः निर्दलत्वात् । अतोऽपि सूत्रकारस्तन्निराकरणे नातिविस्तृतिं चकार । किन्तु हेयताज्ञापनाय सङ्क्षेपं चक्रे । अस्माभिस्तु तामेव निर्दलतां दर्शयितुं किञ्चित् प्रपञ्चितमिति भावः ।**

**वं०प०—** ननु तर्हि बन्धमिथ्यात्वं नैव मुक्तिरपेक्षत इत्यादिना बन्धमिथ्यात्वनिराकरणं भवद्भिः कस्मात्प्रपञ्चेन कृतमित्यत आह **अस्माभिस्त्विति** । **तामेवेति** । सूत्रकाराभिप्रेतामेवेत्यर्थः ।

**श्रीनिधि०— निर्दलत्वात्** उपोद्बलकशून्यत्वात् ।





**वा०चं०—** यदि वस्तुतः प्रतिपक्षगतत्वं तर्हि नावज्ञेयमित्यतः प्रतिवादिनोपन्यस्तयुक्तय इत्युक्तम् । अतोऽपीत्यादिना चशब्दस्य नातिविस्तृतिं चकारेत्यस्य चानुवृत्तिं च सूचयति । तर्हि सङ्क्षेपेण निरासोऽपि न कर्तव्य इत्याशङ्कते **किन्त्विति** । तर्हि भाष्यकारेणापि न विस्तरतो निरस्या अहेयताज्ञापनापत्त्या सूत्रकारविरुद्धाचरणापत्ते-रित्यतो भाष्यकाराभिप्रायमाह **अस्माभिस्त्विति** ।

**वा०र०—** **चशब्दस्येति** । देवैश्चेत्यत्रत्यचशब्दस्यातश्चेति प्रकारान्तरसमुच्चयार्थतया योजितत्वादत्रापि तस्यानुवृत्तौ यच्छब्दार्थकहिशब्दबलादेवात इत्यस्य लाभे चशब्दस्य तेन संबन्धे अतश्चेत्यस्य पूर्ववल्लाभे अतोऽपीति सिध्यतीति भावेन चशब्दस्यानुवृत्त्युक्तिरिति ज्ञेयम् ।

**स०व्र०—** **प्रपञ्चितं** प्रपञ्चनं पौनरुक्त्यमिति भावः ।

**वि०ठ०—** निर्दलत्वे सङ्क्षेपेणापि किमर्थं निराकरणं कर्तव्यमिति शङ्कते **किन्त्विति** । उत्तरमाह **हेयतेति** । तर्हि भाष्यकारेण किमर्थं प्रपञ्चितमित्यतो भाष्यकाराभिप्रायमाह **अस्माभिरिति** ।

प्रत्यक्षदृष्टवस्त्वपलापिनां वेदशास्त्रे उपेक्षणीयत्वम्—

**६९३ सु०— नन्वस्त्ववैदिकैर्बौद्धादिभिरुत्प्रेक्षितानां युक्तीनामवज्ञेयत्वं वैदिकैरुक्तास्तु नावज्ञामर्हन्ति समूलत्वेन सदलत्वात् । अतः कथमेतदित्यत आह प्रत्यक्षेति ।**

**अनु०— प्रत्यक्षेक्षाक्षमः पक्षं कमेवात्राभिवीक्षते ।**
**तस्मादक्षमपक्षत्वान्मोक्षशास्त्रेऽभ्युपेक्षितः ॥**

**प्रत्यक्षशब्देन स्पष्टप्रतीत्युपलक्षणम् । प्रत्यक्षा च सेक्षा च स्पष्टा प्रतीतिस्तस्यामपि अक्षमः । स्पष्टं हि प्रतीयते दुःखादिसत्यत्वादिकम् । तदपि यो द्रष्टुं न शक्नोति सः अत्र मीमांसाविषये कमेव पक्षं प्रतिकूलम् अभिवीक्षते । उत्प्रेक्षते । न कमपि । तस्मादक्षम-पक्षत्वान्मोक्षशास्त्रे वेदे प्रवृत्तोऽप्याग्रहात् उपेक्षित एव सूत्रकृता न तु विस्तरेण निराकृत इति ।**

**परि०—** प्रत्यक्षपदेन तन्मात्रोपादानं वारयति **स्पष्टप्रतीत्युपलक्षणमिति** । **प्रवृत्तो-ऽप्याग्रहादिति** । आग्रहात्प्रवृत्तोऽपीत्यन्वय इत्येके । उत्तरेणान्वय इत्यन्ये ॥ ॥ **(इति अतःशब्द-स्यानेकार्थपरामर्शित्वसमर्थनम् ॥)**





**गु०दी०**— **प्रवृत्तोऽप्याग्रहात्** इत्यत्र आग्रहात् प्रवृत्त इति योजना।

**यादु०**— सर्वस्य प्रपञ्चस्य प्रत्यक्षत्वाभावादाह **प्रत्यक्षशब्देनेति**। प्रत्यक्षेक्षाशब्दे नेत्यर्थः। तथा च प्रत्यक्षशब्देन स्पष्टत्वमीक्षाशब्देन च प्रतीतिमात्रमुपलक्ष्यत इति ज्ञेयम्। अत एवाह **प्रत्यक्षा च सेत्यादि**। **तस्यामप्यक्षम इति**। तादृशप्रतीतिरूपक्रियाकर्ता नेत्यर्थः। एतदेव दर्शयति **स्पष्टं हीत्यादिना**।

**वं०प०**— **समूलत्वेनेति**। वेदमूलकत्वेनेत्यर्थः।

**वा०चं०**— मोक्षशास्त्र इत्यनेन वेदे प्रवृत्त्युक्त्या सूचितां शङ्कां निरसितुमुत्तरवाक्यमवतारयति **नन्विति**। ननु प्रत्यक्षेक्षाक्षमत्वोक्तिरयुक्ताऽतःशब्दार्थतयोक्तयुक्तिजातस्य सर्वस्यापि प्रत्यक्षप्रतीतिमात्रविषयत्वा-भावादित्यत आह **प्रत्यक्षशब्देनेति**। अत्र प्रत्यक्षशब्दः स्पष्टतापरः। ईक्षाशब्दश्च प्रतीतिपर इति भावः। तस्यामपीत्यनेन सूचितं कैमुत्यं प्रकृतानुगुणतयोपपादयति **स्पष्टं हीति**। अत्रेत्यस्य बन्धसत्यत्वादिविषयत्वे अनन्वयप्रसङ्गादाह **अत्रेति**। अभिवीक्षत इत्यस्य प्रत्यक्षप्रतीत्यर्थकत्वे कैमुत्यानुपपत्तेरतीन्द्रिये तदनुपपत्तेश्चाह **अभिवीक्षते उत्प्रेक्षत इति**। मोक्षशास्त्र इत्यस्य मीमांसाविषयकत्वे पूर्वपक्ष्युक्तवैदिकत्वस्य गतिर्नोक्ता स्यात् मोक्षशास्त्र इत्युक्तेर्वैयर्थ्यं चेत्यतः प्रकृतोपयोगितया प्रवृत्तोऽप्याग्रहादित्यध्याहरन्नेव वेदविषयकतया मोक्षशास्त्र इत्येतद्व्याख्याति **वेद इत्यादिना**।

**वा०र०**— प्रत्यक्षपदस्यैव स्पष्टप्रतीत्यर्थत्वे ईक्षापदवैयर्थ्यं प्रत्यक्षेक्षेत्यस्य स्पष्टा प्रतीतिरिति उत्तरत्रार्थ-कथनं च न युक्तमित्यतो योजयति **अत्र प्रत्यक्षशब्द इति**।

**स०व्र०**— लौकिकप्रवेदनीये साक्षात्त्वावच्छिन्नप्रतीतिनियमादाह **प्रत्यक्षशब्देन स्पष्टप्रतीत्युप-लक्षणमिति**। प्रतीतिमात्रोपलक्षणमित्यर्थः। दध्युपघातकत्ववत् स्पष्टत्वमेव शक्यसंबन्ध इति प्रापणम्। **स्पष्टेति**। स्पष्टसामान्यमेव लक्ष्यं; प्रतीतिः तु अक्षशब्दसमभिव्याहारादिति ज्ञेयम्।

**स०ना०**— 'प्रत्यक्षेक्षाक्षमः पक्षं कमेवात्राभिवीक्षते' इत्यनुव्याख्यानसुधायां प्रत्यक्षशब्देन स्पष्टप्रती-त्युपलक्षणमिति श्रूयमाणं वाक्यं न सुधावाक्यम्। अपि तु केनचित्प्रक्षेपितमिति बोध्यम्। अतो (न) मनीषिणा न व्याख्येयम्॥ **इति जिज्ञासाधिकरणम्**॥

**विठ्ठ०**— प्रत्यक्षशब्दस्य प्रात्यक्षिकज्ञानमात्रार्थकत्वप्रतीतिं वारयति **प्रत्यक्षशब्देनेति**। **स्पष्टप्रतीत्युप-लक्षणमित्यस्य** प्रतीतिगतस्पष्टत्वोपलक्षणमित्येवार्थो न तु समग्रस्योपलक्षणमिति। तथात्वे ईक्षापदवैयर्थ्यादिति ज्ञेयम्। **प्रवृत्तोऽप्याग्रहात्** इत्यस्य दुराग्रहमात्रेण प्रवृत्तोऽपीत्यर्थः।







**६९४ सु०— इदमुक्तं भवति। यो हि लौकिकप्रवेदनीयमप्यर्थं न जानाति तस्यालौकिकार्थे वेदेऽधिकार एव नास्ति । तथाऽपि तत्र वैयात्यात्प्रवृत्तोऽवज्ञामेवार्हति न तु प्रतिपक्षिभावमिति । 'मोक्षशास्त्र' इत्यनेनापि तस्य वेदविचारानधिकारं सूचयति । वेदो हि मोक्षशास्त्रमिति प्रसिद्धः । 'तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्परास्सर्व एवे'ति श्रुतेः । तं च स्वर्गमात्रपर्यवसितं वदन् कथमत्राधिक्रियते । न हि तत्प्राप्यमविद्वांस्तेन च पथा प्रतिष्ठमानो नोन्मत्त इति सर्वं सुस्थम्।**

**तदनेन 'अतःशब्दो हेत्वर्थ' इति भाष्यं स्पष्टीकृतं भव(ती)ति।**

**वं०प०— तं च स्वर्गमात्रेति** । स्वर्गमात्रपर्यवसितमिति मीमांसककटाक्षेणोक्तम् । तन्मतस्यापि पूर्वमतःशब्देन निराकृतत्वात् । वस्तुतस्तु तमित्यनेन वेदैकदेशकर्मकाण्डपरामर्शेन मायावाद्यप्यत्र विवक्षित इत्यवधेयम् । मोक्षोद्देशेन भगवत्प्रतिपादनपराणां सर्ववेदानां मध्ये कर्मकाण्डं स्वर्गमात्रपर्यवसितं वदन्नित्यर्थः । **तत्प्राप्यमिति** । वेदप्रतिपाद्यं तत्प्रयोजनं चाविद्वानित्यर्थः । **तेन च पथेति** । वेदरूपमार्गेणेत्यर्थः । आत्मनो वैदिकत्वं वदन्निति यावत् ।

**आनन्दः—** प्रत्यक्षेक्षाक्षमत्वस्य हेयत्वे कथं हेतुत्वमित्यत आह **इदमुक्तं भवतीति** । तथापि कुतो नाधिकार इत्यत आह **न हीति** । नन्वेतावत्पर्यन्तं अतःशब्दव्याख्यानेन किं भाष्यं स्पष्टीकृतमित्यत आह **तदनेनेति** ।

**श्रीनिधि०— स्वर्गमात्रपर्यवसितं वदन्** प्राभाकरः । उपलक्षणं चैतत् । शून्यमात्रपर्यवसितं वदन्नित्यपि द्रष्टव्यम् । प्रत्यक्षेक्षाक्षम इत्यत्रापि प्रत्यक्षत एव रजतज्ञानस्यैकत्वं प्रतीयते तथा स्वप्रकाशज्ञानस्य वृत्त्यन्यत्वं च । तदपि यो द्रष्टुं न शक्नोतीति द्रष्टव्यम् । अथवा स्वर्गमात्रपर्यवसितं वदन् मायी सगुणमोक्षस्य अनित्यत्वात् नित्यत्वेनाभ्युपगतस्य च शून्यमात्रपर्यवसानादिति द्रष्टव्यम् । तद्व्युदासार्थं स्वयमित्युक्तमिति ।

**वा०चं०—** ननु स्पष्टप्रतीतबन्धसत्यत्वाद्यज्ञानेऽपि वैदिकोक्तयुक्तीनां नावज्ञेयत्वमित्यस्य किमायातम् । न च वैदिकत्वमेवासिद्धमित्यभिप्रेतम् । वेदप्रवृत्त्यैव तत्सिद्धेः । न च वेदानधिकारोऽत्राभिप्रेतः । नियामकाभावात् । वेदप्रवृत्त्यन्यथाऽनुपपत्त्यैव तत्सिद्धेश्च । यथाकथञ्चित्प्रवृत्तस्यावज्ञेयत्वानुपपत्तेश्चेत्यतो मूलाभिप्रायमाह **इदमुक्तं भवतीति** । ननु स्पष्टत्वाय वेद इत्येव वक्तव्ये मोक्षशास्त्र इत्युक्तेर्न प्रयोजनविशेषं पश्याम इत्यतस्तत्प्रयोजनं दर्शयति **मोक्षशास्त्र इत्यनेनापीति** । **तं चेति** । अनेन वेदान्तानां मोक्षपरत्वेऽपि कर्मकाण्डस्य स्वर्गमात्रपर्यवसितत्वं वदन्मायी न स्वर्गादिः फलान्तरमिति सर्वस्यापि वेदस्य स्वर्गमात्रपर्यवसितत्वं वदन्मीमांसकोऽपि वेदानधिकार्येवेति सूचितं भवति **तदनेनेति** । ज्ञानी प्रियतमोऽतो म इत्यारभ्यैतत्पर्यन्तेनेत्यर्थः ।





**वा०र०— लौकिकप्रवेदनीयमिति** मूलम् । अत्र लौकिकपदं लोकपरम् । सिद्धे शब्दार्थसंबन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेष्विति प्रथमवार्तिकव्याख्यानावसरे भाष्यकृता सिद्धे शब्दार्थसंबन्ध इत्यादिकं वाक्यभेदमाश्रित्य बहुप्रकारैर्व्याख्याय प्रियतद्धिता दाक्षिणात्याः यथा लोके वेदे चेति प्रयोक्तव्ये यथा लौकिकवैदिकेष्विति प्रयुञ्जते इति लौकिकवैदिकपदप्रयोगोपपादनात् । अथवा युक्त एव तद्धितार्थ इत्यादिभाष्योक्तं प्रकारान्तरं तु तद्वार्तिकमात्रविषयम् । लोकतोऽर्थबोधार्थप्रयुक्त इति वार्तिकं योजनेति ज्ञेयम् । तत्समर्थनमिति पाठः । समर्थनमित्येव पाठेऽपि विष्णुविषयताया इत्यस्यानुवृत्त्या योजना कार्या । अनुपपत्त्यभावाच्चेत्यस्य समर्थनमयुक्तमिति पूर्वेणान्वयः ।

**वि०ठ०—** मायिपक्षस्य वेदमूलतया सदलत्वात्कथमवज्ञेयतेत्यस्य स्पष्टं परिहाराप्रतीतेराह **इदमुक्तं भवतीति** । **स्वर्गमात्रपर्यवसितमिति** । कार्यतावाद्यपेक्षया मायिना निर्गुणब्रह्मतापत्तिरूपमोक्षाङ्गीकारात् । यद्वा निर्गुणमुक्तेरप्यङ्गीकारेऽपि तस्य च तन्मते अनित्यासारतया स्वर्गसमत्वात्तद्विवक्षया **स्वर्गमात्रेत्युक्तमिति** ।

**॥ सौत्रब्रह्मशब्दस्य विष्णुपरत्वसमर्थनम् ॥**

**प्रकरणबलम् (मीमांसाशास्त्रसंप्रदायज्ञान् प्रति युक्तिः)—**

**६९५ सु०—** एवम् 'अतः'शब्दव्याख्यानमुपपाद्य 'स्वयं भगवते'त्यादिना क्रमप्राप्तं **ब्रह्मशब्दार्थं समर्थयते ।**

'जिज्ञास्योऽयं विधीयते' इति ब्रह्मशब्दो विष्णुविषयो व्याख्यातः । तदनुपपन्नम् । ब्रह्मशब्दस्य जातिजीवकमलासनशब्दराशिषु वृद्धप्रयोगादिसिद्धत्वात् । ननु भगवत्यपि ब्रह्मशब्दो वृद्धप्रयोगादिसिद्ध एव । तथाऽप्यनेकार्थेषु शक्तियुक्तस्य विवक्षाज्ञापकप्रमाणाभावेन भगवत्परत्वावधारणायोगादित्याशङ्क्य यथाऽनेकार्थोऽपि गोशब्दः प्रकरणवशादर्थविशेषपरोऽवधार्यते तथा अनेकार्थोऽपि ब्रह्मशब्दः सूत्रकृता विष्णुविषय एव प्रयुक्त इति प्रकरणवशाज्ज्ञायत इति परिहारं विवक्षुर्ब्रह्मशब्दस्य विष्णौ प्रकृतत्वं तावदाह **स्वयमिति ।**

## अनु०— स्वयं भगवता विष्णुर्ब्रह्मेत्येतत्पुरोदितम् ॥

**परि०— एवमिति** । एतत्सर्वं तर्कशास्त्र इत्याद्युक्तप्रकारेणेत्यर्थः । **प्रकृतत्वमिति** । प्रकरणप्राप्तत्वं तावदाहेत्यर्थः ।





**आनन्दः**— ननूत्तरकारिकायां देवमीमांसान्ते 'स विष्णुराह हि', 'तं ब्रह्मेत्याचक्षते' इत्येतत्सूत्रद्वयं भगवता कृतमित्युच्यते तदयुक्तम् । प्रकृतानुपयोगादित्यत आह **एवमतःशब्देति** । ननु समर्थनं हि तदा कर्तव्यम् । यदि काचनानुपपत्तिः स्यात् तथाच तदभावात्समर्थनमनुपपन्नमित्यतोऽनुपपत्तिं दर्शयति **जिज्ञास्योऽयमिति** ।

**वा०चं०**— ननु ब्रह्मशब्दस्य विष्णुविषयताया अनुक्तत्वेन धर्मिण एव बुद्ध्यनारोहात्तस्या एव वक्तव्यत्वे प्रथमत एव समर्थनमयुक्तम् । अनुपपत्त्यभावाच्च । ब्रह्मशब्दस्य विष्णुविषयतायाः प्रकृतत्वोपपादनं चायुक्तम् । अतःशब्दस्येव ब्रह्मशब्दस्य प्रकृतपरामर्शकत्वाभावादित्यतोऽतस्तत्रैव विष्णुत्वसिद्धेर्विष्णुमेव ब्रह्मेत्यसूचयदित्यनेन सूचितमनुपपत्तिप्रकारं दर्शयन्नेवोक्तबाधकानि परिहरति **ब्रह्मशब्द इति** ।

**विठ्ठ०**— **प्रयोगादि** इत्यादिपदेनाभिधानग्रहणम् । **भगवत्यपीति** । ब्रह्मब्रह्मविवर्धनः परमं यो महद्ब्रह्मेत्यादि वृद्धप्रयोगेन गुणपूर्णत्वाख्ययोगेन च सिद्धत्वादित्यर्थः । **प्रकृतत्वं** प्रकरणप्राप्तत्वम् ।

सूत्रकृतैव पूर्वसन्दर्भे विष्णोः ब्रह्मत्वकथनम्—

**६९६ सु०**— ननु 'अथातो ब्रह्मजिज्ञासे'त्येतदेवादिसूत्रम् । अस्मादपि पूर्वसूत्रस्य विद्यमानत्वे तदादि(त्वेन)व्याख्यानप्रसङ्गात् । अन्यथा प्रथमातिक्रमे कारणाभावादकुशलाः सर्व एव व्याख्यातारः प्रसज्येरन् । तत्कथमस्मात्सूत्रात्पुरा विष्णुर्ब्रह्मेत्येतत्स्वयं भगवता सूत्रकृतोदितमित्युच्यत इति; तत्राह **स विष्णुरिति** ।

## अनु०— स विष्णुराह हीत्यन्ते देवशास्त्रस्य तेन हि ॥

**तेनेति** भगवतेत्यनेन संबध्यते । येनेदं शास्त्रं कृतं तेनैवेत्यर्थः । सत्यमेतदेव ब्रह्ममीमांसाशास्त्रस्यादिसूत्रम् । किन्तु दैवीमीमांसाशास्त्रस्यान्ते 'स विष्णुराह हि' तं ब्रह्मे'-त्याचक्षते' इतिसूत्रद्वयेन विष्णुः ब्रह्मेत्युदितम् । तदनन्तरमेव च 'अथातो ब्रह्मजिज्ञासे'ति सूत्रितत्वात् 'पुरोदितमि'ति युज्यत इति ॥ ये तु देवमीमांसाशास्त्रस्वरूपे तदनन्तरमेत-त्सूत्रप्रणयने विप्रतिपद्यन्ते तेषां पुराणादिप्रसिद्धिविरोधं **हि**शब्देन दर्शयति ।

**आनन्दः**— **ये त्विति** । देवमीमांसाशास्त्रे विप्रतिपद्यन्त इत्यन्वयः । तत्र कथं विप्रतिपत्तिरित्यत-स्तामाह **स्वरूप इति** । देवमीमांसाशास्त्रस्वरूपमेव नास्तीति शास्त्रविप्रतिपत्तिः । तदनन्तरमेवं तत्सूत्रप्रणयन





इत्येतदावर्तनीयम् । एवं च तदनन्तरमेव । देवमीमांसाव्यवहितमेव । तदनन्तरमेव इति यावत् । **एतत्सूत्रप्रणयने** स विष्णुराह हि तं ब्रह्मेत्यादिसूत्रद्वयप्रणयने । **तदनन्तरम्** एतत्सूत्रद्वयानन्तरमेव । **एतत्सूत्रप्रणयने** अथातो ब्रह्मजिज्ञासेतिसूत्रप्रणयने ।

**वा०चं०—** भगवदुदितत्वं न सूत्रकारीयब्रह्मशब्देन परामर्शप्रयोजकमित्यतो भगवतेति व्याख्यातं **सूत्रकृतेति** । अत एव तेनेत्यपि तथैव व्याख्याति **येनेति** । उदाहृतसूत्रमात्रस्य विवक्षितार्थासाधकत्वादर्थतोऽनूदितद्वितीयं सूत्रमुदाहरति । हिशब्दस्य हेतुपरत्वायोगाल्लोकप्रसिद्धेश्चाभावादाह **ये त्विति** ।

**वि०ट०— अथात इति** । अथातो दैवी मीमांसेत्यादिः । 'स विष्णुराह हि' 'तं ब्रह्मेत्याचक्षते' इत्याद्युदाहृतोंतश्चेत्यर्थः ।

पूर्वसन्दर्भ-देवशास्त्रकर्तृनिर्देशः—

**६९७ सु०— ननु देवतामीमांसाशास्त्रं शेषपैलाभ्यां कृतमिति पुराणादौ प्रसिद्धं तत्कथमुच्यते 'भगवतोदितमि'ति तत्राह आद्यन्तमिति ।**

**अनु०— आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृतम् ॥**
**मध्यं तदाज्ञया शेषपैलाभ्यां कृतमञ्जसा ॥**

**'अथातो दैवी'त्यादिः, उदाहृतोऽन्तश्चाद्यन्तम् । 'यतः तदाज्ञया कृतम् अतो अञ्जसा एव कृतमि'त्यनेन अनेककर्तृकत्वान्न कन्थायितत्वमस्य शङ्कनीयमित्याह । अयं च विशेषो विशेषवाक्यादिभिरवगन्तव्य इति ।**

**परि०— उदाहृतोऽन्तश्चेति** । स विष्णुराह हीत्यन्तश्चेत्यर्थः । अयं च विशेष इति । उक्तदिशाऽनेककर्तृकत्वविशेष इत्यर्थः । न पुनरेकस्मिन्नेव वाक्य इति प्रयोज्यत्वमित्यनुषङ्गः ।

**गु०दी०— 'स विष्णुराह हि', 'तं ब्रह्मेत्याचक्षते' इति** सूत्रद्वयस्यायमर्थः । देवमीमांसायामन्ते मीमांसितचतुर्मुखादपि परतः कश्चित् सर्वोत्तमोऽस्ति स विष्णुरेव ''एष सर्वेश्वरः'' ''एको दाधार भुवनानि विश्वा'' ''यो ब्रह्माणं विदधाति पूर्वम्'' इत्यादिश्रुतिस्तथा आह हीत्यादिमसूत्रस्यार्थः । ननु वेदान्ते ब्रह्मणोऽपि क्वचित्सर्वोत्तमतोच्यते अतः कथमेतदित्याशङ्कापरिहाराय तं विष्णुं ब्रह्मेत्याचक्षते इत्युक्तम् । ''नारायणपरं ब्रह्म तत्त्वं नारायणः पर'' इत्यादिश्रुतयः 'तं विष्णुमेव परंब्रह्मेत्याचक्षत' इति द्वितीयसूत्रस्यार्थः ।



**वा०चं०**— आद्यन्तं भगवता कृतं मध्यं शेषपैलाभ्यां कृतमित्येतावतैवोक्तशङ्कापरिहारात्तदाज्ञया-ऽअसैवेत्यस्य वैयर्थ्यं परिहर्तुं तत्प्रयोजनमाह **यत इति**। विशेषवाक्यादिभिरित्यत्रादिपदेन तदानींतनप्रत्यक्षैतिह्ययोः संग्रहः।

**वा०र०**— **भगवतेतीति**। भगवतेत्येतदित्यर्थः। **वैयर्थ्यं परिहर्तुमिति**। यद्वैयर्थ्यं प्राप्तं तत्परिहर्तुमिति योजना।

**६९८ सु०— अस्त्वेवं ब्रह्मशब्दस्य विष्णुविषयतया प्रकृतत्वं, ततः किमित्यत आह अत इति।**

## अनु०— अतस्तत्रैव विष्णुत्वसिद्धेर्ब्रह्मेत्यसूचयत् ॥

यतो देवतामीमांसाऽन्तिमसूत्रद्वयं भगवता कृतम्। **अतस्तत्रैव** सूत्रद्वये ब्रह्मशब्दार्थस्य **विष्णुत्वसिद्धेः** विष्णुतायाः प्रकृतत्वात् 'अथातो ब्रह्मजिज्ञासे'त्यत्रापि 'ब्रह्मे'ति विष्णुमेव **असूचयत्** सूत्रकार इति ज्ञायते। अतो 'जिज्ञास्योऽयं विधीयत' इत्युचितमेव व्याख्यानमिति।

**वा०चं०**— ब्रह्मशब्दस्य विष्णुवाचकतायाः परेणाप्यङ्गीकृतत्वात्प्रकृतोपयुक्तमर्थमाह **विष्णुताया इति**। उक्तशङ्कापरिहारत्वज्ञापनाय विष्णुमित्यध्याहृत्यैवकारस्य तेनाप्यन्वयं प्रदर्शयति **विष्णुमेवेति**।

॥ मन्दान्प्रति युक्त्यन्तरम् ॥

॥ ब्रह्मशब्दस्य नारायणशब्दसमानार्थकत्वम् ॥

नारायणपदस्य गुणपूर्णत्वार्थकत्वम्—

**६९९ सु०— एवं मीमांसाशास्त्रसंप्रदायज्ञान् प्रति सौत्रब्रह्मशब्दस्य विष्णुपरत्वे युक्तिमभिधाय अधुना मन्दान् प्रति ब्रह्मशब्दस्य निरुच्यमाननारायणशब्दसमानार्थताप्रतीतिमप्यत्र युक्तिं विवक्षुर्नारायणशब्दं तावन्निर्वक्ति दोषेति।**

## अनु०— दोषारच्छिद्रशब्दानां पर्यायत्वं यतस्ततः ॥
## गुणा नारा इति ज्ञेयास्तद्वान् नारायणः स्मृतः ॥





**आनन्दः**— ननूत्तरश्लोके नारायणशब्दार्थव्याख्यानकरणमयुक्तं तस्य प्रथमसूत्रे अभावात् । उत्सूत्रित-व्याख्याने अभाष्यत्वापात इत्यत आह **एवमिति** । **मन्दान्** युक्त्यनभिज्ञान् । ननु दोषशब्दस्यैव ग्रहणमस्तु छिद्रशब्दग्रहणं किमर्थमित्यत आह **अत्रेति** । छिद्रशब्दस्य दोषशब्दपर्यायत्वादरशब्दस्यापि दोषशब्दपर्यायत्व-मित्यर्थः ।

**वा०चं०**— ननु तथाऽपि देवमीमांसाशास्त्रस्य कर्ममीमांसावच्छास्त्रान्तरत्वात्तत्प्रकृतत्वस्य नात्रोप-योगित्वमित्यतः सकलवेदमुख्यामुख्यार्थप्रतिपादनोपयोगिसकलवेदविचारात्मकत्वमेतन्मीमांसाया एव । तस्यां च परममुख्यार्थब्रह्मस्वरूपप्रतिपादनेऽभिनिविष्टायां यथा विस्तरेण ब्रह्मस्वरूपप्रतिपादनं न तथा कर्मदेवताप्रतिपादनं किन्तु सङ्क्षेपेणैवेति वेदैकदेशामुख्यार्थकर्मदेवतास्वरूपयोरत्र सङ्क्षिप्य प्रतिपादितयोर्विस्तरेण प्रतिपादकत्वादेव देवकर्ममीमांसयोः शास्त्रान्तरत्वम् । देवमीमांसाया भगवत्कृतत्वं चाधिकमिति ब्रह्मतर्कादिवत्तस्य अङ्गत्वानपाया-त्तत्प्रकृतस्यात्र परामर्शो युक्त इति मीमांसाशास्त्रसंप्रदायज्ञान्प्रत्युक्तयुक्तेरप्रत्यूहत्वमेव । मीमांसात्रयमपि प्रत्येक-प्रमेयप्रतिपादकं न पुनरुक्तरीत्याऽङ्गाङ्गिभावोपपन्नमित्याग्रहवतो मन्दान्प्रत्युक्तयुक्तेर्वक्तुमशक्यत्वेऽपि युक्त्यन्तरमेव भविष्यतीत्याशयेन मन्दान्प्रति युक्त्यन्तरप्रतिपादनाय प्रवृत्तमुत्तरमूलं तदाशयमुद्घाटयन्नवतारयति **एवमिति** । पूर्वं कर्ममीमांसोक्तानुपजीवनोक्तिस्तु तद्भाष्यादौ प्रामाण्यादिप्रतिपादनपरतयाऽऽद्याध्यायव्याख्यानमसङ्गतमिति तद्भाष्याद्यस्वारस्याभिप्रायेणेति द्रष्टव्यम् ।

**७०० सु०— अत्र छिद्रशब्दोपादानं दृष्टान्तत्वेन । पर्यायत्वं पर्यायेण क्रमेण प्रयोज्यत्वं न पुनरेकस्मिन्नेव वाक्य इत्यर्थः । यथोक्तं 'पर्यायेणैव ते यस्माद्वदन्त्यर्थान्न संहताः । पर्यायत्वं ततस्सर्वपर्यायाणां प्रतिष्ठितमि'ति । तेनैकार्थत्वमिति सिध्यति । एकार्थत्वे हि पर्यायत्वं स्यात् । एतच्चाभिधानप्रयोगाभ्यामभ्युपेयम् ।**

**गु०दी०**— **अत्र छिद्रशब्दोपादानं दृष्टान्तत्वेन** इत्यत्र 'छिद्रं रन्ध्रे दूषणेऽपि वक्त्रं वृत्तान्तरेऽपि च' इति नानारत्नमालावचनात् 'गृहच्छिद्रं बहिः न प्रकटनीयम्' इत्याद्यभियुक्तवचनात् 'न्यूनातिरिक्तमच्छिद्रमस्त्विति भवन्तो ब्रुवन्तु' इत्याद्यभियुक्तप्रयोगवशात् 'छिद्रान्वेषणतत्पर' इति दुर्जनस्वभावप्रदर्शकसुभाषितप्रयोगाच्च छिद्रशब्दस्य दोषवाचित्वप्रसिद्धेः । 'अरं शीघ्रेऽपि चक्राङ्गे शीघ्रगे पुनरन्यवत् । महीरुहे शकुन्ते च नेमौ दोषे' इति विश्वोक्तेः तत्समानार्थकः अरशब्दोऽपि दोषवाचीति निदर्शनार्थमित्यर्थः । उपलक्षणं चैतत् । न विद्यते रं सुखं यस्मादिति व्युत्पत्तिसंभवाच्चेत्यपि द्रष्टव्यम् ।

**वं०प०**— **संहताः** मिलिताः ।





**आनन्दः**— ननु कथमेतावता एकार्थत्वसिद्धिरित्यत आह **पर्यायत्वमिति** । अत्र संमतिमाह **यथोक्तमिति** । यस्मात्ते पर्यायाः पर्ययेणैव क्रमेणार्थाननुवदन्ति । न तु संहताः मिलिताः सन्तः । ततः सर्व-पर्यायाणां पर्यायत्वं प्रतिष्ठितमित्यन्वयः ।

**वा०चं०**— नन्वस्तु पर्यायत्वं तावताऽपि न समानार्थकतासिद्धिरित्यत आह **तेनेति** । भिन्नार्थत्वे वाक्यभेदेनैव नियतप्रयोगो न स्यादिति भावः ।

**वा०र०**— पर्ययेणैव **ते यस्मा**दित्यादिमूलस्य 'पर्यायाणां प्रयोगो हि यौगपद्येन नेष्यत' इति पूर्ववाक्यं मनसि निधायार्थमाह **भिन्नार्थत्व इति** । न्यायमकरन्देऽखण्डार्थतावादे उदाहृतं चेदं पूर्ववाक्यम् ।

**विठ्ठ०**— **दृष्टान्तत्वेनेति** । छिद्रशब्दवदरशब्दस्यापि दोषपरत्वमिति ज्ञापनायेत्यर्थः । **संहताः** मिलिताः एकवाक्यगता इति यावत् । पर्यायत्वमित्यनेनैकार्थत्वसिद्धिः कथमित्यत आह **एकार्थत्वे हीति** । पर्यायत्व-स्यैकार्थताऽविनाभावित्वादिति भावः । दोषारशब्दयोः पर्यायत्वं कुतो निश्चितमित्यत आह **एतच्चेति** ।

**७०१ सु०— यतो** दोषारशब्दयोः **पर्यायत्वम्** । यतश्च नञ् तद्विरुद्धार्थवाची । **ततो नारा इति** पदेन दोषविरुद्धा **गुणाः** प्रोक्ता इत्यर्थः ॥ **तद्वान्नारायण** इत्यनेन नाराणामयनमिति विग्रहं सूचयति ॥ अत्र गुणविशेषानुक्तेः सर्वगुणपरिपूर्णत्वं नारायणशब्दार्थ इत्युक्तं भवति ।

**कं०रा०**— **नञिति** । असुरा अविद्या अधर्म इत्यादौ नञो विरुद्धार्थवाचित्वस्य दृष्टत्वादिति भावः ।

**वा०चं०**— नञोऽभावार्थत्वस्यापि संभवाद्भाष्योक्तहेतुमात्रस्य गुणा नारा इति साध्यसाधकत्वा-संभवाद्भाष्ये न्यूनांशं पूरयति **यतश्चेति** । ननु तथाऽपि न ब्रह्मशब्दसमानार्थत्वं तस्य गुणपूर्त्यभिधायित्वस्य वक्ष्यमाणत्वादित्यत आह **अत्रेति** ।

**वा०र०**— **अभावार्थत्वस्यापीति** । नन्वभावार्थत्वपरित्यागेन लोपशङ्कातत्परिहारावुक्तरत्र कथमिति चेन्न । वक्ष्यामोऽत्र समाधानं प्रतिषेधार्थकनसमासोपपादनावसरे । नारायणशब्दार्थ इत्युक्तमित्येव मूलपाठे भवतीति शेषः पूरणीयः । भवतीत्येतद्युक्तपाठस्तु स्वरस एव ।

**विठ्ठ०**— नारायणशब्दस्य गुणमात्रार्थस्य गुणपूर्तिवाचकब्रह्मशब्दसमानार्थकत्वं कथमित्यत आह **गुणविशेषेति** । सामान्यशब्दस्य कात्स्न्र्यपरत्वेन पूर्तौ पर्यवसितत्वादिति भावः ।





नारायणशब्दनिष्पत्तिः—

**७०२ सु०— ननु नञ्समासे 'नलोपो नञ' इति प्राप्नोति । न । नभ्राडित्यादिष्वस्य(ष्विति) वक्तव्यत्वात् ॥ अथवा 'अमानोनाः प्रतिषेध' इति गणपठितनसमासोऽयमित्यदोषः ॥ 'पूर्वपदात्संज्ञायामग' इति णत्वम् ॥ ल्युटष्टित्करणसामर्थ्यादयनशब्दोऽत्राधिकरणे त्रिलिङ्ग इति पुल्लिङ्गत्वोपपत्तिः ।**

परि०— **नञ्समासे नलोपो नञ इति प्राप्नोतीति** । द्वितीयाध्यायद्वितीयपादे नञितिसूत्रं नञुत्तरपदेन समस्यत इति तस्यार्थः । तथा च नञिति सूत्रेण नञोऽरपदेन समासे सति सवर्णदीर्घे च नारेति रूपं नञश्च तदन्यतदभावतद्विरुद्धरूपार्थत्रयवाचितया प्रकृते विरुद्धार्थकत्वमुपादायारविरुद्धा नारा गुणा इति व्याख्यानेऽसुराविद्यादिशब्देष्विव नलोपो नञ इति सूत्रेण नकारलोपः प्राप्नोतीत्यर्थः । षष्ठस्य तृतीयपादे 'नलोपो नञ' इति सूत्रं नञः नलोपः नकारस्य लोपो भवतीत्युत्तरपदे पर इति तस्यार्थः । शङ्कां निराह **नेति** । कुत इत्यत आह **नभ्राडित्यादिष्विति** । 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्ये'ति सूत्रेण नभ्राडित्यादिष्वेकादशशब्देषु नञ्प्रकृत्या भवति नलोपं न प्राप्नोतीत्यर्थ इत्युक्तत्वात् । नभ्राडित्यादिषु शब्देषु मध्ये नारायणशब्दमपि पठित्वा तत्रत्यनकारोऽपि प्रकृत्या भवतीति वक्तव्यत्वादित्यर्थः । चन्द्रिकायां तु प्रकारान्तरेण समाधिरुक्तः । **नसमास इति** । निषेधार्थकनशब्देन सह-अरशब्दस्य सुप्सुपेति समास इत्यर्थः । तथा चायं नञ्न भवतीति 'नलोपो नञ' इति न प्राप्नोतीति भावः । नन्वेवं अराणां निषेध एव नारेति पदेन सिद्ध्येन्न तु गुण इति चेन्न । प्रयोगानुरोधेन विरोधार्थकस्यापि नारशब्दस्य गुणवाचित्वस्य कल्प्यत्वाद्वा लक्षणया तद्विरोधिनो ग्रहणाद्वा गुणलाभादिति भावः । यत्तु निषेधार्थकनशब्दो नास्तीति चिन्तामणिवचनं तत्तु तर्कताण्डवविवृतौ नञर्थनिर्णयवादे निरस्तमस्माभिरिति ध्येयम् । अत्रापि गणपरिपठितेत्युक्त्या चापोढं 'चादयोऽसत्त्व' इति सूत्रोक्तचादिगणे नञं पृथक्पठित्वा अमानोनाः प्रतिषेध इत्यस्य पाठात् । ननु समानस्थले सत्यप्यैकपद्ये 'रषाभ्यां नो णस्समान पद' इत्यष्टमान्त्यपादीयणत्वविधायकसूत्रे विवक्षितस्य समानमेव पदं समानपदं न कदापि पूर्वोत्तरपदव्यवहारभागित्येवंरूपसमानपदत्वस्यात्राभावात्कथं णत्वमित्यत आह **पूर्वेति** । पूर्वपदस्थान्निमित्तादुत्तरपदस्थनकारस्य णत्वं भवति संज्ञायां विषये, गकारवतस्तु न भवतीत्यर्थः । ननु तृतीयस्य तृतीयपादे 'नपुंसके भावे क्त' इत्यतो नपुंसक इत्यनुवर्तमाने 'ल्युट्च' 'करणाधिकरणयोश्चे'ति ल्युटो विधानेन नारायणमिति नपुंसकेन भाव्यमित्यत आह **ल्युट इति** । टित्करणं हि टिड्ढाणञित्यादिना ङीबर्थम् । यदि ल्युडन्तस्य नपुंसकत्वमेव स्यात्तर्हि स्त्रीत्वाभावात्तन्निमित्तकङीबर्थं टित्करणमनर्थकमेव





स्यात्। तेन ज्ञायते लिङ्गान्तरमस्तीति सामान्यतो ज्ञापनात्पुल्लिङ्गतोपपत्तिरित्यर्थः। **अधिकरण इति**। प्रकृताभिप्रायः कोऽसावनुमानो नामेति करणेऽपि भूवादिसूत्रमहाभाष्ये पुल्लिङ्गप्रयोगदर्शनात्करणाधिकरणयोश्चेति सूत्रे ल्युटोऽनुक्तत्वेऽपि पूर्वत्र ल्युट्चेत्यत्र नपुंसके भावे इत्यनुवर्तमानेन तत्र टित्करणकृत्याभावात्करणाधिकरणसूत्र एवानुवर्तितस्थले तस्य कृत्यं वाच्यमित्येवमुक्तमिति ध्येयम्।

**गु०दी०— ल्युटः टित्करणसामर्थ्यात्** इत्यत्र ''टिड्ढाणञ्'' इत्यादिसूत्रमर्यादया ल्युट्प्रत्ययान्ते ङीपो विधानं श्रूयते, तच्च स्थानीत्यादिप्रयोगबलादधिकरणार्थं इति गम्यते, ङीपो विधानं च स्त्रीलिङ्गत्व एव स्यात् न तु नपुंसकत्वनियमे। अतस्त्रिलिङ्गत्वमपि सूचितम्। एवमयनशब्दः पुल्लिङ्गोऽपि भवतीति ज्ञेयम्। कथमन्यथा राज्ञः समस्तभाराधिकरणे मन्त्रिणि प्रधानः पुरुष इति प्रयोग इति भावः।

**यादु०— नलोपो नञ इतीति**। नञो नस्य लोपः स्यादुत्तरपद इति सूत्रार्थः। अब्राह्मण इत्युदाहरणम्। ततश्च 'तस्मान्नुडची'ति नुडागमेऽनश्व इत्यादाविवानरायण इति स्यादिति भावः। **नभ्राडित्यादिष्विति**। 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्ये'ति सूत्रे नभ्राडित्यादिषु नञ्प्रकृत्या भवतीत्युक्तत्वात्प्रामाणिकप्रयोगबलेन नारायणशब्दस्यापि तत्रोपसङ्ख्येयत्वादित्यर्थः। उपसङ्ख्यानस्य वैयाकरणैरकृतत्वादाह **अथवेति**। **नसमास इति**। गणपरिपठितो यो नशब्दस्तेन सह नैकधेत्यादाविव सुप्सुपेति नित्यसमास इत्यर्थः। नित्यं क्रीडेत्यतो नित्यमित्यनुवर्तत इत्युक्तत्वात्। **अदोष इति**। अस्य नशब्दस्य ञकारानुबन्धाभावात्तदनुबन्धवत एव नस्य तत्र लोपविधानादनरायण इत्यनिष्टरूपापत्तिरूपो दोषो नेत्यर्थः। **पूर्वपदात्संज्ञायामिति**। पूर्वपदस्थान्निमित्तादुत्तरस्य नकारस्य णकारादेशो भवति संज्ञायां न तु गकारव्यवधाने इति सूत्रार्थः। द्रुणसः खरणसः शूर्पणखा इत्याद्युदाहरणम्। अग इत्युक्तत्वात् ऋगयनमित्यादौ न भवति। नन्वत्र रषाभ्यामित्यनेनैव कस्मान्न णत्वमुक्तम्। न च नारायणपदस्य पदद्वयसमासरूपत्वेन समानपदत्वाभावः। समासस्याप्येकविभक्त्यन्तत्वेन समानपदत्वसंभवादिति चेत्। उच्यते। रषाभ्यामित्यत्र समासरूपैकपदव्यावर्तनायाखण्डैकपदलाभायैव समानेति विशेषणस्याभिप्रेतत्वात्। अन्यथा दुर्नामा रामनामेत्यादावपि तेन णत्वप्रसङ्गः। यथाहुः। पद इत्यनेनैव सामर्थ्यादेकपदत्वे लब्धेऽपि समानग्रहणं यत्समानमेकं पदं न कदाचिद्भिन्नं तत्रैव यथा स्यादित्येवमर्थं तेनाखण्ड पद एव भवति न समासपद इति। अतोऽत्र समासे तेनाप्राप्तं णत्वं संज्ञात्वाद्विधीयते। रामनामेत्यादौ तु समासत्वेऽप्यसंज्ञात्वान्न णत्वप्रसङ्ग इति। नन्वेवमयनशब्दस्य ल्युडन्तस्य नियमेन नपुंसकत्वात्तदन्तस्य नारायणशब्दस्यापि नपुंसकतापत्तिः। न च भाव एव तस्य नपुंसकता नाधिकरणादिकारकेऽपीति वाच्यम्। यदनान्तमकर्तरीति लिङ्गानुशासनेऽधिकरणादिकारकेऽनान्तस्य नपुंसकताविधानेन तदन्तस्यायनशब्दस्यापि तथात्वस्यावर्जनीयत्वात्। अयनं वर्त्म मार्गाध्वपन्थान इत्यमरकोशेऽपि भावभिन्ने नपुंसकस्यैव प्रयोगाच्चेत्यत आह **ल्युटष्टित्करणेति**। अत्र हि इध्मप्रव्रश्चनी गोदोहनीत्यादौ ङीबर्थं टित्करणमित्यभिप्रेतम्। तेन ज्ञायते ल्युडन्तस्य करणेऽधिकरणे च न नियमेन नपुंसकत्वमेवेति। कथमन्यथोक्तोदाहरणे स्त्रीप्रत्ययानामिमं प्रत्ययं टितं कुर्यादिति। तथाऽपि पुल्लिङ्गत्वं कुत इति चेत्। उक्तरीत्या





टित्करणे नपुंसकत्वनियमे त्याजिते प्रयोगानुसारेण पुल्लिङ्गत्वस्यापि संभवात्। अत एव लिङ्गानुशासने इध्मव्रश्चनः गोदोहन इत्यप्युदाहृतम्। अधिकरण इति च प्रकृतत्वादेवोक्तमिति ज्ञातव्यम्।

**आनन्दः—— नन्विति**। तथाच नारायणमिति स्यादिति भावः। **नभ्राडिति**। अत्र सूत्रे नगनाकादि-शब्दवदस्योपसंख्यानं कर्तव्यमिति भावः। नन्वत्र भिन्नपदत्वेन रषाभ्याम्, अट्कुप्वाङ्नुम् इत्यादिसूत्राभ्यां णत्वासंभवात् कथमेतदित्यत आह **पूर्वपदादिति**। तथाप्ययनशब्दस्य नपुंसकत्वात् तुपुल्लिङ्गनिर्देशायोग इत्यत आह **ल्युट इति**।

**कं०रा०—— नभ्राडिति**। न भ्राणनपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्येत्यत्र नभ्राडित्यादिशब्देषु नारायणशब्दस्य पठितत्वादित्यर्थः। इदं चोपलक्षणम्। स्त्रैणार्थ इत्यादौ नलोपाभावार्थं नलोपो नञ इत्यत्र रात्रेः कृतिविभाषेत्यस्मादनुवृत्ताया विभाषाया व्यवस्थितविभाषात्वस्य न्यासे स्थितत्वादत्रापि नलोपाभाव इत्यपि द्रष्टव्यम्। ननु काशिकायामलुगुत्तरपद इति सूत्रव्याख्यानावसरे उत्तरपदाधिकारः प्रागानङोऽधिकारादि-त्युक्तेः। नलोपो नञ् इत्यत्र उत्तरपद इत्यनुवर्तते। अतः पूर्वपदस्येति लभ्यते। एवञ्च स्त्रैणार्थ इत्यत्र नञ्-प्रत्ययस्य पूर्वपदत्वाभावेन नलोपाप्रसक्तेः नलोपो नञ इत्यत्र विभाषानुवृत्तिर्नाङ्गीकार्येति चेत्। मैवम्। उत्तरपदे इत्यत्रोत्तरत्वमात्रस्य ससंबन्धिकत्वेन पूर्वस्येत्यर्थस्यैव लाभात्। अन्यथोत्तरपद इत्यनुवृत्तिबलात्पूर्वपदस्ये-त्यर्थलाभाङ्गीकारे महाभाष्योक्तसानुबन्धकग्रहणप्रयोजनानुपपत्तेः। महाभाष्ये हि नलोपो नञ इत्यत्र चादिष्वननुबन्धक एव नकारः पठ्यताम्। स एव चानुक्रियतामित्याशयेन किमर्थं नञः सानुबन्धकस्य ग्रहणं क्रियत इत्याशङ्कायां नस्येतीत्युच्यमाने पामनपुत्रो वेमनपुत्र इत्यत्रापि नलोपः प्रसज्येत सः मा भूदित्येतदर्थं सानुबन्धकस्य ग्रहणमिति नञ इति सानुबन्धकग्रहणस्य प्रयोजनमुक्तं तदनुपपन्नं स्यात्। लोमादिपामादिपिच्छादिभ्यः शनेलच इति विहितस्य नप्रत्ययस्य पूर्वपदत्वाभावादेव नप्रत्ययनकारस्य लोपाप्रसक्तेः। न च वाच्यं नञ्प्रत्ययञित्वस्य वृद्धिस्वरयो-श्चरितार्थत्वान्निपातञित्वस्य त्वनन्यार्थत्वान्नलोपो नञ इत्यत्र निपातस्यैव ग्रहणं भविष्यति। अतः किं विभाषानुवृत्त्येति। अनन्यार्थानुबन्धकग्रहणे नान्यार्थानुबन्धकस्य ग्रहणमिति परिभाषायाः कुत्राप्यनुपलब्धेर्विभाषानु-वृत्त्यवश्यंभावात्। यद्यपि स्त्रैणार्थ इत्यादौ नलोपाभावार्थं विभाषानुवृत्तिरित्येतद्भाष्यकाराभिमतं न भवति। अन्यथा विभाषाबलादेव पामनपुत्र इत्यादौ नलोपाभावोपपत्तौ तत्र नलोपाभावार्थं सानुबन्धकग्रहणमित्यस्यायुक्तत्वप्रसङ्गात्। तथाऽपि विभाषानुवृत्तेर्न्यासकृदभिमतत्वात्तन्मतानुसारेण नञ्समास इत्युक्तिः। विभाषाग्रहणानुवृत्तिं वदन्न्यासकारो हि नभ्राडित्यादिसूत्रस्यानारम्भणीयत्वं मन्यते। भाष्यकारमते नलोपो नञ इत्यत्रानन्यार्थञित्वस्य निषेधार्थकनञ एव ग्रहणात् स्त्रैणपुत्र इत्यादौ नलोपाभाव इति ध्येयम्। **गणपठितेति**। चादिगणपठितेत्यर्थः। ननु ल्युडन्तस्यायन-शब्दस्य नपुंसकत्वनियमात्कथं पुल्लिङ्गप्रयोग इत्यत आह **ल्युट इति**। भावार्थल्युडन्तस्य नपुंसकत्वनियमे-ऽप्यधिकरणाद्यर्थल्युडन्तस्य तन्नियमाभावः। अन्यथा ल्युटष्टित्करणमनर्थकं स्यात्। टित्करणस्य टिड्ढाणञि-त्यादिना टित्वान्नित्यनपुंसकत्वे च तदयोगात्। अत एव महाभाष्ये कोऽसावनुमानो नामेति प्रयुक्तम्।





तद्व्याख्यानावसरे कैयटेन भावे ल्युट् स नपुंसकम् । अन्यत्र त्वभिधेयवशादनियतलिङ्ग इति समर्थितं च । अतोऽयनशब्दस्य पुल्लिङ्गत्वोपपत्तिरिति भावः ।

**वा०चं०— नन्विति** । तथा च तस्मान्नुडचीति नुटि अनरायण इति स्यादिति भावः । अस्याप्यभियुक्तप्रयोगत्वेनोपसङ्ख्येयत्वमित्याह **नभ्राडित्यादिष्विति** । ननु स्त्रैणार्थ इत्यत्र स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति विहितस्य नञो नलोपाभावार्थं नलोपो नञ इति सूत्रे रात्रेः कृति विभाषेत्यतोऽनुवृत्तविभाषाया व्यवस्थितविभाषात्वस्य न्यास एवोक्तत्वेन नारायण इत्यत्र तत एव नलोपाभावसिद्धेरुपसङ्ख्यानकल्पनं न युक्तमिति चेन्न । प्रत्ययञित्वस्य वृद्धिस्वरयोश्चरितार्थत्वान्निपातञित्वस्याचरितार्थत्वान्नञ्ग्रहणेन सूत्रे प्रत्ययप्रसक्तेरेवाभावात्पूर्वपदत्वेन नञ्विशेषणाद्वा नञः पूर्वपदत्वाभावादेव स्त्रैणार्थ इत्यत्र नलोपप्रसक्तिरिति पदमञ्जर्यामुक्तत्वेन स्त्रैणार्थ इत्यस्यान्यथासिद्धतया विभाषाग्रहणानुवृत्तेरभावेन तथा समाधानस्याशक्यत्वात् । चन्द्रिकायां तदङ्गीकारस्तु किं तद्गुणदोषचिन्तया न्यासस्यापि वृत्तिव्याख्यानत्वात्तदुक्तरीत्याऽप्यस्मदभिलषितसिद्धिरित्यभिप्रेत्येति द्रष्टव्यम् । निर्वचनान्तरेणापि नारायणशब्दाभियुक्तप्रयोगोपपत्तेर्नोपसङ्ख्यानकल्पना युक्तेत्यतः पक्षान्तरमाह **अथवेति** ।

**पूर्वपदादिति** । पूर्वपदस्थान्निमित्तादगकारादुत्तरस्य णत्वमिति सूत्रार्थः ।

ननु यदनान्तमकर्तरीति कर्तृव्यतिरिक्तकारके यदनप्रत्ययान्तं तत्तृतीये नपुंसकमिति लिङ्गानुशासनसूत्रेऽनप्रत्ययान्तस्य नपुंसकताया नियमितत्वात्साध्यतेऽनेनेति साधनम्, अधिक्रियते अस्मिन्नित्यधिकरणमित्यादौ साधनादिशब्दानां नित्यनपुंसकताया एवोपलम्भादत्रायनशब्दस्याधिकरणसाधनत्वेऽपि नपुंसकतैव युक्ता. । न च करणाधिकरणयोश्चेत्यत्र नपुंसके भावे क्त इत्यतो भावग्रहणाननुवृत्त्या सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति परिभाषया नपुंसक इत्यंशस्यापि निवृत्तेर्विशेष्यनिघ्नतया लिङ्गत्रयेऽपि करणाधिकरणादौ ल्युडनुशासनसंभवान्न नपुंसकत्वनियम इति वाच्यम् । तथात्वे साधनादिशब्दानां नियतलिङ्गत्वाभावप्रसङ्गात् । यदनान्तमकर्तरीत्यस्य विशेषविषयकत्वाच्च परिभाषाया अनित्यतामाश्रित्य करणाधिकरणयोश्चेत्यत्र नपुंसकानुवृत्तेरावश्यकत्वात् । तथा च नारायण इति पुल्लिङ्गानुपपत्तिरित्यत आह **ल्युटष्टित्करणसामर्थ्यादिति** । न च सामर्थ्याश्रयणं निर्बीजमिति वाच्यम् । आस्थानमास्थानी करणं करणी प्रमाणं प्रमाणी राजधानं राजधानीत्यभियुक्तप्रयोगाणामेव तत्र बीजत्वात् । अत एव टिड्ढाणञ्द्वयसच् इति सूत्रे लटो द्व्यनुबन्धकत्वाट्टिद्ग्रहणेन निरस्ते तर्हि तत एव ल्युटोऽप्यग्रहणं प्रसज्येतेत्याशङ्किते लटष्टित्त्वस्य टेरेत्वेन चरितार्थत्वात् ल्युटष्टित्त्वस्याचरितार्थत्वात् तदग्रहणे टित्त्ववैयर्थ्यापत्त्या ङीबर्थमेव टित्करणमित्युक्तत्वेन टित्करणसामर्थ्यमाश्रितम् । इदं च बाहुलकमनाश्रित्य समाधानम् । अत एव केचिद्बाहुलकमाश्रित्य त्रिलिङ्गतां व्युत्पादयन्ति । तेषां बाहुलकाश्रयणेन ङीबादिकं व्युत्पादनीयमिति क्लेश इति द्रष्टव्यम् ।

**वा०र०— नभ्राडित्यादिष्वितीति** । नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्येति सूत्रशेषोक्तं नपादादिशब्दानां ग्रहणमादिपदेन विवक्षितमिति नाकादिशब्दवदिति तत्त्वप्रकाशिकार्थानुगुण्यं





भवति । अत्र नभ्राडादिशब्दा सर्वेऽपि नलोपाभावमात्रे दृष्टान्ततामापद्यन्ते । उपसंख्याने उक्ते सति तत्सूत्रेण नभ्राडादिष्विव नारायणशब्देऽपि नलोपाभावोपपत्तिरिति सूचनात् । नासत्या नाकशब्दौ नलोपप्रयुक्तनुटोऽप्यभावे दृष्टान्ताविति विवेकः । तथा चाभियुक्तप्रयोगसंरक्षणाय प्रवृत्तेऽत्र सूत्रेऽभियुक्तप्रयुक्तनारायणशब्दस्योपसंख्याने सति नलोपाभावाद्युपपन्नमिति भावः । अनेनैवाराणामयनं न भवतीति प्रथमपद्यव्याख्यानस्थलीयव्युत्पत्तिप्रदर्शन-मप्युपपादितं भवति । **स्त्रैणार्थ इत्यत्रेति** । स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति सूत्रेण स्त्रीशब्दादिदमित्यर्थे नञ्-प्रत्ययविधानात्स्त्रिया अयमित्यर्थे नञि ञित्वादादिवृद्धौ णत्वे च स्त्रैण इति भवति । स चासावर्थश्चेति समासे स्त्रैणार्थ इति भवति । एतत्प्रकरणेऽधिकमुपपादनं चन्द्रिकाटीकायां गुरुपादोक्तं किञ्चित्तत्प्रपञ्चे अस्मदुक्तं च ज्ञेयम् । **नलोपाभावार्थमिति** । स्त्रैणः अर्थ इति स्थितेन नलोपो नञ इत्यनेन नलोपे कार्ये णत्वस्यासिद्धत्वात्तल्लोपे सति तस्मान्नुडचीति नुडागमेऽचि परतः आयादेशे स्त्रायणर्थ इत्यापत्तिपरिहाराय नलोपाभावस्यावश्यकत्वादिति भावः । **व्यवस्थितेति** । क्वचिन्नित्यमेव स्यात् क्वचिन्नेत्येवं व्यवस्थितेत्यर्थः । अनश्च इत्यादौ रूपद्वयप्रसङ्गवारणायेदमुक्तम् । न्यासे उक्तत्वोक्त्या व्याकरणव्याख्यातृसंमतप्रकाराभिधानान्न काल्पनिकत्वमस्य समाधानस्येति सूचयति । तत एव स्त्रैणार्थ इत्यत्र नलोपाभावार्थमनुवर्तितविभाषयैवेत्यर्थः । सत्यं न्यासकारीयं नलोपाभावस्य विभाषयोपपादनमस्तीति । परन्तु मञ्जर्यादौ स्त्रैणार्थ इत्यादिप्रयोगगतनलोपाभावस्य प्रकारान्तरेण संभववर्णनात्तदर्थं विभाषाग्रहणानुवृत्तेरना-वश्यकत्वात्तदनुवृत्त्यङ्गीकारे नञः सानुबन्धकस्य ग्रहणं व्यर्थमापद्यते । नभ्राडित्यादिसूत्रप्रणयनं चानर्थमापद्यत इत्यनुपपत्तिग्रस्तत्वाच्च न तस्याः कर्तव्यत्वमित्यादेस्तत्र तत्र प्रतिपादनात्तदनुसारेण विभाषानुवृत्तेः स्वीकर्तुमनु-चितत्वाच्चन्द्रिकोक्तरीत्या समाधानं परित्यज्योपसंख्यानबलादेव नलोपाभावोपपादनं कार्यमिति भावेन मूलोक्त-मुपसंख्यानमुपपादयति **प्रत्ययञित्वस्येत्यादिना** । **वृद्धिस्वरयोरिति** । अचो ञ्णितीति ञिति परे वृद्धिः ञ्नित्यादिर्नित्यमिति ञिति परे आद्युदात्तत्वं चेत्येवं वृद्धिस्वरयोरित्यर्थः । **निपातञित्वस्येति** । निपातरूपाव्ययस्य यत् ञित्वं तत्पुरस्कारेण कस्यचित्कार्यस्य कुत्राप्यनुक्त्या तस्य चरितार्थत्वमित्यर्थः । **प्रत्ययप्रसक्तेरेवेति** । चरितार्थाचरितार्थयोरचरितार्थस्यैव ग्रहणौचित्यात् चरितार्थञित्वोपेतप्रत्ययस्याप्रसक्तिरित्यर्थः । यत्तु चन्द्रिका-व्याख्यानरूपराघवेन्द्रीयग्रन्थे प्रत्ययञित्वस्य चरितार्थत्वान्नलोपसूत्रे प्रत्ययस्याग्रहणम् । किन्तु निपातस्यैवा-चरितार्थञित्वोपेतस्य ग्रहणमतस्त्रैणार्थ इत्यस्य व्यावृत्तिरिति यद्विभाषानुवृत्तिबाधकमुपन्यस्तं तत्खण्डनाय तट्टीकान्तरेऽभिहितम् । अनन्यार्थानुबन्धकग्रहणेनान्यार्थानुबन्धकस्य ग्रहणमिति परिभाषायाः कुत्राप्यनुपलब्धे-र्भाष्यदिशा नप्रत्ययव्यावृत्त्यर्थतया अव्ययनञनुबन्धस्य चरितार्थत्वेनानन्यार्थत्वाभावाच्चेति दोषद्वयाच्चरितार्थत्वात् प्रत्ययस्याग्रहणमित्ययुक्तमिति । तत्र न तावदाद्यो दोषः । प्रत्ययञित्वस्य चरितार्थत्वमभिधाय निपातञित्व-स्याचरितार्थतया नलोपसूत्रे अन्येनाचरितार्थञित्वोपेतनिपातस्यैव ग्रहणमिति वदता मञ्जरीकृता चरितार्था-चरितार्थयोः चरितार्थस्य ग्रहणमिति परिभाषायाः सूचितत्वेन तदुक्तिमेव मूलीकृत्य परिभाषायाः कल्पनीयतया तदनुपलब्धेरप्रयोजकत्वात् । पणव्यवहारे स्तुतौ चेति धातुव्याख्यानप्रक्रियाटीकायामनुबन्धस्य चरितार्थत्वा-दित्युक्तेश्च । अत एव निरनुबन्धकग्रहणेन सानुबन्धकस्येत्यादिरूपाणां सूत्रज्ञापितानां परिभाषाणामिव न्यायमूला-नामपि गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः । कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय इत्यादिरूपाणां परिभाषात्वेन





गणनम् । स्वव्याहतं चेदं दूषणम् । ल्युटष्टित्करणेति चन्द्रिकावाक्यव्याख्यावसरे स्वराद्यनिमित्तस्य ङीबेकार्थस्य टित्करणस्य । वैयर्थ्यायाधिकरणे ल्युडन्तः स्त्रीलिङ्ग इति भवद्भिरुच्यते । तत्र ह्येवमुक्तं भवति । टिड्ढाणञिति सूत्रे टिद्ग्रहणेन ल्डादिटितः प्राप्तौ तस्य टितः टित आत्मनेपदानामित्यादिना विहितटेरेत्वेन चरितार्थत्वात् ल्युटष्टित्वस्या-चरितार्थत्वात् ङीबर्थमेव टित्करणात् ङीपश्च स्त्रियां विधानादधिकरणे ल्युडन्तस्य त्रिलिङ्गतेति । तथाच भवतीत्युक्त-न्यायस्याश्रयणेन तदनुपलब्ध्या परनिराकरणं कथं न स्वव्याहतम् । भाष्यदिशेत्यादिनोक्तो द्वितीयदोषोऽप्यसाधुरेव । नकाररूपप्रत्ययव्यावृत्त्यर्थं नञः सानुबन्धकस्य ग्रहणमिति वदता भाष्यकृता नञो ञित्वप्रयुक्तस्वरादिरूपप्रयोजनेन चरितार्थस्यानुक्तेः । यदि च ञानुबन्धेन नकारस्य नप्रत्ययाद्व्यावृत्तिकरणमात्रेण ञानुबन्धश्चरितार्थः स्यात्तर्हि नञादिप्रत्ययस्थलेऽपि ञानुबन्धस्य नप्रत्ययव्यावर्तकतया चरितार्थत्वेन पुनर्वृद्ध्यादिप्रयोजनाश्रयणानुपपत्तिः । भवदीयल्युटष्टिदितिवाक्यव्याख्यानपक्षेऽपि नन्दिग्रहिपचादिभ्योल्युणिन्यच इति विहितल्युव्यावृत्त्यर्थतया ल्युटः टित्वस्य चरितार्थत्वमिति वक्तुं शक्यत्वेन ङीबेकार्थत्वादिकल्पनानुपपत्तिश्च । तस्मात्प्रत्ययव्यावृत्त्यतिरिक्त-प्रयोजनसदसद्भावाभ्यामेव चरितार्थत्वाचरितार्थत्वे वाच्ये इति भवदुक्तान्यार्थत्वोपपादनायोग एवेत्यलम् । **पूर्वपदत्वेन नञो विशेषणाद्वेति** । पूर्वपदता पर्याप्त्यधिकरणत्वेनेत्यर्थः । तेन स्त्रैणादिपदेऽपि नञः पूर्वपदत्वमवर्जनीयमिति शङ्कानवकाशहतेति ज्ञेयम् । उत्तरशब्दस्य संबन्धिशब्दत्वेन पूर्वपदभूतस्य नञ एव नलोपो नञ इत्यत्र ग्रहणादिति न्यासेऽप्युक्तत्वादिति भावः । यत्त्वत्रापि उक्तटीकान्तरे उक्तं, उत्तरपद इत्यनुवृत्तिबलात् पूर्वपदस्येत्यर्थलाभाङ्गीकारे महाभाष्योक्तसानुबन्धकग्रहणप्रयोजनानुपपत्तेः । महाभाष्ये हि नलोपो नञ इत्यत्र चादिष्वननुबन्धक एव नकारः पठ्यतां स एवानुक्रियतामित्याशयेन किमर्थं नञः सानुबन्धकस्य ग्रहणं क्रियत इत्याशङ्कायां नस्येत्युच्यमाने वामनपुत्रः पामनपुत्र इत्यत्रापि नलोपः प्रसज्येत । स मा भूदित्येवमर्थं सानुबन्धकस्य ग्रहणमिति नञः सानुबन्धकग्रहणस्य प्रयोजनमुक्तं तदनुपपन्नं स्यात् । लोमादिपामादिपिच्छादिभ्यः शनेलच इति विहितस्य नप्रत्ययस्य पूर्वपदत्वा-भावेन प्रत्ययनकारस्य लोपाप्रसक्तेरितीति । तदप्यापातरमणीयम् । तथाहि । नञः पूर्वपदत्वेन विशेषणपक्षे किं भाष्योक्तसानुबन्धकग्रहणप्रयोजनानुपपत्तिरित्येवाभिमतं किं वा सानुबन्धकग्रहणस्य प्रयोजनान्तरस्याप्युक्त-विशेषणपक्षेऽनुपपत्तिरिति । नाद्यः । भाष्यकृता नञः पूर्वपदत्वेन विवक्षानाश्रयणपक्ष एव सानुबन्धकग्रहण-प्रयोजनतया पामनपुत्र इत्यादिव्यावृत्तेरभिहिततयोक्तविवक्षाश्रयणपक्षे तदुक्तप्रयोजनस्याप्रसक्त्या तद्विरोधा-भावात् । न द्वितीयः । नञः पूर्वपदत्वेन विवक्षाश्रयणपक्षे पामनपुत्र इत्यादि मत्वर्थनप्रत्ययस्येव स्त्रैणार्थ इत्यत्रत्यनञोऽपि व्यावृत्तिसिद्धावपि नैकधेत्यत्रत्यनिषेधार्थकनकारस्य पूर्वपदी भवतः सत्त्वेन तत्रापि नलोप-प्रसङ्गात्तत्परिहाराय सानुबन्धकनञ्ग्रहणसार्थक्योपपत्तेः । अत एव मञ्जर्यादौ भाष्योक्तप्रयोजनपक्षे स्त्रैणार्थ इत्यादेः सानुबन्धकतया व्यावृत्त्ययोगेन तद्व्यावृत्त्यर्थं चरितार्थादिपरिभाषामाश्रित्यापि प्रकारान्तरेणापि स्त्रैणार्थ इत्यादे-र्व्यावृत्तिसिद्धिरिति दर्शयितुम् अलुगुत्तरपद इत्यतोऽनुवृत्तोत्तरपद इत्येतद्बलात्पूर्वपदी भवतो नञ इत्यर्थलाभो-ऽङ्गीकृतः । तेन भाष्यकारस्यापि स्त्रैणार्थ इत्यादिव्यावृत्त्यर्थतया चरितार्थादिपरिभाषाद्याश्रयणमावश्यकमिति सूचनात् । तथा चायं विवेकः । भाष्ये कण्ठोक्तनप्रत्ययव्यावृत्तिरूपप्रयोजनपक्षे स्त्रैणार्थ इत्यत्र नलोपप्राप्तेरपरिहारात् तत्परिहाराय भाष्याभिप्रेतचरितार्थादिपरिभाषाश्रयणेनैकः समाधिरभिहितः । यदि च स्त्रैणार्थ इत्यादिपरिहाराय नञः





पूर्वपदत्वेन विवक्षाश्रयणमुत्तरशब्दस्येत्याद्युक्तन्यासाद्युक्तिप्राप्तमाश्रीयते तदा भाष्योक्तसानुबन्धकग्रहणप्रयोजनं तद्विवक्षानुसारेण नैकधेत्यादिव्यावृत्तिरूपप्रयोजनान्तरोपलक्षणतया व्याख्येयमित्याशयेन पूर्वपदत्वाश्रयणेन परिहार उक्त इति न भाष्यविरोध इति । तदेतत्सर्वं मनसि कृत्वा मञ्जर्यामुक्तत्वादित्युक्तम् । अत्र नञः पूर्वपदत्वेन विवक्षणात्स्त्रैणार्थ इत्यत्र नलोपाभाव इति सिद्धं कृत्वा निषेधार्थकनकारस्य समासावयवत्वान्नलोपाभावो नैकधेत्यादौ ज्ञेय इति प्रक्रियाकौमुद्यामुक्तम् । तच्छेष्यां तु निरनुबन्धकोऽपिशब्दो निषेधवाच्यस्ति । तेन यदा समासस्तदा नलोपो न भवति । तद्विधौ नञ इति सानुबन्धकस्योपादानात् । नञा तु समासेऽनेकधेत्यपि भवतीत्यर्थ इत्युक्तम् । तत्र च निषेधार्थकत्वोक्त्या प्रत्ययव्यावृत्तिसूचनं समासावयवत्वोक्त्या पूर्वपदत्वमेव नञ इति सूचनम् । अनुबन्धव्यावर्त्यं तु नैकधेत्येतदिति प्रतिपादनमित्यादेः प्रतीतेर्निषेधार्थत्वं नञ इति स्वीकारेणापि प्रत्ययव्यावृत्तिसिद्धत्वात् ञित्वचारितार्थ्यादियुक्तिवन्नञ्पूर्वपदत्वयुक्तिवच्च नकारस्य निषेधार्थकत्वमपि स्त्रैणार्थ इत्यादिव्यावृत्तौ युक्तित्वेनोपलक्षणया टीकायां ज्ञेयमिति प्रतिभाति । तथा नशब्दस्य सुपा विशेषण(सा)?मादिलक्षणस्य नस्यासुबन्तत्वादेवाग्रहणं सिद्धमिति नञ्सूत्रे शेष्यामुक्तेः समासावयवस्य नशब्दस्यैव नलोपसूत्रेऽपि ग्रहणमिति प्रकारान्तरमपि भाति । तत्त्वबोधिन्यां त्विह नलोपो नञ इत्यत्र विशेषणार्थो ञकारस्तत्फलं च नैकधेत्यत्रालोप इत्युक्त्वा अव्यये नञ् कुनिपातानामित्यव्ययपूर्वपदप्रकृतिस्वरार्थं ञकारोच्चारणमित्यन्य इत्युक्तम् । तेन तत्पुरुषे तुल्यार्थेति सूत्रेण नञो निपातत्वप्रयुक्ताद्युदात्तस्वरस्य प्रकृतिभावविधानेन तत्स्वरे तुल्यार्थादीनां पूर्वपदत्वविवक्षायाः सिद्धत्वादव्ययनञः पूर्वपदभूतस्यैव प्रकृतिस्वरविधानाभ्युपगमसिध्या तदनुसारेण पूर्वपदभूत इति प्राप्तेः । एवं पक्षभेदेन भाष्यप्रवृत्तिमभ्युपेत्य तद्विरोधपरिहारानङ्गीकारे वयं तु ब्रूम इत्यादि भवद्वक्ष्यमाणग्रन्थस्थप्रथमेऽस्वरसेर्णीवतारे? निषेधार्थकत्वेन नञ्स्वीकारायोगः पामन इत्यादेरपि तत एव व्यावृत्तिसिध्या भाष्योक्तप्रयोजनविरोधात् । नभ्राडादिष्वपि नसमासोपपत्त्या तत्सूत्रवैयर्थ्यमिति साम्येन व्याघाताच्च । नञ्समास एवास्त्विति प्रतिज्ञाय निषेधार्थकत्वेन लोपमाशङ्क्य पृषोदरादित्वेन नलोपाभावोपपत्तेरिति समाधाय चोक्तं च कैयटे भुवो भाव इति सूत्रे नान्तरीयकत्वादिति भाष्यवाक्यव्याख्यानावसरे । अन्तरशब्दो गर्हादिषु पठ्यते । स च विनार्थे वर्तते । अन्तरे भवमन्तर्यं न अन्तर्यं नान्तर्यम् । न च नञ्समासे नलोपः स्यादिति वाच्यम् । पृषोदरादित्वान्नलोपाभाव इतीति द्वितीयावतारे च निषेधार्थकस्य पृषोदरादित्वेन नलोपाभावाश्रयणं चानुपपन्नम् । निषेधार्थकत्वस्वीकारे उक्तप्रयोजनविरोधाविशेषात् । निषेधार्थत्वाङ्गीकारनिमित्तकौमुदीग्रन्थस्य वक्ष्यमाणस्यार्थे संबद्धे तत एव नञः पूर्वपदत्वस्यापि समासावयवत्वोक्त्या प्राप्तत्वेन तत्पक्षदूषणस्य प्राक्कृतस्य व्याघातापातश्च । नसमासपक्षेऽपि नभ्राडादिसूत्रवैयर्थ्यशङ्कायाः समानत्वादिति टीकान्तरदूषणस्यापि स्वव्याघातकत्वापातश्च । पृषोदरादित्वेन नलोपाभावपक्षेऽपि तद्वैयर्थ्यसाम्यात् । सानुबन्धकग्रहणप्रयोजनकथनपरभाष्यविरोधस्यैतत्पक्षेऽपि साम्याच्च । पृषोदरादित्वेनैव पामनादिव्यावृत्तिसिद्धेः । निषेधार्थक त्वं स्वीकृत्य नलोपशङ्कायाः अयोगश्च । तदर्थत्वस्य कैयटोक्तरीत्या समाधानपक्षे वैयर्थ्येनानाश्रयणीयत्वात् । वैयाकरणटीकाकाराणां भाष्यप्रभृतीनां श्रमो व्यर्थ इति स्वीकारप्राप्तेश्च । शरणीकृतभाष्यविरोधेन टीकान्तरदूषणस्याप्यकर्तव्यत्वप्राप्तेश्चेत्येवं बहुविप्लवापातः । एवं कैयटोपजीवनेन समाधाने प्रकारान्तरेणापि समाधानोपपत्तिरिति वक्तुं शक्यत्वाच्च । तथाहि । नलोपो नञ इति सूत्रमेव मास्तु । अनश्च इत्यादौ गणपठितप्रथमाकारेणैव समाससंभवात् । न च





तस्मान्नुडचीत्यत्र लुप्तनकारप्रत्यभिज्ञासिध्यर्थं नलोप आवश्यक इति वाच्यम्। तत्रापि आन्नुडचीत्येवसूत्रणसंभवेन यथाश्रुतपाठस्य वैयर्थ्यमिति वक्तुं शक्यत्वात्। अत एव नञस्तत्पुरुषादिति समासान्तनिषेधकसूत्रेऽप्यात्तत्पुरुषादित्येव सूत्रणसंभवेन तत एवं वाराजेत्यादौ समासान्ताभावोपपत्तिः। नभ्राडित्यादिसूत्रेणापि नभ्राडादिशब्देषु भ्राडादिशब्दानामकारेण समासः। तस्य चाकारस्य नुडागमो निपात्यत इत्यादिकमेव सिद्धान्तरत्नाकरोक्तरीत्या वक्तुं सुवचम्। तथाच नारायणशब्देऽपि नाकशब्दवदकारस्य पूर्वपदता। तस्य च नुडागमो निपातबलात्प्राप्तः। मूलकृतोपसंख्यानाङ्गीकारात्। तदुपसंख्यानोक्तेरपि अकारेण समासे नुडागमसिध्यर्थकत्वमेवेत्यपि वक्तुं शक्यत्वात्। उपसंख्यानाश्रयणभयादेव यद्वेति पक्षान्तरं मूले प्रवर्तितमिति वक्तुं शक्यत्वाच्च। अन्ततो मूलेऽपि नञो नलोपादिशङ्का नोदेत्येव। नलोपसूत्रस्यैवानारम्भणीयत्वात्। कथञ्चिदुदये वोक्तरीत्या तत्सूत्रप्रत्याख्यानप्रकारेणैव समाधेः प्राप्तेर्नारायणशब्दे नलोपप्रसङ्गाभावेनानुपपत्तेरभावादित्येव वाच्यत्वादित्यादि। तथाच प्रौढिवादेन समाधानाश्रयणे भवदाश्रितनान्तरीयकत्वपदसाधुत्वव्युत्पादनस्याप्यनवकाशेन तन्न्यायेन नारायणशब्दे नलोपाभावाङ्गीकारस्याप्ययोगप्रसङ्गाच्चेति। तस्मादुक्तरीत्या प्रकारान्तरस्य प्रौढवादेन प्रवर्तयितुं शक्यत्वेऽपि प्रचरद्ग्रन्थकारप्रवृत्त्यनुसारेण शङ्कासमाधाने तद्ग्रन्थानुसारेण बहुस्थलेषु प्रवर्तमानैः प्रवर्तनीये इत्यङ्गीकारस्यावश्यकतयेहापि नभ्राडित्यादिसूत्रारम्भादिदर्शनं मूलीकृत्य नलोपस्य शङ्कायाः उपसंख्यानेन नसमासाश्रयणेन वा परिहारस्योचितत्वाद्भवदीयप्रौढिवादेन परिहारायोग इत्यलम्। **स्त्रैणार्थ इत्यस्यान्यथासिद्धतयेति**। उपलक्षणं चैतत्। सानुबन्धकग्रहणप्रयोजनस्य पामन इत्यादिव्यावृत्तिरूपस्य वा नैकधेत्यादिव्यावृत्तिरूपस्य वा विभाषयैव सिध्या सानुबन्धकग्रहणवैयर्थ्यापत्त्या चेत्यपि ज्ञेयम्। अधिकं चन्द्रिकाटीकायां गुरुपादोक्तं ज्ञेयमिति प्रागुक्तम्। **तथा समाधानस्येति**। विभाषाश्रयणेन नलोपाभाव इति समाधानस्येत्यर्थः। कथं तर्हि चन्द्रिकाकारैरेतत्समाधानाङ्गीकारः कृत इत्यत आह **चन्द्रिकायामिति। तद्गुणदोषेति**। विभाषाश्रयणेन नलोपसमाधाने साधुत्वासाधुत्वचिन्तयेत्यर्थः। वृत्तिव्याख्यानत्वोक्तेर्न्यासकारोक्त्याश्रयणे वैयाकरणसंमतोऽयं पक्ष इति ज्ञानसंभवमात्रे तात्पर्यमिति भावः। **निर्वचनान्तरेणापीति**। पूर्वपदभूतस्य नञ्त्वं परित्यज्यामानोना इति गणपठितनिषेधार्थकनकारत्वं स्वीकृत्य निर्वचनस्वीकारेणापीत्यर्थः। उपपत्तेः। तत्पक्षे नलोपप्रसक्त्यभावादिति भावः। कल्पना न युक्ता। नैकधेत्यादौ नसमासदर्शनात्सपक्षो न कल्प्यः। किन्तु क्लृप्तः उपसंख्यानस्य त्वक्लृप्तत्वात्तदाश्रयणे कल्पना आयातीति भावः। नसमासपक्षे शङ्काशूकनिरासस्तु चन्द्रिकाटीकान्तरोक्तविचारावसरे प्रागेव सिद्धः। नन्विदं नसमासाश्रयणमनुपपन्नम्। प्राक्नञश्च विरुद्धार्थत्वमित्यनेन विरोधार्थकताया उक्तत्वात्। तद्बलेनैव गुणानां नारशब्देन लाभस्वीकाराच्च। प्रतिषेधार्थत्वे तु दोषाभावप्राप्तेर्दोषविरुद्धगुणलाभायोगादिति चेन्न। तत्रत्यप्रतिषेधशब्दस्य नञर्थमात्रपरतया तदर्थकनकारस्याधर्म इत्यादाविव विरोधार्थकत्वस्यापि संभवादित्याशयादित्यादि लेख्यमस्ति। **पूर्वपदादितीति**। प्रतीकोपादानपाठः। चन्द्रिकालक्ष्मीनाथीये तु यच्छब्दा योगवृत्तय इति भाष्यकारीयवचनात् सकलशब्दान्तर्गतनारायणशब्दस्य यौगिकत्वेनासंज्ञात्वात् णत्वानुपपत्तिरित्याशङ्कानिरासपरतया पूर्वपदादिति चन्द्रिकावाक्यमवतारितम्। तत्कथम्। रूढत्वाभावात् णत्वानुपपत्तिशङ्कायां संज्ञात्वमप्यस्ति। नारायणशब्दस्य रूढत्वादिति स्वमुखेनैव प्रतिपादयितुं समथा व्यासतीर्थश्रीचरणो व्याकरणसूत्रप्रवृत्तिवर्णनमुखेन रूढत्वं ज्ञापितवानित्यस्यालौकिकत्वात्। यच्छब्दायोगेति





साधकस्य गतिकथनाभावे यौगिकत्वेन रूढत्वाभाव इति शङ्कायां रूढत्वमस्तीति प्रतिपादनमात्रं परिहारत्वेनोक्त-मित्यस्यासङ्गतत्वाच्चेत्यलम् । रषाभ्यां नोणः समानपद इत्यत्र पद इत्येतावतैव सामर्थ्यादेकपदत्वे लब्धेऽपि समानग्रहणं यत्समानमेव न कदाचिद्भिन्नं तत्रैव यथा स्यादित्येवमर्थं तेनाखण्डपद एव भवति न समासपद इति वैयाकरणव्याख्यानानुसारेणैकपदत्वस्य णत्वप्रयोजकस्य रामनामदुर्नमित्यादाविव नारायणशब्देऽभावादुक्तसूत्रेण णत्वाप्राप्तिरिति शङ्कावारणाय पूर्वपदात्संज्ञायामिति मूलं प्रवृत्तमिति सिद्धं कृत्वा तद्वाक्यप्रतीकोपादानमात्रं कृतमिति न दोषसूत्रं(?) व्याचष्टे **पूर्वपदस्थादितीत्यादिना** । तथा च शूर्पणखेत्यादाविवाखण्डपदत्वाभावेऽपि णत्वं युक्तमिति भावः । णत्वानुपपत्तिशङ्काविस्तरश्चन्द्रिकाटीकायां ज्ञेयः । किञ्चिदुपपादनमस्मदीये तत्प्रपञ्चे । विस्तरेण तु तदुपपादनं तत्त्वप्रकाशिकाव्याख्यानेऽस्मदीये द्रष्टव्यम् । **यदनान्तमकर्तरीतीति** । अकर्तरीत्यन्तेन लिङ्गानुशासनानुवादः । कर्त्रित्यादि तु व्याख्यानं मिलित्वेति लिङ्गानुशासनेति प्रयुक्तमिति विवेकः । **कर्तृव्यतिरिक्तकारक इति** । अत्र कारकग्रहणं प्रायिकाभिप्रायेण । तेन पचनमित्यादिक्रियाशब्देऽपि नपुंसक-त्वोपपत्तिः । ल्युटो लकारटकारलोपोत्तरमुर्वरित यु इत्यस्यानादेशं सिद्धवत्कृत्यानान्तमित्युक्तम् । तृतीये इत्यनुवृत्तस्य नपुंसक इति व्याख्यानम् । लिङ्गानुशासनेऽमर इति पाठः । सूत्रपदसद्भावे तु सूचकत्वात्सूत्रमिति लिङ्गानुशासनसूत्र इत्यपि युक्तम् । **नियमितत्वादिति** । विशेषलिङ्गविधिः शेषलिङ्गनिषेधार्थ इति तदीयपरिभाषानुसारेण नियमलाभ इति ज्ञेयम् । **साध्यत इत्यादिना** तदुदाहरणप्रदर्शनम् । अधिकरणसाधनत्वेऽपीत्यनेन भावकरणसाधनत्वपक्षयोरिवेति दृष्टान्तः सूचितः । **नपुंसक इत्यंशस्यापीति** । अत एव वृत्तौ इध्मप्रव्रश्चन इत्यादिपुलिङ्गमेवोदाहृतमिति भावः । **तथात्व इति** । नपुंसक इत्यस्याननुवृत्तिस्वीकार इत्यर्थः । **प्रसङ्गात्** प्रसङ्गेनेति योज्यम् । आवश्यकत्वादित्यनेनास्य संबन्धः । हेत्वन्तरमाह **यदनान्तमिति** । आवश्यकत्वेनेति योज्यम् । सन्नियोगपरिभाषा तर्हि विरुध्येतेत्यत आह **परिभाषायाश्चेति** । वृत्तावपि इध्मप्रवृश्चन इति नोदाहर्तव्यमिति भावः । राजधानं राजधानीति पाठः । धान्यमिति लेखकप्रयुक्तम् । **द्व्यनुबन्धकत्वादिति** । एकानुबन्धकग्रहणेन द्व्यनुबन्धकस्येति परिभाषयेति शेषः । **तत एव** द्व्यनुबन्धकत्वादेव । **अचरितार्थत्वादिति** । ततश्च चरितार्थाचरितार्थपरिभाषया टितो ल्युट एव ग्रहणप्राप्तावपि तदग्रहणे ल्युटष्टित्करणस्य वैयर्थ्यापत्त्या टित्करणान्यथानुपपत्त्या ङीबर्थमेव ल्युटष्टित्करणमिति योजना । **उक्तत्वेन** आकरे । ननु कृत्यल्युटो बहुलमिति बहुलग्रहणात्तस्य च नपुंसक इत्येतदभावे ल्युट् भवतीत्यर्थकत्वान्नारायणशब्देऽपि तत एव पुंस्यपि ल्युडुपपत्तेः किमर्थं टित्करणसामर्थ्यपर्यन्तधावनमित्यत आह **इदं चेति** । यद्यपि बाहुलकेनापि पुलिङ्गतानिर्वाहः संभवति तथापीदं समाधानं तदनाश्रित्यैव कृतम् । तदाश्रयणे कुसृष्टिसत्त्वादिति भावः । कथं कुसृष्टिरित्यत आह **अत एवेति** । बह्वर्थादानप्रवृत्तिनिमित्तकबहुलपदेन नपुंसके स्त्रीपुंसयोरपि ल्युट् भवतीत्यर्थलाभः स्वीकार्यः । तद्बलादेव टिड्ढाणञित्यनेन ङीबिति स्वीकार्यम् । तत्र टिद्ग्रहणे द्व्यनुबन्धकल्युटो ग्रहणानुपपत्तिशङ्काप्राप्तेः । अतो ङीबादिव्युत्पादनक्लेश इत्यर्थः । बाहुलकमनाश्रित्येत्युपलक्षणम् । नपुंसक इत्यस्यानुवृत्तिमाश्रित्येत्यपि ज्ञेयम् । अयं तदाशयः । तदननुवृत्तिपक्षेऽधिकरणे ल्युडन्तत्वेऽपि नपुंसकत्वाभावसंभवात् । साधनादिशब्दानां तु प्रयोगसद्भावे नियतलिङ्गत्वाभावो नानिष्टः । वैयाकरणानां प्रयोगशरणत्वात् । एतेन वृत्तौ पुंलिङ्गोदाहरणं च युक्तम् । यदनान्त-मकर्तरीत्यस्य विशेषविषयत्वेऽपि तदपेक्षया क्तल्युट् नपुंसके भावे इत्यमरोक्तेर्विशेषतया भावे ल्युडन्तस्यैव





नपुंसकत्वनियमसिद्धेश्च । न च विरोधः । भावकरणाधिकरणेषु अनान्तस्य नपुंसकत्वमित्येवंरूपसामान्यस्य यदनान्तमित्येतद्विषयतया तन्नियमविषयत्वाभावेन तेन भावे नियमविषयकल्युट् नपुंसके भाव इत्यस्य विरोधाभावात्। अत एव भूवादयो धातव इति सूत्रीयमहाभाष्यकारीयः कोऽसावनुमानो नामेति प्रयोगः। तत्कैयटेऽपि भावे ल्युडेव नपुंसकः। अत्राभिधेयवशादनियतलिङ्ग इत्युक्तम्। अत एव गीताभाष्यटीकायां बहवः कर्म कारणाः सन्ति क्रोधादय इत्येतद्व्याख्यावसरे अयमनुमान इति भाष्ये प्रयोगात् कारणशब्दस्त्रिलिङ्ग इत्युक्तम्। अत एव प्रक्रियायां ल्युड्वेति सूत्रे तदन्तश्च नपुंसक इति यदुक्तं तद्विवृतं शेषीकृता। भावे यो ल्युट् तदन्त इत्यर्थः। तथा चामरः। क्तल्युट् नपुंसके भाव इति। एवं च करणार्थस्य ल्युटो विशेष्यलिङ्गत्वमित्युक्तं भवति। तथा चैवोदाहरिष्यति। अत एव भाष्येऽपि प्रयोगः कोऽसावनुमानो नामेतीति। कोऽसाविति प्रश्नवाक्यं शेष्यामुदाहृतम्। अयमित्युत्तरवाक्यं तु गीताभाष्यटीकायामिति विवेकः।

**स०व्र०— नलोपो नञ इति**। ततश्च तस्मान्नुडचीति नुडागमेऽनरायण इति स्यादिति भावः। **नसमास इति**। न नञ्समासः येन नलोपादिप्राप्तिरिति भावः। नन्वेवमयनशब्दस्य ल्युडन्तस्य क्लीबत्वनियमात् कथं नारायण इति पुल्लिङ्गत्वमित्यत आह **ल्युटष्टित्करणसामर्थ्यादिति**। अयं भावः। अत्र हि ङीबर्थं टित्करणमित्यभिप्रेतम्। कथमन्यथा इध्मप्रव्रश्चनी गोदोहनी इत्युपपद्येतेति। तज्ज्ञायते पुल्लिङ्गस्य ल्युडन्तस्य करणेऽधिकरणे च न नियमेन नपुंसकत्वमेवेति। अन्यथा कथं स्त्रीप्रत्ययानयनायेमं प्रत्ययं टितं कुर्यादिति। तथापि पुल्लिङ्गत्वमिति कुत इति चेत् टित्करणेन नपुंसकत्वनियमे त्याजिते प्रयोगानुसारेण पुल्लिङ्गत्वस्यापि संभवात्। अत एव लिङ्गानुशासने इध्मप्रव्रश्चनः गोदोहन इत्यप्युदाहृतमिति ज्ञातव्यम्।

**वि०— ** ननु नञिति सूत्रेण नञो परपदेन समासे सति नलोपो नञ इत्यनेनाकारलोपे प्राप्ते तस्मान्नुडचीति नुडागमे अनश्वादिशब्दवदनर इत्येव सिध्यति। न तु नार इतीत्याशयेन शङ्कते **नन्विति**। नञो अकारलोपो भवति। उपपदे परत इति नलोपो नञ इति सूत्रार्थः। परिहरति **नेति**। न भ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्येति सूत्रेण भ्राडादिष्वेकादशब्देषु नञ्प्रकृत्या भवति नलोपं न प्राप्नोतीत्युक्तत्वात्तेषु मध्ये प्रामाणिकप्रयोगबलेन नारशब्दस्याप्युपसंख्येयत्वात्तत्रत्यनञोऽपि प्रकृतिभावे नलोपाभावेन नारेति रूपसिद्धिर्भवतीति भावः। उपसंख्याया वैयाकरणैरकृतत्वात्पक्षान्तरमाह **अथवेति**। गणपरिपठितः अन्यगणेषु नकारस्य परिपठितत्वेन सुब्लोपेऽपि वस्तुतः सुबन्तत्वात्सुप्सुप इति नकारस्यारशब्देन नैकधेत्यादाविव समास इति भावः। **गुणपरिपठित** इति पाठे तु निषेधरूपधर्मार्थकत्वेन परिपठितेत्यर्थः। तथा च नञ्समासत्वाभावे नलोपादिप्राप्तिर्न भवतीति भावः। नन्वेवं सत्ययनपदस्य नकारस्य णत्वं न सिध्यति रषाभ्यां नोणः समानपद इति रेफषकाराभ्यां परस्य नस्य समानपदत्वे एव णत्वविधानात् नारायनपदयोर्भिन्नत्वात्। न च वाच्यमयनपदस्य नारपदेन समासत्वादेकपदत्वमिति। अखण्डत्वरूपसमानपदत्वस्यैव णत्वप्रयोजकत्वात् अन्यथा रामनाम दुर्नमित्यादावपि णत्वप्रसङ्गात्। यथाहुः पद इत्येकवचनसामर्थ्यादिकपदत्वे लब्धेऽपि यत्समानग्रहणं तेन यत्सर्वदा समानपदं न तु कदाचिदपि खण्डितं भवति तत्रैव





णत्वं स्यात् न तु समासपद इति ज्ञायत इति। तथा च कथं प्रकृते समासपदे णत्वप्राप्तिरित्यत आह **पूर्वपदादिति**। पूर्वपदस्थाद्रेफादिनिमित्तादुत्तरपदस्थस्यापि नकारस्य णकार आदेशो भवति संज्ञायां विषये न तु गकारव्यवधान इति सूत्रार्थः। रामनामेत्यादेरसंज्ञात्वाण्णत्वाभावः। रामायणमित्यादौ ग्रन्थविशेषसंज्ञारूपत्वाण्णत्वमिति ज्ञेयम्। ननु तथापि कथं नारायण इति पुंल्लिङ्गत्वं नपुंसके भावे क्त इत्यनुवर्तमाने ल्युट् च करणाधिकरणयोश्चेति ल्युटो विधानादधिकरणार्थस्यायनशब्दस्य ल्युडन्ततया क्लीबत्वनियमादित्यत आह **ल्युट इति**। इध्मप्रव्रश्चनी गोदोहनीत्यादौ स्त्रीलिङ्गत्वसिद्धये टिड्ढाणञित्यादिना ङीपो विधानार्थं खलु ल्युटः टित्करणमभ्युपगतम्। तथाच यदि ल्युडन्तस्य नपुंसकत्वमेव नियतं तर्हि स्त्रीलिङ्गतादेरप्रसक्तेः स्त्रीत्वनिमित्तकङीपो विधानार्थं टित्करणमनुपपन्नं स्यात्तेन ज्ञायते लिङ्गान्तरमप्यस्तीति। अस्तु तर्हि टितो ङीब्विधानात् स्त्रीलिङ्गत्वं, पुल्लिङ्गत्वं तु कुत इति चेत् टित्करणेन नपुंसकत्वे व्युत्पादिते इध्मप्रव्रश्चनः इत्यादि लिङ्गानुशासने उदाहृतरीत्या प्रयोगबलेन पुल्लिङ्गत्वं च भवति। अत एव महाभाष्यकारेण कोऽसावनुमानो नामेति पुल्लिङ्गप्रयोगः कृतस्तस्मात् ल्युडन्तस्यापि त्रिलिङ्गत्वमुपपद्यत इति भावः।

**चषकः— नलोपो नञ इतीति**। नञो नस्य लोपः स्यादुत्तरपदे परत इति सूत्रार्थः। तथा च 'तस्मान्नुडचि, लुप्तनकारान्नञो नुडागमस्स्यादचि परत' इति नुडागमेऽनश्व इत्यादिवदनरायण इति रूपं निष्पद्येतेति भावः। **नभ्राडित्यादिष्विति**। अभियुक्तप्रयोगबलेन 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या' इति सूत्रे नारायणशब्दोऽप्युपसंख्येय इत्यर्थः। स्त्रैणार्थ इत्यादौ नलोपापत्तिविधूननाय 'नलोपो नञ' इति सूत्रे 'रात्रेः कृती'त्यतोऽनुवृत्तविभाषायाः व्यवस्थितविभाषात्वस्य न्यास एवोक्त्या प्रकृतेऽपि सामञ्जस्यान्नोपसंख्यानावश्यंभाव इति शङ्का पदमञर्यामचरितार्थानुबन्धकनिपातस्यैव 'न लोपो नञ' इति सूत्रे ग्रहणाद्वृद्धिस्वरचरितार्थानुबन्धकप्रत्ययाग्रहणाद्विभाषानुवर्तनानावश्यकतायाः समर्थिततया निर्दलैव। चान्द्रिकी तदुपगतिस्तु वृत्तिव्याख्यारूपन्यासगुणदोषचिन्तनस्यानाश्रयणेनाभिलषितसिद्धिमभिप्रेत्येति स्थितम्। पाणिनीयैरनुपसंख्यातत्वादाह **अथवेति**। **गणपरिपठितेति**। 'चादयोऽसत्त्वे' इति सूत्रे चादिगणे नञं पृथक्पठित्वा 'अमानोनाः प्रतिषेध' इति पठितेन नशब्देन नैकधेत्यादाविव 'नित्यं क्रीडे'त्यतो नित्यमित्यनुवर्त्य सुप्सुपेति नित्यसमासोपगमेन नञ एवाभावेन न नलोपापत्तिरिति भावः।

''तत्पुरुषः समानाधिकरणः कर्मधारय'' इति सूत्रे ''एकपद्यं ऐकस्वर्यं एकविभक्तित्वं च। अस्ति तादर्थ्यात्तच्छब्दं तत्पुरुषार्थानि पदानि तत्पुरुष'' इति भाष्यव्याख्यावसरे ''पदशब्देनार्थ उच्यते ऐकार्थ्यमित्यर्थः। अथवा समासाद्विभक्त्युत्पत्तौ सत्यां ऐकपद्यमुच्यते एकविभक्तित्वमिति। एककारकत्वमित्यर्थः'' इति कैयटोक्त्या अयतेर्ल्युट्यनादेशे निष्पन्नायनशब्दनारपदयोः समासस्य पदत्वेन रेफनकाररूपनिमित्तनिमित्तिनोरेकपदस्थतया रषाभ्यामित्यनेनापि नारायणपदे णत्वसूचनशङ्का तु तुल्यन्यायेन दुर्नामरामनामेत्यादिषु णत्वव्युदसनाय निमित्तिमत्पदभिन्नपदाघटितत्वरूपसमानपदतायाः शब्दरत्नादिषु परिष्कृततया पद इत्येतावतैव सामर्थ्यादेकपदत्वे लब्धे यत्समानग्रहणं यत्समानमेवपदं न कदाचिद्भिन्नं तत्रैव यथा स्यादित्येवमर्थं तेनाखण्डपद एव भवति न समास





इति भाष्योक्त्या च न सङ्गच्छते इत्यभिप्रेत्य समाधत्ते **पूर्वपदादिति**। पूर्वपदस्थान्निमित्तात्परस्य गकारानन्तरितस्य नकारस्य णकारादेशः संज्ञाविषये भवतीति सूत्रार्थः। एवं च दर्शिताखण्डपदताविरहेऽपि द्रुणसः खुरणस इत्यादाविव णत्वं युक्तमित्याशयः। अग इत्यस्य प्रयोजनं तु ऋगयनमित्यादिव्यावृत्तिः। चर्मनासिकं इत्यादि व्यावृत्त्यर्थं संज्ञायामिति विशेषणम्।

अत्र यद्यपि णत्वं दुर्लभम्। अत्र सूत्रे णत्वस्यादर्शनात्। न च रषाभ्यां नोणः समानपद इति सूत्रान्नोण इत्यनुवर्तत इति वाच्यम्। रषाभ्यामितिसूत्रे णग्रहणस्य प्रत्याख्यातत्वात्। अत एव अपदान्तस्य मूर्धन्य इति सूत्रे उत्तरार्थं मूर्धन्यग्रहणं कर्तव्यमित्यभिधाय रषाभ्यां नो णः समानपद इत्यभिधाय अत्र णकारग्रहणं न कर्तव्यं भवति। अत्रायमर्थः। पदान्तस्य नेति प्रतिषेधो न वक्तव्यो भवति। अथवान्ताभिसंबन्धं मूर्धन्यग्रहणमनुवर्तत इत्यभ्यधात् महाभाष्ये। तथाप्यत्र च णत्वग्रहणं मूर्धन्योपलक्षणं द्रष्टव्यम्।

अत्र जगज्जननादिकर्तृत्वसर्वोत्तमत्वादिकं शिवस्याभिलषता 'नारायणो वा इदमेक एवाग्र आसीदि'ति श्रौतनारायणपदवाच्यतां शिवस्य शङ्कमानेन नव्येन नारायणपदस्य शिवसंज्ञात्वाभावेन पूर्वपदादित्यनेन णत्वस्य दुरुपपादतायामपि नारे अयनं यस्येति व्यधिकरणबहुव्रीहौ 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरि'ति परिभाषया सुबुत्पत्तेः प्रागयनशब्दस्य सप्तम्यन्तेन समासे निमित्तानधिकरणानिमित्तिमत्पदाघटितत्वरूपसमानपदत्वस्य सत्त्वान्नारायणशब्दस्य शिवे संज्ञात्वाभावेऽपि णत्वोपपत्तिरिति अभिहितं तदबोधविलसितमिति गुरुपादाः। तथाहि। गतिकारकोपपदानां कृद्भिः सह समासवचनमिति परिभाषायां कारकपदेन 'कर्तृकरणे कृता बहुलमि'तिविहितकारकविशेषसमासस्यैव प्रतिपदोक्तपरिभाषया ग्रहणेन नारे अयनं यस्येत्यादि 'अनेकमन्यपदार्थे' इति कारकविशेषपदाघटितसूत्रविहितसमासस्य सर्वथा अग्रहणात्। यथा वा 'विभाषा दिक्समासे' इति सूत्रेण या पूर्वा सा उत्तरा यस्याः उन्मुग्धायाः तस्यै उत्तरपूर्वायै इत्यादौ सर्वनामसंज्ञापरिहारार्थं 'दिङ्नामान्यन्तराले' इति सूत्रविहितकारकसमासस्यैव ग्रहणं भाष्यकारैरादृतं तथेहापि विशेषकारकसमास एव ग्राह्यः। न चात्र बाधकाभावादस्तु सामान्यस्य ग्रहणमिति वाच्यम्। इह हि दध्नि सेको यस्मात्तद्दधिसेकमित्यादिव्यधिकरणबहुव्रीहौ षत्वनिषेधार्थं परिभाषाप्रवृत्तये कारकविशेषसमासस्यैवाश्रयणीयत्वात्। एवं च नारे अयनम् इत्यादि व्यधिकरणबहुव्रीहौ परिभाषामवलम्ब्य णत्वव्युत्पादनं कथं व्यधिकरणेतरबुद्धीनां रोचतान्तराम्। किञ्च गन्धर्वगानमित्युक्तपरिभाषासमाश्रयणेन निमित्तानधिकरणानिमित्तिमत्पदाघटि(क)तत्वरूपसमानपदत्वाश्रयणेन णत्वप्राप्तौ परिभाषाया अनित्यत्वमाश्रयणीयम्। एवमपि ऋगयनमित्यत्र णत्वप्राप्तौ निपातनाण्णत्वाभाव इत्युपेतव्यमेव। तदपेक्षया 'अणृगयनादिभ्य' इति निपातनात् णत्वशास्त्रे परिभाषाया अप्रवृत्तिरेव लाघवात् ज्ञाप्यताम्। एवं च गन्धर्वगानं ऋगयनमित्यादिसकलोदाहरणेष्वपि निपातनादेव णत्वाभावः समभांत्सीदिति क्वचिदनित्यत्वं क्वचिन्निपातनमिति अनेकप्रयोजककल्पनाभावाल्लाघवम्। एवं च नारायण इत्यत्रापि निपातनसामर्थ्यात्परिभाषाऽप्रवृत्तौ कथं णत्वं प्रत्याशा। व्यधिकरणबहुव्रीहिवादे तीरे भवनं यस्यासौ तीरभवनः, पूरयानः, ग्रामगमनः, इत्यादौ तव नये णत्वं दुर्वारम्।





मम तु विशेषसमासाश्रयणात् ऋगयनादिभ्य इति निर्देशेन णत्वप्रकरणे प्रवृत्तेरज्ञापनाद्वा नैतादृशस्थले परिभाषोपतिष्ठत इति सुबुत्पत्तेः प्राक्समासाभावान्निमित्तानधिकरणानिमित्तिमत्पदाघटितत्वरूपसमानपदत्वमस्तीति मैव णत्वमुक्तोदाहरणेष्वतिप्रसाङ्क्षीत् । किञ्च 'अग्रग्रामाभ्यां नयतेर्णो वाच्य' इत्यपि वार्तिकं न णत्वप्रकरणे परिभाषाप्रवृत्तिं सहते । यदि हि स्याण्णत्वप्रकरणे परिभाषा तदा अग्रणीर्ग्रामणीरित्यादौ सुबुत्पत्तेः प्राक्समासाश्रयणे निरुक्तसमानपदत्वं समभांत्सीदेवेति रषाभ्यामित्यनेनैव णत्वसिद्ध्यर्थमेवेदं वार्तिकं स्यात् । तेन जानीमहे न णत्वप्रकरणे परिभाषा प्रवर्तत इति । यदवादि । किं चेह प्रतिपदोक्तपरिभाषाया अनुपस्थितेरपि उक्तपरिभाषायाः सामान्यविषयकत्वमेव । न चानुपस्थितिः असिद्धा प्रयोजनाभावादेव तत्सिद्धेः । अत एव तद्धितेति सूत्रे कृद्ग्रहणे परिभाषा नोपतिष्ठते प्रयोजनाभावादिति वैयाकरणा इति । तन्न गतिकारकेति परिभाषायां प्रतिपदोक्तपरिभाषानुपस्थितौ दधिसेक इत्यादौ षत्वं तीरभवनमित्यादौ णत्वं दुर्वारमेव स्यादिति तदर्थं प्रतिपदोक्तपरिभाषायाः सप्रयोजनत्वेन प्रयोजनाभावोक्तेरज्ञानविजृंभितत्वात् ।

णत्वं रमानाथपदैकगोचरं पदे गिरीशः सहसाऽभ्यधाद्यतः ।
बुधाग्रमानप्रतिलाभशून्यस्त्रिदोषदुष्टः स्वयमेव नष्टः ॥ इत्यलं प्रपञ्चेन ।

लिङ्गानुशासने नपुंसकाधिकारे भावे ल्युडन्त इत्यनेन भाववचनल्युडन्तस्यैव क्लीबत्वानुशासनात् । इध्मप्रव्रश्चनः कुठारः गोदोहनी स्थालीति प्रत्युदाहृततया भूवादयो धातव इत्यत्र 'अशक्या क्रिया पिण्डीभूता निदर्शयितुम् । यथा गर्भो निर्लुठितः । साऽसावनुमानगम्या । कोऽसावनुमानः इति ।' भाष्यव्याख्यानावसरे 'यो भावे ल्युट् स नपुंसकः अन्यत्र त्वभिधेयवशादनियतलिङ्ग' इति कैयटोक्त्या च ल्युट् चेत्यत्र नपुंसके भावे क्त इत्यतः नपुंसके भाव इत्यनयोरनुवृत्तावपि करणाधिकरणयोश्चेत्यत्र सन्नियोगशिष्टपरिभाषाविरोधेन भाव इत्यननुवृत्त्य नपुंसक इत्यनुवर्तनायोगेन यदनान्तमकर्तरि ततृतीये कर्तृव्यतिरिक्तकारके पदेऽनप्रत्ययान्तं तृतीये नपुंसकलिङ्गे भवतीत्यमरस्य भाववचनानां तद्विषयकत्वोपपत्त्या च करणं करणी प्रमाणं प्रमाणी इत्याद्यभियुक्तप्रयुक्त्या टिड्ढाणञ् इति सूत्रे द्व्यनुबन्धकलटष्टेरेत्वार्थकतया चरितार्थटकारकतया टित्वेन व्यावर्तनीयतेव आचरितार्थटकारकल्युटो व्यावर्तनीयताविरहेण प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयंति स्म तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुमिति भाष्यप्रामाण्येन ङीबर्थटित्वसाफल्याय च अधिकरण-साधनल्युडन्तायनशब्दस्य त्रिलिङ्गतैव युक्तेत्यभिप्रेत्य समाधत्ते **ल्युट इति** । कृत्यल्युट इति सूत्रे बहुलग्रहणेनापि त्रिलिङ्गता सेत्स्यति बहूनर्थान् लाति आदत्ते बहुलमिति व्युत्पत्तेराकरे स्थितत्वात् ।





**ब्रह्मशब्दस्यापि गुणपूर्णत्वमात्रार्थकत्वम्—**

**७०३ सु०— एवं नारायणशब्दं निरुच्य स एव ब्रह्मशब्दार्थ इत्याह ब्रह्मशब्दोऽपीति ।**

## अनु०— ब्रह्मशब्दोऽपि हि गुणपूर्तिमेव वदत्ययम् ॥

**हिशब्देन 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा' इत्यादिप्रसिद्धिं द्योतयति । एवशब्देन सर्वात्मकत्वादिपरापव्याख्यां सर्वप्रमाणविरुद्धां व्यावर्तयति ॥ अयम् इति सूत्रप्रयुक्तः ।**

**यादु०— सर्वात्मकत्वादिपरापव्याख्यामिति** । यद्यपि ब्रह्मशब्दान्नित्यशुद्धबुद्धमुक्तस्वभावं सर्वशक्तिसमन्वितं प्रतीयते, बृहधातोरर्थानुगमादित्येव परेण व्याख्यातम् तथाऽपि पञ्चपादिकाकारेणैतद्भाष्यव्याख्यानावसरे यदि ब्रह्मातिरिक्तं वस्तु किञ्चित्स्यात्तदा तद्रूपविकलत्वाद्ब्रह्मणोऽल्पत्वं स्यात् । तच्च निरतिशयमहत्त्वपराद्ब्रह्मशब्दादेवापास्यते । तस्मादेकरसमद्वैतं वस्तु ब्रह्मपदात्प्रतीयत इत्युक्तम् । तदभिप्रायेण सर्वात्मकत्वादित्युक्तम् । आदिपदाद्देशादिकृताल्पतानिराकरणं बुद्धत्वादिकं च ग्राह्यम् । **सर्वप्रमाणविरुद्धामिति** । सर्वात्मकत्वं हि चेतनभेदाभावेऽचेतनमिथ्यात्वे च पर्यवस्यति । अत एवैकरसमद्वैतमित्युक्तम् । तदुभयं च सर्वप्रमाणविरुद्धमित्यर्थः । एवमादिशब्दोपात्तस्य देशादिपरिच्छेदाभावस्य देशादेरभावात्तत्कृतः परिच्छेदो नास्तीति यत्तदीयमुपपादनं तदपि सर्वप्रमाणविरुद्धमिति द्रष्टव्यम् ।

**कं०रा०— सर्वेति** । सर्ववस्त्वात्मकत्वलक्षणपूर्णतां ब्रह्मशब्दो वक्तीति या ब्रह्मशब्दस्य परकीयापव्याख्यामित्यर्थः । सर्वप्रमाणविरुद्धामित्युपलक्षणम् । अप्रामाणिकीमित्यपि ग्राह्यम् । ब्रह्मणः सर्वात्मकत्वस्य सर्वप्रमाणविरुद्धत्वमप्रामाणिकत्वं चोक्तवक्ष्यमाणन्यायेनेदं द्रष्टव्यम् ।

**वा०चं०—** ननु गुणपूर्तिवद्देशादिपूर्तेरपि ब्रह्मशब्दार्थत्वे बाधकाभावात्सिद्धान्ते तथाऽभ्युपगमाच्च तद्व्यावृत्त्यर्थकैवकारानुपपत्तिरित्यतोऽनभिमतव्यवच्छेदार्थकतया तं व्याख्याति **एवशब्देनेति** । बृहतेर्वृद्ध्यर्थकत्वान्निरङ्कुशमहत्त्वार्थकेन तेन सकलवस्त्वभेदरूपवस्तुपूर्तेरप्युक्तत्वादिति परव्याख्यानादिति भावः । आदिपदेन सर्वात्मकत्वाद्युक्तिलब्धाद्वितीयत्वादिपरिग्रहः । सौत्रब्रह्मशब्दस्य विष्णुविषयत्वविप्रतिपत्तेस्तस्यैव विष्णुविषयत्वसमर्थनस्य मूलारूढतां दर्शयितुमयमिति तद्विषयतया व्याख्याति **अयमितीति** ।

**वा०र०— सिद्धान्त इति** । देशतः कालतश्चैवेति प्रमाणानुसारेण त्रिविधपरिच्छेदाभावस्य ब्रह्मशब्दार्थतया वैशेषिकनयानुक्त(?)भाष्यमूले उक्तेरिति भावः । तदिति देशादिपूर्तिपरामर्शः । व्यावर्त्यान्तराप्रतीतिस्तस्या एव





व्यावर्त्यत्वप्रसक्तिरित्याशयेन सिद्धवत्कारेण तद्व्यावृत्त्यर्थकेत्युक्तम् । **अनभिमतेति** । 'नरं च नारायणमेव चादौ' इत्यादाविवेति भावः । तथा परव्याख्यानमेव नास्तीति शङ्कावारणायाह **बृहतेरिति** । **वृध्यर्थत्वादिति** । बृहबृहि-वृद्धाविति धातुव्याख्यानादिति भावः । **सर्वात्मकत्वाद्युक्तीति** । सर्वात्मकत्वादेरुक्त्या लब्धेत्यर्थः । **तस्यैवेति** । न तु श्रुतिस्थस्येत्येवकारार्थः ।

**विठ्ठ०— सर्वात्मकत्वादिपरापव्याख्यामिति** । सर्वप्रकारेण पूर्णत्वं हि ब्रह्मशब्दो वक्ति । सर्वात्मक-त्वाभावे वस्तुपूर्तिर्न संभवति । सर्वात्मकत्वं च स्वव्यतिरेकेणान्यस्यासत्त्वमित्यादि परापव्याख्यामित्यर्थः ।

**चषकः— सर्वात्मकत्वादीति** । त्रिविधपरिच्छेदाभावरूपमहत्त्वार्थेन ब्रह्मशब्देनैव सर्वात्मकतालाभादिति व्याख्यातत्वादिति भावः । प्रपञ्चितं चैतत् चन्द्रिकायाम् ।

**७०४ सु०—** किमतो यद्येवमित्यत आह **अत इति** ।

## अनु०— अतो नारायणस्यैव जिज्ञासाऽत्र विधीयते ॥

यतो ब्रह्मशब्दो नारायणशब्दसमानार्थः **अतो** 'ब्रह्मजिज्ञासा कर्तव्ये'ति वाक्येन **नारायणस्यैव जिज्ञासा विधीयत** इति ज्ञायत (इत्यत) इत्यर्थः ।

॥ उपपत्त्यन्तरम् ॥

॥ "तदेव ब्रह्म परमं कवीनाम्" इति श्रुतौ ब्रह्मशब्दस्य विष्णौ स्पष्टतया मुख्यतया सिद्धत्वम् ॥

अस्यां श्रुतौ विष्णोरेव तच्छब्दपरामृष्टत्वम्—

**७०५ सु०—** यस्तूक्तामर्थसमाख्यां निर्वचनान्तरदर्शनान्नानुमन्यते तं प्रत्युपपत्त्यन्तरमाह **सिद्धत्वादिति** ।

## अनु०— सिद्धत्वाद् ब्रह्मशब्दस्य विष्णौ स्पष्टतया श्रुतौ ॥

'तदेव ब्रह्म परमं कवीनामि'त्यस्यां **श्रुतौ ब्रह्मशब्दस्य विष्णौ स्पष्टतया** मुख्यतया **सिद्धत्वात्** च सौत्रो ब्रह्मशब्दो विष्णुपर इति ज्ञायत इत्यर्थः ।

**परि०— अर्थसमाख्यां** नारायणशब्दार्थसमाख्याम्।

**यादु०— निर्वचनान्तरदर्शनादिति**। नारायणशब्दस्य 'आपो नारा इति प्रोक्ता' इति स्मृत्यादिसिद्ध-निर्वचनान्तरदर्शनादित्यर्थः।

**कं०रा०— यस्त्विति**। आपो नारा इति वचनान्तरदर्शनान्नारायणशब्दसमानार्थतां ब्रह्मशब्दस्य यस्तु नानुमन्यते तं प्रत्युपपत्त्यन्तरमाहेत्यर्थः।

**वा०चं०—** ननु श्रुतौ ब्रह्मशब्दस्य विष्णुविषयतायाः स्पष्टत्वमात्रेण न सौत्रस्य तस्य विष्णुविषयत्वं सिध्यतीत्यतोऽस्य मुख्यामुख्यन्यायसूचकत्वेन तद्बलात्तत्सिद्धिरित्याशयेन स्पष्टताशब्दं मुख्यार्थतया व्याख्याति **स्पष्टतयेति**।

**विठ्ठ०— उक्तामर्थसमाख्यामिति**। नारायणशब्दस्य ब्रह्मशब्दस्य वा निर्वचनान्तरदर्शनान्नैतयो-रन्योन्यसमाख्यामनुमन्यत इत्यर्थः।

**चषकः— निर्वचनान्तरदर्शनात्**। 'आपो नारा इति प्रोक्ता' इति स्मार्तनिर्वचनान्तरदर्शनात्।

**७०६ सु०— एतदुक्तं भवति। मुख्यामुख्ययोर्हि मुख्यस्तावद् ग्राह्यः, शक्तिवशात्तस्यैवादौ बुद्धिसन्निधानात्। तदनुपपत्तौ त्वमुख्यः। दृष्टं चैतदुभयं 'गङ्गायां जलं', 'गङ्गायां घोष' इत्यादौ। ब्रह्मशब्दश्च विष्णावेव मुख्यः। 'तदेव ब्रह्मे'ति श्रुतेः। अत्र हि विष्णोरन्यस्य ब्रह्मत्वं निषिध्यते। तत्र(तो) ब्रह्मशब्दस्य विष्णावेव शक्तिर्नान्यत्रेति व्याख्यानाङ्गीकारे अभिधानादिविरोधः स्यात्। अतो मुख्यवृत्तिर्विष्णावेव नान्यत्रेति व्याख्यानमुचितम्। न चात्र सूत्रे ब्रह्मशब्देन मुख्यार्थस्य विष्णोः परिग्रहे बाधकमस्ति। अतः प्रकरणादि-सद्भावेऽसद्भावे वा विष्णुपर एवायं ब्रह्मशब्द इति ज्ञायत इति।**

**परि०—** ननु श्रुतौ मुख्यत्वोक्तावपि अत्र स्थले मुख्यस्य ग्रहणं कुतः, श्रुतौ वा कथं मुख्यत्वस्य स्पष्टत्वं मुख्यपदाभावादित्यत आह **एतदुक्तं भवतीति**। **अतो मुख्यवृत्तिरिति**। परममुख्यवृत्ति-रित्यर्थः। मुख्यवृत्तेर्बृहजातिजीवकमलासनेत्याद्यभिधानसिद्धत्वेन तन्निरासायोगात्। **प्रकरणादीति**। 'स विष्णुराह ही'त्यादिविष्णोर्ब्रह्मशब्दार्थपरत्वोक्तिपरब्रह्मप्रकरणादीत्यर्थः। आदिपदेन श्रुतिलिङ्गादिपरिग्रहः।

**यादु०— मुख्यवृत्तिरिति**। परममुख्यवृत्तिरित्यर्थः। अतो नात्र अभिधानादिविरोध इति ध्येयम्।

**आनन्दः**— ननु ब्रह्मशब्दस्य विष्णाविव अन्यत्रापि मुख्यत्वाविशेषान्न तस्य विष्णुपरतानिश्चयः । अस्तु वा अन्यत्रामुख्यत्वं तथाऽप्यमुख्योऽर्थः कुतो न ग्राह्य इत्यत आह **एतदुक्तमिति** । श्रुतौ ब्रह्मशब्दप्रयोग एव कृतो न तु मुख्यत्वमुच्यत इत्यत आह **अत्र हीति**। एवकारेणेति शेषः।

**कं०रा०**— **मुख्यवृत्तिरिति**। परममुख्यवृत्तिरित्यर्थः। **मुख्यार्थस्येति**। परममुख्यार्थस्येत्यर्थः।

**वा०चं०**— ननु मुख्यस्यैव सौत्रब्रह्मशब्देनोपादाने न नियामकम्। तथात्वे ब्रह्मैव सन्नित्यत्रापि जीवोपादानं न स्यात् । कथं चानया श्रुत्या विष्णौ तस्य मुख्यत्वसिद्धिः । अतोऽन्ततः प्रकरणादेरनुसर्तव्यत्वे मुख्यत्वोक्ते-वैयर्थ्यमित्यत आह **एतदुक्तं भवतीति**।

**वि०**— ननु श्रुतौ मुख्यत्वोक्तावप्यत्र सूत्रे मुख्यस्य ग्रहणं कुतः श्रुतौ च मुख्यादिपदा-दर्शनान्मुख्यत्वोक्तिरपि नास्तीत्यत आह **एतदुक्तं भवतीति** । **अतो मुख्यवृत्तिरिति** । परममुख्यवृत्तिरित्यर्थः । अन्यथा जातिजीवादिष्वपि वचनवृत्तिसद्भावेन नान्यत्रेति तन्निषेधानुपपत्तिः स्यादिति ध्येयम् । **प्रकरणादीति** । स विष्णुराह हीति प्रकरणं नारायणशब्दसमाख्या आदिशब्दार्थः ।

**चषकः**— **मुख्यवृत्तिरिति**। परममुख्यवृत्तिरित्यर्थः।

"अम्भस्य पारे" इत्युपक्रमवाक्यस्य नारायणशब्दसमानार्थता—

**७०७ सु०— स्यादेतत्। यदि 'तदेव ब्रह्मे'त्यस्यां श्रुतौ तच्छब्दपरामृष्टो विष्णुर्भवेत्, तदेव कुत इत्यत आह अम्भसीति।**

## अनु०— अम्भस्यपार इत्युक्तो नारायणपदोदितः ॥

'तदेव ब्रह्मे'त्यस्य हि 'अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्' इत्युपक्रमवाक्यम्। अत्र **नारायणपदोदित एव उक्तः**।

एतदुक्तं भवति । 'अम्भस्यपार' इत्युपक्रमवाक्यं तावन्नारायणपरम्, नारायणशब्द-समानार्थत्वात् । तथा च प्रकृतपरामर्शं परित्यज्य अप्रकृतपरामर्शाङ्गीकारायोगात् 'तदि'ति परामृष्टो विष्णुरेवेति।





**परि०**— ननु तच्छब्दपरामृष्टो विष्णुः कुत इति प्रश्न अम्भसीति वाक्योक्तो नारायण इति व्यधिकरणम्। तत्रोक्तस्य नारायणत्वं निर्बीजमित्यत आह **एतदुक्तं भवतीति**।

**आनन्द**ः— नन्वस्त्वेवमुपक्रमवाक्यं तथापि नारायणपदोदित एव तच्छब्दोदित इत्येतत्कुत इत्यत्राह **एतदुक्तं भवतीति**।

**वा०चं०**— ननु तदेवेत्यत्र विष्णोः परामर्शविषयतोपपादनाय अम्भस्यपार इत्युपक्रमवाक्ये नारायणपदोदितत्वोक्तिरसङ्गता साक्षाद्धेतोरनुक्तत्वात्। नारायणपदोक्तिमात्रेण व्यवहितस्यापि हेतोरलाभादित्यत आह **एतदुक्तं भवतीति**।

**विठ्ठ०**— नन्वम्भस्य पार इत्यत्रोक्तो नारायण इति कुतः नियामकाभावात्। तत्रोक्तस्य नारायणत्वेऽपि तदेव ब्रह्मेत्यत्र तच्छब्दोक्तो विष्णुरिति कुतः तच्छब्देन अन्यपरामर्शस्यापि संभवादित्यत आह **एतदुक्तं भवतीति**।

"आपो नारा" इति श्रुतौ अप्सु स्थितत्वस्य नारायणशब्दार्थत्वेन उक्तत्वात्—

**७०८ सु०— अम्भस्यपार इति वाक्यं कथं नारायणपदसमानार्थमित्यत आह आप इति।**

## अनु०— आपो नारा इति ह्याह

**हि यस्मात् 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' इति स्मृतिरप्सु स्थितत्वं नारायणशब्दार्थम् आह। तस्मादपारे अंभसि स्थित इति वाक्यं नारायणशब्दसमानार्थं भवतीति।**

**परि०**— इति ह्याहेत्यत्राध्याहारमाह **इति स्मृतिरित्यादि**।

**कं०रा०**— **नरसूनव इति**। नरौ तावविनाशित्वादिति ऋग्भाष्योक्तरीत्या चतुर्विधनाशाभावेन निमित्तेन नरशब्दवाच्यस्य परमात्मनः सूनवः। अतो जाता इति यावत्। वा इत्यनेनापां नरसूनत्वम्। अप एव ससर्जादावित्यादिप्रमाणप्रसिद्धमिति सूचितम्। अनेनापां नारशब्दवाच्यत्वे निमित्तमुक्तं भवति। यद्यपि नरशब्दादणि कृतेऽप्सु विवक्षितासु टिड्ढाणञित्यादिना ङीपा भवितव्यत्वेन नारा इति निर्देशानुपपत्तिः। तथाऽपि छान्दसत्वेन टिद्भावे इति वा प्रज्ञाश्रद्धार्चाभ्यो णः इत्यत्र ण इति योगविभागाश्रयणेन मत्वर्थीयणप्रत्ययान्तो नारशब्द इति वा नरशब्दात्प्रज्ञादिभ्यश्चेति स्वार्थेऽणिकृते तदन्तादर्श आदित्वेन मत्वर्थीयाच्प्रत्यये नारशब्दो निष्पन्न इति वा समाधानमत्र द्रष्टव्यम्। वस्तुतस्तु 'कीलालं भुवनं कबन्धकमले स्याज्जीवनं शंबरं नारः पुंसि कमव्ययम्' इति





शब्दरत्नाकरोक्तेः। अब्वाचिनो नारशब्दस्य नित्यपुल्लिङ्गत्वादणन्तत्वेऽपि टित्वाभावो नरसूनव इत्येतत्तु नारशब्दस्य अप्सु योगोऽप्यस्तीति प्रदर्शनार्थमिति ध्येयम्। ता नारशब्दिता आपः पूर्वं प्रलयकाले तस्य परमात्मनोऽयन-मित्यनेन नारा अयनं यस्येति बहुव्रीहिरुक्तो भवति। यद्यप्ययनशब्दस्याधिकरणार्थे नियतलिङ्गत्वाभावादयनमिति निर्देशानुपपत्तिस्तथाऽपि छान्दसत्वेन तदुपपत्तिरिति वा पूर्वं तस्यायनमिति सामान्यतोऽयनमुद्दिश्य ता आप इत्यस्त्वविधानात्तदुपपत्तिरिति वा नायमयनशब्दोऽधिकरणसाधनः किन्तु भावसाधन एव। सामानाधिकरण्यं तु पिपीलिकालिपिश्चापि प्रमाणमित्यत्रेव भाक्तमतो नानुपपत्तिरिति वा समाधानमवधेयम्।

॥ शाखान्तरे "मम योनिः" इति श्रुतावपि विष्णोरेव अप्स्वन्तःस्थितत्वोक्तिः ॥

महालक्ष्म्या आत्मनो योनित्वेन "अप्स्वन्तः" इत्युक्तत्वात्—

**७०९ सु०— किञ्च शाखान्तरे 'मम योनिरप्स्व१न्तरि'ति विष्णुरेवाप्स्वन्तरीरितस्तत्समा-ख्यानाच्च 'अम्भस्यपार' इत्युपक्रमवाक्यं विष्णुपरमित्याह स एवेति।**

**अनु०— स एवाप्स्वन्तरीरितः ॥**
**कामतो विधिरुद्रादिपददात्र्या स्वयं श्रिया ॥**
**योनित्वेनात्मनः**

स्यादेतत्। यदि 'मम योनिरि'ति शाखान्तरस्थमपि वाक्यं विष्णुपरं स्यात्तदेव कुत इत्यत आह **स्वयमिति**। **श्री**शब्दः अन्यत्राप्युपचाराद्वर्तते। यथोक्तम् 'ताश्चेन्द्रधर्मनासत्य-संश्रयाच्छ्रिय ईरिताः' इति। तद्व्युदासार्थं **स्वयम्** इत्युक्तम्। महालक्ष्म्या 'मम योनिः' इति **आत्मनः** कारणत्वेनेरितत्वात् 'अप्स्वन्तरि'त्युक्तो विष्णुरेव ॥ भवेदेतत्। यदीदं श्रीवाक्यं स्यात्तदेव कुतो निश्चेयम्। 'अम्भ्र(भृ)णी वा वागात्मानं तुष्टावे'त्यम्भ्र(भृ)णीवाक्यत्वस्य उक्तत्वादित्यत आह **कामत इति**। अत्र हि 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधामि'त्यादिना अस्या अम्भ्र(भृ)ण्या वाचः स्वेच्छामात्रेण ब्रह्मरुद्रादिपददातृत्वं प्रतीयते। न चैतच्छ्रियं विना अन्यस्या युक्तमन्यासां ब्रह्मसृष्टत्वात्। अतः परशक्तेः श्रिय एवेदं वाक्यमिति निश्चीयते ॥ अथवा **श्रिया आत्मनो योनित्वेन** उक्तत्वात् 'अप्स्वन्तरि'ति विष्णुरेवोच्यत इत्युक्तम्, तत्र श्रीयोनित्वस्य ब्रह्मरुद्राद्यन्यतमस्मिन्संभवात्; इत्याशङ्का-ऽपनोदाय **कामत** इत्यादिविशेषणमुक्तम्।





**परि०**— स एवेत्यादि योजयति **किञ्चेति** । **यथोक्तमिति** । भारततात्पर्यनिर्णये अष्टादशोऽध्याये । **ताः** शचीश्यामलोषानाम्न्यः । **अम्भ्रणी वाक्** अम्भ्रणीनामिका वागित्यर्थः ।

**वं०प०**— **ताश्चेति** । शच्याद्या इत्यर्थः । सम्यग्विधप्रकारेण ।

**कं०रा०**— **अन्यत्रापीति** । शच्यादिष्वपीत्यर्थः । **ताश्चेति** । शची श्यामलोषसोऽपि श्रिय इतीरितेति संबन्धः । कस्मान्निमित्तादित्याकाङ्क्षायामुक्तम् । **इन्द्रधर्मनासत्यसंश्रयादिति** । तत्र च द्वन्द्वान्ते श्रूयमाणस्य संश्रयशब्दस्य प्रत्येकं संबन्धादिन्द्रसंश्रयणं शच्यां श्रीशब्दप्रयोगनिमित्तं धर्मसंश्रयणं श्यामलायां नासत्यसंश्रयणमश्विभार्यायामुषसीति द्रष्टव्यम् । न च वाच्यं ताश्चेति तात्पर्यनिर्णयगतवाक्ये श्रीशब्दप्रवृत्तिनिमित्तपूर्वकं शच्यादीनां श्रीशब्दवाच्यत्वोक्तेः कथं श्रीशब्दोऽन्यत्राप्युपचाराद्वर्तत इत्युपचारोक्तिर्युक्तेति । श्रीयते आश्रयते सर्वैरिति कर्मव्युत्पत्त्या लब्धस्य मुख्यस्य श्रीशब्दप्रवृत्तिनिमित्तस्य सर्वसेव्यत्वेऽस्य श्रयते विष्णुमेवेति व्युत्पत्त्या लब्धस्य विष्णुमात्राश्रितत्वस्य महालक्ष्म्या अन्यत्रासत्त्वेनोपचारोक्तेर्युक्तत्वादिन्द्रधर्मनासत्यसंश्रयादिति वाक्यं तु यथा महालक्ष्म्या विष्णुसंश्रयणमस्ति । तथा शच्यादीनामिन्द्रादिसंश्रयणमस्तीत्युपचारबीजकथनपरमिति न कश्चिद्विरोधः । न च कर्मव्युत्पत्तिपक्षे इन्द्रधर्मनासत्यसंश्रयादित्यस्योपचारबीजकथनपरत्वं न संभवतीति वाच्यम् । इन्द्रधर्मनासत्यसंश्रयणाद्धेतोः स्वनीचसेव्यत्वेन ता श्रिय ईरिता इति योजनया तत्कथनपरत्वोपपत्तेः । अस्तु वा इन्द्रधर्मनासत्यसंश्रयादित्येतद्वाक्यं श्रीशब्दप्रवृत्तिनिमित्ताभिधानपरं तथाऽपि इन्द्रादिशब्दानां भगवतोऽन्यत्र परममुख्यत्वाभिप्रायेणामुख्योक्तिरिव श्रीशब्दोऽप्यन्यत्राप्युपचाराद्वर्तत इत्युपचारोक्तिस्तदभिप्रायेण युक्तैवेति । **अंभृणीति** । यद्यप्यनुक्रमणिकायामहमष्टौ वात्मानं द्वितीया जगतीति पाठो दृश्यते । तथाऽपि तट्टीकायामहं रुद्रेभिरित्यष्टर्चस्य सूक्तस्यांभृणीनाम ऋषिरित्युक्तत्वात्तुष्टावात्मानमित्यत्रात्मानं तुष्टावेत्यन्वयस्य प्रदर्शनीयत्वाच्च । अंभ्रणीवागात्मानं तुष्टावेत्यर्थतो ग्रहणं कृतमिति द्रष्टव्यम् । **ब्रह्मेति** । चतुर्मुखसृष्टत्वादित्यर्थः ।

**श्रीनिधि०**— **स्वयं श्रिया** । मुख्यश्रियेत्यर्थः । **अंभ्रिणी वा वागात्मानं तुष्टाव** इत्यनुक्रमणिकावाक्यम् । अंभ्रण्या वाचः तद्रूपया वाचः इत्यर्थः ।

**वा०चं०**— श्रियोक्तत्वादित्युक्ते स्वयमित्यस्यानुक्तिसिद्धत्वात्स्वयमिति व्यर्थमित्यतो मुख्यत्वं स्वयंशब्दार्थ इत्यभिप्रेत्य तद्व्यावर्त्यमाह **श्रीशब्द इति** । पूर्वं श्रिया स्वकारणत्वेनोक्तत्वादिति हेतोरसिद्धिपरिहारकत्वेन कामत इत्यादिविशेषणं योजितम् । अधुना तस्यैव हेतोरप्रयोजकत्वपरिहारकतयाऽपि तदेव योजयति **अथवेति** ।

**वा०र०**— श्रिया स्वयमुक्तत्वादित्यर्थलाभार्थं स्वयंपदमिति न तस्य वैयर्थ्यप्रसक्तिरित्यत आह **श्रियेति** ।

**वि०ट्ठ०**— ताश्चेत्यत्र तच्छब्देन शच्यादिग्रहणम् ।





"तदेव" इति श्रुतौ "यस्मिन् देवा" इति सर्ववेदाश्रयत्वेन विष्णोरेव प्रतीतिः—

**७१० सु०—** एवं नारायणशब्दसमाख्यया अम्भृणीसूक्तसमाख्यया च 'अम्भस्यपार' इत्युपक्रमवाक्यस्य विष्णुविषयत्वं समर्थ्य 'तदेव ब्रह्मे'ति परामर्शस्य तद्विषयत्वं समर्थितम्; हेत्वन्तरेणापि समर्थयते **विष्णोरिति** ।

**अनु०—— विष्णोस्तिष्ठन्तीत्युदितस्य च ॥**
**यस्मिन्देवा अधीत्युक्त्वा**

'सप्तार्धगर्भा भुवनस्य रेतो **विष्णोस्तिष्ठन्ति** प्रदिशा विधर्मणि' **इति** ऐतरेय-श्रुतावाज्ञाधृतमहदादिदेवतासमूहत्वेन उदितस्य विष्णोरत्रापि 'यस्मिन्निदं सञ्च विचैधि सर्वम् **यस्मिन् देवा अधि** विश्वे निषेदुरि'ति सर्वदेवाश्रयत्वम् **उक्त्वा** 'तदेव ब्रह्मे'त्यब्रवीदिति संबन्धः ।

अयमर्थः । 'तदेव ब्रह्मे'ति परामर्शविषयो हि 'यस्मिन् देवा' इति सर्वदेवाश्रयत्वेन प्रतीयते । तच्च शाखान्तरे 'सप्तार्धगर्भा' इति विष्णुधर्मत्वेनावगतम् । अतोऽपि 'तदि'ति परामृश्यमानो विष्णुरेवेति ।

**परि०— सप्तेति** । आर्धगर्भा आसमन्तात् ऋद्धब्रह्माण्डगर्भाः सप्त महदहङ्कारपञ्चमहाभूत-देवताः भुवनस्य रेतो रतिप्रदस्य विष्णोः प्रदिशा आज्ञया विधर्मणि विविधधारणकर्मणि तिष्ठन्तीति श्रुत्यर्थं हृदि निधायाह **आज्ञाधृतेत्यादि** । **अत्रापीति** । उपनिषद्यपीत्यर्थः । मूले इत्युक्त्वेति क्त्वाप्रत्ययान्त-स्यान्वयमाह **उक्त्वा तदेव ब्रह्मेत्यब्रवीदिति संबन्ध इति** । तदेव ब्रह्म चाब्रवीदिति श्रवणेऽपि चशब्द इतिशब्दार्थ इति वक्ष्यमाणत्वाद्ब्रह्मेतीत्यनुवादः ।

**वं०प०**— एधि अस्तीत्यर्थः । एधीति अस् भुवीति धातो रूपम् ।

**आनन्दः**— नन्वेवमपि तदेवेत्यत्र तच्छब्देन विष्णुपरामर्शः । कुत इत्यत्राह **अयमर्थ इति** ।

**कं०रा०— आज्ञेति** । आज्ञया धृतो महदादिदेवतासमूहो यस्य स आज्ञाधृतमहदादिसमूहस्तस्य भावः तत्त्वं तेनेत्यर्थः । **यस्मिन्निति** । सम्यग्विधं चेदं सर्वं यस्मिन् एधि अवर्धतेत्यर्थः । एध वृद्धावित्यस्माच्छन्दसि





विकरणव्यत्ययेन शपो लुकि पुरुषव्यत्ययेनोत्तमपुरुषैकवचने इटि बहुलं छन्दस्यमाङ्योगेऽपीति अडागमाभावे चैतद्रूपम् । एधीति वा पदच्छेदमाश्रित्य पुरुषविकरणव्यत्ययमात्रं कल्पनीयम् । यद्वा । एधीत्यस्य लकारपुरुषव्यत्ययेन अस्तीत्यर्थः । अस्तेर्लोटि मध्यमपुरुषैकवचने खलु सेर्ह्यपिच्चेति सेर्ह्यादेशे तस्य अपित्वेन ङिद्वद्भावात् श्नसोरल्लोप इत्यकारलोपे घ्वसोरेद्धावभ्यासलोपश्चेति सकारस्य एत्वे तस्य असिद्धवदत्राभादित्यसिद्धत्वात् । हुझल्भ्योहेर्धिः इति हेर्धित्वे च रूपमेतत् ।

**श्रीनिधि०— आज्ञाधृतमहदादिदेवतासमूहत्वेनोदितस्येति** । धृता महदादयो याभिस्ताः धृतमहदादयः, स्वाज्ञया धृतमहदादयः, स्वाज्ञाधृतमहदादयः, ताश्च ता देवताश्च, तासां समूहो यस्य स तथोक्तः । अनन्वयादध्याहरति **सर्वदेवाश्रयत्वमिति** ।

**वा०चं०**— विष्णोरित्युत्तरवाक्यस्याप्युपक्रमस्य विष्णुविषयत्वसमर्थनार्थत्वभ्रान्तिं निवारयितुं पूर्वोत्तरप्रकरणविषयं विविच्य दर्शयति **एवमिति** । एवमुत्तरत्रापि पूर्वशेषत्वभ्रान्तिनिवारणायावतारिकेति द्रष्टव्यम् । अनेनोक्तहेतुस्वरूपस्य स्पष्टाप्रतीतेराह **अयमर्थ इति** ।

**वा०र०— अवतारिका इति** । लिङ्गान्तरमाह इत्युत्त्यन्तरमाह लिङ्गान्तरमाहेति स्थलत्रयरूपावतारिका इत्यर्थः ।

**वि०**— आसमन्तात् ऋद्धब्रह्माण्डाख्यगर्भाः महदहङ्कारपञ्चमहाभूतदेवताः भुवनरतिप्रदस्य विष्णोराज्ञया तिष्ठन्तीति श्रुत्यर्थं हृदि निधायाह **आज्ञाधृतेत्यादिना** । इदं सर्वं जगत् यस्मिन्नाश्रये सम्यग्विचैधि यस्मिंश्च विश्वे सर्वे देवा अधिनिषेदुः इत्यर्थः । तदेवेत्यत्र तच्छब्दपरामृष्टो विष्णुरित्यत्र हेतुकथनार्थं यस्मिन्देवा अधि इति वाच्यम् । तदुपपादनार्थं विष्णोस्तिष्ठन्तीति वाक्यम् । अतो न तदुदाहरणवैयर्थ्यमित्याशयेनाह **अयमर्थ इति** ।

**"यमन्तःसमुद्रे" इति तस्मिन्नुक्तस्य समुद्रस्थानत्वलिङ्गस्य विष्णावेव विद्यमानत्वम्—**

**७११ सु०— लिङ्गान्तरमाह समुद्रमिति ।**

## अनु०— समुद्रं स्थानमेव च ॥

**'यमन्तः समुद्रे कवयो(ऽ)वयन्ति' इत्यस्य पुरुषस्य समुद्रस्थानं च उक्त्वा 'तदेव ब्रह्मे'त्यब्रवीत् तस्मादपि समुद्रस्थानत्वलिङ्गाद्विष्णुरेव परामर्शविषय इति गम्यते । एवशब्देन समुद्रस्थानत्वं 'मम योनिरप्स्व१न्तःसमुद्र' इत्यादिश्रुतेरन्यत्रानवकाशमित्याह । 'विष्णोरेव यत्समुद्रस्थानत्वमि'ति योजना ।**





**परि०— कवयोऽवयन्तीति** । जानन्तीत्यर्थः । नन्वेवशब्देनान्यत्रानवकाशमाहेत्ययुक्तम् । स्थानपदेनान्वितेन तादृशार्थालाभादित्यत आह **विष्णोरेवेत्यादि** । अनेन विष्णोरिति षष्ठ्यन्तस्य समुद्रं स्थानमेव नाम चाक्षरमित्येवेत्यत्रापि संबन्ध इत्युक्तं भवति ।

**गु०दी०— यमन्तः समुद्रे कवयोऽवयन्ति** इत्यत्र अवयन्तीति पदच्छेदः । अवोपसर्गात् 'इण् गतौ' इति धातोः अवैति अवेतः अवयन्तीति लट्बहुवचनम् । जानन्तीत्यर्थः ॥ **इति जिज्ञासाधिकरणम्** ॥ १-१-१ ॥

**वं०प०**— ननु समुद्रस्थानं कथं विष्णोः लिङ्गम् इत्यतो मूले भावप्रधानो निर्देश इत्यभिप्रेत्याह **विष्णोर्यत्समुद्रस्थानत्वमिति** । विष्णोर्यत्समुद्ररूपस्थानवत्त्वं तदुक्त्वेत्यर्थः ।

**श्रीनिधि०— श्रुतेरन्यत्रानवकाशमिति** । अनवकाशत्वे श्रुतिः प्रमाणमिति भावः ।

**वा०चं०**— विष्णोरित्यनुवर्तितेनैवकारसंबन्धेन योजनां प्रदर्शयितुमेवकारव्यावर्त्यमाह **एवशब्देनेति** ।

**वा०र०— विष्णोरितीति** । इति यदनुवर्तितं तेन एवकारस्य यः संबन्धस्तेनेति योजना ।

**विठ्ठ०— वयन्ति** जानन्ति **तस्मादपीत्यस्य** विवरणं **समुद्रस्थानत्वलिङ्गादिति** । तथा च मूलगत-चशब्दार्थोऽपिशब्दः । ननु एवशब्देन **समुद्रस्थानत्वमन्यत्रानवकाशमित्याह** इत्ययुक्तं स्थानपदसंबन्धेनैव शब्देन स्थानान्तरव्यावृत्तेरेव प्रतीयमानत्वेनोक्तार्थालाभादित्यतो योजनामाह **विष्णोरेवेति** । तथा च विष्णोरेव यत् यस्मात्समुद्रं स्थानमुक्त्वा तदेव ब्रह्मेत्यब्रवीत्तस्मादपि विष्णुरेव परामर्शविषय इति योजनेत्यर्थः ।

**"यदक्षरे" इति तस्य विष्णोरेव विद्यमानस्य नाम्नः उक्तिः—**

**७१२ सु०— युक्त्यन्तरमाह नाम चेति ।**

## अनु०— नाम चाक्षरमित्येव

**'यदक्षरे परमे प्रजा' इत्यस्य अक्षरमिति नाम च उक्त्वा 'तदेव ब्रह्मे'त्यब्रवीत् । अतश्च विष्णुरेव तदिति परामृश्यते ॥ अक्षरनामान्यस्य किं न स्यादित्यत उक्तम् एवेति । 'विष्णोरेवे'त्यन्वयः ॥**





**परि०— यदिति** यस्मादित्यर्थे। मूले नाम चाक्षरमित्येव ऋच इत्यत्र 'ऋत्यक' इति सूत्रेण विकल्पेन प्रकृतिभावस्य स्पष्टत्वादनुक्तिः।

**वा०चं०—** समुच्चयार्थकचशब्दस्य वैयर्थ्यात्प्रकारसमर्पणस्यावश्यकत्वादब्रवीदिति क्रियां प्रति वाक्यस्यैव कर्मत्वौचित्याच्चेतिशब्दार्थतया चशब्दं व्याचष्टे **ब्रह्मेतीति**।

**वा०र०— समुच्चयार्थकचशब्दस्येति**। चशब्दस्य समुच्चयार्थकत्वे समुच्चेयस्य प्रकृतेऽभावेन तदर्थकत्वानुपपत्त्या वैयर्थ्यापत्त्येत्यर्थः।

**वि़ठ०— विष्णोरेवेत्यन्वय इति**। अनेन विष्णोरेवाक्षरमिति यन्नाम तदुक्त्वा तदेव ब्रह्मेत्यब्रवीदित्युत्तरेण संबन्ध इति सूचितं भवति।

**७१३ सु०— तत्कुत इत्यत आह ऋच इति।**

**अनु०— ऋच इत्युदितं तु यत् ॥**

**'ऋचः अक्षरे परमे व्योमन्' इति यत् अक्षरनाम वामनसूक्ते विष्णौ प्रयुक्तमिति। तुशब्देनाक्षरनाम्नो विनाशाभावार्थतालक्षणं विशेषं द्योतयति। न हि विष्णोरन्यस्याविनाशित्वं संभवतीति वियदधिकरणे वक्ष्यते।**

**यादु०— वियदधिकरण इति**। तत्र ब्रह्मव्यतिरिक्तस्य सर्वस्योत्पत्तिरेव यद्यपि वक्ष्यते न तु विनाशित्वं तथाऽप्युत्पत्तिमतो भावस्य विनाशित्वं नियतमिति तदपि तत्र विवक्षितमित्यभिप्रेत्यैवमुक्तम्। अत एव तत्त्वप्रकाशिकायामुत्पत्तिमत्त्वाल्लीयन्त इति सिद्धमित्युक्तम्।

**आनन्दः—** नन्वस्यापि विनाशाभावोऽस्तीत्यत आह **न हीति**।

**वि़ठ०— वियदधिकरण इति**। यद्यपि सर्वस्याप्युत्पत्तिमत्त्वमेव तत्रोक्तम्। तथाप्युत्पत्तिमतो भावस्य अत्र विनाशित्वमपि तत्र विवक्षितम्। अत एवोक्तं तत्त्वप्रकाशिकायां उत्पत्तिमत्त्वाल्लीयन्त इति सिद्धमिति।

**चषकः— वियदधिकरणे वक्ष्यत इति**। तत्र ईशान्यसामान्यस्योत्पत्तिमात्रसमर्थनेऽपि जनिमतो नाशनैयत्यादित्याशयेनेयमुक्तिः। अत एव उत्पत्तिमत्त्वाल्लीयन्त इति सिद्धमिति तदभिध्यानादिति टीकोक्तिः।



"यतः प्रसूताः" इति विष्णोरेव विद्यमानस्य प्रकृतिकारणत्वस्य तस्मिन्नुक्तिः—

**७१४ सु०— लिङ्गान्तरमाह यत इति।**

## अनु०— यतः प्रसूतेऽत्युक्त्वा च तदेव ब्रह्म चाब्रवीत्॥ १ ॥

### इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद् ब्रह्मसूत्रानुव्याख्याने प्रथमाध्याये जिज्ञासाधिकरणं समाप्तम्॥

**'यतः प्रसूता** जगतः प्रसूति' **इति प्रकृतिकारणत्वं च अस्य पुरुषस्य उक्त्वा 'तदेव ब्रह्म'** इति **अब्रवीत्**। प्रकृतिकारणत्वं च 'मम योनिरप्स्वन्तः', 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इत्यादिश्रुतिस्मृतिषु विष्णोरेव प्रसिद्धम्। अतः स एव तदिति परामर्शगोचर इति॥ 'ब्रह्म चे'ति चशब्द इतिशब्दार्थे।

तदेवं 'तदेव ब्रह्मे'तिवाक्यस्य विष्णुविषयत्वाद्, ब्रह्मशब्दो विष्णावेव मुख्य इति स्थिते, सौत्रोऽपि ब्रह्मशब्दस्तत्पर एवेति सिद्धम्।

**परि०**— ब्रह्मान्यच्चाब्रवीदिति भ्रमनिरासाय निपातानामनेकार्थत्वादाह **चशब्द इतिशब्दार्थ इति**।

**वं०प०— यतः प्रसूतेति**। सिसृक्षुत्वविशेषं तत्साक्षाद्भगवदिच्छया प्राप्तैव सृष्टेत्युदितेत्यर्थः।

**आनन्दः**— ब्रह्म चेति चशब्दस्य समुच्चयाद्यर्थत्वासंभवादाह **ब्रह्म चेतीति**।

**कं०रा०**— ननु मूले तदेव ब्रह्म चाब्रवीदिति चशब्द एव श्रूयते। न त्वितिशब्दस्तत्कथं तदेव ब्रह्मेत्यब्रवीदिति व्याख्यानं घटत इत्यत आह **ब्रह्म चेति**। **चशब्द इति**। ब्रह्म चेत्यत्र चशब्द इतिशब्दार्थे वर्तत इत्यर्थः।

**श्रीनिधि०— तस्मादव्यक्तमुत्पन्नम्** इत्यत्र साभिमानिकमिति भावः। ब्रह्माब्रवीदन्यच्चाब्रवीदिति असङ्गतमित्यत आह **चशब्द इति**।

**विठ्ठ०**— चशब्दस्य समुच्चयार्थत्वनिरासायाह **च शब्द इति**। निपातानामनेकार्थत्वादिति भावः। अत एव ब्रह्मेत्यब्रवीदिति बहुश उक्तिः।

**७१९ सु०— अत्र केनचित्प्रलपितं 'श्रौतस्य ब्रह्मशब्दस्य जात्यादिकमर्थान्तरमाशङ्क्य यद्भाष्यकारीयं निराकरणं तदनुपपन्नम् । यतः सूत्रकार एव जन्माद्यस्य यत इति जगज्जन्मादिकारणं ब्रह्मेति वक्ष्यति । न हि जात्यादेर्जगज्जन्मादिकारणता अस्ती'ति ।**

**तदतीव मन्दम् । सौत्रब्रह्मशब्दश्रवणे जात्यादिप्रतिभास एव न भवतीति वा तन्निराकरणमकर्तव्यम् उत जातोऽपि प्रतिभासो लक्षणसूत्रपर्यालोचनया निवर्तत इति । नाद्यः गृहीतसङ्गतेरर्थान्तरप्रतिभासस्यावर्जनीयत्वात् । द्वितीये त्वयाऽप्यर्थान्तरप्रतिभासस्तन्निराकरणं चाङ्गीकृतमेव । तथाप्युत्तरवाक्यपर्यालोचनां विहाय किं युक्त्यन्तरान्वेषणेन इति चेन्न । प्रथमप्राप्तं 'स विष्णुराह ही'त्यादिवाक्यं विहाय किमुत्तरान्वेषणेनेत्यपि वक्तुं शक्यत्वात् । न चोत्तरसूत्रपर्यालोचनया अयं निर्णयो न कार्य इत्युक्तं भाष्यकृता । तस्मात् यत्किञ्चिदेतत् ।**

**परि०**— नन्वेवं जन्मादिसूत्रेण निर्णयो विरुद्ध्यत इत्यत आह **न चोत्तरसूत्रेति** ।

**वं०प०— निवर्तत इति** । तथाच भाष्यकारीयं तन्निराकरणं व्यर्थमिति भावः ।

**आनन्दः**— यदि प्रथमप्राप्तेनैव निर्णयस्तर्हि उत्तरसूत्रमनर्थकमापद्येतेत्यत आह **न चोत्तरेति** ।

**वा०चं०**— भाष्यकारस्य ब्रह्मशब्दार्थसमर्थने केनचिदुद्भावितामचातुरीमाशङ्क्य परिहरति **अत्रेति** । **सौत्रेति** । न चैतत्पक्षाप्राप्तिर्यतः सूत्रकार एवेत्यादिना स्वयमेव द्वितीयपक्षमात्रविषयकस्वाभिप्रायप्रकटनादिति वाच्यम् । प्रकारस्य प्रकारान्तरादूषकत्वस्य सर्वसिद्धत्वेऽप्येवमाशङ्कमानस्याशङ्कैव नोदेति अथाप्याशङ्का चेदुत्तरसूत्रपर्यालोचनयैव तत्परिहार इत्यभ्युच्चयेनापि तदुक्तेः संभवेन सूत्रकारीयपरिहारादेतच्छङ्काया एवानुदय इति तत्पक्षाभिप्रायस्यापि संभवादित्याशयात् । उत्तरसूत्रालोचनया परिहारस्य सूत्रानारूढपरिहारापेक्षयान्तरङ्गत्वादिति युक्तिं सूचयति **युक्त्यन्तरेति** । अत एव ततोऽप्यन्तरङ्गतां परिहर्ता दर्शयति **प्रथमेति** । ननु परिहारान्तरं पूर्वसूत्रान्वेषणेन कृतवता भाष्यकृतार्थात्प्रकारान्तरं दूषितमेव भवतीत्यतः प्रकारस्य प्रकारान्तरादूषकत्वन्यायविरोधस्तर्हीत्याशयेनाह **न चेति** ।

**वा०र०**— अप्राप्तौ हेतुमाह **यत इति** । **तदुक्तेरिति** । यत इत्याद्युक्तेरित्यर्थः । युक्त्यन्तरे युक्त्या स्वयुक्तेरतिशयः प्रतिपादितस्तं स्पष्टयति **उत्तरसूत्रेति** । **अत एवेति** । परेण स्वयुक्तेरन्तरङ्गत्वरूपविशेषप्रतिपादनादेव तमप्रयोजकीकर्तुमिति योज्यम् । **ननु परिहारेति** । तर्हीति वक्ष्यमाणं नन्वित्यतःपरं योज्यम् । **आहेति** शङ्कत इत्यर्थः । **इत्युक्तं भाष्येति** मूलम् । अनेन स्वयं भगवतेति भाष्यमुपलक्षणम् । उत्तरसूत्रे जन्मादिकारणत्वं ब्रह्मलक्षणं भगवता





स्वयमभिहितमतो ब्रह्मशब्दो विष्णुपर इत्यपि द्रष्टव्यमिति तद्भाष्यव्याख्यानं सूचितम् । तदेतदभिप्रेत्यैव एतेनेत्येतस्य पूर्वोत्तरसूत्रानुसारेणेत्यादि व्याख्यास्यति टीकाकार इति ज्ञेयम् ।

**विट्ठ०— अङ्गीकृतमेवेति** । अन्यथा द्वितीयसूत्रवैयर्थ्यापत्तेरिति भावः । ननु स विष्णुराह हीत्यादिनैव ब्रह्मशब्दस्य विष्णुपरत्वे सिद्धे उत्तरसूत्रे एतन्निर्णयो न कार्य इत्यापन्नम् । तथाच तद्वैयर्थ्यमित्यत आह **न चोत्तरेति** । अयं भावः उत्तरसूत्रे अयं निर्णयोऽवश्यं कार्यः । एवं अन्यथा ब्रह्मशब्दरूढिमात्रार्थस्य जिज्ञासायाः कर्तव्यतापातेन पूर्वसूत्रस्यानुपपन्नत्वप्राप्तेः । परन्तु भाष्यकारः प्रकारान्तरेणापि निर्णयं कृतवान् । उपायस्य उपायान्तरादूषकत्वात् द्वितीयसूत्रप्रमेयस्यैव रीत्यन्तरेण शिष्याणां बुद्धिशुद्धयेऽत्र कथनस्याप्युपपत्तेरिति । तदुक्तं तत्त्वप्रकाशिकायाम् । यद्यपि पूर्वाधिकरणे विष्णावेव ब्रह्मशब्दो मुख्य इत्युक्तं तथापि स्वकृतव्याख्यानस्थापनाय भाष्यकारेणोक्तत्वादिति ।

**७१६ सु०— एतेनैतदपि निरस्तम् । यत्परेण 'तत्किं ब्रह्म प्रसिद्धमप्रसिद्धं वा, प्रसिद्धं चेन्न जिज्ञास्यमप्रसिद्धत्वे न जिज्ञासितुं शक्यमित्याशङ्क्य, प्रसिद्धमेव ब्रह्म ब्रह्मशब्दात्सर्वस्य आत्म(सर्वात्मक)त्वाच्च । तथाऽपि देहात्मत्वादिविप्रतिपत्तिसद्भावाज्जिज्ञास्यमि'त्युक्तम् । ब्रह्मजिज्ञासापदेन हि सकलजगज्जन्मादिकारणस्य भगवतो नारायणस्य जिज्ञासा विधीयत इत्युपपादितम् । तत्र जीवात्मनि प्रसिद्धिविप्रतिपत्तिव्युत्पादनस्य कोऽवसरः । जीवात्मनो ब्रह्मत्वजिज्ञासा ब्रह्मजिज्ञासेति चेन्नैवं सूत्रकार आहेत्यलम् ।**

**परि०— एतदपीति** । यत्परेण जिज्ञास्यमित्युक्तम् एतदपि ब्रह्मशब्दार्थो नारायण एवेत्यर्थकथनेनैव 'निरस्तमित्यर्थः । एतेनैवेत्युक्तं व्यनक्ति **ब्रह्मजिज्ञासापदेनेति** । **नैवं सूत्रकार आहेति** । लोकेति निश्चितेन धर्मिणा निश्चितेन प्रकारेण विशिष्यपदप्रयोगेन ब्रह्मजिज्ञासेत्युक्त्या ब्रह्मण एव जिज्ञासाधर्मित्वप्रतीत्या जीवात्मधर्मिकजिज्ञासाया अप्रतीतेः । अन्यथा जीवात्मजिज्ञासेत्यवक्ष्यदिति भावः । **इत्यलमिति** । तद्विस्तरश्चन्द्रिकायां बोध्यः । फलोक्त्या सूत्रार्थमुपसंहरति **तदेवमिति** ॥ **इति जिज्ञासाधिकरणं संपूर्णम् ॥**

**यादु०— प्रसिद्धं च तदिति** । 'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः' इति अक्षपादवचनादिति भावः । अन्ये तु यदि प्रसिद्धं वेदान्तवाक्यजन्यज्ञानेन विषयीकृतम् तर्हि न जिज्ञास्यम् । निष्पादितक्रिये कर्मण्यविशेषाधायिनः साधनस्य साधनन्यायातिपातादित्याहुः । **अप्रसिद्धत्वे न जिज्ञासितुं शक्यमिति** । बुद्धावनारूढस्य विचारासंभवात् । यद्यपि प्रत्यक्षादिप्रमाणैर्विचारानपेक्षैरत्यन्तानधिगतार्थ एव प्रतीयते । तथाऽपि यत्र विचारापेक्षया प्रमाणेन वस्तु प्रतिपाद्यते तत्राप्रतिपन्नमुद्दिश्य विचारानुपपत्तेः प्रतिपन्न एव विचारदर्शनाच्च





नाप्रतिपन्नं विचारधर्मीत्याहुः । अन्ये त्वनुभूते हि प्रिये भवतीच्छा न तु सर्वथाऽननुभूतपूर्व इति अत्र भावमाहुः । **ब्रह्मशब्दादिति** । मीमांसाप्रवृत्तेः पूर्वमपि वेदान्तेभ्य आपाततो ब्रह्मावगतमस्तीति भावः । **सर्वस्यात्मत्वाच्चेति** । अत्र सर्वस्य प्रसिद्धमेव ब्रह्मेत्यन्वयः । तथाच सर्वस्येत्येतत्प्रतिज्ञाविशेषणं न तु हेतुत्वविशेषणम् । वैयर्थ्यात् । आत्मत्वादिति हेतौ च ब्रह्मण इति शेषः । ततश्च सर्वो ह्यात्माऽस्तित्वं प्रत्येति न नाहमस्मीति । यदि हि नात्मास्तित्वप्रसिद्धिः स्यात् सर्वो लोको नाहमस्तीति प्रतीयात् । आत्मा च ब्रह्मेत्यर्थः । **देहात्मत्वादिविप्रतिपत्तीति** । आदिपदादिन्द्रियाण्येवात्मेत्यन्ये । मन इत्यपरे । विज्ञानमात्रं क्षणिकमित्येके । शून्यमित्यपरे । अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेत्यपरे । भोक्तैव केवलं न कर्तेत्यपरे । अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञ इति केचित् । आत्मा स भोक्तुरित्यपरे । इति परोदाहृतविप्रतिपत्तिसंग्रहः । एतेनेत्युक्तं विवृणोति **ब्रह्मजिज्ञासापदेनेति** । सकलजगज्जन्मादिकारणस्येत्युत्तरसूत्रपर्यालोचनया सिद्धमर्थमभिप्रेत्य नारायणस्येत्येतदम्भस्यपार इत्याद्युपपादनमभिप्रेत्येति द्रष्टव्यम् । तथा च जीवभिन्नस्यैव ब्रह्मणो जिज्ञासा विधीयत इत्युपपादितमिति भावः । **नैवं सूत्रकार इति** । सूत्रकारस्य एतदर्थविवक्षाज्ञापकं पूर्वोत्तरवाक्यादिकं नास्तीति भावः । अस्मन्मते च वेदेनेश्वरस्योक्तरूपस्यापाततः सिद्धत्वेऽपि नानाविधविप्रतिपत्तिनिरासाय जिज्ञासारम्भः सार्थक एवेति जिज्ञास्योऽयं विधीयत इत्यत्रोक्तं ज्ञातव्यम् ।

**वं०प०— आत्मत्वाच्चेति** । जीवाभिन्नत्वादित्यर्थः । जीवस्य चाहमिति नित्यसिद्धत्वादित्यर्थः । तर्हि तस्य न जिज्ञास्यत्वमित्यत आह **तथापीति** । **जिज्ञासा विधीयत इति** । जीवान्यधर्मिकगुणपूर्णत्वप्रकारिका जिज्ञासेत्यर्थः ।

**आनन्दः**— एतेनेत्यस्यार्थमाह **ब्रह्मेति** ।

**कं०रा०— प्रसिद्धं चेति** । ब्रह्म प्रसिद्धं चेन्न जिज्ञास्यं विप्रतिपत्त्यभावादिति भावः । **अप्रसिद्धत्व इति** । ब्रह्मणोऽप्रसिद्धत्वे न तज्जिज्ञासितुं शक्यम् । जिज्ञास्यत्वप्रयोजकसामान्यप्रतिपत्तिविरहादिति भावः । **सर्वस्येति** । ब्रह्म सर्वस्य जीवस्य स्वरूपत्वाच्चाहमिति प्रत्यक्त्वरूपेण सामान्येन प्रसिद्धमेवेत्यर्थः । **देहेति** । देहेन्द्रियमनःशून्यब्रह्मत्वादिविशेषविप्रतिपत्तिसद्भावादित्यर्थः । **ब्रह्मेति** । यदि ब्रह्मजिज्ञासापदेन जीवजिज्ञासा विधीयते तदा जीवात्मनि सामान्यप्रसिद्धिविशेषविप्रतिपत्तिव्युत्पादनं सङ्गतं स्यात् । न चैवम् । किं नाम तेन सकलजगज्जन्मादिकारणस्य भगवतो नारायणस्य जिज्ञासा विधीयत इत्युपपादितं तस्यां च विधीयमानायां जीवात्मनि सामान्यप्रसिद्धिविशेषविप्रतिपत्तिव्युत्पादनस्य का सङ्गतिः । न काऽपि किन्तु भगवतो नारायणस्य जिज्ञास्यत्वार्थं तत्रैव तद्व्युत्पादनं सङ्गतमिति भावः । ननु ब्रह्मजिज्ञासापदेन जीवात्मनो ब्रह्मत्वेन प्रकारेण जिज्ञासा विधीयतेऽतो जीवात्मनो जिज्ञासाधर्मित्वात्तत्र सामान्यप्रतिपत्तिविप्रतिपत्तिव्युत्पादनं सङ्गतमेवेत्याशयेन शङ्कते **जीवात्मन इति** । **नैवमिति** । जीवात्मनो ब्रह्मत्वेन जिज्ञासां सूत्रकारो नाह किन्तु ब्रह्मजिज्ञासेति प्रयुञ्जानो ब्रह्मधर्मिकजिज्ञासामेवाह । किञ्च विशिष्टयोर्बिम्बप्रतिबिम्बयोरभेदाभावेन जीवशब्दितप्रतिबिम्बस्य ब्रह्माभिन्नत्वेन जिज्ञास्यत्वायोगः ।





उत्तरसूत्रे जीवासंभावितजगज्जन्मादिकारणत्वरूपलक्षणोक्त्ययोगश्च । जीवब्रह्मपदाभ्यां चिन्मात्रविवक्षायां तु चिन्मात्रे देहात्मकत्वादिविप्रतिपत्त्यभावेन तद्व्युत्पादनायोग इत्यादिदूषणजातं ग्रन्थविस्तरभयान्न लिख्यत इत्याशयेनाह **अलमिति** । अन्यथाऽश्रुतजीवात्मपदकल्पनं कस्य कथं विचार इति प्रथमाकाङ्क्षितप्रधानधर्मिसमर्पकत्वेन श्रुतस्य ब्रह्मशब्दस्य त्यागश्च स्यादिति भावः ॥ १ - १ - १ ॥ इति जिज्ञासाधिकरणं समाप्तम् ॥

**श्रीनिधि०**— सर्वस्य प्रसिद्धमिति संबन्धः । यदुक्तमिति संबन्धः । **जीवात्मनो ब्रह्मत्वजिज्ञासेति** । एवं च प्रसिद्धिविप्रतिपत्तिव्युत्पादनस्य नानवसर इति भावः ॥

**वा०चं०**— **एतेनेति** । पूर्वोत्तरसूत्रानुसारेण सकलजगज्जन्मादिकारणस्य विष्णोर्ब्रह्मशब्दार्थत्वव्युत्पादनेनेत्यर्थः । **प्रसिद्धं चेदिति** । प्रमाणान्तरप्रसिद्धस्य शास्त्रविषयत्वासंभवादिति भावः । **अप्रसिद्धत्व इति** । सामान्यतोऽप्यज्ञातस्य बुद्ध्यनारूढतया जिज्ञासितुमशक्यत्वादिति भावः । **ब्रह्मशब्दादिति** । वैदिकब्रह्मशब्दस्य निरर्थकत्वायोगात्स्वर्गादिपदवत्कस्यचिदर्थस्य कल्प्यत्वे प्रसिद्धपदसमभिव्याहारेण निगमनिरुक्तव्याकरणाद्यनुसारेण शब्दार्थविषयस्य कल्प्यत्वाद्वृद्ध्यर्थकबृहधातुनिष्पन्नस्य तस्य प्रकरणोपपाद्यताभावेन निरङ्कुशमहत्त्वरूपार्थासिद्धेर्ब्रह्मशब्दादेव तत्सिद्धिरित्याशयः । **सर्वस्यात्मत्वाच्चेति** । सर्वोऽप्यात्मास्तित्वं प्रत्येत्यहमस्मीत्यात्मा च ब्रह्मेति भावः । देहात्मवादीत्यादिपदेनेन्द्रियमनोबुद्धिशून्यविज्ञानसङ्घातात्मत्वादिविप्रतिपत्तिपरिग्रहः । एतेनेति परामर्शीविषयं प्रदर्शयति **ब्रह्मजिज्ञासापदेनेति** ।

**नारायणस्येति** । स विष्णुराह हि तं ब्रह्मेत्याचक्षत इति स्वोपपादितप्रकारेण लब्धस्य सकलजगज्जन्मादिकारणस्येति वक्ष्यमाणसूत्रानुसारेण लब्धस्य ब्रह्मशब्दार्थस्य कथनं **तत्रेति** । तथा चान्यस्य जिज्ञास्यत्वेनान्यत्र प्रसिद्ध्यादिव्युत्पादने वैयधिकरण्यमित्यर्थः । न चात एवात्मैव ब्रह्मेत्युक्तमिति वाच्यम् । उत्तरसूत्रादौ जीवादिव्यावृत्तजगज्जन्मादिकारणत्वोक्त्यादिना जिज्ञास्यस्य पूर्वसूत्रे विष्णुत्वेनोक्तस्य ब्रह्मणो जीवात्मकत्वाशयस्य दुराशामात्रत्वादात्मब्रह्माभेदस्याद्याप्यसिद्धतया ब्रह्मोद्दिश्यात्मभेदविधानाय ब्रह्मण्येव तयोर्वक्तव्यत्वाच्चेति भावः । ननु ब्रह्मजिज्ञासापदस्य न भवदुक्तोऽर्थः किन्तु जीवात्मनो ब्रह्मत्वजिज्ञासेत्येव तथा च नानुपपत्तिरित्याशङ्कते **जीवेति** । लोके निश्चितेन धर्मिणैवानिश्चितेन प्रकारेण विशिष्य विचारपदाप्रयोगात्सूत्रे जीवपदं श्रूयेत । धर्मजिज्ञासेत्यादाविव श्रुतस्य ब्रह्मपदस्य कस्य कथं विचार इति प्रथमाकाङ्क्षितप्रधानधर्मिपरत्वसंभवे तत्त्यागेन तद्विपरीतप्रकारपरत्वे त्वप्रत्ययो वा श्रूयेत । न चैवं श्रूयतेऽपि तु ब्रह्मजिज्ञासेति ब्रह्मण एव धर्मित्वं श्रूयतेऽतो न त्वदुक्तोऽर्थो युक्त इत्याह **नैवमिति** । किञ्चोत्तरसूत्रे सूत्रकारेण जीवादिव्यावृत्तं जगत्कारणत्वं ब्रह्मलक्षणत्वेनोच्यते । त्वत्पक्षेऽपि हि शारीरश्चोभयेऽपि हि भेदेनैनमधीयत इत्यादिना जन्मादिसूत्रोक्तलक्षणस्य जीवे निषेधात् । तच्चास्मदुक्तार्थ एवोपपद्यते । अन्यथा धर्मिण्यतदारोपनिवृत्त्यर्थत्वाल्लक्षणस्योत्तरसूत्रे जीवस्यैव ब्रह्मत्वेन लक्षणं वदेत् । न चैवमुत्तरसूत्रे सूत्रकार उक्तवानित्याह **नैवमिति** । ननु मुक्तोपसृप्यव्यपदेशादित्यादौ भावप्राधान्येन निर्देशो भवद्भिरपि व्याख्यायत एव । तथाऽत्रापि व्याख्याने काऽनुपपत्तिः । उत्तरसूत्रे वक्ष्यमाणं जगत्कारणत्वं तटस्थलक्षणम् ।







आनन्दादि तु स्वरूपलक्षणम्। तच्च न जीवव्यावर्तकमिति न द्वितीयानुपपत्तिरपीत्यत आह **अलमिति**। जीवात्मत्वस्य ब्रह्मणि प्रमाणतो निश्चये तदर्थकतया व्याख्याने शाब्दानुपपत्तेरकिञ्चित्करत्वेऽपि शब्दबलादेव तथा व्याख्याने शाब्दानुपपत्तेर्बाधकत्वेनोच्यमानत्वादुत्तरसूत्रोक्तलक्षणतटस्थत्वनिरासस्य वक्ष्यमाणरीत्या सुलभत्वात्। उक्तवक्ष्यमाणरीत्या जीवब्रह्माभेदस्याप्रामाणिकत्वप्रमाणविरुद्धत्वादेर्निश्चेतुं शक्यत्वाच्चोपरम एवोचितो न तु निर्दलमर्तानरासाय बहुयत्नो युक्त इत्याशयः।

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां वेदव्यासतीर्थपूज्यचरणानां शिष्येण विद्याधीशयतिना विरचितायां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ वाक्यार्थचन्द्रिकायां जिज्ञासासूत्रं समाप्तम्॥

**वा०र०— व्याकरणाद्यनुसारेण चेति**। चशब्दः पूरणीयः। महत्त्वे सङ्कोचं व्यावर्तयितुमुक्तं **प्रकरणेत्यादि**। **आत्मास्तित्वम्** आत्मनः स्वस्यास्तित्वमित्यर्थः। **इन्द्रियमनोबुद्धीति**। आत्मा च शरीरेन्द्रियादीत्येतदधिकरणपूर्वपक्षमूलोक्तरीत्येदमुक्तम्। **लब्धस्येति**। द्वितीयानन्तरं चशब्दो योज्यः। चन्द्रिकानुसारेण **न चात एवात्मैवेत्यादि**। चन्द्रिकानुसारेणाह **लोक इति**। प्रकारान्तरेण व्याचष्टे **किञ्चेति**। इत्यशेषमतिमङ्गलम्॥

जिज्ञासनयवाक्यार्थचन्द्रिका सेविता मया। मदज्ञानतमोनुत्यै गुरुस्वामिप्रसादतः॥

आनन्दाब्धिप्रजातत्रिदशतरुगुरुश्रीनिवासानुजश्री-
विद्याधीशाख्यरत्नाद्भुतविदमृतगोः केशवाचार्यवर्यात्।
रुग्मिण्यार्याप्रजातस्य विबुधनरसिंहस्य गुर्वीयसौध-
व्याख्यापाठादिशोधात्मकविवृतिकृतावन्तमैदाद्यसूत्रम्॥

इति श्रीमत्सकलविद्वद्वृन्दशिखामणिश्रीपांडुरंगकेशवाचार्यवरगुरुश्रीविद्याधीशतीर्थश्रीचरणविरचित-श्रीमन्न्यायसुधापञ्चाधिकरणीविषमपदवाक्यार्थविवरणरूपवाक्यार्थचन्द्रिकायाः व्याख्यापाठादिशोधात्मकविवृतौ पांडुरंगनरसिंहविरचितायां वाक्यार्थरत्नमालाभिधायां जिज्ञासासूत्रं समाप्तम्॥

श्रीस्वामिपादसेवास्तु॥

**स०व्र०— अप्रसिद्धत्वेन जिज्ञासितुं शक्यमिति**। आश्रयस्यैवाज्ञानादिति भावः। **सर्वस्य आत्मत्वाच्चेति**। सर्वस्य पुरुषस्येति शेषः। प्रतीति भाति इत्यपि शेषः। कुत आत्मत्वात्। चेतनस्वरूपत्वादित्यर्थः। तथाच सर्वोऽप्यात्मास्तित्वं प्रत्येति। न कोऽपि नाहमस्मीतीति भावः। तेनेत्युक्तं विवृणोति **ब्रह्मजिज्ञासापदेनेति**। नारायणस्य जिज्ञासानुग्राह्यप्रमाणभूतेन वेदेन सामान्यतः सिद्धावपि नानाविधविप्रतिपत्ति-





कलुषितत्वेन जगत्कारणत्वगुणपूर्णत्वादिनाऽसिद्धतया तथा जिज्ञासाविधानमप्युपपद्यत इत्युपपादितमित्यर्थः । अतः तत्किं ब्रह्मप्रसिद्धं वेत्यादि विकल्पदूषणं नास्माकमिति भावः । **नैवं सूत्रकार आहेति** । यदि जीवात्मनो जिज्ञासां प्रति धर्मित्वं सूत्रकृदभिप्रेतवान् तदा जीवात्मानं धर्मित्वेनोपादद्यात् । नैवं सूत्रकार उपाददादिति भावः । अथवा यदि जीवात्मनो ब्रह्मत्वेन जिज्ञासा सूत्रकारस्याभिप्रेता स्यात् तदोत्तरत्र जीवात्मनो ब्रह्मत्वेन जिज्ञासां कुर्यात् । नैवं सूत्रकारः कृतवानिति यद्ब्रह्मजिज्ञासापदेन सूत्रकारो नैतावन्तमर्थमाह । अस्मदिष्टार्थः सूत्रजिज्ञासा-पदस्य पूर्वोत्तरसूत्रपर्यालोचनादिनोपपादित एवेति भावः ।

**विठ्ठ०— अप्रसिद्धत्व इति** । सर्वथा बुद्धावनारूढस्य विचारासंभवादिति भावः । **ब्रह्मशब्दादिति** । ब्रह्मशब्दार्थतया सिद्धत्वादिति भावः । **सर्वात्मकत्वाच्चेति** । सर्वस्य ब्रह्मात्मकत्वात्तस्य च प्रत्यक्षादिना सिद्धत्वादित्यर्थः । सर्वस्य जीवजातस्यात्मत्वाज्जीवस्य चाहमिति सिद्धत्वादिति वा । एतेनेत्युक्तं विवृणोति **ब्रह्मजिज्ञासापदेनेति** । लोकप्रवादाद्ब्रह्मशब्दादिबलेन वा सामान्यतः प्रतीते ब्रह्मणि सगुणनिर्गुणाल्पगुणत्वादि-नानाविधविप्रतिपत्तेर्भावात् सन्दिग्धत्वेन तस्य सकलजगज्जन्मादिकारणताद्यनन्तकल्याणगुणपूर्णतया सर्ववैलक्षण्येन तत्स्वरूपनिर्धारणाय विचारापरनामकजिज्ञासाविधानमुपपद्यत इति जिज्ञास्योऽयं विधीयत इत्युपपादितमिति भावः । तथापि परोक्तस्य किं दूषणमित्यतः परोक्ता शङ्का तत्समाधानं चायुक्तमित्याह **तत्रेति** । तत्रेत्यसौ वसतीत्यर्थः । जीवादत्यन्तभिन्ने परब्रह्मणि जिज्ञासाविषयतया सिद्धे सतीति यावत् । ननु ब्रह्मजिज्ञासाशब्दस्य जीवात्मनो ब्रह्मत्वेन जिज्ञासेत्यर्थः । एवं च सति जीवात्मनि प्रसिद्धत्वशङ्कायाः विप्रतिपत्तिव्युत्पादनस्य वावसर इति शङ्कते **जीवेति** । **नैवमिति** । जिज्ञासाशब्दो लोके पुरोवृत्तिजिज्ञासेत्यादौ धर्मिण्येव संबन्धे दृष्टः । तथाच यदि जीवस्य ब्रह्मत्वजिज्ञासेत्यर्थः स्यात्तर्हि जीवस्यैव जिज्ञासाविषयत्वे जीवजिज्ञासैव सूत्रकारेण वक्तव्या स्यात् । **नैवं सूत्रकार आह** तेन ज्ञायते न तदुक्तसूत्रार्थ इति । किञ्च धर्मजिज्ञासेत्यादौ विवक्षितस्य धर्मशब्दस्य कस्य विचारः कथं विचार इति आकाङ्क्षायां प्रथमाकाङ्क्षितधर्मिपरत्वमेवोचितं तत्त्यागेन ब्रह्मरूपत्वधर्मपरतया व्याख्याने श्रुतहानमश्रुतकल्पनं च स्यात् । किञ्च तद्धर्मिण्यतदारोपनिवृत्त्यर्थं हि लक्षण-कथनं तथा चोत्तरसूत्रे जीवस्याब्रह्मत्वारोपनिवृत्त्यर्थं ब्रह्मत्वं लक्षणमिति वक्तव्यं स्यात् । न तु जन्मादिकारणत्वं ब्रह्मणो लक्षणमिति न च वाच्यम् । ब्रह्मलक्षणकथनमुखेन ब्रह्माभेदो जीवस्य ज्ञाप्यत इति स्यादेवं यदि जन्मादिकारणत्वं ब्रह्मलक्षणं जीवासाधारणधर्मतया प्रमितं स्यात् । न चैवं प्रत्युत तदनधिकरणतयैव जीवोऽनुभूयते अपि च तत्पक्षे शारीरश्चोभयेऽपि हि भेदेनैनमधीयते प्राणभृच्च इत्यादौ जन्मादिसूत्रोक्तस्य जीवत्वनिषेध एव क्रियते इत्यलम् । तदेवं जीवस्य ब्रह्मत्वेन जिज्ञासेति व्याख्यानं सर्वथानुपपन्नमिति जीवान्यब्रह्मणः जिज्ञास्यतेत्युक्तम् । .................... विस्तृतं चैतच्चन्द्रिकायाम् ।

**चषकः— देहात्मत्वादिविप्रतिपत्तीति** । आदिपदादिन्द्रियाण्येवात्मेत्यादेः संग्रहः । एतेनेत्यत्र प्रकृत्यंशोपात्तं विशदयति **ब्रह्मजिज्ञासेति** ।





**७१७ सु०— तदेवम् अधिकारिविषयप्रयोजनाभिसंबन्धवत्त्वाद् ब्रह्मजिज्ञासा कर्तव्येति आरम्भणीयमिदं शास्त्रम् इति सिद्धम् ॥**

**॥ इति श्रीमन्न्यायसुधायां जिज्ञासाधिकरणं समाप्तम् ॥**

**॥ १-१-१ ॥**

**यादु०—** अधिकरणार्थमुपसंहरति **तदेवमिति**। इति जिज्ञासाधिकरणं समाप्तम् ॥ १-१-१ ॥

**वं०प०— इदं शास्त्रमिति**। जिज्ञासाकरणीभूतन्यायग्रथनात्मकमित्यर्थः ॥ इति जिसाधिकरणम् ॥

**विठ्ठ०—** अधिकरणार्थमुपसंहरति **तदेवमिति** ॥

**चषकः—** अधिकरणार्थं निगमयति **तदेवमिति**।

सौधाध्ययनदुर्बोधगिरः काश्चित्समासतः। कृष्णशर्मा मन्दकृते व्याकृतार्यप्रसत्तितः।

॥ इति श्री जिज्ञासाधिकरणव्याख्या सौधचषकनाम्नी कार्ष्णी समाप्ता ॥

॥ श्रीगुरुराजप्रसीद ॥

*******

इति

**श्रीमद्बादरायणविरचितानां** वेदार्थनिर्णायकानां श्रीमद्ब्रह्मसूत्राणां
**श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य** द्वितीयव्याख्यानस्य **श्रीमदनुव्याख्यानस्य**
**श्रीज्जयतीर्थविरचितायां** विषमपदवाक्यार्थविवृतौ टीकायां **श्रीमन्न्यायसुधायां**
**परिमळाद्युपेतायां**
**प्रथमाध्याये प्रथमपादे** प्रथमं **जिज्ञासाधिकरणं** संपूर्णम्।

अनेन कर्मणा एतद्ग्रन्थप्रतिपाद्यः समस्तगुर्वन्तर्गतभारतीरमणमुख्यप्राणान्तर्गतसीतापतिश्रीमन्मूलरामचन्द्रः प्रीयताम्। प्रीतो भवतु। **श्रीकृष्णार्पणमस्तु**।

कायेन वाचा मनसेन्द्रियैर्वा बुध्याऽत्मना वाऽनुसृतःस्वभावम्।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥

*******





॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयवदनरङ्गविट्ठलात्मकगोपीनाथाय नमः ॥

**श्रीमन्न्यायसुधा-उपन्यासः - श्रीपादराजकृतः**

# वाग्वज्रः

श्रीमन्न्यायसुधाग्रन्थात् क्रियते त्वर्थसङ्ग्रहः ।
वाग्वज्राख्यं महाग्रन्थं निर्मातुं तर्कसङ्ग्रहम् ॥ १ ॥

॥ हरिः ॐ ॥ विवक्षितार्थतत्त्वज्ञानं करणपाटवं विवक्षा चेति त्रयं वक्त्रानुकूल्यं नाम । तत्त्वज्ञानयोग्यता वक्तृप्रीतिविषयता चेति द्वयं श्रोतुः । श्रोतृप्रयोजनोद्देशः प्रसङ्गस्य । एतच्छास्त्रं प्रमाणं अनुकूलवक्त्रादिमत्त्वात् भारतादिवत् । आप्तवाक्यत्वं उपाधिरिति चेत् । न । प्रत्यक्षादौ सत्यपि प्रामाण्ये नास्त्याप्तवाक्यतेति साध्याव्यापकत्वान्नायमुपाधिः स्यात् । साधनावच्छिन्ने पौरुषेयवाक्यत्वावच्छिन्ने वा साध्ये उपाधित्वोपपत्तेरिति चेत् । न, अभिप्रायानवगमात् । न हि वयं वक्त्राद्यानुकूल्येन शास्त्रप्रामाण्यं साक्षात्साधयितुमुद्यताः । किन्तु विमतमाप्तवाक्यं अनुकूलवक्त्रादिमत्त्वात् संप्रतिपन्नवत् । विमतं मीमांसाशास्त्रं प्रमाणं आप्तवाक्यत्वात् संप्रतिपन्नवत् ॥ ननु कोऽयमाप्तो नाम यद्वाक्यत्वं साध्यते । यथादृष्टार्थवादीति चेन्न भ्रान्तिदृष्टार्थवादिन्यपि प्रसङ्गात् । प्रमाणेन यथा दृष्टार्थवादीति चेन्न प्रमादादन्यथाकथकेऽपि प्रसङ्गात् । प्रमाणेन यथा दृष्टं तथा वादीति चेन्न एकदेशे तथावादित्वेऽप्यंशान्तरेऽतथाभूतवादिन्यपि प्रसङ्गात् । यावत्प्रमाणदृष्टं तावतो वक्तेति चेन्न प्रायेणातथाभूतत्वादेव पुरुषाणां तदव्याप्तेः । न हि केनापि यावत्प्रमाणप्रमितं तावदभिधीयते । यावत्प्रमाणदृष्टं तावत एव वक्तेति चेन्न । अज्ञातसन्दिग्धानुवादवाक्यप्रयोक्तुः अनाप्तत्वप्रसङ्गात् । निर्दोषः आप्तः इति चेन्न आप्तानामपि कदाचिद्रागादिदोषसंभवात् । यो यत्र विषये निर्दोषः स तत्राप्तः इति चेत् । यत्तच्छब्दयोर्विशेषविषयत्वेन असाधारण्यादव्याप्तेरिति । मैवम् विवक्षितार्थतत्त्वज्ञानं अविप्रलिप्सा विवक्षा करणपाटवं चेतीयं आप्तिः । तद्वानाप्त इत्यङ्गीकारात् । आप्तत्वाभिमतेऽपि कदाचिदिदं नास्तीति चेन्मा भूत्तदासावनाप्त इत्यङ्गीकारात् । कालादिभेदेनाविरोधात् । एवं सति यो यत्रैवंभूतः स तत्राप्त इत्युक्तं स्यादिति चेत् अस्तु को दोषः । यत्तच्छब्दार्थयोरननुगमः इति चेत् । कोऽयमननुगमो नाम । किं सार्वत्रिकव्यवहारानौपयिकत्वं उतैकस्यानेकवृत्तित्वाभावः । यो यस्य सुतः स तदीयं धनमर्हतीत्यादौ सार्वत्रिकव्यवहारहेतुतोपलंभात् । यथा चाननुगतस्यापि नाव्याप्तिः सार्वत्रिकव्यवहारहेतुता च तथा सामान्यपरीक्षायां प्रतिपादिता । एतेन निर्दोषः प्रमितस्यैव वक्तेति लक्षणद्वयमपि समाहितम् । अतो वक्त्राद्यानुकूल्यवत्ताया आप्तवाक्यतया सुस्थः प्रतिबन्धः । आप्तिमूलं वाक्यं आप्तवाक्यं इति विवक्षितत्वात् । अबोधकं विपरीतबोधकं वा वाक्यमप्रमाणमित्युच्यते । तत्राबोधकं वक्तुरपटुकरणतया भवति । विपरीतबोधकं च विपरीतज्ञानादिना । यद्यद्व्यापकस्य व्यापकं तत्तस्याव्यापकमिति न संभवति । ननु साध्यसाधनयोरास्त्येकदेशानुप्रवेशात् साध्यावैशिष्ट्यं चेति चेन्न तथापि विशिष्टभेदेनादोषत्वात् । अन्यथा





यो धूमवान् असावग्निमानिति व्याप्यव्यापकभावोऽपि न स्यात् विशेष्यांशस्योभयत्रानुप्रवेशात् । कृतकत्वानित्यत्वयोः सत्त्वानुप्रवेशेऽपि परैर्व्याप्यव्यापकभावस्याङ्गीकृतत्वाच्च । यदा तु निर्दोषः प्रमितस्यैव वक्ता आप्तः इत्याश्रितं तदा साध्याविशिष्टतायाः शङ्कैव नास्ति ॥

यद्वक्ष्यति जैमिनिरपि । तत्प्रामाण्यं बादरायणस्यानपेक्षत्वात् ।

विजातीयसंवादो युक्तिसंवादः । सजातीयसंवादस्तु श्रुतिसंवादः । श्रुत्यर्थनिर्णायकग्रन्थस्यैव मीमांसानिर्णायकत्वात् । मीमांसाया युक्त्यनुसन्धानात्मकत्वाच्च । यत् श्रुतिसंवादि तत्प्रमाणम् । यथा मन्वादिवाक्यम् । श्रुतिसंवादि चेदं शास्त्रं तदर्थविचारपरत्वात् । विसंवादे तदनुपपत्तेः । यच्च युक्तिसंवादि तत्प्रमाणम् । यथा धूमवन्तं पर्वतमुद्दिश्य पर्वतोऽयमग्निमानित्युक्तं वाक्यम् । युक्तिसंवादि चेदं मीमांसारूपत्वात् ॥

शारीरकमीमांसेति प्रसिद्धिरस्याः । शारीरकः परमात्मैव । यथोक्तम् । 'शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वरसंज्ञितः' इति । तस्य सकलगुणपूर्णत्वादिमीमांसैव शारीरकमीमांसा ॥

ननु प्रमाणैकत्वानेकत्वयोः प्रमेयतादवस्थ्यात् कथमेतत् । इत्थम् । न हि प्रमाणमात्रं निःशङ्कप्रवृत्तावुपयुज्यते । किं नाम प्रमाणतया प्रमितमेव । तच्च यावद्यावदधिकं प्रमीयते तत्तदनुसारिणीमविशङ्कां क्षिप्रप्रवृत्तिं प्रसूत इत्यनुभवसिद्धम् । ततः प्रमाणमेव स्वकार्यातिशयवशेन अतिशयवदुच्यते । एवं विषयप्रयोजनातिशयवशेनाप्यतिशयो द्रष्टव्यः । सङ्क्षेपविस्तराभ्यां तु कथयन्ति मनीषिणः । बहुवारस्मृतेस्तस्य फलबाहुल्यकारणात् ॥ इति ।

ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥ इति ।

ननु शास्त्रे प्रवृत्तौ प्रयोजनादिनिश्चयो, निश्चिते च प्रयोजनादौ शास्त्रे प्रवृत्तिः इत्यन्योन्याश्रयत्वम् । इति चेत् । उच्यते । त्रिविधा हि पुंसां चित्तवृत्तिः । ज्ञानमिच्छा प्रयत्नश्चेति । तत्र साधनगोचराविच्छाप्रयत्नौ प्रवृत्तिरित्युच्येते । सा च न त्वनुभवो नापि फलगोचरेच्छा । पुरुषार्थसाधने तु इच्छालक्षणा प्रयत्नलक्षणा वा प्रवृत्तिः तथा न स्वरससिद्धा । न हि कश्चित् क्षुत्प्रहाणादिकमननुसन्धाय भोक्तुमिच्छति प्रयतते वा । न च तथा अनुभवः । फलेच्छा वा प्रयोजनानुसन्धाने प्रवर्तते । निष्प्रयोजनस्योपेक्षणीयस्यापि अनुभूयमानत्वात् । न च स्वर्गादिफलाकाङ्क्षारहितेन यागादिकं तत्साधनतया नानुभूयते । नापि सुखं प्रयोजनान्तररहितमिति नेष्यते । किन्तु फलगोचराद्यनुभवश्च स्वरससिद्धः । तस्माद्यो यत्र प्रवर्तनीयः स तत्प्रयोजनादिकं दर्शयित्वेवेति सार्थकं सूत्रे प्रयोजनाद्यभिधानम् ॥

प्रथमसूत्रस्य न शास्त्रबहिर्भावः । अध्ययनविध्यादिवत् अस्याप्यारंभसिद्धेर्नानवस्थ्यादिदोषः ॥





विषयशून्यत्वाद्धि प्रत्यक्षसिद्धस्य न जिज्ञासा क्रियते । प्रयोजनविकलत्वात्खलु सन्दिग्धमपि वायसदशनादिकं न हि जिज्ञास्यते। संबन्धवैधुर्याद्धि सप्रयोजनं सविषयमपि शब्दज्ञानमर्थयमानो न वैद्यके प्रवर्तते। अधिकारिविरहाच्च न मुमुक्षोर्वात्स्यायने प्रवृत्तिः ॥

जीवस्य चाहमिति स्वप्रकाशतया वा स्वप्रकाशज्ञानाश्रयतया वा सिद्धत्वेन न जिज्ञासाविषयत्वम् । अविरुद्धेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः प्रमाकरणस्य प्रमाणस्योपपत्तिरनुग्रहस्तत्करणेनेत्यर्थः । प्रतिबन्धनिवृत्तौ सत्यामेव निर्णयः इति प्रतिबन्धनिरासहेतोरपि विचारस्योपचारेण उपपन्नमीश्वरविषयत्वम् ॥

एतेन एतदपि निरस्तम् । ईश्वरस्य वेदप्रमाणकत्वे तत एव निश्चितत्वात् किं मीमांसयेति । युक्तिवाक्याभासजनितविप्रतिपत्तिप्रतिबन्धस्योक्तत्वात् ।

तत्र तावद् ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति षष्ठीसमासः । षष्ठीसमासेऽपि केचिच्छेषे षष्ठीति प्रतिपन्नाः केचित्कर्मणीति। अत्र चरम एवास्मत्पक्षः। कृत्यानां कर्मणिस्मरणात्। जिज्ञासा खलु कर्मपेक्षा, विना कर्मणा सा तु न ज्ञातुं शक्या ॥ न तु संबन्धिनं विनेति कर्मणः प्राधान्यात्तदेव वक्तव्यम्। संबन्धिसामान्योक्तावपि अर्थात्व र्मापि लभ्यत इति चेत् न । साक्षात्प्रतीतपरित्यागेन अर्थलभ्यस्वीकारस्य वैयर्थ्यात् । एवं सति लक्षणादि जिज्ञासापि प्रतिज्ञाता स्यादिति चेत् न । तस्या विनाप्यभिधानेन लाभात् । न हि लक्षणादिजिज्ञासामन्तरेण ब्रह्मजिज्ञासा अस्ति । अन्यथा अनेकविषयत्वेन शास्त्रभेदप्रसङ्गः । निर्विषयताशङ्कापनोदार्थं प्रयुक्तं पदं कर्माभिधाय्येव युक्तम् । तद्विजिज्ञासस्वेत्यादिश्रुत्यर्थानुगतं चैवं सति सूत्रं स्यात्।

ननु च प्रतिपदविधाना षष्ठी न समस्यत इति कर्मणि षष्ठी समासः प्रतिषिध्यत इति चेत् न। कृद्योगलक्षणा षष्ठी समस्यत इति प्रतिप्रसवात्। ब्रह्मज्ञानोद्देशेन जिज्ञासाविधाने ब्रह्मणो न प्राधान्यभङ्गः।

ननु अथातो धर्मजिज्ञासेति सकलवेदार्थविचारस्य उदितत्वात् ब्रह्मज्ञानस्य चोदनालक्षणस्वरूपत्वात् पृथङ् न जिज्ञास्यं ब्रह्मेति चेन्न। सर्ववेदानामीश्वरैकनिष्ठत्वेन सर्ववेदस्य अत्रैव जिज्ञास्यत्वात्। धर्मजिज्ञासाशास्त्रं तु वेदैकदेशामुख्यार्थधर्मविचाराय प्रवृत्तम् ॥

साधनं च द्विविधम् । सिद्धमसिद्धं च । तत्रासिद्धं उत्पाद्यं फलकामेन । यथा यागादि । सिद्धं तु सव्यापारीकरणीयम् । यथा कुठारादि । सिद्धं च साधनं भगवान् इति मुमुक्षुणा सव्यापारीकरणीयः । व्यापारश्च प्रसन्नतैव । प्रसादो नाम इच्छाविशेषः ॥

न चात्रावयवार्थेन जिज्ञासाशब्दोऽर्थवान्। इच्छायाः स्वातन्त्र्याविषयत्वेन विधातुमशक्यत्वात्। अत एव इष्यमाणज्ञानोपलक्षणाप्ययुक्ता। तस्माज्ज्ञानेच्छान्तर्णीतो विचारो जिज्ञासापदेन लक्ष्यते।





लाक्षणिकप्रयोगे प्रयोजनं च विचारस्य ज्ञानद्वारैव मोक्षसाधनत्वज्ञानम् । अन्यथा योग्यताविरहेण अन्वयाभावप्रसङ्गात् ।

यदि च जिज्ञासाशब्दो मीमांसाशब्दवद्विचार एवोपसङ्ख्यायते तदाप्यन्वयव्यतिरेकाभ्यां विचारस्य ज्ञानसाधनता ज्ञास्यते । एवं च - विचारो यतो ज्ञानसाधनं; ज्ञानं च मोक्षसाधनं; अतोऽसौ कर्तव्य इति ॥

अद्वैतिनामविद्याधीनजीवब्रह्मविभागवत्, गुणवत्त्वाधीनद्रव्यत्ववत् अनादेरपि ईश्वराधीनत्वोपपत्तेः बन्धस्य ।

नन्वनादेः प्रकृतिबन्धस्य कथं निवृत्तिरिति चेत् । अत्राह कश्चित् । न सादित्वमनादित्वं वा विनाशाविनाशयोर्निमित्तम् । किन्तु विरोधिसंपातावसंपातावेव । किञ्च लोके तावदनादिः प्रागभावो निवर्तते । सुगतानां तत्त्वपरिभावनाप्रकर्षेण अनादिवासनानां निवृत्तिरिष्टा । नैयायिकानां अनादिमिथ्याप्रवाहः परमाणुश्यामता च निवर्तते । साङ्ख्यानामप्यविवेको निवर्तते विवेकेन । मीमांसकानां इदानीन्तनधर्मतत्त्वज्ञानप्रागभावोऽनादिर्निवर्तते । अनादिभावरूपस्य न निवृत्तिरिति चेन्न । अनिर्वचनीयत्वादज्ञानस्य । अनादिर्न निवर्तत इति सामान्यव्याप्तिः । ज्ञानेन अज्ञाननिवृत्तिरिति विशेषव्याप्तिः अतः सैव बलवती ।

ननु स्वोपादानगतोत्तरावस्थाविनाशः । तत्कथमनादेर्निरुपादानस्य विनाशः । न । स्वाश्रयगतोत्तरावस्थेत्येतावत्त्वात् । अन्यथा परमाणुश्यामत्वादीनां अनिवृत्तिप्रसङ्गात् । अभाववैलक्षण्यादात्मवदज्ञानस्यानिवृत्तिरिति चेन्न । सद्वैलक्षण्यात् प्रागभाववन्निवृत्तिः किं न स्यात् । कस्तर्हि निर्णयः । ज्ञानाज्ञानकृतो विशेषान्वयः इत्युक्तम् । तथा हि 'विमतो बन्धो न निवर्तते अनादित्वादाकाशवत्' इत्यत्र किं निवर्तकाभाव उपाधिरनेनोच्यते; किंवा निवर्तक सद्भावेन सत्प्रतिपक्षता । नाद्यः साधनव्यापकत्वात् । न द्वितीयः हेतोरसिद्धेः । न ह्यज्ञानस्यानादितया निवृत्त्यनुपपत्तिं ब्रुवाणः तन्निवर्तकमभ्युपैति । किन्त्वनादित्वेनैव तदभावमप्यनुमिनोति । यदि प्रागभावे व्यभिचारोद्भावनं, तद्भावत्वेन हेतुविशेषणाद्युक्तम् । यदपि सुगतानामित्यादि तदत्यन्तमसङ्गतम् । न हि वासनानामनादित्वं वैनाशिका अभ्युपयन्ति । किन्त्वनादित्वेनैव तदभावमप्यनुमिन्वन्ति । न च तद्व्यतिरिक्तं सन्तानं येन तत्र व्यभिचार उद्भाव्येत । न च नैयायिकादयो मिथ्याज्ञानस्य अनादितां तद्व्यतिरिक्तं वा प्रवाहमङ्गीकुर्वते । परमाणुश्यामताऽपि सादिरेव न हि परमाणुपाकस्येदंप्रथमतासिद्धान्तः ।

यदप्यज्ञानस्यानिर्वचनीयत्वमुक्तं, तत्रानिर्वचनीयत्वं सदसद्विलक्षणत्वं चेत् किमनेन प्रकृतानुपयुक्तेन । अज्ञानं निवर्तते सदसद्विलक्षणत्वात् इति प्रतिपक्षोऽयमिति चेन्न । परस्यासिद्धेः अव्याप्तेश्च ॥ भावाभावविलक्षणत्वमनिर्वचनीयत्वम् । अतो भावत्वाभावाद्विशेषणासिद्धिरिति चेन्न । स्वोक्तिविरोधात् । स्वयमेव ह्यनादिभावरूपं यद्विज्ञानेन विलाप्यते इत्यज्ञानलक्षणमभिधाय भावरूपाज्ञानसाधनाय प्रमाणान्युपन्यस्तानि । अभाववैलक्षण्यमात्रं तत्र विवक्षितमिति चेन्न । तस्यैव हेतुविशेषणत्वोपपत्तेः । नन्वत्रोक्तं सदसद्वैलक्षण्यात्प्रागभाववन्निवृत्तिः किं न स्यादिति । सत्यमुक्तम् । दुरुक्तं तत् । प्रागभावस्यापि सत्त्वाङ्गीकारात् ॥





अथ सदसद्विलक्षणत्वं नाम भावविलक्षणत्वं विवक्षितम् । तदाऽभाववैलक्षण्याङ्गीकारविरोधेनासिद्धि-प्रसङ्गः । अत्यन्ताभावे व्यभिचारश्च । तस्यापि निवृत्तिसाधने तन्निवृत्तावेव व्यभिचारः । किञ्चात्मनि भावत्वं नास्तीति तत्रानैकान्त्यं दुष्परिहरम् । तथाप्यारोपितं भावत्वं तत्रास्तीति चेत् । तदविद्यायां समानमित्यसिद्धिः ।

यदपि व्याप्तेः सामान्यविशेषभावकथनं; तस्योपयोगो वक्तव्यः । तेन बलाबलनिर्णय इति चेत् । स किं सामान्यविशेषभावमात्रेण उताव्यभिचारादिसंपत्तौ सत्याम् । आद्ये धूमवानग्निमानिति सामान्यव्याप्तेः पर्वतो निरग्निकः इति विशेषव्याप्तिर्बलवती प्रसज्येत । द्वितीये किं सामान्यविशेषभावेन व्यभिचारादिकमेव व्युत्पाद्यतां; किंवा अनेन प्रबलत्वेन दुर्बलत्वेन च ।। विशेषव्याप्त्या सामान्यव्याप्तिर्बाध्यत इति चेत् । बाध्यत्वं नाम किं व्याप्तेः सङ्कोचनं उत सामान्यव्याप्तेर्व्यभिचारप्रदर्शनम्; अथोपाध्युद्भावनम् । नाद्यः यदनादि तदज्ञानातिरिक्तं न निवर्तत इति सङ्कोचनीयं वा, यदनादित्वरहितं तदेव ज्ञाननिवर्त्यं न त्वनादि इति सङ्कोच्यमेवेत्यत्र नियामकाभावात् ।। न द्वितीयः । व्यभिचारस्थलस्यादर्शितत्वात् ।

व्याप्तिबलेन अज्ञानस्य ज्ञाननिवर्त्यत्वे सिद्धे अनादित्वस्य अत्रैव व्यभिचारः इति चेत्; तर्हि एतदेवोच्यताम्; किं सामान्यविशेषभावेन । किञ्च विमतमज्ञानं ज्ञानेन निवर्तते ज्ञानत्वात् संप्रतिपन्नवदित्यत्र अज्ञानत्वस्य पक्षे व्यभिचारः किं न स्यात् । अनादित्वानुमानेन अज्ञानस्य अनिवर्त्यत्वसिद्धेः । अस्तु तर्हि सत्प्रतिपक्ष एव इति चेत् न; तुल्यबलत्वात् ।

तथा हि शुक्तिकाऽज्ञानवदित्यत्र किं ज्ञानाभावो विवक्षितः, भावरूपमज्ञानं वा । आद्ये दृष्टान्तस्य साधनवैकल्यम् । न हि शब्दसामान्यमात्रेण दृष्टान्तदार्ष्टान्तिकभावोऽस्ति । तथात्वे गोत्वेन वागादीनामपि शृङ्गित्व-साधनप्रसङ्गात् । द्वितीये किं तत् सादि उत अनादि । आद्ये कथमयं विशेषः स्यात् । द्वितीये तदपि पक्षतुल्यम् ।।

न तृतीयः; अज्ञानेतरस्योपाधेः समव्याप्त्यभावात् । पक्षेतरत्वाच्च ।।

यदपि निरुपादानस्य अविनाशानुपपत्तिं आशङ्क्य उक्तम्, 'स्वाश्रयगतोत्तरावस्थाविनाश' इति; तदनुपपन्नम् । अनुपादानभूताश्रयोत्तरावस्था चेदाश्रितविनाशः स्यात्, तदा भूतलादपसारिते घटे घटविनाशः स्यात् । परमाणुश्यामताया इव निरुपादानस्यापि नाशोऽस्ति इति चेत् न; तस्यापि सोपादानत्वात् ।।

ननु अनादेः प्रकृतिबन्धस्य कथं निवृत्तिः इति चेत् अस्य मायावादिनोक्तपरिहारखण्डनत्वात् तत्र स्वसिद्धान्तेन परिहारोऽभिधीयते । अत्रोच्यते । यत्तावदभ्यधायि अनादित्वेन अनिवृत्तिः इति; सोऽयं प्रसङ्गः स्वतन्त्रानुमानं वा । नाद्यः अविद्यानादित्वस्य श्रुतियुक्तिसिद्धत्वेन विपर्ययापर्यवसानात् । न द्वितीयः 'विश्वमायानिवृत्तिः', 'मायामेतां तरन्ति ते' इत्यादिश्रुतिस्मृतिविरुद्धत्वात् । एतेन निवर्तकाभावस्य उपाधित्वं तद्विपर्ययस्य प्रतिपक्षत्वं च समाहितम् ।।





ननु अवयवतत्संयोगविनाशाभ्यां द्रव्यनाशो दृष्टः । तत्कथमत्र विनाश इति चेत् । कुतोऽयमुभयाभ्युपगमः । एकैकपरिहारेणापि विनाशदर्शनादिति चेत् । तर्हि सादेरेवमस्तु । अनादेस्तृतीयोऽपि प्रकारोऽनुसर्तव्यः । प्रमितत्वादेव विनाशस्य । अनादेः कीदृशो विनाशः, इति चेत् । स्वरूपप्रध्वंस एव ॥ स्वोपादानगतोत्तरावस्था सोपादानमात्रत्वापत्तिः इत्यादि तु कार्यविषयम् ।

ननु अविद्या चेन्निवर्तेत तर्हि एकमुक्तौ सर्वमुक्तिः स्यात् । न स्यात् । प्रतिजीवमविद्याङ्गीकारात् । अत्र विशेषः 'स्वगुणाच्छादिका त्वेका' इत्याद्यागमादनुसन्धेयः ॥

परमेश्वरस्वरूपशक्तिरेव जीवस्य आवरणं मुख्यम् । अविद्या तु निमित्तमात्रम् । ततः अविद्यायां निवृत्तायां अपि न अशेषानन्दाभिव्यक्तिः, यावत् ईश्वर एव स्वीयां बन्धकशक्तिं न ततो व्यावर्तयति । अत एव आनन्दह्रासवृद्धी ।

सत्यस्यापि बन्धस्य ज्ञाननिवृत्तौ का अनुपपत्तिः ॥ तथात्वे आत्मनोऽपि निवृत्तिप्रसङ्गः इति चेत्; न, व्याप्त्यभावात्, विपक्षे बाधकाभावाच्च । विरोधिसद्भाव एव निवृत्तौ प्रयोजकः, इति कुतः आत्मनिवृत्तिः ।

ननु ज्ञानेन सत्यं निवर्तमानं किं विषयगतं निवर्तते, उत आश्रयगतं, अथोभयगतम् । नाद्यः; चित्रपटे नीलविशिष्टद्रव्यज्ञाने जाते स्वविषयस्थतत्समवेतरसादेर्वा विरोधिपीतिमादिगुणस्य वा अनिवृत्तेः । न द्वितीयः; पटादिज्ञानेनान्यगतधर्माद्यनिवृत्तेः । न तृतीयः; आत्मनः शरीरविषयज्ञाने शरीरात्मसंबन्धानिवृत्तेः । इति ।

मैवं; यस्य निवृत्तिः श्रूयते तन्निवर्तत इत्युक्तोत्तरत्वात् । यदि ज्ञानं आश्रयगतं निवर्तयेत्तदा धर्मादिकमपि निवर्तयेत् इत्यत्र व्याप्त्यभावात्, विपक्षे बाधकाभावाच्च । घटादिज्ञानं धर्माद्यविरोधि, आत्मयाथात्म्यज्ञानं तु बन्धविरोधीति वैषम्याच्च । आत्मयाथात्म्यज्ञानस्यैव आपादनविषयतायां इष्टापादनम् । चित्रावयविनि नीलरूपविशिष्टद्रव्यज्ञानं तु मिथ्याज्ञानमेव । नापि चित्रे पीतिमगुणोऽस्ति । एकमेव चित्रं नाम रूपं आश्रयव्याप्यवृत्तीति पदार्थविदः ।

अस्तु वा ज्ञानं अज्ञानस्य निवर्तकमपि; तथापि न बन्धमिथ्यात्वसिद्धिः । किन्तु बन्धस्य अज्ञानतत्कार्ययोः अन्यतरत्वं एव सिध्यति । बन्धस्य मिथ्यात्वं तु निराकरिष्यते । किन्तु सत्यस्यापि विषस्य गरुडध्यानेन निवृत्तिदर्शनात् । न बन्धमिथ्यात्वं कल्पनीयम् ॥

विषं न सत्यमिति चेत् । तथा सति नीलविशिष्टद्रव्यादेरपि तव असत्त्वेन तन्निवृत्त्यापादनस्य अनुपपत्तिप्रसङ्गात् ॥ सत्यं तदपि मम मिथ्या । पराङ्गीकारेण तु आपादनं इति चेत् । तर्हि तदेव न ज्ञानान्निवृत्तम् इति न मिथ्याभूतस्यापि ज्ञानान्निवृत्तिः ॥ यद्विरोधिमिथ्याभूतं; तज्ज्ञाननिवर्त्यं इति चेत्; न; विशेषणवैयर्थ्यात् । अविरोधादेव आत्मनोऽनिवृत्तिसंभवात् ॥ मिथ्यात्वं अङ्गीकृत्यापि विरोधोऽङ्गीकार्यः । ततो वरं स एव प्रयोजक इत्यङ्गीकारो; लाघवात् ।





ज्ञानविरोधित्वं मिथ्याभूतस्यैवेति चेत् न । प्रमाणाभावात् । दर्शनात् इति चेत् । तर्हि आगमेन सत्यस्यापि ज्ञानविरोधित्वं श्रूयमाणं कथं निवार्यते ॥ ध्यानं मानसी क्रिया न ज्ञानं इति चेत् यदि क्रिया परिस्पन्दः तर्हि अतीन्द्रियाश्रितः अतीन्द्रिय इत्यपरोक्षावभासविरोधः, परिस्पन्दस्य रूपरहितत्वेन रूपावभासविरोधश्च । यदि च मानसी सृष्टिरिति मतं; अनुमतमेतत्; ''श्रवणदर्शनादिजनितमानसवासनामयस्य वस्तुनो मनसावलोकनं ध्यानं'' इत्यङ्गीकारात् ॥ अतीन्द्रियोपादानकस्यापि द्रव्यस्य ऐन्द्रियकत्वं त्र्यणुकादेरिव उपपद्यते । नीरूपाद्वायोः रूपवतस्तेजसो जन्म वेदान्तिनां प्रसिद्धमेव ।

एवं ध्यायतेः चिन्तार्थताऽपि स्मृतिसिद्धा सिद्धा । अत एव क्रियामानसवदिति सूत्रविरोधोऽपि परिहृतः ।

ज्ञानस्य अबुभुत्सितग्राह्यत्वात्, ध्यानस्य च विधिजन्यपुरुषेच्छाप्रयत्नसापेक्षत्वात्; कथमिदं ज्ञानं; इति चेत्, न । विधेः साध्यसाधनभावमात्रज्ञापनेन चरितार्थत्वात्, इच्छाप्रयत्नयोश्च संस्कारोद्बोधेन कृतार्थत्वात् । मानसवस्त्ववलोकने व्यापाराभावात् । मनोविक्षेपनिरासे वा तदुपयोगः ।

किञ्च सेतुदर्शनात्पापादिनिवृत्तिः सुप्रसिद्धा । मध्ये अदृष्टकल्पनायां तु न प्रमाणमस्ति । अन्यथा प्रकृतेऽप्यदृष्टकल्पनाप्रसङ्गात् ।

अदृष्टसाध्यत्वे मोक्षस्य अनित्यताप्रसक्तिः इति चेत् ज्ञानजन्यत्वेऽपि साम्यात् । ''प्रजया पशुभिर्य एवं वेद'' इत्यादौ दर्शनात् ॥ ज्ञानजन्यत्वेऽपि प्रध्वंसतया नानित्यतेति चेत् । समानमेतददृष्टसाध्यत्वेऽपीति ।

अपि च बन्धविध्वंसलक्षणत्वात् बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते । किन्नाम सत्यत्वमेव । न हि मिथ्याभूतस्य शशविषाणादेः ध्वंसोऽस्ति इति ।

ननु यथा, ''मिथ्याभूतात् शशविषाणादेः व्यावृत्तौ ध्वंसः सत्ये पर्यवस्यति'' इति भवता उच्यते; तथा ''सत्यात् चिदात्मनः अपि व्यावृत्तौ मिथ्याभूते पर्यवस्यति'' इति मया अपि वक्तुं शक्यत एव । सत्यम् । आपाततस्तथा । तथापि सौत्री अर्थापत्तिः सन्देहास्कन्दिता कुण्ठिता एव ॥ अनिर्वाच्यनिरासेन निश्चयोऽपि भविष्यति ।

बन्धबाध एव मुक्तिरिति चेत् । नैवं श्रुतिसूत्रे वदतः । ''तरति शोकम्'' इत्यादौ विपरीताभिधानात् । ''विमुक्तश्च विमुच्यत'' इति श्रुतार्थापत्तिस्तु भाष्यकृतैवान्यत्रोपपादिता ।

किन्तु ब्रह्मज्ञानं जीवगतबन्धनिवर्तकं उत जीवज्ञानम् । नाद्यः अन्यज्ञानेनान्यविषयाज्ञानस्य निवृत्त्यदर्शनात् । न द्वितीयः ब्रह्मजिज्ञासेति तज्ज्ञानस्यैव सूत्रे अभिहितत्वात् ।

किञ्चात्र विचारविषयो ब्रह्म वा जीवो वा । आद्ये जीवस्य सन्दिग्धतासिद्धये बन्धमिथ्यात्ववर्णनासंभवात् । द्वितीये न बन्धमिथ्यात्वापेक्षा मुक्तेः ।





नन्वपेक्षायाः पुरुषधर्मत्वात् कथमेतत्। इत्थम्। प्रतीयमानोऽर्थः अर्थान्तरविषयां पुरुषस्य अपेक्षां उपजनयन् सापेक्षः इत्युपचर्यते।

यद्वा प्रमितस्य अनुपपद्यमानस्य अर्थस्यैव उपपादकाक्षेपशक्तिरपेक्षा अत्र उच्यते। एषा खलु अर्थापत्ति-सामग्री यत् 'आक्षेपकस्य प्रमितत्वं, अनुपपद्यमानत्वं च, आक्षेप्यस्यापि उपपादकत्वं प्रमाणाविरुद्धत्वं च'। अत एव 'अप्रमितत्वं, अनुपपत्त्यभावः, अन्यथाप्युपपत्तिः, प्रमाणविरुद्धार्थत्वं च' इति अर्थापत्तिदूषणानि। अत एव बन्धमिथ्यात्वाभावे अनुपपद्यमाना मुक्तिः तत्कल्पयति इति।

न। बन्धमिथ्यात्वस्य 'अहं कर्ता भोक्ता सुखी दुःखी' इत्यादिप्रत्यक्षविरुद्धत्वेन अर्थापत्त्यविषयत्वात्।

ननु प्रत्यक्षं बन्धस्वरूपमात्रं गोचरयति॥ न तु तस्मिन्मिथ्यात्वाभावं अतोऽर्थापत्तेः कथं प्रत्यक्षविरोधः। मैवम्। प्रत्यक्षं खलु बन्धं गोचरयदस्तीति नास्तीति वा गोचरयेत्। उभयोदासीनस्य ज्ञानस्यादर्शनात्। आद्येऽस्तित्वं मिथ्यात्वाभावश्चेत्यनर्थान्तरमिति कथं न प्रत्यक्षविरोधः। द्वितीयेऽनुभवविरोधः। तद्व्युत्पादनवैयर्थ्यप्रसङ्गश्च। यदि दुःखादेरात्मातिरिक्तस्य मिथ्यात्वं श्रुत्यादिबलेन स्यात्। तर्हि श्रुतेरपि मिथ्यात्वं प्रसज्येतात्मातिरिक्तत्वाविशेषात्। अन्यथा स्वस्मिन्नेव अस्य प्रामाण्यं प्रतिहतमिति न किञ्चिदर्थं प्रतिपादयेत्॥ यदि चेदं वाक्यं मिथ्या स्यात् तथापि न दुःखादेः मिथ्यात्वं प्रतिपादयेत् मिथ्याभूतस्य वन्ध्यासुतवचसः साधकत्वादर्शनात्। अतो बन्धमिथ्यात्वासिद्धिः।

क्रियाज्ञाने प्रति कारकान्तराप्रयोज्यत्वादिलक्षणं कर्तृत्वम्।

ननु भवद्भिरपि शरीरेन्द्रियान्तःकरणविषयाणां दुःखादीनां च आत्मन्यन्यथाध्यासाङ्गीकारात् कथं निरासः। स्वरूपसतामेव तादात्म्यस्वातन्त्र्येण तत्संबन्धित्वाभ्यामारोपः इत्यङ्गीकारात्। तत एव भोक्तृत्वादिव्यवहारोपपत्तिः। न चारोपितत्वेन मिथ्यात्वसिद्धिः। आत्मनोऽपि अन्तःकरणादिषु परेणात्माध्यासः। यथोक्तम्। तच्च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिषु अध्यस्यतीति। चेतनस्याचेतने स्वरूपाध्यासाभावात्। संसृष्टतया अध्यासतन्मात्रेणैव सकललौकिकव्यवहारोपपत्तेः न मिथ्यात्वं इति चेत्। सममचेतनस्यापि।

ननु अहंप्रत्ययस्य आत्मविषयत्वे सुषुप्तावपि अहमुल्लेखः स्यात् इति चेत्। अस्ति सुषुप्तावपि अहमुल्लेखः। कुत एतदवगतमिति चेत्। अहं कर्तेत्युल्लेखविषयो नाहङ्कारः। अहं ब्रह्मास्मीत्यादावपि तथात्वप्रसङ्गात्। निरवद्यस्य ब्रह्मणोऽपि अहमुल्लेखदर्शनात्। "अहं सर्वस्य प्रभवः" इत्यादौ तस्यापि मायावशत्वकल्पने "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति स्मृतिविरोधः।

अहंशब्दो द्विविधः। मकारान्तोऽव्ययरूपः दकारान्तोऽस्मच्छब्दजश्च। तत्राद्यः प्रकृतिपरिणामवाची द्वितीयस्त्वात्मवाची।

नेहनानेत्यादिवाक्यैः किं निश्चिताद्वैतो बोध्यते उत तद्विपरीतः। नाद्यः, वैयर्थ्यात्। द्वितीयस्तु सत्यस्यैव साधकत्वमिति मन्यमानो यदीदं वाक्यं सकलमिथ्यात्वं प्रतिपादयेत्तदा सकलान्तर्गतत्वात् स्वयं





मिथ्या स्यात्। यथा शब्दो अनित्य इति शब्दः। यदि चैतद्वाक्यं मिथ्या स्यात्, न कस्याप्यर्थस्य साधकं स्यात्। इत्यनिष्टप्रसङ्गं पश्यन् कथं त्वदभ्युपगममात्रेण स्वतर्कस्य विरुद्धतां प्रतिपद्यत इति।

ननु वाक्यस्य साधकत्वं नाम पदार्थसंसर्गप्रमितिजनकत्वम्। तत्क्वचित्पददोषेण विहन्यते, क्वचित्सङ्गत्य-ग्रहणात्, क्वापि तद्विस्मरणात्। कदाचिदाकाङ्क्षादिविरहात्, कुत्रचिद्विपरीतप्रतिपादनेन। तदत्रापि नेहनानेत्यादिवाक्ये साधकत्वाभावमापादयता पददोषान्यतममेवोपादेयम्। किं मिथ्यात्वेन। तत्किमविद्यमानस्य अपि वाक्यस्य निर्दोषपदावयवत्वादिकं विद्यत इति वक्तुमुद्यतो भवान्। एवं वदता भवता कस्मिंश्चिद्विप्रतिपन्नेऽर्थे वन्ध्यासुतवचनं प्रमाणयन्तं प्रतिवादिनं प्रति नूनं पददोषादिकमेवोपपाद्य साधकत्वं इष्यते। स्वरूपस्यैवाभावेन असाधकत्वे सिद्धे किं तत्र चरमभाविन्या पददोषादिचिन्तया। न हि शब्दोऽविद्यमानत्वेनैव चाक्षुषत्वस्यानित्यत्वसाधकत्वाभावे सिद्धे व्याप्तिचिन्ता क्रियत इति चेत्। समं प्रकृतेऽपि।

ननु मा भूत्प्रतिवाद्यपेक्षया तर्कस्य विरुद्धता वाद्यपेक्षया तु भविष्यति। मैवम्। श्रुतेः मिथ्यात्वप्रतिपादकत्वे मिथ्याभूतस्यैव साधकत्वप्रतीत्या तद्विरोधेन तर्को निरसनीयः। तन्निरासे च श्रुतेः सर्वमिथ्यात्वप्रतिपादकत्व-मित्यन्योन्याश्रयत्वमनुत्तीर्णः कथमसावपि तर्कस्याविरुद्धतां प्रतिपद्येत॥

अथ मतम्। प्रत्यक्षादिकस्य साधकत्वं तावदनुभवसिद्धम्। तन्मिथ्यात्वं च श्रुतिभिर्निरुक्तिभिश्चाव-गम्यते। मिथ्याभूतस्य साधकमित्येषोऽर्थः कुतः सिद्ध इति मावोचः, प्रमाणद्वयसमाहारात्मकप्रमाणादेवोपपत्तेः। यथैकज्ञानजनितसंस्कारसहकृतस्येतरप्रमाणस्यैव सुरभिचन्दनमितिवद्विशिष्टप्रत्ययजनकत्वसंभवात्।

अथवोभयानुसन्धातुरात्मनो विद्यमानत्वाद् दर्शनस्पर्शनाभ्यामेकार्थग्रहणवद्विशिष्टप्रतिपत्तिर्भविष्यति। अत्र वक्तव्यं यन्मिथ्याभूतस्यासाधकत्वं साधयितुं प्रमाणमुपन्यस्तम्। तन्मिथ्या सद्वा। नाद्यः। मिथ्याभूतस्य साधकत्वानङ्गीकारात्। द्वितीयं सत्प्रमाणं परमात्मरूपमन्यद्वा। आद्ये स्वतः साधकत्वं स्वेनैवाङ्गीकृतं स्यात्। द्वितीये द्वैतभङ्गः।

किञ्च प्रत्यक्षसिद्धस्य मिथ्यात्वं कथं प्रतिपादयेत्। प्रत्यक्षविरोधादिति चेत्। न। श्रुतेरप्रामाण्ये बाधकाभावात् प्रत्यक्षप्रामाण्यम्, तस्मिंश्च सति प्रत्यक्षविरुद्धत्वेन श्रुतेरप्रामाण्यमितीतरेतराश्रयत्वम्। हन्त तवाप्येतदनुसन्धेयम्। श्रुतिप्रामाण्ये तद्विरोधेन प्रत्यक्षाप्रामाण्यम्। ततश्च बाधकाभावेन श्रुतिप्रामाण्यसिद्धिरिति। श्रुतेः प्रबलत्वान्नैवमिति चेत्; न ततोऽपि प्रत्यक्षस्यैव प्राबल्यात्।

ननु मिथ्याभूतोऽपि स्वाप्नोऽर्थः शुभाशुभयोः, रेखारोपितो वर्णोऽर्थस्य, प्रतिबिंबं च बिंबस्य, स्फटिक-लौहित्यं च उपाधिसन्निधानस्य, वर्णदैर्घ्यादिकं च अर्थभेदस्य, सवितृसुषिरप्रभृतिश्च अनिष्टस्य साधक-मुपलब्धमिति, यन्मिथ्या न तत्साधकं, यत्साधकं न तन्मिथ्येति तर्कः प्रशिथिलमूल इति चेत्, उच्यते।





स्वप्रस्तावत् ज्ञानार्थरूपः परमार्थः, रेखापि वर्णे पदमिव, अर्थे सङ्केतिता तं स्मारयतीति न किञ्चिदत्र मिथ्या अस्ति। अत एव रेखामुपलभ्य वर्णं उच्चारयन्ति। प्रतिबिंबस्य तु सत्यता परेणाप्यङ्गीकृता। विच्छेदस्यापि सत्यतां उपपादयिष्यामः। अतो स्फटिकलौहित्यमपि निश्चितमेव, एवं दीर्घादयोऽपि ध्वनिरिव वर्णेष्वपि स्वाभाविका एव। अन्यथा स्वरेष्विव व्यञ्जनेष्वपि ध्वानोपधानवशेन दीर्घादिप्रतिभासप्रसङ्गात्। न तथाविधध्वनिव्यङ्ग्यं व्यञ्जनमिति चेन्न। तथात्वे वर्णेष्वेव विशेषो अङ्गीकार्यः स्यात्। स एव दैर्घ्यादिपदाभिधेयो भविष्यति। सवितृसुशिरप्रभृति-ज्ञानमेव, अरिष्टसूचकम्। ब्रह्मणि नानात्वनिषेधपरं नेहनानेत्यादिवाक्यम्। ननु नानेति नानाभूतः प्रपञ्चो अभिधीयते, न तु भेदः तथात्वे नानात्वमिति स्यात्।

मैवम्। मुक्तोपसृप्यव्यपदेशादित्यादाविव भावप्रधाननिर्देशोपपत्तेः। भवितृप्राधान्येऽपि ब्रह्मणि नानाभूता-वयवगुणकर्मादिनिषेधे नानात्वमेव निषिद्धं भवति। सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः, इति न्यायात् उभयनिषेधे गौरवात्। विशेषणस्य प्रथमप्राप्तत्वात्। विशेषणनिषेधे तात्पर्याभावे, तदुपादानवैयर्थ्यात्। न जीर्ण-मलवद्वासाः स्नातकः स्यादित्यादौ दर्शनाच्च।

अत एवोक्तं— 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति। यत्किचिद्विशिष्टविधिनिषेधाङ्गीकरणं तदगतिकतयैव। कथं ब्रह्मण्यप्राप्तस्य नानात्वस्य निषेध इति चेन्न। आभासप्राप्तत्वात्। एकमेवाद्वितीयमित्यादौ सजातीयविजातीयस्वगतनानात्वनिषेधं व्याकुर्वता भवतापि समाधातव्यमेतत्।

ननु यथा भवतो मिथ्याभूतस्य साधकत्वं न संमतं तथा मम सत्यस्य साधकत्वं न संमतम्। चैतन्यव्यतिरिक्तस्य सत्यतानभ्युपगमात्। चैतन्यस्य च क्रियाविशेषशून्यस्य साधकत्वायोगात्।

एवं च सति मिथ्याभूतस्य साधकत्वं मया नाभ्युपगम्यते मिथ्यात्वं तु त्वयैव नोपेयते। ततश्च प्रथममेव मतिकर्दमे कथारंभणमशक्यमापद्येत। अतोऽविचार्यैव तावत्प्रमाणसदसत्त्वं विचार आरब्धव्य इति। मैवम्। त्वया ज्ञानसिद्धावहमज्ञमामहमन्यं च न जानामीति साक्षिप्रत्यक्षस्य प्रमाणीकृतत्वात्। आश्रयप्रतियोगिज्ञानभूतमपि साक्षिचैतन्यमित्याद्युत्तरवाक्येन प्रत्यक्षस्य साक्षित्वावगमात्। तस्य च सत्त्वात्सतः साधकत्वं वाप्यङ्गीकृतम्। अस्माभिरपि दुःखादिबन्धसत्यतायां साक्षिप्रत्यक्षमेवोपन्यस्तम्। अज्ञानवशादेव साक्षिणः साधकत्वं मया अङ्गीक्रियते न स्वतः इति चेन्न। इतरेतराश्रयप्रसङ्गात्। न खलु साक्ष्यवभासादन्याऽज्ञानसत्ता तवाऽस्ति। ततोऽज्ञाने सति साक्षिणः साधकत्वसिद्धिस्तस्यां चाज्ञानसिद्धिरिति कथं नेतरेतराश्रयत्वम्। द्वयोरनादित्वा-न्नैवमिति चेत्। तर्ह्यज्ञानवशादिति रिक्तं वचः। न हि सर्वथा यद्यन्नापेक्षते तत्तदधीनमिति युज्यते। अपेक्षायां तु परस्पराश्रयानुत्तारः। अङ्गीकृत्य चेदं साक्षिणः साधकत्वमुदितम्। वस्तुतस्तु निर्विशेषस्य न साधकत्वम्। यत्साधकं करणं वा फलं वा नित्यं वा ज्ञानं तत्सर्वं जात्यादिविशेषरहितं नोपलभ्यते। यच्च निर्विशेषं शश-विषाणादि न तत्साधकं इत्यस्माभिरङ्गीकृतत्वात्।





ननु प्रमाणं वस्तुसिद्धावुपयुज्यते । तत्सविशेषत्वं तु किमर्थं इति चेत्सत्यम् । निर्विशेषस्य प्रामाण्यमेव नोपपद्यते इति तदर्थमेव विशेषानुसरणम् । न हि साधकतमत्वादिविशेषाभावे प्रामाण्यं शक्यनिर्वाहम् । साक्षिण्यारोपिततयैवाज्ञानं सिद्ध्यति । न ततो अतिरिक्तं साधकत्वं तस्येति चेत् । न तर्हि सुतरां साक्षिणा अज्ञानसिद्धिः । न हि तमसः प्रकाशाश्रयत्वं तर्हि तत्प्रकाशेन सिद्ध्यति न हि तत्साधनमप्युपपन्नम् । निर्विशेषस्य साधकत्वानभ्युपगमादस्माभिः, अन्यस्य त्वयाऽनभ्युपगमात् ।

किञ्च अज्ञानं आरोपितमपि साक्षिणो विषयो न वा । आद्ये विषयत्वं साक्षिण्यापतितम् । द्वितीये साक्षित्वमेवानुपपन्नम् । साक्षाद्द्रष्टरि संज्ञायामिति निर्वचनासंभवात् । अतद्विषयेण तत्सिद्धिरलौकिकी । अहं च अविशेषस्य साक्षिणः साधकत्वं विप्रतिपत्तौ साधयिष्यामीति । स प्रष्टव्यः । किं सविशेषेण प्रमाणेन एतत्साध्यते उत अविशेषेणेति । नाद्यः तस्य तव मिथ्यात्वात् । परेण च उक्तन्यायेन तस्य साधकत्वाभ्युपगमात् । न द्वितीयः निर्विशेषस्य प्रामाण्यासंमतेः ।

एवं मिथ्याभूतस्य साधकत्वं निर्विशेषेण प्रमाणेन साध्यते उत सविशेषेणेति विकल्प्य निरासः कर्तव्यः । यदि चैतन्यातिरिक्तं मिथ्या स्यात् तदा कथाव्यवहाराङ्गभूतं प्रमाणादिकमपि मिथ्या स्यात् । तथापि मायावादिनो निरुपायस्य कथकता न स्यात् । यस्मादस्ति परस्य वादित्वाभिमानः तस्मात् सत्यं प्रमाणादिकमिति ।

यदत्रैव वक्तव्यं — प्रमाणादीनां सत्त्वं यदभ्युपेयं कथकेन — तत्कस्य हेतोः । किं वाग्व्यवहारमात्रं प्रमाणादिसत्ताऽभ्युपगमव्याप्तं उत साधनबाधनक्षमो व्यवहारः । न प्रथमः तदनभ्युपगच्छतोऽपि चार्वाकमाध्यमिकादेः वाग्विस्ताराणां प्रतीयमानत्वेन व्यभिचारात् । तस्यैवानिष्पत्तौ भवतस्तन्निरासप्रयासानुपपत्तेः । तस्यापि पक्षत्वे बाधः ॥ द्वितीये बाधतादवस्थ्यम् । मम सत्तानभ्युपगमस्य अनुभवसिद्धत्वात् ॥ साधनबाधनक्षमव्यवहारत्वादिहेतुश्च तवासिद्धः, सिद्धत्वे वा सिद्धं मम समीहितम् ।

व्यतिरेके च सद्वचनाभासलक्षणयोगित्वमुपाधिः । प्रयोगस्त्वीदृशः । विमतो व्यवहारो न साधनत्वासाधनत्वक्षमः; प्रमाणादिसत्ताभ्युपगमपूर्वकतारहितत्वात् । यथा चार्वाकादिव्यवहारः अस्य व्यतिरेकः । (यः प्रमाणादिसत्ताभ्युपगमपूर्वको न) व्यवहारस्य साधनक्षमत्वाभावे सद्वचनाभासलक्षणयोगित्वं प्रयोजकम् । न तु सत्तानभ्युपगमः । यतोऽभ्युपगम्यापि प्रमाणादिसत्तां प्रवर्तिताः मतान्तरानुसारिभिः व्यवहाराः अभ्युपगतप्रमाणादिसत्त्वैः मतान्तरानुसारिभिः अपरैः साधनाद्यक्षमा इति कथ्यन्ते ।

ननु यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी कथं साध्येत । दूषणादिव्यवस्था वा कथं स्यात् । सर्वविधिनिषेधादीनां प्रमाणाधीनत्वात् । मैवम् । न ब्रूमो वयं न सन्ति प्रमाणादीनीति स्वीकृत्य कथा आरभ्या इति । किं नाम सन्ति न सन्ति प्रमाणादीनीत्यस्यां चिन्तायां उदासीनैः कथाः प्रवर्त्यन्तामिति ।

किञ्च कीदृशीं मर्यादां अवलंब्य प्रवृत्तायां कथायां इदं दूषणमुक्तं भवता । किं प्रमाणादीनां सत्त्वमभ्युपगम्य उभाभ्यां वादिप्रतिवादिभ्यां प्रवर्तितायां; उत असत्त्वमभ्युपेत्य, अथ एकेन सत्त्वमपरेण चासत्त्वमङ्गीकृत्य । नाद्यः । अभ्युपगतप्रमाणादिसत्त्वं प्रति एतादृक्पर्यनुयोगानवकाशात् । न द्वितीयः स्वस्याप्यापत्तेः । न तृतीयः तथैव कथान्तरप्रसक्तेः । तस्मात्प्रमाणादिसत्त्वाभ्युपगमौदासीन्येन व्यवहारनियमसमयं बद्ध्वा प्रवर्तितायां कथायां भवता इदं दूषणं उक्तमिति वाच्यम् । तथा च व्याघातः ।

न द्वितीयः, स्यादप्येवं यदि कथकप्रवर्तनीयवाग्व्यवहारं प्रति प्रमाणादीनां हेतुता तत्सत्तामनभ्युपगमे निवर्तेत । नत्वेवं संभवति । तथा सति तत्सत्तानभ्युपगन्तॄणां वाग्व्यवहारस्वरूपमेव न निष्पद्येत । हेतोरभावात् ।

अथ मन्यसे कथकवाग्व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां सत्त्वम्, सत्त्वाच्चाभ्युपगमो यत् सत् तदभ्युपगम्यत इतिं स्थितेरिति । मैवम् । कयापि नियमस्थित्या प्रवृत्तायां कथायां कथकवाग्व्यवहारं प्रति हेतुत्वात् । प्रमाणादीनां सत्त्वं सत्त्वाच्चाभ्युपगमो भवता प्रसाध्यः ।

कथातः पूर्वं तु तत्त्वावधारणं वा परपराजयं वाभिलषद्भ्यां कथकाभ्यां यावता विना तदभिलषितं न पर्यवस्यति तावदनुरोद्धव्यम् ॥ तच्च व्यवहारनियमसमयबन्धादेव द्वाभ्यामपि ताभ्यां संभाव्यत इति व्यवहारनियममेव बध्नीतः ॥ स च प्रमाणेन तर्केण च व्यवहर्तव्यमित्यादिरूपः ।

न च प्रमाणादीनां सत्तापीत्थमेव ताभ्यामङ्गीकर्तुमुचिता । तादृशव्यवहारनियममात्रेणैव कथाप्रवृत्त्युपपत्तेः ॥ नापि तृतीयः । लोकव्यवहारोऽपि प्रमाणव्यवहारो वा स्यात् । पामरादिसाधारणव्यवहारो वा ॥

नाद्यः । विचारप्रवृत्तिमन्तरेण तस्य दुर्निरूपत्वात् । तदर्थमेव च पूर्वं नियमस्य गवेषणात् ॥ नापि द्वितीयः । शरीरात्मत्वादीनामपि तथा सति भवता स्वीकर्तव्यतापातात् । पश्चात्तद्विचारबाध्यतया नाभ्युपेयत इति चेत् तर्हि प्रमाणादिसत्तापि यदि विचारबाध्या भविष्यति तदा नाभ्युपेयैव । अन्यथा तूपगन्तव्येति । न चतुर्थः । तत्त्वनिर्णयातिप्रसङ्गस्य सत्ताङ्गीकारेऽपि मया वक्तुं शक्यत्वात् । इति पूर्वपक्षः ॥

यत्तावद्व्यवहारमात्रस्य प्रमाणादिसत्ताभ्युपगमव्याप्तत्वपक्षे दूषणमुक्तम् । तदसत् । यदि खल्वेवमस्माभिः साध्येत । मायावादी प्रमाणादिसत्ताभ्युपगमवान् । व्यवहर्तृत्वात् । तद्व्यवहारो वा प्रमाणादिसत्ताभ्युपगमपुरःसरो व्यवहारत्वात्तत्त्ववादिवत्तद्व्यवहारवच्चेति । तदा स्यादेव व्यभिचारादिदोषः । को नाम स्वस्वात्मा एवमनुमिमीते । यदि प्रमाणादीनि सन्ति न स्युः तर्हि साधकानि न स्युः । असतः साधकत्वानुपपत्तेः तेषां चासाधकत्वे तत्काया व्यवहारो न निष्पद्येत । तथा च वादिता न स्यात् । अस्ति चेयम् । तस्माद्धेतूनां प्रमाणादीनां सत्ताभ्युपगन्तव्येत्याचार्येण प्रसङ्गत्वेनाभिमतत्वात् । व्यभिचारस्थलस्य च प्रसङ्गविषयतुल्यता अङ्गीकृता ।

बाधस्तु प्रसङ्गस्यालङ्कार एव । अत एव द्वितीयोऽपि निरस्तः । तथा न साधनात् । किञ्चायमुपाधिः न साधनाद्भिद्यते । यदा हि प्रमाणादिसत्ता नाभ्युपगता तदा तदसत्त्वमेवाङ्गीकृतमिति स्वरूपासिद्धत्वम् । तच्च सद्वचनाभासलक्षणविशेष एव । यदुक्तं न ब्रूमो वयमित्यादि । दुरुक्तम् । सत्त्वासत्त्वे विहाय प्रमाणस्वरूपस्य बुद्धावारोपयितुं अशक्यत्वेनोदासीनस्य तत्स्वीकारानुपपत्तेः । एवं च वदता यदनिर्वचनीयत्वमभिप्रेतं तदग्रे निराकरिष्यते । यदप्यत्रोक्तं कीदृशीं मर्यादामित्यादि ।

तत्र तृतीयपक्षमङ्गीकुर्मः । न चोक्तदोषः । न हि वयं प्रमाणादिसत्ताभ्युपगमं कथाप्रवृत्तिकारणतया अवश्यं ततः पूर्वभाविनं ब्रूमः । किं नाम यो यथा कथञ्चित्कथायां प्रवृत्तः तं प्रति प्रमाणादि सत्तानङ्गीकारे कथानुत्पत्तिप्रसङ्गदण्डं प्रदर्श्य तत्कारणानां प्रमाणादीनां सत्तामङ्गीकारयामः । न चैवं कथान्तरप्रसक्त्यादिदोषः । प्रमाणादिसत्तानभ्युपगमे कथाया एव अनिष्पत्तेः।

एतेन शिष्यज्ञापनमपि समाहितम् । प्रतिवादिनः कथाप्रवेशमभ्युपगम्य तत्र प्रवृत्तं प्रति प्रमितकथा-कार्यबलेन करणप्रमाणादिसत्तायाः अभ्युपगमस्योक्तत्वात् । द्वितीयपक्षोक्तदोषोऽप्यसङ्गत एव । न हि वयं प्रमाणादिसत्ताऽभ्युपगममपि कथकप्रवर्तनीयवाग्व्यवहारकारणकोटौ निवेशयामः । येन तत्सत्ताऽनभ्युपगन्तॄणां वाग्व्यवहारस्वरूपं न निष्पद्येतेति प्रसङ्गः स्यात् । अपि तर्हि प्रमाणादीनामेव कथा कारणता । सा च सत्त्वाभावे नोपपद्यत इति । तत्सत्त्वं अङ्गीकरणीयमिति वदामः।

यत्पुनः कथकवाग्व्यवहारं प्रतीत्याद्याशङ्क्योक्तम् । एवं वदता कथाप्रवृत्त्युत्तरकालं प्रमाणादिसत्ता अङ्गीकारयितव्या । तथा च कथाफलस्य प्रमाणादिसत्ताऽभ्युपगमस्य न कथाकारणत्वं किन्तु प्रमाणैर्व्यवहर्तव्य-मित्यादिव्यवहारनियमस्यैवेति तदस्माभिरभ्युपगतमेव।

यत्तु सत्ताभ्युपगममपि कथाकारणं ब्रूते स एवैवं पर्यनुयोज्यः।

यत्पुनः न च प्रमाणादीनां इत्यादिना कल्पनागौरवमवादि तत्र किं प्रमाणादिसत्त्वाभ्युपगमे कल्पनागौरवमुत तत्सत्ताभ्युपगमस्य कारणकोटिनिवेशने । नाद्यः कारणत्वान्यथानुपपत्त्या तत्सत्तायाः प्रमितत्वात् । प्रमितस्य परीक्षकैरङ्गीकरणीयत्वात् । द्वितीये तु संवाद एव । तृतीयेऽपि आद्यं तावदङ्गीकुर्मः । तत्रोक्तं दूषितप्रायम् । द्वितीयाङ्गीकारेऽपि न दोषः।

देहात्मत्वादिकं तु पश्चाद्विचारबाध्यतया नाभ्युपगम्यत इति।

यदत्रोक्तम् प्रमाणादिसत्तापीत्यादि तेन किमुक्तं भवति । किं विचारसाध्यः प्रमाणादिसत्ताभ्युपगमो न विचारप्रवृत्तेः कारणम् इति; किंवा विचाराबाध्यतया एव प्रमाणादिसत्ताभ्युपगमप्रयोजकत्वेन





व्यवहारस्याप्रयोजकत्वमिति । आद्ये संप्रतिपत्तिः । न द्वितीयः औत्सर्गिकं प्रामाण्यं बाधकादपोद्यत इत्यत्र दर्शने तस्यैव प्रयोजकत्वात् ।

चतुर्थपक्षोक्तदोषोऽप्यनेनैव परिहृतः । नहि वयं प्रमाणादिसत्ताभ्युपगमं कथाफलनिष्पत्तिहेतुं ब्रूमः । किन्तु प्रमाणादीन्येव । तेषां च तद्धेतुता नासतामुपपद्यत इति तत्सत्ता अवश्यमभ्युपगमनीयेति ।

स्यादेतत् । नियतवाग्व्यवहारक्रियासंबन्धेन कथां प्रवर्तयतापि व्यवहारस्य सत्ता अभ्युपगन्तव्या ।

न हि सत्तामनभ्युपगम्य व्यवहारक्रियाभिधातुं शक्या ।

क्रिया हि निष्पादना, असतः सद्रूपताप्रापणमिति यावत् ।

प्रमाणैर्व्यवहर्तव्यमिति च नियमबन्धनं प्रमाणकरणभावस्य नियमान्तर्भावात् नियतपूर्वसत्त्वरूपं कारणत्वं प्रमाणानामनादाय न पर्यवस्यति ।

दूषणानां चास्तित्वेन भङ्गावधारणनियमबन्धने, साधनाङ्गानां चाव्याप्त्यादीनां सत्त्वेन तद्विषयस्य तत्त्वरूपता व्यवहारनियमादौ च कण्ठोक्त्यैव तस्य तस्य सत्त्वमङ्गीकृतमिति रिक्तमिदमुच्यते । प्रमाणादीनां सत्तामात्रमनभ्युपगम्य कथारम्भः शक्यत इत्येवमाशङ्क्य यदुक्तम्—

एभिरपि बाधकैः कथायामारब्धायामभिमतस्य प्रसाधनीयत्वे, न पूर्वोक्तबाधाया अनिस्तारः स्यादिति, तदप्यनेनैव परिहृतम् । कथास्वरूपफलनिष्पत्तये स्वेच्छया स्वीकृतस्यैव व्यवहारनियमस्य प्रमाणादिसत्तास्वीकार एव पर्यवसानमिति । कथायां प्रवृत्तं स्वव्याघातमप्यचेतयन्तं प्रत्यस्माभिः उच्यमानत्वात् ।

ननु कथादेः कार्यस्य सत्त्वे कथञ्चित्कारणस्य प्रमाणादेः सत्त्वमङ्गीकरणीयं स्यात् । कार्यस्यैव सत्त्वाभावे किं कारणसत्तयेति चेत्, कुतः प्रमाणात् कथादिसत्ताभावो भवता निश्चितः, श्रुत्यादेरिति चेन्न, तस्यैव अनेकातिप्रसङ्गगहनप्रविष्टत्वात् । तथा च सिद्धे तत्प्रामाण्ये कथादिकार्यसत्त्वसिद्धिः, ततः अन्यथासिध्या तर्कस्याभासतासिद्धिः, तस्यां च श्रुत्यादिप्रामाण्यसिद्धिरिति चक्रकापत्त्या नैकस्यापि सिद्धिः असतः कारणत्वं तु सूत्रकृतैव निराकरिष्यत इति ।

प्रमाणादेः व्यावहारिकसत्त्वमङ्गीक्रियत इति चेत्, किं व्यावहारिकसत्त्वं सद्वा असद्वा । आद्ये सिद्धमस्मत्समीहितम् । द्वितीये सत्त्वाभावे साधकत्वं न स्यादिति प्रसङ्गस्य तदवस्थत्वम् ।

ननु द्विविधं सत्, मुख्यं, अमुख्यं च, यत्सर्वथा अबाधितं तन्मुख्यं, यद्बाधितं तदमुख्यं, तच्च द्विविधं, मायोपाधिकं अविद्योपाधिकं च । तत्राद्यं, अंबरादिकं, तच्च आब्रह्मज्ञानाद्बाधविरहात् व्यावहारिकमिति गीयते । द्वितीयं शुक्तिरजतादि, तत्तु प्रतीतिसमयमात्रपरिवर्ति न पुनर्हानादिहेतुरिति प्रातीतिकमुच्यते ।





अत्रेदं वक्तव्यम् । किं परमार्थसदेव सत् असच्च बाधकभेदेन द्विविधमिति सत्त्रैविध्यम् उत सत्येवावान्तरभेदेन । आद्ये प्रागुक्तदोषानिस्तारः । न हि सदितिज्ञानमात्रेण असदर्थक्रियार्हं येन तथाविधं प्रमाणादिकथाङ्गतां गच्छेत् । तथात्वे विषमपि पीयूषतया अवगतं तदर्थक्रियां कुर्यात् । बाधविलम्बस्त्वप्रयोजकः । अर्थतादवस्थ्यानिवृत्तेः । एवं ज्ञानसत्यतापि शुक्तिरजतादेरपि रजतोचितार्थक्रियाकारित्वप्रसङ्गात् । अर्थक्रियाप्यसतीति चेतरेतराश्रयादिना निरस्तम् ।

सतोऽर्थक्रियासंभवादसत्येव कथञ्चित्सा अङ्गीकार्येति चेत् श्रुतिप्रामाण्यनिश्चयोत्तरकालमेवैतत् । प्राक्तन्निश्चयात्परमार्थसत एवार्थक्रियेति मन्यमानः प्रतिवादी कथं बोधनीयः । श्रुतेः प्रामाण्ये सिद्धे असतः अर्थक्रियाकारित्वं, तस्मिन्सति प्रामाण्यमिति ।

द्वितीये पृच्छामः । सत्त्रैविध्यं केन मानेन सिद्धं किं परमार्थसता वा, व्यावहारिकसता वा, प्रातिभासिकसता वा । आद्येऽपि किमात्मेतरेणोतात्मनेत्यर्थः ।

नाद्यः, द्वैतापत्तेः । न द्वितीयः अविशेषस्य तस्य साधकत्वायोगात् । नापि द्वितीयतृतीयौ, व्यवहारप्रातीतिकयोस्तु स्वरूपमेवाद्याप्यसिद्धेः । नामुख्यं सदसन्नापि सत् । येनोक्तदोषप्रसङ्गः । किन्तु अनिर्वचनीयं, तच्च सदसद्विलक्षणमित्यपि न ।

तथाहि विश्वस्य सदसद्वैलक्षण्यं, किं सता प्रमाणेन साध्यते । उतासता । अथ सदसद्विलक्षणेन, नाद्यः, वादिनोऽनुपपत्तेः, न द्वितीयतृतीयौ । प्रतिवादिनोऽसंप्रतिपत्तेरिति ।

नन्वत्र सदसद्वैलक्षण्यसाधकत्वं न स्यादिति प्रसङ्गो वाच्यः, । न च तत्र व्याप्तिः । मैवं; साक्षिणि व्याप्त्यवधारणोपपत्तेः सत्त्वाभावे साधकत्वं न स्यादिति वा प्रसङ्गं वक्ष्यामः । तत्रासत्त्वमुपाधिरिति चेन्न । तस्य सत्त्वाभावानतिरेकात् । तद्भङ्गस्य च प्रागनिर्वचनीयसिद्धेरशक्यत्वात् । एतेन सद्विलक्षणत्वात् मिथ्यात्वोपपादनं असद्विलक्षणत्वात्साधकत्वं चोपपन्नमिति निरस्तम् । सद्वैलक्षण्येऽसत्त्वापत्त्या साधकत्वाभावस्यासद्वैलक्षण्ये च सत्त्वापातेन मिथ्यात्वोपपादनस्यासंभवस्यापत्तेः । प्रागनिर्वाच्यसिद्धेः व्याप्तिद्वयनिरासायोगात् । असद्वैलक्षण्यमात्रेण हानादिव्यवहारोपपत्तौ शुक्तिरजतादावपि तत्प्रसङ्गः । विवादपदं सदसद्विलक्षणं ज्ञानबाध्यत्वाद्यदेवं तदेवं यथा शुक्तिरजतमित्यनुमानं मानमिति चेत् । किमत्र सदसच्छब्दौ भावाभाववाचिनौ । किंवा विद्यमानाविद्यमानवाचिनौ । नाद्यः सिद्धसाधनत्वात् । भावात्मकस्य विश्वस्य भावान्तरवैलक्षण्याङ्गीकारेण भाववैलक्षण्यात् । अभावस्य च अभावान्तरवैलक्षण्याङ्गीकारेण भाववैलक्षण्यात् । अभावस्य च अभावान्तरवैलक्षण्याङ्गीकारात् । यदि च प्रत्येकं भावाभाववैलक्षण्यं विवक्षितं तथाप्युक्त एव दोषः भावात्मकस्य विश्वस्य भावान्तरवैलक्षण्याङ्गीकारात् । अभावादपि वैलक्षण्याङ्गीकारात् भावाभाववैलक्षण्यम् । एवम् अभावात्मकस्य विश्वस्य भावादभावान्तराच्च वैलक्षण्यमस्त्येव ।

भावाभाववैलक्षण्यं नाम तत्त्वानधिकरणत्वं विवक्षितमिति चेत्। भावस्याभावत्वानधिकरणत्वम्। अभावस्य च भावत्वानधिकरणत्वात्सिद्धसाधनम्। प्रत्येकं भावत्वानधिकरणत्वं विवक्षितमिति चेत्। तथापि भावस्य विश्वस्य भावत्वैकाश्रयत्वेन उभयधर्माश्रयत्वानङ्गीकारात्। अभावस्य चाभावत्वैकाधिकरणत्वादुभयरूपतानङ्गीकारात्॥ ४॥

अथैकस्य वस्तुनो भावत्वानाधिकरणत्वराहित्यं साध्यमिति चेन्न। भावस्य अभावत्वानधिकरणस्याभावस्य भावत्वानधिकरणत्ववत्सिद्धत्वादंशे सिद्धसाधनत्वम्। उभयसाधनाददोष इति चेत्, न, न हि असिद्धसन्निधानेन सिद्धमसिद्धं भवति। विशिष्टसाधनेनैवमिति चेन्न। तथापि वैयर्थ्यानिस्तारात्॥ ५॥

अथ भावाभिमते भावत्वानधिकरणत्वं अभावाभिमते च अभावत्वानधिकरणत्वं साध्यत इति चेन्न। अनेकेषां भावत्वानामङ्गीकृतत्वादनुगतस्य चानङ्गीकारात्। तथा चान्यगतभावस्य भावान्तरेऽभावात् सिद्ध-साधनमेव। एवमभावेऽप्यभावत्वान्तरस्याभावात्सिद्धमेव॥ ६॥

अथ भावाभावाभिमतयोः सर्वथा भावाभावत्वे न स्त इत्यर्थो विवक्षितः, अत्र वक्तव्यं, यदि प्रागभावादिकं पक्षीकृत्याभावत्वानधिकरणत्वं साध्यते। तदा तस्य भावत्वं प्रतिज्ञातं स्यात्। भावस्यैवाभावत्वानधिकरण-नियमात्। द्वौ नञौ हि प्रकृतमर्थं सातिशयं गमयतः। एवं वियदादिकं पक्षीकृत्य भावत्वानधिकरणत्वे साध्यमाने तस्याभावत्वं प्रतिज्ञातं स्यात्। अभावस्यैव भावत्वानधिकरणत्वनियमात्। भावनिषेध एव ह्यभावः, तथाच विश्वस्य भावविभागस्य च परेणाभ्युपगतत्वात्। न ममानिष्टं किञ्चित्, किन्तु भावाभावव्यतिकरमात्रम्। तत्साधनं च प्रकृतानुपयुक्तमिति॥ ७॥

भावाभावाभिमतयोरभावभावत्वानधिकरणत्वे वादिप्रतिवादिसंमते भावाभावत्वानधिकरणत्वमप्यधिकं साध्यते। इति चेन्न। प्रमितपरित्यागायोगात्। साधनीयस्य प्रमाणबाधितत्वात्॥ ८॥

द्वितीयेऽप्युत्तरमूहनीयम्॥

किञ्च, न सत्त्वं नामैकमनुगतं, किन्तु प्रतिवस्तु सत्त्वानि भिद्यन्ते। तत्र वियदादेरसद्वैलक्षण्ये सति सत्त्वानधिकरणत्वं, साध्यमानं किमेकसत्त्वानधिकरणत्वं, उतानेकसत्त्वानधिकरणत्वं, अथ सर्वसत्त्वानधिकरणत्वं, किंवाऽविशेषितसत्त्वानधिकरणत्वम्, अथवा सर्वथा सत्त्वानधिकरणत्वं विवक्षितम्।

नाद्यः विश्वस्य सतोऽपि सत्त्वान्तराधिकरणत्वाङ्गीकारात्। अत एव न चतुर्थः। न द्वितीयतृतीयौ, भेदवादिनैकैकस्यार्थस्यानेकसर्वसत्तास्वीकारात्। न पञ्चमः, सदसत्त्वापत्त्या सिद्धसाधनत्वात्। मया ह्येकस्यैव सदसत्त्वमङ्गीकृतं, स्वोपाधौ प्रतिषेधाप्रतियोगित्वात्। परोपाधौ च तत्प्रतियोगित्वात्। द्वयोरपि सर्वथा प्रतिषेधात् कथं सदसत्त्वप्रसङ्ग इति चेन्न। व्याहतत्वात्प्रतिज्ञायाः प्रपञ्चस्य सदसद्विलक्षणासिद्धिः। अस्मादेव हेतोस्तत्सिद्धि-र्भविष्यतीति चेत्, तर्हि मे माता वन्ध्येति प्रतिज्ञा कुतो विप्रतिषिद्धा। वक्ष्यमाणहेतुनैव प्रतिज्ञार्थसिद्धेः तत्रापि सुवचत्वात्। संभावितः प्रतिज्ञाया अर्थः साध्येत हेतुनेति न्यायात्। तत्र हेत्वाकाङ्क्षैव नास्तीति चेत्, समं प्रकृतेऽपि।





किञ्च सत्त्वानाधारत्वप्रतिज्ञा साक्षिप्रत्यक्षबाधिता । साक्षिणा विश्वस्य सत्त्वग्रहणात् । अन्यसत्त्वानधिकरणत्वे साध्ये सतां भेदः सिद्धः । अनेकसत्त्वनिषेधे एकस्य सत्त्वस्य स्वतःसिद्धेश्च । सन्त्येवानेकानि सन्ति पारमार्थिकं त्वेकमेवेति चेन्न । तत्सिद्ध्यर्थमेवाद्यापि भवता प्रयतनात् । चतुर्थे दूषणान्तरमाह । यतस्त्वया ब्रह्मण्यपि विवक्षितविशेषं सत्त्वमङ्गीक्रियते । अतस्तदनधिकरणत्वस्य साधने सिद्धसाधनं स्यात् । ब्रह्मगतसत्त्वस्य प्रपञ्चे अनङ्गीकारात् । तत्साधने अर्थान्तरतेति ।

किमिदं सत्त्वं नाम यदनधिकरणत्वं विश्वस्य साध्यते किं सामान्यसत्त्वं, उत स्वरूपसत्त्वं आद्येऽपि किं सामान्यसत्तामङ्गीकृत्य तदनधिकरणत्वं साध्यते, अनङ्गीकृत्य वा । आद्ये सतां भेदसिद्धिः । द्वितीये तदनधिकरणप्रतिज्ञा व्यर्था स्यात् । येनेदं शशविषाणाधिकरणवत् । न द्वितीयः सतां भेदसिद्धिः । नह्येकाश्रयं सामान्यमस्ति । द्वितीयं दूषयति । स्वरूपसत्त्वं यतोऽङ्गीकृतं ब्रह्मणस्तद्वैलक्षण्यं अब्रह्मत्वमपि विश्वस्य नो भवेदिति । अथवा सामान्यसत्तापक्षे दोषान्तरमनेनोच्यते । तथा हि सत्तासामान्यविधुरस्यापि ब्रह्मणः स्वरूपसत्त्वं तावदस्ति । न पुनः सत्तावैधुर्यात् ।

असदनिर्वाच्यं वा ब्रह्म । तस्मात्सत्तावैधुर्यस्यासत्त्वाद्यहेतुत्वात् । तत्सत्तानधिकरणत्वसाधनं नानिष्टम् । अर्थक्रियाकारित्वं ज्ञानाबाध्यत्वं वा सत्त्वमिति पक्षद्वयं स्फुटदोषत्वान्न दूषितम् । अर्थक्रियावैधुर्यसाधने हि बाधः स्फुट एव । परमार्थतो नास्तीत्यप्युक्तोत्तरम् । सत्यस्य नार्थक्रियेति वदता मिथ्याभूतस्यैवार्थक्रियाकारित्वमङ्गीक्रियेतेति सिद्धान्तविरोधश्च । अर्थक्रियाविधुरस्यापि ब्रह्मणः सत्त्वात्तद्वैधुर्यं नासत्त्वादिहेतुः । अर्थक्रियानधिकरणमात्रसाधनं प्रकृतानुपयुक्तं तद्विरुद्धं च । ज्ञानाबाध्यत्ववैधुर्यं च तद्बाध्यत्वमेव । तच्च हेत्वर्थान्न भिद्यत इति साध्याविशिष्टता ।

यस्त्वया सच्छब्दार्थतया अङ्गीकृतः स एवास्माकमित्यतीव मन्दम् । मया हि क्वचित् सदिति भावो व्यवह्रियते । क्वचिच्च प्रतिपन्नोपाधौ निषेधाप्रतियोगि । क्वापि मूर्तमित्यादि तत्सर्वं च निरस्तमिति ।

हेतुमपाकरोति । तथा हि– ज्ञानबाध्यत्वं हि ज्ञाननिवर्त्यत्वं वा प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं वा हेतुत्वेन परस्याभिमतम् । न च प्रतिवादिनो मम सिद्धम् । अतो अन्यतरासिद्धो हेतुः ।

अज्ञानस्य स्वकार्येण वर्तमानेन प्रविलीनेन वा सह ज्ञानेन निवृत्तिर्बाधः इति हि तन्मतम् । न चाऽयं प्रपञ्चे अस्माकं संमतः । किन्तु मुद्गरप्रहारादिना घटस्येव ईश्वरज्ञानेच्छाप्रयत्नव्यापारैः विनाश एव । स एव हेतुरस्तु इति चेन्न । तथाविधमपि ज्ञानबाध्यत्वं पक्षैकदेशे प्रकृत्यादौ न सिद्धं प्रतिवादिन इति भागासिद्धत्वात् ।

किञ्च सत्यस्यापि ज्ञानविनाश्यत्वे बाधकाभावात् । अप्रयोजकत्वं च हेतोः । अतो व्याप्यत्वासिद्धिः । सतो विनाशे चैतन्यस्यापि विनाशप्रसङ्ग इति चेत् । तर्हि विनाशमात्रस्य साध्यप्रयोजकत्वेन ज्ञानबाध्यत्वं व्यर्थविशेषणासिद्धमपि स्यात् । सत्त्वसाम्येऽपि विनाशकारणसदसद्भावेन विशेषोपपत्तेश्च ।

अस्मद्रीत्या अन्यथाविज्ञातस्य सम्यग्विज्ञातत्वं चेदात्मनि व्यभिचारः । शुक्तिरजतादेरनिर्वचनीयत्वं प्रतिवादिनो ममाऽपि सिद्धम् । मया असत्त्वेनाङ्गीकृतत्वात् । अत एव ज्ञानबाध्यत्वं मम तत्रासंमतम् । तद्धि ज्ञाननिवर्त्यत्वं परस्याभिमतम् । न चासतस्तत्संभवति ।

तस्य नित्यनिवृत्तत्वात् । अतः साध्यसाधनविकलोऽयं दृष्टान्ताभासः ।

केचिन्नेदं रजतमिति ह्यध्यस्तवस्त्वभावबोधो बाधमाहुः ॥ अपरे तु शुक्तिरियमिति विरोधिभावान्तरज्ञानम् । तदुभयं प्रत्येकमव्यापकं शब्दादौ द्वयोरपि बाधत्वप्रसिद्धेः ॥ तस्मादुभयानुगतं लक्षणमुच्यते - अन्यथाविज्ञातस्य सम्यग्विज्ञानं बाधत इति ।

रजतत्वादिना विज्ञातस्य पुरोवर्तिनः शुक्तित्वादिना विज्ञानं खल्वन्यथाविज्ञातस्य सम्यग्विज्ञानम् । एवं असतोऽरजतस्य सत्त्वादिनाऽवगतस्यासत्त्वादिना विज्ञानमप्यन्यथाविज्ञातस्य सम्यग्विज्ञानम् ।

सम्यग्विज्ञानं बाधः इत्येवोक्ते अतिप्रसङ्गः । तन्निवृत्यर्थं अन्यथाज्ञातस्येत्युक्तम् ।

अन्यथाविज्ञातस्य ज्ञानमित्येवोक्ते धारावाहिकविभ्रमे रजतत्वेनावगतस्य शुक्तिशकलस्य पुनर्नागवङ्गत्वादिज्ञानेऽपि प्रसङ्गः तन्निरासाय सम्यगित्युक्तम् ।

अन्यथेति तत्स्वरूपापेक्षया तेन पटाद्यपेक्षया अन्यथा घटत्वेन विज्ञातस्य पुनर्घटत्वेन ज्ञाने प्रसङ्गो निरस्तः । छलप्रसङ्गात् ।

तथापि रजतत्वेनावगतस्य शुक्तिकाशकलस्य शुक्लत्वादि ज्ञाने प्रसङ्गस्तदवस्थः एवमेकेनान्यथाविज्ञातस्य पुरुषान्तरसंबन्धिनि तस्यैव वा पुरुषस्य कालान्तरभाविन्यज्ञानसिद्धे सम्यग्विज्ञानेऽपीति चेन्मैवम् । बाधतिः खलु लोडने पठ्यते । तच्च ज्ञानस्यार्थस्य वास्तु । न तावत् ज्ञानस्य । तस्य क्षणिकत्वेन स्वत एव लोडितत्वात् । सम्यग्ज्ञानस्यापि, उत्तरज्ञानविनाश्यस्य बाधितत्वव्यवहारप्रसङ्गात् । नाप्यर्थस्य । शुक्तिशकलादेस्तादवस्थ्यात् । रजतादेः नित्यलोडितत्वात् ।

अतः पूर्वज्ञानप्रसञ्जितस्यान्यथाकारस्य लोडनमिवेति वक्तव्यम् । तथा च सति कोऽतिप्रसङ्गः । कथमनुच्यमानं ज्ञास्यते अन्यथाविज्ञातस्येति वचनसामर्थ्यात् ।

किमिदमनिर्वचनीयत्वम् । किं निरुक्तिविरहः । किं वा निरुक्तिनिमित्तविरहः ।

नाद्यः । अनिर्वचनीयमित्यादिनिरुक्ते सत्त्वेनासंभवित्वात् । द्वितीयेऽपि निरुक्तिनिमित्तं ज्ञानं अर्थो वा स्यात् । नाद्यः, ज्ञानस्योभयवादिसिद्धिसद्भावात् । न द्वितीयः । यथा प्रतिभासमर्थस्य रजतादेः मायावादिना अङ्गीकृतत्वात् ।





अथ सदसद्विलक्षणत्वं अनिर्वचनीयमिति चेन्न । निराकृतत्वात् । तत्र यावत्सु पक्षेषु सिद्धार्थपर्यवसानं तावत्सु अनिर्वचनीयस्य सत्त्वाविरोधित्वेन न सन्प्रपञ्चः किन्त्वनिर्वचनीय इत्यारंभासङ्गतिर्दोषोऽवगन्तव्यः । यत्र पुनर्बाधादिपर्यवसानं तत्राव्याप्तिरवगन्तव्या ।

किञ्चासंभवीदं लक्षणं उभयवैलक्षण्यस्य कुत्राप्यप्रमितत्वात् । सदसद्विलक्षणमनिर्वचनीयमित्युक्ते ब्रह्मण्यतिव्याप्तं, तस्यासद्विलक्षणत्वात् । निर्धर्मकत्वे सत्त्वानधिकरणत्वाच्च ॥ अतो ब्रह्मणः सत्त्वं न सिद्ध्यति । किञ्चानिर्वाच्यत्वं स्यात् । सत्त्वेनासत्त्वेन विचारासहत्वमनिर्वचनीयत्वम् । न पुनः सत्त्वासत्त्वधर्माधिकरणत्वम् । ब्रह्मवस्तु सत्त्वेन विचारसहं कथमनिर्वचनीयं स्यात् । मैवम् । सत्त्वेनेति त्वप्रत्ययार्थस्यानभ्युपगमात् ।

ज्ञानबाध्यत्वमनिर्वचनीयत्वमिति चेन्न । वियदादेः सत्त्वेन शुक्तिरजतादेरसत्त्वेनाविद्योपादानकत्वाभावात् ।

यदि पुनर्ज्ञानविनाश्यत्वमात्रं लक्षणम् । तथापि वियदादौ नित्ये नित्यत्वादेव शुक्तिरजतादौ चासत्त्वान्न सिद्धमित्यव्याप्तिः ।

यदि च प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं तदपि वियदादौ न सिद्धमित्यव्याप्तिरेव ।

अत्रान्यथाविज्ञानमेव भ्रान्तिः । तत्प्रसञ्जितान्यथाकारलोडनं सम्यग्विज्ञानमेव बाधः ॥

इह खलु केचिद्यथार्थं सर्वं विज्ञानमिति मन्यमाना अन्यथाख्यातिं न सहन्ते । तथाहि । केयमन्यथा-ख्यातिर्नाम ॥

यदि तावदन्यथापरिणते वस्तुनि ख्यातिरन्यथाख्यातिः । तदा घटादिप्रत्ययाः सर्वेऽप्यन्यथाख्यातित्वात् विभ्रमाः प्रसज्येरन् ।

किञ्च शुक्तिकायाः रजताकारपरिणामः किं सकारणः उताकारणः ।

न तावदकारणः ॥ कादाचित्कत्वानुपपत्तेः । आद्ये कारणं वाच्यम् । करणदोष इति चेन्न । तस्य करणसंबन्धिनः शुक्तिकापरिणामहेतुत्वानुपपत्तेः ॥ अन्यथा तदैव सकलार्थानां रजतरूपपरिणामप्रसङ्गात् ।

दुष्टकारणसंसर्गो हेतुरिति चेत्तथापि शुक्तित्वापगमेन रजतरूपपरिणामः किं वा तदनपगमेन । आद्ये पुरुषान्तरेणापि तदा शुक्तित्वं न प्रत्येतव्यम् । द्वितीये भ्रान्तेनापि तत्प्रत्येतव्यम् । किञ्च शुक्तित्वापगमे बाधेऽपि न तद्भायात् ।

अथ पुनः शुक्त्याकारेण रजतं परिणतमिति चेन्न । करणदोषस्य कारणस्याभावात् । बाधोऽप्येवं भ्रमः स्यात् । अपि चैतत् समस्तप्रतिपत्तृसाधारणमपि कुतो न भवेत् ।

यत्करणपरिणतं तेनैव गृह्यत इति चेन्न, घटादेरपि कुलालादिमात्रवेद्यतापातात्। सुखादिवदिति चेन्न। बाह्यान्तरत्वेन विशेषात्। अन्यथोक्तातिप्रसङ्गानिस्तारात्।

किञ्च दोषवशाद्रजताकारेण परिणता चेच्छुक्तिः, तदा दोषापगमेऽपि तथैव कथं नावतिष्ठते। न हि निमित्तकारणनाशात्कार्यनाशो दृष्टः।

कमलकुड्मलविकासनिमित्तसत्त्वेन असंभवित्वात्, सावित्रतेजोपगमस्य विकासनिवृत्तिहेतुता च दृष्टेति चेत्, मैवम्, दलविभागो हि विकासो नाम, स च क्षणिकत्वात्सत्येव तेजसि निवृत्तः, संयोगप्रध्वंसस्तु न कदापि निवर्तते।

पुनः संयोगलक्षणो मुकुलीभावस्तु शीतादिनोदनजन्य एव। स्थायित्वेऽपि विभागस्यान्यदेव तन्नाशे निमित्तमिति यत्किञ्चिदेतत्।

यथा ऐहिकबुद्ध्युपरमे परत्वादि व्यवहारनाशः तद्वदत्रापि च स्यात्। इति चेन्न विप्रतिपत्तेः। किञ्चोत्पन्नं चेद्रजतं विनष्टं तदा तथैव प्रतीतिः स्यात्। न पुनर्नेदं रजतमिति बाधबुद्धिः। एतेन दुष्टकरणजन्याद्विज्ञानाद्रजत-जन्मेत्यपि परास्तम्।

का चैवं सति दोषवाचो युक्तिः। न हि मृदो घटाकारपरिणामस्य निमित्तं दण्डं चक्रादिकं दोषत्वेन मन्यन्ते॥

किञ्च यस्याः प्रतीतेस्तदालंबनं तत एव तज्जन्म किंवा प्रतीत्यन्तरात्। नाद्यः। परस्पराश्रयप्रसङ्गात्। उत्पन्ने हि रजते तदालंबनायाः प्रतीतेर्जन्म तस्यां जातायां रजतोत्पत्तिरिति। न खलु निरालंबना प्रतीतिरुत्पद्यते।

द्वितीयेऽपि किं तत्प्रतीत्यन्तरं शुक्तिकालंबनम्। उत शुक्तिकारजतान्तरालंबनम्। अथवा अर्थान्तरालंबनम्। नाद्यः शुक्तिप्रतीत्यनन्तरं रजतोत्पादप्रसङ्गात्। शुक्तिकारजतप्रतीतेः प्राक् शुक्तिरेवेति प्रतीतिनियमाभावाच्च।

दुष्टकरणालोचितशुक्तिसाधारणाकारप्रतीते रजतजन्येति चेन्न। साधारणाकारदर्शनानन्तरं रजतप्रतीति-नियमाभावात्। कारणवैकल्यं तत्र कल्प्यत इति चेत्। स्यादेतदेवम्। यदि रजतजन्म प्रतीतं स्यात्। प्रतीतिं तु प्रकारान्तरेण उपपादयिष्यामः।

न द्वितीयः पूर्वरजतस्यापि तदेव कारणमिति रजतप्रतीतिप्रवाहाविच्छेदप्रसङ्गात्।

तृतीयेऽतिप्रसङ्गात्।

तदेवं भ्रान्तिबाधयोरनुपपत्तेर्न परिणामपक्षो युक्तः।





नापि वस्तुनो वस्त्वन्तरात्मनावभासोऽन्यथाख्यातिरिति । तथा हि । किं वस्तुनो वस्त्वन्तरात्मता सती उतासती ।

आद्ये न भ्रान्तिर्नापि बाधः । सर्वेषां च सर्वं सर्वात्मना प्रतीयेत । (अन्यात्मनः (स्य) सत्त्वात्)

न हि दोषः करणसंस्कारः । तथा सत्यदुष्टकरणेन न किञ्चिदुपलभ्येत ।

न द्वितीयः । असतः प्रतीत्यनुपपत्तेः । उपपत्तौ वा किं रजतस्यापि स्वरूपेणान्यत्र सत्त्वग्रहणेन । तेनासंबद्धविशेषणविशिष्टप्रतीतिरन्यथाख्यातिः इति निरस्तम् । असतो विशेषणसंबन्धस्य प्रतीत्यनुपपत्तेः । उपपत्तौ वा किमसत्ख्यातिवादिभिरपराद्धम् ।

अथ ब्रूषे अन्याकारं ज्ञानं अन्यथाख्यातिरिति । तदसत् । समीचीनज्ञानस्याप्यान्तरबाह्यत्वादिना अर्थविलक्षणाकारत्वेन विभ्रमत्वापत्तेः ॥

अन्याकारोल्लेखिज्ञानमन्यालंबनमन्यथाख्यातिरिति तु विरुद्धम् । तथा हि । किमिदमालंबनं सत्त्वम् । उत कारणत्वं विषयतया कारणत्वम् । सर्वप्रत्ययानां सर्वार्थालंबनत्वापत्तेः । सर्वज्ञता चैवं सति स्यात् । अतीतादिविषयस्य निरालंबनतापातश्च ।

अत एव न द्वितीयतृतीयौ । रूपादिज्ञानस्य चक्षुराद्यपि कारणमिति तदालंबनत्वप्रसङ्गात् । अतीतानागत-विषयत्वं च ज्ञानस्य न स्यात् । अतीतानागतयोरसत्त्वेन कारणत्वानुपपत्तेः ।

अत एव न चतुर्थः । आत्माश्रयं चैवं सति स्यात् । विषयत्वस्यैव निरूप्यमाणत्वात् ।

किञ्चेदं विषयत्वं येन यस्यातिशय उत्पद्यते स तस्य विषय इति चेन्न । अतिशयो हि ज्ञातता वा स्याद्व्यवहारो वा । नाद्यः । अनभ्युपगमात् । अभ्युपगमेऽप्यतीतादिज्ञानस्य निर्विषयत्वापातात् । न ह्यसति धर्मिणि धर्मोत्पादो युज्यते । न द्वितीयः । अतदर्थिनो व्यवहारानुत्पत्तावविषयत्वानुपपत्तेः । व्याघ्रचोरादिज्ञानानन्तरमादीय-मानस्य दण्डादेरपि तद्विषयत्वप्रसक्तेश्च ।

यद्विज्ञानं यदाकारं तत्तदालंबनमिति तु तथागतमतमनुधावति ।

यत्सन्निकृष्टकरणेन यत् ज्ञानं जन्यते तत्तद्विषयमित्यपि न । रूपादिज्ञानस्याकाशादिविषयतापातात् । चक्षुराकाशसन्निकर्षस्यापरिहार्यत्वात् । तत्तादृशस्य प्रत्यभिज्ञाविषयत्वं च न स्यात् । तत्राकाशसन्निकृष्टकरणेन जन्यत्वात् ।





तस्य वाक्यस्य वाक्यार्थेन सन्निकर्षाभावात्। तज्जनितज्ञानस्य वाक्यार्थो विषयः स्यात्। आकाशविषयतैवं चापद्यते।

लिङ्गज्ञानाच्चात्मसन्निकृष्टाज्जायमानं लिङ्गिज्ञानं आत्मविषयमापद्येत । तस्माद्यज्ज्ञानं यत्प्रतिभासं तदेव तस्यालंबनमिति मन्तव्यम्।

तत्र रजतज्ञाने शुक्तिरवभासते न वेति वक्तव्यम्।

अवभासत इति ब्रुवाणः श्लाघनीयप्रज्ञो देवानां प्रियः।

यदि संविदिबहुमानवान्नेति ब्रूयात्तदा तच्छुक्तिकालंबनं स्यात्। किञ्च रजतमवभासते शुक्तिकालम्बनं स्यात्। किञ्च रजतमवभासते शुक्तिकालंबनं चेत्यतिप्रसङ्गः कथं परिहरणीयः।

न चान्यथाख्यातिजनने कारणं पश्यामः।

न च चक्षुरादिकमेव कारणम् । तस्य समीचीनज्ञानकारणतावधारणात् । तादृशस्यादृष्टभेदाद्भिन्नकार्य-जनकत्वमस्त्विति चेन्न कार्यभेदे निश्चिते तथा कल्प्यत्वात्। न च वक्तव्यं दावदहनदग्धवेत्रबीजानां कदलीकाण्डजननं प्रति सामर्थ्यमुपलब्धमिति। पाकेन द्रव्यान्तरोत्पत्तेः तेषां वेत्रबीजत्वापगमात्। किञ्च क्वचिज्ज्ञानस्य प्रदर्शिताकार-व्यभिचारे कथं अन्यत्राश्वासः।

ननु यथा घटादेः पार्थिवस्य व्यभिचारेऽपि न धूमस्यापि तद्व्यभिचारः शंक्यते। वैषम्यात्। घटादेर्धूमस्य पार्थिवत्वाविशेषेऽपि धूमत्वादिरेवावान्तरो विशेषो व्यभिचारनिश्चयोपायोऽस्ति । न हि तत्र बाधकं किञ्चित् । तेनोपपद्यते तत्राश्वासः । प्रकृते तु न ज्ञानत्वावान्तरविशेषं अनाश्वासनिरसनक्षणमीक्षामहे ।

न च बाधकभावाभावरूपाद्विशेषाद्व्यवस्थेति वाच्यम् । बाधकस्यापि ज्ञानत्वेन शङ्कास्पदत्वात् । बाधकाभावश्चानुपसञ्जातबाधभ्रमे समानः ।

संवादकभावाभावाभ्यां विशेष इति चेन्न । उक्तोत्तरत्वात् । संवादकमपि हि ज्ञानमेवेति तदपि कथं संशयास्पदं न स्यात् । तत्रापि संवादकान्तरान्वेषणेऽनवस्था कुतो न भवेत् । अङ्गीकृतश्च परेण धारावाहिक-विभ्रमेऽन्योन्यसंवादः ।

एतेन ज्ञानजन्यव्यवहारविसंवादाविसंवादलक्षणोऽपि विशेषः परास्तो वेदितव्यः । तद्विशेषग्राहिण्यपि विश्वासकारणाभावात् ।





अपि च प्रतीयमानोऽयं रजताकारः कुतस्त्य इति वक्तव्यम् । न तावत्पुरोवर्तिनिष्ठ इतीष्टमन्यथाख्यातिवादिनाम् । बाधविरोधश्च तथा सति स्यात् । नापि देशान्तरवर्तीति वक्ष्यामः । ततश्च ज्ञानस्थ एवायमित्येवापतितम् । तथा च जितं साकारविज्ञानवादिभिर्बौद्धैः ।

ननु तर्हि इदं रजतमित्यादिप्रत्ययस्य का गतिः । उच्यते । रजतमिति द्वे ज्ञाने स्मृत्यनुभवरूपे । तत्रेदमिति पुरोवर्तिद्रव्यमात्रग्रहणम् । दोषवशात्तद्गतस्य शुक्तित्वसामान्यस्याग्रहणात् । तन्मात्रं च गृहीतं सदृशतया संस्कारोद्बोधक्रमेण रजतस्मृतिं जनयति । सा च गृहीतग्रहणस्वभावापि दोषवशात् गृहीततत्तांशप्रमोषेण गृहीतिसरूपावतिष्ठते । तथाच रजतस्मृतेः पुरोवर्तिग्रहणस्य च मिथः स्वरूपतो विषयतश्च भेदाग्रहणात् सन्निहितरजतज्ञानसारूप्येणेदं रजतमिति भिन्ने अपि ग्रहणस्मरणे अभेदव्यवहारं सामानाधिकरण्यपदेशं च प्रवर्तयतः । कुत एतदिति चेत् न । अन्यथानुपपत्तेरुक्तत्वात् ॥

किञ्चेदमिति तावत्पुरोवर्तिनयनसंप्रयोगजं ज्ञानमनुभव इत्यविवादम् । रजतज्ञानं च न तावदिन्द्रियजम् । इन्द्रियस्य सन्निकृष्टार्थ एव ज्ञानजननसामर्थ्यात् । अन्यथा सर्वसार्वज्ञप्रसङ्गात् । न च विप्रकृष्टेन रजतेन सन्निकर्षोऽस्ति । न च शुक्तिशकलसन्निकर्षादिवेन्द्रियं रजतज्ञानमुत्पादयतीति सांप्रतम् । अतिप्रसङ्गात् । न च दोषसदसद्भावाभ्यां व्यवस्था । दोषाणां विपरीतकार्यकारिताया निरस्तत्वात् ।

भस्मकदोषदूषितस्य जाठरजातवेदसो बहुतराहारपरिणामे हेतुतोपलभ्यत इति चेन्न । विप्रतिपत्तेः । दोषस्यैवाहारविकारहेतुत्वोपपत्तेः ।

न च दहनकार्यं कथं दोषः करोतीति वाच्यम् । कार्येऽपि वैजात्योपलंभात् । जाठराग्निपरिणता हि रसाः । शरीरोपचयहेतवो न भस्मकपरिणतास्तथा । तस्मान्नेदमिन्द्रियजम् ।

न च लिङ्गाद्यनुसन्धानविधुराणामपि जायमानमनुमानादिप्रभवमिति शक्यते वक्तुम् ।

अन्यथासिद्धनियतपूर्वक्षणभाविकारणाभावेऽप्युत्पद्यमानमिदं स्मरणमेव ।

तथा च प्रयोगः । इदं स्मरणमनाकलितरजतस्यानुत्पद्यमानत्वात् । संप्रतिपन्नस्मरणवत् । न चेदमस्मरणम् । तत्तांशविकलत्वात्संप्रतिपन्नवदिति युक्तम् । पदात्पदादर्थस्मृतौ हरिहरादिस्मृतौ च व्यभिचारात् ।

किञ्चानुभूतं तावन्न समस्तं स्मर्यते । तत्तांशश्चातीतदेशकालसंबन्धः स्मर्यमाणधर्मः । तथा च स्मरणं च भवतु । भवतु दोषवशात् प्रमुषिततत्तांशम् । न च विपक्षे बाधकं किञ्चिदित्यप्रयोजको हेतुः ।

न च नेयं स्मृतिः इन्द्रियजन्यत्वात् । संप्रतिपन्नवत् । विमतं इन्द्रियजन्यं इन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वादिति वाच्यम् । स्मृतिबीजसंस्कारोद्बोधहेतुपुरोवर्तिसाधारणाकारग्रहण एवेन्द्रियव्यापारान्वयव्यतिरेकयोरुपक्षीणत्वात् ।

नन्वेवं सत्यनास्वादिततिक्तस्य शिशोः तिक्तस्मरणानुपपत्तेः कथं तिक्तो गुडप्रत्यय इति चेत् । न । तज्जन्मान्तरानुभूतत्वात् । न हि सर्वेषां शिशूनां तथाप्रसङ्गः । अदृष्टानियमात् । क्वचित् ग्रहणे एव मिथोऽगृहीतभेदे । यथा पीतः शङ्खः इति । अत्र विनिर्यन्नयनरश्मिवर्तिनः पित्तद्रव्यस्य पीतत्वं दोषवशात् द्रव्यरहितं गृह्यते । शङ्खोऽपि गुणहीनः स्वरूपमात्रेण गृह्यते । तदनयोर्गुणगुणिनोरितरेतरापेक्षिणोरसंसर्गाग्रहात् सारूप्यात् पीतचिरबिल्वादिफल-प्रत्ययाविशेषेणाभेदव्यवहारः सामानाधिकरणव्यपदेशश्च भवतः । क्वचित् पुनः स्मरण एवागृहीतविवेके । यथा सघटः तत्रासीदिति । अनयैव दिशाऽलातचक्रादि व्यवहाराः सर्वेऽपि निर्वाह्याः ।

किञ्च विपर्ययमङ्गीकुर्वाणेनापि विवेकाग्रहो ग्राह्य एव । न हि विवेकग्रहे विपर्ययावकाशोऽस्ति । विरोधात् अन्यथा विपर्ययनिवृत्त्यनुपपत्तेः । तथा च तत एव सर्वस्योपपत्तौ किं विपर्ययकल्पनया ।

न चान्यथाख्यातौ किमपि प्रमाणमस्ति । भेदाग्रहप्रसञ्जिताभेदव्यवहारबाधनेनैव नेदमिति विवेकज्ञानस्य बाधकत्वमप्युपपद्यते । तदुपपत्तौ चागृहीतविवेकस्य ज्ञानद्वयस्याभ्रान्तित्वमपि लोकसिद्धम् ॥ तथाच प्रयोगः । विगीतप्रत्ययो यथार्थः प्रत्ययत्वात् संप्रतिपन्नवत् ॥

नन्वत्र विगीतप्रत्ययो नाम किं पुरोवर्ति निर्विकल्पकज्ञानं उत सदृशदर्शनोत्थं रजतस्मरणम् । किञ्चोभयम् । आहोस्विद्रजतपुरोवर्त्यैकताज्ञानम् । आहोस्वित् प्रमुषितभेदं वेदनद्वयम् । तत्राद्यपक्षत्रये सिद्धसाध्यता । चतुर्थ वाद्याश्रयासिद्धत्वं अपसिद्धान्तो व्याघातश्च । पञ्चमे प्रतिवाद्याश्रयासिद्धतेति चेत् । मैवम् ।

अस्ति तावत्पुरोवर्ति निर्विकल्पकज्ञानम् । अस्ति च सदृशपुरोवर्तिदर्शनजनिता रजतस्मृतिः । तथास्त्येव च तत्समुत्थं सविकल्पकमिदमिति वेदनात्सविवादभेदाभेदं रजतवेदनम् । तत्र विप्रतिपन्नौ भेदाभेदौ विहायेदं-रजतमित्यवगममात्रमिदंरजतमित्यादि समानावगममात्रमिदंरजतमित्यादि सामानाधिकरण्यव्यवहारकारणं पक्षत्वेन विवक्षितं चेत्को विरोधः । न हि विप्रतिपन्नाकारेणैव पक्षीकारः क्वचित् । मा हि भून्नित्यानित्याग्निमदनग्निमच्छब्द-पर्वतपक्षीकारे प्रकृतदोषानुषङ्गात् । भङ्गोऽनुमानमुद्रायाः ।

किञ्च सिद्धस्यैव पक्षीकरणम् । विमताकारस्यापि पक्षत्वे किं साध्येत । विमतौ च भेदौ विभ्रमगोचरौ विचारावसरे । भेदे हि वेदनयोरिदं वेदनं पुरोवर्तिमात्रगोचरम् । न रजतवार्तां वेत्ति । रजतवेदनमपि रजतमात्रग्राहि यस्यकस्यचिद्रजतत्वमनुसन्धत्ते । तच्च प्रमाणविरुद्धमिति क्वान्यथाख्यातिः । अतस्तद्वादिभिरभेद एव वक्तव्यः अपाकर्तव्यश्चाख्यातिवादिभिरित्यस्त्येव विप्रतिपत्तिः ।

ततो विप्रतिपन्नाकारं परित्यज्येदंरजतमित्यवगममात्रपक्षीकारे न कश्चिद्दोषः । कथमन्यथाख्यातिवादीदं-रजतमिति ज्ञानस्य पुरोवर्तिविषयत्वसाधनाय साधनमुपन्यस्यन्नितो दोषात् विमुच्येत ।

अथ रजतार्थिनः शुक्तिकायां प्रवृत्तौ हेतुभूतं ज्ञानं मया पक्षीक्रियत इति चेत् मोच्चैर्वोचः परोऽपि श्रोष्यति ।





प्रवृत्तिहेतुभूतेन ईश्वरज्ञानेन सिद्धसाधनता स्यादिति चेत्। तवापि बाधः कथं न स्यात्।

प्रकृतप्रवृत्तिहेतुरनीश्वरज्ञानं पक्षीक्रियते इति चेत्। ममापि तथैव स्यात्।

त्वयेश्वरानभ्युपगमात्। व्यर्थं विशेषणमिति चेत्। तर्हि मां प्रति तवापि कथं न व्यर्थम्।

इदंज्ञानादगृहीतविवेकं रजतज्ञानमिति विप्रतिपत्तिविषयमुद्घाटयामीति चेत् सममेतन्ममापि।

किञ्च विवादाध्यासितं रजतज्ञानं रजतविषयं रजतज्ञानत्वात् संमतवत्। अत्रापि पूर्ववद्धिमतविषयो विवेचनीयः॥

स्यादेतत् किमिदं रजतज्ञानं नाम रजतस्य ज्ञानं रजतज्ञानम्। रजतं तज्ज्ञानं चेति वा। रजतशब्दोल्लेखिज्ञानं वा रजतार्थिनः प्रवृत्तिहेतुज्ञानं वा॥

न प्रथमः॥ षष्ठ्यर्थस्य विषयविषयिभावव्यतिरेकेणासंभवात् साध्याविशिष्टत्वात्॥ न द्वितीयः उभयासिद्धेः ज्ञानस्य निराकारत्वात्। तृतीयेऽपि किं रजतशब्दविषयत्वं वा॥ नाद्यः। असिद्धेः न द्वितीयः। पूर्वपदज्ञानेनापि रजतपदस्मरणसंभवेन तत्र व्यभिचारात्। न चतुर्थः। विवेकाग्रहवादिनां इदमितिज्ञानस्यापि शुक्तिकालंबनस्य तद्धेतुत्वेन व्यभिचारात्। मैवम्।

अन्यथाख्यातिवादिना रजतज्ञानं शुक्तिविषयमन्यथाख्यातिरिति वक्तव्यम्। तत्र रजतज्ञानशब्देन योऽर्थः परेण विवक्ष्यते स एवास्माकं हेतुर्भविष्यति।

तथा हि— न तावदाद्यः कल्पः परेणाङ्गीकर्तुमुचितः व्याघातप्रसङ्गात्। शुक्तिरजतयोरभेदप्रसङ्गाच्च। न द्वितीयः। अनभ्युपगमात्। न तृतीयः। शुक्तिकाज्ञानस्याप्यन्यथासङ्केतितरजतशब्दस्मृतिहेतुत्वसंभवेन आन्यथाख्यातित्वप्रसङ्गात्। नापि चतुर्थः। यत्र शुक्तिका तदधस्ताद्रजतमस्तीतिवाक्यं श्रुतवतः शुक्तिज्ञानमपि रजतार्थिनः प्रवृत्तिहेतुर्भवतीति तस्यापि अन्यथाख्यातित्वप्रसङ्गात्।

केचित्पुना रजतविषयं ज्ञानमित्येव हेत्वर्थमुपगम्य रजतान्तरविषयत्वसाध्यमङ्गीकृत्य साध्याविशिष्टतादोषं परिहरन्ति। तदसत्। रजतघटावितिज्ञाने व्यभिचारात्। अन्यतरासिद्धेश्च। तस्मादुक्त एव परिहारः।

अपि च ज्ञानत्वं यथार्थमात्रवृत्ति। ज्ञानमात्रवृत्तित्वात् प्रमात्ववत्। शुक्तिका न रजतत्वेन अवभासते यथा मेरुः सर्षपत्वेन। इदं रजततादात्म्यं न प्रत्येतुं शक्यं असत्त्वात् कूर्मरोमादिवत्। तस्मादख्यातिपक्ष एव श्रेयान् इति।

अत्रोच्यते। अन्यदन्यात्मना विषयीकुर्वज्ज्ञानं अन्यथाख्यातिः इत्यङ्गीकारात् नोक्तदोषावकाशः।





ननु अन्यस्य अन्यात्मता सती उतासती । असतीति ब्रूमः । असतो न प्रतीतिः इति चेन्न । तस्या उपपादयिष्यमाणत्वात् ।

अत्र केनचित् अख्यातिवादिना प्रलपितम्—

यथा इदं रजतमिति ज्ञानं भ्रमः, तथा खण्डो गौः, शुक्लः पटः इत्यादयः सर्व एव सविकल्पकप्रत्ययाः विभ्रमाः प्रसज्येरन् । समानाधिकरणस्य तादात्म्यालंबनत्वात् । तस्य चात्राभावादिति । तदतीव मन्दम् ।

तथा हि, सामानाधिकरण्यप्रत्ययो हि कयोस्तादात्म्यमवलंबते । किं गुणक्रियाजात्यादेः द्रव्येण । उत गुणानामेव परस्परं, अथ गुणाश्रयस्य क्रियाश्रयेणेत्यादि ।

नाद्यः, असंमतेः, न हि शुक्लः पट इत्यस्य शौक्ल्यं पट इत्यर्थोऽभिमतो लौकिकानाम् । न च चलति पट इत्यस्य चलनं पट इत्यर्थोऽभिमतः । नापि खण्डो गौरित्यत्र खण्डत्वगोत्वयोः पिण्डैक्यं सङ्गतम् । तथात्वे दण्डी देवदत्तः इत्यस्यापि दण्डदेवदत्ततादात्म्यविषयतापत्तेः ।

दण्डी इत्यत्र भेदज्ञापकः प्रत्ययोऽस्तीति चेत् शुक्लः पट इत्यत्रापि अर्शआदिभ्योऽजित्यकारप्रत्यय-विधानात् ।

चलतीत्यादौ तु स्फुट एव प्रकृतिप्रत्यययोः अर्थभेदः ।

अत एव न द्वितीयः । न हि शुक्लः पटश्चलतीत्यस्य शौक्ल्यं पटत्वं चलनं च एकमित्यर्थः चेतसि चकास्ति प्रतिपत्तॄणाम् । तथा सति दण्डी कुण्डली देवदत्त इत्यस्यापि ज्ञानस्य दण्डकुण्डलदेवदत्ततादात्म्यविषयतापातात् ।

तृतीयस्तु स्यादेव । समानं एकं अधिकरणम् । एषां भावः सामानाधिकरण्यम् ।

न चाश्रयभेदे तस्य समानता अस्ति । विशिष्टयोः गुणक्रियाश्रययोः भेदेऽपि न विशिष्टस्य गुणाधिकरणत्वं किन्तु तदाश्रयता निश्चितस्य वस्त्वन्तरस्य ।

यत्सन्निकृष्टकरणेन यज्ज्ञानं उत्पद्यते स तस्य विषय इत्यङ्गीकारात् । सन्निकर्षस्यापि ज्ञानकारणतया विवक्षितत्वेन तस्यासंबद्धत्वात् ।

न हि चक्षुरादेः आकाशादिना सन्निकर्षो रूपादि ज्ञानकारणम् । किं नाम, असौ अवर्जनीयसन्निधिरेव । कथं तर्हि वाच्यादिना सन्निकर्ष उच्यते ।





संसर्गधर्मकपदार्थवाचिपदसमुच्चयरूपवाक्यविषयताज्ञानेन वाक्यार्थज्ञानं जन्यते । तद्व्याप्यलिङ्गविषयेण च लिङ्गज्ञानेन लिङ्गिज्ञानमुत्पद्यते । तदनुभवजनितसंस्कारजन्या इन्द्रियेण प्रत्यभिज्ञा जायते इति नातिप्रसङ्गः ।

न हि संयोगादिरेव सन्निकर्षः । किं नाम प्रत्यासत्तिमात्रम् । तथापि आत्मसन्निकृष्टमनसा रूपज्ञानं जायते इति तस्यात्मा विषयः स्यादिति चेन्न । असाधारणकारणस्य विवक्षितत्वात् । मनसश्च साधारणत्वात् ।

तर्हि मनःसन्निकृष्टेन चक्षुषा जायमानं रूपज्ञानं मनोविषयमापन्नमिति चेत् न । सन्निकर्षस्यापि असाधारणकारणतया विवक्षितत्वात् । चक्षुर्मनःसन्निकर्षो हि द्रव्यादिज्ञानसाधारणः ।

एवं जन्यज्ञाने विषयत्वस्य अन्यथाव्यवस्थितत्वात्; यद्यदज्ञानं यत्प्रतिभासं इत्यन्यथा परिभाषणं अनुपपन्नम् ।

न चैवं सत्यनुभवविरोधः । रजतावभासस्य शुक्तिकासन्निकृष्टकरणजन्यत्वेन तद्विषयत्वोपपत्तेः ।

न चातिप्रसङ्गः दोषजन्यत्वतदभावादिना व्यवस्थोपपत्तेः अन्यथा रजतज्ञानात् अरजते प्रवृत्तावपि कथं नातिप्रसङ्गः ।

अस्तु वा यद्विज्ञानं यत्प्रतिभासं तत्तद्विषयं इत्येव व्यवस्था । तथापि नानुभवविरोधः ।

शुक्तिरजतावभासस्य शुक्तित्वविषयतायां अनुभवविरोधं ब्रूषे उत इदन्ताकारस्य ।

आद्ये संप्रतिपत्तिः । न हि वयं अस्मिन्प्रत्यये शुक्तिर्नावभासत इति ब्रूमः येन विरोधः स्यात् । शुक्तित्वप्रतिभासस्य रजतावभासविवादभावात् ।

द्वितीये तु न कश्चिद्विरोधः । विरोधे वा समीचीने रजते इदं रजतमिति प्रतीतिर्न स्यात् । एवं सति रजतस्यापि ज्ञानविषयता प्रसज्यत इति चेत् । सत्यम् । इष्टमेवैतत् ।

न चैवम्, अन्यथाख्यातिपक्षपातः ज्ञानैक्याभ्युपगमात् ।

नापि शुक्तिरजतमितिज्ञानं विभ्रमः प्रसज्यते, रजतस्य असत्त्वाभ्युपगमात् । तादात्म्यावभासस्य अभ्युपगमाच्च ।

न चान्यथाख्यातिजनने कारणाभावः । इन्द्रियादेरेव तत्कारणत्वात् । समीचीनज्ञानकारणस्यापि दोषकलुषितस्य विभ्रमहेतुत्वोपपत्तेः ।





न च दोषाणां स्वारसिकशक्तिविरोधितामात्रमिति वाच्यम् । तथा सति समीचीनव्यवहारहेतोर्विज्ञानादन्यथाव्यवहारजन्मानुपपत्तिप्रसङ्गात् ।

किञ्च सहकारिमात्रस्य विपरीतशक्त्यनाधायकत्वं दोषाणामेव वा ।

आद्ये पशुहिंसा किं धर्मजनने स्वारसिकशक्तिमती उत अधर्मजनने इति वाच्यम् । आद्ये कथं क्रतुबाह्यापि धर्मं न जनयेत् । द्वितीये कथं क्रत्वन्तर्गताऽपि धर्मं जनयेत् । सहकारिवशादिति चेत् । अङ्गीकृतं तर्हि सहकारिणां स्वारसिकशक्तिप्रतिरोधेन विपरीतशक्त्याधायकत्वम् ।

न द्वितीयः । नियामकाभावात् ।

किञ्च, काचादयोऽपि विपरीतज्ञानजनने सहकारिण एव अङ्गीक्रियन्ते, दोषत्वं तु इष्टकार्यविघातितामात्रेण उच्यते कामुकस्य कामिनीविभ्रमेषु गुणत्वाभिमानात् ।

न चैवं भर्जिताः कुटजधानाः वटाङ्कुरं कुतो न जनयन्तीति वाच्यम्, पदार्थशक्तिवैचित्र्यात् ।

केचित् वस्त्वन्तरशक्तिमेव प्रतिबध्नन्ति यथा भर्जनादयः ।

केचित् सहजशक्तिप्रतिबन्धेन विपरीतामपि शक्तिमादधति । यथा विषस्य मारकत्वशक्तिं प्रतिबध्य आरोग्यादिजननशक्तिमादधानाः पदार्थाः ।

गुणा एव न ते दोषाः इति चेत् । काचादयोऽपि गुणा एव न ते दोषाः इत्युक्तमेव ।

ननु जनकस्यैव साक्षात्कारिप्रत्ययविषयत्वं दृष्टम् । न च रजतस्येदंतादात्म्यस्य वाऽसतो जनकत्वं अस्ति । तत्कथं विषयत्वमिति । मैवम् । तथा सति ईश्वरज्ञानस्य नित्यस्य अर्थो विषयो न स्यात् । प्रत्यभिज्ञानस्य च तत्तांशो विषयो न भवेत् ।

तत्र निरूपकत्वादिमात्रेण विषयताङ्गीकारे रजतादेरपि ज्ञाननिरूपकत्वेन विषयत्वोपपत्तेः, कथं, असतो निरूपकत्वमिति चेत् न । गुरूणां टीका, कुरूणां क्षेत्रं इतिवदुपपत्तेः । अतीतादिविषयानुमित्यादि व्यावर्तकत्वं च प्रमेयस्य न स्यात् ।

तत्र व्यावर्तकं कदाचिदस्ति रजतादिकं कदापि नास्तीति वैषम्यमिति चेत् । तत्किं यदाकदाचित् सतः कारणत्वं, पूर्वक्षणे सतो वा, नाद्यः । अतिप्रसङ्गात् । द्वितीये तु किमनेन ।





अथ न अतीतादिरर्थः स्वसामर्थ्येन अनुमित्यादिकं तु व्यावर्तयति; येन तत्सत्तापेक्षा स्यात्; किन्तु करणजन्यं ज्ञानमर्थव्यावर्तुमेव जायते, करणजन्यादेवेति चेत् समं प्रकृतेऽपि।

किञ्च सत्यस्थलेऽपि न साक्षात् साक्षात्कारं प्रति कारणत्वं अर्थस्य किन्तु इन्द्रियसन्निकर्षस्यैव। स च यत्रासता नोपपद्यते तत्र अर्थसत्तामपेक्षते इति पारम्पर्येणैव अर्थस्य कारणत्वम्।

ननु तर्हि असता रजतादिना सन्निकर्षायोगात् कथं इन्द्रियेण तज्ज्ञानजन्मेति चेन्न। शुक्तिकासन्निकृष्टं दुष्टमिन्द्रियं तामेव अत्यन्तसद्रजतात्मना अवगाहमानं ज्ञानं जनयतीत्यङ्गीकारात्। अत एव न असत्ख्यातिप्रसङ्गः।

यावत्खलु विगीते प्रत्यये भासते तस्य सर्वस्यासत्त्वे असत्ख्यातिः स्यात्।

न चैवमित्युक्तम्। यच्चोक्तं विषयव्यभिचारे ज्ञानस्य सर्वत्रानाश्वास इति तदौत्सर्गिकम्। ज्ञानानां प्रामाण्यं अपवादाद्विपर्ययः इति वदता आचार्येणैव परिहरिष्यते। साक्षी खलु चैतन्यरूपो नियतयाथार्थ्यः, कदाचिदपि संशयानास्कन्दितः अन्तःकरणवृत्तीनां याथार्थ्यं स्वयमेव गृह्णाति। परीक्षासहकृतस्तु अयाथार्थ्यमिति बादरायणीयं मतम्।

अत एव अनाश्वासनिरसनोपायो न ज्ञानेषु कश्चिद्विशेषोऽस्तीति निरस्तम्। अन्यथा परस्यापि कथं विषयव्यभिचारे व्यवहृतेः व्यवहारान्तरे समाश्वासः स्यात्। तदभावे च कथं व्यवहारदर्शनेन अन्वितार्थे व्युत्पत्तिः।

क्वचित् विवेकाग्रहे च कथमन्यत्र विशिष्टप्रत्यये विश्वासो भवेत्। तदभावे च कथं निःशङ्का प्रवृत्तिः। बाधकाभावादिना समाश्वासस्तु परोक्तरीत्यैव निरस्तः। किञ्च प्रवृत्त्युत्तरकालीनो बाधकाभावः कथं निःशङ्कप्रवृत्तौ उपयुज्यते।

बाधकाभावादिना विशिष्टज्ञानस्वरूपनिश्चयं अङ्गीकुर्वाणः कथं स्वप्रकाशविज्ञानवादं न जह्यात्। औत्सर्गिकी प्रवृत्तिः अपवादान्निवृत्तिरिति चेत्। समं प्रकृतेऽपि।

यदप्युक्तं विपरीतख्यातिपक्षे ज्ञानं साकारमापतेदिति तदप्यनुपपन्नं, अत्यन्तासत एवाकारस्य स्फुरणाङ्गीकारात्। अन्यथा व्यवह्रियमाणस्याकारस्य बहिरभावात् व्यवहारोऽपि तदाकारः प्रसज्येत। यस्तु रजतज्ञानस्य स्मृतित्वे परिशेषोपन्यासः सोऽपि प्रत्युत्पन्नकरणदुष्टेन्द्रियादि जन्यतोपपादनात् परिशेषानुपपत्तेरयुक्तः।

अनाकलितरजतस्यानुत्पद्यमानत्वं च गगनादौ अनैकान्तिकम्। रजतज्ञानवत एव उत्पद्यमानत्वं विवक्षितमिति चेन्न। तथापि रजतसंस्कारव्यवहारादौ व्यभिचारात्।

ज्ञानत्वे सतीतिविशेषणादयमदोष इति चेन्न। रजतनिर्विकल्पकज्ञानवत एव उत्पद्यमाने रजतसविकल्पकानुभवे व्यभिचारतादवस्थ्यात्।

रजतसविकल्पकज्ञानवत एव उत्पद्यमानज्ञानत्वं विवक्षितमिति चेन्न हानादिबुद्धिष्वनैकान्तिकताऽनिस्तारात्।

संस्कारमात्रसहकृतमनोजन्यत्वोपाधिग्रस्तं चानुमानम्।

न चानेनैव हेतुना, अस्य पक्षे साधनं, व्यभिचारस्योक्तत्वात्। किञ्चेदं स्मरणत्वं साध्यं, न तावत्सामान्यं गुणेषु प्राभाकरैरभ्युपगतम्।

अननुभवत्वमिति चेत्। तदपि किमनुभवादन्यत्वं, अनुभवत्वानधिकरणत्वं वा। आद्ये अनुभवस्यापि तत्संभवेन सिद्धसाधनता स्यात्। द्वितीये अनुभवत्वं किमिति वाच्यम्; स्मृत्यन्यत्वमिति चेन्न। स्मृतावपि प्रसङ्गात्। इतरेतराश्रयप्रसक्तेश्च।

ज्ञानसंस्कारमात्रप्रभवत्वं स्मृतित्वमिति चेन्न। मानसप्रत्यक्षजा स्मृतिरित्यस्माभिरङ्गीकृतत्वेन पक्षस्य अप्रसिद्धविशेषणत्वात्।

दृष्टान्तस्य साध्यवैकल्याच्च। किञ्च इन्द्रियव्यापारान्वयव्यतिरेकानुविधायीदं रजतज्ञानं तत्कार्यमित्यवसीयते।

तथा च बाधितविषयत्वम्। अन्वयव्यतिरेकयोः अन्यत्र उपयोगात् नैवमिति चेत्, तत्किमस्य स्मृतित्वे सिद्धेऽन्यत्रोपक्षयः कल्प्यते, उत एवमेव। नाद्यः, तदभावात् अस्मादेवानुमानात्तत्सिद्धौ अन्योन्याश्रयप्रसङ्गात्। न द्वितीयः, समीचीनरजतप्रत्ययेऽपि तथात्वप्रसङ्गात्। अन्यत्रोपक्षयः शङ्क्यत इति चेन्न। तथापि सन्दिग्धकालातीततानिस्तारात्। समीचीनरजतानुभवेऽपि कथमन्यत्रानुपक्षयो निश्चितो भवता।

अनुभवत्वनिश्चयादिति चेन्न। इन्द्रियव्यापारस्यान्यत्रोपयोगशङ्कया अनुभवत्वस्यापि सन्दिग्धत्वात्। पुरोवर्तिव्यवहारसंवादादनुभवत्वनिश्चयः। संवादानुभवस्याप्यनिश्चितत्वात्। असति बाधके न वृथा अन्यत्रोपक्षयः शंक्यत इति चेत्। समं प्रकृतेऽपीति।

एतेनाप्रत्युत्पन्नकारणप्रभवत्वं स्मृतित्वमित्यपि परास्तम्। संस्कारोत्पत्त्यनन्तरमेव जातायां स्मृतौ अनैकान्तिकत्वं च।

अनुभूतविषयत्वं स्मृतित्वमिति चेन्न। द्वितीयादिभ्रमे सिद्धसाधनत्वात्, साध्याविशिष्टताप्रसङ्गाच्च।

तत्तांशोल्लेखित्वं स्मृतित्वमिति चेन्न। अनुभवबाधितत्वात्। एतेन ज्ञानसंभिन्नार्थगोचरत्वमिति परास्तम्।





अनेनैव प्रतिपक्षानुमानद्वयमपि समाहितं वेदितव्यम् । नेदं स्मृतिरिति व्यवहर्तव्यम् । तत्रोल्लेखादिस्मृति-चिह्नविकलत्वादिति प्रथमप्रयोगे विवक्षितत्वात् । अत एव तिक्तगुडादिप्रत्ययप्रक्रियापि परास्ता ।

अन्यथाख्यातौ किं प्रमाणमिति चेत् अनुभव एवेति ब्रूमः ।

तथाहि पुरोवर्तिनि रजते रजतमिदमिति विशिष्टविषयमेकमेव विज्ञानं स्वप्रकाशतया वा मानसप्रत्यक्षतया वा साक्षिणा वा अवभासते ।

तथा इदमपीति कुतोऽस्य न विशिष्टविषयैकज्ञानत्वम् । न हि ततोऽस्य मात्रयापि विशेषं पश्यामः । दर्शने वा अस्मात्प्रवृत्तिर्न स्यात् ।

इयांस्तु विशेषः । एकं तादृग्विषयसद्भावात् यथार्थं तदभावात् अपरमयथार्थम् । विशिष्टविषयमनेकमपि ज्ञानं तद्विशिष्टविषयैकत्वेन प्रतिभासते इति चेन्न । अन्यस्यापि विशिष्टविषयैकत्वे समासाश्वासासंभवप्रसङ्गात् ।

विपर्ययाङ्गीकारप्रसक्तेश्च ।

नास्त्येव विशिष्टविषयैकत्वग्राहिप्रत्ययः इति चेन्न ।

अनुभवसिद्धज्ञानापलापे, स्मृत्यनुभवस्वरूपापलापप्रसङ्गात् ।

किञ्च रजतार्थिनः शुक्तिकायां प्रवृत्तिः अन्यथा अनुपपन्ना अन्यथाज्ञानमाक्षिपति ।

नन्वियं प्रवृत्तिः स्वरूपतो विषयतश्च अगृहीतभेदात् वेदनद्वयादुपपद्यते इति चेत् । कोऽयं भेदो नाम, किं स्वरूपं, उत पृथक्त्वं, उत अन्योन्याभावः, अथवा वैधर्म्यम् । न प्रथमः, स्वप्रकाशज्ञानज्ञेयप्रतिभासे तदनवभासा-नुपपत्तेः । न द्वितीयः । गुणे गुणानभ्युपगमात् । सर्वत्र भेदाग्रहसंभवेनान्यार्थिनोऽन्यत्र प्रवृत्तिप्रसङ्गात् । तृतीये वक्तव्यं किं इदंरजतत्वयोः अन्योन्याभावो नावभासते उत इदंरजतयोरिति । नाद्यः, अपर्यायशब्दस्मारकयोः जातिव्यक्त्योः तदनवभासासंभवात् ।

किञ्च अन्योन्याभावो नाम अन्योन्यस्वरूपमेव परस्य । तच्चोपलब्धमिति कथं तदनुपलंभः । अत एव न द्वितीयः । नापि चतुर्थः ।

रजतासंभविनः पुरोवर्तिनि इदंत्वस्य पुरोवर्त्यसंभविनश्च रजते रजतत्वस्य गृहीतत्वात् । इदंरजतत्वयोः असंसर्गाग्रहो विवक्षित इति चेन्न ।

असंसर्गो हि संसर्गस्याभावः, स च इदंरजतत्वयोः स्वरूपमेव परेषामिति कथं तदवभासे नावभासेत ।

विपर्ययाभ्युपगमवादिभिरपि भेदाग्रहो अभ्युपगमनीय एव ।





तत्रापि किं भेदः स्वरूपमित्याद्युक्तदोषः समान इति चेन्न। भेदस्य स्वरूपतावन्मात्रत्वानभ्युपगमात्। अथ मन्यसे पुरोवर्तिनो यः, शुक्तित्वादि धर्मो रजतव्यावर्तकः, यश्च रजते व्यवहितदेशत्वादिधर्मः पुरोवर्तिव्यावर्तकः तयोरग्रहणं प्रवर्तकमिति। तदसत्।

पुरोवर्तिनो हि शुक्तित्वाग्रहे शुक्तिकार्थी न तत्र प्रवर्तेत। रजतस्य चासन्निहितत्वादिधर्माग्रहे रजतार्थी न तत्र प्रवर्तताम्। रजतार्थिनः पुरोवर्तिनि प्रवृत्तिस्तु कुतः।

किञ्च भेदाग्रहादन्यार्थिनोऽन्यत्र प्रवृत्तिं आचक्षाणः प्रष्टव्यः।

किं अयमेव व्यवहारो भेदाग्रहादन्यस्त्वभेदग्रहात् उत सर्वोऽपि भेदग्रहादिति। नाद्यः। अनियतकारणतापातात्।

ननु च अभेदग्रह एव सर्वत्र प्रवर्तकः। तत्सारूप्यात् भेदाग्रहोऽपीति चेन्न। अनियतहेतुकत्वानिस्तारात्। अन्यथा कृशानुसदृशात् गुञ्जापुञ्जात् तच्छीतनिवृत्तिप्रसङ्गात्।

अपि चेदं ज्ञानद्वयं प्रवर्तकसादृश्यमात्रात् यदि प्रवृत्तिं उपजनयेत्, निवृत्तिमपि कुतो न जनयेत्। अस्ति हि तत्र निवर्तकभेदग्रहसारूप्यं अभेदाग्रहणम्।

ननु च यथा भेदाग्रहो भवतां, अभेदग्रहं जनयति तथा प्रवृत्तिमपि किं न जनयेदिति। मैवम्। वैषम्यात्।

ज्ञानजनने हि कारणानां स्वातन्त्र्यं न पुरुषस्य प्रवृत्तिजनने। तानि च यादृशसामग्रीमध्यपतितानि तादृशं ज्ञानं उपजनयन्ति। न तु पुरुषाकाङ्क्षां अपेक्षन्ते। हेयोपेक्षणीयज्ञानजननात्। प्रवृत्तौ तु पुरुष एव स्वतन्त्रो न ज्ञानम्। स हि सत्यपि ज्ञाने अपेक्षित एव प्रवर्तते। न तु ज्ञानं जातमित्येवोदासीनविपरीतयोरपि।

तथा च भेदाग्रहदोषकलुषितानि नयनादीनि विपर्ययं जनयन्ति।

नापि सर्वोऽपि व्यवहारो भेदाग्रहात्प्रवर्तते इति सांप्रतं कुत्रापि विशिष्टज्ञानाभावप्रसङ्गात्।

किञ्च, एवं सति सविकल्पकप्रत्यक्षोच्छेदप्रसङ्गः। असंसर्गाग्रहस्य वस्तुमात्रग्रहस्य च निर्विकल्पकज्ञानसाम्यात्। अतः संसर्गग्रहादेव सविकल्पकोपपत्तिः। न च निर्विकल्पकस्य प्रवर्तकत्वमस्ति।

प्रतिभासमानयोः जातिव्यक्त्योः असंसर्गाग्रहे सति संसर्गग्रहोऽवर्जनीयसन्निधिः इति चेन्न। उक्तविपर्ययस्यापि वक्तुं शक्यत्वात्।





अवश्यं चैतदेवम्। व्यवहारो हि व्यवहर्तव्योपलंभनिमित्तः युक्तः न तु व्यवहरणीयानुपलब्धिनिबन्धनः।

न हि घटव्यवहारो घटमतिमतिक्रम्य तद्विपर्ययाप्रतिभासे सति भवति।

तदमी प्रयोगाः। विमतो व्यवहारः व्यवहर्तव्यज्ञानपुरःसरः व्यवहारत्वात् घटव्यवहारवत्।

विवादपदं रजतज्ञानं, इदं ज्ञानान्न भिद्यते। प्रकाशमानात्ततो अप्रकाशमानभेदत्वे सति प्रकाशमानत्वात् संप्रतिपन्नरजतज्ञानवदित्यादयः।

किञ्च विपर्ययाभावे नेदं रजतमिति विवादपदं ज्ञानं पुरोवर्तिविषयं, तद्विषयव्यवहारजनकत्वात् संमतवत्। पुरोवर्ती वा रजतज्ञानगोचरः, रजतानुपायत्वे सति तदर्थिप्रवृत्तिविषयत्वात् सम्यग्रजतवत्।

ज्ञानस्य बाधकत्वमनुपपद्यमानं तं गमयति। न हि तथात्वे बाधकमस्ति। न तावदग्रहणनिवर्तकतया बाधकत्वं सर्वप्रत्ययानां तथात्वापातात्। तेषामपि प्रागभावनिवर्तकत्वात्। नापि व्यवहारविच्छेदकत्वेनातदर्थिनां व्यवहारानुपपत्तौ नेदं रजतमिति ज्ञानस्याबाधकत्वप्रसङ्गात्। व्याघ्रचोरादिज्ञानस्यापि प्रवृत्तिविच्छेदकत्वेन बाधकत्वप्रसक्तेश्च। न चार्थस्य व्यवहारयोग्यताविनाशकत्वेन समयान्तरेऽपि तत्र विभ्रमात् प्रवृत्त्यभावापत्तेः।

न च व्यवहारप्रतिबन्धकत्वेनाविवेकनिवृत्तौ कारणाभावादेव व्यवहारानुत्पत्तेः प्रतिबन्धककल्पनायोगात्। व्याघ्रादिदर्शनस्य बाधकतापत्तेश्च।

विमतं अयथार्थं बाध्यत्वात् व्यवहारवत् इति। अत एव भ्रान्तित्वप्रसिध्यापि विपर्यासप्रसिद्धिः। एवं च सति प्रत्ययत्वानुमानं कालात्ययापदिष्टं वेदितव्यम्। अदुष्टकरणजन्यत्वोपाधिग्रस्तं च।

एतेन रजतज्ञानत्वानुमानमपि निरस्तम्। अन्यथा विमतो व्यवहारः यथार्थः व्यवहारत्वात् संप्रतिपन्नवत्। रजतविषयो वा व्यवहारो यथार्थो भवितुमर्हति रजतव्यवहारत्वादित्यपि स्यात्।

यदपि ज्ञानत्वं यथार्थमात्रवृत्तीत्यादि। तत्र किमिदं ज्ञानत्वं सामान्यं वा प्रतिनियतं वा। नाद्यः। वादिप्रतिवादिनोराश्रयासिद्धेः। द्वितीये यथार्थज्ञानवृत्तिज्ञानत्वे सिद्धसाधनता।

विमतज्ञानवृत्तिज्ञानत्वपक्षीकारेऽपि मात्रेति व्यर्थं स्यात्। तत्त्यागेन च प्रतिज्ञाने प्रथमानुमानदोष एव।

किञ्च यथार्थमात्रवृत्तीत्ययथार्थावृत्तित्वमात्रं वा विवक्षितं उतायथार्थज्ञानावृत्तित्वम्। आद्ये सिद्धसाधनम्। अयथार्थव्यवहारावृत्तित्वस्य सिद्धत्वात्॥ द्वितीये परस्याप्रसिद्धविशेषणता। अदुष्टसामग्रीजन्यमात्रवृत्तित्वमुपाधिश्च।

यच्च शुक्तिकारजतत्वेन नावभासत इत्यादि । तदप्यसत् । मेरुः सर्षप इत्यादिवाक्यान्मेरोरपि सर्षपत्वेन प्रतिभासात् । दृष्टान्तस्य साध्यवैकल्यात् । अन्यथा तथाविधं वाक्याभासं श्रुतवता तत्प्रतिषेधो न क्रियेत, अप्रसक्तत्वात् ।

न हि पदार्थप्रतिषेधो युक्तः । यदपि इदं रजतताादात्म्यमित्यादि । तच्चायुक्तम् । तदप्रतीतावाश्रयासिद्धेः । प्रतीतौ व्याघातात् । दृष्टान्तस्य साध्यसमत्वाच्चेत्यास्तां विस्तरः ।

कश्चित् पुनरेवमाह । तासां त्रिवृतं त्रिवृतमेकैकामकरोदित्यादि श्रुतेः । समेत्यान्योन्यसंयोगमित्यादि-पुराणात्, त्र्यात्मकत्वादित्यादिसूत्राच्च सर्वस्य सर्वात्मकत्वं च प्रतीयते ।

किञ्च सोमाभावे पूतिकाग्रहणं व्रीह्यभावे च नीवारग्रहणम् । अन्यथानुपपद्यमानं पूतिकनीवारयोः सोमव्रीह्यवयवसद्भावं गमयति ।

अपि च वस्तुनो वस्त्वन्तरसादृश्यं प्रत्यक्षत एव प्रतीयते । न च तद्द्रव्यावयवयोगादन्यत्सादृश्यं नामास्ति । अतः शुक्तिकादिषु रजतादेः सद्भावाद्यथार्थ एवायं रजतप्रत्ययः । निर्देशव्यवस्थार्थक्रियाव्यवस्था च भूयस्त्वादुपपद्यते । दोषवशादिन्द्रियं भूयांसमप्यंशं परित्यज्याल्पीयांसमंशं प्रकाशयतीति रजतार्थिनः तत्र प्रवृत्तिरपि युज्यते । अपगते तु दोषे भूयस एवांशस्योपलंभे निवर्तते । बाध्यबाधकभावोऽपि ज्ञानयोरत एवोपपद्यते । पीतशङ्खादौ नयनवृत्ति-पित्तद्रव्यसंभिन्ना नायनरश्मयः शङ्खादिभिः संयुज्यन्ते । ततः पित्तगतपीतिमाभिभूतः शङ्खगतशुक्लिमा न गृह्यते । अतः सुवर्णानुलिप्तशङ्खवत् पीतः शङ्ख इति प्रतीयते । एवं स्वप्नस्फटिकलौहित्यमरीचिकाजलादिप्रत्ययाः सर्वेऽपि यथार्था बोद्धव्या इति ।

तदिदमयुक्तम् । तथा हि । न हि कारणसद्भावे कार्यसद्भावो नियतो येनोपपत्त्याऽपीममर्थं प्रतीमः । तथात्वे वा शुक्तौ रजतवत् सर्वस्यापि प्रतीतिः प्रसज्येत । अदृष्टादिवशान्नैवमिति चेन्न । कार्यनिश्चयोत्तरकालीनत्वादस्याः कल्पनायाः ।

श्रुतार्थापत्तिस्तु अत्यन्तायुक्ता । तथा हि । पूतिकादौ किं सोमाद्यवयवाः भूयांसः कल्प्यन्ते, उत समाः, अथाल्पीयांसः । आद्ये सोम एवासौ । तत्कथमनुकल्पः स्यात् । न हि सोमोऽपि केवलसोमः । किन्तु सोमांशभूयस्त्ववान् । न द्वितीयः । उभयदर्शनप्रसङ्गात् । तृतीये तत्कथं सोमकार्यं कुर्यात् । अन्यथा शुक्तिकापि कुतो रजतार्थक्रियां न कुर्यात् । श्रुतिप्रामाण्यात् तदर्थक्रियाकारिताऽगम्यत इति चेत् । किं तर्हि सोमावयव-सद्भावकल्पनया श्रुतिप्रामाण्यादेर्वा अत्यन्तविविक्तानामेव वस्तूनामर्थक्रियासाम्यमुपगम्यताम् । सादृश्यं च सामान्यं वा धर्मान्तरं वा नान्योन्यावयवसंयोग इति वक्ष्यामः ।

किञ्च घृततैलयोः अन्योन्यसदृशयोः अन्योन्यावयवसंयोगात् अन्योन्यार्थक्रियया भाव्यम् । न भाव्यं च विसदृशयोः द्रव्ययोः । किञ्च मातृमातङ्गमदिराद्यतिसादृश्यं भार्यादिष्वस्तीति तदुपभोगे प्रत्यवायः स्यात् ।





अल्पावयवयोगान्नैवमिति चेत् कथं तर्हि नीवारा व्रीहिकार्यं कुर्युः । श्रुतिप्रामाण्यादिति वदतो दत्तमुत्तरम् । अपरावयवसंयोग एव सादृश्यं चेत् कथं ककारखकारयोः सादृश्यमिति चिन्त्यम् ।

रजतार्थिनः शुक्तिकायां प्रवर्तकं च किं भूयसां शुक्त्यवयवानां अदर्शनम् । उताल्पीयसां रजतावयवानां दर्शनं उतोभयम् । नाद्यः । सुप्तस्यापि प्रवृत्तिप्रसङ्गात् । द्वितीये किं तेषां अल्पीयस्त्वज्ञानं उत भूयस्त्वज्ञानं अथवा ज्ञानमात्रम् । आद्ये तस्या रजतत्वमेव विदितमिति कथं ततः प्रवृत्तिः । द्वितीये अन्यथाख्यातिप्रसङ्गः । तृतीये सदृशामात्रे प्रवृत्तिप्रसक्तिः । न तृतीयः । किमपि तत्रास्तीति ज्ञानादपि प्रवृत्तिप्रसङ्गात् ॥

कथं वाऽस्य ज्ञानस्य भ्रान्तित्वम् । अल्पांशग्रहणादिति चेत् । नूनं ब्रह्मज्ञानमपि महाभ्रान्तिप्रायं नाम । अत एव न बाधस्य बाधकत्वमपि । पित्तगतपीतिमालिप्तश्चेच्छङ्खः कथं तर्हि न तथा पार्श्वस्थेन गृह्यते । सूक्ष्मत्वादिति चेत् । किमिदं सूक्ष्मत्वम् । अतीन्द्रियत्वं चेत् । न तर्हि भ्रान्तेनापि दृश्येत । अन्यच्चेत् किमनेन ।

पित्तोपहतेन तु सामीप्याद् दृश्यत इति चेत् । किमिदं सामीप्यं नाम इन्द्रियसन्निकर्षश्चेत् । स तर्हि उभयोः समानः । शरीरसामीप्यं चेत् । तदनुपयुक्तम् । अन्यथा परशरीरसमीपस्थानां दण्डकुण्डलादीनां अदर्शनप्रसङ्गात् । पीतः शङ्ख इति प्रतीयत इति कोऽर्थः । किं पीतरूपवत्तयेति उत पीतरूपद्रव्यसंयुक्ततयेति । नाद्यः । अन्यथाख्याति-प्रसङ्गात् । द्वितीये अनुभवविरोधः । अन्यस्तु मन्यते गृह्यमाणयोर्भेदाग्राहिसविकल्पकमेकविज्ञानं विभ्रमः । तथा हि । रजतसंस्कारदोषसचिवमिन्द्रियं शुक्तिशकलसन्निकृष्टं रजतशुक्तीदमंशविषयं तत्संसर्गासंसर्गौ अनवगाहमानमेकमेव सविकल्पकं ज्ञानमुत्पादयति । तथा च तयोरेकविज्ञानोपारोहिणोर्भेदाग्रहादयथार्थव्यवहारः । तन्निरासादेव विवेकज्ञानं बाधकमित्युच्यते । न पुनरन्यदन्यात्मना प्रतीयत इति । तदिदमनुपपन्नम् । विवेकाग्रहः किं सर्वत्र प्रवृत्तिहेतुः । उतात्रैवेति । प्रागुक्तविकल्पदोषाणां अशेषाणां अविशेषात् ।

किञ्च प्राभाकराणां वेदप्रामाण्यसिध्यङ्गतया अस्त्यख्यातिस्वीकारे प्रयोजनमिति विद्यते भ्रमः । कणभक्षाक्षचरणपक्षपातिना तु अतस्मिंस्तदिति प्रत्ययो विपर्यय इत्यादि पूर्वाचार्यवचनमनादृत्य परमतप्रमोषः कस्मादिष्यते । असत्ख्यातिपरिहारार्थमिति चेन्न । तथा सत्ययथाव्यवहारस्यापि परिहारप्रसङ्गात् । न ह्यसत्प्रत्येतु-मशक्यम् । शक्यं तु व्यवहर्तुमित्यत्र कारणविशेषोऽस्ति । व्यवहारः प्रतीतिसिद्ध इति चेत्तर्त्कि विशिष्टप्रत्ययो न प्रतीतिसिद्ध इत्यलम् ।

ननु विपर्ययाभ्युपगमे कथं वेदप्रामाण्यसिद्धिः । वेदजनितप्रत्ययेऽपि विपर्ययशङ्काप्रसरादिति चेन्न । तथा सति भेदाग्रहस्याप्यनङ्गीकार्यतापातात् ।

तथा हि । न तावद्वेदवाक्यं पदार्थेषु प्रमाणम् । तेषां अन्यतोधिगतत्वात् । नापि संसर्गे विनापि-संसर्गग्रहं असंसर्गाग्रहेणैव व्यवहारान् पश्यतो वेदजनितविज्ञानेऽपि शङ्काप्रसरात् । अपौरुषेयत्वादिना सा निरसिष्यते चेत् किं तर्हि सकललोकावसितविपर्यासनिरासेन तच्छङ्काया अपि अत एव निराकर्तुं शक्यत्वादिति । शुक्तिकैव रजततयाऽवभासत इति तावत्सिद्धम् ।

तत्रारोप्यमाणं रजतं सदेवेति केचिदातिष्ठन्ते । तथा हि । यद्धि यथावभासते तत्तथैवेत्यौत्सर्गिको न्यायः । अपवादस्तु बलवद्बाधकोपन्यासात् । तथा चेदं रजतं च तत्तादात्म्यं चेति त्रितयमिहावभासते । इदं च रजतत्वं च तत्संसर्गश्चेति वा । तत्र रजतरजतत्वयोरिदमंशस्य च बाधाभावान्नासत्त्वमुपपद्यते । संवादसद्भावाच्च । तत्तादात्म्यस्य संसर्गस्य वा बाधकाद्विसंवादाच्चासत्त्वमस्तु । यथोक्तम् । असंभवि च यावत्तु तावत्संपरिहीयतामिति ।

न च नेदं रजतमिति बाधबोधो रजतस्याप्यसत्त्वमावेदयतीति वाच्यम् । तस्य तादात्म्यमात्रगोचरत्वे-नोपपत्तौ रजतगोचरत्वकल्पनायां गौरवप्रसङ्गात् । यथाहुः । एकदेशापवादेन कल्प्यमाने च बाधके । न सर्वबाधनं युक्तमिति न्यायविदः स्थिता इति ।

किञ्च रजतस्यात्यन्तासत्त्वे प्रतिभासो नोपपद्यते । स्थिते चैवं सत्त्वे बाधसमये पुरोऽदर्शनाद्देशान्तरसत्त्व-मास्थीयते । दोषदूषितं चक्षुः शुक्तिकाशकलमात्रसन्निकृष्टमपि विप्रकृष्टरजतात्मना तद्दर्शयतीति को दोष इति । एतदप्ययुक्तम् । सत्त्वेति रजतस्यासदेव रजतं प्रत्यभादित्यनुभवविरोधात् । अत्रासत्त्वेऽपि अन्यत्र सत्त्वमङ्गीक्रियत इति चेन्न । अत्र प्रतीतस्यैवान्यत्र सत्त्वे मानाभावात् ।

तथा हि भ्रान्त्यनुभवो वा तत्र प्रमाणम्, बाधानुभवो वा, भ्रान्त्यनुपपत्तिर्बाधानुपपत्तिर्वा ।

नाद्यः । तस्याप्रमाणत्वात् । अत्रैव सत्तावेदकत्वाच्च ।

न द्वितीयः । तस्येह रजतनिषेधात्मनोरन्यत्र सत्त्वासत्त्वयोरौदासीन्यात् ।

न तृतीयः । भ्रान्तेः पुरोवर्ति इन्द्रियदोषादिभिर्विनानुपपद्यमानायास्तन्मात्राक्षेपहेतुत्वात् । असत्त्वे कथं प्रतीतिरिति चेत् । सत्त्वेऽपि कथम् ।

न ह्यन्यत्र सत्त्वमत्र प्रतीतेरुपकारि इन्द्रियसन्निकर्षार्थं वा तदास्थेयं संस्कारसिद्ध्यर्थं वा । नाद्यः । विप्रकृष्टेन सन्निकर्षाभावात् । पुरोवर्तिसन्निकर्षमात्रेणैव भ्रान्त्युत्पादाङ्गीकारात् । न द्वितीयः । संस्कारो हि रजतानुभवमाक्षिपेत् । अनुभवश्च यथार्थो रजतसत्त्वम् । अत्र प्रतीतस्यैवान्यत्र सत्ता वा कुतः कल्प्या ।

किञ्च घटान्तरं विनष्टोत्पत्स्यमानघटान्तरतया यदा प्रत्येति तदा कथम् । न हि विनष्टोत्पत्स्यमानयोरन्यत्र सत्तास्ति । कालान्तरेऽस्तीति चेत् सत्यम् । न तस्याभ्रान्तावुपयोगं साक्षात्पश्यामः । संस्कारादिना हि तदुपयोगः । स च रजतान्तरानुभवमात्रेणैव तद्भविष्यतीति व्यर्था तस्यैवान्यत्र सत्त्वकल्पना । एतेन प्रवृत्त्यनुपपत्तिरपि परास्ता ।

किञ्चासत्प्रतिभासासंभवे तादात्म्यमपि न प्रतिभासेत । तस्या कुत्राप्यभावात् । धर्मधर्मिभावस्तु वैधर्म्यमात्रम् ।





न चतुर्थः । बाधस्यान्यत्र सत्तया विनाऽनुपपत्त्यभावात् । अत्रैव रजतसत्तानिषेधानुपपत्त्याऽन्यत्र सत्त्वसिद्धिरिति चेन्न । तस्यात्रैव प्राप्तत्वेनोपपत्तेः ॥ एतेन यद्यथावभासते तत्तथैवेत्यादि परास्तम् । असदेव रजतं प्रत्यभादिति रजतासत्त्वप्रमाणस्योपन्यस्तत्वात् । तद्विषयसङ्कोचप्रमाणस्य च निरस्तत्वात् ।

किं सर्वत्रारोप्यमत्यन्तासदेव तत् उच्यते । यत्रारोप्यमधिष्ठानसन्निहितं तत्र तत्तादात्म्यमात्रमसत् । यथा दूरस्थयोः चूतपनसयोः एक एवायं चूत इति । बाधोत्तरकालमपि स्वरूपद्वयानुवृत्तेः । यत्र पुनरसन्निहितमारोप्यं तत्र तत् तत्तादात्म्यं च उभयमप्यसद्, उक्तन्यायेनेति । तदेवं नैवंविधान्यथाख्यातिवादोऽप्युपपन्नः ।

अपरे पुना रजतं सदेव किन्तु अन्तरेवेति मन्यन्ते । तथा हि न तावदसदेव रजतम् । प्रतीत्यनुपपत्तेः । नापि पुरत एव सत् । भ्रान्त्यनुपपत्तेः । बाधविरोधाच्च । न च देशान्तरे सत् । प्रमाणाभावात् । अतः परिशेषात् ज्ञानाकारमेवावतिष्ठते ।

किञ्चेदं ज्ञानरूपं इन्द्रियसंप्रयोगेऽसत्यपरोक्षत्वात् ज्ञानवत् । न च सत्यत्वे भ्रान्त्यनुपपत्तिः । आन्तरस्य बाह्यतयावभासो भ्रम इत्यङ्गीकारात् । तस्य नेदमिति बाह्यतानिषेधेनैव बाधकस्य बाधकत्वोपपत्तेरिति ।

एतच्चानुपपन्नम् । सत्त्वेऽसदेव रजतमित्यसत्त्वावेदकप्रत्ययविरोधस्योक्तत्वात् ।

असतः प्रतीत्यनुपपत्तौ च बहिष्ठताया अपि प्रतीत्यनुपपत्तिप्रसङ्गात् । तत्सत्त्वे भ्रान्तित्वानुपपत्तेः । बहिःसत्त्वमेवासत्प्रत्ययेन प्रतिषिध्यत इति चेन्न । आन्तरत्वे प्रमाणाभावात् । इन्द्रियसंप्रयोगमन्तरेणापरोक्षत्वस्य हेतोः बाह्यतायामनैकान्त्यात् । शुक्तिसंप्रयोगेणापरोक्षतायाः स्वीकारादसिद्धेश्च । दृष्टान्तश्च साधनविकलः । ज्ञानस्यापि इन्द्रियसंप्रयोगादेवापरोक्षताङ्गीकारात् ।

किञ्च गुञ्जापुञ्जादौ दहनादिसमारोपे तस्यान्तःसत्त्वे देहदाहादिप्रसङ्गः । अन्यथान्तरेऽपि तदसदित्यत्यन्तासदेवापन्नमिति नात्मख्यातिपक्षोऽप्युपपत्तिमान् ॥

अन्ये पुनः इदं रजतमिति प्रतीतिरसदालंबनैवेत्यास्थिताः । तथा हि । न तावदिदं सदेव बाधबोधविरोधात् । नापि तदसत् । तत्रैव तदैव तस्यैव सदसत्त्वविरोधात् । देशकालप्रकारव्यवस्थया सदसत्त्वाङ्गीकारे घटादितुल्यतापातात् । किञ्चैवं सति सदिदं रजतमिति ज्ञानं भ्रान्तिर्नैव भवेत् । सत्त्वस्य विद्यमानत्वात् ।

सदसदात्मकं सत्त्वेन विषयीकुर्वत्कथं न भ्रान्तिरिति चेत् । तत्किमेकदेशदर्शनं भ्रान्तिः । तथा च बाधकप्रत्ययोऽप्यसन्मात्रावलंबी न कथं भ्रान्तिः । सदेवेत्यसत्त्वनिषेधात् भ्रान्तित्वमिति चेत् । तर्ह्यसदेवेति सत्त्वप्रतिषेधात् बाधस्यापि भ्रान्तिताऽनिस्तारः । तस्मादसदेव विभ्रमालंबनम् ।





न चासतोऽवभासानुपपत्तिः विवेकाग्रहस्य निस्तरत्वात्। अन्यथाख्यातिवादिभिः असत एव तादात्म्यस्य संसर्गस्य वा प्रतिभासाभ्युपगमात्। विज्ञानाख्यातिवादिभिरपि असत्याया एव बाह्यतायाः प्रतीत्यङ्गीकारात्। सत एव प्रतीतिरिति पक्षे न भ्रान्तिर्नापि बाध इति।

अत्रेदं विवेचनीयम्। केयमसत्ख्यातिरिति। यदि सदेव शुक्तिकाशकलं सकलदेशकालासद्रजतात्मनावगाहमानं ज्ञानमिति तदाऽनुज्ञया वर्तामहे। यथोक्तम्। तस्माद्यदन्यथा सन्तमन्यथा प्रतिपद्यते। तन्निरालंबनं ज्ञानमसदालंबनं च तदिति॥

यदि पुनरिदं रजतमित्यवभासे चकासत् असदेवाखिलमिति। तदसत्। इदङ्कारास्पदस्य शुक्तिकाशकलस्य प्रागूर्ध्वं च सत्तावगमात्।

यदि च न तदिदङ्कारास्पदं तदा न भ्रान्तिबाधयोरङ्गुल्यग्रेण निर्दिशेत्, नोपादद्यान्न परित्यजेत्।

किञ्चास्य ज्ञानस्य कारणं वक्तव्यम्। दुष्टेन्द्रियादिकमिति चेन्न। तस्य सन्निकर्षाद्यनपेक्षस्य कारणतायामतिप्रसङ्गात्। असता च सन्निकर्षायोगात्। शुक्त्यादिना सन्निकर्षोऽस्तीति चेन्न। तथा सति तज्ज्ञानस्य अवर्जनीयत्वात्॥

अथ संवृतिरेव रजतादि प्रतिभासकारणं तदान्धस्यापि असन्निहितेऽपि शुक्तिशकले किं न स्यात्। अथ काचादिवच्छुक्तीन्द्रियसन्निकर्षोऽपि संवृतेः सहकारीति चेन्न। तथात्वे भूतलवच्छुक्तेरपि शुक्तित्वेनावभासप्रसङ्गात्। दोषनिमित्तः शुक्तित्वानवगमोऽपि कारणमिति चेन्न। अधिष्ठानत्वानभ्युपगमे भूतलशुक्तिशकलयोरविशेषेण कस्यानवगमः कारणमिति विवेक्तुमशक्यत्वात्। अपि चासदेव रजतमवभासमानं न तावदसत्तयैव अवभासते। अर्थक्रियानर्हे प्रवृत्त्यनुपपत्तेः। सत्तया प्रतिभासे त्वन्यथाख्यातिरङ्गीकृतेति शुक्तिरेव रूप्यतया अवभासत इति कुतो नाङ्गीकरणीयम्। तथा सति अङ्गुल्यग्रनिर्देशादयोऽप्यनुकूलिताः स्युः।

केशोण्ड्रकादिविभ्रमस्तर्हि कथमिति चेत्। सोऽपि तेजःप्रभृतिद्रव्यमालंब्यैवेति वदामः। तस्मात् नैवंविधासत्ख्यातिपक्षोऽपि साधीयान्॥

इति अख्यातिवादः समाप्तः॥

******





## अथ वेदप्रामाण्यवादः

अत्राहुः ॥ यदनृतं तदप्रमाणं दृष्टम् । यथोन्मत्तवाक्यम् । अनृतं च पुत्रकामः पुत्रकामेष्ट्या यजेतेत्यादि वेदवाक्यम् । कृतायामपीष्टौ पुत्रजन्मानुपलंभात् ।

युक्तिविरुद्धं चाप्रमाणम् । युक्तिविरुद्धं च मृदब्रवीदित्यादिवाक्यम् । स्वव्याहतं चाप्रमाणं दृष्टम् । स्वव्याहतं चोदिते होतव्यमनुदिते होतव्यमित्यादि ।

पुनरुक्तं चाप्रमाणम् । पुनरुक्तं च वेदवाक्यम् । शाखान्तरोक्तस्य शाखान्तरेऽभिधानात् । एकस्यामपि शाखायां वाक्यावृत्तिदर्शनात् । त्रिः प्रथमामन्वाह त्रिरुत्तमामिति स्वयमेव विधानाच्च ।

निरर्थकं चाप्रमाणम् । निरर्थकं च सृण्येवेत्यादिकम् ।

प्रमाणान्तरसिद्धार्थं च न प्रमाणम् । तथाविधं च अग्निर्हिमस्य भेषजमित्यादिवाक्यम् ।

एवं पुराणेऽप्यनृतत्वादीनि द्रष्टव्यानि । तद्दृष्टान्तेनाशेषस्यापि वेदादिभागस्याप्रामाण्यमनुमातव्यम् ।

किञ्च संवादादिरहितं विप्रलंभकादिवाक्यमप्रमाणम् । तथाविधं च वेदादिकम् । एवमनेकदोषग्रस्तत्वाद्वेदस्य प्रामाण्यं नास्तीति बौद्धमतम् ।

अत्र प्रष्टव्यम् । किमिदमनृतत्वम् । अर्थशून्यत्वं वा प्रमाणान्तरविसंवादो वा ।

नाद्यः । साध्याविशिष्टत्वात् । द्वितीयेऽपि विसंवादः किमापाततः सर्वथा वा । नाद्यः । तस्य सर्वत्र संभवेनानैकान्त्यात् । न द्वितीयः । सन्दिग्धासिद्धत्वात् ।

किमत्र सर्वथा प्रमाणविसंवाद एव उत वैगुण्यादिनिमित्तं फलादर्शनादिकमिति सन्देहापरिहारात् ।

व्याघातेनापि द्वयोरप्रामाण्यसाध्यमुतान्यतरस्य । नाद्यः । अन्यतरप्रामाण्येऽपि व्याघातसंभवेन सन्दिग्ध-कालातीतत्वस्यानैकान्तित्वस्य चापातात् । न द्वितीयः । पक्षीकृतस्यैव प्रामाण्यसंभवेन सन्दिग्धबाधानिस्तारात् ।

किञ्च व्याघातोऽप्यापाततः सर्वथा वा । नाद्यः अनैकान्त्यात् । द्वितीये सन्दिग्धासिद्धिः । किमत्र सर्वथा व्याघात एव उताधिकार्यादिभेदेन व्यवस्थेति सन्देहानिस्तारात् । पौनरुक्त्यं तु प्रमाणसंप्लवे व्यभिचारादप्रामाण्यस्य साधकं न भवति । व्यर्थत्वादिहेतुना अप्रामाण्यं कथञ्चित्साधयितुं शक्यते । व्यर्थत्वमप्यत्र नास्ति । किमिदं पुनरुक्तमेवोताधिकविवक्षादिनानुवादादिरूपमिति सन्दिग्धत्वात् ।





एतेन प्रमाणान्तरसिद्धार्थत्वमपि निरस्तम्। नैरर्थक्यमथापाततः सर्वथा वा। नाद्यः। अनैकान्त्यात्। न द्वितीयः। सन्दिग्धत्वात्। किमत्र शक्तितात्पर्यापरिज्ञानादर्थाप्रतिपत्तिः उत सर्वथा नैरर्थक्यादिति सन्देहात्। संवादराहित्यं च भागासिद्धम्। अग्निर्हिमस्येत्यादेरसंवाददर्शनात्। किमयथार्थत्वादेव संवादोऽत्र नास्ति। उतैतरस्य तदेकप्रमाणत्वादित्यन्यथासिद्धिसन्देहाच्च न प्रमाणमिति ॥

अस्त्वेवं हेतूनां सन्दिग्धासिद्धत्वादिना वेदाप्रामाण्यानिश्चयः। तथापि तत्सन्देहोऽस्त्येव। वैगुण्यादिनिमित्तत्वादेरनिश्चितत्वादिति। मैवम्। करणानां अप्रामाण्यं खल्वबोधकत्वं विपरीतबोधकत्वं वा।

तत्र शब्दस्याबोधकत्वं द्वेधा। पदाभिमतानां निरभिधेयत्वेन। साभिधेयत्वेऽप्यन्वयाभावेन चेति ॥ विपरीतबोधकत्वं विपरीतान्वयेन। तदिदं स्वतन्त्रवक्तृपुरुषदोषाधीनम्। न तु स्वभाव इत्यप्रामाण्यस्य परतस्त्वव्युत्पादानसमये वक्ष्यते।

पुरुषो ह्यज्ञानाद्विपरीतज्ञानात्प्रमादात् अपटुकरणत्वाद्वा निरभिधेयान् निरन्वयान्वा शब्दान्प्रयुङ्क्ते। प्रमादात् करणापटुत्वाद् विपरीतज्ञानात् उक्तहेतोः, विप्रलंभकत्वाद्वा विपरीतान्वयान्। एतदभावश्च द्वेधा संभवति। अपौरुषेयत्वेन वा वक्तुराप्तत्वेन वा विवक्षितार्थतत्त्वज्ञानादेराप्तिशब्दार्थत्वात् ॥

तत्र वेदस्यापौरुषेयत्वेन पुरुषदोषनिबन्धनदोषाभावात्। कारणाभावे च कार्यस्य शङ्कितुमशक्यत्वात् अप्रामाण्यं निश्चीयते। वेदो नाप्रमाणं अप्रामाण्यकारणदोषशून्यत्वात्। प्रत्यक्षादिवत्। शब्ददोषश्च पुरुषदोषाधीनः। तदन्वयव्यतिरेकानुविधायित्वात्। यद्यदन्वयव्यतिरेकानुविधायि तत्तदधीनं यथा पटस्तन्त्वधीनः। वेदो न पुरुषदोषनिबन्धनदोषवान् पुरुषाप्रणीतत्वात्। यद्येनाप्रणीतं वाक्यं न तत् तद्दोषप्रयुक्तदोषवत्। यथा यज्ञदत्ताप्रणीतं वाक्यं न यज्ञदत्तदोषप्रयुक्तदोषवदिति।

विपक्षे त्वकारणकार्योत्पत्तिप्रसङ्गः। वेदोऽप्रमाणं आप्ताप्रणीतवाक्यत्वात् उन्मत्तवाक्यवदिति चेन्न। वाक्यत्वावच्छिन्ने साध्येऽनाप्तप्रणीतत्वस्य केवले वा अप्रामाण्यकारणदोषवत्त्वस्योपाधित्वात्। अनाप्तप्रणीतत्वं उपाधिः। पुराणानां प्रामाण्यं तु इतिहासपुराणः पञ्चमो वेदानां वेद इति वेदेन वेदसमानतया गृहीतत्वात्। अपौरुषेयवाक्यमस्तीति कथमुपपन्नम्। वाक्यत्वापौरुषेयत्वयोः परस्परपरिहारेणैव व्याप्त्युपलंभात्। न च तत्साधनमपि युक्तं संभावितस्यैव। साधनीयत्वादिति चेन्न। अपौरुषेयवाक्यानङ्गीकारे धर्माद्यसिद्धिप्रसङ्गात्सर्वैः समयिभिः धर्मादिनिश्चयार्थं किमप्यपौरुषेयं वाक्यं अङ्गीकार्यम्। धर्मादेः प्रमाणान्तरावेद्यत्वात्। ततश्च कथं वेदोऽपौरुषेयः इत्येतत् असंभावितमित्यभिप्रायः ॥ **लोकायतपक्षप्रतिक्षेपः** ॥

चार्वाकशास्त्रं नोपादेयं विषयाद्यभावात् काकदन्तपरीक्षाग्रन्थवत्।

तथा हि। न तावल्लोकायतशास्त्रस्य ऐन्द्रियको विषयः प्रत्यक्षत एव तत्सिद्धौ शास्त्रानपेक्षणात्। फलमपि न दृष्टमर्थादिकं तस्यान्यतो लभ्यत्वात्। अतः संबन्धोऽपि नास्ति। अतो धर्मादिकं अतीन्द्रियं विषयत्वेन,





स्वर्गापवर्गादिकं च फलत्वेन अङ्गीकार्यम् । यद्येवं नाङ्गीक्रियते तर्हि तत्समयस्याशास्त्रत्वं स्यात् । वक्तृश्रोत्रोरभिमतं अनन्यसाध्यं फलमधिकृत्य तद्धेतुभूतं प्रमाणान्तराप्राप्तमर्थं प्रतिपादयतां वाक्यानां समूहो हि शास्त्रमित्युच्यते । एवं चाशास्त्रत्वापत्तौ तस्याशास्त्रित्वं प्रसज्येत ॥

ननु लोकायतशास्त्रस्य धर्माद्यभावो विषयः । तत्प्रतिपादनेन धर्मादिसद्भावभ्रान्तिनिवृत्तिः । तत्फलं च लोकस्य निरङ्कुशः कामोपभोगः दुःखनिवृत्तिश्च । शास्त्रप्रणेतुश्च लोकोपकारः फलम् । उपकृताश्च लोकाः अनुरागिणो भवन्ति उक्तं च जनानुरागप्रभवाश्च संपद इति ।

एतदप्यसत् । धर्माधर्माभावज्ञाने परस्परहिंसादिनापकारस्यैव प्राप्तेः । किञ्च चार्वाकस्य धर्माद्यभावसंभावना उताऽभावनिश्चयः । आद्ये न तत्र प्रवर्तेत नापि ततो निवर्तेत । द्वितीये कुतो निश्चय इति वाच्यम् । घटाद्यभाव-निश्चयवत् प्रत्यक्षेणैव धर्माद्यभावनिश्चय इति चेन्न । अयोग्यतया चक्षुषा रसस्यैव प्रत्यक्षेण सतोऽप्यग्रहणोपपत्तेः ।

सत्यां तु वादिविप्रतिपत्तौ सति चायोग्यतया क्वचिदनुपलंभे प्रत्यक्षानुपलब्धिः संशयमेव संपादयति । किमनुपलंभान्नास्त्येव धर्मादिकं उत वाद्यन्तरोक्तरीत्या चक्षुषानुपलभ्यमानोऽपि रसो रसनेनैवायोग्यतया प्रत्यक्षेण अनुपलभ्यमानमपि प्रमाणान्तरादस्तीति ।

तथा चैतत्संशयनिरासार्थमप्यागमादिकं प्रमाणमङ्गीकार्यम् तथा सति तेनैव सुकरं धर्मादिसाधनम् ।

किञ्चागमादिप्रामाण्याभावे लोकव्यवहारोच्छेदः प्रसज्येत ।

ननु संभावनामात्रेण तत्सिद्धिः । संवादेन च प्रामाण्याभिमान इति चेत् । एवं तर्ह्यागमादिकं ज्ञानमुत्पादयति । तच्च संवादीत्यङ्गीकृतम् । किमतोऽधिकं प्रामाण्यं नाम, यन्नाङ्गीक्रियते । तदेवं चार्वाकेणापि धर्मादिकमङ्गीकार्यमिति स्थितम् ॥ **इति चार्वाकनिरासः** ॥

धर्मादिकं बुद्धऋषभेश्वररचनात्सिध्यति । तच्च तेषां सार्वज्ञादुपपन्नमित्येतदप्ययुक्तम् ।

तथा हि । न तावत्तदीये सार्वज्ञे अस्माकं प्रत्यक्षमस्ति । अस्माकमपि तत्प्रसङ्गात् । सर्वं हि ज्ञात्वा तदीयज्ञानस्य तद्विषयत्वं प्रत्यक्षेण ज्ञातव्यम् । न चास्माकं सार्वज्ञमस्ति । तथात्वे बौद्धादिकल्पनावैयर्थ्यात् ।

नाप्यनुमानम् । यद्धि येन धर्मेण व्याप्तमन्यत्रोपलब्धं तत् तस्यैव गमकं भवति । न च सर्वज्ञत्वं अन्यत्र दृष्टम् । येनानुमानस्य व्याप्तिर्गृह्येत ।

नाप्यागमः । अपौरुषेयस्य तस्यानङ्गीकारात् । पौरुषेयोऽपि किं सर्वज्ञप्रणीतो उत अन्यप्रणीतः । नान्त्यः । अनाश्वासात् । आद्येऽपि किं तेनैव प्रणीतः उत सर्वज्ञान्तरप्रणीतः । नाद्यः । इतरेतराश्रयप्रसङ्गात् । यस्य सार्वज्ञसिद्धौ





तत्प्रणीतागमस्य प्रामाण्यसिद्धिः । तेन च तस्य सार्वज्ञसिद्धिरिति । अन्यथास्मद्वाक्येनैवास्माकमपि तत्सिध्येत् । न द्वितीयः । पुरुषान्तरे सार्वज्ञस्यादृष्टत्वात् । सर्वज्ञान्तरवाक्येन तत्कल्पनेऽनवस्थितेः ।

नाप्युपमानम् । तद्धि स इवायमित्येवम्, एतत्सदृशोऽसाविति वोत्पद्येत । न चान्यत्र सार्वज्ञं प्रमितं येनोपमानस्योदयः स्यात् ।

नाप्यर्थापत्तिः । अनुपपत्त्यभावात् । बुद्धस्य धर्मातिदेशनं महाजनपरिगृहीतत्वं वा अनुपपद्यमानं सार्वज्ञं गमयतीति चेत् । तर्हि जिनस्यापि तत्स्यात् । न चास्त्विति वाच्यम् । विप्रतिपत्त्यभावप्रसङ्गात् ।

नाप्यभावः । तस्य भावविषयतायाः क्वाप्यदृष्टत्वात् ॥ * * * ॥

आर्हतास्त्वाहुः । कश्चिदात्मा सकलपदार्थसाक्षात्कारी तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धत्वात् ।

यदेवं तदेवं यथा अपगततिमिरादिप्रतिबन्धं लोचनविज्ञानं रूपसाक्षात्कारीति । तदसत् । पक्षस्याप्य-प्रसिद्धविशेषणत्वात् तद्ग्रहणस्वभावत्वं च किं विवक्षितस्यैवात्मनः अङ्गीक्रियते । किं सर्वेषां वा । नाद्यः । अन्यत्रा-दृष्टत्वेनात्मत्वात्तत्रापि तदभावसाधनसौलभ्यात् । न द्वितीयः अस्मदादौ तद्ग्रहणस्वभावत्वस्य प्रमाणादृष्टत्वात् । व्याप्तिज्ञानं सर्वविषयं सर्वात्मनां स्वभावो दृश्यत इति चेन्न । परोक्षसामान्यज्ञानस्वभावत्वेन अपरोक्षविशेष-ज्ञानसाधनस्यातिप्रसङ्गित्वात् । दृष्टान्तस्य साधनविकलत्वाच्च । न हि लोचनविज्ञानं रसादिसकलपदार्थसाक्षात्कार-स्वभाववत् । येनारोप्यादन्यत्र प्रतिबन्धकल्पने प्रतिबन्धासंभवाच्च । तत्पक्षेऽप्यनुपपन्नं इति साधनविकलः ॥

किञ्चान्यत्रादृष्टस्यावरणप्रक्षयस्य विवक्षितेऽप्यात्मनि कुतः सिद्धिः । विमतमावरणं, आव्रियमाणे सत्यपि स्वयं नाशवत्, आवरणत्वात् मेघवदिति चेन्न । दुर्गमप्रदेशगततिमिरादौ व्यभिचारात् । कमनीयकान्तास्पर्शादावपि रागाद्यनुदयात् प्रक्षीणप्रतिबन्धकत्वसिद्धिरिति चेन्न । तदनिश्चयात् ।

बाह्यविक्रियाभावेन तन्निश्चय इति चेत् जगद्वशीकरणार्थं स्थैर्येण स्थगनसंभवात् ।

दृष्टान्तस्य साध्यविकलत्वं च । लोचनविज्ञानस्य साक्षात्कारत्वात् । विमतः आत्मा सर्वज्ञो न भवति आत्मत्वात् देवदत्तवत् सत्प्रतिपक्षश्च ॥ **इति आर्हतमतनिरासः** ॥

ननु धर्मादिकं कस्यचित् प्रत्यक्षं प्रमेयत्वात् घटवत् इति सार्वज्ञे मानमिति चेन्न । प्रमेयत्वेन विप्रतिपन्नधर्मान्तरसाधनापातात् । किमिदं प्रमेयत्वं द्रव्यं गुणो वा उत आहोस्वित् सामान्यं विशेषो वा । यद्वा समवायः अभावो वा । नाद्यः । निर्गुणत्वात् अस्वतन्त्रत्वाच्च । न द्वितीयतृतीयौ । गुणादावपि वृत्तेः । न चतुर्थः । केवलान्वयि धर्मत्वात् । उपाधित्वेऽपि क्वचित् अन्तर्भावस्यापेक्षितत्वात् । नापि विशेषः । अनित्येऽपि वृत्तेः । न षष्ठः । असंबन्धत्वात् । न सप्तमः । प्रतियोगिनिरपेक्षत्वात् ।





प्रमेयस्य भावः प्रमेयत्वं न तु ततोऽतिरिक्तमिति चेत् । भावभवित्रोः अभेदे पुनरुक्तदोषानतिवृत्तेः । भावस्य भवितुः पृथगभावे तच्छब्दयोः पर्यायतापातात् । एवं परत्वादिगुणानां च दत्तजलाञ्जलिता स्यात् । प्रमातद्विषयतत्संबन्धेषु अन्तर्भावोऽस्तीति चेन्न । प्रमाप्रमेययोः संबन्धस्यैव दुर्निरूपत्वात् । न ह्यात्मगुणस्यान्येन समवायः संयोगो वा संभवति । विषयविषयिभाव एवेति चेन्न । तस्यापि अन्तर्भाव्यत्वात् । अन्तर्भाव्यस्य चोक्तदोषलङ्घनाजङ्घालत्वात् ।

आर्हतानामप्येवमेवानुमानं धर्मादिकं कस्यचित् प्रत्यक्षं वस्तुत्वादिति । अत्रोत्तरं धमदिः प्रत्यक्षमात्रं साध्यते उतैकपुरुषप्रत्यक्षत्वम् । आद्ये अर्थान्तरम् । कस्यचित् केनचित् प्रत्यक्षीकृतत्वेनापि प्रतिज्ञातार्थस्य सिद्धेः । न द्वितीयः । दृष्टान्तेऽदुष्टत्वात् । न च पक्षातिरिक्तस्य सर्वस्यैकपुरुषप्रत्यक्षत्वं संमतम् । दृष्टान्तभूतानां घटानामानन्त्येनैकेन परोक्षीकर्तुमशक्यत्वात् ।

यथा एको घटः एकस्य प्रत्यक्षः एवमत्रापि इति चेत् । तर्हि दृष्टान्तानुकूल्येन धर्मः कस्यचित् प्रत्यक्षोऽधर्मश्च परस्येति प्रतिज्ञातार्थः स्यात् । तथा च पुनः अर्थान्तरत्वम् ।

धर्मं पश्यन् अधर्मं कथं न पश्यतीति चेत् किमियं संभावना अथानुमानम् । नाद्यः असाधकत्वात् । न द्वितीयः व्याप्त्यभावात् ।

योऽशक्यमेकं करोति सोऽपरमपीति व्याप्तिरिति चेन्न । कण्टकान् भक्षयितरि उष्ट्रे कदलीफलभक्षणस्य अदृष्टत्वात् । धर्मादिज्ञानेनैव प्रकृतोपयोगात् किं कीटकसङ्ख्यापरिज्ञानेनेति चेन्न । धर्मादिसाध्यसाधनाद्यपरिज्ञाने धर्मादिज्ञानस्यानुपयुक्तत्वादिति ।

ननु क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवदिति क्षित्यादेः कर्तरि सिद्धे तस्य सार्वज्ञमपि सिद्धमेव । उपादानादि साक्षात्कारवत एव कर्तृत्वात् । सर्वस्यापि क्षित्याद्युपादानादौ प्रविष्टत्वादिति चेन्न । घटादीनां कर्तरि कुलालादौ तदुपादानादिविषयविषयकसाक्षात्कारस्यादृष्टत्वात् ।

न हि कुलालो घटं पलपरिमाणेयत्ताविशेषवन्तं तं वा कालं देशं अदृष्टं तदाश्रयं वा साक्षात्करोति । किञ्च घटादौ सपक्षेऽदृष्टस्यैककर्तृकत्वस्य क्षित्यादौ कुतः सिद्धिः । यतः तस्य सार्वज्ञं स्यात् । कल्पनालाघवादिति चेन्न । अतिबहुतरकार्यजातस्यानेककर्तृकताया एवोचितत्वात् ।

किञ्च घटादौ शरीरजन्यत्वस्योपाधेः सत्त्वात् । शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्षत्वाच्च ।

एवं सार्वज्ञासिद्धौ तस्य अविप्रलंभकत्वमपि अप्रामाणिकं कल्प्यमेव । सार्वज्ञेऽपि कुतो विप्रलंभाभावः । रागाद्यभावादिति चेन्न । तद्रहितेषु अपि बुद्धादिषु ईश्वरावतारेषु दर्शनात् । वीतरागाणामपि ज्ञानाङ्कुरसंरक्षणार्थं छलादिना प्रतिवादिप्रतारणस्य सर्वैरङ्गीकृतत्वाच्च ।





एवं पटुकरणत्वादिकं कल्प्यमेव । किञ्चास्तु कश्चित् सर्वज्ञोऽविप्रलंभकश्च । तथापि धर्मादिप्रतिपादकस्य वाक्यविशेषस्य तत्कर्तृकत्वं कुतः सिद्धम् । नह्येवंविधः संसारमग्नान् जन्तून् अवलोकयन्नानुपदिश्य स्थातुमर्हतीति चेन्न । एवं भूतानामपि सिद्धानां उदासीनानां अङ्गीकृतत्वात् ।

एवं कस्यचित्सार्वज्ञकल्पनं तस्याविप्रलंभकत्वकल्पनं धर्मादिविषयवाक्यस्य तत्कृतत्वकल्पनं चेति कल्पनागौरवप्रसङ्गेन न पौरुषेयेण वाक्येन धर्मादिनिश्चयः ॥

ननु अपौरुषेयवाक्याङ्गीकारेऽपि कल्पनागौरवं सममेवेति चेन्न । पौरुषेयवाक्येन धर्मादिनिश्चयपक्षे यथा बहुतरकल्पनापक्षे यथा बहुतरकल्पनात्र तथास्ति अपौरुषेयत्वस्यैव कल्प्यत्वात् । एवं सर्वसमयिभिरपौरुषेय-वाक्यस्याङ्गीकार्यत्वात् । वेदवाक्यस्यापौरुषेयत्वं नासंभावितमिति ।

वेदोऽपौरुषेयोऽप्रमितकर्तृकत्वात् गगनवत् । ननु यथा गिरिदरीवर्तिनस्तृणाङ्कुरस्याप्रमितस्य कर्तुः सद्भावः शङ्क्यते । एवमप्रमितस्यापि वेदस्य कर्तारं शङ्कमानः किं धर्मादिकं अङ्गीकरोति न वा । नेति पक्षे न समयी स्यात् । आद्ये तन्निश्चयः केनेति ब्रूमः । न तावत् अनुमानेन निरस्तत्वात् । बुद्धवाक्येन वा अपौरुषेयवाक्यान्तरकल्पनया वा उभयथापि कल्पनागौरवं स्यात् । अतो वेदस्य कर्ता न शङ्कनीयः ।

कल्पनागौरवप्रसङ्गेन कर्तुरकल्पने वेदस्याकर्तृकत्वं सिद्धमेव ।

धर्माद्यङ्गीकारवता वेदस्याप्रमितोऽपि कर्ता यथा शङ्क्यते तर्हि धर्मादिनिश्चयार्थं प्रमाणान्तराकाङ्क्षायां कल्पनागौरवं स्यादित्यनुमानस्य अनुकूलतर्कः ।

नन्वसिद्धं वेदस्याप्रमितकर्तृत्वं वेदः सकर्तृकः वाक्यत्वात् लौकिकवाक्यवदित्यनुमानेन वेदकर्तुः प्रमित-त्वादिति चेन्न । वाक्यत्वादौ समानेऽपि अस्य वेदत्वादकर्तृकत्वं भवतु जन्यस्य तदभावात्सकर्तृकत्वमस्त्वित्या-शङ्कायां बाधकाभावेन वाक्यत्वस्य अप्रयोजकत्वात् ॥

वेदत्वं नाम अनुपलभ्यमानप्रत्यक्षादिप्रमाणविप्रलंभादिमूलत्वम् । एतच्च उदयनेनापि अङ्गीकृतम् । अनुपलभ्यमानमूलत्वे सति महाजनपरिगृहीतवाक्यत्वं वेदत्वमिति । आद्यविशेषणेन प्रमाणमूलस्य द्वितीयेन विप्रलंभादि मूलत्वस्य च व्यावर्तितत्वात् ।

नन्वेतद्वेदलक्षणं गूढकर्तृके व्यभिचरति इति चेन्न । तस्य चाध्येतृपरंपराभावेन यस्मिन् विच्छेदः तदीय-प्रत्यक्षादिमूलत्वस्यानुमातुं शङ्क्यत्वात् ।

विमतं वाक्यं एतत्प्रत्यक्षादिमूलं अस्मिन् विच्छिन्नपरंपरात्वात् । यद्यस्मिन् विच्छिन्नपरंपरं वाक्यं तत् तत्प्रत्यक्षादिमूलं यथा संप्रतिपन्नमिति ।





परंपरा नाम अध्येतॄणामध्यापकानां च पूर्वतनमेवेदमधीमहे अध्यापयामश्चेति प्रतिपत्तिः । न तु अध्ययनाविच्छेदः । अतो ऋषिभिः दृष्टशाखासु विच्छिन्नपरंपरात्वं न कल्पनीयम् । मुनिभिर्दृष्टानामपि प्राक् नेमे वेदाः इति प्रतिपत्तिविषयत्वात् । अतो नानैकान्त्यम् ।

गूढकर्तापि पूर्वतनमेवेदमधीयत इति यद्यनृतं वदति तर्हि कथं निश्चय इति चेन्न । वेदद्रष्टॄणां विंशल्लक्षणतोऽनून इत्युक्तलक्षणवत्वात् । गूढकर्तरि एतल्लक्षणाभावे तद्वचनस्य अनृतत्वं निश्चीयते । अथवा वेदत्वाभावः वाक्यत्वानुमानस्योपाधिः । एवं चाप्रयोजकः अन्यथासिद्धः व्याप्यत्वासिद्धो वा वाक्यत्वादिहेतुरिति ।

यदि वेदस्य सकर्तृत्वमङ्गीक्रियते तर्हि कर्तुः सर्वज्ञादिकल्पनागौरवं स्यादिति । तर्कपराहतं च वाक्यत्वानुमानम् । तेन वेदाः सर्वज्ञप्रणीताः वेदत्वात् व्यतिरेकेण लौकिकवाक्यवदित्यपास्तम् । वेदत्वस्य पामरप्रणीतवाक्यादौ साम्यात् । विपक्षे बाधकाभावेनाप्रयोजकत्वाच्च । किञ्च वेदस्य सर्वज्ञप्रणीतत्वनिश्चये सति प्रामाण्यनिश्चयः तन्निश्चये च सर्वज्ञत्वनिश्चयः । ततश्च विशेषणप्रसिध्याऽनुमानप्रवृत्तौ वेदप्रामाण्यनिश्चय इति चक्रकप्रसङ्गः ॥

**अपौरुषेयत्ववादः समाप्तः ॥**

वेदः आप्तप्रणीतः प्रमाणवाक्यत्वादिति चेन्न । वेदानित्यत्वे प्रामाण्यविवादात् । यदुक्तं वाक्यत्वानुमानं विपक्षे बाधकाभावेन अप्रयोजकमिति । तदसत् । तथा हि संवादेन खलु प्रमाणानां प्रामाण्यमनुमातव्यम् । संवादश्च सजातीयेन विजातीयेन वा भवति । तत्र वेदस्य न तावत् सजातीयसंवादोऽस्ति । सदागमैकविज्ञेयमिति तद्विषयस्य प्रमाणान्तरागोचरत्वाभ्युपगमात् । नाप्यर्थक्रियासामर्थ्यादिकं विजातीयमस्ति । मोक्षादेः प्रत्यक्षाद्यवेद्यत्वात् । तथा च आप्तोक्तत्वेनैव तत्प्रामाण्यमनुमातव्यम् । प्रमाणजन्यत्वेनैव तज्जन्यज्ञानप्रामाण्यमपि । ततश्च वेदस्य अकर्तृकत्वे प्रामाण्यासिद्धिप्रसङ्गस्य बाधकस्य विद्यमानत्वात् । कथं अप्रयोजकत्वं वाक्यत्वाद्यनुमानस्य । अत एवाकर्तृकत्वाद्यनुमानमपि प्रतिकूलतर्कपराहतम् । उपाधेरपि साध्यव्यापकताभङ्गः सिध्यति । यथोक्तम् । अनुकूलेन तर्केण सनाथे सति साधने । साध्यव्यापकताभङ्गात् पक्षे नोपाधिसंभवः । अत्राह । प्रामाण्यं च स्वत एवेति । ज्ञानजनकातिरिक्तजनकानपेक्षत्वमुत्पत्तौ स्वतस्त्वम् । ग्राहकातिरिक्तग्राहकानपेक्षत्वं ज्ञप्तौ स्वतस्त्वम् । ज्ञानं साक्षिप्रत्यक्षवेद्यम् । तत्प्रामाण्यमपि । इन्द्रियशब्दलिङ्गानां तु यथार्थज्ञानसाधनत्वलक्षणं प्रामाण्यमन्वयव्यतिरेकावसेयम् । तथा च कुत्रापि प्रामाण्यग्रहणे नाप्तोक्तत्वादेरुपयोग इति ।

किञ्च यदि प्रामाण्यं संवादादेव ज्ञायते तत्संवादकप्रामाण्यमपि संवादान्तरेण ज्ञायते स्वत एव वा । आद्ये तदप्येवमेव इत्यनवस्था स्यात् । द्वितीये परंपराकल्पनं व्यर्थं स्यात् । आद्यप्रामाण्यस्यैव तथात्वाङ्गीकारोपपत्तेः । अतः परिशेषात् स्वतस्त्वसिद्धिः ॥







तथा च प्रयोगः । ज्ञानगतयाथार्थ्यं तद्ग्राहकेणैव ग्राह्यम् । ग्राहकान्तरानुपपत्तौ सत्यां गृह्यमाणत्वात् । यद्यतोऽन्येनानुपपद्यमानग्रहणं गृह्यते तत्तेनैव ग्राह्यम् । यथा चक्षुंषोऽन्येनानुपपद्यमानसाक्षात्कारं साक्षात्क्रियमाणं रूपं चक्षुषैव साक्षात्क्रियत इति ।

न च विशेषणासिद्धिः । ग्राहकान्तरस्यानवस्थाप्रसङ्गेन निरस्तत्वात् ।

न च साक्षिवेद्यत्वेऽप्यनवस्थाप्रसङ्गः समान इति वाच्यम् । साक्षी स्वयं प्रकाशः स्वात्मानं स्वप्रामाण्यं च गोचरयतीति अङ्गीकारात् ।

ज्ञानस्यैव तथाभावोऽभ्युपगम्यतामिति चेन्न । अन्तःकरणवृत्तेः जन्यत्वेन (जडत्वेन) स्वयं प्रकाशत्वायोगात् ।

ननु प्रामाण्यं परतो ज्ञायतेऽनभ्यासदशायां सांशयिकत्वादप्रामाण्यवत् । अप्रामाण्यं हि ज्ञानग्राहकातिरिक्तेन विसंवादादिना लिङ्गेनानुमीयत इति । एतदप्यनवस्थालक्षणप्रतिकूलतर्कपराहतं अनुकूलतर्कशून्यं च । संशयस्य दोषादेवोपपत्तेः ।

स्वतस्त्वेनाभ्युपगतोपमानप्रामाण्येऽपि संशयदर्शनाच्च । बुद्धिदोषाभावेनानभ्यासदशापन्नज्ञानप्रामाण्यस्यापि निष्कंपस्यैव प्रतीयमानत्वाद्धेतोः असिद्धिः ।

ननु प्रामाण्यस्य स्वतस्त्वे कथं तत्र निर्दोषत्वादि युक्त्यनुसरणम् । उच्यते । साक्ष्येव ज्ञानं तत्प्रामाण्यं च विषयीकर्तुं क्षमः । कारणान्तरोपनिपातजेन मानसापराधेन प्रतिबद्धो ज्ञानमात्रं गृहीत्वा प्रामाण्यग्रहणस्य नेष्टे । यथा स्वयमेव गतिसमर्थोऽपि गजो गोक्षुरकादिना प्रतिबद्धो न चलितुं क्षमते । तत्र तु युक्त्यनुसन्धानलक्षणपरीक्षावसरः । सा च बुद्धिदोषमात्रं निरस्यति । तस्मिन् निरस्ते साक्षी स्वमहिम्नैव प्रामाण्यं गोचरयति । यथा गोक्षुरकाद्यपसरणे स्वयमेव गजो गच्छति । ततः प्राचीनो युक्त्युपन्यासः साक्षिणः प्रामाण्यग्रहणप्रतिबन्धकबुद्धिदोषनिरासार्थमेव कृतो न तु प्रामाण्यज्ञानार्थमिति ।

एतेनैवैतदपि निरस्तम् । यदाहोदयनः । यदि प्रामाण्यं स्वतो ज्ञायेत तदा कदाचिदपि प्रामाण्यसंशयो न स्यात् । ज्ञानत्वसंशयवदिति । प्रामाण्यस्वतस्त्वेऽपि संशयसंभवात् । धर्म्युपलब्धावपि व्याघातादिदर्शनेन साक्षिणि प्रतिबुद्धे प्रामाण्यविषये मनसि संशयाद्युपपत्तेः ।

यस्मिन्सत्येव यद्भवति नासति तत्खलु तस्य कारणम् । सतीष्वेव च युक्तिषु बुद्धिदोषनिरासो भवति नासतीषु । प्रामाण्यं तु अनृतव्याघाताद्यनुसन्धानरूपबुद्धिदोषरहितानां पुंसां युक्त्यपेक्षां विनैव सिद्धमित्यनुभवसिद्धम् ।





ननु प्रामाण्यस्य परतस्त्वे संवादपरंपरयाऽनवस्था स्यादिति यदुक्तं तन्न। कदाचित्प्रामाण्यजिज्ञासायामेव संवादापेक्षणादिति चेत्। मैवम्। निश्शङ्कप्रवृत्तौ च अवश्यवेद्यत्वात्।

ज्ञाने हि जाते तत्प्रामाण्यानुपलब्धौ कथं संशयो न स्यात्। सति च प्रामाण्यसंशयेऽर्थसंशयोऽपि कथं न भवेत्। तथा च कथं निःशङ्का प्रवृत्तिः स्यात्।

यद्यपि लोके संशयतोऽपि प्रवृत्तिर्भवति। तथापि बहुतरशरीरायासवित्तव्ययादिसाध्यपारत्रिकी प्रवृत्तिः न तथा भवितुमर्हति। यावच्छङ्कमेव संवादापेक्षणात् नानवस्थेति चेत्। तत्र वक्तव्यम्। किञ्च संशयः सर्वत्रानुवर्तते क्वचिन्नोत्पद्यत एव वा। आद्ये कथमनवस्थाभावः। द्वितीयः निरस्तप्रायः।

अपि च संवादकमप्रामाण्यशङ्कां निवर्तयति प्रामाण्यं ज्ञापयति वा। आद्ये प्रामाण्यस्य स्वतस्त्वप्राप्तिः (सिद्धिः)। द्वितीये शङ्काभावेऽपि संवादापेक्षा स्यात्। संवादकमुभयत्र प्रवर्तत इति चेन्न कल्पकाभावात्। बाधव वत् उभयत्रव्यापारः किं न स्यादिति चेन्न। प्रामाण्यशङ्काशून्यस्य प्रामाण्यज्ञाने संवादनिरपेक्षत्वात्। बाधकेन विना निवृत्तप्रामाण्यशङ्कस्याप्रामाण्यबुद्ध्यनुदयानुभवात्।

ज्ञानं स्वरूपेणैव प्रवृत्तिहेतुः न तु तत् ज्ञानमपेक्ष्यते इति चेत्। तथापि सुखादिवत्सत्यां सामग्र्यां वेद्यत्वापरिहारात् सुखादिकमबुभुत्सितग्राह्यम् न तु तथा ज्ञानम्। अन्यथा सुषुप्त्याद्यभावप्रसङ्गादिति चेन्न। तथा सति अप्रामाणिकस्य ज्ञानस्यासत्त्वप्रसङ्गात्। साक्षिवेद्यत्वपक्षे सुषुप्त्याद्यभावप्रसङ्गाभावात्। किञ्च परलोकार्थप्रवृत्तिमतो बुभुत्साप्यवर्जनीयैव। अन्यथा कथं तत्प्रामाण्यनिश्चयाय तज्जातीयत्वादिकमन्विष्यत इति॥

ज्ञानग्राहकः साक्षी प्रमाणतयैव गृह्णातीत्युत्सर्ग एव। विसंवादलक्षणादपवादादप्रामाण्यं च गृह्णाति। सहकारिणः सहजशक्तिं प्रतिबध्य विपरीतशक्तिं जनयन्तीति हि प्रसिद्धम्। दावदहनदग्धानां वेत्रबीजानां वेत्राङ्कुरमजनयित्वा कदलीकाण्डजनकत्वस्य दर्शनात्। विसंवादानुसन्धानवतामेवाप्रामाण्यज्ञप्तिर्न तद्रहितानामिति अव्यभिचरितानन्यथासिद्धान्वयव्यतिरेकसंभवादनुमेयमेवाप्रामाण्यम्। न पुनः ज्ञानग्राहकमात्रग्राह्यम्।

नन्वेवं सति विसंवादाभावे सति प्रामाण्यं प्रतीयत इति तदपि परत एव स्यादिति चेन्न। वेत्रबीजस्य स्वाङ्कुरजनने दाहाभावसापेक्षत्वेऽपि न हि दाहाभावो वेत्राङ्कुरस्य कारणं भवति। किन्तु ततो विपरीतकार्यानुत्पादे सति वेत्रबीजं स्वमहिम्नैवाङ्कुरं करोति। अन्यथा उत्सर्गापवादौ क्वापि न स्यातामिति भावः।

किञ्चाप्रामाण्याग्रहणकारणाभावस्यापि प्रामाण्यग्रहणोपयोगाङ्गीकारेऽपि नास्माकं हानिः स्वतस्त्वाविरोधात्॥

**इति प्रामाण्यस्वतस्त्ववादः॥**

ननु तथापि वेदस्यापौरुषेयत्वं न युज्यते। तस्य वर्णसमुदायरूपत्वात्। वर्णानां चोच्चारणेनोत्पद्यमानत्वादिति चेन्न। तदेवेदं वचनमिति प्रत्यभिज्ञाविरोधात्।

न च सादृश्यात्प्रत्यभिज्ञाभ्रान्तिरिति वाच्यम्। सोऽयं देवदत्त इत्यादेरपि तथात्वप्राप्तेः। वैशेषिकादिभिः देवदत्तादेः पार्थिवद्रव्यस्य पाकेन प्रतिक्षणमुत्पत्तिविनाशाङ्गीकारेऽपि परिणामवादे भेदस्यापि विद्यमानत्वेन सोऽयमिति प्रत्यभिज्ञानस्य भ्रान्तत्वं परेणाप्यङ्गीकृतमेव। तथा च तान्प्रत्येतदापादनं युक्तम्।

सर्वक्षणिकत्वं वदतापि बौद्धेन सेयं दिगित्यादि प्रत्यभिज्ञायाः भ्रान्तित्वं न वाच्यम्। पञ्चस्कन्धेभ्योऽन्यत्वात्। अत्र दिक्शब्देनाकाशोऽभिधीयते। आकाशस्यैव दिक्त्वात्। तथा चोक्तम्। आकाशौ द्वौ विनाशौ च नित्यं त्रयमसंस्कृतमिति। अत्र बौद्धैकदेशिनौ विज्ञानशून्यवादिनावाहतुः स्यादयं प्रसङ्गः सौत्रान्तिकादीनां यैर्दिशो नित्यत्वमङ्गीकृतम्। नास्माकम्। विज्ञानातिरिक्तं शून्यातिरिक्तं वा सर्वं भ्रान्तिकल्पितमित्यङ्गीकारात्। तत्र दिगेव भ्रान्तिकल्पिता कुतस्तस्याः नित्यत्वं कुतस्तरां तत्प्रत्यभिज्ञाया अभ्रान्तित्वमिति न वाच्यम्।

तथा हि। किं दिशां भ्रान्तिकल्पितत्वं केनचित्प्रमाणेनोच्यते एवमेव वा। नाद्यः। प्रपञ्चमिथ्यात्वप्रमाणानां अन्यत्र दूषितत्वात्। असाधारणप्रमाणस्यानुपलंभात्। न द्वितीयः। विज्ञानशून्ययोर्विषये च भ्रान्तिकल्पितत्वकल्पनस्य कर्तुं शक्यत्वात्।

ननु यस्य स्वरूपमेव परोपाधिनिबन्धनं तन्मिथ्या। यथाङ्गुल्यवष्टब्धनयनोपाधिनिमित्तोऽपरश्चन्द्रमाः। परोपाधिकं च दिक्स्वरूपम्। आदित्योदयादिनैव दिक्कल्पनात्। तत्कथं दिशो भ्रान्तिकल्पितत्वं प्रमाणाभावादित्यात आह न चादित्योदयेनैव दिक्कल्पना। कुतो नेति चेत्। दिक् सामान्यस्वरूपमादित्योदये कल्प्यं उत तद्विशेषस्वरूपम्।

नाद्यः। अन्धकारेऽपि दिङ्मात्रप्रतीतेः। यदि दिक् स्वरूपमौपाधिकं स्यात् तर्हि उपाधिं विना नोपलभ्येत। न हि नयनस्य अङ्गुल्यवष्टंभेन विना अपरश्चन्द्रमा उपलभ्यते। उपलभ्यते चोपाधित्वाभिमतादित्योदयाभावेऽपि दिक्स्वरूपम्। तत्कथं तदुपाधिकं स्यात्। अवकाशमात्रं हि दिगित्युच्यते। तच्च परनिरपेक्षेणैव साक्षिणा सर्वासु अवस्थासु प्राणभृन्मात्रस्य सिद्धम्। कथमन्यथान्धकारे करप्रसारणमपि कुर्युः।

द्वितीयेऽपि किं दिग्विशेषस्वरूपमात्रमादित्योदयादिना कल्प्यं उत तदीयं प्राच्यादित्वं तत्राद्यस्य एतदेवोत्तरम्। अन्धकारेऽपीति। अवकाशभागा एव हि दिग्विशेषाः। तेऽप्यादित्योदयादि निरपेक्षेण साक्षिणैव प्रतीयन्ते। कथमन्यथा तदभावेऽपि मूर्तान्तरावष्टब्धावकाशभागपरित्यागेन भागान्तरे करप्रसारणादिकं क्रियते। न च भागानां औपाधिकत्वम्। स्वतो निर्भागस्योपाधिनापि संबन्धाभावात्। प्राच्यादित्वं च यदि तत्स्वलक्षणं तदैतदेवोत्तरम्। अन्धकारेऽपीति। अत्र प्राच्यादिशब्दवाच्यत्वं शब्दार्थसंबन्धस्यौत्पत्तिकत्वेन न काल्पनिकम्।

एवं तर्हि दिक्प्रतीत्यर्थिनः किमित्यादित्योदयादिकं प्रतीक्षन्त इत्यत आह । कादाचित्कभ्रान्तिरेव आदित्योदयादिदर्शनां निवार्यते ।

दिक्स्वरूपतद्विषययोः सिद्धत्वेऽपि दिगन्तरे दिगन्तरत्वभ्रान्तिं निवर्तयितुमेव तत्प्रतीक्षणम् । अनेन प्राच्यादिशब्दव्युत्पादनादौ आदित्यादीनां उपयोगोऽपि सूचितः । दिगन्तरे दिगन्तरभ्रमस्य तद्विषयत्वात् ।

ननु दिशो वास्तवत्वे स्तंभादिवद्व्यवस्थितत्वं स्यात् । स्तंभो हि सर्वान्प्रति स्तंभ एव । न चैवं दिक् । अस्माकं प्राच्याः अन्येषां प्रतीचीत्वात् । मैवम् । दिक्स्वरूपमधिकृत्यैतदुच्यते उत प्राच्यादिशब्दवाच्यत्वम् । नाद्यः । दिक्स्वरूपस्य व्यवस्थितत्वात् । न द्वितीयः । तस्य संबन्धिशब्दत्वात् । न हि पितापुत्रादिशब्दा अप्यव्यवस्थिता इत्येतावता पित्रादिस्वरूपं तच्छब्दवाच्यत्वं वा वास्तवं भवतीति ।

ननु यदि दिशो भ्रान्तिविषयत्वमङ्गीकृतं तदा मिथ्यात्वं सिद्धमेव शुक्तिरजतादिवदिति चेत् । किमारोप्यतया भ्रान्तिविषयत्वं मिथ्यात्वे हेतुत्वेन विवक्षितम् । उताधिष्ठानतया अथ साधारणम् । आद्ये सिद्धसाधनम् । आरोप्याया दिशो मिथ्यात्वस्य तेनाङ्गीकारात् । आरोप्यमिथ्यात्वेऽपि प्रधानस्य सत्त्वोपपत्तेः । नापि द्वितीयतृतीयौ । विज्ञानशून्ययोरपि साम्यात् । नोक्तरूपं विज्ञानं शून्यं वा तत्त्वमिति वादिविप्रतिपत्तिविषयत्वात् । सा च तेषां प्रतिपत्तिः भ्रान्तिरिति परेणाङ्गीकृतत्वात् ।

तथा चोक्तविषयभ्रान्तिविषयत्वमनैकान्तिकमिति । अतः तदेवेदं वाक्यमिति प्रत्यभिज्ञानाद्वेदस्यापौरुषेयत्वं सिद्धम् ।

किञ्च सामान्यसिद्धिपरिशेषाभ्यामपि वेदस्यापौरुषेयत्वं सिध्यति । तथा हि । अस्ति तावत् धर्माधर्मस्वर्गनरकादिषु सर्ववादिसंप्रतिपत्तिः यस्तु तान्नाङ्गीकरोति सोऽपि पूर्वोक्तप्रकारेण बोधनीयः । ते च प्रामाण्योपेताः वस्तुत्वात् घटवत् । न ह्यप्रामाणिके अर्थे सर्वेषां संप्रतिपत्तिः संभवति अतिप्रसङ्गात् । एवं सामान्यतो धर्मादिविषये प्रामाण्ये सिद्धे तस्य परिशेषेणापौरुषेयत्वम् ।

अनुमानादीनि धर्मादौ प्रमाणानि न भवन्ति । धर्मादीनां तदगोचरत्वात् । यो यद् गोचरो न भवति तत्र तन्न प्रमाणम् । यथा संप्रतिपन्नम् । धर्मादीनि चानुमानादिभिः न प्रमीयन्ते । तदगोचरत्वादिति । प्रयोगद्वयं प्रसक्तप्रतिषेधार्थम् । तथा हि । प्रत्यक्षं न तावद् बाध्यं धर्मादौ प्रमाणम् । तस्य रूपादिमति द्रव्ये तदीयेषु गुणधर्मसामान्येष्वेव सामर्थ्यात् । नापि मानसम् । सुखं अनुभवामीतिवत् धर्ममनुभवामीत्यनुव्यवसायाभावात् । न च धर्मादेर्योगिप्रत्यक्षसिद्धत्वं वाच्यम् । तत्र प्रमाणाभावात् ।





अस्तु वा योगिप्रत्यक्षवेद्यत्वं धर्मादेः कथमस्माकम् । न हि मदीयेन प्रत्यक्षेण धर्मादिनिश्चयः तदनुमानं वा संभवति । नाप्यनुमानं तद्व्याप्तलिङ्गाभावात् । सामान्यतो दृष्टे कथञ्चित् तत्स्वरूपमात्रसिद्धावपि न साधन-फलसंबन्धरूपस्तद्विशेषोऽनुमातुं शक्यः । न च तदनिश्चये अनुष्ठानं संभवति । न च पौरुषेयवाक्यं प्रमाणम् । पुरुषाणां अज्ञानादिसंभवेन धर्मेषु फलेष्वाश्वासानुपपत्तेः । न च मन्वादिष्वाश्वासो दृश्यत इति वाच्यम् । अपौरु-षेयवाक्यमूलत्वनिश्चयेनैव तत्राप्याश्वासात् । ततोऽनुमानादिभिः धर्माद्यसिद्धेः सर्वैरपौरुषेयं वाक्यमङ्गीकार्यम् । तच्च वाक्यं वेद एव । तदतिरिक्तस्य कर्तृप्रसिद्धिमत्वात् । सर्वेषां धर्मादिप्रतिपत्तिर्वेदेनैव । किन्तु धर्मादिस्वरूपे वेदेन प्रतीते तद्विशेषेषु तमतिक्रम्य स्वमतिदोषाद्वादिनां विप्रतिपत्तयः प्रतीयन्ते । अन्यथा धर्मादेः बुद्ध्यावारोहस्यैवासंभवात् ।

ननु प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वादप्रमावदित्यनुमानेन ज्ञानस्य याथार्थ्यरूपं प्रामाण्यं वाक्यगताप्तोक्तत्वगुणजन्यं दृष्टम् । अत एव वाक्यस्यापि यथार्थज्ञानसाधनत्वलक्षणं प्रामाण्यं आप्तोक्तत्व-गुणाधीनमिति साधयितुं शक्यते । अतः कथं वेदस्यापौरुषेयत्वे तत्प्रामाण्यमुपपद्यते । प्रामाण्यकारणगुणाभावात् इति शङ्का च नोत्थानं लभते । प्रामाण्यस्य स्वतस्त्वाङ्गीकारात् । गुणसन्निधेः यादृच्छिकत्वकल्पनं युक्तम् । वेदापौरुषेयत्वस्योक्तवक्ष्यमाणानेकप्रमाणसिद्धत्वेन वेदापौरुषेयत्वस्य हातुमशक्यत्वात् । प्रामाण्यस्य च नियमेन गुणजन्यत्वाभावात् । यादृच्छिकसंवादिनः वाक्यस्य गुणाभावेऽपि यथार्थज्ञानजनकत्वात् । अत्रोक्तानुमानस्य बाधितविषयत्वम् ।

ननु यदि वाक्यमात्रस्य यथार्थज्ञानजनकत्वं तदा बौद्धादिवाक्यस्यापि तत्स्यात् । ततश्च तज्जन्यं ज्ञानं यथार्थमापद्येतेति चेत् । मैवम् । तस्याज्ञानविप्रलंभादिदोषमूलत्वेनायथार्थज्ञानजनकत्वात् । वाक्यगता हि दोषाः तस्य पदार्थज्ञानजननशक्तिं प्रतिबध्य विपरीतज्ञानजननशक्तिमाविर्भावयन्ति । औत्सर्गिकत्वात् स्वतःप्रामाण्यस्याप-वादेनाप्रामाण्यं च भवतीति किमनुपपन्नम् । वाक्यगतस्यायथार्थज्ञानजनकत्वलक्षणस्याप्रामाण्यस्य परतस्त्वा-नङ्गीकारे काचादिव्यभिचारादिदुष्टयोरिन्द्रियलिङ्गयोरप्यप्रामाण्यहेतुत्वं न स्यात् । पुरुषदोषाणां वाक्याप्रामाण्य-निमित्तत्वाभावो हि द्वेधा भवति । दुष्टवाक्यस्याप्रामाण्याभावेनाप्रामाण्यस्य स्वतस्त्वेन वा । आद्ये दुष्टेन्द्रियादे-रप्रामाण्यं न स्यात् । द्वितीये काचादीनामपीन्द्रियाद्यप्रामाण्ये निमित्तत्वं न स्यात् । यद्युभयस्याप्यनभ्युपगमस्तर्हि अनुभवविरोधः ।

तथा हि । दुष्टेन्द्रियादेरप्रामाण्यानङ्गीकारः । किं तस्य ज्ञानकारणत्वाभावात् । याथार्थ्याद्वा काचादेः अप्रामाण्यकारणत्वाभावाद्वा । नाद्यः । ज्ञानस्येन्द्रियान्वयव्यतिरेकानुविधानानुभवविरोधात् । न द्वितीयः । बाधानुभवविरोधात् । तृतीये त्वप्रामाण्यस्य काचाद्यन्वयव्यतिरेकानुविधानानुभवविरोधः ।

ननु यादृच्छिकसंवादिषु सत्यपि दोषेऽप्रामाण्याभावात्कथमप्रामाण्यस्य दोषान्वयव्यतिरेकानुविधानमिति चेन्न । तस्य सद्भाव एवोत्पादो नासद्भाव इत्यन्वयव्यतिरेकयोः कार्यकारणभावहेतुत्वात् । कारणे सत्यपि कार्यानुत्पादस्य सामग्र्यभावेन प्रतिबन्धेन वोपपत्तेरिति । अत एव दोषाभावोऽपि न प्रामाण्यकारणम् ।





यादृच्छिकसंवादिषु सत्यपि दोषे प्रामाण्यज्ञानोदयात् । अतः प्रामाण्यं स्वतः परतोऽप्रामाण्यमिति सिद्धम् । वेदस्य नित्यत्वे श्रुतिरपि तस्मै नूनमभिद्यवे वाचा विरूपनित्यया । वृष्णे चोदस्व सुष्टुतिमितिमन्त्रस्य अयमर्थः । अभितो द्यौः प्रकाशो यस्यासावभिद्युः । तस्मै अभिद्यवे वृष्णे वर्षित्रे नूनं निश्चितं भो विरूप नित्यया वाचा वेदलक्षणया सुष्टुतिं शोभनां स्तुतिं चोदस्व प्रेरय कुर्वित्यर्थः ।

वाक् शब्दो वागिन्द्रियेऽपि प्रसिद्ध इति स्पष्टां श्रुतिं पठन्ति । नित्ययाऽनित्यया स्तौमि ब्रह्म तत्परमं पदमिति परमं पदं परमं प्राप्यम् । अस्य मन्त्रस्य ब्राह्मणं नित्यानित्यविवेचनपरम्— श्रुतिर्वाव नित्या अनित्या वाव स्मृतयो याश्चान्या वाच इति पैङ्गिश्रुतिः । विज्ञेयं परमं ब्रह्म ज्ञापिका परमा श्रुतिः । अनादिनित्या सा तच्च विना तां न स गम्यत इति कात्यायनश्रुतिः । परमं विज्ञेयं मुमुक्षूणां प्रधानं प्रमेयम् । परमा ज्ञापिका प्रधानं प्रमाणं अनादीति तदुभयोपपादनम् ।

संबन्धशब्दोक्तः परमात्मा । सहस्रधा महिमानः सहस्रं यावद् ब्रह्म विष्टितं तावती वाक् । यस्य सहस्रमपरिमिता महिमानः प्रत्येकमपि सहस्रधा अपरिमितविधाः तद् ब्रह्म यावद्देशकालव्यापितया विष्टितं विशेषेण स्थितं वाक् वेदवागपि तावती तावद्देशकालव्यापिनी । कः छन्दसां योगमावेद धीरः को धिष्ण्यां प्रतिवाचं पपादेति च । छन्दसां वेदानां योगं अर्थैः सह वाच्यवाचकभावसंबन्धं को धीरो धीमानावेद सम्यग्वेद न कोऽपि । धिष्ण्यां बुद्धिपूर्वां वाचं वेदवाचं कः प्रतिपपाद परान्प्रति प्रतिपादितवान् न कोऽपि । वेदार्थस्य ज्ञाता ज्ञात्वा व्याख्याताऽपि च दुर्लभः किमुत तत्कर्तेति । नित्या वेदाः समस्ताश्चेत्यादिब्रह्माण्डे । शाश्वताः शश्वदेकप्रकाराः ।

वेदस्य नित्यत्वे पुरुषाभिप्रायेण प्रवृत्तिः कथं युज्यत इति चेत् ।

एवं पूर्वस्थितान्येव वेदवाक्यानि कानिचित् कैश्चिद्वा देवादिभिः पुरुषैः स्वाभिप्रायप्रवेशेन प्रयुज्यन्ते न चापूर्वाणि क्रियन्त इत्यविरोधः । एतेनैतदपि निरस्तम् । वर्णास्तावन्नित्यत्वात् सर्वगतत्वात् स्वतः क्रमशून्याः न च क्रमेण विना पदवाक्यभावः । नापि तमन्तरेण प्रामाण्यं अतः क्रमः पौरुषेय एवास्थेयः तत्कथं वेदस्याप्यपौरुषेयत्व-मिति । न हि वयं वेदस्य कूटस्थनित्यतां ब्रूमः किन्तु शब्दतो अर्थतश्च सर्वदैकप्रकारतामेव । ततश्च वर्णानां क्रमस्य पुरुषाधीनत्वेऽपि पुरुषाभिप्रायप्रवेशेऽपि पूर्वत्वेन क्रमानुसारेण इदानीं प्रयुज्यमानत्वात्स्वतन्त्रस्य वक्तुरभावात् अपौरुषेयत्वमुपपद्यते ।

सर्ग इति । सति सप्तमी । वीप्सायां द्विर्वचनम् । उदीर्यन्ते उच्चार्यन्ते । ब्रह्मादीन् प्रत्युपदिश्यन्ते । तत्क्रमेण पूर्वकल्पप्रवृत्तक्रमेण । इत्थंभूतलक्षणे तृतीया ।

श्रुतित्वं श्रुतिशब्दवाच्यत्वम् । अतोऽपौरुषेयत्वादेवोपपद्यते । श्रुतत्वाद्धि श्रुतयः । श्रुतत्वं च शब्दमात्र-साधारणम् ।





ततश्चासाधारण्येन व्यपदेशा भवन्तीति न्यायेनाऽब्भक्षो वायुभक्ष इतिवत् साधारण्येन व्याख्येयम् । निखिलैः श्रुता एव न तु केनापि कृता इत्यर्थः। ईश्वरेण दृष्टत्वात् दृष्टयश्च।

''ऋचः सामानि जज्ञिरे'' इत्याद्युत्पत्तिश्रवणात् कथं वेदानामपौरुषेयत्वमित्यत आह तदुत्पत्तीति । व्यक्तिमपेक्ष्यैवेति संबन्धः । तुशब्दो विशेषणार्थः । आदिकालीनां व्यक्तिमिति । तेन प्रत्यक्षमप्युपाध्यायैर्व्यज्यमानत्वात् उत्पत्तिव्यवहारप्रसङ्ग इति निरस्तम् । स वेदार्थ एवार्थो विषयः प्रयोजनं च येषां तानि तथोक्तानि । संवादान्तरेत्यनेन मुख्याभिमानिनीं लक्ष्मीं व्यावर्तयति।

वेदास्ते नित्यविन्नत्वात् इति । वेदशब्दः सत्तार्थाद्विदेः पचाद्यचि कृते कर्तरि निष्पन्नः । कर्ता च सर्वार्थसाधारणः । असाधारण्येन व्यपदेशा भवन्ति । अतो विन्नत्वादिति। नित्यं विद्यमानत्वादित्यर्थः।

आम्नायशब्दश्च आङ्पूर्वात् म्ना अभ्यासे इत्यस्मात्कर्मणि घञि कृते सिद्धः । अभ्यासश्चैकप्रकारासकृदुक्तिः। तत्कर्मत्वं च शब्दान्तरसाधारणम्। अतो भूतैः भविष्यद्भिश्चाखिलैरप्येकप्रकारेणैव पठ्यन्त इति लभ्यते। एतदेव अनित्यत्वमिति।

वेदास्ते नित्यविन्नत्वादिति अकर्मकत्वात्कर्तरि क्तः। गत्यर्थाकर्मके स्मरणात्। विद्यतेर्विन्न इष्यत इति च।

अस्ति तावदीश्वरादयो वेदस्य द्रष्टार इति व्यवहारः। स इमं मन्त्रमपश्यदित्यादिश्रुतेः। दर्शनं च पूर्वसिद्धस्य भवति। न हि यो यत्करोति स तत्पश्यतीत्युच्यते। अतस्तदन्यथानुपपत्त्यापि नित्यत्वं सिद्धमिति।

ईश्वरबुद्धौ सर्वदा प्रतीयमानत्वं न संस्कारमात्रेण । किन्तु वर्तमानतया सर्वदाऽनुभूयमानत्वं विवक्षितम् । अन्यथा एत एव, सर्गे सर्गे अमुनैवोद्गीर्यन्त इत्युक्तप्रत्यभिज्ञाविरोधः स्यादित्यर्थः। न च सादृश्यादेत एवेत्युक्तमिति वाच्यम्। तथा सत्यपौरुषेयत्वसिद्धेर्दुर्वारत्वात्।

ननु नित्यत्वे वर्णानां कथं कदाचिदेवोपलब्धिः । न चेन्द्रियसन्निकर्षस्य कादाचित्कत्वादिति वाच्यम् । तावती वागिति व्यापकत्वस्याभ्युपगतत्वेन सर्वदा श्रोत्रसन्निकृष्टत्वात्।

अत्रैके ब्रुवते । स्तिमितेन वायुनावष्टब्धं श्रोत्रं सन्निकृष्टमपि शब्दं नोपलंभयति । वक्तुः कोष्ठ्यो वायुः प्रयत्नवदात्मसंयोगेन प्रेरितः प्रतिष्ठमानः उरःप्रभृतीन्यष्टौ स्थानान्यभिहत्य श्रोतुः कर्णशष्कुलीं प्रविष्टः स्तिमितं वायुमपनयति। ततो वर्णोपलब्धिरिति।

अपरे तु कोष्ठ्यवायुसंयोग एव श्रोत्रस्य संस्कारो नापर इति । तदुभयमप्यसत् । वायुसंयोगादनन्तरं सर्वदा सर्ववर्णोपलब्धिप्रसङ्गात्। उत्तरक्षण एव वायुविभागेन संयोगनाशान्नेति चेत्। अप्रामाणिककल्पनाप्रसङ्गात्। सर्वोपलब्धेरनिवारणाच्च।





अन्ये तु वायुगुणः शब्दो ध्वनिलक्षणो वायुना सह श्रोत्रं प्रविष्टो वर्णस्य व्यञ्जकः । तेन व्यक्तो वर्ण उपलभ्यत इति । एतदप्यसत् । वायुगुणत्वे शब्दस्य स्पर्शनग्राह्यत्वप्रसङ्गेन बधिराणामपि तदुपलब्धिप्रसक्तेः । श्रोत्राग्राह्यस्य तद्ग्राह्यवर्णव्यञ्जकत्वानुपपत्तेश्च । व्यङ्ग्यव्यञ्जकयोः एकेन्द्रियग्राह्यत्वस्य घटप्रदीपादौ दर्शनात् । एकस्मिन्वर्णे व्यक्ते तत्रस्थाः सर्वेऽपि वर्णा व्यक्ता इति सर्वोपलब्धेरपरिहाराच्च ॥

किञ्च यो वर्णो देवदत्तश्रोत्रे व्यक्तः स एव यज्ञदत्तश्रोत्रसन्निकृष्ट इति दूरस्थेनापि तेनोपलभ्येतेत्यत उक्तम् । आकाशगुणे शब्दे व्यज्यमाना इति । इदमुक्तं भवति । वक्तुः प्रयत्नप्रेरितो वायुरूरप्रभृतिभिः स्थानैः संयुक्तः स्थानसंयुक्ताकाशे ध्वनिलक्षणं शब्दमुत्पादयति । स च देशान्तरे प्रतिशब्दम् । यस्तु कर्णशष्कुल्यवच्छिन्नाकाश-प्रदेशे समुत्पन्नः तद्गुणो ध्वनिस्तस्मिन्व्यज्यमानो वर्णः श्रोत्रेण गृह्यते । ध्वनेश्चाशुतरविनाशित्वेन व्यञ्जकाभावान्न सर्वदोपलब्धिः । ते च ध्वनयः प्रतिनियता एव वर्णानां व्यञ्जका इति न सर्वोपलब्धिप्रसङ्गः । भूताकाशमेव श्रोत्रं तद्गुण एव ध्वनिः स च स्वतः स्वावयवं अतः प्रदेशवर्ती ध्वनिः तदवच्छिन्नमेव वर्णं व्यञ्जयतीति न सर्वेषामुपलब्धिः । समानदेशे कालवर्णानां धर्मापन्नानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं क्वापि नोपलब्धमिति चेत् । न गोत्वाश्वत्वादीनां प्रतिनियतव्यक्तिव्यङ्ग्यत्वस्य परैरङ्गीकृतत्वात् ।

गोत्वादीनां व्यक्तिसर्वगतत्वेन समानदेशत्वं नास्तीति चेत् । प्रत्यासत्तेरवर्जनीयत्वात् । समवायाभावस्य वर्णेष्वपि समानत्वात् । किञ्च ब्राह्मणत्वद्रव्यत्वादीनां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमङ्गीकृतमेव । रूपेण समानदेश-स्यापि परिमाणस्य चतुष्टयसन्निकर्षोऽधिको व्यञ्जकः स्वीक्रियते । तथा क्षीरनीरादिपृथक्त्वादेः समानाभिहारा-भावादिः । न च वर्णव्यतिरिक्तो ध्वनिर्नास्ति । दूराद्वर्णाग्रहणेऽपि ध्वनिग्रहणात् । न चैतत् सर्वमप्रामाणिकं प्रत्यभिज्ञा-प्रामाण्यस्योपपादितत्वेन तद्बललब्धत्वात् ।

तत्र प्राभाकरास्त्वाहुः । स्यादेवोक्तं वेदप्रामाण्यादिकं समस्तम्, किं तर्हि यदुक्तं सदागमैकविज्ञेयमिति वेदानां विष्णुप्रतिपादकत्वं तन्नोपपद्यते । तथा हि । वाच्यवाचकसंबन्धज्ञानलक्षणव्युत्पत्त्यपेक्षो हि शब्दोऽर्थं बोधयति । नान्यथा । अन्वयव्यतिरेकाभ्यां तथावगमात् । व्युत्पत्तिश्च वृद्धव्यवहारदर्शनादेव भवति । वृद्धव्यवहारश्च कार्यप्रति-पत्तिनिबन्धन इति कार्यप्रतिपादकतैव शब्दस्य युक्ता ।

तथा हि । चैत्र ! जलमाहर इति प्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य जलाहरणविषयां प्रवृत्तिं दृष्ट्वा पार्श्वस्थो बाल एवमाकलयति । अस्येयं प्रवृत्तिर्बुद्धिपूर्वा स्वतन्त्रप्रवृत्तित्वान्मदीयस्तनपानादिप्रवृत्तिवदिति । पुनश्चास्य प्रवृत्तिहेतुभूता बुद्धिः किं विषयेति जिज्ञासायामेवं निश्चिनोति । वृद्धस्य प्रवृत्तिहेतुभूता बुद्धिर्मम प्रवृत्ति-हेतुभूता बुद्धिर्यद्विषयिणी तद्विषयैव भवितुमर्हति । प्रवृत्तिहेतुभूतबुद्धित्वात् मदीयप्रवृत्तिहेतुभूतबुद्धिवदिति ।

पुनरेवमवधारयति । यद्विषया सा बुद्धिः प्रवृत्तिहेतुभूता तद्वस्तु अस्यानेन शब्देन बोधितं तद्भाव-भावित्वात् । मम तु प्रमाणान्तरेणेत्यावयवोर्विशेषः । तेन यद्बोधात् मम प्रवृत्तिस्तदनेन शब्देन बोध्यत इति शब्दस्य प्रवृत्तिहेतुभूतार्थबोधकतेति ।





पुनश्च कोऽसौ प्रवृत्तिहेतुभूतशब्दबोध्योऽर्थ इत्यवधारयितुं स्वात्मनि प्रतिपन्नं प्रवृत्तिहेतुभूतार्थमनुसन्धत्ते । तत्र न तावदहं क्रियामात्रं फलमात्रं क्रियाफलसंबन्धमात्रं वा बुद्ध्वा प्रवृत्तः किन्तु कार्यमेव । ममेदं कार्यमिति प्रतीत्या हि स्तनपानादावहं प्रवृत्त इति स्वप्रवृत्तेः कार्यबोधपूर्वकतां निश्चित्यायमपि कार्यबोधादेव प्रवृत्त इत्यनुमाय वाक्यस्य तावत् सामान्यतः कार्यपरतामवधारयति ।

ततो लिङाद्यावापे कार्यावगमदर्शनात् तदुद्धारे च अदर्शनात् त एव कार्यावगतिं कुर्वन्ति । शब्दान्तराणि च तदन्वितांस्तांस्तानर्थानवगमयन्तीत्यावापोद्वापाभ्यां अधिगच्छति ।

एवं लोके कार्य एव गृहीतशब्दसङ्गतिर्वेदेऽपि तदेव शब्दात् प्रत्येतुमर्हति । तत्र लिङादिप्रत्ययः कार्यशरीरमेवाभिदधाति प्रकृतिस्तद्विषयम् । पदान्तराणि च प्रकृत्यर्थविशेषणं कारकं तद्विशेषणं नामधेयं नियोज्यं चाभिदधति कार्यप्रतिपत्तौ व्याप्रियन्ते । सन्निपत्योपकारकाङ्गवाक्यानि यद्यपि कार्यान्तरशून्यानि तथापि प्रधानकार्यान्वितस्वार्थाभिधायकतया कार्यप्रतिपत्तावेव व्याप्रियन्ते ।

मन्त्रा अपि कार्याङ्गभूतार्थस्मारकतया । तत्रैव नियुक्ताः कार्य एव व्यापारवन्तः ।

अर्थवादा अपि तत्रैव रुचिमुत्पादयन्तः उपयुज्यन्ते ।

इति कृत्स्न एव वेदः कार्ये प्रमाणम् ।

कार्यं च कृतिसाध्यत्वे सति कृत्युद्देश्यम् । कृतिश्च प्रयत्नः । तच्च लोके भावार्थो वेदे त्वपूर्वम् । अत एव वेदान्तानामपि कर्तृस्वरूपप्रतिपादकत्वेन देवताप्रतिपादकत्वेन वा कार्यपरतैव ।

प्रकरणभेदात्तदनङ्गीकारेऽपि 'आत्मा ज्ञातव्यः' इत्यपुनरावृत्तये समाम्नातेन विधिनैकवाक्यतामाश्रित्य कार्यपरत्वमेव वर्णनीयम् । तदेवं कार्यान्वित एवार्थे सर्वशब्दानां व्युत्पत्तिदर्शनात् केवलसिद्धार्थे तदभावान्न सिद्धस्वरूपे विष्णौ वेदस्य प्रतिपादकत्वं संभवतीति ।

एतदसत् । योग्येतरान्वितस्वार्थे व्युत्पत्तिदर्शनात् । तथा हि मातुः पितुर्वाऽङ्के स्थितं बालमन्यमनस्कं सन्तमङ्गुलिप्रसारणादिना स्ववचनश्रवणाभिमुखं मात्राद्यभिमुखं च विधाय यदा व्युत्पादयिता वाक्यं प्रयुङ्क्ते— बाल तवेयं माता, तवायं पिता, अयं ते भ्राता कदलीफलमभ्यवहरतीत्यादि । तदा वृद्धव्यवहारदर्शनं विना तेन निर्देशेनैव तस्य शब्दसमुदायस्य कार्यान्वयरहित एव तस्मिन्नर्थसमुदाये विषयविषयिभावं तावदवगच्छति बालः । इदमनेनायं बोधयतीति ।

पुनः इयं ते स्वसा, अयं ते सखा, अपूपं खादतीति वाक्यान्तरेषु शब्दार्थयोरावापोद्धाराभ्यां शब्दविभागादिकमवगत्य मात्रादिपदानां योग्येतरान्विते जनन्यादौ वाचकत्वमाकलयतीति किमनुपपन्नम् ।





लघीयांश्चायमुपायो व्युत्पत्तौ व्यवहारदर्शनात्।

शश्वद्विस्मरणशीलो बालकः शब्दमनुसन्धाय वृद्धस्यागामिप्रत्यागमनं स्वानपेक्षितमेव प्रतीक्षत इति गुरुतरेयं कल्पना। पुरोवस्थितेष्विष्टसाधनतयाऽपेक्षितेषु मात्रादिषु श्रूयमाणस्यैव शब्दस्य वाचकत्वं कल्पयतीति लघुतरमेतत्कल्पनम्।

वर्तमानापदेशेषु व्युत्पन्नो जातजिज्ञासः पश्चाद्व्यवहारदर्शनिनान्यत्रापि व्युत्पद्यत एव। प्रथमव्युत्पत्तिरियम्। किञ्च सर्वेषामपि शब्दानां कार्यान्विते स्वार्थे व्युत्पत्तिरित्येकमेव प्रयोजकं तावदङ्गीकर्तुं न शक्यते। लिङादीनां हि कार्यमेव स्वार्थः। न च तस्य कार्यस्य कार्यान्तरेणान्वयोऽस्ति। गुणप्रधानभावेन खलु पदार्थानां अन्वयो भवति। कार्यं च प्रधानतया शब्देनैव बोध्यते। तथा च कथं कार्यद्वयस्य युगपद् गुणप्रधानभावः संभवति।

अतः कार्यस्य कार्यान्वयाभावात् लिङादीनां कार्यमात्रे सिद्धान्विते वा कार्ये व्युत्पत्तिरित्यङ्गीकार्यम्। गवादिपदानां तु कार्यान्विते स्वार्थ इति।

तथा च प्रयोजकद्वैविध्याङ्गीकारे कथं न कल्पनागौरवम्।

योग्येतरान्विते स्वार्थे व्युत्पत्तिरित्यङ्गीकारे त्वेकप्रयोजकलाभाल्लाघवमित्ययमेव पक्षः समाश्रयणीयः।

ननु कार्यान्वयिनि स्वार्थे व्युत्पत्तिरित्यङ्गीकारान्न कल्पनागौरवम्। कार्येण सह योऽन्वयः तद्वत्त्वं कार्यस्य सिद्धस्य चास्तीत्येकप्रयोजकलाभादिति चेत्। मैवम्। कार्येण सह सिद्धस्य योऽन्वयः स गुणभाव एव। न च कार्यं प्रति गुणभावः कार्यस्यास्ति। न च गुणे प्रधाने चानुगतमन्वयमात्रं शब्देन बोध्यते। अतः शब्दमात्र-मत्रैकं नार्थ इति यत्किञ्चिदेतत्।

एतेन कार्यान्वयान्वयिनि व्युत्पत्तिरित्येकप्रयोजकवर्णनमपि परास्तम्। कार्यपरपदार्थान्विते स्वार्थे व्युत्पत्तिरिति चेन्न। अत्राप्येकप्रयोजकासिद्धेः। कार्यपरं यत्पदं तस्य यो अर्थस्तेनान्वित इति ह्यस्यार्थः। तत्र लिङादीनां कार्यपरत्वं नाम कार्यवाचित्वं गवादिपदानां तु तदुद्देशित्वमात्रमिति द्वैविध्यमेवेति।

ननु तथापि न केवले सिद्धार्थे वाक्यप्रामाण्यं युज्यते। कार्यबोधमन्तरेण नैराकांक्ष्यलक्षणस्य पर्यवसानस्याभावात्। न हि गौरश्वः पुरुषो हस्तीति वा देवदत्तः पचतीति वा पदजातं पर्यवसितमनुभूयते। किन्तु तृप्तिकामौदनं पचेति। पर्यवसानहीनस्य च न्यूनतया वाक्याभासत्वं स्यात्। अतः कार्यपरत्वं सर्वथाङ्गीकार्य-मित्येतदपि न युक्तम्। सिद्धमात्रज्ञापने पर्यवसितत्वाद्वाक्यस्य।

तथा हि। यो बाल्ये एव कुतश्चित्कारणात् मातापितृभ्यां वियुक्तो मातापितृमतोऽन्यानवलोक्य स्वात्मनोऽपि तथाभावमनुमाय का मे माता को मे पिता कीदृशौ कुत्र वर्तेते इत्युत्कण्ठते। अथ तं प्रति कश्चित्





ब्रवीति। 'अयं ते पिता यः पाटलीपुत्रे राजास्ति भद्रसेनः, इयं ते माता या भद्रसेनस्य महिषी लीलावती' इति। तदा कार्योपदेशमन्तरेण सिद्धस्यैव ज्ञापनेन तद्वाक्यं पर्यवसितं भवति श्रोतुः निराकाङ्क्षत्वात्।

तदनन्तरं च स यदि कथं तौ पश्येयमिति जिज्ञासते तदा तद्दर्शनकामः त्वमेवमनेन पथा पाटलीपुत्रं याहीति कार्यं बोधयति।

तथा च यः स्वमुखमपश्यन् अन्यान्सुरूपान्विरूपांश्चावलोक्य स्वात्मनि सन्दिग्धे किमहं सुरूपो विरूपो वेति। तदा तं प्रति कश्चिदाचष्टे सुरूपोऽसीति। तदपि वाक्यं सिद्धमात्रज्ञापनेन पर्यवस्यति। ततःपरं आकाङ्क्षा-विच्छेदात्।

तस्मादिष्टसाधनज्ञापनमेव वाक्यपर्यवसानहेतुः। न कार्यबोधनमेवेति नियमः। कार्यबोधने पर्यवसानस्यापि इदमेव निमित्तं यदिष्टसाधनबोधनमिति।

अनेनैतां वेदवाक्यानां योजनां सूचयति। यो हि सात्त्विकप्रकृतिः लोकप्रवादात्कार्यत्वादि लिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुत्कण्ठितमानसः तत्संस्कार-वशाच्चान्यदगणयन् वर्तते तं प्रत्याप्तो बन्धुरिवायं वेदः तत्स्वरूपं स्वप्रधानमेव प्रतिपादयति 'विज्ञानमानन्दं ब्रह्मे'-त्यादि। ततो वाक्यार्थज्ञानादवाप्तपरमानन्दः तत्साक्षात्कारं कामयते तं प्रति तदुपासना विधीयते। सा च प्रक्षीणान्तःकरणमलस्यैव संभवतीति। तदर्थं कर्मविधयः प्रवर्तन्ते इत्येवं समस्तोऽपि वेदः परमेश्वरस्वरूपज्ञापन एव पर्यवसितः।

अथवा शरीरेन्द्रियान्तःकरणादिसन्निधानेन। स्वात्मनो विविधदुःखं पश्यन्निष्कण्टकं च सुखमलभमानोऽयं संशेते। किं ममेदं दुःखादिकं शरीरादिसंबन्धनिमित्तमेवोत स्वाभाविकमिति। तं प्रति वेदः प्रवर्तते। 'तत्त्वमसि' इत्यादिः। परमात्मेव निर्दुःखपरमानन्दस्वभाव एव त्वमसि किंत्वीश्वराधीनाविद्याद्युपस्थापितशरीरादिनिमित्तेन अन्यथारूपेणोपेत इति।

ततः पुनरसौ जिज्ञासते केनोपायेनाहमिदमस्वाभाविकं रूपं हित्वा स्वरूपेणावस्थितः स्यामिति। तं प्रति परमेश्वर एव प्रसन्नस्तदुपाय इति तत्स्वरूपं निरूप्यते। ततः कथमसौ प्रसीदतीत्यपेक्षायां तत्साक्षात्कारः तदर्थं श्रवणादिकं तदङ्गतया कर्माणि च विधीयन्त इत्येवं समस्तस्यापि वेदस्य परमेश्वरस्वरूप एव पर्यवसानमिति।

एतच्च 'अन्यार्थं तु जैमिनिः' इत्यादिना सूत्रकृतैवोक्तम्।

ननु तथापि केवलसिद्धपरत्वे वाक्यस्यानुवादकत्वेनाप्रामाण्यं स्यात्। ततः सर्वथा कार्यपरता स्वीकार्या। कार्यस्य च प्रमाणान्तरागोचरत्वेन नानुवादकत्वप्रसङ्ग इति चेन्न। तत्र केवलसिद्धार्थे यथावस्थितार्थबोधकत्वमनुभूयते





प्रत्यक्षादेरिव। अस्ति चासावर्थो यः सिद्धोऽपि प्रमाणान्तरेणाविदितपूर्वः। ततः सिद्धार्थ एवेयं मातेत्यादिवाक्यस्य अननुवादकत्वमप्यनुभूयत एव। अतः केवलसिद्धेऽर्थे वाक्यस्य नाप्रामाण्यमिति किं कार्यपरत्वाग्रहेण।

स्यादेतत्। यद्यपि बोधकत्वेनैव प्रमाणानां प्रामाण्यम्। तथापि वाक्यप्रयोगस्य परार्थत्वात् परप्रयोजनाङ्गमेव वाक्यं प्रामाण्यमश्नुते। यथा अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादि, नान्यत् यथाष्टौ काकस्य दन्ता इति। यत्कार्यपरं तदेव परप्रयोजनाङ्गम्। ततः कथं केवलसिद्धेऽर्थे वाक्यस्य प्रामाण्यमिति।

अत्रोत्तरम्। वाक्यं हि प्रमाणम्। तच्च प्रमासाधनम्। प्रमा च यथार्थज्ञानम्। अतस्तस्य परज्ञापनमेव प्रयोजनम्। छिदासाधनस्य परशोः छिदेव। न हि तत्साधनस्य ततोऽन्यत् प्रयोजनं दृष्टम्। तच्च प्रयोजनं सिद्धविषयस्याप्यस्तीति कथं प्रामाण्यानुपपत्तिरिति।

सत्यमेतत्। ज्ञापनमेव साक्षाद्वाक्यस्य प्रयोजनम्। तथापि स एवार्थो वाक्येन ज्ञापनीयो यज्ज्ञानं परस्य क्वचित्प्रवृत्तिं वा कुतश्चिन्निवृत्तिं वा कुर्यात्। परप्रवृत्तिनिवृत्त्यभिप्रायेण वाक्यप्रयोगात्। प्रवृत्त्यादिकारणं च कार्यज्ञानमेव न केवलसिद्धज्ञानम्।

न च वाच्यं शब्दस्तद्व्यापारो वा प्रवर्तक इति। तथा सति तच्छ्राविणां सर्वेषामपि प्रवृत्तिनिवृत्तिप्रसङ्गात्। बालस्य स्तनपानादिप्रवृत्त्यादौ शब्दाद्यभावाच्च।

यापीयं शङ्खादिशब्दश्रवणानन्तरं प्रवृत्तिर्निवृत्तिर्वा सापि पुरुषाभिप्रायानुमानादेव न साक्षात्। रागद्वेषयोः यद्यपि प्रवर्तकत्वमस्ति। तथापि तत्सत्तयैव न तु ज्ञाततया। ज्ञानं त्वबुभुत्सितग्राह्यतयाऽवर्जनीयसन्निधि। अतो वाक्यबोध्यं प्रवृत्त्यादिकारणं कार्यमेवेति तदेव सर्वत्र वाक्यार्थतयाऽङ्गीकार्यम्। अत एव लिङादिरहिते वाक्ये कार्याध्याहारो लक्षणा वाश्रयणीया। तत्कथं सिद्धमात्रपरत्वं वाक्यस्येति।

उच्यते। नायमस्ति नियमो यत्प्रवृत्त्याद्यर्थ एव वाक्यप्रयोग इति।

यत्र वाक्यार्थज्ञानमात्रेण सुखदुःखावाप्तिहानी भवतः तत्र प्रवृत्त्याद्यभावात्। यत्रापि प्रवृत्तिनिवृत्त्यभिप्रायेण वाक्यप्रयोगस्तत्रापि सिद्धपरत्वं युक्तम्।

यद्यपि सिद्धमात्रज्ञानं न प्रवृत्त्यादिहेतुः। तथापि सिद्धविशेषेष्टानिष्टसाधनत्वज्ञानं तु भवत्येव। यतो बालोऽपि स्तनपानादेरिष्टसाधनतामेव ज्ञात्वा प्रवर्तते। तथा दंशमशकदंशनादेरनिष्टसाधनतामेव ज्ञात्वा निवर्तते।

तस्यापि कार्यताज्ञानादेव प्रवृत्तिः, इष्टसाधनताज्ञानं तु कार्यताज्ञानस्य कारणमिति चेन्न। इष्टसाधनता-तिरिक्तकार्यतायां प्रमाणाभावात्।





चन्द्रमण्डलादावस्तीष्टसाधनताबुद्धिर्न कार्यताबुद्धिरिति चेत् सत्यम् । कृतिसाध्येष्टसाधनतायाः कार्यतापर्यायतयाऽङ्गीकारात् अत एव न भूतादौ प्रवृत्तिप्रसङ्गः ।

एतेन वृद्धव्यवहारदर्शनेन या व्युत्पत्तिः सापि सिद्धविषयैवेति सिद्धम् । बालेन हि स्वप्रवृत्तौ यत्प्रवर्तकत्वेन अवगतं तदेव वृद्धप्रवृत्तावपि कल्पयितुमुचितम् । स्वप्रवृत्तौ चेष्टसाधनताज्ञानमेव प्रवर्तकतयाऽवधारितमित्युक्तम् ।

यत एवं सिद्धज्ञानस्यैव सर्वत्र प्रवर्तकत्वं व्युत्पत्तिश्च सिद्धविषयैव, अतो न केवलमियं मातेत्यादीनां किन्तु सर्ववाक्यानां लिङादियुक्तानामपि सिद्ध एव प्रामाण्यं सिद्धम् । प्रसिद्धं च व्याकरणनिरुक्तनिघण्टुप्रभृतीनां सिद्धप्रामाण्यं सर्ववादिनाम् । अत्रापि एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवतीत्यर्थवादबलाद्विधिः कल्प्यत इति चेन्न । इष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्तौ तत्कल्पकाभावात् । अपर आह । व्याकरणादेः प्रामाण्यमेव नास्ति निर्मूलत्वात् । प्रयोजनाभावाच्च । शब्दज्ञानस्य लोकप्रयोगादेव सिद्धेः वेदरक्षादेश्च शुद्धसंप्रदायादेवोपपत्तेः तत्कथं तदुदाह्रियत इति ।

एतदप्ययुक्तम् । व्याकरणादिप्रामाण्यानङ्गीकारे सुशब्दापशब्दसम्यक्परिज्ञानानुपपत्तेः ।

तथा च शाब्दव्यवहारलोपः । लोके हि गोशब्दवत् गाव्यादयोऽपि सास्नादिमति पिण्डे प्रयुज्यन्ते । ततस्तेषामपि तद्वत्प्रयोगप्रसङ्गे, 'दूष्यति चापशब्दैः' इति वचनात् प्रत्यवायः स्यात् । अत एव सुशब्दापशब्दविभागो नास्ति इत्यपि निरस्तम् । तदभावे फलभेदकथनानुपपत्तेः । अत एवेष्टकादिस्मृतिवन्मूलमपि तस्य कल्पनीयम् । प्रमादपरिहारार्थत्वेन वेदरक्षादिकमपि सिद्धमिति । अतो हरावेव सकलसदागमानां प्रामाण्यम् । उक्तं च नारदीये । "सर्वज्ञं सर्वकर्तारं नारायणमनामयम् । सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि । सर्वेषामपि वेदानां इतिहासपुराणयोः । प्रमाणानां च सर्वेषां तदर्थं चान्यदुच्यते" इति । ज्ञापयन्ति वेदाः महातात्पर्यमित्यनेन धर्मादिष्ववान्तरतात्पर्यमित्यर्थः ।

न च जीवब्रह्माभेदे तात्पर्यमागमस्य । तत्र प्रमाणाभावात् ।

ननु कथं प्रमाणं नास्ति । 'तत्त्वमसी'त्यादिवाक्यानां विद्यमानत्वादिति चेन्न । द्वे ब्रह्मणी वेदितव्ये । द्वा सुपर्णेत्यादि वेदवाक्यविरुद्धत्वेन तेषामभेदे प्रामाण्याभावात् ।

ननु प्रत्यक्षादिसिद्धभेदानुवादकानां वाक्यानां दुर्बलत्वात्कथं तद्विरोधेनाभेदवाक्यानां तत्र प्रामाण्यबाध इति चेन्न । जीवेश्वरभेदस्य प्रमाणान्तराप्राप्तत्वेन भेदवाक्यानां अनुवादकत्वाभावात् । आगमं विना ईश्वरस्यैवासिद्धेः । भेदस्तावद्धर्मिप्रतियोगिप्रतीतिसापेक्षप्रतीतिकः । तत्रेश्वरधर्मिको जीवप्रतियोगिको भेदः प्रमाणान्तरसिद्ध इति वा वक्तव्यं ईश्वरप्रतियोगिको जीवधर्मिक इति वा । पक्षद्वयेऽपि जीवेश्वरप्रतीत्या अवश्यं भवितव्यम् । तत्र यद्यपि जीवः साक्षिप्रत्यक्षसिद्धस्तथापि ईश्वरसिद्धिः किमागमेन उत प्रमाणान्तरेणेति वाच्यम् । आद्ये तद्भेदप्रतिपादकानां वाक्यानां नानुवादकत्वम् । द्वितीयेऽपि किं प्रत्यक्षेण वोतानुमानेन ।





नाद्यः । तदगोचरत्वात् । द्वितीये किं प्रत्यक्षागमसहायवतानुमानेन ईश्वरसिद्धिरुच्यते । उत तद्रहितेन । न द्वितीयः । विपर्ययेणाप्यनुमातुं शक्यत्वात् । तथाहि । विमतं सकर्तृकं कार्यत्वात् घटवदिति । सर्वं सकर्तृकमित्युक्ते गगनादौ बाधः । घटादौ सिद्धसाधनं च स्यात् । तन्निवृत्त्यर्थं विमतमित्युक्तम् । तेन विकर्तृकत्वेन सकर्तृकत्वेन वा यत्र वादिप्रतिवादिनोः संमतिर्गगनादौ घटादौ च ततोऽन्यदङ्कुरादीत्यर्थः । सकर्तृकमुपादानादिविषयकबुद्धिमत्पूर्वकम् । कार्यत्वात् अभूत्वा भावित्वात् । विमतं विकर्तृकं शरीरादिमदजन्यत्वात् आत्मवत् । विशेषणवैयर्थ्यमिति चेन्न । पक्षधर्मतासिध्यर्थत्वात् । परैरपि चक्षुस्तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैव ग्राहकत्वात् । प्रामाण्यं परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वादित्यादौ पक्षधर्मतासिध्यर्थत्वेन विशेषणस्य प्रयुक्तत्वात् ।

प्रतिपक्षानुमाने अकार्यत्वमुपाधिरिति चेन्न । शरीरिजन्यत्वस्येतरत्रोपाधित्वात् । यत्र सकर्तृकत्वं तत्र शरीरिजन्यत्वमिति साध्यव्यापकत्वात् । कार्यत्ववतोऽप्यङ्कुरादेः व्यावृत्तत्वेन साधनाव्यापकत्वाच्च भवत्ययमुपाधिः । शरीरविशेषणं व्यर्थमिति चेत् । अकार्यत्वमपि कार्यान्यत्वं कार्यत्वरहितत्वं वा वक्तव्यम् । तत्रान्यत्वादेरेव साध्यव्यापकत्वसंभवात् समव्याप्तेश्चानपेक्षितत्वात् विशेषणवैयर्थ्यमेव । तत्र पक्षव्यावृत्त्यर्थं विशेषणमिति चेन्न । तदभावात् कर्त्रभावे कार्यं न स्यादिति चेन्न । कारणाभावप्रयुक्तत्वात्कार्याभावस्य कार्यसामान्यं हि कारणसामान्यायत्तम् । अन्यथा कर्मादिकारकविशेषाभावेन आसनशयनादिकार्याभावप्रसङ्गः । कर्मादिकं न सार्वत्रिकं कर्ता तु सार्वत्रिक इति चेन्न । तत्सिध्यर्थत्वादेवास्य परकीयप्रयासस्य । यद्यपि प्रतिपक्षे नोपाध्युद्भावनमुचितम् । उपाधेः प्रतिपक्षोन्नायकत्वेन वैयर्थ्यात् । तथाप्यभ्युपगमवादोऽयमित्यदोषः ।

ननु शरीरप्रेरणायाः सकर्तृकत्वेऽपि शरीरिजन्यत्वं नास्ति । कर्मभूतस्य शरीरस्य कर्तरि प्रवेशानुपपत्तेः । ततः साध्यव्यापकत्वमिति । उच्यते । शरीरप्रेरणं हि शरीरक्रियानुगुणप्रयत्नवत्त्वम् । न चाशरीरस्य प्रयत्नोत्पत्तिरस्तीति । किञ्चागमानपेक्षानुमानपक्षेऽनुपलब्धप्राक्कोटिषु पर्वतादिषु कार्यत्वं कुतः सिद्धम् । सावयवत्वादिति चेत् । किमिदं सावयवत्वम् । अवयवसंबन्धित्वं वा अवयवसमवेतत्वं वा सावयवसमवेतत्वं वा द्रव्याश्रितद्रव्यत्वं वा मध्यमपरिमाणत्वं वा ।

नाद्यः । पटावयवतन्तुसंयुक्ताकाशे व्यभिचारात् । न द्वितीयः । जात्यादावनैकान्त्यात् । तृतीये तु सावयवसमवेतत्वं नाम स्वसमवायिकारणसमवेतत्वमिति युक्तं स्यात् तथा च कार्यमनभ्युपगच्छतः तस्यासिद्धत्वात् । न चतुर्थः । वारिनिहिते पार्थिवपरमाणौ व्यभिचारात् । न पञ्चमः । द्व्यणुकसमवेते परमाणौ व्यभिचारात् । द्व्यणुकं परमाणुसमवेतं न परमाणुर्द्व्यणुकसमवेत इति चेन्न । समवायत्त्वातिरिक्तस्य समवेतत्वस्याभावात् । अस्य चोभयत्र साम्यात् । न षष्ठः । ऊर्ध्वाधरीभावादेः असंभवेन समवायातिरिक्ताश्रयाश्रयिभावानिरूपणात् । व्यवहारमात्रं तु न व्यवस्थितम् । पटे तन्तव इत्यादेरपि दर्शनात् । नान्त्यः । तस्याकार्यत्वेऽप्यनुपपत्त्यभावेन अप्रयोजकत्वादिति । तदेवमीश्वरस्यैवासिद्धेः तद्भेदस्य प्रत्यक्षानुमानाभ्यां सुतरामसिद्धिरिति न भेदवाक्यानां अनुवादकत्वमिति । किञ्च येन भेदवाक्यानां अनुवादकत्वमुच्यते तेनावश्यं भेदस्य प्रत्यक्षानुमानसिद्धत्वं वाच्यम् ।





असिद्धस्यानुवदितुमशक्यत्वात् । तथा च तिष्ठन्तु तावत् भेदवाक्यानि । भेदग्राहकप्रत्यक्षादिविरोधादेव अप्रामाण्यमभेदागमस्यापरिहार्यम् ।

नन्वपौरुषेयत्वेनानाशङ्कितदोषत्वादागमः प्रबलः । प्रत्यक्षानुमाने तु दोषशङ्काकलङ्कितत्वात् दुर्बले । तत्कथं तद्विरोधेन प्रबलस्याभेदागमस्याप्रामाण्यप्राप्तिरिति ।

उच्यते । यद्यागमस्य प्रबलत्वात् दुर्बलप्रत्यक्षादिविरोधेनापि नाप्रामाण्यम् । तर्हि भेदवाक्यानामपि वेदत्वेन बलवत्त्वात् दुर्बलप्रत्यक्षादिप्रतिपन्नभेदप्रतिपादकत्वेऽपि नानुवादकत्वम् ।

न तावत्पूर्वप्रवृत्तप्रमाणावच्छिन्नविषयत्वमनुवादकत्वं भेदवाक्यानामस्ति । तथानुपलंभात् । तथात्वे ह्यर्थासंस्पर्शितया दौर्बल्यं स्यात् । ततः प्रतिपन्नार्थप्रतिपादकत्वमात्रमनुवादकत्वमिति वक्तव्यम् । तस्यापि परानपेक्षस्वकारणायत्तस्य वैयर्थ्यमेवानुवादकत्वे बीजमङ्गीकार्यम् । न च तत्प्रकृतेऽस्ति । दुर्बलाभ्यां प्रत्यक्षानुमानाभ्यां प्रतिपन्नेऽपि भेदे साशङ्के सति तत्रैव प्रवृत्तानां प्रबलानां भेदवाक्यानां निःशङ्कभेदप्रतिपत्तिहेतुत्वेन सार्थकत्वात् । तथा च अननुवादकतद्विरोधेनाभेदागमस्याप्रामाण्यं तदवस्थमिति ।

यद्यपि प्रत्यक्षानुमानाभ्यां आगमस्य प्राबल्यमित्युत्सर्गः । तथापि यत्र प्रत्यक्षानुमानयोः आगमं प्रत्युपजीव्यत्वं तयोरेव ततो बलवत्त्वं तत एव तद्विरोधे तस्य न प्रामाण्यमिति तावदङ्गीकार्यम् । कुत इति चेत् उच्यते । उपजीव्योपजीवकयोः विरोधे न तावदुभयं प्रमाणं वस्तुनो द्वैरूप्यापातात् । नाप्युभयं प्रमाणं वस्तुनो निस्स्वभावत्वापत्तेः । ततोऽन्यतरस्यैवाप्रामाण्येऽवश्यमङ्गीकार्ये, न तावदुपजीवकविरोधेन उपजीव्यस्याप्रामाण्यमङ्गीकर्तुमुचितम् । येन हि यस्य विषयः सिध्यति तत्तस्योपजीव्यम् । यथा पर्वतग्राहकं धूमानुमानस्य । तथा चोपजीवकविरोधेनोपजीव्यस्याप्रामाण्ये सत्युपजीवकस्य विषयो न सिध्येत् । विषयाभावे स्वोदयाभावेन अबोधकत्वलक्षणमप्रामाण्यं प्राप्नोति । यत्स्वयं नोदेतुमलं नापि बोधयितुं कथं तदुपजीव्यमप्रमाणीकुर्यात् । अतः परिशेषात् अनपेक्षतया प्रबलस्योपजीव्यस्य विरोधेन सापेक्षतया दुर्बलमुपजीवकमेवाप्रमाणं भवतीति सिध्यति । तथा चात्रापि भेदवाक्यानां अनुवादकत्वसिध्यर्थं परोपन्यस्तेनानुमानादिना भेदागमस्यापि विषयः सिध्यति ।

तथाहि । जीवं विषयीकृत्य तस्येश्वरेणाभेदो वा बोधनीयः । 'तत्त्वमसी'ति ईश्वरं विषयीकृत्य वा तस्य जीवाभेदः । 'क्षेत्रज्ञं चापि मां विद्धी'ति । उभावपि विषयीकृत्याभेदमात्रं वा ''नेहनानास्ती''ति । सर्वथा जीवेश्वरसिद्ध्या भवितव्यम् । तत्रेश्वरः कार्यत्वाद्यनुमानसिद्धः जीवश्च प्रत्यक्षसिद्ध इति प्रत्यक्षानुमाने तत्त्वमस्याद्यागमस्योपजीव्ये । भेदवाक्यानां अनुवादित्वसिध्यर्थं परेणानुमानस्येश्वरसाधनायोपन्यस्तत्वात् । अत उपजीव्यत्वेन प्रबलयोः प्रत्यक्षानुमानयोः विरोधे सति अभेदागमस्य प्रामाण्यं न स्यात् ।





भवतु प्रत्यक्षादिकमभेदागमस्योपजीव्यम् । किन्तु तद्विरोधस्तु नास्ति । न हि प्रत्यक्षं जीवं ईश्वराद्भिन्नत्वेन गृह्णाति । नाप्यनुमानं ईश्वरं जीवात्, येन तद्विरोधः स्यात् । किन्नाम तत्स्वरूपमात्रम् । तथाभूते एवात्रोपजीव्ये । तत्कथं अभेदागमस्य तद्विरोधेनाप्रामाण्यमिति ।

उच्यते । यद्यप्यन्योन्यानपेक्षे प्रत्यक्षानुमाने न जीवेश्वरभेदं गोचरयतः तथापि कार्यत्वाद्यनुमानेन सर्वकर्तृत्वादिलक्षणमीश्वरं ज्ञातवतः साक्षिणा च तद्विरुद्धस्वभावमात्मानमनुभवतः ततो भेदज्ञानमवर्जनीयमेवेति।

आगम एवेश्वरं गृह्णन् उपजीव्यो नानुमानमिति चेन्न । तस्यापि 'यः सर्वज्ञ' इत्यादेः अनुमानतुल्यत्वात् ।

किञ्च नेहनानास्तीत्यैक्यागमेन हि स्वप्रभृतेर्भेदप्रपञ्चस्य मिथ्यात्वमुच्यते । तत्र चागमादिस्वरूपग्राहकं प्रत्यक्षादिकमुपजीव्यमिति तद्विरोधेन तस्याप्रामाण्यमिति । सर्वैरात्मान्यस्य सर्वकर्तृत्वादेरननुभूयमानत्वात् । जगत्कारणादीश्वराद्भेदः सिद्धः । तथा च साक्ष्यनुभवविरोधेनैक्यागमस्याप्रामाण्यमङ्गीकार्यम् ।

ऐक्यागमविरोधादनुभवस्यैवाप्रामाण्यमस्त्विति चेत् । जीवेश्वरभेदविषये अनुभवस्याप्रामाण्ये अभेदागम-प्रामाण्यविषयेऽपि तत्प्रामाण्यस्यापि अविश्वसनीयत्वापातात् । ततश्चैक्यागमप्रामाण्यं न सिध्येत् । न च असिद्धप्रामाण्यमन्यत् प्रमाणीकर्तुं प्रभवतीत्यतः परिशेषात्साक्ष्यनुभवविरोधिनोऽभेदागमस्यैवाप्रामाण्यमुचितम् । साक्ष्यनुभवस्य सर्वप्रमाणप्रामाण्यनिश्चायकत्वात् ।

अत्राव्यभिचरितत्वनियमः साक्ष्यनुभवस्यं प्राबल्यहेतुः । एवमुपजीव्यत्वनिरवकाशत्वलक्षणस्वभाव-बलवत्प्रमाणबाधितत्वादैक्यागमस्याप्रामाण्यमित्युक्तम् ।

न केवलमेतावत् । किन्तु बहुत्वलक्षणबलवद्भिरेतैरेव प्रमाणैर्बाधितत्वाच्च ।

ननु बहूनि प्रमाणान्येकविषयाणि वा भिन्नविषयाणि वा । आद्येऽधिगतमेवार्थमभिगमयतां द्वितीयादीनां वैयर्थ्यलक्षणेनानुवादकत्वेनाप्रामाण्यम् । द्वितीये स्वे स्वे विषये तेषामेकैकत्वान्न बहुत्वम् । तत्कथं बहुप्रमाणबाधितत्वं बहुत्वे प्रामाण्याभावात् । प्रामाण्ये बहुत्वाभावादिति चेन्न ।

बहूनां प्रमाणानां एकविषयत्वेऽपि दाढर्यहेतुत्वेनानुवादकत्वाभावात् । यथा पर्वतो अग्निमानित्येकस्य वचने श्रुते तस्मिन्नज्ञानादिशङ्कयार्थविश्वासाभावे द्वितीयस्यापि वचनं श्रुणोति । तत्रापि कारणान्तरोपनिपातेन शङ्कानुवृत्तौ तृतीयस्यापि । एवं बहूनां वचने श्रुते पर्वतं प्रत्यासीदतः तस्यैवाग्नेः प्रत्यक्षेण दर्शने सति विश्वास एव दृश्यते । न तु द्वितीयादिष्वप्रामाण्यबुद्धिरिति ।

स्यादेतद्यद्येवं द्वितीयादिप्रमाणस्य दाढर्यहेतुत्वात्प्रयोजनवत्त्वेन नानुवादकत्वम् । तर्हि कुत्रापि तन्न स्यात् । सर्वत्र दाढर्यस्य वक्तुं शक्यत्वात् । तथा च सिद्धसाधनादेरदूषणत्वं स्यादिति ।

मैवम् । निःशङ्कं प्रमितेऽर्थे पुनः प्रयुज्यमानस्य परार्थानुमानस्य वाक्यस्य वा वैयर्थ्यदोषो न स्वार्थानुमानस्य प्रत्यक्षस्य वा तयोः पुरुषाधीनत्वादिति ।

अत्र जीवेश्वरभेदे विवादसद्भावात् न द्वितीयादिप्रमाणानां वैयर्थ्यम् । एकत्ववादिनामेव विवाददर्शनात् ।

किञ्च बहुप्रमाणविरोधेनैक्यागमस्याप्रामाण्यम् ।

शुक्तिरजतादौ शुक्तिकां रजतत्वेन दूरात् प्रतीत्य नेदं रजतं किन्तु शुक्तिकैव इत्याप्तवाक्यं श्रुणोति । ततः समीपं गतः प्रत्यक्षेणापि शुक्तिरेवेति पश्यति । पाटनदहनादिलिङ्गेन तथैवानुमिनोति । ततो बहुप्रमाणविरोधेणैकस्य रजतज्ञानस्याप्रामाण्यमेव निश्चिनोतीति प्रसिद्धमेव । अतः एकस्यानेकस्मात् दुर्बलत्वम् ।

तथा चैवमनुमातव्यम् । ऐक्यवाक्यजनितं ज्ञानमप्रमाणं बहुप्रमाणविरुद्धत्वात् । शुक्तिरजतज्ञानवदिति ।

अत्र दोषजन्यत्वमुपाधिः । यदप्रमाणं तद्दोषजन्यमिति साध्यव्यापकत्वात् । साधनवत्यपि पक्षे पौरुषेयतया दोषशङ्काभावेन साधनाव्यापकत्वात् इति चेन्न । साधनव्यापकत्वेनास्यानुपाधित्वात् । बहुप्रमाणविरुद्धानां दोषजन्यत्वनियमात् । अत्र चैक्यवाक्यजनितं ज्ञानं पक्षः । तस्य पूर्वापरपरामर्शशून्यतादिदोषजन्यत्वं संभवत्येव । अतश्च साधनव्यापकम् ।

शुक्तिरजतादिज्ञाने दोषजन्यत्वं बलवत्प्रमाणविरोधादेव ज्ञायते । कुतः । न तावत्प्रत्यक्षेण तज्ज्ञानम् । जन्यजनकभावस्य सर्वत्रातीन्द्रियत्वात् । नापि दोषान्वयव्यतिरेकानुमेयम् । इन्द्रियाणामतीन्द्रियत्वेन तद्दोषाणामपि अतीन्द्रियत्वात् । नाप्यप्रमाणत्वेन तज्ज्ञानेऽप्युपायाभावात् । न चात्रागमोऽस्ति ।

अतो बलवत्प्रमाणविरुद्धत्वादेव दोषजन्यत्वं तत्रानुमेयम् । ततो यद्बलवत्प्रमाणविरुद्धं तद्दोषजन्यमिति व्याप्तिरङ्गीकार्या । बलवत्त्वं च बाधकप्रमाणस्योपजीव्यत्वनिरवकाशत्वाभ्यामिव बहुत्वेनाङ्गीकार्यम् । अतः साधनव्यापकत्वान्न तस्योपाधित्वमिति ।

भेदवाक्यानां अनुवादकत्वसिध्यर्थं केवलानुमानेनेश्वरसिद्धिरिति यदुक्तं तन्निराकृतम् । इदानीमागमानुकूलानुमानेन ईश्वरसिद्धिरिति पक्षं निराचष्टे कथं चेति ।

भवतु जीवेश्वरयोः प्रमाणान्तरेण सिद्धिः । न च तावता तद्भेदवाक्यानामनुवादकत्वं भिन्नविषयत्वात् । किन्तु भेदस्यापि प्रमाणान्तरेण सिद्धौ । न च सा परेणाङ्गीकर्तुं शक्या । अनिष्टत्वात् । भेदोऽपि प्रमाणान्तरसिद्ध इत्यङ्गीकारे ऐक्यवाक्यस्य तत्प्रमाणोपरोधप्रसङ्गात् । भेदस्य प्रमाणान्तरेण सिध्यङ्गीकारे भेदवाक्यानां नानुवादकत्वं वक्तव्यम् । तथा च भेदवाक्यविरोधादभेदवाक्यानां भेदे तात्पर्यमिति सिद्धम् ।





जीवेश्वरभेदः प्रत्यक्षादिसिद्ध एव। तेन भेदवाक्यानामनुवादित्वसिद्धिः। किन्तु तत्प्रत्यक्षादिकमप्रमाणमेव। व्यावहारिकत्वमात्रेण तत्र प्रमाणवाचोयुक्तिः। ऐक्यवाक्यं तु तत्त्वावेदकं प्रमाणम्। अतो न तत्तेनोपरुध्यत इति चेत्। अत्र वक्तव्यम्। भेदवाक्यमपि किमप्रमाणं उत प्रमाणमिति। आद्ये वक्ष्यामः। द्वितीये प्रत्यक्षादेरप्रामाण्यम्। भेदवाक्यानां च भिन्नविषयत्वेनानुवादकत्वायोगात्।

समविषयत्वे हि द्वयमपि प्रमाणं स्यात्। अप्रमाणं वा। न त्वयं विभागः। प्रामाण्याप्रामाण्यविभागोऽनुवादकत्वं चेति परस्परपराहतमिति भावः।

किञ्च प्रत्यक्षादेः कुतोऽप्रामाण्यम्। ऐक्यवाक्यविरोधादिति चेन्न। अन्योन्याश्रयप्रसङ्गात्। सिद्धे खल्वैक्यवाक्यप्रामाण्ये तद्विरोधेन प्रत्यक्षादेरप्रामाण्यसिद्धिः। तस्यां च सत्यां विरोधिप्रमाणाभावेनैक्यवाक्यप्रामाण्यसिद्धिरिति।

स्यादेतदन्योन्याश्रयत्वं यद्यैक्यवाक्यं भेदविषयं प्रत्यक्षादिकं च समानबलं स्यात्। न चैतदस्ति। श्रुतेः अपौरुषेयत्वेनानाशङ्कितदोषायाः प्रबलत्वात्। प्रत्यक्षादेः संभावितदोषस्य ततो दुर्बलत्वात्। प्रबलस्य च दुर्बलविरोधपरिहारानपेक्षमेव प्रामाण्यस्थितेरिति। मैवम्। दुर्बलत्वे च भेदप्रामाण्यस्याभासत्वान्न भेदवाक्यानामनुवादित्वम्।

यद्यपि श्रुत्यपेक्षया भेदप्रमाणस्य प्रत्यक्षादेर्दुर्बलत्वमाश्रित्यान्योन्याश्रयत्वपरिहारः क्रियते; तदा भेदवाक्यानामनुवादित्वमुच्यमानं न स्यात्। कुतः आभासत्वात् अकिञ्चित्करत्वात्। यथा दुर्बलत्वात् प्रत्यक्षादिकं नैक्यश्रुतेर्विषयापहारं करोति। तथा भेदश्रुतेर्विषयोपहारमपि न करोति। तथाच स्वातन्त्र्येण स्वविषये प्रवृत्ता भेदश्रुतिः कथमनुवादिनी स्यादिति।

न केवलमननुवादित्वसाम्याद्भेदाभेदवाक्यानां समबलत्वं किन्तु स्वातन्त्र्येण प्रवृत्तानां भेदवाक्यानां दैवादागतेन प्रत्यक्षादिसंवादेन ऐक्यवाक्यापेक्षया प्राबल्यमेव, तस्य संवादाभावात्। तथाच तद्विरोधादैक्यवाक्यस्य अप्रामाण्यमिति। नन्वेतद्विपरीतमुच्यते प्रमाणान्तरसंवादवतां भेदवाक्यानां प्राबल्यम्। तद्रहितानामैक्यवाक्यानां दौर्बल्यमिति। यतः संवादोऽपूर्वताविरोधी। तद्राहित्यमपूर्वताहेतुः। अपूर्वता च प्राबल्यलिङ्गतया प्रसिद्धा। ततः प्रमाणान्तरापूर्वमर्थं प्रतिपादयतामैक्यवाक्यानामेव प्राबल्यम्। अन्येषामपि वाक्यानां तदेकवाक्यत्वात् जीवेश्वरैक्ये सर्वागमानां महातात्पर्यमिति।

अत्र वक्तव्यम्। किं प्रमाणान्तरविरोधेऽप्यपूर्वता तात्पर्यलिङ्गं उत तदविरोधे।

आद्ये 'इदं वाग्रे नैव किञ्चनासीत्, असतः सदजायते'त्यादीनां वाक्यानां प्राबल्यमङ्गीकर्तव्यं स्यात्। कुतः। अविचारेण प्रतीयमानस्य तदर्थस्य सर्वप्रमाणविरुद्धत्वेनापूर्वतालाभात्। तथा चान्येषामपि वाक्यानां तत्र तात्पर्यं कल्प्यम्। ततश्च शून्यस्यैव जगत्कारणत्वं प्रसज्येत। अविशेषादिति।





शून्यस्य जगत्कारणत्वे युक्तिविरोधात्तदनङ्गीकार इति यदि मतं तर्हि तद्वितीयपक्ष एवाश्रयणीयः। अस्त्विति चेन्न। अननुवादित्वं प्राबल्यकारणमिति पक्षे युक्तिविरोधस्यापि गुणत्वात्। युक्तिसिद्धत्वे ह्यनुवादित्वप्रसङ्गात्।

ननु भेदवाक्यानां संवादसद्भावात् प्राबल्यमित्ययुक्तम्। संवादस्य वैयर्थ्येनानपेक्षणीयत्वादिति चेन्न। अभ्यासादेरुपेक्षणीयत्वापातात्। तदप्यस्त्विति चेन्न। अभ्यासस्य च सर्वैरपि तात्पर्यलिङ्गत्वाङ्गीकारात्। तदनङ्गीकारे नवकृत्वः अभ्यासात् अद्वैतवाक्यस्य तत्त्वमसीत्यादेरनुवादकत्वेनाप्रामाण्यं स्यात्।

प्रथमवाक्येनैव यस्यासिद्धं तदर्थमेवापरमित्युक्ते; प्रत्यक्षादिना भेदो येनानिश्चितस्तदर्थमपरं वाक्यमित्युत्तरम्। अतो नाभेदे तात्पर्यमागमस्येति सिद्धः श्रुत्यर्थः।

इमौ प्रमितौ पुरुषौ चेतनौ लोके अवलोके पर्यालोचने सति, यद्वा लोके ईशितव्यवर्गे, अव्ययः लोकत्रयनाशेऽपि नाशरहितः ऐश्वर्यात्, सर्ववित् स्यैव सर्वशास्त्रार्थत्वात्, सर्वभावेन सर्वेण प्रकारेण, बुद्धिमान् अपरोक्षज्ञानी, कृतकृत्यो मुक्तः। सर्वस्मादुत्कर्षः उत्तमत्वं सर्वोत्कर्षः। देवानां देवः स्तुत्यो देवदेवः। सर्वागमानां महातात्पर्यमिति संबन्धः। अन्यत्र धर्मादौ तु महातात्पर्यं नैव। अवान्तरममुख्यम्। सर्वागमसाध्यः पुरुषार्थो मोक्षः ततो विष्णोः सर्वोत्कर्षज्ञानादेव भवति। अतः कारणात् उक्तमेतत्सत्यमिति। श्रीपतेः उत्कर्ष एव परं मुख्यं तात्पर्यम्।

धर्मार्थकामा इति तत्साध्यस्वर्गादिकमुच्यते। स चासौ अर्थश्चेति। तदर्थः। परमो विचिन्त्यः सर्वोत्कृष्टतया ज्ञातव्यः। लभ्यः प्राप्यः।

एष परमात्मा यं वृणुते यस्य प्रसीदति तेनैव लभ्यः। कथं यतः स्वस्य स्वां तनूं विवृणुते प्रकाशयति। ततश्चास्य स्वां तनूमविद्यावृतं स्वरूपं विवृणुते आविर्भावयति। एकराट् स्वतन्त्रः।

ननु यदा राजा गुरुर्वा भृत्यं शिष्यं वा प्रति ब्रूते अहमेव त्वमिति तदासौ शिष्यादिः प्रीतिमान् दृश्यते तत्कथं गुणोत्कर्षज्ञानादेव परमा प्रीतिरिति। उच्यते। यद्युत्तमोऽधमं प्रत्यभेदप्रतिपत्तिं करोति तदाऽधिकगुणारोपणेन अहमनेन मानित इति मन्यमानोऽधमः तस्मिन् प्रीयते न त्वधमेनोत्तमं प्रत्यभेदप्रतिपत्तौ कृतायामुत्तमस्याधमे प्रीतिर्भवति निमित्ताभावात्। ततश्चाधमो जीवः कथमुत्तमं भगवन्तं प्रति तत्प्रीतिकामोऽभेदे प्रतिपत्तिं कुर्यात् येन वेदो जीवं प्रत्यभेदप्रतिपत्त्यर्थमपि वदेदिति।

अभेदज्ञानादप्रीतिरेव उत्तमानां भवति। घातयन्ति हि राजानो राजाहमिति वदन्तम्। ददति च सर्वमभिप्रेतं गुणोत्कर्षं वदतः। अत एव 'निन्दनस्तवसत्कारान्यक्कारार्थं कलेवरम्। प्रधानपरयो राजन्नविवेकेन कल्पितम्।'

'सर्वात्मनः समदृश' इत्यादिकं भक्तकृतप्रमादिकापराधविषयं ज्ञातव्यम्। अन्यथापराधपरिहारस्यापि अकर्तव्यतापातात्।







एतेन जीवेश्वरयोः पारमार्थिकभेदमङ्गीकृत्याभेदश्रुतीनां प्रतिपत्त्यर्थतां व्याचक्षाणा नैयायिकादयो निरस्ता वेदितव्याः।

तथा च प्रयोगः। विष्णुः गुणोत्कर्षज्ञातर्यातिशयेन प्रीयते सत्पुरुषत्वात् पुण्यश्लोकराजपुरुषवदिति। न तादृशी प्रीतिरीड्यस्य विष्णोः, यो मामेवमसंमूढो जानाति पुरुषोत्तममित्यादेश्च।

विष्णोः गुणोत्कर्ष एव सर्वश्रुतिस्मृतीनां महातात्पर्यम्।

न चाभेदे तात्पर्यमित्यत्र किञ्चिन्मानम्।

क्षराक्षरजडात्मकात् सर्वस्मादुत्तमत्वमित्ययमर्थो भेदसापेक्षः। भेदस्तु न कश्चिदपि प्रामाणिकः। न च घटपटादिभेदः तावत्प्रत्यक्षसिद्ध इति वाच्यम्। भेदो हि न तावत्स्वतन्त्रः प्रतिभासते। किन्तु घटपटौ भिन्नाविति घटपटविशेषणतया वा घटपटयोः भेद इति तद्विशेष्यतया वा। एकस्यैव भेदस्य द्विष्ठत्वपक्षे भेदद्वयाकारेण, अन्यतरमात्राश्रयत्वेऽपि विशेषणविशेष्यभावं धर्मिप्रतियोगिभावं वाऽनपेक्ष्य संबन्धिमात्रापेक्षायां गत्यन्तराभावात् घटपटाविति वा घटपटयोरिति वा द्वित्वावच्छिन्नयोः घटपटयोः विशेषणविशेष्यभावप्रतीतिश्च भेदप्रतीत्यपेक्षा, भेदप्रतीत्यविनाभूतत्वात् द्वित्त्वप्रतीतेः। तथा चान्योन्याश्रयता। धर्मिप्रतियोग्यपेक्षा भेदप्रतीतिः भेदापेक्षा च धर्मिप्रतियोगिप्रतीतिरित्यन्योन्याश्रयतया प्रत्यक्षेण भेदप्रतीतेरनुपपत्तिरिति।

अत्रोत्तरम्। न भेदो युगधर्मः। किन्त्वेकस्य धर्मोऽपरेण निरूप्यः। घटपटौ भिन्नावित्यत्रापि घटात्पटो भिन्नः पटाच्च घटो भिन्न इत्येवार्थः। एवं घटपटयोः भेद इत्यत्रापि घटपटधर्मिकं भेदद्वयमेव प्रतीयते। एकवचनं तु 'अनयोः स्वरूपमितिवत् समुदायापेक्षम्। स च भेदो धर्मिणः स्वरूपमेव। तेन भेदधर्मिप्रतीतिरेव भेदप्रतीतिरिति प्रतीतिद्वयाभावान्नान्योन्याश्रयत्वम्। घटस्य प्रतियोगिता च पटप्रतियोगिकतद्धर्मिकभेदनिबन्धनैव। सोऽपि घटस्य स्वरूपमेव।

तथापि प्रतिपन्नभेदस्य प्रतियोगित्वात् घटात्पटस्य भेदसिद्धौ पटात् घटस्य भेदसिद्धिरित्यन्योन्याश्रयत्वमिति चेन्न। विद्यमानभेदस्य प्रतीतिमात्रेण प्रतियोगितोपपत्तेरिति।

तथा प्रत्यक्षं किं भेदमेव गोचरयेत्। उत वस्त्वपि।

नाद्यः। भेद इत्येव प्रतीत्यभावात्।





द्वितीयेऽपि किं भेदपूर्वं वस्तु गोचरयेत् उत वस्तुपूर्वं भेदं युगपद्वा उभयम् । नाद्यः भेद इत्येव प्रतीतेः । विरम्यव्यापारायोगाच्च । अत एव न द्वितीयः । नापि तृतीयः । वस्तुप्रतीतेः भेदप्रतीतिकारणत्वेन यौगपद्यायोगात् । इत्येतदपि निरवकाशमिति ।

भवेदयं परिहारो यदि भेदस्य धर्मिस्वरूपत्वं स्यात् । न च तद्युक्तम् । धर्मिस्वरूपं हि परप्रतीतिनिरपेक्षमेव प्रतीयते । न तु जातुचित् भेद इत्येव । तथा च सापेक्षनिरपेक्षतालक्षणविरुद्धधर्माधिकरणयोः भेदधर्मिस्वरूपयोः कथमैक्यं स्यादित्याशङ्का च प्रतिबन्द्या परिहर्तव्या ।

तथा हि । प्रत्यक् चैतन्यं तावन्निरपेक्षप्रतीतिकम् । ऐक्यं तु धर्मिप्रतियोगिप्रतीतिसापेक्ष्यम् । जीवस्य ब्रह्मणैक्यमिति वक्तव्यत्वात् । एवमप्यैक्यस्य ब्रह्मस्वरूपत्वं चाङ्गीकृतम् । तद्वदेवात्राप्युपपत्तिः ।

अनेन भेदपटौ भिन्नौ सापेक्षनिरपेक्षप्रतीतिकत्वेन विरुद्धधर्माधिकरणत्वादित्यस्यान्यतरानैकान्तिकत्वमुक्तं भवति । न चैक्यं न स्वरूपमिति वाच्यम् । आत्मस्वरूपत्वे मिथ्यात्वप्रसङ्गेन तत्परस्य तत्त्वमसीत्यादिवाक्यस्य अतत्त्वावेदकत्वप्रसङ्गात् ।

अस्वरूपस्यापि सत्यत्वे सदद्वैतभङ्गप्रसङ्गात् ।

न चैक्यं न सापेक्षमिति वाच्यम् । तथा सति तत्त्वं पदार्थप्रतिपादकानां वेदान्तवाक्यानां ऐक्यपर-महावाक्यैकवाक्यताभावप्रसङ्गेन वैयर्थ्यापातात् ।

अथ तत्र प्रतीत्योरेव सापेक्षनिरपेक्षत्वलक्षणविरुद्धधर्माधिकरणत्वेन भेदोऽस्तु । न तु तद्विषयस्य एकस्यैवाग्नेः सापेक्षनिरपेक्षानुमानमिति प्रत्यक्षविषयत्वदर्शनेन विरोधाभावादिति ब्रूयात् । तर्हि तत्प्रकृतेऽपि समानम् । अधिकश्चात्र सविशेषाभेदाङ्गीकारेण परिहारो भविष्यति ।

तथापि न भेदो धर्मिस्वरूपम् । तत्प्रतीतावपि कदाचिदप्रतीतेः । यो यत्प्रतीतावपि न प्रतीयते नासौ तत्स्वरूपं यथा घटप्रतीतावपि अप्रतीयमानः पटो न घटस्वरूपम् ।

न चायमसिद्धो हेतुः । स्थाणुशुक्तिकाप्रतीतावपि पुरुषरजतभेदस्याप्रतीतेः । इदमपि जीवेश्वरैक्यं वदतः परस्य संमतैव । प्रत्यक् चैतन्ये स्वप्रकाशतया सिद्धेऽपि जीवब्रह्मणोरैक्यं न सिद्धम् । अन्यथोपदेशानर्थक्यप्रसङ्गात् । विप्रतिपत्त्यभावप्रसक्तेश्च । तथापि तत्स्वरूपतया परेणाङ्गीक्रियते । तस्मादयमपि हेतुरन्यतरानैकान्तिकः एव भवति ।

एकस्वरूपमप्यैक्यमविद्या प्रतिबन्धान्न प्रकाशत इति चेन्न । अनैकान्त्यापरिहारात् विशेषणप्रक्षेपाभि-प्रायेणात्रापि सादृश्यादेः प्रतिबन्धस्य वक्तुं शक्यत्वात् । भेदस्तु स्वरूपदर्शन एव सिद्धः । यद्यद् दृश्यते तत्तत्सर्वतो व्यावृत्तमेव दृश्यते । न तु सर्वात्मकत्वेनेत्यनुभवसिद्धम् । व्यावृत्तिरेव च भेदः ।





न च संशयाभावप्रसङ्गः। कुतश्चिद्व्यावृत्तस्य वस्तुनः प्रतीतावपि व्यावृत्तिविशेषाग्रहणवशादेव संशयोपपत्तेः। अन्यथा सर्वकोट्यवलंबी संशयः स्यात्।

अस्य भेद इति पदार्थसंबन्धितया प्रतीतिः पदार्थस्य स्वरूपमितिवदुपपद्यते।

यदि तत्र भेदातिरिक्तं किमपि संबन्धप्रतीतिनिमित्तं उच्यते तर्ह्यत्रापि विशेषणप्रसङ्गः। अनयैव दिशा पटो भिन्न इति विशेषणतया प्रतीतिरपि न भेदसाधकेति द्रष्टव्यम्।

अस्ति तावद्भेदः। तस्य द्वय्येव गतिः धर्मिस्वरूपत्वं वा ततो भिन्नत्वं वेति। तत्र भेदपक्षस्य सर्वत्र संशयादिप्रसङ्गेनानुपपन्नत्वात् परिशेषात्स्वरूपमेव सिध्यति।

न च वाच्यम्। धर्मिप्रतीतावप्रतीतोऽपि भेदः पश्चात्प्रत्येष्यते। स च प्रसक्तमपि संशयादिकं निरस्यतीति पश्चाद्धि भेदोऽस्यास्मादिति प्रत्येतव्यः।

न च प्राग्भेदानवगतावखण्डे वस्तुनि अस्यास्मादिति विभागेनानुवादो घटते।

अथापातजायां निर्विकल्पकायां संविदि भेदस्य भेदिनोश्च युगपदङ्गुलित्रयवदवभासात् न संशयाद्यवकाश इति चेन्न। तस्य भेदस्यैतदीयतया अनवगतस्य तद्विषयसंशयादिप्रतिबन्धकत्वानुपपत्तेः। अन्यथा सर्वत्र संशया-द्यनुदयप्रसङ्गात्।

भेदस्य वस्तुस्वरूपत्वे संशयाद्यभावप्रसङ्ग इति चेन्न। वस्तुस्वरूपस्यापि भेदस्य घटप्रतियोगिकत्वं पटप्रतियोगिकत्वमित्यादयोऽनन्तधर्माः। तत्र भेदनिष्ठो यत्प्रतियोगिकत्वरूपो धर्मः सादृश्यादिवशान्न प्रतीयते। तत्र संशयादिकमुत्पद्यते। न तु तत्रापि भेदस्याप्रतीतिः। अतः संशयादेरन्यथोपपत्तेः न तदर्थं धर्मिप्रतीतौ भेदप्रतीतिरङ्गीकार्या।

ननु घटादौ घटत्वाद्यसाधारणधर्मं दृष्टवतः तमात्मन्यपश्यतः संशयाद्यनुपपत्तेः न तदर्थं सर्वतो व्यावृत्तिप्रतीतिः कल्पनीया। सर्वतो व्यावृत्त्यनुभवे सर्वेषां सर्वज्ञता च स्यादिति चेन्न। प्रथमं सामान्यतः सर्वव्यावृत्तत्वापरिज्ञाने घटत्वादेः असाधारणतया ज्ञानासंभवात्। न हि धर्मिणामविविक्तत्वे धर्मस्यासाधारण्यं भवति। न च सर्वज्ञतापातो दोषः। सामान्यतः सर्वव्यावृत्तिज्ञानस्योच्यमानत्वात्। सामान्यतः सर्वज्ञानस्य च प्राणभृन्मात्रवृत्तित्वात्। सामान्यतः सर्वप्रतियोगित्वं स्मर्यते कतिपयविशेषप्रतियोगित्वं ह्यनुभूयते। अतो भेदस्य धर्मिस्वरूपत्वं युक्तमेव।





ननु भेदस्य किं केवलस्य धर्मिस्वरूपत्वं उत प्रतियोगिघटितस्य । नाद्यः । कदापि केवलस्य तस्या-प्रतिभासात् । द्वितीये प्रतियोगिनोऽपि धर्मिस्वरूपत्वापत्त्या सर्वाद्वैतप्रसङ्ग इति । मैवम् । प्रतियोगिनो निरूपकत्वेन बहिरङ्गत्वात् । कुत्र चेदमुपलब्धं येन निरूपितस्य यद्भवति तत्तस्य निरूपकस्यापि भवतीति ।

(अत्र ग्रन्थपातः ।)

न चानेकः । अनेकत्वेऽपि वा कुतो नैकत्वं स्वस्मिन्येकोऽन्येन सहितोऽनेक इति विरोधाभावात् । अनेकत्वबलेनैकत्वाभावमुक्त्वा पुनस्तेनानेकत्वाभावं वदतः कुतो न पूर्वोत्तरविरोधः । न ह्यत्र काप्यस्मद्रीतिरस्ती-त्युक्तम् । येन परीत्या परस्यापादनमिति निस्तारः ।

पटः प्रतीयमानः सर्वव्यावृततयैव प्रतीयत इत्युक्तम् । तदयुक्तम् । प्रतियोगिभूतस्य सर्वस्य धर्मिणश्च पटस्य युगपज्ज्ञानप्रसङ्गात् । यद्यपि ज्ञानानां वध्यघातकभावेन चित्रगुमानयेत्यादौ तदभावोऽपि किं नोपलब्धः । ततः स्वदृष्टिपक्षपातमपहाय लौकिकीं दृष्टिमाश्रित्य भेदः कां रीतिमवलंबतामिति विचारे यदि प्रतीत्यनुसरणं तदा चित्रगुन्यायो भवति । प्रतीत्यतिक्रमे त्वापादनमप्यशक्यमिति ।

ननु विदारणात्मतनोर्भेदस्य घटस्वरूपत्वे तस्यापि विदारणं स्यात् । तथा तदवयवानामपीति सर्वशून्य-तापत्तिरिति । मैवम् । न हि भेदो विदारः किन्तु विदारणम् । विदारकत्वेऽपि प्रतियोगिनो धर्मिणं विदारयेत्, न तु स्वत एव स्वात्मानं प्रतियोगिनि निरूप्यत्वं च स्वरूपस्यापि भेदस्योपपादितम् । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्तु न भेदो विदारणात्मा । किन्तु अन्योन्याभाव एवेति । तथाप्यनेकत्वैकार्थसमवायिनो भेदस्य पटस्वरु पत्वे पटस्याप्यनेकत्वं स्यात् । तथा तदवयवानामपीति तद्विरुद्धमेकत्वं कुत्रापि न स्यात् । एकत्वाभावेऽनेकत्वमपि न भवेत् ।

तथा च संख्यारहितस्य द्रव्यस्य शून्यत्वापत्तिरिति । मैवम् । एवं हि पटोऽप्यनेकत्वं स्यान्न त्वनेकः । अनेकत्वेऽपि रूपस्य कुतो नैकत्वम् ? स्वस्मिन्नेकोऽप्यन्येन सहितोऽनेक इति विरोधाभावात् । एवं बाधका-भावात्साधकसद्भावाच्च भेदस्य धर्मिस्वरूपत्वात्तत्प्रतीतावन्योन्याश्रयत्वम् ।

पटः प्रतीयमानः सर्वव्यावृततयैव प्रतीयत इत्युक्तं तदयुक्तम् । प्रतियोगिभूतस्य सर्वस्य धर्मिणश्च पटस्य युगपज्ज्ञानप्रसङ्गात् । यद्यपि ज्ञानानां वध्यघातुकभावेन यौगपद्यमस्ति । तथापि युगपदुत्पत्तिस्तु नास्ति । मनसो-ऽणुत्वेन युगपदनेकेन्द्रियसन्निकर्षभावात् । एकेन्द्रियविषयेऽपि सजातीयात्मगुणानां युगपदुत्पत्त्यदर्शनादिति चेन्न । यथा दीपसहस्रं तत्सन्निकृष्टकरणेन युगपत्सामान्यतो ज्ञायते तद्वत् प्रकृतेऽपि युगपदनेकज्ञानाभावात् ।

ननु सर्वमिति सामान्यतो यत्सर्वविषयकं ज्ञानं तत्साक्षिरूपं तस्मिन् सर्वदा सत्येव पटादिज्ञानानि मनोवृत्तिरूपाणि जायन्ते तत्कथमेतावाक्षेपपरिहारौ । सत्यम् । तथापि विशेषतो व्यावृत्तिप्रतीतौ घटपट-ज्ञानोत्पत्तियौगपद्यं प्रसज्यत एव ।





तत्र धर्मिणः प्रतियोगिनां च पुरोऽवस्थितत्वे युगपत् इन्द्रियसन्निकर्षे च सति समुदायावलंबनैकज्ञानोत्पत्तिरुक्ता । धर्मिप्रतियोगिनोरन्यतरस्यैव सन्निधाने तु संस्कारसहकृतेन्द्रियसन्निकर्षेणैकज्ञानोत्पत्तिरित्यादि बोद्धव्यम् ।

ननु भेदस्य पटस्वरूपत्वे पट एवास्ति न भेद इति वा भेद एवास्ति न पट इति वा पटभेदशब्दौ पर्यायाविति वापद्येत । मैवम् । विद्यमानयोरेव पटभेदयोः सविशेषाभेदस्वीकारात् । तत्राभेदेनान्योन्याश्रयादिपरिहारो भविष्यति । विशेषस्य भेदप्रतिनिधित्वात् अभिन्ने वस्तुनि पुनर्विशेषोऽस्ति इत्येतदप्रसिद्धं कथमङ्गीक्रियत इति चेन्न । अभेदवादिभिरपि विशेषस्याङ्गीकार्यत्वात् । स एष नेति नेत्यात्म इत्यत्र वाक्ये प्रतिपाद्यतया ब्रह्मणः सर्ववैलक्षण्याङ्गीकारात् । तत्र आत्मशब्दार्थस्य वाक्यद्वयप्रतिपादितयोः व्यावृत्त्योश्च न तावद्भेदो भेदाभेदो वाङ्गीकर्तुं शक्यौ अखण्डवाक्यार्थाङ्गीकारविरोधात् । तत्रात्यन्ताभेदेऽपि विशेषस्य चानङ्गीकारे पदानां पुनरुक्तिप्रसङ्गेन अनाम्नानं प्रसज्येत । अतो नेह नानास्ति किञ्चनेत्यादिवाक्यविरोधपरिहाराय अत्यन्ताभेद इव पौनरुक्त्यादिप्रसङ्गपरिहाराय विशेषोऽप्यङ्गीकार्य एव । ननु एवमेवमादिपदजातं न वचनवृत्त्यात्मनि प्रवर्तते किन्तु लक्षणया तत्र वचनवृत्त्या प्रतिपाद्ययोर्व्यावृत्त्योर्भेदसद्भावान्न पौनरुक्त्यम् । लक्ष्यार्थभेदाभावान्नाखण्डार्थताहानिरिति । मैवम् । लक्ष्यार्थे विशेषाभावे पुनर्वैयर्थ्यापरिहारात् ।

नानाविधारोपपरिहारस्य प्रयोजनत्वान्न वैयर्थ्यमिति चेन्न । प्रतिपाद्यविशेषाभावे तत्परिहारस्याप्यनुपपत्तेरिति ।

किञ्च एकार्थविशेषणत्वेन प्रतीयमानं व्यावृत्तिद्वयमभिन्नमपि सातिशयं प्रतीयते । न तु तन्मात्रमिति । अतो व्यावृत्तिद्वयस्य निर्विशेषाभेदे ह्यनुभवविरोधः स्यात् ।

ननु दृश्यत्वाद्यनुमानादिभिः प्रपञ्चस्यैव मिथ्यात्वात्कथंभूताद्धर्मतो भेदः सत्यः स्यादिति चेन्न । तथा साधयितुमशक्यत्वात् । तथा हि । वियदादिपदार्थः । तद्भेदश्च प्रत्यक्षादिप्रमाणसिद्धः इत्यङ्गीक्रियते न वा । नेति पक्षे अनुमानाश्रयासिद्धिः स्यात् । नाद्यः । धर्मग्राहकं प्रत्यक्षादिप्रमाणविरोधेनानुमानानां कालात्ययापदिष्टत्वात् । अनुमानैः प्रत्यक्षादीनां बाधो भविष्यतीति चेन्न । इदानीमपि तत्प्रामाण्यासिद्धत्वात् । प्रत्यक्षादीनां अप्रामाण्ये बाधितविषयत्वेनानुमानानां प्रामाण्यं तस्मिंश्च सिद्धेः । तद्विरोधेन प्रत्यक्षादीनामप्रामाण्यमितीरिते इतरेतराश्रयत्वं स्यात् । न चैवं प्रत्यक्षादिप्रामाण्येऽपि इतरेतराश्रयत्वं समानमिति वाच्यम् । प्रत्यक्षादीनां धर्मिग्राहकत्वेन प्रबलानां दुर्बलानुमानविरोधमनपेक्ष्यैव प्रामाण्यस्य स्थितत्वात् । शुक्त्यादे रजतत्वादिप्रतीतेरपि बलवत्प्रत्यक्षविरुद्धत्वादेव भ्रमत्वं, न तर्कमात्रात् प्रत्यक्षस्य प्राबल्यं परीक्षादिसहकृतत्वम् । यद्यनुमानस्य प्रत्यक्षबाधकत्वमङ्गीक्रियते । तर्हि कालात्ययापदिष्टमात्रलोपप्रसङ्गः स्यात् ।

गन्धवद् द्रव्यं पृथिवी न भवति भूतत्वादबादिवत् इत्यनुमानेन पृथिवीत्वादिग्राहकप्रत्यक्षस्य बाधः स्यात् ।





ननु अत्रोपजीव्यत्वेन प्रत्यक्षविरोधात् नानुमानं प्रमाणं यथा तेजोऽवयविनोऽनुष्णत्वसाधकं कृतकत्वानुमानं तत्रापीहानुष्णत्वप्रतियोग्युष्णत्वस्य तेजोऽवयविनि प्रत्यक्षेण ज्ञातत्वात् । न च प्रकृते तथास्तीति । मैवम् । येन विना यस्योदयो नास्ति तत्तस्य उपजीव्यमिति प्रसिद्धत्वात् । न साध्यधर्मप्रतियोगिग्राहकमेवेति नियमः । किन्तु धर्मिसाध्यलिङ्गव्याप्त्यादिग्राहकमपि । तद्विरोधश्चास्ति प्रकृत इति । अनिर्वचनीयसाधकानुमानस्य सत्त्वासत्त्वे एकवस्तुनिष्ठात्यन्ताभावप्रतियोगिनीत्यस्याविरुद्धत्वस्योपाधित्वात् ।

न च गोत्वाश्वत्वादौ साध्याव्यापकता प्रतिषेध्यप्रतिषेधात्मकस्य विरोधस्य विवक्षितत्वात् ।

भेदश्रुतीनां अतत्वावेदकत्वे अभेदश्रुतीनामपि तत्स्यात् । श्रुतित्वाविशेषात् । कथं चैवंवादिनां वेदवादित्वम् । विमतो वैदिकत्वेन न व्यवहर्तव्यः अवैदिकत्वेन व्यवहर्तव्यो वा वेदोक्तस्य मिथ्यात्वाङ्गीकारित्वात् बौद्धादिवत् ।

ननु मया वेदैकदेशस्य तत्त्वावेदकत्वं अङ्गीक्रियते इति चेन्न । बौद्धादीनामपि तत्साम्यात् ।

न हि तेऽपि वेदोक्तं स्वदर्शनानुगुणमपि मिथ्येत्याहुः । अनुवादपरोऽसौ वेदभाग इति चेन्न अनुवादे प्रयोजनाभावात् । नेह नानेति प्रतिषेधार्थमिति चेन्न । स्वर्गापूर्वादीनां वेदमन्तरेण प्राप्त्यभावात् । वेदप्राप्तप्रतिषेधे पुनरप्रामाण्यतादवस्थ्यात् ।

ऐक्यात्म्यमित्यस्यार्थः । एकश्चासौ आत्मा च एकात्मा तस्य भावः ऐकात्म्यम् । सर्वात्मनां ब्रह्मैक्यमिति यावत् ।

यदैकात्म्यं नाम इदमनैपुणाः केचित् ब्रूयुस्तत्र निमित्तं अहं ब्रह्मास्मीत्यादि । शास्त्राणां तत्त्वमभिप्रेतार्थमविज्ञाय ब्रूयुः । कथं अविज्ञानमात्रेण तदुक्तिरित्यत उक्तम्– तथेति । वादबलाः ऐक्यप्रतिपादकसदृशो यो वाद एकविभक्तित्वादिरूपः स बलं येषां ते तथोक्ताः । सर्वेषामविद्यमानं शास्त्रत्वाज्ञानादिकं तेषामेव किन्निमित्तमित्यत उक्तम्— कामेति । यथोक्तं इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन इति ।

ननु द्वा सुपर्णा इत्यादिशास्त्रेषु विरोधिषु सत्सु कथमैक्यं ब्रूयुरित्यत आह याथातथ्यमिति । भेदपराणां शास्त्राणां याथार्थ्यमविज्ञाय । शास्त्रदस्यवः तानि शास्त्राण्यतत्त्वावेदकानीति मन्यमाना इत्यर्थः । एवमैक्यं मन्यमानाः ब्रह्मस्तेनाः । कामादीनामागन्तुकत्वात् मूलकारणमाह निरानंदा इत्यादि । एतेनाधमानां स्वरूपयोग्यतां लक्षयति ॥

तथापि सर्वज्ञत्वाल्पज्ञत्वादिविरुद्धधर्माधिकरणत्वानुमानविरुद्धमैक्यं कथं ब्रूयुरित्यत आह वैगुण्यमेवेति । जीवब्रह्मणोस्तत्त्वतो निर्गुणत्वमेव पश्यन्तो गुणान् सर्वज्ञत्वादिगुणान्न नियुञ्जते । तत्स्वेन रूपेण न योजयन्ति ।





एवंभूतानां फलमाह तेषामिति । ततो गुणप्रचुरं शरीराणाम् । तमो नरकविशेषः । परायणं प्राप्यं स्वरूपतः परिमाणभेदतः । जीवत्वादिजातिभेदतः । श्रुतितो द्वा सुपर्णेत्यादेः । अर्थतः प्रयोजनभावाभावाभ्यां यतः स भगवानन्यः प्रतीयते । अतः सोऽस्मीति संबन्धोऽन्वयः असंहितोऽयोग्यः कथमेव स्यात् ।

ऐक्यस्याप्राप्तत्वेन कथं तन्निराकरणमिति चेन्न । सर्वेषां प्राणभृतां अज्ञानेन देहेन्द्रियादिप्रेरको अहमेव न मत्तोऽन्य इत्यभिमानस्य विद्यमानत्वात् । इयं साधारणी या प्राप्तिः नित्यसाधारणी सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयायेत्यात्मनोऽन्यमनूचानत्वादिगुणप्रदं परमविज्ञाय स्तब्धस्य येनाधीनत्वज्ञापनेन स्तब्धतां निरस्य षष्ठाध्याये भक्तिः व्यपदिश्यते । परमात्मलक्षणाभिमानेन तदैक्यप्राप्तिः ।

यद्वा ऐक्यवादिसिद्धं ऐक्यं निराक्रियते अतत्त्वमसीत्यनेन वादिप्रतिवादिनामपि प्रवाहरूपेणानादित्वात् उपपन्नम् । यतो अत्रैव प्रकरणे सदेव सोम्येदमग्र आसीदिति स्वमतमभिधाय तद्धैक आहुः, असदेवेदमग्र आसीत्, तस्मादसतः सदजायत इति शून्यवादिप्राप्तं शून्यस्यैव प्रलयेऽवस्थानं जगत्कारणत्वं चानूद्य कुतस्तु खलु सोम्येवं स्यात् कथमसतः सज्जायेतेति निराक्रियते तद्वदत्रापि ऐक्यवादिप्रवादप्राप्तस्याद्वैतस्य निराकरणोपपत्तेः ।

अथवा श्रुतीनां प्राप्तं वाचैक्यं निराक्रियतेऽतत्त्वमसीत्यनेन । न चैतददृष्टचरम् । यतो दर्शपूर्णमासाभ्यां 'स्वर्गकामो यजेते'त्यादिश्रुतितात्पर्यापरिज्ञानप्राप्तमनीश्वरविषयं काम्यं कर्मपूर्तमित्यनूद्य 'नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्तीति' निराक्रियते निन्दायाः प्रतिषेधे तात्पर्यात् ।

न चैवंविधस्य कर्मणो अन्यतः प्राप्तिरस्ति । ऐक्यस्य कुवादिप्राप्तत्वं श्रुतितात्पर्यापरिज्ञानप्राप्तत्वं च मोक्षधर्मे दर्शितम् । अतश्चतुर्धा प्राप्तिसद्भावात्तत्प्रतिषेधो युक्त इति ।

कविः सर्वज्ञः । मनीषी मनसामीशिता । परिभवति सर्वानिति परिभूः । सर्वतो वरः । स्वयंभूराश्रयो यस्यासौ स्वयंभूः स्वतन्त्रः परमेश्वरोऽर्थान् महदादीन् शाश्वतीभ्यः समाभ्यः सर्वेष्वपि कालेषु याथातथ्यतो याथार्थ्येनैव सत्यानेव व्यदधात् निर्मितवान् । निर्माणे शक्तिप्रदर्शनार्थं कविरित्यादि । स्पार्हं स्पृहणीयं हविरादिकं वसु भक्तेभ्यो जेतोत प्राप्तापि तथा तेभ्यः स्पार्हं वसुफलं दातोत दातापि । परमेश्वरो यद्विश्वं चिकेत चकार तत्सत्यमिति सत्यमेव । कुतो न मोघं अर्थक्रियास्वनुपयुक्तं न भवति । हे मघवानौ धनवन्तौ इन्द्राबृहस्पती युवोर्युवयोः अधीनं विश्वं सत्यमिति सत्यमेव । कुतः युवयोः सत्यजगत्पालनादिकं व्रतं कर्म आपश्चन सर्वा देवता अपि प्रमिनन्ति जानन्ति । न केवलमहमेव । अस्य महतः सर्वोत्कृष्टस्य सत्यस्य परमेश्वरस्य महानि महान्ति सत्या सत्यानि करणानि कर्माणि नु इदानीमेव प्रावोचम् । विषयस्यासत्यत्वे कर्मणां सत्यत्वमयुक्तम् । सत्यकर्मा सत्यकर्मनामा । अप्रतिष्ठं बाधितत्वात् । ते असुराः अपरस्परसंभूतं परमेश्वराधिष्ठितायाः प्रकृतेर्महान् महतोऽहङ्कार इत्यादिक्रमेण परस्परसंभूतं न भवति । सत्यं न चेत्, किं तर्हि, अन्यत् सदसद्भ्यां, परस्परसंभूतं न चेत् किं तर्हि कामहैतुकम् । कामं इति कार्येण कारणं मिथ्याज्ञानमुपलक्ष्यते । नष्टात्मानो नष्टचित्ताः अल्पबुद्धयोऽल्पज्ञानाः प्रभवन्ति कलियुगादौ । क्षयाय अनिष्टप्राप्तये ।





तद्यः सुप्रसिद्धो योऽहं योऽसौ सूर्ये स्थितः परमात्मा सोऽहं प्रकृतमिति शेषः । तत्राद्ये वाक्ये अहंशब्देनान्तर्यामिणं निर्दिश्य तस्य देशकालपूर्णत्वलक्षणं ब्रह्मत्वमुच्यते ।

द्वितीये तु स्थानभेदेनान्तर्यामिणोरपि भेदशङ्कायां स्वान्तर्यामिणः सूर्यान्तर्गतेन परमात्मनैक्यममिधाय पुनरिन्द्रार्जुनादिवदवान्तरविशेषनिरासाय योऽसौ सोऽहमिति सूर्यान्तर्गतस्य स्वान्तर्यामिणैक्यमुच्यते । तृतीये-ऽप्येवमेव।

एताः श्रुतयः अहं ब्रह्मास्मि, तद्योऽहं सोऽसौ, योऽसौ सोऽहम्। योसावादित्ये पुरुषः सोऽहमस्मि। स यश्चायं पुरुषो यश्चासावादित्ये स एकः स प्रसिद्धो योऽयमित्यर्थः।

अहंशब्दस्यान्तर्यामिवाचित्वं कुत इत्यत आह अ इतीति । अहमित्यपि पदं तत्र ब्रह्मविषयतयावगत-मित्यर्थः। अहं नामा हरिर्नित्यमत्र हेयत्वात्प्रकीर्तितः। नञ्पूर्वकात् ओहाक् त्यागे इत्यस्मात्कर्मणि क प्रत्यय इत्युक्तं भवति।

सत्यमेनमनुविश्वे मदन्ति रातिं देवस्य गृणतो मघोनः । गृणतः स्तुवतो मघोनो देवस्येन्द्रस्य रातिं मित्रमेनं विष्णुं अनु तस्मात् हेतोरिति यावत् । विश्वे सर्वेऽपि प्राणिनो मदन्ति हृष्यन्तीत्येतदीश्वरस्य जीवानां चोपजीव्योपजीवकत्वं सत्यम्। सत्यः सो अस्य महिमा गृणेशवो यज्ञेषु विप्रराज्ये। स प्रागुक्तोऽस्य विष्णोर्महिमा महत्त्वं सर्वोत्तमत्वमित्यर्थः। सत्यः। तं सत्यमहिमानं अहं विप्रराज्यरूपेषु यज्ञेषु शवः सुखमुद्दिश्य गृणे स्तौमि।

गुहायां हृदये। व्योमन् व्योम्नि। ब्रह्मणा सहेति भेदोक्तिः।

न च ब्रह्मणा ब्रह्मस्वरूपेण सर्वान् कामान् सह युगपदश्नुते इति व्याख्येयम् । ब्रह्मात्मैकत्वं प्राप्तस्य कामावाप्त्यनङ्गीकारात्। सर्वभेदनिवृत्त्युपलक्षणमेतदिति चेन्न। लक्षणायां प्रयोजनाभावात्।

ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्करीषु । ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः । त्वः कश्चिद्ब्रह्मा पुपुष्वान् पुष्टः सन् ऋचां पोषं पुष्टमुच्चारणं कुर्वन्नास्ते । त्वस्तु ब्रह्मा शक्करीषु ऋक्षु गायत्रं साम गायति त्वस्तु ब्रह्मा जातविद्यां पौरुषेयीं विद्यां वदति। त्वस्तु ब्रह्मा यज्ञस्य विष्णोर्मात्रामु अंशमेव विमिमीते ध्यायतीति।

न च वाच्यं ऋत्विग्विषयमेतदिति। एकस्मिन्यज्ञे अनेकेषां ब्रह्मणां अभावात्। अन्यथा त्वो ब्रह्मेत्यस्य वैयर्थ्यात्। ब्रह्मानुचराः त्रयोऽपि ब्रह्माण इति चेन्न। तथापि तेषां ऋक्पोषणादिप्रसिध्यभावात्। यज्ञे जातविद्योप-योगाभावाच्च । परं ज्योतिः परमात्मानमुपसंपद्य तत्समीपं प्राप्येति भेदोक्तिः । सहमुक्ताः ज्ञातयः । अज्ञातयस्तु कल्पान्तरमुक्ताः।







यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। न तु तदेव भवति। एवं मुनेर्विजानतः आत्मा भवति गौतमेति। एवं मुनेर्विजानतः विजानतां मुनीनां आत्माधिपतिः। हिरण्यगर्भोऽपि मुक्तः परमात्मानं प्राप्य तादृगेव भवति किमुतान्य इत्यर्थः। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति। साम्यं परमात्मना निर्दुःखत्वादिसादृश्यमुपैतीति भेदोक्तिः। प्राप्ताक्षिकर्णफलत्वादक्षण्वन्तोऽक्षिमन्तः कर्णवन्तश्च मुक्ताः सखायः परस्परं प्रीतियुक्ताः मनोजवेषु प्रज्ञादिगुणेष्वसमाः तारतम्योपेता बभूवुः।

तत्र केचिदादघ्नासः आदघ्नाः। अर्श आदिभ्योऽच्। बहुप्रमाणक्षीराब्धिमन्तः तत्क्रीडापराः। त्वे केचित् उपकक्षासः उपकक्षाः। कक्षस्य वनस्य उपसमीपे उ एव वर्तमानाः वनक्रीडारताः। त्वे स्नात्वा उ स्नातव्याः ह्रदा इव गंभीरा ददृशे ददृशिरे। परमेश्वरमेव ददृशुरिति।

जगद्व्यापारवर्ज्यम्। मुक्तः सर्वान्कामान् आप्त्वाऽमृतः समभवत्। इति ऐश्वर्यमर्यादोक्त्या जगद्व्यापारवतो हरेः भेदोऽवगम्यते। स यथा सैन्धवघनोऽयं बाह्यः कृत्स्नो रसघनो एवैवं वा। अनेयमात्मानं बाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति। न प्रेत्य संज्ञास्तीति अनेन ब्रवीमीति होवाच याज्ञवल्क्यः। सहोवाच मैत्रेयि अत्रैव मा भगवान्मोहान्तमपीपिबत् न प्रेत्य संज्ञास्तीति। स होवाच अनेन अहं मोहं ब्रवीमि। विनाशी वा अयमात्मानुच्छित्तिधर्मा। यत्र हि द्वैतमिव भवति। तदितर इतरं पश्यति। तदितर इतरं जिघ्रति। तदितर इतरं रसयते। तदितर इतरमभिवदति। तदितर इतरं शृणोति। तदितर इतरं मनुते। तदितर इतरं स्पृशति। तदितर इतरं विजानाति। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्। केन कं जिघ्रेत्। केन कं रसयेत्। तत्केन कमभिवदेत्। तत्केन कं श्रुणुयात्। तत्केन कं मन्वीत। तत्केन कं स्पृशेत्। तत्केन कं विजानीयात्। येनेदं सर्वं विजानाति तं केन विजानीयात्। स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यते। अशीर्यो न हि शीर्यते। असङ्गो न हि सज्जते। असितो न व्यथते। न निष्यति विज्ञातारमरे केन विजानीयादित्युक्तानुशासनासि मैत्रेयी एव तावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार।

यद्वैतं न पश्यति पश्यन्नेव न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते। अविनाशित्वात्। न तु तद्द्वितीयमस्ति। ततोऽन्यद्विभार्यत्पश्येत्। न द्वैतं न जिघ्रति यद्वैतं रसयते। यदद्वैतं न वदति यद्वैतं न शृणोति इत्यादि। यत्तद्वविष्णुः पश्येत् पश्यन्वै तत्र पश्यति। नित्यज्ञानस्वरूपत्वात् तत्समो नान्य इष्यते। यत्किञ्चिद्वस्तु भगवता न इष्टं तन्नास्त्येव। विद्यमानं सर्वं पश्यत्येव। न हि द्वितीयो द्रष्टा यो विभक्तत्वेन जगत्पश्यति नान्योऽतोऽस्ति। द्रष्टेति स्थिते श्रुतेः। यत्तद्दृष्टं भगवता तदेवास्ति न चापरम्। न ह्यन्यो विद्यते द्रष्टा यः पश्येतद्दर्शितः। ब्रह्मादिरपि यो द्रष्टा पश्येत्तस्य प्रसादतः। तददृष्टं कुतः पश्येदतः को वा विरोध इति च। यदवतारादिकं तत्त्वेन न पश्यति न तु तत्ततो द्वितीयम्। नित्यज्ञानत्वात्। भ्रमाभावात्। यद्विभक्तत्वेन विष्णुः पश्यति। तत्ततोऽन्यदस्ति चेति च। यस्माद्विष्णु विश्वं विभक्तत्वेन पश्यति तस्मात्तदन्यदस्त्येव।

न च जगदभावोऽत्रोच्यते अन्यद्विभक्तमिति विशेषेण वैयर्थ्यात्। विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीति संसारे ज्ञानस्वरूपस्य जीवस्य भूतोत्पत्तिविनाशनिमित्तावुत्पत्तिविनाशौ इत्यभिधाय न प्रेत्य





संज्ञा अस्तीति । मुक्तस्य तु भूतानां विनिवृत्तत्वात् । निमित्तं वृत्तिज्ञानम् । उपलक्षणमेतत् । उत्पत्त्यादिकं च नास्तीति याज्ञवल्क्येनोक्तम् । ततो मोक्षस्वरूपं सम्यक् ज्ञातुकामा मैत्रेयी सर्वथा ज्ञानाभावोऽनेनोक्त इत्यारोप्यात्रैव मा भगवानित्याह—

भगवन् अत्रैवावश्यवेदितव्यविषये मा मां मोहान्तं मोहाख्यं विनाशं अपीपिपत् प्रापितवान् । कथं प्रेत्य मोक्षानन्तरं संज्ञा ज्ञानं नास्तीति । न चेदं सम्यग्ज्ञानम् । परमपुरुषार्थे मोक्षे ज्ञानाभावस्यासम्यक्त्ववादिति । मुक्तौ ज्ञाननाशस्य पूर्ववाक्ये दोषत्वेनोक्तत्वात् ।

अथ याज्ञवल्क्यो न वा अहं मोहं ब्रवीमीति नाहं मोहकं वाक्यं ब्रवीमि त्वं तु भूतेभ्य इति प्रकरण-मननुसन्धायान्यथा कल्पयसीत्युवाच ।

पुनस्तस्य विशेषजिज्ञासां ज्ञात्वा मोक्षविषयाः वादिविप्रतिपत्तीः निराकुर्वन् शून्यवाद्यभिमतमात्मविनाश-लक्षणं मोक्षं विनाशी वा अरेऽयमात्मा इति निराकृत्य विशेषगुणोच्छेदलक्षणं, वैशेषिकाद्यभिमतमोक्षं निराकृतवान् । न विद्यते उच्छित्तिर्येषां तेऽनुच्छित्तयः अनुच्छित्तयः धर्मा यस्यासौ अनुच्छित्तिधर्मेति मुक्तस्य ज्ञानादीनां धर्माणामपि अनुच्छित्तिरुच्यते ।

ननूच्छित्तिर्धर्मो यस्यासौ उच्छित्तिधर्मा नोच्छित्तिधर्माऽनुच्छित्तिधर्मेति स्वरूपाविनाभाव एवोच्यते । न तु धर्मानुच्छित्तिरिति चेन्न । स्वरूपाविनाशस्याविनाशीत्यनेनैवोक्तत्वात् ।

न तु धर्मानुच्छित्तिरिति चेन्न । स्वरूपनाशस्य अविनाशीत्यनेनैवोक्तत्वात् । निर्विकारत्वं तेनोक्तमिति चेत् तथापि, अनुच्छित्तिरिति बहुव्रीहिणैव पूर्णत्वात् धर्मपदवैयर्थ्यम् ।

अनन्तरं ये अद्वितीयचैतन्यमात्रावस्थानं मोक्षमास्थिताः तन्मते अनिष्टप्रसङ्गं वक्तुं तस्य व्याप्तिसापेक्षत्वात्, तामादौ अवादीत् । यत्र हि द्वैतमिति । द्वयोर्भावो द्विता भेद इति यावत् । तस्या इदं धर्मिद्वैतं भिन्नं वस्तु इत्यर्थः ।

यद्वा द्वीति भावप्रधानं द्वित्वेनेतं प्राप्तं द्वीतं ततः स्वार्थिकोऽण्, द्वैतं, भेदवत् । अत्र द्वाभ्यां विरुद्धधर्माभ्यां इतं द्वीतम् । तत्र भवं द्वैतं भेद इति यावत् ।

यद्वा द्वितेत्यनेकत्वसंख्योच्यते, तत्रभवं द्वैतं भेद एव । द्वित्त्वेन संख्ययेतं तत्रभवं द्वित्त्वसंख्यया युते भवमिति वा । तत्र भेदिनां भेदस्य च पारतन्त्र्यादिवशब्दः । यद्वा द्वैतसद्भावः तदेव दर्शनादिभोगो दृष्ट इति ।

एवं व्यतिरेकव्याप्तिमभिधाय इदानीं प्रसङ्गमाह यत्र त्वस्येति । यत्र मुक्त्यवस्थायां अस्य जीवस्य सर्वं करणादिकं आत्मैवाभूत् स्वव्यतिरेकेण किमपि नाभूत् । तत्तस्यामवस्थायां केन करणेन कं विषयं पश्येत् । न केनापि किमपि पश्यति । येन करणसमूहेन इदं विषयजातं सर्वं विजानाति तमपि मुक्तौ केन विजानीयात् ।





न केनापि, किञ्च विज्ञातारमात्मानं वाऽरे मैत्रेयि केन विजानीयात् न केनापीत्यर्थः। एवमत्र प्रयोगः यदि निर्विशेषचैतन्यमात्रमवशिष्यते न किमपि वस्त्विति मतं स्यात्तदा दर्शनघ्राणादिरूपभोगोऽस्य न स्यात्। तथा येनेश्वरेणेदं सर्वं जीवो विजानाति तज्ज्ञानाभावश्च प्रसज्येत। एवं विज्ञातुरात्मनोऽपि ज्ञानं न स्यात्। निर्विशेषत्वेन कर्तृकर्मभावविरोधात्। भवितव्यं च दर्शनादिभोगेनेश्वरज्ञानेन आत्मज्ञानेन च। अतो निर्विशेषचैतन्य-मात्रावस्थानलक्षणोऽपि मोक्षोऽनुपपन्न इत्यापादनात्मक आक्षेप एव अस्य वाक्यस्यार्थ इति।

मुक्तौ करणाद्यभावात् दर्शनादिकं नास्तीति वस्तुकथनमेवेदं किन्न भवतीति चेन्न। अत्रैवेति मैत्रेय्या मुक्तौ ज्ञानादिनाशस्य दोषत्वेनोक्तत्वात्॥ यदि चात्र मुक्तस्य ज्ञानाभाव एव अर्थः तर्हि मैत्रेय्या कृतस्य उत्तरं वक्तव्यं, न चोक्तं तेन गम्यते मुक्तस्य ज्ञानाभावो नात्रार्थ इति। अविनाशीति तद्धर्माणामप्यविनाशस्योक्तत्वात्।

नन्वत्रैव मा भगवानिति न मोक्षस्य अपुरुषार्थत्वप्रसङ्गाभिप्रायं किन्तु ज्ञानघन इत्युक्त्या पुनः तत्प्रेत्य संज्ञा नास्तीत्युक्ते व्याहत्यभिप्रायेणात्रैवेत्युक्तम् तत्र संसारे विज्ञानघनो व्यूह तत्केन कं पश्येदिति परिहारः सङ्गत एवेति। ( अत्र ग्रंथपातः। सङ्गतिर्नास्ति। )

मैवम्। तथा सति अत्रैव मा भगवान् मोहान्तं आपीपतत्। विज्ञानघन इति न प्रेत्य संज्ञास्तीति चेति वाक्यद्वयोपादानप्रसङ्गात्। व्याघातस्योभयाश्रयत्वात्। एकस्यैव तु वाक्यस्योपादानात् तद्विधमेव दोषोद्भावनमिति ज्ञायते।

मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेत्। अहमित्येव यो वेद्यः स जीव इति कीर्तितः। स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोरिति परमश्रुतिः। यः स दुःखी स सुखी बन्धमोक्षयोः पात्रं च स जीव इति कीर्तितः। स सर्वास्ववस्थासु अहमिति स्वेन वेद्य इति योजना।

यद्वैतं न पश्यतीत्यस्य योजना। शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णः इति नाडीनां परस्परविलक्षणरूपवद्भिः भगवद्रूपैः व्याप्तत्वमुक्तं तेन तद्रूपाणां भेदः प्राप्तः। तथा तद्वा अस्यै तदाप्तकाममाप्तकाममकामं रूपमिति इति षष्ट्या रूपरूपवद्भेदश्च। तन्निराकर्तुमिदमुच्यते। हृदयस्य भवतीति हृदयशब्देन प्रकृतब्रह्म भगवान् यद्यस्मात्, शुक्लादिकं रूपं द्वैतं स्वतः परस्परं च भिन्नं न पश्यति, तत्तस्मात् द्वितीयं नास्ति न भवति। भेदेन दृष्टत्वे भगवता भेदेन दृष्टत्वेऽपि कुतो न भिन्नम्। न ह्यस्माभिः शुक्तिकाया भिन्नत्वेन रजतं न दृश्यत इत्येतावता तत्ततो न भिन्नम्। मैवम्। पश्यन् सर्वज्ञ एव तच्छुक्लादिकं भिन्नत्वेन न पश्यति वै। एवं तर्हि जीवजडात्मकं विश्वमपि किं ततो न भिन्नम्, नेत्युच्यते। यद्यस्मात् भगवान् यज्जीवादिकं विभक्तं स्वतो विभक्तं भिन्नं पश्येत्। तत्तस्मात् ततोऽन्यदेव भगवता भेदेन दृष्टत्वेऽपि कुतो भिन्नम्। न हि चन्द्रः चन्द्राद्भिन्नत्वेनास्माभिः दृश्यते इत्येतावता भिन्नः। मैवम्। न हि द्रष्टुः परमेश्वरस्य दृष्टेर्ज्ञानस्य विपरिलोपो वैपरीत्यं अयथार्थत्वं विद्यते अविनाशित्वात् निर्दोषत्वात् अबाधित-त्वादित्यर्थः। तन्मते विभक्तं यत्पश्येत् तं नास्तीत्येतावता पूर्णत्वेन शेषवैयर्थ्यात्।





न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते - इति वाक्ये द्रष्टृदृष्ट्योः संबन्धकथनेन निर्विशेषत्वं बाध्यते । उपचारोऽयमिति चेन्न । अनुपपत्त्यभावात् । दृष्टेरित्येतावतां पूर्णत्वेन द्रष्टृग्रहणवैयर्थ्याच्च । एतेन द्रष्टुर्दृष्टेरिति सामानाधिकरण्यमित्येतदपि निरस्तम् ।

गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु । कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति । गताः मुक्ताः इति वक्ष्यमाणानां सर्वेषां विशेषणम् ।

प्राणाद्याः पञ्चदशकलादेवताः, अन्ये च प्रतिदेवतासु देवताप्रतिबिंबभूतासु प्रजासु प्रतिष्ठाः, स्थितिहेतवः सर्वे देवाः कर्माणि, कर्माभिमानिनी देवता च विज्ञानमय आत्मा चेत्येते सर्वे परमात्मानं प्राप्य तस्मिन्नेव स्थिता एकीभवन्ति । प्राक् भिन्नमतयोऽधुना, ऐकमत्यं प्राप्नुवन्ति । प्राक् विभिन्नमतयो ब्राह्मणाः राजकुले एकीभवन्तीति यथा । अथवा प्रागीश्वरव्यक्तिस्थानापेक्षयाऽन्यत्रेतस्ततः स्थिताः तत्र मिलिता भवन्ति । अह्नीतस्ततः स्थिता गावः सायं गोष्ठे एकीभवन्तीति यथा । च्विप्रत्ययोऽप्येवं सति मुख्यार्थः स्यात् । विषयैक्यात् मतानां ऐक्यं तदैक्यान्मतिमतामप्यैक्यं इति लक्षितलक्षणेत्यर्थः । स्थानैक्यं स्थानिषु यत इति वा ।

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति । यावन्मोक्षं तु भेदः स्याज्जीवस्य परमस्य च । ततः परं न भेदोऽस्ति भेदहेतोरभावतः । इत्यादीन्यपि वाक्यान्येवमेव व्याख्येयानि ।

असन्तं अभद्रमित्यर्थः । मुक्तस्य परमेश्वरेण मत्यैक्ये प्रमाणम् । कामेन ते काम आगात् हृदयाद् हृदयं मृत्योः । यदमीषामदः प्रियं तदैतद्रूपमामभि । मृत्योः संहर्तुरीश्वरस्य कामेनेच्छानुसारेणैव मे काम आगात् मुक्तौ वा आगच्छतु । मृत्योर्हृदयाद् हृदयं सङ्कल्पमनुसृत्यैव मे हृदयं सङ्कल्प आगच्छतु । अमीषाममुष्य मृत्योः यददः प्रियं तदेव मामभि आ सम्यक् एतु ममापि प्रियं भवतु इति मुमुक्षुणा प्रार्थ्यते ।

ब्रह्ममत्यनुकूला मे मतिर्मुक्तौ भविष्यति । अतः प्रायोऽनुकूलत्वं इदानीमपि मे स्थितम् ।

इदानीं जीवन्मुक्त्यवस्थायामपि मुक्तानां परमेश्वरेण स्थानैक्ये प्रमाणम् । येनाक्रमन्त्यृषयो ह्याप्तकामाः यत्र तत्सत्यस्य परमं निधानम् । यत्र लोके सत्यस्य परमेश्वरस्य तत्परमं निधानं प्राकट्येन सन्निधानं तं लोकं आप्तकामाः कृतार्था ऋषयः येन देवयानेन पथाऽऽक्रमन्ति गच्छन्तीति यच्छब्दस्य पूर्वत्रान्वयः ।

एतमानन्दमयमात्मानमुपसङ्क्रामतीत्यादि । स्वरूपैक्याभिप्राये कर्मणां ऐक्यकथनं अनुपपन्नं स्यात् । न हि जडानां चिदात्मना ब्रह्मणा ऐक्यमङ्गीक्रियते ।

ननु कर्माण्येकीभवन्तीत्यस्य चिद्रूपे भ्रान्त्यारोपितानि ज्ञानेन निवर्तन्त इत्यभिप्रायः । अतो नोक्तदोष इति चेन्न । तथा सति विज्ञानात्मनो विनिवृत्तिप्रसङ्गात् ।





न हि सकृदुक्तस्य शब्दस्य, अर्थद्वयकल्पनाऽयुक्तेति । अन्यथा पञ्चदशानामपि कलानां निवृत्तिसाम्यात् कर्मणोऽपि कलात्वात् गताः कलाः षोडशेत्येव वक्तव्यम् । पृथक् निवृत्तिकथनं व्यर्थं स्यात् । किञ्च कर्मव्यतिरिक्तानां कलानां गता इति शब्देन कर्मणां त्वेकीभवन्तीति शब्दान्तरेण निवृत्तिकथनं व्यर्थं स्यात् ।

ननु समानजातीयानामपि पृथक्क्रियासंबन्धोक्तिर्दृष्टा यथा ब्राह्मणाः समागताः वसिष्ठश्चेति । तथाऽत्र किं न स्यादिति चेन्न । तत्र श्रैष्ठ्यज्ञापनादिप्रयोजनविशेषसद्भावात् प्रकृते तु तदभावात् । अस्मन्मते तु पृथगुक्तेः प्रयोजनं उक्तम्, — कलाभ्यश्चान्यदेवेभ्यः कर्म प्रत्यवरं गतः । कलाभ्यः पृथगुक्तं तत्पुष्करः कर्म चोच्यत इति ।

न च ज्ञाननिवृत्तस्य रजतस्य शुक्त्यैकीभावव्यवहारोऽस्ति । परेऽव्यय इत्यधिकरणत्वकथनं च भेदज्ञापकम् । अधिकरणाधिकर्तव्ययोश्च लोके भेदो दृष्टः । स्वरूपैक्ये विवक्षिते पर एव भवन्तीति निर्देशः स्यात् । पुरुष एव, स्वायत्ते प्रयोगे किमित्यवाचकं पदं प्रयुञ्जीतेति पर्यनुयोगमर्हति ।

वेदे तु न पुरुषोऽस्तीति चेत् — तर्हि पुरुष एव पूर्वोत्तरानुसन्धानेन वदेदित्युपक्रमाद्यानुगुण्यमपि वेदेनानुसरणीयं स्यादिति गतं मीमांसाव्यसनेन ।

अथ पुरुषारोपणेन तदनुसरणं तत्प्रकृतेऽपि सममिति ।

परब्रह्म वेद ब्रह्मैव भवति । अत्र हि यो ब्रह्म वेद सोऽब्रह्मत्वं त्यक्त्वा ब्रह्म भवतीत्येवोच्यते, न तु यद्ब्रह्म अनेन विदितं तदेवायं ब्रह्म भवतीति । तथाविधशब्दाश्रवणात् । यथा संपूज्य ब्राह्मणं भक्त्या शूद्रोऽपि ब्राह्मणो भवेदति वाक्ये ब्राह्मणपूजकस्य शूद्रस्य ब्राह्मणत्वमेवोच्यते । न तु पूजितब्राह्मणव्यक्तितादात्म्यं तथेति ।

ननु यद्वेद तदेव भवतीति शब्दाभावेऽपि अनुपपत्त्या एषोऽर्थो लक्ष्यते । ब्रह्मत्वं ह्यस्योच्यते । न च ब्राह्मणपूजकस्याशूद्रस्य ब्राह्मणान्तरत्ववत् ब्रह्मान्तरत्वं युज्यते अनेकब्रह्माभावात् । तेन विदितब्रह्मतादात्म्यं प्राप्नोतीत्येवार्थः सिध्यतीति ।

मैवम् । ब्रह्मशब्दो हि बृंहणयोगनिमित्तको न तु अनपेक्षितावयवार्थो व्यक्तिविशेषे रूढः । तथा चानेकब्रह्मसंभवान्नानुपपत्त्याऽप्येषोऽर्थो लभ्यत इति भावः ।

तत्र ब्राह्मणशब्दस्य जातिवाचित्वेनैकार्थमेवेति चेदत्रापि ब्रह्मशब्दो बृंहितानेकव्यक्तिवृत्तिब्रह्मत्वजातिवाचीति साम्यम् । बाधकात्प्रकृतपरित्यागादिकमित्येतदपि समानम् । बाधकानि चोक्तानि वक्ष्यन्ते च ।

किञ्चात्र पूर्वो ब्रह्मशब्दः परमत्वेन विशेषितः, द्वितीयस्तु केवल इति च विशेषः । अथवाऽद्यो ब्रह्मशब्दः परमात्मवाची द्वितीयो जीववाची । ततश्च यद्यपि जीवः परमं ब्रह्म वेद ब्रह्मविद्यादिकां महतीं साधनसंपत्तिं कुर्यात् । तथापि ब्रह्मैव जीव एव भवति । न तु पारतन्त्र्यादिरूपं जीवभावं परित्यज्य कदापि परमात्मत्वं प्राप्नोतीत्यर्थः ।

ब्रह्माणि जीवाः सर्वेऽपीत्यादेः परमं ब्रह्मेति परशब्दादतिशये मन्प्रत्ययः।

विष्णो त्वं मात्रया मात्रायाः मितेः परोऽसि। तन्वा वृधान ववृधानः पूर्णः न तु कीर्तिमात्रेण। एवंभूतस्य ते महित्वं महिमानं केऽपि नान्वश्नुवन्ति। नाप्नुवन्ति। यत्कैवल्यं सर्वोत्कृष्टत्वं यत्स्वभावः यस्यानागन्तुकः स केवलो भवानिति।

ब्रह्मैव सन् जीवभावमजहदेव ब्रह्म परमप्येति, अपिहितः प्रविशतीत्येवार्थः। यथा पिबन्ति तेजांसि महातेजांस भास्करे इत्यादिवचनैः तथावगमात्।

ऐक्यवादिनोऽनेकविधाः। केवलैक्यवादिनः, भेदाभेदवादिनश्चेति। केवलैक्यवादिनोऽपि द्विविधाः। एकजीववादिनो बहुजीववादिनश्चेति। भेदाभेदवादिनोऽपि त्रिविधाः।

तत्रैके वर्णयन्ति। सार्वज्ञादिसमस्तगुणोपेतं सर्वदोषदूरं ब्रह्म सच्छक्तिचिच्छक्तियोगात् द्विविधम्। तत्र सच्छक्तिकं जगदुपादानकारणं भवति। जगच्च सत्यमेव। चिच्छक्तिकं तु अनाद्यन्तःकरणोपाधिपरिच्छिन्नं जीवेश्वरभावमापद्यते। तथैकमेवाकाशं घटपटाद्युपाधिपरिच्छिन्नं घटाकाशादिभावम्।

तत्रेश्वरोऽविलुप्तज्ञानत्वान्न संसरति। केवलं उपाधिसंबन्धाज्जगत्सर्जनादि क्रियावेशं अनुभवति। जीवास्तु बहवो अज्ञानमिथ्याज्ञानतत्संस्कारकामकर्मादिवशात् सत्यानेवान्तःकरणधर्मान् दुःखादीन् आत्मन्यारोप्य संसरन्ति। एवं भेदाभेदयोः सत्यत्वेऽपि अभेदः स्वाभाविकः भेदस्त्वौपाधिकः। यस्योपाधिनाशः तस्य ब्रह्मत्वमिति॥

अन्ये त्वाचक्षते, एकस्यैव ब्रह्मणोऽनेके स्वाभाविका एवांशाः जीवाः न तु औपाधिकाः। ततो भेदाभेदयोः स्वाभाविकत्वान्मुक्तावपि भिन्नाभिन्ना एव जीवाः। केवलं अज्ञानादिनिमित्तं दुःखादिकमानन्दाद्यावरणञ्च ज्ञानकर्मभ्यां निवर्तत इति॥

अपरे तु मन्यन्ते जीवाः ब्रह्माभिन्नाः। भेदस्तु न कल्पितः, न चौपाधिको, नाप्यंशांशिभावनिमित्तः, किन्तु, अतिरेकनिमित्त एव, अन्यत्समानमिति।

तत्र एकजीववादिनां मतं निराकरोति।

ननु विप्रतिपन्नं सर्वं जीवजडात्मकं, एकजीवाज्ञानपरिकल्पितं, दृश्यत्वात्, स्वप्नवत् इत्यनुमानसद्भावात् कथमत्र प्रमाणाभावः इति चेत्। अत्र वक्तव्यं, एवमनुमिमानेन सर्वस्य कल्पको जीवोऽमुक इति निश्चितो न वा। आद्ये किमसाविदानीं ऐक्यप्रवणो, भेदप्रवणो वा। प्रथमेऽपि किं गुरुः शिष्यो वा।

नाद्यः, स्वाविद्यापरिकल्पितं सर्वस्य ज्ञात्वा पुनः शिष्यादिबोधनायोगात्। यथा स्वप्नोऽयमिति निश्चित्य स्वप्नपुत्रदायार्थं यत्नः। परप्रसिद्ध्या चेदं दृष्टान्ताभिधानं स्वप्नस्यास्मन्मते सत्यत्वात्। विमतो गुरुः स्वाज्ञानकल्पित-





शिष्योपदेशाद्यर्थं न यतते स्वव्यतिरिक्तस्य कल्पितत्वज्ञानवत्त्वात् । उभयप्रसिद्ध्या दृष्टान्तस्तु मृतपुत्रांश्चाप्रतीत्य भ्रान्तेः उत्थितः स्वपिता कल्पित एवायमिति निश्चित्य तदीयदायार्थं न हि यतत इति।

अपरोक्षज्ञानाभावान्न प्रयतते इति चेन्न । दिङ्मोहादौ परोक्षज्ञानमात्रस्यापि प्रवृत्तिप्रतिबन्धकत्वदर्शनात् । किञ्च शब्दादेवानिश्चय एवायं तत्तन्नोपपद्यते।

बहूनां दृश्यमानत्वादस्याज्ञानपरिकल्पितमिति निश्चयः कुतः । दृश्यत्वहेतोरिति चेन्न । गुरोरपि दृश्यमानत्वात् तस्याप्यचेतनस्य अत्यचेतनत्वं स्यात् । एवं शिष्यादिविषयोऽपि निश्चयो निराकार्यः । किञ्च सर्वेऽपि गुरवः कल्पकाः किंवा कश्चिद्गुरुः । नाद्यः एकजीववादपरित्यागोपपत्तेः । न द्वितीयः बहूनां गुरूणां दृश्यमानत्वात् । अस्य गुरुव्यक्तिविशेषस्य ज्ञानपरिकल्पितमिति निश्चयायोगात् ।

यश्चानिश्चयपक्षोऽङ्गीकृतः तर्हि निर्धारणाभावे अनुमानप्रतीत्यनुपपत्तेः ।

किं सर्वेऽपि जीवाः पक्षीक्रियन्ते किं वा कल्पकत्वेनाभिमतव्यक्तिव्यतिरिक्ताः । नाद्यः । कल्पकस्यापि कल्प्यत्वप्रसङ्गात् । न द्वितीयः व्यक्तिनिर्धारणाभावे तद्व्यतिरिक्तत्वेन पक्षविशेषणानुपपत्तेः । कल्पकातिरिक्ता इति विशेषणाददोष इति चेन्न । कल्पितत्वे सिद्धे कल्पकसिद्धिः, तत्सिद्धौ च तत्सिद्धिरिति अन्योन्याश्रयप्रसङ्गात् ।

दृश्याः सर्वे जीवा इति पक्षनिर्देश इति चेन्न। कल्पकस्यापि दृश्यत्वात् । अन्यथा एकजीवाज्ञानपरिकल्पिता इति विशेषणस्याप्रसिद्धिप्रसङ्गात् । तस्य स्फुरणमात्रेण विशेषणत्वोपपत्तिरिति चेन्न । कल्पककल्पितत्वनिश्चयात्पाक् अस्य स्फुरणमेव अन्येषां तु दृश्यत्वमिति विवेक्तुमशक्यत्वादिति ।

किञ्च कल्पको जीवो न निर्धारितः । तर्हि मोक्षसाधनं ज्ञानं केन साधनीयं सर्वैरपि, मदज्ञानकल्पितं सर्वं अहमेव परमात्मेति मोक्षसाधनीभूता विप्रविपत्तिः कर्तव्या । तत्र यः सत्यो जीवः, तस्य तथा प्रतिपत्त्या मोक्षो भवति, अन्येषां तु निवृत्तिरिति किमत्र दुर्घटमिति चेत् ।

किमत्र प्रतिपत्तिर्नाम मानसी क्रिया, उत तत्त्वज्ञानम् ।

नाद्यः । तस्य मोक्षसाधनत्वाभावात् । द्वितीयेऽपि किमेताः सर्वाः प्रतिपत्तयः तत्त्वविषयाः, उत एका तत्त्वविषया अन्यास्तु भ्रान्ताः ।

आद्ये देवदत्तप्रतिपत्तेः तत्त्वविषयत्वात् देवदत्तः सत्यः, यज्ञदत्तस्तु कल्पितः स्यात् । यज्ञदत्तप्रतिपत्तेः तत्त्वविषयत्वात्तद्वैपरीत्यं स्यात् । न चैतद्युक्तम् । एकस्मिन्नेव देवदत्तादौ वस्तुनि कल्पितत्वाकल्पितत्वरूपविकल्पासंभवात् । नहि विरुद्धधर्मालिङ्गितं वस्त्वस्ति ।





द्वितीये त्वियं तत्त्वविषयेति निश्चायकाभावेन सर्वासामपि भ्रान्तत्वसंभवात् अकल्पितमेव सर्वमिति किं न स्यादिति।

किञ्च सर्वे ह्येतां प्रतिपत्तिं मोक्षाशया कुर्युः, विधानसामर्थ्याद्वा। नाद्यः। आत्मनः सत्यजीवत्वनिश्चयाभावे मोक्षस्याप्यनिश्चयात्। न हि कश्चिदनिश्चितप्रयोजनाय महान्तं क्लेशं अनुभवति॥ द्वितीये विधानमपीष्टसाधनता-वबोधनरूपं वा स्यात्। राजाज्ञारूपं वा। न प्रथमः। उक्तन्यायात्। न द्वितीयः। राजाज्ञारूपे प्रमाणाभावात्।

इदानीं शिष्याज्ञानपरिकल्पितत्वनिश्चयपक्षे प्रतिषेधः क्रियते। परिकल्पितगुर्वादिकं समस्तमिति शेषः। स्वयमेव शिष्याज्ञानपरिकल्पितमित्यङ्गीकारे तस्यैवाचार्यभावे स्वयमेव स्वशिष्याज्ञानकल्पितो भवति।

न चासौ शिष्यान्न बोधयतीति वाच्यम्। महावाक्यार्थाधिगमाभावप्रसङ्गात्। (अधीतिबोधाचरणप्रचारैः चतुर्भिश्च प्रकारैः) विद्योपयुक्ता भवतीति व्याख्यानस्यापि वाक्यार्थाधिगतिहेतुत्वेन प्रसिद्धत्वात्। अतः सम्यग्ग्रन्थाधिगमस्यैवानर्थहेतुत्वं स्यात्।

शिष्यत्वस्यानियतत्वादयमपि शिष्याज्ञानपरिकल्पितमिति निश्चयोऽपि न युक्तः। अस्मिन् पक्षे मोक्षव्यवस्थापि न सिद्ध्यति।

तथा हि। शिष्याज्ञानकल्पितं सर्वमिति पक्षे शिष्यस्यैव मोक्षो वक्तव्यः। स च महावाक्यार्थाधिगमसाध्यः। वाक्यार्थाधिगमश्च शिष्यबोधनेनैव सम्यग्भवति। सति च न शिष्ये स्वस्य तदज्ञानकल्पितत्वप्राप्तेः।

शिष्यत्वमुपलक्षणम्। न विशेषणमिति चेत्। तर्हि अनिश्चयपक्ष एवापन्न इति। भेदप्रवणपक्षं दूषयति स चेति। स चैको जीवो यदि भेदवादी भवति तस्य भेदविषय एव दृढसंस्कारत्वात् "पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः" इति वचनात्॥

मोक्षश्रुतिप्रामाण्यात्तस्य भेदवासनाक्षयोऽद्वैतज्ञानं च भविष्यतीति चेत्तर्हि नासौ कल्पको जीवः भेदप्रवणत्वस्यापगमात्। उपलक्षणत्वपक्षे दोषस्योक्तत्वात्।

किञ्चानेन यथा कल्पितं तथैव भवतीति तेन एकजीववादिनां नित्यनिरयकल्पने स एव स्यात्। क्रियाकारकफलरूपस्य सर्वस्य तत्कल्पनामात्रशरीरत्वात्। अतो निश्चयपक्षाणां अतिप्रसङ्गदुष्टत्वात् असंभवाच्च। अनुपपत्तौ अनिश्चयपक्षेऽङ्गीकार्ये प्रतिज्ञैव नाङ्गं धत्त इति नानुमानसंभवः।

अथवा निश्चयाभावपक्षे मोक्षसाधनानुष्ठानासंभवात् निश्चयोऽवश्यमङ्गीकार्यः। तत्र च कल्पकस्य जीवस्य गुर्वाद्यन्यतमत्वं व्यापकम्। परस्परविरोधे तु न प्रकारान्तरस्थितिरिति न्यायात्। न च तदुक्तविधया युक्तं इति व्यापकनिवृत्त्या व्याप्यनिवृत्तेः बाधितविषयमनुमानमिति।





प्रपञ्चो यदि विद्येत निवर्तेत न संशयः। मायामात्रमिदं द्वैतं अद्वैतं परमार्थतः। विद् सत्तायामिति धातोः यदि विद्येत तदभावे तु कादाचित्कसत्तायां को भवेदिति अर्थः। विदोत्पत्ताविति धातोः यदि विद्येत उत्पद्येत तर्हि निवर्तते। न च निवर्तते तस्मात् अनादिरेवायं प्रपञ्चः।

नात्र प्रपञ्चो विश्वविस्तारः। किन्तु प्रकारवचने सजातीय इत्युक्तजातीयरर्थे पञ्चन् शब्दात् ड प्रत्ययः। ततश्च पञ्चविधः प्रपञ्चः स च प्रकृष्टत्वात् प्रपञ्चः। प्रकृष्टत्वं च मोक्षाङ्गज्ञानत्वात्।

तत्र विशेष्याकाङ्क्षायां प्रकरणप्राप्तभेदस्याङ्गीकारो युक्तः। तथा हि— 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते। अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा।' इति पूर्वश्लोके अनादिमायया परमेश्वरेच्छया प्रकृत्यादिना च जीवजातस्य ज्ञानावरणलक्षणं सुप्तत्वं तथैव तत्त्वज्ञानलक्षणः प्रबोधश्च उक्तः। तेन जीवेश्वरयोः जडेश्वरयोः जीवजडयोश्च भेदा सन्तीति लब्धम्। प्रभोरिच्छया निगडादिना पुरुषे बद्धे मुक्ते च भेदत्रयदर्शनात्। प्राक् 'प्रभवः सर्वभावानामि'ति भावशब्दोक्तानां जीवानां मिथो भेदोऽपि लब्धः। तत एव आवरणानां जडानामपि मिथो भेदोऽर्थाल्लभ्यते। तेषां पञ्चानामपि भेदानां अनादिमाययाऽजमनिद्रमित्यादिविशेषणसामर्थ्यादनादित्वमपि लब्धम्।

तदिदं पञ्चानामपि भेदानां सत्यत्वमनादित्वं चोपपादयितुमिदं श्लोकद्वयम्। तत्र तावदनादित्वं विपक्षे बाधकप्रसङ्गेनोपपादितम् प्रपञ्च इति। यदि च जडजीवभेदो नश्येत्तदा जीवस्य जडत्वापत्त्या मोक्षशास्त्रवैयर्थ्यापत्तिरित्यादिरूपेण निवर्तेतेत्यस्यानिष्टत्वं द्रष्टव्यम्।

न चासत्योऽयं भेदः। मायामात्रत्वात् मायेति भगवत्प्रज्ञा। सैव मानम् त्राणकर्त्री च यस्य तत् मायामात्रम्। माङ् माने त्रैङ् पालने इत्याभ्यां मूलविभुजादित्वात्कः। घञर्थे कविधानमिति वा। परमेश्वरेण ज्ञातत्वात् रक्षितत्वाच्च तद्वैतं भ्रान्तिकल्पितमित्यर्थः। न हीश्वरस्य भ्रान्तिः। तथात्वे निरवद्यत्वश्रुतिविरोधात्।

तर्हि अद्वैतः सर्वभावानामित्यस्य कोऽर्थ इति चेत्। उच्यते। सर्वभावानां मध्ये तुर्यो देवः एक एवाद्वैतः समाभ्यधिकरहितः। एतदेव श्रुतिरप्याह अद्वैतं परमार्थत इति। अत्राद्वैतशब्दो भावसाधनः। परमार्थत इति पञ्चमी ल्यब्लोपनिमित्ता तेनापि व्यवहारतः। अन्यसद् द्वितीयत्वं परमार्थतः परमार्थमपेक्ष्येत्यर्थः। सर्वस्मादुत्तमोऽर्थः परमार्थः स एक एव। सर्वोत्तममपेक्ष्य द्वितीयत्वं श्रुतावुच्यत इत्यभिप्रायः।

यदि द्वितीयशून्यत्वमेव तस्याः श्रुतेरर्थः स्यात्तर्हि सर्वभावानामित्येतद्व्यर्थं स्यात्। कुतः। देवोऽद्वैत इत्येतावता विवक्षितार्थसिद्धेः।

किञ्च विरुद्धप्रयोजनं च। सर्वभावानामिति निर्धारणे षष्ठी लक्षणान्तरासंभवात्। तथा च कृष्णा गवां संपन्नक्षीरतमेत्युक्ते यथा कृष्णाया एव संपन्नक्षीरतमत्वमन्यासां तदभाव इत्युक्तं स्यात्तथा सर्वभावानां मध्ये





तस्यैकस्याद्वैतमित्युक्ते एकस्यैवाद्वितीयत्वमन्येषां सर्वभावानां सद्वितीयत्वमित्युक्तं भवति । न चैतद्युक्तम् । तस्याद्वितीयत्वेऽन्ये भावा एव न सन्ति । केषां सद्वितीयत्वं स्यात् । ततोऽयमद्वैतशब्दः समाधिकवाची इत्यङ्गीकर्तव्यम् ।

तथा च तस्यैकस्यैव समाधिकराहित्यमन्येषां तत्साहित्यं चोक्तं भवेत् । तच्चाद्वैतमतविरुद्धमिति । प्रपञ्चस्यैकजीवाज्ञानकल्पितत्वमेवार्थः किं न स्यादित्यत आह विकल्प इति । विकल्पो भेदो यदि केनचित् अज्ञानादिना कल्पितः स्यात्तदा निवर्तेत बाध्येतेति । न च निवर्तते । अतो न कल्पितः इत्यापादनावाक्येन जगत्सत्यत्वावगमात् । तेन चास्य श्लोकस्य प्रपञ्चस्य कल्पितत्वमर्थो न भवतीत्यपि विज्ञायते ।

एतत् श्लोकद्वयं स्वरूपकथनमेवेति चेन्न, तथात्वे विद्यमानवत्प्रतीयमानोऽयं प्रपञ्चो निवर्तिष्यते केनचित्कल्पितः अयं विकल्पो विनिवर्तिष्यत इति वक्तव्यम् । निवर्तेत विद्येतेति प्रसङ्गरूपेण कथनं यदि शब्दश्च न युज्यते ।

यदि शब्दसहितस्य लिङो यदि पर्वतो निरग्निकः स्यात् तदा निर्धूमः स्यात् इत्यादौ प्रसङ्ग एव दृष्टत्वात् । विद्येतेत्यस्य चोत्पत्त्यर्थानङ्गीकारे यदस्ति तन्निवर्तत इति व्याप्त्यभावात् निवर्तेतेति न युज्यते । अतः प्रपञ्चस्य अनादित्वसत्यत्वपरमिदं वाक्यम् ।

वाक्यशेषस्यायमर्थः । उपदेशादयं वादः वेदवचनं यथावत् ज्ञातव्यम् । एवं ज्ञाते भेदोऽस्ति अज्ञाते अज्ञात एव द्वैतं न विद्यते अज्ञानिनां पक्ष एव द्वैतं न विद्यते इत्यर्थः । जीवेश्वरभिदा चैवेति समाख्या मैत्रेयशाखायां च ।

अथ ज्ञानोपसर्गा इत्युक्त्वा अथ ये चान्ये मिथ्यातर्कैः दृष्टान्तैः कुहकेन्द्रजालैः वैदिकेषु परिस्थातुमिंच्छन्ति तैः सह न संवसेत् । प्राकाश्या ह्येव तस्करा अस्वर्ग्या इत्याह 'नैरात्म्यवादकुहकैः मिथ्यादृष्टान्तहेतुभिः । भ्राम्यन् लोको न जानाति वेदविद्यान्तरं तु यत्' इति ।

अथ ज्ञानोपसर्गाः सम्यग्ज्ञानविघ्ना उच्यन्ते । ये चान्ये प्रागुक्तेभ्यः कापालिकादिभ्यः मिथ्यातर्कैः प्रपञ्चमिथ्यात्वसाधकैः दृश्यत्वादिहेतुभिः । कुहकेन्द्रजालैः दृष्टान्तैः कुहकं छद्मना प्रदर्शितम् । प्रकाशे भवाः प्राकाश्याः । इति ह्याहेति ब्राह्मणं स्वोक्तार्थे साक्षित्वेन मन्त्रम् उपादत्ते । इत्युक्तमर्थं मन्त्रोऽप्याह हीत्यर्थः ।

आत्मसंबन्धि किमपि नास्तीति वादो नैरात्म्यवादः । नैरात्म्यवादैश्च कुहकैश्च मिथ्यात्वसाधकैः दृष्टान्तहेतुभिः । अर्थात् कुहकैः दृष्टान्तैरिति भवति । वेदविद्यान्तरं वेदविद्याभिप्रायम् । आत्मनः इदं आत्म्यं, तस्याभावो नैरात्म्यं स्वार्थे वा अण् । तस्य वादो नैरात्म्यवादः ।

प्रपञ्चो न भ्रान्तिकल्पितः निरधिष्ठानत्वात् निष्प्रधानत्वात् आत्मवत् व्यतिरेकेण रजतवत् ।





**नन्वहं मनुष्य इति देहात्मविभ्रमस्तावदस्ति।** अन्यथा संसाराभावप्रसङ्गात्। तत्र यद्यप्यधिष्ठानं प्रधानं चास्ति तथापि सादृश्याभावादुक्तव्याप्तिभङ्ग इति चेत्।

किमत्रात्मनि देहारोपो देहे वा आत्मारोपः, उत भिन्नयोः देहात्मनोरभेदारोपः।

न प्रथमद्वितीयौ। देहात्मनोः प्रातीतिकत्वप्रसङ्गात्। देहान्तराभावात्। न तृतीयः। आविपालगोपालं देहात्मभेदज्ञानसद्भावस्यान्यत्रोपपादितत्वात्। कथं तर्हि **मनुष्योऽहमित्यादिव्यवहार** इति चेत् उपचारेणेति ब्रूमः। उपचारे किं निमित्तमित्यत आह। **यथा वस्तुनो** भिन्नयोस्तन्तुपटयोरेकदेशस्थितत्वं तद्दर्शनेऽपि स्फुटतर-विवेकाभावश्चास्ति। तथा देहात्मनोरप्येकदेशस्थत्वादिसादृश्येनायं व्यवहारः। ततो भ्रान्तेरभावात् नात्रोक्तव्याप्तेर्भङ्गः शङ्कनीय इति। स्फुटभेदज्ञानाभावादेव संसारोपपत्तिः।

किञ्च स्फुटभेदज्ञानेऽपि पुत्रादाविव स्नेहादिवशात् रागादिकं संभवत्येव। पुराणवाक्यमपि स्फुटभेदप्रतिभासाभावविषयमिति। ननु शङ्खः पीतो नभो नीलं तिक्तो गुडः इत्यादिष्वपि पीतत्वादयोऽन्यत्र विद्यन्त एव। पीतसादृश्यं च द्रव्यत्वादिकं किञ्चिच्छङ्खादीनां पीतादीनां चास्त्येव। अतो न कुत्रापि सदृशः तथा वस्तुद्वयं विना भ्रमः।

ननु द्रव्यत्वादिसादृश्येन भ्रान्त्युत्पादेऽतिप्रसङ्गः स्यादिति चेन्न, सोपाधिकभ्रमेष्वल्पस्यापि सादृश्यस्य भ्रमहेतुत्वोपपत्तेः। **यथा** जलप्रवाहगते दण्डे व्यक्तिभ्रमः, चक्षुर्गतपित्तपीतिमाप्रयुक्तो हि पीतशङ्खभ्रमः, गोलकगतकार्ष्ण्योपाधिकः साक्षिसिद्धे नभसि नीलभ्रमः। जिह्वागतपित्ततिक्ततानिमित्तो गुडतिक्तताभ्रमः। देहात्मनोः तु भ्रम **एव** नास्ति। पीतशङ्खादिभ्रमः सोपाधिकः। शुक्तिरजतादिभ्रमस्तु निरुपाधिकः। परेणाप्येषा व्याप्तिरङ्गीकृतैव यदभाषत। स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यास इति।

अत्र हि स्मृतिरूपपदेन सादृश्यमङ्गीकृतम्। परत्रेत्यधिष्ठानम्। पूर्वदृष्टेति प्रधानम्। अत एव केशोण्ड्रकादिभ्रमस्य निरधिष्ठानत्वमाशङ्क्य तेजोंऽशाधिष्ठानत्वेन समाधानं कृतम्। बालस्य गुडतिक्तताभ्रमे प्रधानभावमाशङ्क्य जन्मान्तरानुभूतत्वोपपादनेन परिहार उक्तः। तथापि शिष्यव्युत्पादनार्थं आचार्येण इदं व्याप्त्युपपादनं कृतं न परं प्रतीत्यदोषः।

आत्मानात्मनोः इतरेतराध्यासः तैरङ्गीकृतः। तत्र अनात्मन्यात्मभ्रमकल्पनेनात्मनः सत्यत्वं स्यात्।

किञ्च एकस्मिन्नात्मनि सर्वं जगत् कल्पितं न भवति युगपत् बहुधा दृश्यमानत्वात्। आत्मा वा युगपत् बहुधा दृश्यमानस्याधिष्ठानं न भवति। एकत्वादित्यनुमानद्वयस्य व्याप्तिमुपपादयति न चेति। न चैकमेव युगपद्बहुधा दृश्यते भ्रान्तौ। ननु आत्मा एकविध एव जगत्तु बहुविधं प्रतीयताम्। तदापि आत्मनि आरोपो घटत इति चेत्, किमात्मनि धर्मित्वेन उत धर्मत्वेन। पक्षद्वयमप्यनुपपन्नमित्याह न चेति।

न हि कश्चित्। अहं भेद इति वा भिन्न इति वा भ्रान्तो दृश्यते अनुपलंभात्। व्याप्तात्मनि जगदारोप इति चेन्न, व्याप्तात्मस्वरूपानुविद्धतया घटादीनां प्रतीत्यभावात्। आरोपितस्य च अधिष्ठानानुविद्धतया प्रतीतिनियमात्। न हि कश्चित् इदं शुक्लभास्वरं रजतमितिवत् इदं आत्मस्वरूपं घट इति प्रत्येति।

ननु सन्घटः प्रकाशते घट इति सत्प्रकाशसंभिन्नतया घटः प्रतीयते। सत्प्रकाशात्मकश्चात्मेति कथं आत्मानुविद्धतया घटादिप्रतीत्यभावः। असाधारणाकारानुवेधस्तु रजतादिविभ्रमेऽपि नास्तीति चेन्न।

अनित्यमिदं कृष्णमिदमिति प्रतीतेरनित्यादिरूपस्याधिष्ठानत्वप्रसक्तेः। घटधर्म एवासौ नाधिष्ठानानुवेध इति चेत् तर्हि सत्तादिकमपि किं न स्यात्।

अस्य पृथक्सत्ताभावादिति चेन्न। अन्योन्याश्रयप्रसङ्गात्। सिद्धे हि आरोपितत्वे पृथक्सत्त्वाभावसिद्धिः। ततश्च अधिष्ठानानुवेधसंभवेन आरोपितत्वसिद्धिः।

यदप्युक्तं उपाधिकृतभेदेनात्मस्वरूपस्यापि भिन्नत्वात् बहुविधप्रपञ्चारोपाधिष्ठानत्वं युक्तमिति। तत्र वक्तव्यम्।

किमुपाधयः सत्या उत मिथ्येति। नाद्यः अपसिद्धान्तापातात्। न द्वितीयः। अर्थक्रियाकारित्वाभावप्रसङ्गात्। शशविषाणादेः कार्यकारित्वादर्शनात्। भेदोऽपि मिथ्येति चेत् तथाप्यनुपपत्तिः। मिथ्याभूतस्यापि आकाशभेदस्य घटाद्युपाध्यभावे प्रतीत्यभावात्। उपाधयोऽप्यारोपिताः सत्या एव न तु शशविषाणायिता चेत् कथं तर्हि ते बहुविधातादृशात्मन्यध्यस्येरन्। तदर्थं पुनरुपाध्यन्तरकृता भेदकल्पने अनवस्था स्यादिति।

यच्चोक्तं पूर्वं सङ्गादुत्तरोत्तरारोपे प्रधानमिति। तदपि असत्। आदिसृष्टावनुपपत्तेः। पूर्वकल्पानुभवसंस्कारस्तु अत्राप्यस्तीति चेन्न। तथा सति नारिकेलद्वीपवासिनोऽपि गुञ्जापुञ्जादौ ज्वलनसमारोपप्रसङ्गात्। न ह्यनादौ संसारे कदापि तेन ज्वलनो नानुभूत इति शक्यते वक्तुम्। प्रमिते हि अनन्यार्थसिद्धे कार्ये जन्मान्तरानुभवस्यापि उपयोगः कल्प्यते। न चेदानीमपि जगदारोपः प्रमितः। अनुमानागमयोः निराकृतत्वात्। अत एव सादृश्यव्युत्पादनमप्यसदिति।

किञ्च यदज्ञानमधिष्ठानमावृत्य आरोपं उत्पादयति। यच्चारोपितार्थज्ञानं किं तदुभयव्यतिरिक्तं जगत्पक्षीकृत्य दृश्यत्वाद्यनुमानेन एकजीवाज्ञानपरिकल्पितमिति साध्यते। आहोस्वित् तदपि पक्षे निक्षिप्य। न प्रथमः तावताप्यद्वैतासिद्धेः। न हि ज्ञानाज्ञानयोः आत्मस्वरूपत्वम् अङ्गीकृतम्। येन तयोरनारोपितत्वेऽप्यद्वैतं सिध्येत्। यद्यपि आरोपितस्य ज्ञानं साक्षीत्यङ्गीकृतम्। तथापि तस्यासङ्गत्वादारोपितार्थसंबन्धासंभवात् आरोपितार्थे संबन्धिरूपेण कल्पितरूपमेवाङ्गीकृतम्। न द्वितीयः। यथा नास्ति अत्र रजतमिति बाधकज्ञानेन रजतस्य कल्पितत्वं दृश्यते। न तथा ज्ञानाज्ञानयोरपि। प्रत्युत एतावन्तं कालं अहमिदं शुक्तिकाशकलं नाज्ञासिषं रजतत्वेनाऽज्ञासिषं चेति शुक्तिकाशकलवत् ज्ञानाज्ञानयोरबाधितत्वेनानुवृत्तिदर्शनात्। अतो बाधितविषया





प्रतिज्ञेति ॥ ज्ञानविषयस्य मिथ्यात्वमेव तदप्रामाण्ये मिथ्यात्वव्यपदेशे च कारणम् । न तावत् स्वरूपतो मिथ्यात्वमात्रमप्रामाण्यादि कारणम् ।

किन्तु विषयवैपरीत्यमपि । अन्यथा तत्त्वमस्यादिवाक्यजनितस्य मिथ्याभूतस्य वृत्तिज्ञानस्याप्यप्रामाण्यादिप्रसङ्गात् । न च विषयान्यथात्वेऽपि स्वरूपमिथ्यात्वाभावेनाप्रमाद्यभावो दृष्टः । ततश्च तन्मात्रेणैव तदुपपत्तौ स्वरूपमिथ्यात्वमपि कल्पयतो गौरवं स्यादिति ।

बिंबप्रतिबिंबयोर्भेदः स्वाभाविकः । तत्र बिंबसन्निधिरादर्शपरिणतिहेतुरेवं तदपायोऽपि विपरीतपरिणतिहेतुः । विपरीतपरिणतौ च प्रतिबिंबगर्भितता नश्यत्येव । यथा हि । सुवर्णरजतादीनां मूषाग्निसन्निधाने लब्धद्रवावस्थानां तदपाये पुनर्घनीभावस्तथात्रापि किं न स्यात् । दर्शनानादरे च स्थायित्वमपि कस्य बलेनापद्येत । तस्मात् यथा यथा दर्शनं लोके समवाय्यसमवायिनिमित्तनाशः कारणमङ्गीक्रियते, तथा प्रतिबिंबस्यापि उपाधिबिंबतत्सन्निधानवशात् नाशो अङ्गीकर्तव्यः । तस्मात् बिंबप्रतिबिंबयोः प्रतिबिंबानां च मिथो स्वाभाविकत्वात् नोपाधिकृतत्वम् । न द्वितीयः । तस्य असिद्धत्वात् । नेक्षेतोद्यन्तमादित्यमित्यादीनां गौणार्थः । मायामयी सृष्टिरपि तत्सदृशस्य अन्यस्य विद्यमानत्व एव दृष्टा । द्रव्यत्वादिसादृश्ययुक्तं किञ्चिदधिष्ठानमाश्रित्यैव च ।

विश्वं नेश्वरमायाकल्पितं तेन दृश्यमानत्वात् । यद्यन्मायाकल्पितं न तत्तेन दृश्यते यथेन्द्रजालादिकं माया विनेति । अथवा नेदं मायामयं मायावित्वाभिमतेन दृश्यमानत्वादिति प्रयोगः । विवादपदं नारोपितं सर्वात्मना अधिष्ठानापरोक्षज्ञानवता दृश्यमानत्वात् । यदेवं तदेवम् । यथोक्तविधया स्तंभविदा दृश्यमानो न कुंभस्तत्रारोपितः ।

अथवा यन्नैवं तन्नैवम् । यथा शुक्तिकारोपितं रजतशुक्तिदर्शनात् दृश्यत इति । इदं च दुःखादेरविद्यमानत्व-निरासेऽपि समानम् ।

सत्योपाधिकल्पितबहुजीववादपक्षे दोषाः । ब्रह्मैव ह्युपाधिसंबन्धात्संसारीति परस्य मतम् । अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते नात्र विचार्यमस्तीत्यादिश्रुतेः । ततश्च संसारिणां सर्वदा विद्यमानत्वात् सर्वदा ब्रह्मण एव उपाधिसंबन्धात् ब्रह्मणः तस्य नित्यसंसारित्वं स्यात् । ततश्च शुद्धवस्तुव्यवस्थाभावः ।

न च शुद्धस्य नोपाधिसंबन्ध इति वाच्यम् । उपाधिसंबन्धस्य उपाधिसंबन्धकल्पनेनानवस्थाप्रसङ्गात् ।

सर्वेऽप्युपाधयः तत्संबन्धाश्चानादय एव तत्कथमनवस्थेति चेत् । तेषां संबन्धानां निमित्तनिमित्तिभावोऽस्ति न वा । आद्ये कथं नानवस्था । द्वितीये तु संबन्धाः सर्वेऽपि शुद्ध एवेत्यापन्नम् ।

सिद्धविषयत्वात् नानवस्थादोष इति चेन्न । निमित्तनिमित्तिभावावस्थितानां नोपाधिसंबन्धसद्भावे प्रमाणाभावेन कल्पनामात्रत्वात् । यो जीवभेदनिमित्तभूत उपाधिसंबन्धः तेनैव संबन्धेनैव संबद्धस्य स एव संबन्ध इत्यङ्गीकारे आत्माश्रयत्वप्रसङ्गात् ।





उत्पत्तिः ज्ञस्यप्रतिबन्धकत्वान्नायं दोष इति चेन्न । निमित्तनिमित्तिभावाभ्युपगमात् । अन्यथा शुद्धस्योपाधिसंबन्ध इत्यापत्तेः ।

किञ्च तदुपाधिसंबन्धवति तदुपाधिसंबन्ध इत्यङ्गीकारे तदुपाधिसंबन्धस्याधारे प्रवेशः आधेयत्वं चाङ्गीकृतम् । तथा च स्वोत्पत्त्यपेक्षोत्पत्तिवस्त्वज्ञानापेक्षज्ञानवत् स्वस्यैवाधाराधेयत्वेऽप्यात्माश्रयत्वं भवत्येव । अन्यथा यज्ञदत्तः किमिति न स्वात्मानमारोहेत् ।

केवले स्वस्मिन्नवर्तनाददोष इति चेत् । तर्हि कुण्डलिनि स्वस्मिन्स्वयं वर्तेत । रूपविशिष्टे च रूपस्य वृत्तिः स्यात् ।

तथा च न बद्धमुक्तादिव्यवस्थासिद्धिरिति व्यर्थ एव बहुजीवाभ्युपगमः । मिथ्योपाधिकृतभेदपक्षे दोषाः । अज्ञानसिद्धौ कल्पितोपाधिसिद्धिः तत्सिद्धौ च भावरूपाज्ञानसिद्धिः मिथ्योपाधिभिन्नस्यैवाज्ञानाश्रयत्वात् । शुद्धब्रह्मैवाज्ञानाश्रयमिति चेत् तर्हि तस्य स्वरूपातिरिक्तस्याज्ञानसंबन्धे निमित्तस्याभावात् अज्ञानस्य यावत्स्वरूपमवस्थानावश्यंभावात् मुक्तस्याप्यज्ञत्वप्रसक्तिः ।

एतेन न ब्रह्मणो नापि जीवस्य अज्ञानम् । किन्तु चैतन्यस्वरूपमात्रस्येत्यपि परास्तम् । तस्यापि शुद्धोपहितान्यतरत्वस्यावश्यं वक्तव्यत्वात् । किञ्च यदि केवलस्यैव ब्रह्मणोऽज्ञानं स्यात्तदा निमित्तान्तराभावात् । स्वाभाविकमेव तत्स्यात् ।

यच्च तस्य स्वाभाविकमानन्दादिकं तत्सत्यं दृष्टमिति अज्ञानमपि स्वाभाविकत्वात्सत्यं स्यात् । ततश्चाज्ञानस्यापि सत्यत्वात् ब्रह्मणः सद्वितीयत्वं प्रसज्येत ।

अज्ञानस्य स्वाभाविकत्वे ज्ञानादिवत्तस्यानिवृत्तिः स्यात् । कारणान्तरकल्पनयापि ज्ञानाज्ञानयोः सम एव । अज्ञानसिद्धौ मिथ्योपाधिसिद्धिः । तत्सिद्धौ जीवसिद्धिः जीवसिद्धौ तदाश्रयाज्ञानसिद्धिः इति चक्रकं वा ।

ननु जीवाङ्कुरादाविवात्रापि परिहारः किं न स्यात् । उच्यते । युक्तं बीजाङ्कुरव्यक्तीनां भिन्नत्वात्समाधानम् । जीवादेस्त्वेकैकत्वादपरिहार्यमेवान्योन्याश्रयत्वादिकम् ।

दूरस्थवृक्षह्रस्वत्वादौ प्रत्यक्षापटुत्वस्यैव निश्चितत्वात् युक्त्या दीर्घत्वनिश्चयः ।

प्रत्यक्षस्य रेखोदरेखाद्यविषयीकरणेनार्थग्राहित्वं परिणामादन्यथात्वं च साक्षिणा निश्चितम् ।

दूरस्थवृक्षह्रस्वत्वादिविषयं च दूरस्थत्वादिदोषयुक्तं तन्मन्दग्राहि । तत एव परिणामादावयथार्थ-मित्यन्वयव्यतिरेकानुग्रहीतत्वात्साक्षिणः । ततो ह्रस्वत्वादि ज्ञानबाधितप्रायमेवं ज्ञायते । ततःपरं च प्रवर्तमाना-





वनुमानागमौ तेन दत्तावकाशौ दीर्घत्वादिनिश्चयं कुर्वाणौ तद्बाधकाविवोच्येते । अतो नैतत्प्रत्यक्षस्यानुमानागम-बाध्यत्वे निदर्शनमिति ।

आत्मा मिथ्या वस्तुत्वात्प्रपञ्चवत् । आत्मा सत्यः जगन्मिथ्येति कल्पने कल्पनागौरवं स्यात् । परन्यायेन परस्यापादनम् । यद्वा शून्यवादिप्रयुक्तमनुमानं वा ।

नन्वात्मनो वस्तुत्वाभावात् असिद्धो हेतुरिति चेन्न । तथात्वे तद्व्यवहारलोपप्रसङ्गात् । कल्पितधर्म-सद्भावाद्व्यवहारः । सत्यधर्माभावादसिद्धिरिति चेत् तर्हि दृश्यत्वादेरपि सत्यत्वाभावादसिद्धिः स्यात् । वस्तु च मिथ्या चेति विरुद्धमिति चेत् । दृश्यं च मिथ्या चेति कुतो न विरुद्धम् । शुक्तिदर्शनादौ सहदर्शनादिति चेत् समं वस्तुत्वे । वास्तवं वस्तुत्वं तत्र नास्तीति चेत् । दृश्यत्वमपि तथेति समानम् । यादृशतादृशदृश्यत्वं तत्रास्तीति चेत् । वस्तुत्वमपि तथाभूतमस्तीति कुतो विरुद्धत्वम् । तत्सत्यमित्यादिश्रुत्या दृश्यत्वानुमानमपि बाधितं व्यावहारिकसत्यत्वपरा श्रुतिरिति चेत् । अन्यापि प्रातिभासिकसत्यपरा किं न भवेत् ।

सर्वभ्रमाणां शून्यवादिना निरधिष्ठानत्वेनाङ्गीकृतत्वात् । भ्रमोपपत्त्यर्थमप्यात्मनः सत्यत्वाङ्गीकारश्च न युज्यते । यदि सर्वेषां जीवानां अभेदः स्यात्तर्हि देवदत्तशरीराद्यनुग्रहोपघातादिना देवदत्तशरीरे सुखदुःखाद्युत्पत्तौ सत्यां देवदत्त एव सुखी दुःखी वा न यज्ञदत्त इति । तथा यज्ञदत्तशरीरे सुखाद्युत्पत्तौ यज्ञदत्त एव सुखादिमान्न देवदत्त इति च भोक्तृभेदो न स्यात् । न चापाद्यापादकयोरभेदः ।

स्वरूपाभेदस्यापादकत्वात् । भोक्तृरूपभेदाभावस्यापाद्यत्वात् । तथा सर्वशरीरगतं सुखदुःखादिकं एकेनैव भुज्यते ।

तदयं प्रसङ्गार्थः । यदि देवदत्तशरीराधिष्ठाता जीवो यज्ञदत्तशरीराधिष्ठातृजीवाभिन्नः स्यात्तर्हि यज्ञदत्त-शरीरगतसुखाद्यननुसन्धाता न स्यात् किन्तु तदनुसन्धातैव स्यात् । यज्ञदत्तशरीराधिष्ठातृजीववत् । न चैवं तस्माद्भिद्यत इति प्रसङ्गविपर्यये पर्यवसानम् ।

एतेन भेदस्यानुसन्धानाननुसन्धानरूपव्यवस्था अभिहिता भवति । यथा चैकाङ्गुल्याद्यपगमेऽपि न मुक्तिः । एवमेकोपाध्यपगमेऽपि न मुक्तिः । तस्यैवानन्तोपाधिसंबन्धवत्त्वात् । तत्तत्कर्मनिमित्तोपाधिस्तस्येति तत्तदपगमे तस्य तस्य मुक्तिरिति च युक्तम् । कर्मभेदस्याप्युपाधिभेदप्रयुक्तत्वात् । उपाधेश्च कर्मभेदनिबन्धनत्वादन्योन्याश्रयत्वात् । किञ्चोपाधिरात्मन एकदेशं ग्रसति उत सर्वमात्मानम् । एकदेशाङ्गीकारे सावयवत्वं तस्य चानित्यत्वं च न्यायेनैव प्रसज्येत । यथाहुः । कृतसावयवत्वादिप्रयुक्ता हि विनाशितेति ।

ननु द्रव्योपादानं द्रव्यमवयव उच्यते । यथा पटस्य तन्तवः । ततः सावयवं नामोपादानवत् । तस्यानित्यत्वं सर्वैरप्यङ्गीकर्तव्यम् । तस्मात्तैरित्यनुपपन्नम् । उच्यते । उपादानव्यतिरिक्तोऽप्येकदेशोऽस्मन्मतेऽङ्गीक्रियते । तं तु





व्यतिरिक्तवितस्त्यादिपटैकदेशानां दृष्टत्वात् । किञ्च निरुपादानस्याप्याकाशस्यैकदेशा विद्यन्ते । तदाश्रयेण च संयोगस्य प्रदेशवृत्तित्वं युज्यते । अतो नास्मन्मते तन्मात्रेण अनित्यत्वं प्रसज्यते । सर्वस्यैकोपाधिग्रस्तत्वे उपाधेर्भेदकत्वं न स्यात् । न हि सर्वस्मिन्पटे महारजतेन लिप्ते भेदबुद्धिरुपपद्यते । तस्याप्यंशस्य स्वोपाधिकृतत्वाङ्गीकारे अनवस्था स्यात् ।

ननु च दण्डकुण्डलाद्युपाधिकृतो भेदो देवदत्तस्य दृश्यते । तत्कथमुपाधिकृतो नास्तीत्युच्यते । मैवम् । न दण्डादिना देवदत्तस्य भेदः क्रियते । किन्तु दण्डादिविशेषणसंबन्धेन देवदत्तो विशिष्टरूपं द्रव्यान्तरमुत्पादयति । व्यावृत्तिरेव वैशिष्ट्यमिति मतेऽपि दण्डादिकं प्राक् स्थितामेव व्यावृत्तिं बोधयति । न ह्यवस्थान्तरापादनमेव भेदकत्वमत्र विवक्षितं तस्य व्यवस्थानुपयोगित्वात् । किं नाम युगपदनेकत्वहेतुत्वमिति ॥

त्रिस्कन्धचैतन्यवादिनां मते ब्रह्मेश्वरजीवव्यवस्थापि न संभवति भेदाभावात् । उपाधिभेदात् व्यवस्थेति न युक्तम् । देशतः कालतश्चापरिच्छिन्नयोरौपाधिकभेदस्यादृष्टत्वात् । उपाधिर्हि भेदकत्वपक्षेऽप्युपहितस्य देशावच्छेदकत्वेन वा भेदं कुर्यात् यथा वस्त्रादेर्महारजनादिः, कालावच्छेदकत्वेन वा, यथा यौवनादिकं देहस्य । न चैतदुभयमप्यत्र संभवति । द्वयोः सर्वगतत्वेन च देशतः कालतश्च परिच्छेदाभावात् । न च सर्वगतत्वादौ विवादः । श्रुत्यादिसिद्धत्वात् ।

किञ्च विशिष्टस्य शुद्धस्य वा संसारः । शुद्धस्य संसार इत्युक्ते स्वव्याहतिः । विशिष्टस्येत्युक्ते विशिष्टोऽन्यः स एव वा । स एव चेदुक्तो दोषः अन्यश्चेन्नित्योऽनित्यो वा । अनित्यश्चेत् नाश एव तस्य न मोक्षः । नित्यत्वे च भेदस्य सत्यत्वं मोक्षेऽपि तस्य भावात् । स्वरूपमात्रस्याभेदः भेदस्तु उपाधिकृत एवेत्यङ्गीकारे स्वरूपमेवोपाधिसंबद्धमिति न तस्य शुद्धत्वम् ।

उपाधिकृतभेदवादे किं सर्वे जीवाः सर्वगताः, उत शरीरपरिमाणाः अथाणवः । नाद्यः । अविच्छिन्नस्य सर्वगतत्वानुपपत्तेः तथाविधोपाध्यनुपलब्धेश्च । द्वितीये सावयवत्वेनानित्यत्वापत्तिः । तृतीये शरीराव्याप्तिः । किञ्च द्वितीयतृतीययोरुपाधेर्मूर्तत्वेन क्रियावत्त्वात् किं यत्र यत्रोपाधिर्गच्छति तत्र तत्रोपहितो ब्रह्मांशो जीवोऽपि गच्छति उत पूर्वमुपहितं ब्रह्मांशं विहाय यत्रोपाधिर्गच्छति तत्रैवांशान्तरमवच्छिनत्ति । आद्ये उपाधिविभक्तोत्थाने ब्रह्मणः सुषिरत्वं संयुक्तस्थाने द्विगुणत्वं च स्यात् । द्वितीये जीवानामुत्पत्तिनाशप्राप्त्या कृतहान्यकृताभ्यागमप्रसङ्गः ।

जीवेश्वरयोः यौ स्वाभाविकौ भेदाभेदौ वदति स प्रष्टव्यः । किमर्थमयं भेदोऽङ्गीक्रियत इति । व्यवस्थासिद्ध्यर्थमिति चेत् । अभेदेन सङ्करोऽप्यापाद्यमानः कथं निवार्यते । भेदेनोपरुद्धोऽभेदो न स्वकार्यकारीति चेत् । अभेदोपरुद्धो भेदोऽपि व्यवस्थां न कुर्यात् ॥ भेदः प्रबल इति चेत् तर्हि किमनेनाभेदेनाङ्गीकृतेन । ईश्वरस्य अचिन्त्यशक्तिवशात् सर्वमुपपद्यत इति चेत् । तर्हि ईश्वरे बहुमानवता शुद्धभेदोऽङ्गीक्रियताम् । श्रुतिस्तं न सहत इति तु प्रत्युक्तम् । एतेन अतिरेकपक्षोऽपि निरस्तः । पक्षद्वयोक्तदोषापातादित्यलम् ।





निर्गुणब्रह्मसिद्धिः किं प्रत्यक्षेणानुमानेन वा आगमेन वा।

न प्रथमद्वितीयौ। नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्तीति श्रुतेः॥ तृतीये पृच्छामः ब्रह्म किं वाक्यार्थः शब्दार्थो वा॥ नाद्यः। असंसर्गभेदरूपत्वात्। तयोरेव वाक्यार्थत्वात्। द्वितीये किं तत्र वचनवृत्तिरूपलक्षणा अथ गौणी। आद्येऽपि चतुष्टयी हि वाचकानां शब्दानां गतिः। जातिशब्दा गुणशब्दाः क्रियाशब्दा द्रव्यशब्दाश्चेति। तत्र जातिनिमित्ता शब्दाः यथा ब्राह्मण इति। गुणनिमित्ता यथा। शुक्लो दण्डीति। क्रियानिमित्ताः यथा पाचक इति। द्रव्यशब्दा यदृच्छानिमित्ता यथा डित्थ इति। तत्र तावदाद्यं प्रकारत्रयं न ब्रह्मणि संभवति। जातिगुणक्रिया-रहितत्वाङ्गीकारात्। वैदिकपदानां असाङ्केतिकत्वान्न चतुर्थोऽपि प्रकारः॥ ततः सर्वशब्दावाच्यं ब्रह्मेति स्थितम्। अत एव न तत्र पदानां गौणीवृत्तिः। तस्या गुणयोगनिमित्तत्वात्। न द्वितीयः। सर्वशब्दावाच्यस्य लक्षणायोगात्। तीरादिशब्देन वाच्यमेव गङ्गादिपदलक्ष्यं दृष्टं न तु केनापि शब्देनावाच्यत्वात् ब्रह्मणो लक्ष्यत्वमपि दृष्टम्। तथा चापदार्थत्वादवाक्यार्थत्वाच्च न तस्य श्रुतिगम्यत्वम्। दूरे तत्र तात्पर्यमिति। प्रमाणाधीनत्वाद्वस्तुसिद्धेः। ब्रह्मणस्त्वज्ञेयत्वात् शून्यत्वप्राप्तिरिति। ज्ञेयत्वाङ्गीकारे जडत्वापातः तथा परेणाङ्गीकृतत्वात्।

नन्ववाच्यत्वात् ब्रह्मणो यदलक्षत्वमुक्तं तदयुक्तम्। लक्षणायां वाच्यत्वस्योपयोगाभावात्। वाच्यार्थ-संबन्धित्वेन प्रसिद्धिरेव हि लक्षणायां बीजम्। अस्ति च सा ब्रह्मणि स्वप्रकाशत्वात्। न च विपक्षे बाधकाद्विना व्यभिचारादर्शनेनैव व्याप्तिनिश्चयः। पक्ष एव व्यभिचारशङ्कनात्। अतो लक्ष्यत्वसंभवान्न तस्य शास्त्रगम्यत्वा-भावः। अत एव न शून्यत्वमपि। लक्षणासंभवेन शास्त्रसिद्धत्वात्। वस्तुतः सर्वप्रमाणातीतत्वेऽपि स्वप्रकाशतया सिद्धत्वादिति।

किमिदं स्वप्रकाशत्वम्। किं स्वेन ज्ञेयत्वम् उतान्येनाज्ञेयत्वम्। नाद्यः। कर्तृकर्मभावविरोधेन स्वेन वेद्यत्वानङ्गीकारात्। द्वितीये प्रमाणाभावादसिद्धौ चोदितायां अन्येनाज्ञेयत्वात् सिद्धमित्यनुत्तरं सिध्युपायस्य अनुपन्यस्तत्वात्। अन्यथा शशविषाणादीनामपि सद्भावसिद्धिप्रसङ्गादिति।

किञ्च एकस्यां क्रियायां ब्रह्मणो ज्ञातृत्वं ज्ञेयत्वं च विरुद्धमिति वदन्वादी प्रष्टव्यः। किं कर्तृत्वकर्मत्वयोः लक्षणविरोधादसमावेशोऽङ्गीक्रियते उत परस्परपरिहारेण वृत्तेर्नियमेन दर्शनात्। नाद्यः। क्रियाश्रयः कर्ता क्रियाविषयः कर्मेति लक्षणसंभवेन परसमवेतक्रियाफलशालि कर्मेत्यादिलक्षणस्याग्राह्यत्वात्। न द्वितीयः। स्वाध्यायोऽध्येतव्य इति विधेः स्वाध्यायविधायकत्वदर्शनात्। शब्दशब्दस्य स्ववाचकत्वोपलंभात्। घटादिशब्दानामपि स्वरूपपदार्थकत्व-प्रतीतेः। तत्र भिन्नकर्मणि सति स्वकर्मकत्वं, न केवलं स्वकर्मकत्वमिति चेन्न। कर्तृकर्मभेदस्यापरिहारात्। एकदेशः कर्ता समुदायः कर्मेति भेदोऽस्तीति चेन्न। घटशब्दस्य स्वव्यतिरिक्तवाच्यादर्शनात्। देवदत्तो ग्रामं गच्छतीत्यादौ कर्तृकर्मणोः प्रत्यक् पराग्भावदर्शनात्। कथमैक्यमिति चेत्। परिस्पन्दरूपासु क्रियास्वेवं न सर्वत्रेत्यलम्। किञ्च ब्रह्मणो ज्ञानस्वरूपत्वं च वक्तुमशक्यं तस्य कर्तृकर्माद्यभावात्। जानातिर्हि सकर्मकः प्रसिद्धः। अतस्तदर्थस्य कर्मणा भाव्यम्। कर्म च स्वरूपमन्यद्वा संभावितम्। क्रियात्वात् कर्त्रा च भवितव्यम्।





न च ब्रह्मस्वरूपज्ञानस्य स्वयमेव विषयः । अङ्गीकारात् । नापि स्वव्यतिरिक्तं तदभावात् । न च तस्य ज्ञाताऽस्ति ततोऽन्यस्य वस्तुतोऽभावात् । अतो ज्ञातृज्ञेयाभावात् न ज्ञानरूपब्रह्मसिद्धिरिति । अतः शून्यवादान्न कश्चिद्विशेषः । उक्तरूपज्ञानतायाः शून्येऽपि संभवात् तदपि स्वप्रकाशरूपमित्यङ्गीकर्तुं शक्यत्वात् । तथाप्यस्माकं कुतः स्यात्सिद्धिरिति चेत् । ब्रह्मणोऽपि कुतः सिद्धिः । स्वयमेव ब्रह्मेति चेत् । समानं शून्येऽपि । ननु जन्यज्ञानस्य कारकापेक्षा न तु नित्यस्य न च ब्रह्मज्ञानं क्रियारूपं नाप्युत्पत्तिमत् । अतो ज्ञातृज्ञेयादि कारकविशेषाभावेऽपि तस्य सत्ता भविष्यतीति चेन्न । नित्यत्वेन विशेषाभावात् ज्ञानस्य जानाते रूपत्वात् ।

न चोत्पत्तावेव क्रियाकारकमपेक्षत इति नियमः । अस्ति ब्रह्मेत्यादौ नित्याया अपि सत्तायाः कर्तृसापेक्षतादर्शनात् । अन्यथापकारानुपपत्तिप्रसङ्गात् ।

अभेदो ब्रह्मणोऽन्यश्चेद्भेदाभाव एव वक्तव्यः । अभावप्रतिषेध इति पर्यायौ । प्रतिषेधप्रतिपादनं च प्राप्तिपूर्वकम् । न च भेदस्य केनापि प्राप्तिरस्ति । ईश्वरस्य प्रत्यक्षाद्यविषयत्वात् । अतो भेदस्याप्राप्तत्वात् तत्प्रतिषेधात्मकाभेदप्रतिपादकत्वं न युज्यते ।

द्वा सुपर्णेत्यादि श्रुतिप्राप्तभेदप्रतिषेधपरत्वे तु श्रुतीनां स्वव्याघातः स्यात् ।

यं कामय इत्यस्यार्थः । अहं यं यं उग्रं रुद्रं कर्तुं कामये तं तं उग्रं कृणोमि करोमि । व्यत्ययो बहुलमिति विकरणव्यत्ययः । सुमेधां सुमेधसं तथा तं ब्रह्माणं तमृषिं तं करोमि । अहं शरवे हिंसकाय । पञ्चमुखच्छेदात् ब्रह्मद्विषे रुद्रायेति द्वितीयार्थे चतुर्थी । एवंभूतं रुद्रं हंत वा उ - हन्तुमेव न तु भीषयितुं धनुरातनोमि विस्तारयामि । अहं जनाय जनस्य समदं संमदं हर्षं करोमि । अहं द्यावापृथिव्युपलक्षितान्सर्वानूर्ध्वाधोलोकान् धारणाया आविवेश । विशेः छन्दसि लुङ्लङ्लिट् इत्यपरोक्षेऽपि लिट् । अहमस्य जगतः पितरं ब्रह्माणं मूर्धन् मूर्धनि सर्वोत्कृष्टतया सुवे जनयामि । न केवलं पदे स्थापयामि । एवंभूताया मम योनिः कारणभूतः समुद्रे अप्स्वपामन्तस्तिष्ठति । स्त्रीणां पतिनामग्रहणमनुचितमिति शिक्षणाय नारायण इत्यनुक्त्वा आपो नाराः इत्यादिनोक्तं तदर्थमेवाह अत्र श्रिया ब्रह्मादीनां सर्वेषां आत्माधीनत्वमभिधाय स्वात्मनोऽपि नारायणाधीनत्वमुक्तम् । यमन्तस्समुद्रे समुद्रस्यान्तः स्थितम् । कवयः— ज्ञानिनोऽप्यवयन्तीषदेव जानन्ति । यस्मिंस्तदक्षरे तस्मिन्नविनाशिनि परमे प्रजा अधीनाः । जगतः प्रसूती प्रसूतिर्जनयित्री लक्ष्मीर्यतो यस्मात्प्रसूतोत्पन्ना । यच्च वस्तु तोयेन तत्तत्कर्मणा स्ववीर्येण वा तोयोपलक्षितैर्भूतैर्वा भूम्यां पृथिव्यां पृथिव्यादिषु लोकेषु जीवान् व्यससर्ज विससर्ज विविधं ससर्ज । यच्चौषधीभिः सहितान् पुरुषान्पशूंश्च चराचराणि भूतानि प्रेरणाय विवेश । चराचराणि भूतानीत्यनेनैव सिद्धे वक्ष्याङ्गत्वादिना विशिष्टानामोषध्यादीनां ग्रहणाय पुनर्वचनम् । अतो यस्मात्परमतिशयेनान्यद्वस्त्वणीयसमणीयो नास्ति । यच्च परात्परं उत्कृष्टादुत्कृष्टतरम् । महतो महापरिमाणादपि महान्तं महत् यदेकं केवलं अव्यक्तमतीन्द्रियम् । विश्वं पूर्णं तमसः प्रकृतेरज्ञानाद्वा परस्तादतिक्रम्य स्थितम् । तदेवर्तं यथार्थज्ञानरूपम् । तदु तदेव सत्यं ज्ञानपूर्वक्रियावत् । तदेव कवीनां मते परमं ब्रह्मेति । अत्रापि स्फुटमभिमतार्थः ।





अस्य प्रसिद्धस्य देवस्य द्योतनादिगुणवतः । मीळ्हुषो भक्ताभिलषितवर्षितुः । एषस्येच्छारूपस्य सत्यकामस्येति यावत् । विष्णोः प्रभृते प्रभरणे । पूजने कृते तत्प्रसादात् । वया वयबन्धने असुन्, अहङ्काराभिमानित्वेन जीवानां बन्धको रुद्रः । रुद्रियं महित्वं रौद्रं महिमानं विदे विविदे लब्धवान् । हि प्रसिद्धमेतत् । हे अश्विनौ युवामपि विष्णोः प्रसादादेव इरावद्वर्तिरन्नवद्वर्तनं समस्तभोगवत्पदम् । यासिष्टमयासिष्टं लब्धवन्तौ स्थ इति रुद्रादीनां भगवत्प्रसादाधीना पदप्राप्तिरुच्यते । मनसः परमपुरुषस्य चक्षोः चक्षुषः प्रकृत्यान्तःपादमव्यपरे इति प्रकृतिभावः । आसीन्महाप्रलये । मुनिर्मौनी । ततस्तस्य चिन्तनात् । एते वक्ष्यमाणाः विश्वो वायुः । इदमग्रे अस्य जगतोऽग्रे इत्यादिश्रुतिभ्यश्च विष्णोः समतीतक्षराक्षरत्वं सिद्धम् । यस्मात्परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ।

अस्यार्थः यस्मात्परमात्मनः परमुत्कृष्टं वस्तु नास्ति । अपरमपकृष्टः त्वस्ति । तच्च किञ्चिदल्पमित्येवार्थः । अन्यथा तेनेदं पूर्णमिति वाक्यशेषो विरुध्येत । वाक्यशेषे हीदमिति व्यतिरिक्तसद्भावो गम्यते । इदंशब्दार्थस्यासत्त्वे किं तेन पूर्णं स्यात् । तथा ततः प्रपञ्चात् ब्रह्मोत्तरतरमुत्कृष्टतरमिति वाक्यशेषोऽपि विरुध्येत । तत्र तत इति प्रपञ्चस्याविधित्वेनोक्तस्य सत्यताप्रतीतेः । यदि तदेव न स्यात् तदा कुतो ब्रह्मोत्तरतरं स्यात् । यस्मान्नाणीय इत्यत्र तु विरोधाभावात् नञो द्विः प्रयोगाच्चोभयनिषेधः ।

न च तद्वदत्रापि । न हि स्वरूपे स्वरूपत्वं नाम भिन्नधर्मोऽस्ति । तथापि त्वप्रत्ययप्रयोगनिमित्तं विशेषः ।

यथा अद्वैतवादिनां मते जीवब्रह्मणोरभेदत्वमभेद इति पर्यायशब्दवाच्यं वस्तु ब्रह्मणो भेदवर्जितम् । यथा गुणगुणिभेदवादिनां मते यथा स भेदो भेदिभ्यां भेदवर्जितः तथा भेदाभेदवादिमते यथा भेदाभेदौ भेदाभेदिनोर्भेदवर्जितः । तथापि भेदव्यवहारगोचरः । यथा जीवब्रह्मणोरभिन्नत्वमिति जीवब्रह्मणी अभिन्ने इत्यादि । तथा गुणगुणिनो-र्भेदाभेदौ गुणगुणिनौ भिन्नाभिन्नाविति वा । विशेषणविशेष्यभावेन भेदहीनेऽपि व्यवह्रियते । तत्र निमित्तं विशेषः । एवं विष्णावपि । नन्वभेदो भेदाभेदौ च ब्रह्मादिनानाभिन्नाः । ततो न दृष्टान्ताः संमता इति न युक्तम् । तथात्वे अनवस्थादोषापातात् ।

अभेदाद्भिन्नयोर्भेदो यदि वा भेदभिन्नयोः । अनवस्थितिरेव स्यात् न विशेषणतामतिः । विशिष्टप्रतीति-सिद्ध्यर्थं हि भेदोऽङ्गीकार्यः । न चाप्रतीतो भेदः तद्धेतुर्भवतीति तत्प्रतीतिरप्यङ्गीकार्या न चाविविक्ततया तत्प्रतीतिरप्युपयोगिनीति भेदस्यापि विशिष्टप्रतीत्यङ्गीकारे कथं नानवस्थेति । गुणगुणिनोरत्यन्तभेदपक्षे दूषणान्तरमाह नेति । यदि गुणो गुणिनोऽत्यन्तभिन्नः स्यात् तदा मेरुमन्दरस्येव गुणो गुणिनो विशेषणतया न ज्ञायेतेत्यर्थः ।

संबन्धसद्भावान्नैवमिति चेत् । स संबन्धः प्रतीतो विशेषणतामतेर्मूलमप्रतीतो वा । आद्येऽपि संबन्धि-विशेषणतया प्रतीतो वा स्वातन्त्र्येण प्रतीतो वा । आद्ये तत्रापि संबन्धान्तरप्रतीत्यपेक्षायां अनवस्था । द्वितीये

अतिप्रसङ्ग एव । न तृतीयः । संबन्धापरिज्ञाने तस्य विशिष्टज्ञानोपयोगाभावात् । संयोगादीनां हि ज्ञातानामेव विशिष्टप्रत्ययहेतुत्वं दृष्टम् । न सत्तामात्रेणेति भावः ।

तानेवानुविधावति तद्दर्शनमन्वेव विधावति अधोगच्छति । विशेषणप्रतिपादकं वाक्यम् । देशः सर्वत्र पुरुषः स्वतन्त्रः कालनित्यता । इत्यादिषु स्वबन्धाद्यथैव गुणरूपिणः । गुणित्वं गुणभोक्तृत्वं स्याद्विष्णोस्तच्च स स्वयमिति ब्रह्मतर्के ।

यथा पक्षी सर्वत्राकाशे प्रततीति पक्षिणः सर्वाकाशसंबन्धः प्रतीयते तथा आकाशोऽपि सर्वत्राकाशोऽस्तीति सर्वाकाशसंबन्धः आकाशस्य प्रतीयते । यथा गुरुतन्त्रः शिष्य इति शिष्यस्य गुरुणा संबन्धः प्रतीयते । एवं परमपुरुषः स्वतन्त्र इति तस्य स्वसंबन्धः प्रतीयते । यथाकाशस्य नित्यता प्रतीयते तथा कालस्यापि नित्यता प्रतीयते ।

मायावादिनस्त्वाहुः । निर्गुण एव परमात्मा । गुणास्तु मायामयाः सन्ति । अतो नोदाहृतश्रुत्यादिविरोध इति । तदसत् । तदीयसर्वगुणपूर्णताज्ञानस्य मोक्षसाधनताश्रवणात् । न हि मायामयार्थज्ञानं मोक्षसाधनम् । किन्तु तत्त्वज्ञानमेवेति भावेन तां श्रुतिं पठति । विष्णुमिति । विष्णुं सर्वगुणैः पूर्णं ज्ञात्वा संसारवर्जितः । निर्दुःखानन्दभुङ् नित्यं तत्समीपे स मोदते । मुक्तस्यापि न तत्साम्यापत्तिर्येन निर्दोषाशेषसद्गुणत्वं स्यादिति भावेन आह मुक्तानां चेति । मुक्तानां चाश्रयो विष्णुरधिकोऽधिपतिस्तथा । तद्वशा एव ते सर्वे सर्वदैव स ईश्वरः इति परमश्रुतिः । तस्मात्स एव सर्वदेवेश्वरो निर्दोषाशेषसद्गुण इति ॥

इति जिज्ञासाधिकरणपरिशिष्टरूपात्मकः वाग्वज्रग्रन्थभागः ॥

* * * * * * *

# श्रीमन्न्यायसुधा-परिमळ-प्रशंसनम्

प्रतिवाक्यं प्रतिपदमनेकाकूतगर्भिता ।
प्रतिभाति सुधाऽथापि ग्रन्थाल्पत्वाय नोच्यते ॥

ये तु न्यायसुधापानकामुका रसिका बुधाः ।
आघ्रायेमं परिमळं सेवन्तां ते सुधामिमाम् ॥

— श्रीराघवेन्द्रतीर्थाः

श्रीकरोऽयं ग्रन्थः । तत्र वयमेव साक्षिणः ॥

— श्रीवादिराजतीर्थाः

यदुतापसलभ्यमनन्तभवैः तदुतोपरतत्त्वमिहैकपदात् ।
जयतीर्थकृतौ प्रवणो न पुनर्भवभाग् भवतीति मतिर्हि मम ॥

— श्रीविष्णुतीर्थाः

सुधा वा पठनीया । वसुधा वा पालनीया ॥

धीर श्रीराघवेन्द्र त्वदतुलरसनारङ्गनृत्यत्स्वयंभू-
योषाधम्मिल्लभारश्लथकुसुमततीस्त्वद्गिरस्सङ्गिरामः ।
याभिस्सम्मिश्रिताभिर्निरवधिवसुधा विश्रुता सा सुधाऽपि
क्षोणीगीर्वाणगम्यं परिमलमतुलं साम्प्रतं संप्रपेदे ।

— श्रीवादीन्द्रतीर्थाः

Printed At : Sudha Mudrana, Bangalore - 4 ✆ : 667 6942